श्रीः



उभयवेदान्तग्रन्थमाला

कवितार्किकसिंह-सर्वतन्त्रस्वतन्त्र-

श्रीमद्वेंकटनाथार्य-श्रीमद्वेदान्तदेशिक-

विरचितं

# न्यायसिद्धाञ्जनम्

दशोपनिषद्भाष्यकार-श्रीरंगरामानुजस्वामि-
विरचित सरलविशद व्याख्यया

चतुश्शास्त्राध्यापनसुप्रसिद्ध-

महामहोपाध्याय-श्रीकाञ्ची-कृष्णतातयार्य-

विरचितया रत्नपेटिकाख्यया व्याख्यया च

समेतम्

संपादकीय भूमिका-टिप्पणसहितम्

---

# NYAYA SIDDANJANA

**by Srimad VEDANTA DESIKA**

**with two old commentaries**

---

मूल्यम्— 1976 रू-35

श्रीः ।

श्री-न्यायसिद्धाञ्जनग्रन्थोऽयमिह मुद्र्यमाणव्याख्याद्वयसहितो ग्रन्थलिप्यां द्वितीयव्याख्याकारशिष्यैः श्रीपट्टप्पास्वामिभिः सुभाषितनीवीव्याख्यादिकरणविख्यापितवैदुष्यैः प्रथमं मुद्रितः । तस्येदं द्वितीयं संस्करणम् । तदा तत्कृता भूमिका चात्रापि प्रकाश्यते, शब्दजालाधिक्येऽपि अपेक्षितांशावगमोऽपि तदुत्पादितरीत्या संपाद्य इति ॥

## प्रथममुद्रणावसरे श्रीपट्टप्पास्वामिप्रणीता श्रीन्यायसिद्धाञ्जनभूमिका ॥

"श्रीमते कृष्णतातयार्यमहादेशिकाय नमः

इह खलु निखिलनिगममकुटतट निगूढनिक्षिप्त नित्यनिरवद्य परतत्त्व-परमहित-परमपुरुषार्थसार्थ-निर्धारणविरह विरचित निरन्तरदुरन्तदुरितकान्तारमान्ताविश्रान्तसन्ततसञ्चरण समुद्विग्न संसारिसंघ-समुद्दिधीर्षा समाकुल-सकल भुवनोद्गिरण विघरण निगिरण निपुण-निरवधिकरुणानिवास श्रीनिवास-प्रेरण परतन्त्र पर तन्त्र निबद्ध विरुद्ध दुरध्वाध्वन्य साध्वन्यमूर्धन्य विध्वंसन बद्धश्रद्ध विशुद्ध निजध्वनि-खण्डावतार दिव्यघण्टावतारैः, अनवरतविसृत कर्कश तर्क मदप्रवाहपतन परिभ्रष्टदृष्टि दुष्टचेष्टाधुरीणाऽऽरण्यकसरण्यतिक्रमव्यग्र समग्र कथक सञ्चय कुञ्जरपुञ्ज भञ्जनचुञ्चुतर्कपञ्चक नखपपञ्च कञ्चुकित पञ्चशाखोज्ज्वल विचित्र पञ्चवक्त्रैः, सकल जन संमान्यानन्यसामान्य सर्वतन्त्र सर्वतोमुख ज्ञानशक्त्याद्यतिमानुष-महिमातिशय निशामन सत्वरोदित्वर संमोदभर मेदुरान्तरङ्ग रङ्गास्तरण वात्सल्य दिव्यदम्पति करुणा-परिणाह प्रदत्त पारितोषिकभूत वेदान्ताचार्य-सर्वतन्त्रस्वतन्त्र पदद्वय सार्थकीकरण प्रवीण भव्यतर दिव्य-प्रबन्ध बृन्द प्रणयन प्रकाशित विश्वातिशायि प्रभावातिशयैः, अतिपवित्र विचित्र चरित्र परित्रस्त समस्त-शत्रुजात विरचित स्तुत्यतिशय सत्यापितात्यद्भुत नित्यनिस्सीम भूमभिः श्रीमन्निगमान्तमहादेशिकैः, अनादिकर्मप्रवाह निर्मितानंकुशप्रसर भगवत्संकल्प कल्पितानल्पसंकट विशंकटासार संसार पंक संकलित-मज्जन जगज्जनोज्जीवनैकव्यापारापारकृपाकूपार पूर पारवश्यात् अवश्यापेक्षितपदार्थसार्थतत्त्वावधारण-वैधुर्य धुर्याहार्य विसृमर तिमिर पटलावष्टम्भ संबन्धनिबन्धनानाद्यविद्यान्धकाराञ्जनाञ्जन सज्ज सज्जना-वर्जन संमार्जनाय, दुर्जनगर्जनतर्जनाय च निखिलपदार्थस्वरूपनिरूपणैदम्पर परमत निकर निराकरण-निपुण प्रकरण करणे प्रवर्तमानैः, कणभक्षपक्षस्य च सकलश्रुति स्मृति विरुद्ध पद्धति निर्धारण-निरर्थक-पदार्थसमर्थन-परमाणुकारणतानिरूपणासत्कार्यवादादिभिः असत्कार्यताम्, कथञ्चिदाक्षपादाऽऽन्वीक्षक्याः सत्पक्षनिक्षेपक्षमत्वेऽपि उदक्षर व्याख्यातृ-विपक्ष पक्ष पक्षपाति-कतिपय कुमति कुल कलित वैयाकुलीव्यग्रतया विशिष्ट परिग्रह विरह विह्वलताम्, भगवन्नाथमुनिमिश्रप्रणीतस्य च न्यायतत्त्वशास्त्रस्य सूत्रवत् अतिसंक्षिप्त-गहनगम्भीरवचोगुम्भ संभृततया निरंकुश समंकुरच्छंकातंक कळंक संकुलितताम्, भगवद्यामुनमुनिविनिर्मितानाञ्च आत्मसिद्ध्यादीनां निखिलपदार्थस्वरूपनिरूपणैदम्पर्यविरहात् अर्वाचीन सर्व दुर्वाद निर्वापण नैर्भर्य-

वैधुर्थ्यापर्याप्ततां, भगवद्भाष्यकारभाषितानाञ्च अशेष विपक्षपक्ष प्रतिक्षेप क्षमत्वेऽपि, वेदान्तार्थ-विचारमात्रविश्रान्तेः, प्रासंगिक कतिपय पदार्थशोधनस्यापि तत्तत्प्रकरणोचित तात्पर्यविशेषपर्यवसानात्, क्वचिदन्यपराधिकपदार्थ प्रस्ताव सद्भावाच्च असंदिग्ध पदार्थं प्रतिपत्तिजनने शिथिलोद्योगताम्, वरदविष्णुमिश्र-विरचितानाञ्च मानयाथात्म्यनिर्णयादीनां प्रायशः परमतवासनामूलत्व-अभिमानमूलत्व-भाष्यविरुद्धत्व-वैभववादबाहुल्यादिभिः अनादरणीयताम्, वरदनारायणभट्टारक प्रणीतानां प्रज्ञापरित्राण-न्यायसुदर्शनादीनामपि बहुशः परमताभिप्रायकत्व-भाष्यादिविरुद्ध स्वकल्पितार्थ समृद्धत्वादिभिरनुपादेयताम्, श्रीविष्णुचित्तप्रोक्तानां प्रमेयसंग्रह-संगतिमाला-भाष्यविवरण(?) वेदार्थसंग्रहविवरणादीनां श्रीराममिश्रप्रणीतानां षडर्थसंक्षेपादीनां नारायणार्यविरचितानां नीतिमालादीनाञ्च परमतानुवादप्राचुर्य-अप्रामाणिकाधिक पदार्थकथनादिभिः असन्दिग्ध स्वमतसिद्धार्थ बोधनासमर्थताम्, श्रीभट्टपराशरपादप्रणीतानां तत्त्वरत्नाकर-अध्यात्मखण्डद्वयविवरणादीनां प्रमेयनिरूपणारम्भ एव विच्छिन्नत्वात्, प्रमाणनिरूपणप्रकरणस्यापि बहुशो वक्ष्यमाणार्थसापेक्षतादर्शनात्, क्वचित् वैभववादसद्भावाच्च आवश्यकग्रन्थान्तरप्रतीक्षताम्, श्रीवरदगुरु वादिहंसाम्बुवाहविनिर्मितानां तत्त्वसार-न्यायकुलिशादीनामपि अपेक्षितार्थातिसंक्षेपादिभिरलम्बुद्धयसमर्पकताम्, स्वनिबद्धानां च सर्वार्थसिद्ध्यादीनां परमत निरसन प्रचुरतया सयूथ्यकलहशमन पूर्वक स्वमत-सम्यग्विवेचनशून्यताम्, अन्येषाञ्च प्रबन्धानां प्रकृतविषयानैदम्पर्यञ्च पर्यालोचयद्भिः, प्राचीनार्वाचीनसकल ग्रन्थसारोद्धारेण च एतत् न्यायसिद्धाञ्जनं नाम प्रबन्धरत्नम् अतिप्रौढगहनगम्भीर शब्द सन्दर्भगर्भितम्, अपरिमितार्थतात्पर्यवर्यपर्याप्तम्, पर्यायतः प्रतिपदार्थम् उद्देश-लक्षणशिक्षण-स्वरूपनिरूपण-प्रमाणगणप्रदर्शन तदनुगुणतर्कवर्गाविष्करण-प्रतितर्कन्यक्करणपूर्वक प्रतिपक्षपक्षप्रतिक्षेप-स्वपक्षशिक्षित विषयकलाप स्थापक बहुतरयुक्तिनिकरनिदर्शनादि प्रदर्शन पूर्वक पूर्वाचार्यसूक्तिसंवादसन्दर्शन-तद्विरुद्ध सयूथ्यवचनान्यथासिद्ध्यान्यपर्यादि पर्यालोचनादिसुनिरूपित सकलपदार्थसार्थयाथार्थ्यम्, अनाद्यविद्यासंबन्धनिबन्धन विस्मरतिमिर-पटलावष्टम्भनष्टदृष्टीनामपि सद्यः सकलतत्त्व प्रकार प्रकाशनेन साभिधेयनिजनामधेयम्, अमेयभागधेय शालिविबुधलोकविलोकनीयस्वीयसौभाग्यम्, अभाग्यमषीविषीददशेव शेमुषीककुमतिलोकलोचनागोचर-स्वरूपरूपम्, अनुरूपपरिचयशालिनाम् अनायासनिषेव्यदिव्यतरवचनरचनानुयाय्यर्थप्रबोधन प्रदत्तसौहित्यम्, अत्यच्छगोक्षीर-द्राक्षा-माक्षिक-इक्षुरसविक्षेप सदक्ष-अतिभोग्य वाक्यविच्छेदम्(?), अपरिच्छेद्य-वैभवं परिच्छेदषट्कपरिष्कृतम् अधिकप्रभावशब्दस्वभावात् अवधीरितान्यग्रन्थम् अन्वग्राहि ॥

स चायं प्रबन्धः सामान्यग्रन्थपर्यन्त एव संदृश्यते। न चैतावता तावदेव प्रवृत्तो ग्रन्थसन्दर्भ इति युक्तमुत्प्रेक्षितुम्; अद्रव्यादौ च सादृश्य-विशेष-समवाय-अभाव-वैशिष्ट्यादीनामपि निरूपणीयतया प्रतिज्ञानात्, मध्ये च विभागग्रन्थे, "अभावनिरूपणं यावत् एतच्चोद्यं मा स्म विस्मरः" इत्यभिधानेन अभावनिरूपणस्य चिकीर्षितत्वाविष्करणात्, सर्वज्ञस्य सर्वशक्तेरिच्छामात्रनिर्वर्त्ये दिनार्द्धकृत्ये प्रत्यूहान्तराभ्यूहसाहसस्य हास्यत्वाच्च। अतः कुत एवैष ग्रन्थशेषः अस्मदभाग्यवशात् मृग्यदशामापद्यतेति युक्तं प्रतिपद्यामहे ॥

अस्य च ग्रन्थस्य अतिप्रौढ गूढार्थ गर्भतया समुचित व्याख्यासापेक्षताम् अवेक्षमाणाः श्रीमत्पंचमत-भंजनग्रन्थनिबन्धन विख्यात तातयार्य चरणारविन्द सेवा समासादित सामान्यशास्त्र-सारशास्त्र-भगवद्विषय-भरसमर्पणाद्यखिलोपादेय प्रमेयाः, वात्स्यानन्तार्यकृपाकार्य(रित) शारीरक शरीर परीक्षणजरी-, जृम्भमाणासमानविज्ञानाः, श्रीमद् ज्ञानाब्धि ब्रह्मतन्त्र परकालमुनिवर कृपाविपाकोपार्जित प्राज्य पारि-व्राज्यसाम्राज्याः, षष्टिप्रबन्धप्रणयन प्रकाशित निजनिखिलतन्त्र निस्तन्द्रस्वातन्त्र्याः, अनवरत रचित परिचय-निचय नियन्त्रित निखिलनिगमान्तसूक्तिमञ्जरीसंजरीजृम्भमाण मधुर मधुधारा सारसारस्य सौवादवाऽऽस्वाद समुद्यदुद्धुरमदभर मन्थरतर करणगणतया महाचार्याद्युदीर्यमाणभूमानः, श्रीमद्रङ्गरामानुजमुनिवराः निराकृतनिखिलसंमोहसन्दोहाम्, प्रतिपदं पदपदार्थप्रदर्शन-तात्पर्यवर्णन-अवतरणिकावितरण-विमतमत विमथनाद्युदन्तदन्तुरिताम्, षट्सहस्रग्रन्थपरिमितां समुचितां विवृतिं काञ्चन प्रपञ्चयामासुः ॥

मूलग्रन्थस्य चास्य बहुतरभावगर्भगभीरार्थसंभृतातिसंक्षिप्तशब्दसन्दर्भगर्भिततया सूत्रस्थानीयताम्, विवर-णस्य चास्य तादात्विकसात्त्विकबहुप्रज्ञसुज्ञेयप्रमेयत्वेऽपि अद्यतननवीननैयायिकग्रन्थवृन्दाविश्रमपरिश्रमदुर्द-मोद्यम तर्कमदोद्दामोष्मळकथककुलखर्जूसंमार्जनौर्जस्वलस्यशैथिल्यात्, मृदुप्रज्ञविज्ञानोत्पादनसाधनविशदतम-पदपदार्थव्युत्पादननैरन्तर्यवैधुर्याद्यापर्याप्तप्रवृत्तिकतया वृत्तिस्थानीयताञ्चोज्झीय अनुरूपभाष्यविशेषपरिपोष-मन्तरा दुरारोहप्रमेयताञ्च निश्चिन्वद्भिः कैश्चित् विपश्चिदपश्चिमैः संप्रार्थिताः श्रीकृष्णतातयार्यमहादेशि-काः श्रीदेशिकभक्तिपरीवाहप्रेरिताः पदेपदे पदार्थ-वाक्यार्थ-व्यङ्ग्यार्थ-तात्पर्यार्थ-अवयवार्थ-विशिष्टार्थ-घट्टार्थ-विग्रहार्थ निर्गलितार्थ-पदप्रयोजन-पदस्वारस्य-वाक्यस्वारस्य-सङ्गति-अवतारिका-शंकासमाधानाद्यशेष-विशेषपरिपुष्टविशिष्टप्रदेशम्, अविरतरचितचर्चाविशेषवशीकृतकर्कशतर्कशास्त्रनिस्तन्द्रस्वातन्त्र्यसमर्पित-अनल्पदर्पभरज्वालाजालोष्मायितविजृम्भितोद्दण्डकण्डूतिमण्डलोद्भेदभेदननिदानभूत प्रभूततमानुगमसहस्र-सहकृतपुष्कलपरिष्कारसारपरिष्कृतम्, अनुक्षणोपक्षिप्ततत्तल्लक्षणशिक्षणक्षणक्षपितलक्षतमविलक्षणकक्ष्याक्रम-पराक्रमपरिक्रीतसकलतार्किककुलकलितसोत्साहकोलाहलमुखरनिखिलप्रदेशम्, अनाघ्रातार्थबोधनविलम्ब-लेशासंस्पृष्टक्लिष्टबन्धसंबन्धगन्धास्खलितगतिकातिप्रसन्न - गम्भीर - विलक्षणद्राक्षाद्रवसदृक्षस्वरसवाहिपद - वाक्यसौभाग्यवशीकृतरसिकलोकम्, क्वचित् अचिन्तनीयजैमिनीयन्यायसमुदायप्रत्यायननिरपायकायम्, क्वचिच्च अनन्ताचार्यचातुर्यविचारचारुतरम्, क्वचन वचनभूषणमीमांसा-तात्पर्यदीपिकाद्युदीरितासां-प्रदायिकानुपपन्नार्थकदर्थनकृतार्थम्, कुत्रचित् ब्रह्मानन्द-गदाधराद्युदाहृतनव्यपदव्यभव्यतापादनसुव्यग्रम्, अन्यत्र असंकटस्थलेषु रङ्गरामानुजीयच्छायानुयायिप्रयातम्, चतुस्तन्त्रसन्तरणमन्तरेणाविज्ञेयनिखिल-प्रमेयम् अप्रमेयं द्वादशसहस्रपरिमेयग्रन्थसंख्यानं व्याख्यानरत्नं रत्नपेटिकाख्यानं प्रख्यापयामासुः ॥

ये किल सकलकलाविलासनिवासभासुरे काञ्चीपुरे श्रीमन्नाथ-यामुन-श्रीशैलपूर्ण-कुरुकेश्वर-तातयार्य-लक्ष्मीकुमार-तातदेशिकप्रमुखबहुतरवेदान्तस्थापकदिव्यसूर्यवतारचारुतरे महत्तरे निखिलवंशवतंसे श्रीशैलवंशे सकलसाधुलोकभाग्यपरिपाकसंपादितद्विपाद्रिनाथकृपाविपाकेन (कि-1828) कलि युगादि-

पंचविंशत्यधिकनवशत्युत्तरचतुस्सहस्रसंख्यातस्वभानुवत्सराश्वयुजाश्लेषान्विताहर्विशेषे कृतावतारा:, विंशतावेववत्सरेषु सत्संप्रदायाधीताध्यापितसकलवेदवेदान्ततन्त्रतर्कव्याकृतियोगसांख्यसमाख्यशास्त्रविस्तरा:! निस्साधारण्यनैपुण्यपण्यपरिक्रीतनिखिलपण्डितमण्डलाख्यापितविख्यात्यविशयसत्यापनचतुरचतुष्षष्टिप्रबन्धनिबन्धन निर्धूतनिखललोकहृदयंगुहान्धकारा:,कारागृहस्थानविन्यस्तसमस्तराजस्थानतया कर्कशतरतर्कतार्किकचक्रचंक्रमणनिपुणस्वतुल्यपुरुषदौर्लभ्येन च सस्पर्धाबद्धवाद युद्धपरिक्षोदविनोदमन्तरेणान्तरेव विशीर्णशुष्कतम तर्कमदपराक्रमप्रक्रमा: प्रौढेषु क्रीडाक्रोडेष्वेव केवलं स्वकीयाद्वितीयोद्दण्डपाण्डित्यडम्बरप्रकारान् प्रकाशयन्त:, चिराच्च साक्षाच्छिष्योपाध्यायिकाविरहविषण्णयो: पुनश्च वेषान्तरेण तथाभूयमनुभूय भूयोऽप्याम्नायान्तकाष्ठां प्रतितिष्ठापयिषतो: प्रथमं श्रीमच्छ्रीनिवासमहादेशिकरूपेण अवतरतो भाष्यकृतो विशिष्य शिष्यतया अवतीर्णस्तीर्णकृत्य: श्रुत्यन्तगुरुरेवेत्यखिलविबुधमुख्योल्लिख्यमानमहिमान:, कौमारसमय समार्जितानन्यसामान्यसर्वतन्त्रसर्वतोमुखशाखोपशाखवितत्ज्ञानसन्तानविबन्धननिखिलद्वीपाऽऽबालगोपालविस्तृत - विशुद्धकीर्तिमण्डलपाण्डरातपत्र प्रच्छायच्छादितसकललोकशृङ्गसिंहासनसुखासिकासूचिताखण्डपण्डितमण्डलाधिपत्यप्राशस्त्यसमर्थनसमर्थ सकलभुवनसंराड्गीसंज्ञकवन्दिजनजोघुष्यमाणमहामहोपाध्यायबिरुदवर्णाऽऽकर्णनपूर्णहृदयविश्वजनविश्वस्यमानविश्वाधिकभावप्रभावा:, कदाचिदतिचिरपरिचितरुचिरचिरन्तन फणित्यन्तचिन्तनसन्ततामन्दानन्दतुन्दिलस्वान्ता:, कदाचिच्च अत्यच्छनिजमहावंशप्रभावविभावन प्रहृष्यद्भाष्यकारप्रसादितश्रीभाष्य-भगवद्विषयोभयसिंहासनाधिपत्य सत्यापन निपुण प्रवचनसहस्र प्रहर्षित परमाचार्या:, अत्याश्चर्यं तपश्चर्यापर्यायभूतनिर्मलनित्यकर्मानुष्ठाननिष्ठानूत्नतम पारमैकान्त्यतेज:प्रज्वलन विशुद्ध मुग्धमुखचन्द्रसन्दर्शनमात्र दूरीकृत दुराग्रहिजनदौर्जन्या:,कदाचिच्च चित्तसिंहासन भासुरशुभाश्रयविशेषनिदिध्यासनबद्धान्त:करणा: क्षणादेव समंकुरत्पुलककांकुर निकुरुम्ब डम्बर विडम्बित कदम्बगोळा: नयनगोळयुगळ निर्गळगळज्जलझरझळंझळाजाल जन्यमान जडिमान:, कदाचिच्च अविरतरचित प्रवचन सहस्र संमेधितात्यद्भुत प्रतिभातिभारसंपर्कसंस्कृत कर्कश तर्कशास्त्र स्थल निस्तुटित समस्त शाब्द समक्ष निबद्ध जैत्रध्वजायमान गाढतर क्रोडपत्र क्रीडावगाढ प्रौढतमानुगमसमुद्र यात्रासांयात्रिक सुपुत्र(पट्टण्णा) वदनविनिर्गत सोत्साह वादाट्टहासाऽऽस्फोटकेलीविनोद सादरश्रवण समुदितामन्दमन्दहासमधुर मुग्ध मुखचन्द्रमण्डला:, कदाचिच्च स्मृतीतिहास पुराणगणनिरीक्षणकृतक्षणा: क्षणवदेव ब्रह्मानन्दसगन्धामन्दानन्दरसमयान् समयान् गमयाम्बभूवु: ॥

येषाञ्च भावातिवर्तिगुणपरिपोषा अनाघ्रातान्यथाग्रहणादिदोषगन्धोन्मेषा धिक्कृतविषणधिषणाविशेषा मनीषा सर्वेषु शास्त्रेषु समस्तवचनसार्थानां यथार्थमेवार्थं अवगाहमाना मानातिगत्वशङ्कासंकुलनानाजनमतिधुरादुरारोहमपि सर्वज्ञानयाथार्थ्यवादम् अनुगुणनिदर्शनदर्शनेन निर्विवादं प्रसाध्य सार्थयतीव यथार्थख्यातिसमर्थनपरिश्रान्तिं नाथमुनिमिश्राणाम् ॥

येषाञ्च अतिविचित्रा व्युत्पत्तिपद्धति: अनितरबुधसाधारणी । यत् सन्ततमन्तेवासितामधिगता इव

सर्वेऽपि वाङ्मयनिचयाः पदान्वयसिद्धये श्रवणारम्भसमये एव स्वंस्वं सर्वमप्यर्थमहमहमिकया प्रतिपादयन्तः संतोषार्थसकलकालक्षेपोपकरणीभावेन स्वात्मानं कृतार्थयन्तः किंकुर्वते सर्वदा वाग्विशेषाः । किंबहुना ; नानाविध प्रस्थान तत्तद्ग्रन्थवृन्द निरीक्षणक्षणेषु तत्तद्ग्रन्थकाराद्वैनकाष्ठामेवाधितिष्ठन्त इत्यभिमन्यामहे । यत् सर्वेषु शास्त्रेषु पदार्थ-भावार्थादिषु निबन्धृबुद्धिस्थाध्यारूढो गूढोऽपि न कोऽप्यनवगाढताम् आढौकते, प्रत्युत तत्तद्बुद्धिपदवीदवीयांसोऽप्यनेकांशाः प्रोच्यन्त एव पठन-पाठनादिप्रस्तावेषु ॥

येश्च प्रणीताः न्यायशास्त्रप्रबन्धाः प्रतिबन्धकत्वविचार-प्रमात्वचिह्नकुवलयोल्लास-'अथ हेत्वाभासाः'इत्यादि-वाक्यार्थविचार-संशयप्रमात्वविचार-शब्दत्वविचार-अवच्छेदकतासार-बाधकत्वैक-विशिष्टद्वयाघटितत्वानु-मित्यनुमितिविचार-नञ्विचार-एतेनेत्यादिकरणद्वयविचार-विशेषणत्रयवैयर्थ्यविचार-भगवदन्तीत्यादिनिष्कृष्ट-कल्पविचार-स्वलक्षणद्वयविचार-सिद्धान्तलक्षणोपाधिघट्टविचार संशयपक्षताविचार पंचमविषयताविचार[पंच-प्राणाहुति-नित्यानित्यदोष]साधारणलक्षणविचार-शतकोटिखण्डन-शतकोटिमण्डनवावदूककुतूहलसत्प्रति-पक्षविचार-बाधविचार-राजपुरुषवादविचार-जातिशक्तिविचार-यत्संशयव्यतिरेकनिश्चयावित्याद्यनुमानविचार-अनुगमावळीप्रभृतयः, व्याकरणशास्त्रग्रन्थाश्च तत्त्वचन्द्रिका-परमुखचपेटिकाप्रमुखाः, मीमांसाग्रन्थाश्च भाट्टसार-भाट्टदीपिकाटिप्पणीप्रभृतयः, वेदान्तशास्त्रग्रन्थाश्च न्यायपरिशुद्धिव्याख्यानभूतसन्न्यायदीपिका-रत्नपेटिका-ब्रह्मशब्दार्थविचार-विद्वज्जनविनोदिनी-प्रत्यक्त्वादिस्वयंप्रकाशत्वविचार-अरुणाधिकरणविचार-प्रतीताप्रतीतावेत्यादिवाक्यव्याख्यान अनेनजीवेनेतिश्रुत्यर्थविचार अखिलशब्दार्थविचार- आप्रयाणोपा-सनावर्तनविचार-अनुवर्तमानत्वानुमानोपाधिविचार-अपर्यवसानवृत्तिविचार-सत्यत्वादिस्वरूपनिरूपकत्ववि-चार-काचित्कश्रुतप्रकाशिकापंक्त्यर्थविचारादयः, संप्रदायग्रन्थाश्च दुरर्थदूरीकरणाभिधानवचनभूषणमीमां-साखण्डन-चरमश्लोकाधिकारविचार-इयङ्कवलेत्यादिश्लोकार्थविचार -आनुकूल्यसंकल्पादिसंनिपत्योपकार-कत्वविचार-शरणशब्दार्थविचारादयः, धर्मशास्त्रग्रन्थाश्च धर्मनिर्णय-दुर्वृत्तधिक्कृति-वैष्णवत्वनिरूपण-सन्मार्गकण्टकोद्धार-तत्संग्रह - तट्टिप्पणी - दर्शश्राद्धसंचिका-तत्समर्थन-पतिभ्रातृसपुत्रकर्तृत्वपौर्वापर्यवि-चार- एकदिनश्राद्धद्वयनिषेधविचार-प्रथमोपाकर्मदोषतारतम्यनिरूपण -भगवदाराधनप्रयोग - प्रपत्तिप्रयोग-प्रभृतयः यदीयविद्वन्मुखवितत‌विशुद्धविरुदावल्यभिख्याभिनवसुधालेपरूषिताशेषावकाशविशालतरदिशा-वलयाभिधानसौधोत्सेधनिर्बाधनिबद्धविचित्रजैत्रध्वजायन्ते ॥

येषाञ्च भाषावाक्यमप्यशक्यविप्रलम्भादिसंभावनम् अन्तर्भावितसकलशास्त्रार्थम् अपास्तसमस्त-दोषम् अखिलोपजीव्यान् अर्थान् अक्लेशेन प्रकाशयत् किमप्यस्पृष्टावद्यगन्धं खिलश्रुतिसगन्धम् अखिल-जनोपजीव्यम् अनुदिनोपसेव्यम् अव्यग्रभोग्यं मन्त्राग्र्यं भवति ॥

येषाञ्च भूषाविशेषायमाणाः नानाविधदुःखशोकादिदूरीकरणचणाः कल्याणगुणगणाः दुर्भणाः फणामणिघृणिविसरविभ्राजिताशेषेण शेषेणापि ॥

———×———

* .... .... .... .... .... .... .... .... .... .... .... .... .... ....

तदेतत् व्याख्यानयुगळविगळत्सकलकलङ्कं नूतनतरपरिष्कारस्तलब्धप्रतियत्नं प्रपञ्चजनरञ्जनं न्यायसिद्धाञ्जनं सम्यक्समनुभुञ्जानाः सर्वेऽपि सहृदयाः सरसपनसमाकन्दकुन्दमन्दारमधुर मधु रसमाधुरीमदधुराभरीकरणधुरीणसुभगतरसूक्तिसन्दर्भनिर्भरविसरद्रसभरचर्वणसर्वौषधूर्वहाः निर्वहेयुः अखर्वाहङ्कुर्वदर्वाक्तनसर्वदुर्वादिगर्वसर्वस्वनिर्वापणसंपदम्; वहेयुश्च निखिलजनज्ञानोपदेशकुशलविमलवेदान्तग्रन्थनिचयप्रवचनाचार्यकाधिराज्यम्; दहेयुश्च सततसमिध्यमानज्ञानवितानहुताशनेन सुचिरप्ररूढगाढसंमर्ददुर्दमोद्यमानाविद्यान्धकारविपिनविस्तारम्; सहेयुश्च ज्ञानाज्ञानसमापतितसर्वविद्याशुद्धिसंबन्धनिबन्धनार्थप्रतिपत्त्यन्यथाप्रतिपत्त्यादिविहितात्याहितवितरणं महापराधम् ॥

यद्यपि निरवद्यनिखिलविद्यावैशद्यनिषद्यावभासेन दासेनैवाऽऽद्यतरं लिखिते, तदनु विमुद्रिताऽऽद्यपत्रनिरीक्षणेन समक्षतः शिक्षिते, ततश्च त्रिवारमन्यान्यजनलोचनगोचरीकरणेन बहुशो विशोधिते, भूयोऽपि प्राधिकेषु प्रदेशविशेषेषु साक्षादाचार्यपादश्रवणपथातिथीकरणेन सम्यक् सुसंस्कृते, पुनश्च निश्चलनिबद्धशुद्धाशुद्धपत्रिकाप्रकाशनपवित्रितेऽस्मिन् वर्णगुम्भे न संभाव्यत एव अशुद्धिसंबन्धगन्धोऽपि—तथापि असर्वज्ञतया सर्वेषाम्, अविश्वसनीयतया चैकपुरुषमतिप्रवृत्तेः, अवर्जनीयतया च देहभृतां कदाचित् श्रमविश्रमतन्द्रानिद्रालस्यवैरस्यादीनाम्, संभाविततया च शंभ्वादीनामपि अनवधानादेः, अवश्यभावितया च भवान्तरनिर्मितकर्मफलभूतजनवचनजातस्य, चपलस्वभावतया च चक्षुरादीन्द्रियनिचयानाम्, स्यादपि कथञ्चित् दोषलेशप्रवेशः इति सार्थमेवेदमभ्यर्थनमभिमन्यते मान्यजनसान्निध्यमात्रलब्धाबद्धजालजटिलशिथिलीभूतचिरन्तनविरळतरताळपत्रश्रीकोश विशोधन स्थिरीकरणघनतरविचित्रपत्रनिर्निद्रमुद्रित विस्पष्टसमीक्ष्य नक्षत्रसदृक्ष विलक्षणाक्षरनिकरसुप्रकाशकोशराशिप्रतिदेशवर्षणादिमात्रकामनासनाथान्यविषयामलोभाद्यभावानुभावभासुरशोभातिभारनिभानल(?)शीभरितभगवत्प्रीतिभरभरितविग्रहः, केवलानुग्रहविवर्तमूर्तिकाऽऽचार्यचरणकरुणापरिणाहनिर्वर्तितसमस्तकृत्यसञ्चयः काञ्चीपुराञ्चित–श्रीदेवाधिराज सन्निधिवीथीनिवासः

श्रीनिवासतातदासः

—०—०—

* अत्र भूमिकान्तर्गतः कश्चिद्भागः एषां व्याख्यातॄणां (कलि 4991, ई 1889) विरोधिवत्सरप्रोष्ठपदकृष्णपञ्चमीरूपनिर्याणकालप्रतिपादनपरः विस्तृतत्वादिह न मुद्रितः ॥

श्रीः

# अञ्जनवैभवम

निष्कृष्टभाष्यकाऽऽदृष्टमानमेयस्य निस्तुला ।
न्यायसिद्धाञ्जनाभिख्या निगमान्तगुरोः कृतिः ॥

काणादानुगगौतमाध्वविमतेर्न्यर्थं स्वयं शोधयन्
मानत्रैधमुदीर्य मेयमपि यत् शारीरकस्थं जगौ ।
एवं शोधितसाधुतर्कसचिवैर्मानैः कणादादिकान्
प्रत्याख्याय तदेव दर्शयति नः सम्यग् विभज्याधुना ॥

न्यायाभिख्यं यत् परार्थानुमानं तत्रांग स्यान्मानमेयादि सौत्रम् ।
वादाद्यं चाऽऽनिग्रहस्थानमंगं स्यादन्यथेत् स्यात् प्रतिन्यायवक्ता ॥

श्रीभाष्यकारहृदयनिगूढप्रमाणप्रमेयनिष्कर्षे प्रवृत्तस्तत्रभवान् आचार्यतल्लजः प्रथमतो गौतमप्रणीतस्य न्यायदर्शनस्य यथावत् प्रमाणेयत्ताप्रदर्शकत्वाभावं शारीरकविरुद्धकणादकल्पितप्रमेयजातसमादरेण प्रवृत्ततयाऽनादरणीयताञ्चाभिलक्ष्य वेदाङ्गतया न्यायविस्तरस्य यथार्थदर्शिनः कस्यचिदावश्यकतया न्यायपरिशुद्धिं विधाय तत्र प्रमाणग्रन्थे यादृशप्रमेयावष्टम्भप्रवृत्तत्वं युक्तम्, तत् प्रमेयञ्च तत्रैव ग्रन्थे संगृह्य संप्रति तदेव तर्कैर्विशदं दर्शयितुं न्यायसिद्धाञ्जनं निरमात् ।

न्यायो नाम परार्थानुमानं युक्त्या कस्यचिदर्थस्य स्थापनार्थावश्यापेक्षितवाक्यराशिः पक्ष-साध्य-हेतु-तद्व्याप्ति-पक्षधर्मताप्रदर्शकः । स पञ्चावयव इति तार्किकाः । प्रतिज्ञाहेतूदाहरणत्रयरूपो वा उदाहरणोपनयनिगमनत्रयरूपो वाऽन्यथा वा श्रोत्रपेक्षानुरोधेन यथायथमिति सिद्धान्तिनः । तस्मिंश्च न्याये प्रधानाङ्गभूतमनुमानं = हेतुप्रतिपादकभागः । तस्य प्रधानत्वादेव शारीरके ईक्षत्यधिकरणे, 'सद्विद्यायाः सांख्यसंमतप्रधानपरत्वमस्तु, येनाश्रुतं श्रुतं भवति, यथैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यादिति अनुमानवेषदर्शनात् आनुमानिकार्थपरत्वौचित्यात्' इत्याशंक्य, 'अनुमानप्रयोगरूपत्वे हेत्वंशोऽवश्यं कथनीयः । स इह नास्ति । दृष्टान्तप्रदर्शनं तु असंभावनापरिहारायापि भवति, न तु व्याप्तिप्रदर्शनायैव' इति समाहितम् । स च हेतुः साध्यसाधनार्थं प्रवृत्तः पञ्चम्यन्तप्रतिपाद्यः अग्निमान् धूमादित्यादौ धूमादिरिव तदर्हो यः कश्चिदर्थोऽपि स्यात्; प्रत्यक्षप्रमाणमपि स्यात्; शब्दप्रमाणमपि; 'न प्रत्यक्षेण यावत्तावदप्युपलम्भात्' इति प्रत्यक्षप्रमाणस्य, 'अशुद्धमिति चेन्न शब्दात्' इत्यादौ शब्दप्रमाणस्य च हेतुतया निर्देशात् । अतः प्रत्यक्षप्रमाणं स्वातन्त्र्येणेव व्याप्तिग्रहस्थलदृष्टान्तप्रदर्शितयेव चन्याये हेतुविधयापि कार्यकरं भवति; तथा शब्दप्रमाणमपि । एवं सर्वमपि प्रमाणं हेतुविधयाऽपि न्याये निविशत इति विभाव्य तदुपयोगितया प्रमाणं पूर्वं गौतमो निर्दिशन्, यादृशप्रमेयसाधनार्थं न्यायप्रवृत्तिः, तादृशप्रमेयञ्च समनन्तरं गणयन् तदनन्तरं न्यायांगं सर्वं संशयेत्यादिना निरदिक्षत् । तत्र प्रमाणप्रमेयसंशयविपर्ययसिद्धान्तावयवतर्कनिर्णयाः सर्वत्र न्यायेऽपेक्षिताः । वादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानि तु तदुपर्युक्तानि विवादस्थले प्रतिन्यायप्रयोगावसरेऽवकाशं लभन्ते । अत्र षोडशपदार्थमवयवशब्दनिर्दिष्टापेक्षिता-

वयवसमुदाय एव न्यायशब्दमुख्यार्थः । तदर्थप्रवृत्ते न्यायदर्शने गौतमः कणाददर्शितप्रमेयजातमेवाऽऽदृत्योदाहरणान्यदर्शयत् । तत् यत्र क्वापि सिद्धान्ते स्थित्वा न्याये लक्षणादिना निरूपणीये-तर्कमूलसाधितप्रमेयजातं तर्कस्योदाहरणं भवितुमर्हतीति मनसिकृत्य स्यात् । वस्तुतः श्रुतिविरुद्धमेव कणादोक्तं प्रमेयजातमिति स्पष्टं शारीरके । अतस्तदनुसरणमयुक्तमिति न्यायपरिशुद्धौ सर्वत्र शारीरकप्रमेयमेवोदाहारि अस्मदाचार्यैः ; नमग्राहि च तदर्थे शारीरकप्रमेयजातमेवान्ते ।

तत्र कणादो वैशेषिकदर्शने प्रत्यक्षवत् अनुमानमपि प्रमाणमातस्थे इति, हेतुहेत्वाभासविवेचनात् सामान्यतोदृष्टं विशेषतोदृष्टमिति तद्विभजनाच्च विज्ञायते । शब्दप्रमाणविषये तु, 'एतेन शाब्दं व्याख्यातम्' इत्याह स्म। अनुमान एव शब्दोऽप्यन्तर्भूतः, न पृथक्प्रमाणमिति तदर्थ इति प्रकरणानुसारेण तद् व्याचख्युर्व्याख्यातारः। अत एव कारिकावली, "शब्दोपमानयोर्नैव पृथक्प्रामाण्यमिष्यते । अनुमानगतार्थत्वादिति वैशेषिकं मतम्" इति । गौतमस्तु तदसहमानः प्रत्यक्षानुमानवत् उपमानं शब्दञ्च पृथक् पृथक् प्रमाणतया स्थापयामास । एवं प्रमाणस्येव प्रमेयस्यापि शोधने कार्ये तत्र कणादानुसार्येवाऽऽसीत् ; प्रमाणमात्रनिरूपणेदृश्यपर्यात् । सिद्धान्तिनस्तु उपमानमनुमान एवान्तर्भावयन्ति ; शब्दं परं पृथक् कुर्वन्ति । "स्मृतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम्" इति प्रमाणगणनामाद्रियमाणाः । अत्र यत् स्मरणस्यापि प्रमात्वकथनम् ,तत् याथार्थ्यं= यथावस्थितार्थग्राहित्वं प्रामाण्यमित्याशयेन । स्मृतिरूपं मानमिष्टमेव सिद्धान्तिनाम् । परंतु स्मरणस्य कुत्राप्यज्ञातार्थग्राहित्वं न भवति । अतोऽपूर्वार्थग्राहित्वरूपं प्रामाण्यं प्रत्यक्षानुमानशब्दानां त्रयाणामेवेति तावन्मात्रोक्तेराशय इति विवेचनीयम् । एवञ्च न्यायपरिशुद्धिग्रन्थे न्यायदर्शनोक्तषोडशपदार्थग्रहणेन तत्र शोधनीयं सर्वं व्यशोधि। तेन कस्य प्रमाणस्य कीदृशार्थग्रहणयोग्यताऽस्तीति विवेचितं भवति । अन्यथा चक्षुषा गन्धो न गृह्यते, गुरुत्वादिकमिन्द्रियैर्न गृह्यत इत्येतावता तत्तत्प्रमेयापलापः स्यात् ; चक्षुरेव रसगन्धादिकमपि जातु दर्शयेदिति बौद्धभाषितमादर्तव्यं स्यात् ।

एवं न्यायदर्शनशिक्षिततया यथावस्थितलक्षणमुखेनानाभासतया निर्धारितानां न्यायानामुपयोजनेन वेदवेदान्तार्थनिर्णये प्रवृत्ते पूर्वोत्तरमीमांसे । किं संकोचेन, सर्वाण्येव वैदिकलौकिकवाक्यानि तर्कपुरस्कारीणीति वक्तव्यम् । तत्र न्यायलक्षणस्वरूपविवेचनात् न्यायशास्त्रग्रन्थेषु न्यायशब्दघटनम् । मीमांसादिग्रन्थेषु न्यायरत्नमाला, नयविवेकः इत्येवं न्यायपदघटनं तु न्यायपुरस्सरप्रमेयशिक्षणादिति भेदो ग्राह्यः ।

एवं सांगे न्याये न्यायपरिशुद्धौ प्राधान्येन निरूपिते तदधिगम्यप्रमेयशोधनार्थप्रणीतस्यास्य ग्रन्थस्य प्रमेयपरिशुद्धिरिति नाम निर्देष्टुं साम्प्रतम् ; न तु न्यायसिद्धाञ्जनमिति इति चेत्—उपनिषत्पुराणपञ्चरात्रादिप्रमाणरूपेण चक्षुषा इतिकर्तव्यताभूततर्कसापेक्षेणैव प्रमेयनिष्कर्षस्य कार्यतया, न्यायपरिशुद्धिलक्षितपरीक्षितप्रकाराः सन्न्याया एव, चक्षुषः सिद्धाञ्जनमिव, प्रमाणस्योपकारका भवन्ति ; तन्मुखेन प्रमेयाधिगमः । अन्यथा हि प्रमेयपरिगणनमात्रेऽत्र कृते कृतकरत्वमेव स्यात् । एवञ्च न्यायभाष्ये, 'सूत्रे संशयादीनां पृथग्वचनमनर्थकम्' इत्याशंक्य, 'तेषां पृथग्वचनाभावे अध्यात्मविद्यामात्रमियं स्यात्, यथोपनिषदः' इति यदाह, स दोष इहाप्यापतेत् ; पूर्वग्रन्थवैलक्षण्यञ्च प्रतिष्ठितं न भवेत् इति ज्ञापनार्थमित्थं नाम निरदेशि । अञ्जनमपि किञ्चिदन्यथाज्ञानहेतुर्भवति, यथा मण्डूकवसाञ्जनं वंशे उरगादिभ्रमापादकम् । अतः सिद्धाञ्जनमित्युक्तम् । तदत्र स्वकि प्रमाणप्रमेयनिष्कर्षस्थैर्याय न्यायानां प्रदर्शनं मुख्यम् । यदाह स्वयमेव प्रथमश्लोकेन । तत्र सम्यक्त्वनिरीक्षणायेति पदेन प्रमेयपरिशुद्धिः फलमिति प्रदर्शितमेव । श्रुतिशिरस्तात्पर्यपर्यासधीः इत्यनेनोपनिषद एव प्रधानभूतं चक्षुः ; विष्णुपुराणपञ्चरात्रादिकं तत्रोपसर्जनतया निविशते । यथा श्रीमतो वेंकटनाथस्य, 'यो ब्रह्माणं

विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इति वेदं व्याख्यायोपदिशतस्तत्तात्पर्यपर्याप्तधीत्वम्, तथा तत् अस्य ग्रन्थकर्तुरपि। तात्पर्यपर्याप्तधीत्वं नाम तात्पर्यग्रहणाक्षमत्वरहितबुद्धित्वम्। इतःपूर्वं साम्प्रदायिकप्रमाणप्रमेयनिष्कर्षप्रवृत्तानां कतिपयग्रन्थानां भाष्यकाराशयाननुसारित्वस्य तत्रतत्र दर्शनाद्पर्याप्तधीत्वं केषुचिदवगम्यते; नैवमत्र सर्वस्य यथावद्विवेचके इति भावः। तत्र हेतुः स्वसाक्षादाचार्यप्राचार्यवैदुष्यप्रकर्ष इत्याह, 'लब्धार्थो वरदार्यपादरसिकात् रामानुजाचार्यतः' इति। स्वाचार्यस्य श्रीवादिहंसाम्बुवाहस्य श्रीभाष्यकारावतारस्य तन्मासर्क्षे प्रादुर्भूतस्य रामानुजेति नामधेयम्। तेन तत्कृतनिर्धारणं भाष्यकारनिर्धारणञ्चैकमिति ज्ञाप्यते। अतिवेलमोहपटलावष्टम्भसीदद्दृशामित्यत्र दृक्पदेनोपनिषदादिरूपं चक्षुर्वा, उपनिषदादिविषयबालबुद्धिर्वा विवक्ष्यते। तस्याः परमतप्रवर्तककारितं तद्वासनावासितान्तःकरणपुरुषापादितञ्चान्यथाग्रहादिकं पटलायमानम्। तद्रोगनिवर्तनेन पुष्कलशक्त्याधानमनेन न्यायसिद्धाञ्जनेन भवति। अत्र न्यायपरिशुद्धिदर्शितलक्षणलक्षितनतया सत्त्वेन = साधुत्वेनावधारिताः ये तर्काः न्यायापरपर्यायाः, न्यायप्रदर्शितहेत्वपेक्षिताः व्याप्यारोपेण व्यापकारोपात्मकास्तर्का वा, त एव सिद्धाञ्जनम्। तदधिकृत्य कृतत्वात् ग्रन्थोऽपि न्यायसिद्धाञ्जनम्। ईदृशाञ्जनोपस्कृतदृङ्मूलं सम्यक्तत्त्वनिक्षरीणं यादृशं भवति, तदप्यत्र न्यायसिद्धाञ्जने निरूप्यते इति प्रमेयपरिशुद्धिरपि भवति। तर्हि तदेव नाम कथं नाकारीति चेत्— तत्रोपारतनश्लोकाभ्यामपि प्रत्युत्तरम्। तत्त्वशोधनार्थं प्रवृत्तोऽयं ग्रन्थस्तत्त्वदर्शकोऽपि तेषां तत्त्वानां न्यायपरिशुद्ध्यन्त एव दर्शितप्रायत्वात् तत्साधक–तद्विपरीतार्थबाधक–न्यायनिकुरुम्बोपन्यसन एव तत्पर इति एवम्भूत एव विस्तर इह भवतीति विवेचनेन न्यायसिद्धाञ्जनमित्येव नाम न्याय्यमिति भावः। भगवन्नाथमुनिनिर्मितो न्यायतत्त्वग्रन्थो नूनं न्यायदर्शनादिपरिष्करणरूपोऽपि। तत्र प्रमाणं प्रमेयञ्च सोपपत्तिकं स्वसिद्धान्तानुरोधेनादर्शि। तत्र प्रमाणांशप्रपञ्चनं न्यायपरिशुद्ध्या, प्रमेयप्रपञ्चनं न्यायसिद्धाञ्जनेन। तदेवं प्रमेयनिरूपणमत्र विस्तरेण भवति। ननु सत्तर्कसिद्धाञ्जनमित्यत्र तर्कशब्दः प्रमेयपर एव स्यात्। यथा तर्कसंग्रहनामकग्रन्थस्य नाम्नि तर्कशब्दः; तर्क्यन्ते = प्रतिपाद्यन्ते इति तर्काः इति तद्ग्रन्थकारेण व्याख्यातत्वात्॥ नैवम्। उद्देशो लक्षणं परीक्षा चेति त्रितये ग्रन्थेन कर्तव्ये बालव्युत्पादनाय प्रमेयसंग्रहमात्रं तत्र कृतम्; न तु कस्यापि प्रमेयस्य परीक्षा वर्तिता। ततस्तर्कलेशस्याप्यस्पर्शात् कथं तर्कशब्दप्रयोग इति शंकायां तत्र तथा वक्तव्यमासीत्। तर्कशास्त्रप्रमेयं तत्र तर्कपदलक्ष्यमिति तद्भावः। प्रकृते युक्तीनामेव न्यायसिद्धाञ्जनमिति स्वकृतनाम्नीव सत्तर्कसिद्धाञ्जनपदेऽपि विवक्षिततया, पूर्वोक्तरीत्या युक्तिनिरूपणैकपरत्वाच्चास्य ग्रन्थस्य नात्र मुख्यार्थत्यागक्लेशो युज्यते।

एवमत्र निरूप्यं प्रमेयं कया रीत्या विशोध्यत इत्यत्र ग्रन्थ एवास्मिन् बुद्धिपरिच्छेदान्ते उक्तम्, "प्रमाणप्रमेयादिकं व्यवहारौपयिकमखिलमपि तत्रैव(न्यायपरिशुद्धावेव)प्रपञ्चितमिति नेह प्रस्तूयते। वैशेषिकशैलीमनुसृत्य यथावस्थितपदार्थस्वरूपं ह्यत्र विशोध्यते" इति। ननु वैशेषिकप्रक्रियाखण्डनरूपस्यास्य कथं तच्छैल्यनुसारित्वमिति चेत्—उच्यते। न्यायपरिशुद्धौ न्यायदर्शनशैलीमनुसृत्य सर्वं व्यशोधि। न्यायदर्शने तु न लोकवेदप्रसिद्धनिखिलप्रमेयनिरूपणे व्यापृतम्। "आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्" इति द्वादशविधप्रमेयमात्रं हि तत्र न्यरूपि। कुतः? तावत एव ज्ञानं मुख्यतया मोक्षोपयोगीति। एतावत्तत्त्वज्ञानस्य मोक्षोपयोगप्रकारश्च तत्र कश्चित् प्रादर्शि, "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः" इति। न्यायभाष्ये च वात्स्यायनेन स्पष्टमभाषि, "अस्त्यन्यदपि द्रव्यगुणकर्मसामान्यविशेषसमवायाः प्रमेयम्; तद्भेदेन चासंख्येयम्। अस्य (द्वादशविधप्रमेयमात्रस्य) तु

तत्त्वज्ञानादपवर्गः, मिथ्याज्ञानात् संसार इत्येव एतदुपदिष्टं विशेषेण" इति। द्रव्यगुणकर्मेति रीत्या, अवान्तरविभागमपि विधाय प्रमेयशोधने गौतमोक्तद्वादशविधमित्यपि प्रमेयमस्तीत्यर्थः। एतदर्थश्चाचार्यैः न्यायपरिशुद्धावेवाऽऽदौ न्यरूपि। अस्मन्मते अर्थपञ्चकनिरूपणप्रकारस्तु यो मोक्षोपयोगप्रकारेणायं प्रमेयनिरूपणप्रकारः। अस्मन्मततत्त्वत्रयविभागादिविवेचनसमानश्च वैशेषिकाहृतपदार्थविवेचनप्रकारः। यद्यपि न्यायदर्शनाभिमतं निरूपणमन्तरंगम्, तथाऽपि वैशेषिक-प्रक्रियाऽपि तत्रोपयुज्यत एव। तत्रैवाऽऽदौ, "द्रव्यगुणकर्मसामान्यविशेषसमवायानां षण्णां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्" इत्युक्तत्वात्। आत्मानात्मविवेचकेन हि अनात्मानः सर्वे आत्मत्वानर्हतया विशिष्य वेदितव्याः। अत एवोक्तं न्यायपरिशुद्धौ, 'प्रमेयाध्यायद्वितीयाह्निके वैशेषिकसंमतपदार्थविभागं प्रस्तुत्य तत्र प्रामाणिकाप्रामाणिके विभज्य, "ईदृशस्य विचारस्यापवर्गे परम्परयोपयोगः" इति। यदि सर्वमपि जगत् प्रमेयम्, तदेकदेश एव सामान्यवाचिना प्रमेयपदेन कथं गृह्यत इति चेत्—अत एवार्थान्तरमुक्तम्। प्रमाविषयः प्रमेयम्; प्रमा च यथार्थज्ञानमित्यर्थस्वीकारे सर्वोऽप्यर्थः प्रमेयं भवति। गौतमस्तु प्रमेयविशेषमेव प्रमेयपदेन जग्राह। तन्मात्रवृत्तिप्रमेयत्वञ्च बन्धहेतुभूताज्ञान—मोक्षहेतुभूतज्ञानोभयविषयत्वरूपम्। प्रमाशब्दस्य प्रकृष्टज्ञानमित्यर्थात् तत्र प्रकर्षशब्देन याथार्थ्यविवक्षां परित्यज्य मोक्षोपयोगित्वरूपप्रकर्षविवक्षायां तादृशज्ञानविषयत्वं द्वादशविधमात्रे मुख्यम्। यदि प्रमाशब्दस्य यथार्थज्ञाने रूढतया अर्थान्तरमिदं लक्षणयैव वक्तव्यं स्यादिति मन्यते, तर्हि प्रमेयपदस्य प्रकृष्टं मेयं प्रमेयमिति विग्रहोऽस्तु। मेये प्रकर्षो नाम मोक्षहेतुज्ञानविषयत्वम्। एवं विग्रहे बन्धहेतुभूतज्ञानविषयत्वमपि प्रकर्षपदेन सुग्रहम्। इमं प्रकारमेवाभिप्रेत्य व्याख्याने, पूर्वं धातुरुपसर्गेण प्रशब्देन युज्यते, पश्चात् प्रत्ययेन; पूर्वं धातुः प्रत्ययेन युज्यते पश्चात् तेनेति पक्षद्वयमदर्शि।

एवम्भूतसर्वजगदन्तर्गतपदार्थविभागप्रकारे कणादकृते, प्रधानत्वात् द्रव्यं प्रथममुक्तम्। अथ सर्वद्रव्यवर्तित्वात् गुणः। कतिपयमात्रवर्तितया पश्चात् कर्म। तेषु त्रिषु सत्त्वात् सामान्यम्। तत्प्रत्यनीकत्वात् विशेषः। अस्य सर्वस्य समवायं प्रति अनुयोगित्वप्रतियोगित्वान्यतरभावात् ततः समवाय इति क्रमः। यद्यप्यभाव आदौ नोक्तः, तथाऽपि नवमाध्याये तद्विभजनात् सोऽप्यन्यतया तदिष्ट इति काणादाः। भावस्यैवाभावत्वाकारप्रदर्शनं तत्रेति षडेव तन्मता अर्था इत्यपि मन्येत। अतिरिक्ततया तत्स्वीकारे सामान्यतो भावाभावात्मना विभागोऽपि ज्ञापितो भवति। यथैवम्, तथा द्रव्याद्रव्यात्मनाऽपि विभागः शक्य इति न्यायपरिशुद्धौ। तथापि कणादकृतः द्रव्यस्य नवधा विभागः, अद्रव्यस्य पञ्चधा षोढा वा विभागो नास्मदिष्टः; श्रौतप्रक्रियाविरोधात्। सामान्यविशेषसमवायाभावास्तु न सन्त्येव। सांख्यास्तु अद्रव्यस्य द्रव्यनिष्ठतयोपसर्जनत्वात् द्रव्योक्त्यैव तदुक्तप्रायमिति कृत्वा द्रव्यमात्रसंख्यानमकार्षुः। एवमद्रव्यवत् द्रव्याणामप्युपसर्जनानां प्रधानद्रव्यान्तर्भावे विभाव्यमाने परमात्मन एकस्यैव प्रधानतमत्वात् चिदचितां तत्प्रकारत्वात् प्रमेयमेकमेवेत्यपि सुवचम्। प्रकारता च न कादाचित्की, किंतु शरीरात्मभावात् सार्वदिकीति जडद्रव्यपरिच्छेदान्ते प्रतितन्त्रभूतशरीरात्मभावप्रपञ्चनादवसेयम्। अत एव शारीरके सर्वशरीरकब्रह्मपरे चिदचितोः पश्चान्निरूपणेऽपि सूत्रकारः, अथातो ब्रह्मजिज्ञासेति ब्रह्ममात्रं निरदिक्षत्। तत्प्रकारेषु च चिदचित्सु तद्धर्मेषु चाद्रव्येषु यथायथं मोक्षोपयोगातिशयतदभावौ चिन्त्यौ। यथार्थज्ञानरूपप्रमाविषयत्वं तु सर्वत्र। विशेष्ये ब्रह्मणि च प्रकृष्टं मेयत्वं पुष्कलम्। सर्वमिदं न्यायपरिशुद्धिदर्शितं न्यायसिद्धाञ्जने संगृहीतम्, "अशेषचिदचित्प्रकारं ब्रह्मैकमेव तत्त्वम्। इदमेव चेत्थम्भूतं सामान्यतः प्रमाविषयतया विशेषतः प्रकर्षेण मेयतया च प्रमेयमुक्तम्" इति। उक्तं कुत्र? न्यायपरिशुद्धौ। सामान्यतः इत्यस्य

प्रकारभूतमर्वद्रव्याद्रव्यक्रोडीकारेणेति, विशेषतः इत्यस्य मोक्षोपयोगातिशयाभावात् कतिपयत्यागेन किञ्चिन्मात्रग्रहणेनेति चार्थोऽपि भवितुमर्हति। सर्वपदार्थविभागप्रकाराश्च बहुधा बहुभिराहता इति च न्यायपरिशुद्धावुक्तम्। तद्विवेचनञ्च तद्भूमिकायां भाविन्यां भवितुमर्हति।

तदत्र वैशेषिकशैलीमनुसृत्येत्यस्य, यथा तत्र जगदन्तर्गतसर्वपदार्थसंग्राहकविभाग इष्टः, तथा विभागं ओ निरन्तरास्थि तेऽयालोचनया विधायेत्यर्थः। एवं निरूपणात् वैशेषिकोक्तक्रमेण सर्वं गृहीत्वा तन्निरासोऽपि करिष्यत इहेति ज्ञापनञ्चानेन कृतं भवति।

तत्र प्रकारप्रकारिणोः स्थूलो विभागः चिदचिदीश्वररूपतत्त्वत्रयात्मना भवति, "भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्"इति (श्वे.1.12.) श्रुत्यनुसारेण। बद्धमुक्तनित्यरूपेण चितां प्रकृतिकालशुद्धसत्त्वरूपेणाचितां च विभजनात्, श्रिय ईश्वरेऽन्तर्भावाच्च सर्वतत्त्वसंग्रह इह कृतो भवति। चेतनपदेन चैतन्यविशिष्टस्य निर्दिष्टतया धर्मभूतज्ञानो कथंसिद्धा। तथाविधनिर्देशाभावात् पृथक्गणनीयानामपि सांख्यमत इवात्यन्ताप्रधानत्वाशयेनानुक्तिः; न त्वभावात्। अद्रव्याणि हि प्रत्यक्षादौ द्रव्यघटितसंनिकर्षबलेनैव ज्ञानविषयभावमर्हन्ति। कालस्य प्रकारतया भानम् तस्यापि द्रव्यतया साक्षादेव ज्ञानसंबन्धः। एतदपेक्षया वैशेषिकशैली मनुसृत्य यथावत् सर्वपृथक्कारेण विभागो युक्त इत्याकलय्य तत्त्वमुक्ताकलापे पृथग् बुद्धिसरोऽद्रव्यसरश्च वर्णितौ। जडद्रव्यसरे प्रकृतिकालयोरुभयोर्निरूपणं शुद्धसत्त्वानिरूपणञ्च तयोरेव जडत्वात्, अस्य स्वप्रकाशतायाः एव स्वभिमतत्वात्। तत्र नायकसरे निरूपणं तु परमतभङ्गे अचित्तत्त्वाधिकारे, 'त्रिविधाचिद्द्रव्यङ्गळावन त्रिगुणमुम् कालमुम् शुद्धसत्वमुम्. व्यक्ताव्यक्तकालङ्कळै त्रिविधाचेतनङ्गळॆन्ऱु सोल्लुवार्गळ् ईश्वरनिरूपणत्तिले शुद्धसत्त्वत्तै उपास्यप्राप्यविशेषणमाग निरूपिप्पार्गळ्'' इत्युक्तरीत्या युज्यते। परव्यूहविभवहार्दार्चात्मना भगवद्विभागो हि दिव्यमंगलविग्रहभिदायत्तः। विग्रहाश्च शुद्धसत्त्वमया इति प्राकृतवैलक्षण्ये ज्ञापनीये नित्यविभूतिरपि तत्र निरूपणावसरं लभते। अत्र तु न्यायसिद्धाञ्जने तं क्लेशं विजहत् विस्पष्टं नित्यविभूतिपरिच्छेदं पृथक् चकार। नित्यविभूतेर्जडत्वमेकदेशिन इच्छन्तीति आचार्यैरेवात्र, श्रीमद्रहस्यत्रयसारे च प्रादर्शि। एवंस्थिते तदाचार्याणामप्यभिमतमिति यथा प्रतीयेत तथा तत्र परिच्छेदे, "एके तु" इत्यादिवाक्यावतारणप्रकारो न हृद्यः। एवञ्चेत् स्वाभिमतिः, स्वग्रन्थे जडद्रव्यपरिच्छेद एव कालमिव नित्यविभूतिमपि निरूपयेत्; न पृथक्परिच्छेदं कृतवान् स्यात्। नित्यविभूतिस्वयंप्रकाशत्वस्थापनेऽस्मदाचार्याणां, प्रमाणस्य तर्केण प्रतिहत्ययोगादिति स्पष्टमेषां ग्रन्थे तत्रतत्र। माध्वा अपि स्वयंप्रकाशत्वमेवाऽऽशेरते। न प्रयोजनमनुसृत्य प्रमाणप्रवृत्तिः; किंतु प्रमाणानुसारेण प्रयोजनमन्वेषणीयम्। अस्तु नाम धर्मभूतज्ञानप्रसरणाभावेऽपि केषाञ्चित् बद्धानामत्यन्ताभिमतानां विषये, अर्चिरादिमार्गेण गच्छतां मुमुक्षूणां विषये मध्येपथं च, सामान्यतो नित्यविभूतिविषये निस्संदेहतां संपादयितुमेव तत्स्वयंप्रकाशत्वमीश्वर इच्छतीति।

तदेवं द्रव्याद्रव्यात्मना विभागे तद्विभागमसहमानैश्च बौद्धादिभिर्यथायथमन्यतरापलापे शंकिते तदपाकरणे च सर्वार्थसिद्धिस्वप्रबन्ध–1-8, 5–6–प्रदर्शितरीतिसंग्रहणेन कृते, अद्रव्यपदस्य द्रव्यपदघटितत्वात् द्रव्यं निरूप्य प्रतियोगिभूतद्रव्यनिरूपणानन्तरमद्रव्यनिरूपणम्। द्रव्यस्य प्राधान्याच्च। द्रव्यमध्ये ईश्वरस्य प्राधान्येऽपि सर्वप्रकारित्वेऽपि प्रथमतस्तन्निरूपणं तु लोके स्वरसतो ज्ञानप्रसरः जडद्रव्ये प्रथमं भवति, ततो जीवे, ततः परमेव सुसूक्ष्मे परे इति विमृश्य। नित्यविभूतिस्तु प्रतितन्त्रसिद्धतया सर्वथा परानभिमतत्वात् पश्चान्निरूप्यते। बुद्धेस्तु ज्ञानरूपायाः अद्रव्यत्वमेव परेष्टमिति तथाविवादास्पदत्वात् तत्समीपे निरूप-

णम्। अस्मदेकदेशिनोऽपि गुणत्वं मन्यन्त इति स्पष्टं तत्र। एवं तर्हि परमतभंगे चिदचिदीश्वरविभागक्रमः कथमिति चेत्—भोक्ता भोग्यं प्रेरितारञ्चेति श्रुत्यनुसारेण। तत्प्रवृत्तिरेव तथा कथमिति चेत्—भोक्तृभोग्ययोर्मध्ये भोक्तुः प्राधान्यात्, भोक्त्रर्थमेव भोग्यानां निष्पाद्यमानत्वात्। मानाधीना मेयसिद्धिरिति न्यायेन ज्ञानस्यैव वस्तुसाधकतया, ज्ञानस्य च ब्रह्म एव प्रथमं प्रसरात् तन्मुखेन विषयग्रहणकाल एव ज्ञानेनाऽऽत्मनो विषयीकारसंभवेऽपि सुषुप्तिजागराविशेषेण धर्मज्ञानमनपेक्ष्याऽऽत्मनः स्वयंप्रकाशत्वस्य सिद्धान्ते इष्टतया, तस्यतस्य प्रत्यगात्मनस्तत्तत्प्रकाश एव सार्वदिकः प्रथमः, तत एव ज्ञानप्रसरेण विषयग्रहणमिति प्रकाशक्रमेण चिदचिदीश्वरनिरूपणक्रम इति च विभाव्यम्। अत्र पञ्चधा द्रव्यविभागः प्रथमत एव कृतः, जडजीवेश्वरनित्यविभूतिबुद्धिभेदात्; षोढा वा त्रिगुणानेहोजीवेश्वरनित्यभूतिमतिभेदात्। तत्त्वमुक्ताकलापे तु कश्चिच्चमत्कारः, द्रव्यं द्वेधा विभक्तं जडमजडमिति; जडं द्विविधमव्यक्तं कालश्चेति, अजडं द्विविधं प्रत्यक् पराक् चेति, प्रत्यक् उभयथा जीव ईश्वरश्चेति, परागपि द्विधा नित्यविभूतिर्मतिश्चेत्येवं सर्वस्य द्वेधा विभजनात्। एवमौपनिषद्प्रक्रियानुसारिविभागेन पृथिव्यादिरूपेण नवधा कणादकृतो द्रव्यविभागोऽपि निर्मूल इति गमितम्।

अत्र जडद्रव्यपरिच्छेदः प्रथमः। नाम्नि जडपदं जीवादिवारणाय, द्रव्यपदमद्रव्यवारणाय। एवं जडद्रव्यं निरूप्याथ तद्भिन्नमजडम् अद्रव्यञ्च क्रमेण निरूपयति। जडद्रव्ययोर्मध्ये प्राधान्यात् प्रकृतनिरूपणं प्रथमतः। सर्वस्यापि प्रपञ्चस्य प्रकृतिपरिणामत्वात् प्रकृतिपरिणामेष्वेव श्रौतभोग्यपदसमन्वयात्। प्रकृतिपुरुषेश्वराणां क्रमेणैश्वर्यकैवल्यापवर्गपुरुषार्थतया कालतः प्रपञ्चस्य प्राधान्याच्च कालस्तु सर्वत्र प्रकारतया भासमानोऽप्रधानम्। अथापि स्वयं कलामुहूर्तादिरूपेण परिणम्य सर्वकार्यहेतुत्वात् अप्राकृतकार्येषु कालस्य हेतुत्वाभावेऽपि तत्रापि कलामुहूर्तादिरूपेण सद्भावात् प्रकृतिमण्डले तु अहोरात्र-मासर्त्वयन-संवत्सर-युगादिभेदेनापि यथायथं कार्यहेतुत्वात् लीलाभोगभूमिद्वयविलक्षणद्रव्यत्वाच्च स त्रिगुणसाहित्येनानन्तरं न्यरूपि। प्रकृतिपरिणामविशेष एव काल इति केचित्; तथाशंकाप्रसंगे तद्वारणायाप्यत्र सह निरूपणम्। कालो विभुर्नित्य उपाधिभेदात् क्षणादिरूपेण भिद्यते इति तार्किकमतम्। 'कलामुहूर्तादिमयश्च कालः', "कला मुहूर्ताः काष्ठाश्च अहोरात्राश्च सर्वशः" इत्यादिप्रमाणात् कालः क्षणात्मना सततं परिणमति। तत्परिणामसंख्यानभेदेन लवकाष्ठानाडिकामुहूर्तादिभेद इति सिद्धान्तः। प्रकृतितत्कार्यनिरूपणे च तत्कार्यक्रमस्य महदहंकारेन्द्रियतन्मात्रभूतपञ्चकात्मना दर्शितत्वात् प्रपञ्चस्य सर्वस्य भौतिकत्वाच्च तत्र सर्वान्तर्भावः तेन कणाददर्शने महदहंकारानुक्तिः, इन्द्रियाणां भौतिकत्वोक्तिः, आकाशस्य नित्यत्वोक्तिः, पृथिव्यादिभूतचतुष्टये नित्यानित्यविभागोक्तिश्च निराकृतेति ध्येयम्। जालकसूर्यभासदृश्यमानत्रसरेण्वतिरिक्तादृश्यपरमाण्वनंगीकाराच्च तत्कृतपरमाणुद्व्यणुकवादः पराकृतः। उपलभ्यमानत्रसरेणुपुञ्जातिरिक्तावयविपरम्परापरासनाच्च अवयवातिरिक्तावयविद्रव्याण्यपास्तानि। अत्र प्रकृतिमहदहंकारतन्मात्राणामिह प्रपञ्च एव स्वीकारेऽपि इन्द्रियाणां भूतपञ्चकस्य च नित्यविभूतावपि सद्भावस्य प्रमाणसिद्धतया अप्राकृतानि तानि अनादिसिद्धानि नित्यानि सन्तीति नित्यविभूतिपरिच्छेदे न्यरूपि। जडपरिच्छेदे च महदहंकारयोर्नित्यविभूतौ स्थानभिमतत्वात् इन्द्रियषट्क एव प्राकृताप्राकृतविभागवर्णनारम्भः। एवं नित्यविभूतौ पञ्चोपनिषन्मय-पञ्चविग्रहान्वयिनित्यभूत-

नवकसद्भावादेवास्माभिः **प्रबन्धरक्षायां** श्रीवकुलभूषणदिव्य [illegible] श्रीमुखसूक्तौ सप्तमगाथावैलक्षण्येन एकादश-गाथायां खरेत्यादिना अप्रकृतभूतग्रहणमपौनरुक्त्याय युक्तमित्युक्तम् प्रकृतेन्द्रियाणां [illegible]रिकाहंकारजन्य-त्वस्य प्रमाणसिद्धतया भौतिकत्ववादं निरस्य तत्तद्भूतक [illegible]प्यायनवशात् तथाभौतिकत्वव्यवहारनिर्वाहो व्यधायि। कार्यकारणभावस्य विशिष्टब्रह्मण्येवोपपाद [illegible] शरीरात्मभावसमर्थनाय शरीरलक्षणभाष्यानुवादेन तल्लक्षणं त्रेधा विभज्य चतुर्थमपि भाष्याभिमतं लक्षणं सर्वसंग्राहकमदर्शि एवं प्रकृतितद्विकृतिवर्गसंख्याने चतुर्विंशति-संख्यां यथाप्रमाणमाहत्य शैवकृतः षट्त्रिंशत्तत्त्ववादः तर्कप्रमाणोभयाननुसारित्वादनादेय इत्युपपादि । अत एव प्रमाणविरोधात् तर्कमात्रावलम्बिबौद्धजैनादिपक्षनिरासः सिद्धः प्रकृतिमहदहंकाराद्यंगीकारस्य सांख्यदर्शने दर्शनेऽपि सत्त्वरजस्तमसां द्रव्यत्वं प्रकृतेस्तदभिन्नत्वं च तन्मतं न सत्तम् । तथा तन्मात्रभूतोत्पत्तिक्रमश्च तदिष्टः प्रमाणविरोधादुपेक्षितः। "अष्टौ प्रकृतयः षोडश विकाराः" इति श्रुतिनिर्वाहविषये बहु वक्तव्यमस्ति एतत् **सर्वार्थसिद्धौ परमतभंगे** च यद्यपि प्रदर्शितम्, अथाप्यत्र तदुपेक्षितम्; एतावान् विवेकः पर्याप्त इति परिशील्य ।

तदनन्तरमेव कालो निरूपि । "अनादिर्भगवान् कालः" इति विष्णुपुराणोक्तस्य कालस्य प्रकृति-नित्यविभूतिवत् अनादेः, विभूतिद्वयेऽपि परमात्मवत् व्याप्तस्य प्रकृतिकार्यत्वायोगादन्यत्वमेव सिद्धान्ते स्वीकृतम् । तर्हि **न्यायतत्त्वे** संयोगाधिकरणे, 'संयोगविभागसंख्या कालः' इति संयोगादिगुणगणनारूपत्वमुक्तम्, प्रमातृपादे च, "एकाश्रयक्रियासंख्या कालः" इति क्रियागणनारूपत्वञ्चोक्तं कथमिति चेत् — तेन तर्कैः कालोऽन्यो दुरुपपाद इति ज्ञाप्यत इति वर्णितमत्र ग्रन्थे । **परमतभंगे** तु कलामुहूर्तादिकालोपाधिभेदपरि-कल्पना संयोगविभागक्रियादिकार्यवर्गग्रहणेनावसेयेति तत्रोच्यते ; न तु विभुद्रव्यरूपानादिनिधनकालद्रव्यापला-पस्ततो भवतीति न्यायतत्त्वतात्पर्यं ज्ञापितम् । तार्किकैरपि क्रिया, क्रियातो विभागः इत्यादिक्रमं प्रदर्श्य, विभागप्रागभावावच्छिन्नक्रिया एकः क्षणः, पूर्वसंयोगनाशप्रागभावावच्छिन्नो विभागः एकः क्षण इति क्रियादिकमादायैव क्षणादिव्यवस्था क्रियते । तावता न महाकालोऽपलपितो भवति । अतः चतुर्विंशतिविलक्षण एव कालः । अथापि ग्रन्थेषु पञ्चविंशकपदेन षड्विंशपदेन वा न स उच्यते ; किंतु क्रमेण जीवः परश्च । स्थितस्यापि कालस्य सर्वत्र प्रतीतिषु उपसर्जनतयैव प्रतीयमानत्वात् अत्र सूक्ष्मसूक्ष्मतरसूक्ष्मतमानां क्रमेणोक्तेरभिमतत्वात् प्रायेण पृथगनुक्तिः ।

अत्र जीवस्य देहेन्द्रियमनःप्राणधीविलक्षणत्वम् अत एव बौद्धसांख्यादितिसंमतविलक्षणत्वं ज्ञातृ-त्वम् अहन्त्वं प्रत्यक्त्वं ज्ञातृत्वस्य स्वाभाविकत्वम् ज्ञानशब्दव्यपदेश्यतया स्वयम्प्रकाशत्वम् अणुत्वं निर्विकारत्वं प्रायः प्रतिशरीरं भिन्नत्वं सर्वेषां ज्ञानानन्दस्वरूपतया नित्यज्ञानगुणकत्वादिना च साम्यात् प्रकारैक्यम्, मोक्षेऽपि ब्रह्मणा सहैक्यायोगः भोगमात्रेण परमसाम्यम्, ईदृशसुखस्वरूपयोग्यस्यापि अनादिकर्मरूपोपाधिवशात् संसारित्वम्, पश्चात् संमार्गन्मोचनम्, ईदृशोपाधिप्रसक्त्यभावात् नित्यमेवानन्द-साम्यापन्नानामनन्तानामात्मनां नित्यविभूतौ प्रामाणिकत्वम्, अत एव जीवत्रैविध्यं चोक्तम्। अत्र षष्टे **अनन्त-विष्वक्सेनेति** कारिकायाः, अनन्तादीनां नियताधिकारभाक्त्वेऽपि मुक्तानां तदभावेऽपि तैर्नित्यैरनन्त-

विष्वक्सेनाद्यै**रानन्दसोदराः**=तुल्यानन्दा भवितुमर्हन्ति मुक्ताः। तत्र हेतुरुच्यते **ज्ञानानन्दादिभि**रिति। **आदि**ना शेषत्वपरिग्रहः। नित्यैस्तुल्यतया ज्ञानसत्तया सर्वज्ञत्वाविशेषात् भगवच्छेषत्वाविशेषेण स्वार्थत्वाभावेन भगवत्प्रीतेरेवोद्देश्यत्वाच्च तदधीन आनन्द इति आनन्दसाम्यं निराबाधमित्यर्थो युक्त इति प्रासंगिकमेतत्। अथ वाक्यार्थज्ञानादिविलक्षणस्य भक्तिरूपज्ञानस्यैव मोक्षहेतुत्वम्, भक्तेश्च कर्मयोग-ज्ञानयोग-साध्यजीवात्मयोगसाध्यजीवात्मावलोकनानन्तरानुष्ठेयत्वं कर्मयोगादिस्वरूपं तयोस्तारतम्यं भक्तिस्वरूपम् एतदधिकारिविवेचनम् तदनधिकारिणां न्यासविद्यया मोक्षप्राप्तिः, भक्तेर्नित्यकर्माङ्गकत्वम्, प्रपत्तेरङ्गानपेक्षायामपि कर्मणामनुष्ठेयत्वम्, पुण्यपापरूपकर्मनाशकत्वे भक्त्यपेक्षया प्रपत्तेरतिशयः, अर्चिरादिमार्गेण मोक्षप्राप्तिः, सायुज्यपर्यन्तप्राप्तेरेव मुख्यमोक्षत्वमित्यादिकमुपवर्ण्य कैवल्यस्य मुख्यमोक्षत्वाभावः प्रपञ्चितः। कैवल्यविषये वक्तव्यं बहु **रत्नपेटिकाख्ये** व्याख्याने साधु परिशीलितम्। उभयसंमतप्राक्तनाचार्य-श्रीसूक्तिपरिगणनेनार्वाचीनैकदेशिमतनिरसनं सुकरमिति ध्येयम्।

अथेश्वरनिरूपणे तस्याद्वितीयत्वादिना एकत्वे कथ्यमाने, निर्विशेषब्रह्मण एवाद्वितीयत्वमित्यद्वैतिशंकायां तत्परिहाराय ईश्वर एव ब्रह्मेति वदन् स्वरूपतो गुणतश्च बृहत्त्वाश्रयस्यैव ब्रह्मत्वात् प्रकृति-प्रजापति-पशुपत्यादीनामप्यब्रह्मत्वं प्रतिष्ठाप्याद्वैतिपक्षप्रतिक्षेपविस्तरो व्यधायि। जडप्रपञ्चमिथ्यात्वं जीवब्रह्मैक्यञ्च वदतोऽद्वैतिनः पूर्वपरिच्छेदयोरपि निरासप्रसक्तावपि ब्रह्मनिरूपणावसरे तद्वचनं स्थाने। अथ भास्करादिभेदाभेदवाद्वैति-निरासोऽपि। तस्य चानन्तत्वं वस्तुपरिच्छेदाभावरूपं यत्, तन्न वस्तूनामभावात्, किंतु तेषु सत्स्वेवेति निरूप्य सर्वशरीरित्वेन निमित्तकारणत्ववत् उपादानत्वमप्युपपादितम्। अथोपादानत्वमनभ्युपगच्छन् आनुमानिकेश्वरवादी तार्किकः शास्त्रयोन्यधिकरणशैल्या निरस्यते। तत्तन्मतखण्डनप्रणाली ग्रन्थेऽस्मिन् न केवलं पूर्वाचार्यप्रतिपादितप्रकारतो विलक्षणा, किंतु अधिकार्थगर्भत्वात् सर्वार्थसिद्ध्यादिस्वग्रन्थपरिपाटीतोऽपि विलक्षणेति ध्येयम्। बह्वर्थगर्भसंक्षिप्तपद्यापद्यात्मकवाक्यविन्यासोऽत्रेति च विशेषतो व्याख्यापेक्षा सर्वत्र। तार्किकेश्वरस्थापनेदम्पर**न्यायकुसुमाञ्जल्या**दिग्रन्थोक्तसमालोडनमप्यत्र यथायथं संलक्ष्यम्। एवं निरीश्वर-मीमांसकादिसंप्राणनरूपोऽयं वादो वैदिकोत्तमानां कथंकारं युज्यत इत्याक्षेपोऽपि बहुप्रयोजनवर्णनेन पर्यहारि। एवमद्वितीयत्वादिना एकेश्वरपक्षस्य श्रौतत्वे स्थापिते श्रिय ईश्वरकोटिप्रवेशायोगशंकायां श्रीश्रीशयोः शाश्वतदाम्पत्यसद्भावात् श्रिय ईशानत्वमीश्वरैश्वर्याविरोधीत्युपपाद्य श्रीविषये ऐश्यसाम्यादिवचसामभिप्रायवर्णनपूर्वकमैककण्ठ्यं संपाद्य सम्प्रदायधुरन्धरप्राचीनाचार्यश्रीसूक्तिसंवादेन च तत्तद्वादिकोलाहलरूप-हालाहलमभावं गमितम्। अत्र **रत्नपेटिका**ख्यव्याख्यायां कृतो विस्तरः सर्वः **चतुश्श्लोकीभाष्यार्थ-**निर्धारक-**श्रीसाक्षात्स्वामि**वेदान्तरामानुजमहादेशिकानुगृहीत**श्रीतत्त्वसिद्धाञ्जना**नुरोधी सावधानं सेव्यः। श्रीविषये श्रीभाष्यकाराभिमतं सर्वं तत्प्रणीतश्रीभाष्यादिग्रन्थानारूढमुपदेशमात्रलभ्यमासीत्। अतस्तत्र तदनन्तरेषु अभिप्रायभेदाः पदमलभन्त। माध्वा अपि श्रियो विभुत्वं महत्ताञ्च साधु समर्थयन्ते। जीवकोटिप्रवेशं तस्यास्तेऽपि न सहन्ते। मुक्तानामपि सार्वज्ञ्यं समर्थयमानानां विशिष्टाद्वैतिनां मते तु श्रियः

किञ्चिदूनसार्वज्ञ्य माध्वाभिमतं नैव भवितुमर्हति। सीतायाश्चरिते महति च, "ततः स प्रयतो वृद्धो.... रामं रत्नमये पीठे सहसीतं न्यवेशयत्" इति महातेजस्त्वेन श्लाघितो वसिष्ठो ब्रह्मर्षिरुभयेश्वरत्वमञ्जसैव स्मान् ग्राहयति। "इन्धो नाम दक्षिणेऽक्षन् पुरुषः, तस्य पत्नी वामे विराट्" इति च **बृहदारण्यकम्**। श्रीपाञ्चरात्र-श्रीविष्णुपुराणादौ विस्तरोऽत्र ग्रन्थ एव विशदः।

**अथास्य नित्यविभूति**रिति नित्यविभूतिरूपतत्त्वान्तरनिरूपणारम्भः। विभूतिपदस्य सापेक्षत्वात् **अस्ये**ति प्रयोगः। पूर्वोक्तजडद्रव्याणां चिताञ्च परमात्मसंबन्धित्वं विनाऽपि मतान्तरस्थैर्व्यवहारः क्रियते। नित्यविभूतिस्तु शास्त्रैकगम्या धर्मिग्राहकबलात् तदीयत्वेनैव गृह्यते, नातेश्वरसंबन्धित्वांशे विवाद इति ज्ञापनाय च विशिष्यात्र, **अस्ये**ति प्रयोगः। ईदृशसंबन्धविशेषं मनसिकृत्यैव क्वचित् ग्रन्थे ईश्वरपरिच्छेद एव नित्यविभूतेरपि निरूपणम्। यद्यपि विभूत्यन्तरमपि नित्यम्, अथापि भूतानामिन्द्रियाणां भौतिकानाञ्च कात्स्न्येनानित्यत्वमेवेह प्रकृतौ। नित्यविभूतौ तु सावयवानामपि तेषामनन्तानामनादित्वमनश्वरत्वञ्चेति विशेषात् नित्यविभूतिरिति व्यवहारः। भोगसाधनत्वं यादृशाकारैः, तादृशाकारविशिष्टतयाऽप्यविनाशित्वं हि परमपदे। यदाह, "विषयाश्चात्र भूषणायुधासनपरिवारायतनोद्यानवापिकाक्रीडापर्वतादयोऽतिविचित्राः नित्याः; केचित्तु कृतका अनित्याश्च" इति। भगवद्विग्रहो नित्यः परशब्देन सूक्ष्मशब्देन च व्यवह्रियमाणः। तस्य कार्यभूताश्च व्यूहविभवार्चाहार्दरूपविग्रहाः तद्वत् शुभाश्रयाः। **शुभाश्रयत्वं** नाम शुभत्वे सति आश्रयत्वम्। शुभत्वं हेयनिवर्तकत्वम्, आश्रयत्वं चित्तालम्बनत्वम्। शुभत्वमात्रं परमात्मनि। परंतु तत् तत्र पुष्कलम्। पररूपे **शान्तोदितनित्योदित**रूपेण द्वैविध्यं मूल एवादर्शि। तत्र व्युत्क्रमेण नित्योदितात् शान्तोदितो-त्पत्तौ प्रमाणं व्याख्यायामदर्शि। स शान्तोदितो व्यूहवासुदेव एवेति व्याख्यागत्या प्रतीयते। तस्य परान्तर्भूतत्वात् व्यूहवासुदेवहेतुः शान्तोदितः परः, तद्धेतुश्च नित्योदितवासुदेव इति विवक्षितमित्यपि प्रतीयते। उपर्येतदस्माभिः प्रस्तोष्यते। केशवादीनि व्यूहान्तराणि च श्रीमद्रहस्यत्रयसारदर्शितानि। सर्वत्र लक्ष्म्या अप्यवतारमूर्तयः तन्नामधेयभेदाश्च **लक्ष्मीतन्त्रा**दौ द्रष्टव्याः। भगवत इव भगवद्विग्रहस्यापि व्या-प्त्यादिशक्तिरस्ति। विश्वरूपे च तदंशो दृष्टः॥ सर्वव्याप्तौ हस्तपादादिभेदः कथमिति चेत्— सूक्ष्मांशेन व्याप्तावपि हस्तपादादितत्तदुचितपरिच्छेदस्थूलांशैर्लक्ष्यमाणैरवयवपरिक्लृप्तिः स्यात्। अणु-मप्यंशमदिहायोर्ध्वलोकान् सर्वान् मातः त्रिविक्रमपदस्य पदाकारसंनिवेशः कथमिति चिन्त्यताम्॥ एवं भगवद्विग्रहस्य शुद्धसत्त्वमयस्य प्रकृतावपि व्याप्तिर्स्वीकारे नित्यविभूतेरधःपरिच्छेदवत्त्वं कथमिति चेत्— परिणामांशेन कदाचित् सर्वत्र व्यापनेऽपि सा विभूतिः स्वरूपेण तथा परिच्छिन्ना भवितुमर्हति। एत-त्परिच्छेदान्ते, **'शुभतरस्वैरावतारात्मिका** इति नित्यविभूतिविशेषणेन, 'अवताराणां प्रवृत्तितत्त्वेऽपि प्राकृतत्वं न मन्तव्यम्। शुद्धसत्त्वद्रव्यस्य प्रकृतावपि प्रवेशो भवितुमर्हति, भागवदवताराणां शुद्धसत्त्व-मयत्वात्, यथा प्राक् वैदिकतत्पुत्रादिशरीरस्य नित्यविभूतौ प्रवेशः' इति ज्ञाप्यते। विश्वरूपविभुत्वाद्यने-**कांशसंदेहनिवृत्तिः परमपदप्राप्तौ संपत्स्यत इति परमतभंगे प्रोक्तम्**। अप्राकृतानां पञ्चानां भूतानां

पञ्चशक्तिशब्दव्यपदेश्यत्वात् पञ्चोपनिषन्नामकपञ्चविधमन्त्रविशेषप्रतिपाद्यत्वाच्च भगवद्विग्रहेषु पञ्चोपनिषन्मयत्व-पञ्चशक्तिमयत्वव्यवहारः। तेषां ज्ञानानन्दस्वरूपत्वं मुख्यम्। षाड्गुण्यमयत्वं त्वमुख्यम्। ज्ञानशक्त्यादीनां षण्णां गुणानां परमात्मासाधारणत्वात्; अचेतनेषु तदसंभवादित्युक्तम्।

पञ्चमो बुद्धिपरिच्छेदः। आत्मनां ज्ञानस्वरूपत्वेऽपि तदपेक्षया बुद्धेर्वैलक्षण्यं सकर्मकावभासत्व-सकर्तृकावभासत्वादि। नित्यमुक्तेश्वरबुद्धयः सर्वदैवैवम्भूताः। बद्धजीवधर्मभूतज्ञानानामनादित्वेऽपि परिणामदशायामेवेदृशत्वम्। एवं स्वसत्ताकालभाव्यानिरूपस्वयम्प्रकाशत्वमपि सकर्मकावभासतया स्वसत्ताव्यापकप्रकाशवत्त्वरूपं ग्राह्यम्। एतेनैवाऽऽत्मन्यतिव्याप्तिवारणमपि। तस्य सकर्मकावभासत्वाभावात्॥ स्वप्रकाशत्वे स्वकर्मकत्वमस्त्येवेति चेत्—स्वप्रकाशत्वं हि अन्यनिरपेक्षव्यवहारानुगुण्याश्रयत्वम्। न तु स्वस्य स्वविषयकत्वम्। धर्मभूतज्ञानविकासस्यैव विषयित्वमसाधारणम्। द्वितीयव्याख्याने स्वस्य स्वविषयत्वस्वीकारेण तत्रतत्र परिष्करणं तु निरूपणसौकर्यकृतं प्रकाशशब्दो विषयत्वार्थक इति नैयायिकवासनाबलायतमित्यन्यत्र विस्तरः। तार्किकैः बुद्धिसुखदुःखेच्छाद्वेषधर्माधर्मसंस्कारा अष्टौ गुणा आत्मनः स्वीकृताः। तत्राऽऽद्यानां पञ्चानां मानसप्रत्यक्षवेद्यत्वम्, बुद्ध्यन्तर्गतस्य निर्विकल्पकस्य, प्रयत्नान्तर्गतस्य निद्राकालिकोच्छ्वासनिश्वासहेतोर्जीवनयोनियत्नस्य चातीन्द्रियत्वम्, अन्यानां धर्मादीनां त्रयाणाञ्चातीन्द्रियत्वमेवेत्युक्तम्। सिद्धान्ते इच्छादीनां सर्वेषां बुद्धिपरिणामत्वस्यैवेष्टत्वात् बुद्धेश्च स्वयम्प्रकाशत्वात् तेषामपि स्वयम्प्रकाशतैवेति मनइन्द्रियाधीनप्रत्यक्षविषयता नेष्यते। निर्विकल्पकमप्यस्मन्मते स्वयम्प्रकाशमेव। जीवनयोनियत्नस्तु नास्त्येव। आत्मनामपि स्वयम्प्रकाशतया मनसा प्रत्यक्षणीयस्य कस्यचिदभावेन मानसप्रत्यक्षमेव नेष्यते। मनस्तु वर्तते, बाह्येन्द्रियसहकारितया परोक्षानेकविधज्ञानहेतुतया योगहेतुतया चेत्यन्यदेतत्। इच्छाद्वेषादेर्मानसप्रत्यक्षवेद्यत्वमिति **वरदविष्णुमिश्रो**क्तिस्तु परमतान्वारोहेण। धर्माधर्मौ तु न जैवज्ञानपरिणामभूतौ; नापि जैवगुणौ; किन्त्वीश्वरज्ञानपरिणामभूतप्रीतिकोपात्मकाविति तस्यैव तौ प्रत्यक्षौ। संस्कारो ज्ञानातिरिक्त आत्मनिष्ठधर्म इति पक्षमुपेक्ष्य अनुभवस्मृत्यादिवत् ज्ञानावस्थाविशेषरूपतयैव लाघवेन स्वीकृतः। अथापि तस्य विषयग्राहित्वेऽपि विषयाग्रहावस्थाकालिकधर्मभूतज्ञानवत् अस्वयम्प्रकाशत्वमेव, तदनुपलब्धेरविवादत्वात्। **प्रज्ञापरित्राणे** सुखदुःखयोर्ज्ञानविशेषत्वमनभ्युपगम्य शरीरधर्मत्वोक्तिस्तु भाष्यादिविरोधादिव **न्यायसुदर्शना**ख्यतदेककर्तृकग्रन्थविरोधादप्युपेक्षणीयेति प्रतिपादितमत्र। तथा बुद्धेर्गुणत्वं तदुक्तमपि भाष्यादिविरोधादुपेक्षितम्। स्मरणानुभवप्रत्यक्षानुमित्यादीनामवस्थारूपत्वादवस्थाश्रयत्वरूपद्रव्यलक्षणस्य न तत्र भंगः। संकोचविकासयोरंगीकृतत्वात् ज्ञानद्रव्यस्य विषये द्रव्येण संयोग एव ज्ञानविषयत्वम्। द्रव्यगतधर्माणां विषयत्वञ्च संयुक्ताश्रितत्वरूपमित्यादिकमत्र प्रपञ्चितम्। **तत्त्वमुक्ताकलापा**दौ बुद्धेः प्रमा-भ्रान्ति-संशय-तर्कादिविभागः, भ्रान्तौ ख्यातिमतभेदः, प्रत्यक्षानुमितिशाब्दादिभेदः उपमानादिप्रमाणान्तरासंमतिरित्यादिकं यद् विवेचितम्, तस्य सर्वस्यात्र पूर्वग्रन्थे **न्यायपरिशुद्धावेव** गतत्वादत्र त्यागः। अस्मदभिमतख्यातिप्रकारश्च तत्रैव द्रष्टव्यः।

अथान्तिमोऽद्रव्यपरिच्छेदः—अद्रव्याणि दशैव गणितानि; अन्येषां तार्किकपरिगणि-

तानां चतुर्विंशतिगुणान्तर्गतानां कर्मसामान्यविशेषसमवायाभावानां मध्ये समवायविशेषयोः सर्वथैवास्वीकारः, अन्येषां स्वीकृतानां क्लृप्तेष्वेवान्तर्भाव इत्यादिक्रमत्रोपपाद्यते, अद्रव्याणि दशैवेति न; अन्यान्यपि सन्ति स्फुटपरिगणनीयत्वात्तु एतावन्त्युक्तानीत्यप्यत्रैवोपक्रमे वर्णितम्, "तेषाञ्चानन्तवैभव्यस्य विविच्य निर्देष्टुमशक्यत्वात्.......अन्यानि स्फुटपरिगणनीयानि अद्रव्याणि निरूप्यन्ते" इति ॥ ननु मन्त्रत्वमभियुक्तकर्तृकमन्त्रशब्दप्रयोगविषयत्वमितिवत् रूपत्वादयोऽद्रव्यधर्मा अपि रूपादिशब्दवाच्यत्वादिरूपा भवितुमर्हन्ति । वाच्यत्वादिकञ्च वाग्गतशक्तिविषयत्वं वाग्जन्यशक्त्यधीनप्रतीतिविषयत्वं वा । विषयत्वञ्च संयोगादिरूपमस्मन्मते ; तार्किकैः प्रतियोग्यनुयोगिभाव-आधाराधेयभाव-कालिकविशेषणत्व-दैशिकविशेषणत्वादीनां स्वरूपसंबन्धात्मकतया स्वरूपानतिरेकात् सप्तपदार्थ्यन्तर्भाव एवेति कथनात् तद्रीत्या विषयत्वादिकमपि स्वरूपसंबन्धात्मकं वा । शक्तिः प्रतीतिरित्यादयः प्रतिसंबन्धिनस्तु पदार्था इष्यन्त एव । अतः क्लृप्ताद्रव्यदशकातिरिक्तानि कानि । प्रकृतित्वकालत्वात्मत्वजीवत्वज्ञानत्वादीनीति चेत्— तान्यपि तथैव निर्वक्तुं शक्यन्ते । जगन्मूलकारणत्वादिकं प्रकृतित्वादिकम् इत्यपि सुवचम् । यथा ब्रह्मगतसत्यत्वादिकं निरुपाधिकसत्तायोगित्वादिरूपेण भाष्ये (1.1.2.) निरुक्तमिति चेत्—सत्यम् ; तथापि प्रवृत्तौ प्रलये ये समरूपाः सततपरिणामाः, ये च सृष्टौ महत्त्वाहंकारत्वादयो विषमपरिणामाः, तेषामनंगीकारे अवस्थाश्रयत्वरूपं द्रव्यत्वमुपादानत्वादिकञ्च न सिध्येत् । एवं कालेऽपि । यद्यपि काले क्षणत्वरूपपरिणाममेकमेव स्वीकृत्य तद्गुणनयैव लवकाष्ठामुहूर्तादिपरार्धपर्यन्तव्यवहारा निरुह्येरन्, अथापि क्षणसंततिरेष्टव्या । तदवस्थाश्रयत्वेन तस्य द्रव्यत्वादि । ज्ञानेऽपि प्रत्यक्षत्वानुमितित्वशाब्दत्वस्मृतित्वादयोऽवस्था अत एवैषितव्याः । क्षीरस्य दधिरूपेण परिणामे मध्येऽनेकपरिणामसद्भाववत् प्रकृतेः महदादिरूपेण परिणामेऽप्यवान्तरपरिणामा अनेके सूक्ष्माः स्युः । यथा श्यामस्य पर्णस्य पाण्डुताप्राप्तिमध्ये प्रतिक्षणमवस्थाभेदाः, यथा च प्रकृतावेव भिन्नतमस्त्वाक्षरत्वाव्यक्तत्वावस्थाः क्रमभाविन्यः सुबालोपनिषदाम्नाताः । तत्तदवस्थास्वरूपाण्यादाय तत्र तत्र नामपरिकल्पनाऽपि । अतो दशकातिरिक्तानन्तप्रकारत्वमद्रव्येष्ववर्जनीयम् । अन्यथानिर्वाहो यावति भवति, तावति धर्मकल्पना नेष्यते । अत एव सामान्यनामखण्डोपाधीनाञ्च न्येषामनंगीकारः। कर्मसंख्यासादृश्यादिविषये सगोलकलहेऽपि तेषामनतिरेक एवान्तत आचार्यैष्टः । आह चात्रैव, किञ्चिदनंगीकारम्, "एष्वपि केषाञ्चिदनन्तर्भावः सयूथ्यमतस्तत्रतत्र वक्ष्यते । सयूथ्यांगीकृतैः कैश्चित् सह एकत्वादयस्तत्त्वमुक्ताकलापे अद्रव्यभेदा अस्माभिरुक्ताः" इति । एवञ्च पूर्वमेकदेश्यनुसारेण स्वोक्तमपि पुनः परिशील्य त्रैतावत्परिगणना क्रियते अन्येषामन्तर्भावमुपपाद्येति स्पष्टम् । तानि च (श्लो-) सत्त्वं रजः तमः शब्दः स्पर्शो रूपं रसस्तथा । गन्धः संयोगसंज्ञश्च शक्तिश्चेति क्रमात् दश ॥ अत्र शक्तेश्चेतनेऽपि सत्त्वेऽपि सर्वेषामचेतनगुणत्वात् अचेतनेषु मूलप्रकृतिमारभ्य सत्त्वरजस्तमसां सत्त्वात् प्रथमं तेषां निर्देशः । तत्र सत्त्वं प्राकृताप्राकृतोभयात्मकं श्रेष्ठत्वात् प्रथमम् उच्यते, निकर्षक्रमाच्च रजस्तमसी । उत्पत्तिक्रमानुरोधेन शब्दस्पर्शरूपरसगन्धाः । एवं विशेषगुणेषु

गणेषु सामान्यगुणः संयोगः सर्वत्रैव, अथ सामान्यगुणो विभागः सदृशः शक्तिरिति क्रमः। सत्त्वरज-स्तमांसि सांख्यप्रोक्तान्यपि शास्त्रैकग्राह्याणि तार्किकमते कानि। शब्दस्याकाशमात्रगुणत्वं तार्किकेष्टम्। अस्माकं तु शब्दो भूतपञ्चकगुणः। वायौ स्पर्शोऽनुष्णाशीतः, तेजस्युष्णः, तोये शीतः, पृथिव्या-मनुष्णाशीतः। रूपं सितरक्तकृष्णपीतभेदाच्चतुर्विधम्। (तत्त्वत्रयचुलके) भगवतो व्यूहेषु चतुर्षु कृता दियुगभेदेनेमं रूपभेदमागमा आमनन्ति। भास्वररक्तरूपं तेजसि, अभास्वरशुक्लरूपं जले, अभास्वरं सर्वं रूपं पृथिव्याम्। परंतु पृथिव्या उत्पत्त्यनन्तरे कृष्णरूपमेव। पाकात् रूपान्तराणि। जलपृथिव्योः रसगन्धविषये वक्तव्यमत्र ग्रन्थे पाकजप्रक्रियावर्णनावसर एव स्पष्टमुक्तम्। तेन तोये मधुर एव रसः। तोयजन्यत्वात् पृथिव्यामपि मधुर एव प्राथमिकः। अन्यस्तु पश्चात् पाकात्। गन्धः सर्वो यद्यपि पृथिव्या एव; अथापि प्राथमिकः सुरभिरेव। अत एव वर्षबिन्दुपाते सर्वत्र पृथिव्यां सौरभोपलब्धिः। अन्यस्तु पश्चात्। रसः षड्विधः। गन्धश्च द्विविधः। शक्तिपदार्थो मीमांसकैर्युक्त्या स्थापितः न्यायकुसुमाञ्जल्यादौ तार्किकैर्युक्त्या खण्डितः तत्खण्डनेन एतदाचार्याचार्यैः श्रीवादिहंसाम्बुदैः न्यायकुलिशे प्रत्युज्जीवितः, तथापि शास्त्रबलादेव तत्स्वीकार इत्येवान्तत आचार्यैरवधारि। अथैतद्दशकातिरिक्तानामद्रव्याणां वैशेषिकप्रवर्णितक्रमेण विचार्य निरासः क्रियते। कर्मणि महान् विवादः। संयोगे तदन्तर्भावितम्। नित्यं सामान्यमनुगतं निराकृतम्। विशेषस्याभावस्य तत्संबन्धस्य वैशिष्ट्यस्यान्यस्य च निरासघट्टो लुप्तः। विभागनिराकरणावसरे च वाक्यम्, "अभावनिरूपणं यावदेतच्चोद्यं मा स्म विस्मरः" इति। तेन सर्वनि-रूपणमत्र स्थितमित्यवसीयते। तदेवं श्रीभाष्यकारसिद्धान्ते प्रमेयेयत्तानिर्णय एतद्ग्रन्थादेते।

**अस्मत्सिद्धान्ते द्रव्यद्रव्यप्रमेयेयत्तानिर्णये प्रवृत्तिरियं नार्वाचीना। परपक्षपराकरणेनैतत्सिद्धा-न्तप्रचारो यत्प्रकारः, स भगवान् नाथमुनिरेव न्यायतत्त्वनाम शास्त्रं निरमात्। अद्यत्वे तदनुपल-म्भेऽपि तदनुवादस्तत्र तत्पौत्रैर्भगवद्यामुनमुनिभिर्भगवद्रामानुजमुनिप्राचार्यैः प्रणीते सिद्ध-त्रये लक्ष्यते। अप्युक्ताचार्या., न्यायतत्त्वशास्त्रप्रकरणग्रन्थः किंचाऽऽस्मत्सिद्धिरिति। ततः परं तदनुवादः श्रीमद्भाष्येऽप्यस्तीति मन्तव्यम्। यतो जिज्ञासाधिकरणे तत्र स्थिताः, "ज्ञानरूपं परं ब्रह्म" (114पु) इत्यादयस्तिस्रोऽपि कारिकाः शांकरनिरासिन्यो नाथमुनेःकारिका इति व्याख्यातारो वर्णयन्ति। न्यायतत्त्वग्रन्थप्रथमंगलश्लोकतया च प्रसिद्धः, "यो वेत्ति युगपत् सर्वं प्रत्यक्षेण सदा स्वतः। तं प्रणम्य हरिं शास्त्रं न्यायतत्त्वं प्रचक्ष्महे" इति। योगनिष्ठतस्य संगीत-शास्त्रनिरूढप्रसिद्धेः द्रमिडभाषाभिज्ञमूर्धन्यस्य स्वयोगमहिमसाक्षात्कृतश्रीरङ्गकुरुमुनेर्नाथमुनेरस्य शास्त्रेष्वपि सर्वेषु कर्तुमकर्तुमन्यथाकर्तुं च क्षमत्वमितरसाधारणं स्वानन्दगमितं शास्त्रनावधेया-दस्माद् ग्रन्थात् विशदमेव ज्ञायते। तथादर्शकानि हि वाक्यानि तत्रत्यानि आचार्या इमे न्याय-परिशुद्धिनोऽधिकतया न्यायसिद्धाञ्जनेऽस्मिन् उदाहरन्ति, कचित् स्वाभिमतार्थप्रमाणतया, अन्यत्र संवादतया, अपरत्र निर्वहणार्थतया, अन्यत्र च विशदव्याख्येयतया। वाक्यानि नूनं सूत्रप्रायाणि गभीराणि व्याख्यानमन्तरा दुरवगाहानि लक्ष्यन्ते। नूनं निखिलशास्त्रनिरूढ-प्रसिद्धीनां निरन्तरतत्परिचयपरिपक्वमनसां प्राचां प्रबन्धाः प्राय एवमेव प्रेक्ष्यन्ते। तत्प्रस्तावे चात्र ग्रन्थे, "न्यायतत्त्वे कारणवादाख्याधिकरणे, पञ्चमाधिकरणे, सप्तमाधिकरणे द्वितीया-धिकरणे, न्यायतत्त्वे संयोगाधिकरणे, प्रमाणवादे, न्यायतत्त्वे प्रथमाधिकरणे, न्यायतत्त्वे प्रमेय-**

वाक्यविशेषाणां नेयत्वमुक्तम्। अजस्संयोगो नास्ति, संख्या समवायेन द्रव्येऽस्तीत्यादयुक्तीनां परम्र क्रियानिरूपणपरिपाटीप्रादुर्भूतत्वात् तत्रतत्र तत्त्वर्याभावो दर्शितः। ग्रन्थस्यासमाप्तत्वात् क्वचिद्-निर्णयोऽपीत्युक्तम्। अन्योऽपि भट्टपराशरपादग्रन्थः शरीरलक्षणत्रयस्य प्रत्येकं लक्षणत्वे स्वारस्य-प्रदर्शनाय, ऐश्वर्यकैवल्यभोगयोरैकरस्य प्रदर्शनाय चोपात्तः। तत्र प्रथमस्थले अध्यात्मखण्डद्वय-विवरणे इति, द्वितीये अध्यात्मखण्डद्वयव्याख्यायामिति च निर्देशात् कीदृशं ग्रन्थनामेति निरीक्ष्यम्। ग्रन्थद्वयमप्येतत्वेऽनुपलम्भपदमेव।

तथा वरदविष्णुमिश्राः, विष्णुचित्ताः, रामिमिश्राः, वरदनारायणभट्टारकाः, नारायणार्या इति पञ्चान्ये पूर्वाचार्याः पौनःपुन्येन प्रकरणग्रन्थेषु निर्दिश्यन्ते। तत्र वरदविष्णुमिश्रग्रन्थो मानयाथात्म्यनिर्णयः। जीवपरिच्छेदे जीवाणुत्वविचारे, 'वरदविष्णुमिश्रैर्जीवस्य मोक्षे सर्वव्यापित्वमुक्तम्। अयमेवार्थः नित्यो व्यापीत्यात्मसिद्धिवचनमुपादाय मानयाथात्म्यनिर्णये प्रपञ्चितः' इति वाक्यस्वारस्यात् मानयाथात्म्यनिर्णयातिरिक्तोऽपि तदीयो ग्रन्थोऽस्तीति प्रतीयते। त इमे श्रीभगवद्रामानुजभागिनेयाः श्रीवत्सवंश्या वरदविष्णुमिश्रा वा अन्ये वेति विमृश्यम्। एतैरेभिः सत्त्वरजस्तमसां द्रव्यत्वं दिशः पृथग्द्रव्यत्वञ्च भिहितम्। आत्मस्वयंप्रकाशत्वे चैतदुक्तेषु हेतुषु कतिपयानामेव निर्दुष्टतेत्यादि विवेचितम्। ईश्वरस्य नित्यानित्यज्ञानद्वयम्, इच्छादेर्मानस-प्रत्यक्षता, संख्यासादृश्यादेरतिरिक्तता, गुणस्यापि शक्तेगुणेऽपि वर्तमानत्वमित्यादिकं चैतदिष्टम्। केवलव्यतिरेक्यनुमानमप्येतदिष्टम्, यत् यामुनाचार्यप्रभृतिभिर्निरस्तत्वरम॥ श्रीविष्णुचित्तग्रन्थौ प्रमेयसंग्रहः संगतिमाला च। गगनस्य दिशश्च त्रिवृत्करणेन स्वारस्यं प्रमेयसंग्रहे कथितम्। प्रायः संवादतयैतद्ग्रन्थोदाहरणम्। इमे च श्रीविष्णुचित्ताः श्रीकुरुकेशशिष्याः श्रीभाष्यवरदा-चार्यगुरवो ये श्रीभाष्यकारप्रशिष्याः पुरुच्चूडतया प्रसिद्धाः श्रीविष्णुपुराणव्याख्यातारः त एव वा; अधिकरणसारावलौ 'यत्तन् सेन्नैश्वर्यैः' इति श्लोके 'विष्णुचित्तैर्विचित्रे' इत्यनूदिता वेति विचार्यम्। तत्र ह्यधिकरणचिन्तामणौ श्रीकुमारवेदान्ताचार्यैः, "श्रीविष्णुचित्तः शठमर्षणगोत्र-प्रभवाः प्रमेयसंग्रहादिकर्तारः" इति शठमर्षणगोत्रप्रभवत्वोक्त्या अन्यत्वं चिन्त्यते। तर्कस्य निर्णयात्मकत्वमेतदिष्टम्। भट्टपराशरपादाशयस्त्वन्यथा। सादृश्यं जातिरित्युभयसंमतम्। जातिरित्येतावता न तार्किकाभिमतनित्यजातिता। प्रत्यक्षं च समवस्थाविशेष इति तु स्यात्। प्रमेयसंग्रहादिवत् श्रीभाष्यविवरणं वेदार्थसंग्रहविवरणञ्चैतत्कृती इति अत्र मुद्रितायां भूमिकायां श्रीकृष्णस्वामिनः। श्रीरामिमिश्रकृतत्वेनैव तयोः प्रसिद्धः। नयद्युमणिभूमिकायां तथा तत्संप्रदा-यपरम्परामुखेनाप्यवगम्यास्माभिरलेखि, अधिकरणसारावलौ 'विचित्रे' इति पदेऽद्य वेऽपि विव-रणकर्तृत्वेन चिन्तामणौ न व्याख्यातम्॥ श्रीरामिमिश्रा अपि श्रीभगवद्रामानुजभागिनेयाः सोमाशि-याण्डान् इति द्राविडनामधेयेन प्रसिद्धाः यज्ञाभो मीमांसकाः। एभिर्मानेनाज्ञानदूषणावसरे अद्वैतिनिरासव्यग्रतया, 'तमसो द्रव्यत्वं न भवति निमीलनेऽपि भानात्', इत्युक्तम्। अचिनाम-स्वदेहादीनां जीवद्वारैव ब्रह्मशरीरत्वमित्युक्तम्। षडर्थसंक्षेपे एतदुक्तिमुद्धृत्य, "विवरणेऽप्य-यमेवार्थः प्रपञ्चितः" इति अत्रोक्त्या उभयोरेककर्तृकत्वमपि ज्ञायते। त्रिविधपरिच्छेदराहित्य-कथनावसरे च 'जन्माद्यधिकरणे विवरणकारैः' इत्युक्त्वा, 'अयमेवार्थो वेदार्थसंग्रहविवरणेऽ-प्युक्तः' इति वचनात् समानकर्तृकत्वमवसीयते।

अथ वरदनारायणभट्टारकाः। एषामेव वकुलभूतिंकिकरा इति नामान्तरमिति अधिकरण-चिन्तामणितो ज्ञायते। एते न्यायसुदर्शन-प्रज्ञापरित्राणयोर्निर्मातारः। एषां वरदविष्णुमिश्रा-नुसारित्वस्य क्वचिदंशे उक्ततया ततोऽर्वाचीना इति ज्ञायते। 'वस्तुपरिच्छेदो नाम इयद्गुण-

श्रीवात्स्यवरदाचार्यवादिहंसाम्बुवाहयोरुपादानं तु श्रीभाष्यकारादिग्रहणवत् साम्प्रदायिकत्वज्ञप्तये। क्वचित् भाष्यादिसूक्तेरप्यन्यथानिर्वाहार्थमुपादानं भवति, यथा इन्द्रियघट्टे कर्मेन्द्रियाणां शरीरान्तरं प्रति गत्यभावबोधकसूक्तेः; तदीयसूक्त्यन्तरानुरोधेनापि तत्रान्यथा वक्तव्यत्वात्। एवं स्थिते कैवल्यविषये बाधितार्थकपदलेशस्याप्यभावात् तात्पर्यवर्णनेन ग्रन्थैकरस्यप्रकटने काऽनुपपत्तिः। तदेवं पूर्वाचार्यैः सिद्धान्तप्रमेयजातपरिगणनप्रवृत्तैः सुबहु साधितवद्भिरेवान्यथाऽन्यथाऽपि तत्र तत्र निरूपणात् तदंशपरिहारेण यथावस्थितरीत्या सर्वशोधनार्थमेतद्ग्रन्थप्रवृत्तिः। यद्यपि आचार्यैस्तैरेव तत्त्वमुक्ताकलापादौ संमुक्तम्, तथापि तदपेक्षयाऽप्यत्र परमतनिरसने तर्कप्रदर्शनम् अभ्यागमनिष्कर्षश्चातिशयेनेति प्रागावेदितमेव। इदमप्यत्र करिष्यमाणं मनसिकृत्य, "निष्कष्टुं कश्चिदन्यः प्रभवति भगवल्लक्ष्मणार्यमुखामक्षुद्राचार्यशिक्षाशतगुणितमतेरप्रमत्तान्न मत्तः" इति तत्त्वमुक्ताकलापान्ते आह स्मेति ज्ञायते। इतोऽपि कर्तव्यः परिष्कारोऽपि अस्माभिरेव पश्चात् ग्रन्थान्तरे कर्तव्य इति तदाऽऽचार्याशयः। ईदृशस्यास्य ग्रन्थरत्नस्य संक्षिप्तगभीरशब्दराशितया, विशिष्य बौद्धजैनशांकरतार्किकादिनिरासकभागानां कर्कशतर्कगर्भगभीरातिसंक्षिप्तशब्दतया अत्रोदाहृतानां न्यायतत्त्व-तत्त्वरत्नाकर-षडर्थसंक्षेप-श्रीविष्णुचित्तीयादिव्याख्यानामपि सर्वथैवात्रार्थस्फूर्तिरहिततया, प्रायो व्याख्यासापेक्षता स्पष्टा। यदि तत्रभवन्तः सर्वतन्त्रवेदिनः सर्वगहनवनसरणिविभजनविचक्षणविलक्षणव्युत्पत्तिशालिसूक्ष्ममतयः श्रीरंगरामानुजमुनय इदं न व्याख्यास्यन्, नूनं सर्वेऽपि पण्डिताः सर्वथा कोशं कोशरूपं दूरे निक्षिप्य नमस्कृत्यापासरिष्यन्। एतद्व्याख्यानाभावे शरीरभेदप्रवृत्तस्य शितधारोऽप्यसिः भेदनीयशरीरे प्राथमिकीं त्वचमपि भेत्तुं न प्रगल्भते चेत् यावती ह्रीः स्यात्, तावती विदुषां लज्जेति प्रशशंसुरस्मदाचार्याः। यथाश्रुतार्थप्रबोधनात् पश्चात् स्वपाण्डित्यप्रकटनेनार्थप्रपञ्चनं गुणदोषविवेचनञ्च बहवः कर्तुं पारयेयुः। किं तेन। त इमे श्रीरङ्गरामानुजस्वामिनः वेलमूरग्रहाराभिजनाः सामशाखाध्यायिनः पूर्वाश्रमे वरदविष्ण्वाचार्यनामधेयाः पञ्चमतभञ्जनतातदेशिकशिष्या महाचार्य (दोड्डयाचार्य)-अप्पय्यदीक्षिताद्यनन्तरकालिका अपि प्रायस्तत्समसामयिकाः षष्टिप्रबन्धनिर्मातारः श्रीकाञ्च्यां तुर्याश्रमे स्थिता इत्यादि एतदीयं चरितमस्माभिर्भावप्रकाशिकामुद्रणभूमिकायां प्रदर्शितमस्ति। द्वितीयव्याख्यातारः चतुश्शास्त्रप्रवचनप्रतीताः प्रौढतर्कशास्त्रनवीनप्रस्थानपरिचयातिशयप्रभावितनैशित्यनैर्मल्यवद्भिर्निष्पाद्यमाननिखिलशास्त्रार्थपरिष्करणाः श्रीकृष्णताताचार्यास्तच्छिष्यलिखितयाऽत्रापि प्रथममुद्रितव्या भूमिकयैव प्रख्यापितापदाना इति किं पिष्टपेषेण। एतेऽपि प्रथमव्याख्याविरहे दुरधिगमो मूलार्थ इति तत्र कृतज्ञाः भवन्तः भक्ताः सन्तः 'श्रीरंगरामानुजयोगिवर्यसंदर्शितेनैव पथा प्रवृत्ते' इति निरदिशन्। एतत्प्रतिज्ञानुरूपमेवोपरि प्रायो व्याख्यानावसरे तदुक्तशब्दराशिमेवावतारिकायामर्थवर्णने च प्रायुञ्जतेति केचिद् वैयर्थ्यमपि शंकेरन्। तत्र तत्र तर्करीत्या परिष्करणमात्रमेतत्कृत्यम्, अन्यः सर्वस्तदनुवाद इति केचिदपि तद्दृष्ट्या ब्रूयुः। सत्यमुक्तानुवादरीतिरधिका लक्ष्यत इति। तथापि व्याख्याद्वयगतशब्दसंदर्भं सावधानमनुसंदधद्भिरुभयवैलक्षण्यं प्रायः आलक्ष्येत। तदुक्तार्थमेव कथयन्तोऽपि तत्प्रयुक्तातिरिक्तैः

ततोऽप्युचिततरैः शब्दैस्तमर्थं प्रकाशयन्ति; अर्थे किञ्चिद्वैलक्षण्यमप्याद्रियन्ते; अन्यमेवार्थञ्च मनस्याकलयन्ति; तदुक्तार्थस्यानुपपन्नतामप्युचिन्त्यान्यथा वर्णयन्ति। द्विस्थलेष्वेव कण्ठोक्त्या तदर्थस्वार्थयोर्भेदवर्णनेऽपि प्रायो मनाग्वा महतया वा भेदोऽवहितमनसां सुगम एव। एवं परिशील्य कथितोऽप्यर्थो द्वितीयव्याख्यागतः क्वचित् उपेक्षणीयो लक्ष्यते, प्रथमव्याख्योक्त एवाऽऽदरणीयश्चेत्यत्रापि मध्यस्थमनसः सहृदयाः प्रमाणम्।

एवं व्याख्याद्वयविवृतशरीरस्यापि न्यायसिद्धाञ्जनस्य गभीराकारत्वात् तत्रतत्र भूयोविवरणापेक्षाऽस्त्येव। मादृशामपि तत्रतत्र वक्तव्यान्तरं भायात्। सत्यामपि विवक्षायां विस्तरभिया, मुद्रणे द्रविणदौर्लभ्याच्च न मया व्याख्याने व्याप्रियत। अथाप्यत्र भूमिकायामीषत्प्रदर्शयिष्यते। पण्डिता स्वयम् एवानेकमंशं परिशीलयितुमर्हन्ति। न्यायसिद्धाञ्जनेति नामौचित्यम् आदौ श्लोकानामर्थश्च प्रागेवाभाणि।

अथ वाक्यारम्भः, "अशेषचिदचित्प्रकारं ब्रह्मैकमेव तत्त्वम्" इति। ईदृशं ब्रह्मैव शारीरकार्थ इति सूत्रं निर्दिश्य न्यायपरिशुद्ध्यन्ते ज्ञापितम्। उपनिषदामन्तरम्भूतमेव प्रमेयम्। तत्र परमहितांशवैशद्यविरहात् तदर्थं स्वधर्मज्ञानवैराग्यसाध्यभक्त्येकगोचरत्वाकारेण ब्रह्मनिरूपणं गीताकार्यमितीषद्भेदोऽपि गीतार्थसंग्रहे समदर्शि। अत्रोक्तं विशिष्टैक्यं **विशिष्टाद्वैतम्**। निर्विशेषब्रह्मैक्यं शाङ्करेष्टम्। सजातीयविजातीयस्वगतभेदरूपविशेषाणां मिथ्यात्ववचनात्। स्वभिन्नाद्वैतं ब्रह्मणि भास्करादीष्टम्। चेतनाचेतनयोरौपाधिकस्य स्वाभाविकस्य वा भेदस्याङ्गीकारात्; स्वभावतो द्रव्यैक्यप्रयुक्ताभेदस्यापि ब्रह्मणीष्टत्वात्। अस्माभिस्तु विशिष्टैक्यमुच्यते। यथा लोके वस्तूनां विशेषणविशेष्यविवेके भेदसत्त्वेऽपि विशिष्टमेकमित्येव व्यवह्रियते, न द्वे इति, तथा ब्रह्मापि स्वभिन्नचेतनाचेतनविशिष्टं सदेव एकमित्येव वक्तव्यं भवति, न द्वे इति, न वा नानेति। तथा च द्वयोर्भावः द्विता—द्वितैव द्वैतम्, न द्वैतमद्वैतम्। विशिष्टस्याद्वैतम्=विशिष्टे द्वित्वस्य पर्याप्तिसंबन्धेनाभावः, जीवेश्वरौ अचिदीश्वरौ इति व्यवहारे द्वित्वं पर्याप्तिसंबन्धेन स्यात्; न तु विशिष्टवेषेण निर्देशे। नतरां त्रित्वादिः। तत्र एकत्वसंख्यैव। एवं विशिष्टाभेद इत्यपि सुवचम्। अयमेवार्थ आदाविह, "प्रकारप्रकारिणोर्मिथोऽत्यन्तभेदेपि विशिष्टैक्यविवक्षया एकत्वव्यपदेशः" इति वाक्येनोच्यते। एवं विशिष्टे द्वित्वाभाववचनात् द्वितीयराहित्यरूपमैक्यमपि सिद्धम्। तच्च स्वसजातीयद्वितीयराहित्यम्; साजात्यं च विशिष्टत्वेन रूपेण। चिदचितामपि स्वस्वविशेषणविशिष्टतया, सामान्यतो विशिष्टत्वेन रूपेण स्वसजातीयतया, स्वसजातीयद्वितीयराहित्यं न सिद्ध्यतीति सर्वचिदचिद्विशिष्टत्वेन रूपेण साजात्यं विवक्षणीयम्। एवमपि श्रियोऽपि सर्वचिदचिद्विशिष्टत्वस्येष्टत्वात् सजातीयद्वितीयसत्त्वादसंभवः। अतः स्वेतरसर्वविशिष्टत्वेन साजात्यं विवक्षणीयम्। श्रियोऽपि चेतनाचेतनविशिष्टत्वात् पत्नीपतिभावसंबन्धेन नारायणविशिष्टत्वस्यापि सत्त्वात् पुनरनन्वय इति वैशिष्ट्यमपृथक्सिद्धिसंबन्धेन वाच्यम्। तथाचापृथक्सिद्ध्यनुयोगितासंबन्धेन स्वेतरसर्वविशिष्टत्वेन स्वसजातीयं द्वितीयं नास्तीति अद्वितीयत्वसिद्धिः। ननु तादृशं द्वितीयमस्ति चेत्, न निषेद्धव्यम्; नास्ति चेत्, तदापि तथेति सिद्ध्यसिद्धिभ्यां व्याघात इति

चेन्न—स्वेतरसर्ववैशिष्टत्वव्यापकस्वनिष्ठतद्व्यक्तित्वकत्वमित्यर्थे तात्पर्यात् । यद्वा स्वेतरत्वव्यापक-स्वापृथक्सिद्धिप्रतियोगिताकत्वमेव फलितं प्रकृतविशिष्टाद्वैतम् लाघवात् । लक्ष्मीर्जीवाचेतनानां स्वपदेन ग्रहणे स्वेतरस्मिन् नारायणादौ स्वापृथक्सिद्धिप्रतियोगित्वाभावात् न दोषः । इदमेव भेदवैशिष्ट्यैकमात्र-वृत्तिधर्मवत्त्वमिति परिष्कृतं **रत्नपेटिकायाम्** । स्वावच्छिन्नप्रतियोगिताकभेदं प्रति स्वाश्रयापृथक्सिद्धि-प्रतियोगितासंबन्धेन व्यापको य एकमात्रवृत्तिधर्मः, तद्वत्त्वमेव तत् । ब्रह्मण्येकत्वैव समन्वयः व्याख्यायाम-नुगमप्रदर्शनं तु तर्कसरणिरासिक्यात् । विशिष्टैक्यविवक्षया प्रयोगश्च भूमविद्यायाम्, 'यत्र नान्यत् पश्यति नान्यच्छृणोति' इति वाक्ये **श्रीभाष्ये** दर्शितः । "तत्त्वं जिज्ञासमानानां हेतुभिः सर्वतोमुखैः । तत्त्वमेको महायोगी हरिर्नारायणः परः" इति च **महाभारते** । एवं 'तमेवैकं जानथाऽऽत्मानम्', 'एकधैवा-नुद्रष्टव्यम्', 'एको देवः सर्वभूतेषु गूढः' इत्यादिश्रुतिः । विशिष्टवस्त्वैक्यविवक्षयैव अथातो ब्रह्मजिज्ञासेति ब्रह्ममात्रनिर्देश इति च **न्यायपरिशुद्धावुक्तम्** । अत्र मूले प्रकारप्रकारिणोः प्रकाराणां चेति प्रयोगस्वारस्यात् **विशिष्टैक्यादी**ति आदिपदेन प्रकारैक्यमपि ग्राह्यम् । तद्विवक्षया, "आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति" इत्यादावभेदोक्तेः । स्वभावतो देवादिभेदराहित्य-ज्ञानानन्दत्वादिरूपेण ब्रह्मसर्वजीवैक्यस्य विवक्षितत्वात् ।

अत्रोपरि, "सामान्यतः प्रमाविषयतया विशेषतः प्रकर्षेण मेयतया च" इत्यस्य विवरणं प्रागेवाकारि ।

**उपादानं द्रव्य**मिति । यद्यपि संयोगरहितमद्रव्यमिति अद्रव्यलक्षणस्य वक्ष्यमाणत्वात् संयोगसहितत्वं लक्षणमिति सुवचम् । तथाप्येकमात्रद्रव्यवादिमतेऽपि समन्वयायैवमुक्तम् । ननु सूक्ष्मचिदचिद्विशिष्टस्य स्थूलचिदचिद्विशिष्टं प्रति उपादानत्वस्यैवास्मन्मत इष्टत्वात् विशेषणभूतयोः चिदचितोरुपादानतावच्छेदक-त्वेऽपि नोपादानत्वमिति चेत्—न ; यथायथं विशेषणांशेऽपि विशेषणांशं प्रति उपादानत्वस्येष्टत्वात् । स्वगतगुणं प्रति विशेषणद्रव्यस्योपादानत्वाच्च । आत्मसु इदमवस्थाश्रयत्वं परम्परयैव भवति । संयोगरूपगुणं प्रति तु उपादानत्वं साक्षात् । पूर्वावस्थाश्रयत्वमुपादानत्वमस्तु ; उपादेयत्वं तु नोत्तरावस्थाश्रयत्वमेव ; गुणेषूपादेयत्वभङ्गप्रसङ्गात् । अत उपादानतानिरूपकत्वमेवोपादेयत्वम् । अत्र तु द्रव्यलक्षणे पूर्वावस्थेत्यत्र पूर्वत्वं लक्षणघटकं मा भूदिति ज्ञापनाय **अवस्थाश्रय उपादान**मित्युक्तम् । अस्तु द्रव्यलक्षणमवस्थाश्रयत्वम् । उपादानत्वस्य कारणताविशेषरूपत्वात् उपादानत्वस्वरूपं किमिति चेत्—तादात्म्यापृथक्सिद्ध्य-न्यतरसंबन्धावच्छिन्नकार्यतानिरूपितकारणत्वमनुगतम् । संयोगरूपरसादिगुणोपादानत्वस्य द्रव्ये समन्वयाय अपृथक्सिद्धीति । यद्यपि स्थूलत्वरूपावस्थाश्रयचेतनाचेतननिष्ठापृथक्सिद्धिसंबन्धावच्छिन्नकार्यतानि-रूपितकारणतामादाय ब्रह्मण्यप्युपादानत्वसमन्वयः स्यात् ; अथापि विशिष्टं स्वं प्रति विशिष्ट-स्याप्युपादानत्वस्यास्माभिर्मुख्यतयेष्टत्वात् मृद्घटादौ तन्निरूपणाय च तादात्म्यसंबन्धस्यापि निवेशः ॥

अवस्था नाम आगन्तुकापृथक्सिद्धधर्मः । एतत्परिष्करणञ्च द्वितीयव्याख्याने द्रष्टव्यम् । अस्माभिश्च **नयद्युमणिभूमिकायां** शरीरलक्षणनिकर्षे उक्तम् । तदत्र प्रदर्श्यते—सत्यत्व-ज्ञानत्व-कालत्व-

जीवत्व-धर्मभूतज्ञानादीनामवस्थात्ववारणाय आगन्तुकेति । आगन्तुकत्वं स्वाश्रय—प्रतिबन्धका-भावोभयातिरिक्तकारणसापेक्षत्वम् । रूपरसशब्दादौ गुणे सहजशक्तिस्वीकारेऽपि तस्याः प्रतिबन्ध-काभावस्वाश्रयमात्रसापेक्षत्वात् तस्या अवस्थात्वाभावेन न तामादाय रूपादेर्द्रव्यत्वापत्तिः । शक्तिभिन्नत्वस्य पृथङ्निवेशे तु आगन्तुकत्वं जन्यत्वमात्रं प्रागभावप्रतियोगित्वरूपम् । घटादेर्भूतलादिकं प्रति, औपाधिकस्य गन्धादेर्जलादिकं प्रति, बाल्यादेश्चेतनं प्रति चावस्थात्ववारणायापृथक्सिद्धेति । अपृथक्सिद्धत्वं नाम स्वप्रतियोग्यवच्छेदकयावत्कालावच्छिन्नसंबन्धवत्त्वम् । स्वं संबन्धः । तत्प्रतियोगि चाऽऽधेयवस्तु । तत् यदायदा, तदा यः संबन्धो ययोरस्ति, तत्संबन्धवत्त्वमेव तयोरपृथक्सिद्धत्वम् । काले यावत्त्वविशेषणात् संयोगस्य न तादृशसंबन्धत्वम् । अतो न घटभूतलसंयोगमादाय घटस्यापृथ-क्सिद्धत्वम् । धर्मत्वानिवेशे घटत्वादिकं प्रति घटादेरवस्थात्वापत्तिः । घटस्यागन्तुकत्वात् घटत्वापृथक् सिद्धत्वाच्च । तथा च तदवस्थात्वं नाम जन्यत्वशक्तिभिन्नत्वविशिष्टं तन्निरूपितापृथक्सिद्धिसंबन्धा-वच्छिन्नाधेयतावत्त्वम् । नन्वेवं शरीरस्य जीवावस्थात्वापत्तिः; इष्टत्वात् । जीवादीनामपि येन येन रूपेण जन्यत्वम् तेनतेन रूपेणेश्वरावस्थात्वं स्वीक्रियत एव । अन्यरूपेणावस्थात्वाभावात् तथा व्यवहारा-भावः । अचेतनादिगतावस्थामादाय परम्पराभूतापृथक्सिद्धिसंबन्धेनात्मसु लक्षणसमन्वयोऽपीष्यते ; संयोगममादायापि ।

तथाचोपादानत्वस्य पूर्वावस्थाश्रयत्वरूपत्वेऽपि अवस्थाश्रयत्वस्याऽऽगन्तुकापृथक्सिद्धधर्मवत्त्वरूप-त्वेऽपि अन्ततो द्रव्यलक्षणमपृथक्सिद्ध्यनुयोगित्वमात्रमिति ध्येयम् ।

25 पु. **वर्तमानत्वप्रत्ययादि**ति । अयं घट इति प्रत्यक्षे इदमा वर्तमानत्वं गृह्यते । अनन्तरक्षणेषु पुनः पुनः अयं घट इति अवर्तमानसंमन्धः; न चैकस्य वर्तमानत्वावर्तमानत्वे भवितु-मर्हत इति कुसुमाञ्जल्युक्तरीत्या शंका ।

42 पु. **इदश्च परिस्पन्दे**ति । अत्रैवमवतरणादिकं बोध्यम्—नन्वनन्तमसंख्यातप्रमाणमिति सर्वदा व्यापित्वेनावगतायाः प्रकृतेः प्रकरोतीति प्रकृतिरिति भूतेन्द्रियादिरूपेण परिणामित्वमेव न स्यात् । एषां परिस्पन्दयोग्यत्वात् परिस्पन्दस्य भूतत्वाद्यवस्थासु दुर्वचतया तत्तदवस्थप्रकृतिद्रव्य एव वक्तव्यतया तच्चलने तद्देशे प्रकृत्यंशाभावात् सच्छिद्रत्वापत्त्या व्यापित्वभंगादित्यत्राह **इदश्चे**ति । भूतत्वाद्य-वस्थापन्ने परिस्पन्दसत्त्वेऽपि तत्र तदवस्थानापन्नप्रकृत्यंशोऽप्यस्तीति भावः । उक्तस्यार्थस्य प्रामाणिक-त्वं दर्शयति **तत एवही**ति । प्रकृतिमहदादीनां तत्तत्कार्यावस्थाश्रयत्वाकारेणेव कारणावस्थाश्रयत्वाका-रेणापि तत्र सद्भावस्य प्रामाणिकत्वात् निश्छिद्रत्वमेष्टव्यमिति । नन्वेवं कार्याभिन्नस्यापि कारणस्य कार्ये पृथग्व्याप्तिस्वीकारे अद्वैतिमतेऽपि जीवत्वापन्ने ब्रह्मणि शुद्धब्रह्मव्याप्तेरपि सुवचतया, 'य आत्मनि तिष्ठन्' इत्यादेस्तत एवोपपन्नतया कथं ततो भेदसिद्धिरिति चेन्न—जीवात्मरूपेण परिणामवादि-यादवप्रकाशमते तदुपपत्तावपि अपरिणतस्यैवोपाध्यवच्छिन्नस्य जीवत्ववादिशांकरभास्करमतयो-

स्तदयोगात् । उपाध्यवच्छिन्नप्रदेशेऽनवच्छिन्नत्वस्यापि स्वीकारायोगात् । परिणामपक्षस्तु अकृता-भ्यागमकृतविप्रणाशादिदोषदुष्टत्वादुपेक्ष्यः । एवञ्चैकस्मिन्नेव प्रदेशे प्रकृतिनः कस्मिंश्चित् परिणामे जाते परिस्पन्दवशादन्यत्र गते तत्रैवान्यः परिणामोऽपि भवितुमर्हति प्रकृतेः सत्त्वात् ।

4१ पु. **यच्चेति**। ननूपाधिसृष्टप्रदेशस्य जीवत्वे तादृशप्रदेशस्य गमनस्वीकारे ब्रह्मणश्छेद्यत्वं स्यादि-त्युक्तं भाष्ये । उपाधिरूपेण परिणतांशगमनात् ब्रह्मस्वरूपे छेद्यत्वं तु नापादितम् । पूर्वं प्रकृतेर्निश्छिद्र-त्ववचनात् ब्रह्मणो निश्छिद्रत्वस्य कैमुत्यसिद्धतया उपाधिगमनेऽपि तत्र ब्रह्मस्वरूपसद्भावसंभवेन न तच्छेदनप्रसंग इति चेन्न—उपाधिरूपब्रह्मांशगमन इवोपाधिसंसृष्टब्रह्मांशगमनेऽपि न ब्रह्माच्छेद्यत्वभंग इति पूर्वपक्षी मन्यत इति तन्निरासार्थं तथोक्तेः । छेद्यत्वे दोषे च श्रुतिविरोधः । यच्चेत्यादिग्रन्थस्यात्र प्रकृतिनावयवत्वप्रस्तावे का प्रसक्तिरिति चेत्—प्रकृतेः सावयवत्वच्छेद्यत्वादिस्वीकारे ब्रह्मणोऽप्येवम्भावस्य भास्करेण वक्तुं शक्यत्वात् कथं भास्करपक्षदूषणमनवयवत्वाच्छेद्यत्वादिकथनेन भाष्ये कृतमित्याशंका-यामेतदुत्थितिरिति ध्येयम् । **उपाधिसंसर्गादपीति** । निरुपाधावेव सोपाधावपि छेदनायोगकथन मित्यर्थः । अत्र घट्टे 'तत्र' 'अत्र' इति पदयोर्व्याख्याभेदेनार्थभेदोऽवगेयः । एवं बहुत्र व्याख्याभेदमूलार्थभेदो द्रष्टव्यः ।

6२ पु. **अत्राजहल्लक्षणैव युक्तेति**। अस्याक्षरस्य तमःपरिणाणतया वनश्यतया न क्षरतीत्यक्षर-मित्यर्थो न घटते । प्रकृतेरपि न्यूनपरिमाणतया व्याप्तेरूपार्थोऽपि न भवति । अतोऽक्षरसंब-न्धित्वादक्षरत्वम् तत्र प्रकृतिरूपेण वा परमात्मरूपेण वा अक्षरेण सबन्धोऽस्य न विशेषाकारः । अतो जीवरूपाक्षरग्रहणं स्यात् । तथाहि-, 'तमः परे देव एकीभवति" इति अविभागापत्तौ तमस्सद्भावो दुर्ग्रह आसीत् । ततः सृष्ट्यारम्भे विभागे तमोऽस्तीति ग्रहणयोग्यता भवति । तदनन्तरपरिणामे चा-चेतनस्येव चेतनजातस्यापि सद्भावः सुग्रहो भवति । इतस्ततो विप्रकीर्णेष्वनन्तजीवसंघेषु प्रवृत्तसृष्ट्य-न्वयार्हजीवजातस्य, "तोयेन जीवान् व्यससर्ज भूम्याम्" इतिवत् स्वक्ष्यमाणतमोभागे भगवता स्वसंकल्पेन समावेशकरणादिति ज्ञापयितुमक्षरशब्दः जीवविशिष्टाचेतनपरिणामविवक्षया प्रयुक्तः । एवञ्च सृष्टिक्रम इव लयक्रमेऽपि तच्छब्दप्रयोगस्तदेकार्थः । तेन तत्पर्यन्तं जीवसद्भावः सुग्रह इति ज्ञाप्यते । एव माशयेन **परमतभङ्गे** उक्तम्, अव्यक्ततमोमध्यपठितமான அக்ஷரசப்தத்தை जीवविषयமாக எடுத்த க்ரந்தங்களுக்கு तदवस्थ त्रिगुणद्रव्यविशिष्टचेतनसमष्टिविशेषத்திலே तात्पर्यम्" इति । प्राक् च तत्रैव, "क्षेत्रज्ञसंसृष्टा चेदवस्थ विशेषमंगीकार्यम्" इति अचित्प्राधान्यदर्शी पंक्तिर्द्रष्टव्या ।

6- पु. **प्राणाद्यन्यत्वे सतीति**। सात्विकाहंकारोपादानकत्वमिति लक्षणमप्राकृतेन्द्रियाव्याप्त्या दूषयिष्यते । **परमतभंगे** तदुक्तिस्तु वक्ष्यमाणरीत्या प्राकृतेन्द्रियमात्रलक्षणाभिप्रायेण । पूर्वमिन्द्रियाव्यवहितपूर्वावस्थाव-त्त्वस्याहंकारलक्षणतया कथनात् इन्द्रियलक्षणे अहंकारघटने आत्माश्रयादि स्यादिति तथालक्षणानुक्तिः । किञ्च अव्यक्तमहदहंकाराणां शास्त्रमात्रप्रसिद्धतया शास्त्रप्रसिद्धरीत्या लक्षणकथनं युक्तम् । इन्द्रियं तु सर्वाभीष्टम् ।

तत्स्वरूपकारणादौ विवादः स्यान्नाम । अतो लोकप्रसिद्धरीत्या प्राणेन्द्रादिना तल्लक्षणमुक्तम् । महदादेरेव द्रव्यान्तराव्यवहितपूर्वावस्थारूपं लक्षणं तु न भवति इन्द्रियाणां केवलवैकृतित्वात् किञ्चित्प्रकृतित्वाभावात् । अत्रोक्तं लक्षणमप्राकृतेन्द्रियसाधारणमिति वक्तव्यम् । अतः ईश्वरे अनित्यज्ञानानंगीकारपक्षेऽपि लक्षणस्यास्य तदिन्द्रियेऽपि वक्तव्यतया तत्पक्षे अज्ञादेरलंकारनलवेति नित्यविभूतिपरिच्छेदे व्याख्ययोगतिः कथं घटते । ४१. पुटे टिप्पणं द्रष्टव्यम् ।

87 पु.सौगत ...स्त्रीन्द्रियपुरुषेन्द्रियादिकल्पनमिति वाक्ये, व्याख्याद्वयेऽपि 'इन्द्रियेष्वेव स्त्रीपुंनपुंसकभेदकल्पनमित्यर्थः' इति व्याख्यातम् । अनेन आदिपदेन नपुंसकग्रहणमिष्टमिति स्पष्टम् । इदं परमतभंगविरुद्धमिति तद्ग्रन्थपरिशीलिनः । सौगतैर्नपुंसकलिङ्गानुक्तत्वस्य स्पष्टत्वात् । अत एव, 'नपुंसकलिंगमपि किं न कल्प्यते' इति तदापादनं तत्र कृतम् । आदिपदेन तु जीवलिंगमिति किञ्चन् गृह्यते । तथा च तत्र सूक्तः- "स्त्रीरूपसंस्थानस्वरूपभागयात् களுக்காக पुरुषेन्द्रिय மென்றொன்றையும் पुरुषकृत्याय களுக்காக पुरुषेन्द्र மொன்றையும் धर्ममूलक्षुरादिप्रवृत्यनुगलनार्த்தமாக जीवेन्द्र மென்றொன்றையும் கட்டி அவை देहव्यापகங்களா மென்ற லெளகாரிக்கு नपुंसकेन्द्र மென்றொன்றைக் கட்ட प्रसज्य" इति । एवं व्याख्ययोः इन्द्रियेष्वेव स्त्रीपुंसभेदकल्पनमिति वाक्यं कल्पनाथवादीनां मध्ये कञ्चित् केषाञ्चित् स्त्रीनपुंसकादौ यथेच्छं न विजायते । सोऽपि न सौगतसंमतोऽर्थः ।

90. पु. रूपवत्सम्बन्धित्वात्सम्बन्धेति । नन्विदं मिश्रितत्वं पञ्चीकरणकृतं वा, केवलसंयुक्तत्वं वा । नाद्यः, उपरीश्वरादिप्रत्यक्षमापाद्य गुरुणा विविदिषोपगतत्वेन परिहारात । न हीश्वरोऽपि पञ्चीक्रियते । काले रूपवत्संबन्धेन प्रत्यक्षोपपत्तये मिश्रितत्वं केवलसंयुक्तत्वमेवेति वक्तव्यत्वाच्च । नान्त्यः ; शुक्लादिरूपवत्संयुक्तत्वस्यापि सत्त्वेन शुक्ल आकाश इत्यादिप्रत्ययापत्तेरिति चेत्— दृश्यत एव तथाप्रत्ययः । दूरे नीलमाकाशमिति प्रतीतवत्, सविधे धवल इह करविकिरणादिव्याप्तप्रदेशे शुक्ल आकाश इत्यनुभवात् । तथा सन्ध्यायां रक्त आकाश इति । अथ रूपवत्समवेतत्वरूपसंनिकर्षेण घटत्वादिग्रहणे यथा तत्र नीलं घटत्वमित्येवं न प्रत्ययः, किं तु रूपवत्समवेतमित्येव, तथा शुक्लरूपसंयुक्त आकाश इत्येव प्रत्ययो युक्तः ; न तु शुक्ल इत्येवम् । संनिकर्षस्य यथावस्थिताकारप्रत्ययैकहेतुत्वात् । एवं कालः शुक्लः कालो नील इति, शुक्लसंयुक्त इत्येवं वा प्रत्ययापत्तिश्च । वाय्वीश्वरयोरयोग्यत्वेऽपि घटादेर्योग्यतया तमसि नीलनभस्संयुक्ततया घटप्रत्यक्षापत्तिश्च । भर्जनकपालस्थस्याग्नेः प्रत्यक्षकपालसंयुक्ततया चाक्षुषत्वापत्तिश्चेति चेत्—रूपवन्मिश्रितत्वमेव प्रत्यक्षहेतुः । तस्य प्रत्यक्षहेतुत्वे रूपवद्द्रव्यग्रहोऽपि सहकारी । अतः पीतः शंख इतिवत् नीलं नभ इति प्रत्यक्षम् । कालादौ नियमेन भेदग्रहणाभावात् न तस्य प्रत्यक्षोपाधायकत्वमिति ॥ प्रथमे तर्हि वाय्वीश्वरादिप्रत्यक्षमपि भवेदिति चेत्—तर्हि भवतु । संभवादुपायान्तरमप्युच्यते । रूपवति वायुकालेश्वरभेदप्रत्यक्षात् तत्प्रत्ययाभावः । आकाशभेदाप्रत्यक्षकाल एवैवंप्रत्ययः । नीरूपत्वेऽपि कालः सर्वेन्द्रिययोग्य इति तत्र संयोगसंनिकर्षमात्रमलम् । रूपरूपीत्यादिभाष्यं तु प्रतिनियतविषयम् । वस्तुतस्तु आकाशस्यानुभवानुसारात् योग्यत्वमेव । भाष्ये पञ्चीकरणप्रदर्शनं नैल्यप्रत्यक्षनिर्वाहाय । समीपे नीलं नभ इत्यप्रत्यक्षं तु शुक्लादिवस्त्वन्तरप्रत्यक्षेण तदभिभवात् । दूरे तु न वस्त्वन्तरग्रहणमित्यलमधिकेन ।

126.पु. तदेवं चतुर्विंशतीति। अत्र चतुर्विंशतिशब्दप्रयोगतः इदं द्योत्यते, यत् तमसः प्रकृतितत्कार्यमहदादिपृथिव्यन्तानन्तर्भावे साक्षाद्विलक्षणप्रकृत्यवस्थान्तररूपत्वे प्रकृतिप्राकृतानां चतुर्विंशतित्वेन परिगणनं सर्वसंमतं परित्यक्तं स्यादिति।

158. पु. यस्य चेतनस्येत्यादिभाष्योक्तशरीरलक्षणत्रयस्य प्रकृतग्रन्थदर्शितस्य च चतुर्थस्य परिष्करणसरणिरस्मदीय-नयद्युमणिभूमिकायां द्रष्टव्या। सारप्रकाशिकाकारैरपि शरीरलक्षणं विशिष्य विमृष्टम्।

18 .पु.शेषत्वे सति ज्ञातृत्वमिति जीवलक्षणमुक्तम्। तदीश्वरेऽव्यतिव्याप्तम्, 'दास्यमैश्वर्ययोगेन ज्ञातीनाञ्च करोम्यहम्' इति तेनापि शेषत्वस्वीकारात्। अतः ईश्वरशेषत्वे सतीति सत्यन्तार्थः। तस्य लक्ष्म्यामपि सत्त्वादतिव्याप्तिरिति शंकायाम्, ईश्वरत्वपर्याप्त्यधिकरणशेषत्वे सतीत्यर्थ उक्तः प्रथमव्याख्यायाम्। एवं स्वपक्षमुक्त्वा, 'लक्ष्म्या जीवत्वपक्षे तु न दोषः' इत्युक्तम्। तावता लक्ष्म्याः जीवत्वं स्वाभिमतमिति वा मूलाभिमतमिति वा न सिध्येत्। एकदेशिपक्ष एवमपीत्येव स्यात्। मूले तद्वारकदलानुक्त्या जीवत्वेष्टिः प्रतीयत इति चेन्न। ईश्वरेऽपि तल्लक्षणसत्त्वेन तदुनुक्त्या जीवत्वस्येष्टत्वापत्तेः। तद्वारणाय दलनिवेशो ह्रदते तथैवैतद्वारणमपि ह्रदतमिति यत्किञ्चिदेतत्। न हि, लक्ष्मीजीवत्वपक्षो निर्दुष्ट इति एतद्वाक्यार्थः। किंतु तज्जीवत्वपक्षे तत्रातिव्याप्तिरूपदोषशंका नास्तीति। यद्वा तत्पक्षे लक्षणं न परिष्करणीयमिति। नन्वीश्वरेऽतिव्याप्त्या लक्षणपरिष्कारणमवर्जनीयमिति चेत्—शेषत्वे सतीत्यत्रोपाध्यनिर्देशात् निरुपाधिकत्वमर्थसिद्धम्। तेनैव सोपाधिकं भगवन्निष्ठभागवतशेषत्वं वार्यत इत्यभिप्रायः। किमिदं निरुपाधिकत्वम्? कारणानधीनत्वमिति चेत्—शेषत्वसामान्यं हि परगतातिशयाधानेच्छयोपादेयत्वरूपम्। इच्छाधीनोपादानविषयत्वे कारणानधीनत्वं कथम्? इच्छा च परमात्मगता सर्वत्र, जीवगताऽपि नित्यमुक्तादावस्त्येव। तर्हि निरुपाधिकत्वमनादित्वमस्तु। तच्च स्वपूर्वकालत्वव्यापकस्वाधिकरणताकत्वम्। अस्तु वेह कालव्यापकाधिकरणताकत्वमात्रम्। ईश्वरगते शेषत्वे च नैतदिति चेत्—अस्तु इदं लक्ष्म्या अपि जीवत्वपक्षे। वस्तुतः, 'यस्या वीक्ष्य मुखं तदिङ्गितपराधीनो विधत्तेऽखिलम्' इति लक्ष्म्यधीनव्यापारत्वस्येश्वरे नित्यतया लक्ष्मीं प्रतीश्वरस्योक्तविधशेषत्वापत्त्या जीवलक्षणातिव्याप्तिः। अतः लक्ष्मीगतातिशयस्य भगवदिष्टत्वेऽपि स्वस्मिन्नपि शेषित्वस्य तदिष्टतया परगतातिशयमात्रोद्देश्यकोपादानविषयत्वरूपं शेषत्वमीश्वरे नित्यं न भवेदिति वक्तव्यम्। तत्र परगतेत्यत्र नित्यं यत् उभयगतातिशयोद्देश्यकोपादानविषयत्वरूपं शेषत्वं तद्वत्वे सति ज्ञातृत्वमिति सिद्धान्ते जीवलक्षणमिति। सिद्धान्ते उभयेत्यनिवेशे दोष इति तात्पर्यम्। जीवकोटिप्रवेश-जगत्कारणत्वादिभावादिकं नयद्युमणिकारमेघनादारिसूरीष्टम्। भट्टपराशरादिभिस्तु न तथा, "अनन्याधीनकल्याणमन्यमंगलकारणम्। जगन्निदानमद्वन्द्वं द्वन्द्वं वन्दामहे महः" इत्युक्तेः।

198. पु. परस्य तु तज्ज्ञानविषयतयैव प्रकाशते इत्यत्र प्रकाश इति वा प्रकाशता इति वा पाठः स्यात्। प्रत्यक्त्वैकत्वविशिष्टतयेति। अहमेको न वेति कदापि संदेहाभावात् एकत्वं सदा प्रकाशते। प्रत्यक्त्वं तु स्वप्रकाशफलित्वम्। फलञ्च स्वविषयव्यवहारः, स्वगतव्यवहारानुगुण्यरूपप्रकाशफलभूतस्वव्यवहारकर्तृत्वमिति यावत्। एतावान् अर्थः सदा प्रकाशत इति कथमिति चेत्—अहं न वेति संदेहाभावात् अहंत्वं भासत इत्युच्यते। पूर्वोक्तव्यवहारकर्तृत्वं तु अहंत्वम्। तार्किकैरहंत्वं प्रत्यक्त्वं स्वविषयकज्ञानाश्रयत्वे विषयत्वाश्रयत्वोभयसंबन्धेन

ज्ञानविशिष्टत्वमित्युच्यते। अस्माभिर्ज्ञानान्तरमन्तरा स्वयंप्रकाशस्वीकारात् प्रकाशस्य च व्यवहारानुगुण्यरूपत्वात् व्यवहारकर्तृत्वं तदित्युच्यते। तत्र घट इति ज्ञाने घटत्वादिवत् स्वरूपतो भासते। अतो व्यवहारादेरप्रतीतावपि न क्षतिः। घटत्वादिवत् तावतैव व्यावर्तकत्वमप्येष्टव्यम्। मानरूप इति। मानं ज्ञानं स्वप्रकाशमिति यावत्। न तु सविषयकत्वम्, धर्मिज्ञाने तन्निष्ठेः।

201. पु उपरि प्रमाणमिति पदस्याप्येतावानेवार्थः। तद्वति तत्प्रकारकत्वरूपप्रमात्ववर्णनं तु श्रवणात्। यदि मान-प्रमाणशब्दाभ्यां मितिकरणरूपार्थग्रहणम्, तदा आत्मनो हेतुत्वसंभवात् अनुमानप्रमाणता निर्बाधा। एवञ्च प्रमा मेया चेत्यत्र चकारेण प्रमाणस्यापि ग्रहणम्। स्वधियोऽपि लिंगत्वसंभवात्। एवकारेण प्रमातृत्वव्यवच्छेदः।

0१.पु. हृत्प्रदेशेति। सर्वो हि हृदये हस्तं निक्षिप्य अहमिति व्यवहरति। तदुक्तमुपनिषदि (बृह...) 'हृदि ह्ययमात्मा' इत्यादि। देशस्य कालस्येव न स्वप्रकाशेन भानम्। किंतु धर्मभूतज्ञानेनैव। स्वयंप्रकाशस्येति पदप्रयोगस्तु, आत्मनः स्वप्रकाशतया विभुत्वे सर्वत्रापि स्वप्रकाशत्वसत्त्वात् धर्मभूतज्ञानेन तद्भानं हृदयप्रदेशावच्छेदेनेव सर्वावच्छेदेनापि स्यादिति भावेन।

219. पु. स द्विधा संसारी असंसारी चेति। स त्रिधा बद्धो मुक्तो नित्यश्चेतीति यथाप्रसिद्धि विभागे कार्ये एवं कथनं जीवविभागोऽन्ततो द्वित्वे पर्यवसास्यतीत्याशयेन। तथाहि—परस्परव्यधिकरणानामेव विभाजकधर्मत्वमन्यत्र प्रसिद्धम्। अत्र बद्धपदेन अतीतबन्धो वा वर्तमानबन्धो वा यदाकदाचिद्बन्धवान् वा विवक्षणीयः। आद्यो मुक्ताविशिष्टः। द्वितीयविभाजकधर्मस्तु अस्मिन् दिने यावति जीवे, परस्मिन् दिनेऽपि तावतीति वक्तुं न शक्यते, प्रतिदिनं बहूनां मुक्तेः। अतः कालभेदेन लक्ष्यव्यक्तिभेदात् अव्यवस्था स्यात्। तृतीये तु मुक्त इति विभागः पृथङ् न भवति। तस्य सर्वस्य कदाचिद्बन्धवत्त्वादिति। नन्वेवं संसारी असंसारीचेति विभागे संसारिपदार्थतया बद्धान् मुक्तांश्च गृहीत्वा असंसारिपदेन तद्भिन्ननित्यग्रहणं युक्तम्। एवम् अकृत्वा प्रध्वस्तसंसारस्यापि असंसारिपदेन ग्रहणात् पुनः संकीर्णतैवेति चेत्—मुक्तरूपविभागवतः आद्ये वा अन्त्ये वा ऽर्थे छमन्तर्भावः शक्य इति ज्ञापनाय तथोक्तिः। तथाच संसारीत्यस्य नित्यसंसारीत्यर्थे तद्भिन्नबद्धानां मुक्तानाञ्चासंसारिषु प्रवेशः। संसारिपदेन कादाचित्कसंसारसंबन्धस्यापि ग्रहणे तु असंसारी नित्य एवेति॥ एवञ्च नित्यसंसारिणोऽनंगीकारे त्रैविध्यं न वक्तव्यम्। तदंगीकारे तु नियतसंसारः, अनियतसंसारः, नियतसंसाराभाव इति त्रैविध्यमिति। एवमभिप्रेत्य नित्य संसारीति विभागः इह ग्रन्थे प्रथममादृतः। तदभावपक्षः केचित्तु इति कथितः। नित्यसंसारास्वीकारेऽपि त्रैविध्यवादिनामाशयस्तु न्यायसूत्रे प्रमाणप्रमेयसंशयेत्यादिविभागवत् असिद्धसव्यभिचारादिहेत्वाभासविभागवच्च उपधेयसंकरेऽप्युपाधेरसंकरः, संसार-तद्ध्वंस-तदत्यन्ताभावानां भिन्नत्वादिति॥

223. पु. ननु नित्यसुरीणामंगीकारे तदधिकारभेदानामपि स्वीकार्यतया आनन्दसाम्यं भज्येतेत्यत्राह अनन्तविष्वक्सेनेति। अत्र ज्ञानानन्दादिभिरिति पदं किमर्थम्। नित्येषु ज्ञानादिगुणसत्त्वे कः संदेहः। तद्विशेषणतया नित्यत्वं नित्यैरिति पदेनोच्यत इति काचित् व्याख्या। तत्कथनमपि कुत इति चेत्—नित्यैरित्यस्य अनादिभिरित्यर्थः। अनन्तादीनां नियताधिकारत्वेऽपि अनादिज्ञानप्रसरानन्दादिमत्त्वेऽपि मुक्त्यनन्तरं जीवाः आनन्दे तत्सोदरा भवितुमर्हन्तीति भावः। नित्यैरित्यस्य च ज्ञानादिविशेषणत्वाभावे आनन्दयुक्तैरनन्तादिभिरानन्दसोदरा इति कथितं भवति। तत्र सुष्ठु स्यादिति तदाशयः। अथवैवमस्तु—ज्ञानानन्दादिभिरिति हेतौ तृतीया। ज्ञानानन्देत्यत्र

ज्ञानरूपानन्देत्यर्थः। आदिपदेन शेषत्वेष्टत्वग्रहणम्। आनन्दसोदरत्वोपपादनार्थमेतदुक्तिः। अनन्तादीनां संसारिणाञ्च स्वस्वरूपानन्दानुभवमात्रं मुक्तिरिति स्वीकारे आनन्दसाम्यं स्यात्। सर्वेषामात्मनामेकरूपत्वात्। परमात्मदासत्वं तदनुरूपं विभिन्नाधिकारञ्च भजन्तु केषुचित्, तेष्वेवाधिक्रियावैलक्षण्यान्मिथ आनन्दवैलक्षण्ये आवश्यके सति निरधिकाराणां तैरानन्दसाम्यस्य का कथेत्याशंका। परिहारस्तु अस्मन्मते आनन्दो नाम नातिरिक्तपदार्थः; किन्तु ज्ञानमेवानुकूलमानन्दः। ज्ञानञ्च सर्वविषयकं सर्वेषां तुल्यम्। 'सर्वं ह पश्यः पश्यति' इति श्रुतेः। अतोऽनन्तादीनां यावत् ज्ञानमस्ति, तावदेषामप्यस्ति। तच्चानन्दरूपमेवेति कुतो वैषम्यम्॥ एतावदभिप्रेत्य च श्रुतिः 'सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः' इति। ननु अनन्तादेः, बह्वधिकारभागिति ज्ञानं तस्यानन्दरूपं स्यात्, मुक्तस्य तु अनन्तोऽधिकारभागिति ज्ञानम्। तत् कथं तस्यानुकूलरूपमानन्दरूपञ्चेति चेत्—तदर्थमेवाऽऽदिपदम्। लोके स्वाधिकारेण स्वस्यानन्दवत् स्वात्यन्तानुकूलपुरुषगताधिकारेणापि स्वस्यानन्दो दृष्टः, पुत्रस्य प्रबलपदाधिकारे पितुरानन्ददर्शनात्। अनन्तादयश्च मुक्तानां तदाऽत्यन्तानुकूला इति स्यादेवानन्दः। न केवलमनन्तादीनामानुकूल्यम्। सर्वेषां परमात्मानं प्रति शेषत्वात् शेषभूतैश्च शेषिणमनुद्दिश्यैव सर्वकार्यकरणात् स्वकार्यं परकार्यं वा सर्वं शेषिमात्रार्थमिति सर्वैर्ग्रहणात् शेषिगतस्य च तत्तत्कार्यतो जायमानस्याऽऽनन्दस्य प्रत्यक्षमीक्षणात्, स्वकर्तृत्वादित्यागस्यापि सात्त्विकैः क्रियमाणतया तत्प्रयुक्ताहंकारस्याप्यनवकाशाच्च परमात्मनो भोगार्थं परमात्मेच्छानुसारं प्रवर्तमानानां तथाविधानन्ददर्शनात: परमानन्दः परस्य तुल्य एवेति। अतो ज्ञानानन्द-परस्परेष्टत्व-परमात्मशेषत्वरूपहेतुभिः नित्यानन्तादिभिः सोदरा एवानन्दे मुक्ता भवन्तीति॥

231. पु. सैवात्रस्थाभेदादिति। 'प्रीतिपूर्वमनुध्यानं भक्तिरित्यभिधीयते' इत्युक्तानुध्यानशिरस्कतया महनीयतमविषयकतया मोक्षार्थमनुष्ठीयमानतया च परभक्तिः।

2 5. पु साध्यभक्तिरिति। साध्या च सा भक्तिश्च। साध्यत्वमात्रवती साधनत्वरहिता काचित् भक्तिः। एवम्भूतभक्तिघटितत्वात् प्रपत्तौ साध्यभक्तिपदं भक्तिपदञ्च पारिभाषिकम्। तस्याः प्रारब्धांशनाशसाधनत्वेऽपि तदन्तर्गतायाः भक्तेरतथात्वम्; साध्यत्वमात्रम्।

245. पु. तदनु च शेषाणीति। अयमनुशब्दः 'अत एव सर्वाण्यनु' इति सूत्रस्मारकतया प्रयुक्तः। अत्र तत्र च नानन्तर्यम् अनुशब्दार्थः। 'इन्द्रियैर्मनसि संपद्यमानैः' इति युगपदेव सर्वेन्द्रियसंश्लेषसंभवात्। अतः तदनु = वागनुसारेण, वाग्वदेवेत्यर्थः। वाङ्मनसीति वाक्ये प्रथमत एव वाक्संश्लेषः, प्रतीयते; पश्चात् विमर्शे कृते, इतरेषामपीति ज्ञाने स्थितः पश्चाद्भावः संश्लेषे आरोपित इति वा। सर्वे प्राणा अनूत्क्रामन्तीति वाक्यस्मारको वा सूत्रे अनुशब्दः। संपत्तेः संश्लेषरूपत्वादेव, सर्वेऽनुक्रामन्तीत्युक्तमिति बोधितं भवति।

262. पु. तत्र च शारीरकभाष्यानुसारे तस्य परमात्मानुभवः, श्रीमद्गीताभाष्यस्वारस्यानुसारे कैवल्यमितीच्छन्तीति। अयं भावः—केचिदाहुः—सप्तमेऽध्याये गीतो जिज्ञासुः प्रकृतिवियुक्तात्मस्वरूपमात्रवित् आत्मानुभवरूपकैवल्यकामः। तत्फलञ्च कैवल्यम्, 'यः प्रयाति त्यजन् देहं स याति परमां गतिम्', 'यं प्राप्य न निवर्तन्ते' इत्युक्तस्वरूपम्। तस्य च नार्चिरादिगतिः। गीतायामुपर्यर्चिरादिगत्युक्तिस्तु पञ्चाग्निविद्विषयः। तत्र भाष्य एव पञ्चाग्निविद्याप्रस्तावात्। तस्य ब्रह्मप्राप्तिरप्यस्तु इति। अयं विभागः

गीताश्लोकतद्भाष्यस्वारस्यविरुद्धः, जिज्ञासुं प्रत्येव ब्रह्म-अध्यात्म-कर्मप्रस्तावात्, अक्षरं ब्रह्म परममित्यादिना तद्विवरणात् तत्र भाष्ये पञ्चाग्निविद्याप्रतिपादितार्थपरतयैव व्याख्यानात् तस्यैव जिज्ञासुतया प्रकृतिवियुक्तात्मस्वरूपवित्पदेन आत्मयाथात्म्यवित्पदेन चैकस्य पञ्चाग्निविद एव ग्राह्यत्वात्। एकस्यैव प्रथमं प्रकृतिवियुक्तात्मस्वरूपावाप्तीच्छुरिति निर्देशो जिज्ञासुशब्दार्थव्युत्पादनाय, अथ कैवल्यार्थिन इति निर्देशः, 'स याति परमां गतिम्' इत्युक्तफलस्य ऐहिकजीवात्मस्वरूपानुभवातिरिक्तत्वज्ञापनाय; आत्मयाथात्म्यविद इति पश्चान्निर्देशः, 'तद्य इत्थं विदुः' इति श्रुतिवाक्यार्थविशदीकरणाय तत्तत्संदर्भानुसारात्। मुमुक्षुप्पडिव्याख्यातात्पर्यदीपिकापि अन्ततो जिज्ञासुपञ्चाग्निवदैक्यमनुमन्यते। अतः अपुनरावृत्त्यात्मप्राप्तिरूपकैवल्योक्तिः पञ्चाग्निविद्विषय एव। तर्हि तस्य ब्रह्मप्राप्तिरेव श्रीभाष्य इव वक्तव्येति चेत्-अस्याः विद्यायाः जीवविशेष्यकोपासनरूपत्वात् कैवल्यमेव फलमिति पक्षान्तरं भाष्यकाराभिमतमस्तु। अर्चिरादिगतिरहितस्य च केवलस्यानुभवस्थानम्, 'योगेनामृतं स्थानं स्वात्मसंतोषकारिणाम्' इत्युक्तं नश्वरम्। ततस्तस्य पुनरावृत्तिः। अयं तु केवलो ब्रह्मात्मकस्वात्मवित् प्रकृतिमण्डलमर्चिरादिनाऽतिक्रम्य परमपदं प्राप्तः॥ नूनमिदमेवाभिप्रेत्य **भट्टपराशरपादैः श्रीरङ्गराजस्तवे**, (8) 'प्रत्यञ्चं स्वं पञ्चविंशं परावः संचक्षाणस्तत्त्वराशेर्विविच्य। युञ्जानाश्चाभ्यरयां स्वबुद्धौ स्वं वा त्वां वा रंगनाथाऽऽप्नुवन्ति' इति विकल्प्य उक्तः। यद्यपि गीताप्रथमषट्कोक्तप्रकारेण शुद्धजीवमात्रोपासको जीवमात्रमाप्नोति, सप्तमाद्युक्तप्रकारः पञ्चाग्निवित् ब्रह्म प्राप्नोतीति श्लोकार्थः सुवचः—अथापि एकविद्याविषयत्वे स्वारस्यात् विकल्पेन श्रीभाष्यगीताभाष्ययोर्योजनाप्रकारोऽयमस्तु इति।

यद्वा कैवल्यं द्विविधम्, आत्ममात्रानुभवरूपं प्रकृतिपरमात्मविषयकज्ञानलवलेशेनापि रहितं प्रथमषट्काभिमतम्। पञ्चाग्निवित्कैवल्यं तु ततो विलक्षणं नियतपरमात्मानुभवराहित्येऽपि परमात्मादिज्ञानयुक्तम्। माध्वसिद्धान्ते मोक्षो नाम शुद्धजीवस्वानुभव एव सार्वदिकः। सत्यामपेक्षायां परमात्मसमीपगमनानुभवादिकमपि भवति, प्राकृतलोके स्वस्वगृहवासिनां देवालयगमनादिवत्। अस्य च न पूर्णशेषत्वरसिक्यम्। विद्यान्तरनिष्ठानां तु, 'अथ मृदितकषायाः केचिदाजानदास्यत्वरितशिथिलचित्ताः कीर्तिचिन्तानमस्याः। विदधति ननु पारं भक्तिनिघ्ना भजन्ते" इत्युक्तरीतिः। "तेषां ज्ञानी एकभक्तिर्विशिष्यते" इत्युक्तास्त एव; न पञ्चाग्निवित्—इत्याशयेनात्र गीतभाष्ये ब्रह्मप्राप्तावुच्यमानायामेव कैवल्यमप्युक्तम्। अयं तदा तदा श्रीवैकुण्ठे दिव्यमण्टपे गत्वा श्रियः पतिमनुभवन्नपि स्वस्थानं प्रति निवृत्य स्वानुभवरत एवावतिष्ठत इति केवलो भवति। एवञ्च पाद्मपुराणस्थतया कथ्यमानम्, 'विरजापरमव्योम्नोरन्तरा केवलः स्मृतः। तत् स्थानमुपभोक्तव्यमव्यक्तब्रह्मसेविनाम्। स्वात्मानुभवजानन्दसुखदं केवलं पदम्। निःश्रेयसञ्च निर्वाणं कैवल्यं मोक्ष उच्यते। श्रीशाङ्घ्रिभक्तिसेवैकरसभोगविवर्जनम्। तदिच्छन्त्यल्पमतयो मोक्षं सुखविवर्जितम्' इति वचनमप्येतत्पञ्चाग्निवित्परं स्यात्। अत्र **सेवैकरसे**त्यनेन कदाचित्कतदनुभव इष्टः प्रतीयते। यद्यपि परमव्योमेति पदस्य परमपदपर्याय-

त्वात् विरजाया अपि तदन्तर्गतत्वात् विरजापरमव्योम्नोरिति विभज्य निर्देशः, तयोरन्तरेति मध्यस्थाननिर्देशश्च न घटते—अथापि परमव्योमपदस्यात्र वैकुण्ठनगरादिपरतया निर्वाहः कार्यः। तथाच ईदृशकैवल्यविशेषफलकत्वं गीताभाष्येष्टमिति। अत्रास्वारस्यं मनसिकृत्य **इच्छन्तीत्युक्तम्।** **उभायाविरुद्धतये**त्युपरितनपदेन तत् सूचितञ्च। पञ्चाग्निविदः परमात्मप्रकारकस्वात्मविशेष्यकोपासनस्यापि विशेष्यविशेषणविपर्यासेऽपि, भूतलं घटवत्, भूतले घट इत्यत्रेव तत्त्वविषयकत्वानपायात्, सूत्रे अप्रतीकालम्बनत्वेनाविशेषकथनात्, "विकल्पोऽविशिष्टफलत्वात्" इति फलाविशेषप्रतीतेः, फलद्वयप्रतिपादकश्रुतिवाक्यद्वयाभावेन फलद्वयकल्पनानुपपत्तेः, गीताभाष्योक्तस्य ब्रह्मगमनस्य कादाचित्कताथा भाष्येऽनवगमात्, ब्रह्मानुभवस्य सर्वथैवाभावे, ब्रह्म गमयतीति वाक्यविरोधापत्तेः, परं ज्योतिः संपद्यापि स्वेनरूपेणाभिनिष्पत्तिरहित इत्युक्तौ श्रुतिविरोधात्, मुक्तौ जीवानुभवमात्रमिति माध्वसिद्धान्तस्य तत्क्रतुन्यायविरुद्धत्वात् मध्येमध्ये ब्रह्मानुभवविच्छेदककर्मसद्भावस्य मुक्ते दुर्वचत्वात्, कर्माभावेऽपि भगवत्संकल्पात् तथेति माध्वकल्पनस्य चामूलत्वात्। यथा स्वस्वरूपाविर्भावस्य ब्रह्मानन्दानुभवस्य चाविरोधः, तथा कैवल्यपरगीताभाष्यस्य ब्रह्मानुभवपरश्रीभाष्यस्य च कालभेदाभिप्रायेणाविरोध इति निर्वाहसंभवाच्च नैतत् युक्तम्। **भट्टपराशरश्लोक**स्तु स्वमिति प्रथमश्लोकोक्तज्ञानयोगफलं त्वां वेति पञ्चाग्निविद्याफलञ्च ब्रवीतीति न विरोधः, तथैव पूर्वैर्व्याख्यातत्वाच्च। यद्वा पञ्चाग्निविद्यानिष्ठस्य प्रथमं जीवमात्रानुभवात्, पश्चाच्च तादृशकैवल्याभावात् कालभेदेनान्यतरदेव फलमिति प्रदर्शनाय चकारं विहाय **वा**कारप्रयोगः। पाद्मपुराणवचनं तु न विश्वसनीयम्। यद्वा विरजापरमव्योम्नोरन्तरा=विरजायाः परमव्योम्नश्च जलस्थलयोः स्पर्शमन्तरा ततः प्रागेव प्रकृतावेव केवलः स्मृतः। प्राकृतानुभवं विरजादेपरमपदानुभवञ्च विहाय स्वानुभवमात्रे केवलः स्मृतः इति रीत्या व्याख्येयम्। विरजापदं किमर्थमिति चेत्—विरजातीरे सूक्ष्मशरीरत्यागात् ततः प्राक् सूक्ष्मशरीरे स्थितेन कायस्यात्मानुभवस्य विरजास्पर्शपूर्वभावित्वमेवेति ज्ञापनाय।

इदमत्र बोध्यम्—भूमविद्यायां 'तरति शोकमात्मवित्' इत्युपक्रमात् परमात्मज्ञानस्यैव शोकसंतारकता। अत एव सनत्कुमारेण तत्र प्राणपदवाच्यजीवात्मोपासकस्य मुक्तानुभाव्यशुद्धजीवविशिष्टब्रह्मैकदेशोपासकतया नामाद्युपासकापेक्षयाऽतिवादित्वेऽपि न शोकराहित्यमित्याशयेनैव सत्येन ब्रह्मणाऽतिवदनकर्तव्यतोपदिष्टा। तत्र प्राणोपासकस्य विशिष्य फलाकीर्तनात् प्राणविशिष्टसत्योपासकत्वमिष्टमिति प्रतीयते। अथापि प्राणमात्रोपासने कश्चिदुपरमेति चेत्, किं फलं स्यादिति विमृश्य श्रीभाष्ये उक्तम्—प्राणपदेन जीवग्रहणात् किं प्राणसहचरितः किञ्चिद्देहविशिष्टजीव उपास्यतयेष्टः, उत प्राणोपलक्षितः शुद्धजीवः। उभयोऽपि किं नामाद्युपासनेषु प्रस्तुतेष्विवात्र ब्रह्मदृष्ट्या विषयभूतः, उत ब्रह्म विना केवलः, सर्वथा चतुर्विधेऽप्युपासने यथावत् ब्रह्मविषयकत्वाभावात् क्षुद्रमेव फलं भवितुमर्हति। इदमप्यत्र श्रुतौ, 'अतोऽन्यदार्तम्' इत्यत्र विवक्षितम्। **आर्तम्**, अर्तिमत्—शोकवत्, विनाशि चेति। सर्वमिदं 'विशेषञ्च दर्शयति' इति सूत्रभाष्याभिप्रेतम्। **भट्टपराशरपादै**श्चाध्यात्मखण्डद्वयव्याख्यायाम्, अन्येष्वैश्वर्याक्षरभोगेषु जुगुत्सया

साधिष्ठानम्' इति अपवर्गव्यतिरिक्ततया तुल्यत्वं दर्शितम्' इति अत्र प्रागुक्ततया 'भोगापवर्गतदुपायगतीः' इत्यत्र भोगशब्देन तदुभयक्रोडीकारः, अपवर्गस्त्वन्य इति सूचनात् तस्यामोक्षत्वसिद्ध्या न पञ्चाग्निविद्याफलत्वसंभवः। अत एव स्तोत्ररत्नभाष्ये आचार्यैः अपवर्गपदेन कैवल्यभोगमगृहीत्वा भोगपदेन तद्ग्रहणम्। अत्र जुगुप्सापदेन, 'तस्माज्जुगुप्सेत' इति पञ्चाग्निविद्वाक्यमपि स्मार्यते। तत्र संसाराज्जुगुप्सा विहिता। अर्चिरादिमार्गगम्यफलातिरिक्तविषये तत्र जुगुप्साया अभिप्रेतत्वात् तस्या अत्र कथनात् कैवल्ये पुनरावृत्तिर्द्योत्यते। वरदविष्णुमिश्रैश्च, "नन्वेवं निश्शेषकर्मक्षयाभावात् कैवल्यप्राप्तौ न मुक्तः स्यात्" इत्याशंक्य, "सत्यममुक्त एव सः; मोक्षस्य परमात्मानन्दानुभवरूपत्वात्....तस्य ब्रह्मानन्दानुभवाभावात् स्वानन्दमात्रानुभवात्" इत्युक्तम्। अत एवात्मस्वरूपावाप्तिरपि केवलस्य नास्ति। स्वस्वरूपानाविर्भावात्। अत एव वेदार्थसंग्रहोक्तरीत्या सोऽनृतापिधानः, न त्वाविर्भूतस्वरूपः। अत एव जिज्ञासुपदेन कैवल्यपर उच्यते, स्वस्वरूपज्ञानमात्रं तदनुभवमात्रमिच्छति, न तु तदाविर्भावमिति। यथा 'जिज्ञासुर्लभते भक्तिम्' इति। पञ्चाग्निविदि तत्प्रयोगात् कञ्चित् कालं स्थिरतरतया स्थूलशरीरकार्यव्यासंगं विना अनाविर्भूतस्वरूपविषयेऽप्यनुभवेच्छा तस्याप्यस्तीति। कैवल्यं स्थिरमित्युक्तिश्च उपासनकाल इव व्युच्छेदं विना निर्विच्छेदं तदनुभव इत्याशयेन। एवं कर्मक्षयाभावकथनादेव तत्फलानुभवावश्यकतया पुनरावृत्तिरपि कथिता भवति। श्रीविष्णुचित्तैश्च कैवल्यपदं ब्रह्मराक्षसत्वतुल्यं अष्टप्राप्यमिति निन्दितमिति अत्रोक्तम्[*]। तेन प्रकृतिमण्डलातिक्रमो नेति ज्ञायते। तावता कैवल्यमुद्दिश्य कश्चित् विधिर्वाऽनुष्ठानं वा नास्ति, पापफलमेव तदिति न मन्तव्यम्; जुगुप्सनीयत्वे तात्पर्यात्। प्राकृतफलापेक्षयाऽतिशयितत्वात् तदुद्देशेनोपायविधानमपि घटते। तावता संचितपुण्यपापक्षयासंभवात् शास्त्रेण नित्यफलतया तद्विधानं न युज्यते। नित्यप्रकृतिलयरूपस्य फलस्य परिमितकालानुभाव्यत्ववत् नित्यस्यापि जीवस्य परिमितकालानुभाव्यता घटते।

एवमात्मानुभूतिरूपकैवल्यस्यानित्यत्वे कथं श्रीकूरेशैरस्य मुक्तित्वेन कीर्तनमिति चेत्—तत्र, 'भोगा इमे विधिशिवादिपदश्च किञ्च स्वात्मानुभूतिरिति या किल मुक्तिरुक्ता। सर्वं तदूषजलजोषमहं जुषेय हस्त्यद्रिनाथ तव दास्यमहारसज्ञः" इति श्लोके ऐश्वर्यभोगाविशेषेणोपादानादनित्यत्वमेवेष्टम्। मतान्तरस्थैरनीश्वरैः सेश्वरैश्च कैश्चित् स्वात्मानुभवमात्रं नित्यत्वेन मन्यमानैरस्य मुक्तित्वमुच्यते, विषयानुभवविरहमात्रेणामुक्तौ मुक्तित्वव्यपदेश आप्तवाक्येष्वप्यस्ति, न तत्त्वतो मुक्तित्वमिति ज्ञापनार्थमेव, या किल मुक्तिरित्येतावत्यनुपरम्य मुक्तिरुक्तेत्युक्तम्। इमामेव स्वात्मानुभूतिं शेषिभगवदनुभवसहचरीं मुक्तित्वेन यदि ब्रूयुः, स्वीकुर्याम्, न त्वेतावन्मात्रमित्याशयः। द्वादशे ज्ञानयोगनिष्ठो देह्यपि मुक्तत्वेन प्रशंसितः, 'विमुक्तश्च विमुच्यते' इति च श्रुतिर्भक्तियोगनिष्ठमपि विमुक्तं ब्रवीति, 'मोक्षं सालोक्यसामीप्यं प्रार्थये न कदाचन' इति सालोक्यादिमात्रमपि मोक्षत्वेन व्यपदिश्यते। तावता न मुख्यमुक्तित्वमिति तद्भावः। श्रीवकुलभूषणमुनिभिश्च 'செற்றது மன்னுறில்' इति कैवल्यस्यानित्यत्वं भगवत्प्राप्तेः

[*] திரு. ப. 5.

स्थिरत्वञ्चोक्तम् । तद्व्याख्याने च उत्तरश्रीग्रीग्रिश्रीकृष्णपा॰ः प्रथमश्रियःपतिरूपे स्वग्रन्थ(ईडु)प्रवेशे ஐச்வர்ய கைவல்யங்களை "தாழ்த்தது அல்ப்பாஸ்த்திரத்வாதி தோஷங்களாலே" इति ऐश्वर्यस्य कैवल्यस्य चाल्पत्वमस्थिरत्वं शेषत्वरूपानुरूपत्वादिकञ्च स्पष्टमुक्तम् । प्रकृतगाथाव्याख्यानावसरेऽपि तथा । अस्थिरत्वमैश्वर्ये, अल्पत्वं कैवल्ये इति नयननप्युक्तम्, ऐश्वर्येऽप्यल्पत्व-स्त्वेन विभजनायोगात् । ऐश्वर्यादिपदस्य वक्तव्यत्वात् आदिपदेनाप्युभयान्वयार्थं-दिवक्षणाच्च । श्रीमुखमूक्तादिषु कैवल्यदूषणमल्पास्थिरत्वादिहेतुभिरिति अतोऽक्तया अत्र दिव्यप्रबन्धे सर्वत्र कैवल्यास्थिरत्वमेवाभिमतम् अतः 'குறுகா நிலா—இறுதி கூடா' इत्यादिगाथास्वपि स्थिरत्वाभिप्रायो नास्तीति नम्बिल्लैमाचार्याभिमतमाविष्कृतं भवति । द्वादशसहस्रिकायामपि भगवत्प्राप्तेरेव नित्यपुरुषार्थत्वमत्रोक्तम् । तच्छिष्यश्रीविष्णुचित्तव्याख्या च श्रीविष्णुपुराणवच-नञ्च तद्व्याख्येयं विस्पष्टं बाधकम् । श्रीदेशिकदर्शितास्तु वाचस्तर्काश्च तदनित्यत्वे ज्ञापकाः ।

श्रीविष्णुचित्तीये, "योगिनाममृतं स्थानं स्वात्मसंतोषकारिणाम्" (वि. पु. 1-6-38) इत्येतद्व्याख्यानावसरे, "आश्रमेष्वेव प्रतीकोपासकाः योगिनः तेषाममृतं विष्णुपदाख्यं ध्रुवादुपरि (ध्रुवाधारः?)स्थानम्; यतो गंगा प्रवहतीति वक्ष्यमाणम्" इत्युक्तम् । उपरि ( -2-9) देवयानप्रस्तावे, 'अष्टाशीतिसहस्राणि मुनीनामूर्ध्वरेतसाम्' (1-6-36; 1-10-1) इति स्थलद्वयोक्ताधिकारिणो निर्दिश्य, "तेऽसंप्रयोगाल्लोभस्य—शब्दादो दोषदर्शनात् । इत्येभिः कारणैः शुद्धा अमृतत्वं हि भेजिरे । आभूतसंप्लवं स्थानममृतत्वं विभाव्यते । त्रैलोक्यस्थितिकालोऽयमपुनर्मार उच्यते" इत्यानुक्त्वा ऊर्ध्वोत्तर-मित्यादिना विष्णुपदं वर्णितम् । तत्र चिरकालस्थायितयैवामृतपदव्यपदेश्यस्थानभाक्त्वमुक्तम् । एवम्, "अत्र विष्णुपदे स्वर्गाधिकसौख्यात् सत्यलोकादर्वाचीनत्वाच्च मोक्षोक्तिः क्रममुक्त्यर्था । तत्स्थाः क्रमात् ब्रह्मलोकमेत्य ब्रह्मणा सह मुच्यन्ते । विष्णुपदे स्थितास्तत्र (ब्रह्मलोके)लब्धज्ञाना मुच्यन्ते । न तु तत् मुक्तैर्लभ्यं स्थानमित्यर्थः" इति चोक्तम् । एवञ्च स्वात्मसंतोषकारिफलभूतकैवल्यस्थानं ब्रह्माण्डा-न्तर्गतमनित्यमिति तत्रामृतत्वव्यपदेशश्चामुख्य इति श्रीविष्णुचित्तीयकण्ठोक्तविरुद्धमेव हि कैवल्यस्थानान्तर-नित्यत्वकल्पनम् । एतद्विष्णुचित्तीययुक्तायुक्तत्वविचारो नित्यकैवल्यस्थापनप्रवृत्तैर्नैव कृतः । नापि तस्य श्रीविष्णुपुराणवचनस्यार्थोऽन्यथा विमृष्टः । तत्र "प्राजापत्यं गृहस्थानां न्यासिनां ब्रह्मसंज्ञितम् । योगिनाममृतं स्थानं स्वात्मसंतोषकारिणाम् । एकान्तिनः सदा ब्रह्म ध्यायिनो योगिनो हि ये । तेषां तत् परमं स्थानं यद्वै पश्यन्ति सूरयः" इति श्लोकक्रमदर्शनात् ब्राह्माख्यचतुर्मुखस्थानोपरि परमपदस्थान-स्याधस्तात् केवलस्थानं भवितुमर्हतीति चिन्त्येत । परंतु पूर्वं ब्रह्मचारि-वानप्रस्थ-गृहस्थ-संन्यासिनां क्रमेण निर्देशात् आश्रमाणां क्रमेण निर्देश इति व्यवस्थाविरहवत् नीचस्थानोपरि उच्चस्थानकथनमिति व्यवस्थाऽपि नास्तीति अस्यामृतस्थानस्य द्वितीयांशानुसारेण ब्राह्मतोऽर्वाचीनत्वेऽपि न दोष इति तदाशयः । योगिनाममृतमिति वचनमिदं श्रीभट्टपराशरपादैः "मुक्तानां परमा गतिः" इत्यत्रोपात्तम् । तैस्तत्र मुक्त-

नामिति शब्दस्य गुणाष्टकेन भोगेन च परमसाम्यमापन्ना एव मुक्ता इत्यर्थमुपपाद्य तेषां स्वस्वरूपस्य विभूतिद्वयस्य च प्राप्त्यत्वेऽपि परमप्राप्यत्वं विष्णोरेवेति सा परमा गतिरित्याशय्य, अथामुख्यमुक्तान् केवलान् प्रस्तुत्य कैवल्यफलप्रदर्शनाय वचनमिदमुपात्तम् । उत्तरे अव्ययनामाथविचारे एतदनन्तरवचनम्, "एकान्तिनः सदा ब्रह्म ध्यायन्ते योगिनो हि ये । तेषां तत् परमं स्थानं यद्वै पश्यन्ति सूरयः" इतीद-मुपादाय तत्र गतानामपुनरावृत्तिरपि प्रतिपादिता ; नात्र । अद्वैतिरीत्यनुसरणमस्मदयैर्नेष्टम् । तेन कैवल्यस्थान-स्थितानां पुनरावृत्तिरेव स्वरसतस्तदिष्टेत्यवसीयते । अयं तु विशेषः—यत् एतद्वचनविवरणाय, "संसारपरम-पदयोर्मध्ये तेषां स्थानञ्च" इति ते निर्दिशन्ति । संसारपदेन च यत्र संसारिणो नीचोच्चस्थानगतागतभाजो भवन्ति तद्ब्रह्माण्डग्रहणं युक्तम् । तस्य परमपदस्य च मध्यञ्च जलाद्यावरणतदनन्तमूलप्रकृत्यात्मकमेव शास्त्रप्रतिपन्नम् । पूर्वं ब्राह्मस्थानस्य, पश्चात् परमपदस्य च निर्देशात् मध्यनिर्दिष्टमिदं चतुर्मुखलोकोपरि श्रीवैकुण्ठादधस्तनस्थानमिति युक्तमिति तदाशयः स्यात् । विष्णुपुराणे अमृतशब्दस्य तत्संदर्भे परिभाषितार्थ-ग्रहणं तु श्रीविष्णुचित्तेष्टम् । एवमपि कैवल्यस्थानस्य परमपदस्थानभिन्नत्वं स्पष्टमिष्टम् । श्रीमद्रहस्यत्रयसारे चरमश्लोकाधिकारे वचनमिदमुपादाय परमपदभिन्नत्वमेव स्थापितम् । श्रीविष्णुचित्तोक्तरीत्या तदुपपादनं तु न कृतम् । एतन्नामसहस्रभाष्यावलोकनात्, विरजापरमव्योम्नोरिति पाद्मपुराणवचने विरजापदस्थाने वैराजपदं स्थितं स्यादिति वैराजपरमव्योम्नोरिति पाठो विमृश्यते । विराट्पदं वैराजपदञ्च ब्रह्माण्डपरतया तत्रतत्र प्रयुज्यते । विरजानन्तरं परमपदात्पूर्वं किञ्चित्स्थानाभावात् ब्रह्माण्डादूर्ध्वं परमपदस्याधस्तात् पूर्वोक्तप्राकृत-भागरूपप्रदेशसत्त्वादिदमवाधितम् । भूतेन्द्रियप्रकृत्युपासकानां महाभूतेषु इन्द्रियेषु नित्यप्रकृतौ च कञ्चित्कालं लयवत् जीवात्मोपासकस्य प्रपञ्चोपरितनप्राकृतभागे लय इष्ट इव । श्रीविष्णुचित्ताशयस्तु अमृतपदपरिभा-षितार्थपरित्यागेन तदारभ्य परमपदस्याधस्तात् स्थिते देशे केवलो यत्र क्वापि कैवल्यमनुभवत्विति स्यात् । "येन केनापि गच्छतु यत्र क्वाप्यनुभवतु" इति च न्यायसिद्धाञ्जने निरटङ्कि । सर्वथा तस्यास्थिरत्वादिकं विष्णुचित्तेष्टं नापलपनीयम् । तत्र चतुर्मुखलोकादर्वाचीनस्थानगामी अर्चिरादिमार्गं विनैव गच्छेत् । पञ्चाग्निविद्या-निष्ठस्तु अर्चिरादिना ब्रह्माण्डमतिक्रम्य यत्र क्वापि तदनुभूय पश्चात् परं ब्रह्म संपद्येतेति विवेकः स्यान्नामेत्यलम् ।

तदेवमुभयसंप्रदायप्राच्याभियुक्तवचनातिलङ्घने नार्वाचीनोक्तिरक्षणाय अप्रामाणिकार्थकल्पनप्रयासो न स्थाने । अतः प्रक्षेपशंकास्पदपाद्मपुराणवचनमादाय न्यादृशकैवल्यानुरकल्पनादिकमयुक्तम् । अविरुद्धार्थान्तरकल्पनं वा तस्य काममस्तु । परमपदेऽपि कतिपयाधिकारिविषये कैवल्यस्थानस्वीकारेऽपि तत्र वाक्ये कैवल्यनित्य-त्वानुक्तेः यथासंप्रदायं प्राकृतकैवल्यान्तरवत् तदप्यनित्यमेव ; लब्धालोकेनैवापुनरावृत्तेन तत एव सायुज्यपर्यन्तस्य सुलभत्वादिति । अन्यत्र च नयद्युमणिभूमिका—तात्पर्यचन्द्रिकाटिप्पणी-प्रथमषट्कान्त-भागार्थसंग्रहास्थलादौ अस्माभिः प्रपञ्चितमप्यनुसंधेयम् ।

27 । पु. सर्वेश्वरत्वमित्यादीश्वरलक्षणं विष्णुमात्रनिष्ठमिष्टं चेत्—सर्वपदेन स्वेतरसर्वपरेण श्रियोऽपि ग्रहणात् न श्रियामतिव्याप्तिः । श्रियोऽपीश्वरत्वात् लक्षणस्योभयनिष्ठत्वेष्टौ सर्वपदं तदितरचेतनाचेत-

नमात्रपरम् । विष्णुमात्रस्य लक्ष्यत्वेऽपि सर्वपदेन तावदेव विवक्षित्वा लक्षणेषु पुंस्त्वमिति विशेषणं घटनीयम् । तावताऽपि दोषवारणात् ।

२७४ पु. "परविद्यासु जीवोक्तिः" इति कारिकाप्रथमपादस्थाने तत्त्वटीकायां प्रथमश्लोक-व्याख्याने, "अन्योक्तिः परविद्यासु" इति स्थितः साधीयान् पाठः । अधिकरणचिन्तामणौ पूर्वार्धमेवान्या-दृशमिति इह टिप्पणे दर्शितमेव ।

३६४. पु. श्रियः विभुत्वोपायत्वादिविषये **वचनभूषणमीमांसा**निरसनेन श्रीपञ्चरात्रादिगतविस्पष्ट-वचनानामुदाहरणेन सर्वं विशदमेवोक्तमस्ति **रत्नपेटिकायाम्** । **पुरुषकारमीमांसा**ग्रन्थखण्डनरूपे **श्रीतत्त्वसिद्धाञ्जने** चैतद्विस्तरः प्रागेव स्थितः । अनुग्रहमप्यास्तस्या मुक्तविषयानुग्रहबुद्धिः स्वतः प्राप्ता । महर्ष्यादेर्महानुग्रहवशात् ब्राह्मणपरिषदाद्याशीर्वादबलात् आचार्यानुग्रहवशाद्वा यत्र कार्यनिष्पत्तिः, तत्रापि सर्वेश्वरानुग्रहस्यावश्यापेक्षिततया तत्तदनुग्रहप्रवृत्तेरपीश्वरायत्ततया च तेषामनुग्रहाणामन्यथासिद्धिरिस्वशक्तत्व-मकारणत्वं च नहीष्यते । न च ततोऽपि निकृष्टता लक्ष्मीकर्तृकानुग्रहस्य । अप्रधानकारणस्यापि प्रधानकारणत्वेन प्रशंसनं श्रेयसे । कारणस्याकारणत्वस्थापने आग्रहस्तु अपराधाय । अखिलहेयप्रत्यनीके भगवति अभिषेक-निवेदनाद्युपचारानावश्यकत्ववादवत् उपेक्ष्यस्तात्त्विकंमन्यवाद ईदृशः । प्राप्ययोरुभयोर्मध्ये लक्ष्म्यपेक्षया परमपुरुषे प्राधान्ये सत्यपि यथा नास्माभिस्तयोः पुरः तद्वैषम्यं भाष्यते, उभयोरेकासनावस्थित्यादि-साम्यात्, तथोपायत्वेऽपि न तद्भावनं युक्तम् । यद्वा तद्वा तर्केण साधयितुं शक्यमिति तस्याप्रतिष्ठित-त्ववेदिभिरस्मत्पूर्वाचार्यैः प्रमाणशरणैः स्थितमिति मनसिकृत्य हठात्कारं विहाय महृदयीभूय तत्त्वनिर्णयः कार्यः । **लक्ष्मीतन्त्रविष्वक्सेन**संहितादिवचनानि हि श्रियो विभुत्वकारणत्वोपायत्वादिकं विशिष्य प्रतिबोधयन्ति । संप्रदायश्च—"श्रेयो न ह्यरविन्दलोचनमनःकान्ताप्रसादादृते संसृत्यक्षरवैष्णवाध्वसु नृणां संभाव्यते कर्हिचित्" इति सर्वस्यापि फलस्य तदनुग्रहायत्तत्वं **श्रीयामुनमु**निमतम् । समुद्रमथनेन श्रियमाविर्भाव्य तां भक्तिपूताभिषेचनाराधनाभिष्टवैः प्रसाद्य पुरन्दरस्त्रैलोक्याधिपत्यं प्रापेति पराशरः परमर्षिरुपदिशन् सर्वत्र विष्णुप्रीतिवत् श्रीप्रीतेरपि प्रतीक्ष्यमाणत्वं प्रसाधयतीति तदादिप्रमाण-मूलकमिदं वचनम् । "यस्या वीक्ष्य मुखं तदिङ्गितपराधीनो विधत्तेऽखिलम्" इति **श्रीवत्साङ्कमिश्र-व**चनादपि कर्मानुरूपफलप्रदोऽपीश्वरस्तदभिप्रायप्रतीक्ष एव सर्वं करोतीत्यर्थसिद्ध्या उपायाधीनप्रीति-रुभयोः, ततस्तदनुग्रहोन्मुखश्रीप्रीणनपरमपुरुषानुग्रह इति उपायानुष्ठानस्योभयनिष्ठफलप्रदानौन्मुख्यहेतुतयो-भयोरप्युपायत्वमवर्जनीयम् । अनुग्रहरूपसंकल्पे ऐकरूप्यं वा स्यादीषद्भेदो वा ; किं तेन । द्वये श्रियो विशेषणत्वमेव । परंतु श्रीकृत्यं पूर्वोत्तरकालभावि सर्वं पुरुषकारकृत्यतया वादिकेसरिभावितमनुपायत्ववाचो-युक्तिरक्षणाय । मूलमन्त्रे उकारस्य लक्ष्मीपरत्वपक्षे,'मकारस्तु तयोर्दासः' इति उभयोः शेषित्वं प्रतिपाद्यत इति संप्रतिपन्नम् । उभयाधिष्ठानञ्चैकं शेषित्वमिति शेषित्वं व्यासज्यवृत्ति एकमिति संप्रदायः । अतः आत्मस्वरूपमुभाभ्यामेव युगपदर्पणीयम् । शेषित्वादेव फलस्योभयनिष्ठत्वात् फलमप्युभयोर्न्यस्यते ।

भरसमर्पणस्यास्मत्कर्तृकभरनिरपेक्षत्वप्रसंपादकतया निरपेक्षकार्यकरत्वस्योभयत्राविशिष्टतया भरोऽप्युभयत्र न्यसनीयः। भक्तियोगसमाराध्यत्वस्योभयगतत्वाच्च तथैव न्यसनं साम्प्रतम्। तथा **द्वये** श्रीविशिष्टनारायणबोधनात् श्रियो विशेषणत्वस्योभयपूर्वाचार्यसंमतत्वात् शरणागतिप्रतिसंबन्धित्वं श्रियामपि सिध्यतीति तस्या अप्युपायता। विशिष्टे एकशरणागतिक्रियाप्रतिसंबन्धित्वस्य स्वरसतोऽवगमात् तदनंगीकृत्य श्रीविषयकपुरुषकारप्रपत्तिः, नारायणविषयप्रधानप्रपत्तिश्च पृथक्पृथक् क्रियमाणा द्वयार्थ इति वादे स्वारस्यभंगः। प्रधानशरणागतिप्रतिसंबन्धिताया उभयनिष्ठत्वस्य प्रागेवोपपादितत्वात् **लक्ष्मीतन्त्रे** च आनुकूल्यसंकल्पाद्यंगानामङ्गिनश्चोभयविषयकत्वं विविच्य दर्शितमुभयोरुपायत्वप्रतिष्ठापनाय। तत्र लक्ष्मीनाराणात्मिका प्रतीतिरेका प्रपत्ताविति चात्रिणोक्तम्। 'प्रायश्चित्तप्रसंगे तु सर्वपापसमुद्भवे। मामेकां देवदेवस्य महिषीं शरणं व्रजेत्' इत्युक्त्या पुरुषकारप्रपत्तिरपि पृथक् कार्यतया सिद्धा। प्रपन्नायाश्च श्रियः पत्यौ कृत्यद्वयमस्ति, निग्रहात् वारणं काले तथा संधुक्षणमनुग्रहे। तत्र लक्ष्मीमात्रविषयकपुरुषकारप्रपत्त्या पुरुषकारबलात् भगवतोऽभिगन्तव्यता सिध्यति, यथावस्थितशरणागतिनिष्पत्तिश्च गद्यदर्शितरीत्या। अथोभयविषयकप्रधानशरणागतौ कृतायां पत्युरनुकूलितत्वात् फलनिष्पत्तौ निस्संशयायां श्रियामुत्सुकायां तत्प्रीणनः पतिरप्यनुग्रहे प्रवर्तते। एवमुपायानुष्ठानानन्तरभाविश्रीकर्तृकसंधुक्षणं श्रीकर्तृकफलप्रदानसंकल्पवत् तस्या उपायत्वसाधकम्, प्रपत्त्यनुष्ठानप्राक्कालिकतत्कृत्यं पुरुषकारतासाधकमिति विवेकः। इदं त्वत्र विमृश्यम्—'ईशानां जगतामधीशदयितां नित्यानपायां श्रियं संश्रित्याऽऽश्रयणोचिताखिलगुणस्यांघ्री हरेराश्रये' इति **भट्टपराशर**श्रीसूक्तिस्वारस्यात्, "ऐश्वर्यमक्षरगतिं परमं पदं वा कस्मैचिदञ्जलिभरं वहते वितीर्य" इति तैरेवोक्तत्वाच्च प्रधानप्रपत्तिपूर्वोत्तरकालभवपुरुषकारत्वोपायत्वोपयोगिसर्वश्रीकृत्योद्देशेनैवाऽऽदौ श्रीप्रपत्तिमनुष्ठाय पश्चात् पतिमात्रविषयकप्रपदनानुष्ठानमपि शास्त्रेष्टं भवितुमर्हति; श्रुतप्रकाशिकाचार्यकृतशरणागतिगद्यभाष्यतोऽप्येवम्। एतत्पक्षमवष्टभ्य स्यात्, 'सरसिजप्रकारौ पद्मायास्तव च चरणौ नश्शरणयन्' इति भट्टारकलक्ष्मीकल्याणश्रीसूक्तिरपि। लक्ष्मीतन्त्रवचनस्याप्यत्र तात्पर्यं नेयम्। द्वये पूर्वखण्डे श्रिय उपलक्षणत्वञ्चोच्यतामिति॥ तावता श्रिय उपायत्वमुपेक्षितं न भवति, अनुष्ठानवैषम्येऽपि प्रमेयस्य स्वीकृतस्यैकरूपत्वात्। क्लिष्टप्रपत्तिद्वित्वपरत्वपरिहाराय, एकप्रयोगविषयत्वसंभवादुभयोरेकप्रपत्तिकर्मत्वौचित्याय मतुप्प्रतीतविशेषणत्वसारस्यरक्षणाय च प्रधानप्रपत्तिप्राक्कर्तव्यमात्रार्थतया पुरुषकारप्रपत्तिमनुष्ठायोभयोद्देश्यकप्रधानप्रपत्तिस्वीकारपक्षे तु अष्टश्लोक्यां हरेरित्येतत् श्रीविशिष्टपरम्; 'तदन्तर्भावात् त्वां न पृथगभिधत्ते श्रुतिरपि' इति तैरेवोक्तत्वात्। एवञ्च यज्ञे दीक्षितयोर्दम्पत्योः कर्तृत्ववत् रक्षणदीक्षितयोर्दिव्यदम्पत्योः साक्षात्संकल्पकर्तृत्वमपि संभवत् न सहसाऽस्माभिः प्रतिक्षेप्यम्। स्वयंप्रतिबुद्धायां शक्तायां श्रियां कादाचित्काशक्तपत्नीकर्तृकानुमतिदानन्यायस्याकल्प्यत्वात्। अस्तु च तत्कृत्यं ताभ्यामेव ज्ञातव्यम्। अस्मत्कृत्यं तु पृथगपृथग्वा उभयविषयेऽपि शरणागतिरिति श्रीदेशिकाशयः॥

यथा भक्तेः उपायत्वं श्रीदेशिकाभिमतमप्ययुक्तम्, तथा प्रपत्तेरुपायत्वं श्रीदेशिकानभिमतमपि न संप्रदायस्थैः स्वयमादृतं सुतरामयुक्तमिति प्रत्यवतिष्ठन्ते। किमिदमुपायत्वं प्रतिषिध्यमानमिति परिशीलनीयम्। संकल्पाश्रयत्वरूपमुपायत्वमिति चेत्—न ह्युपायशब्दस्य संकल्पाश्रय इत्यर्थे रूढिः। घटविषयकसंकल्पाश्रयस्य घटनिष्ठविषयकसंकल्पाश्रयस्य च न घटोपायत्वमिष्टम्। घटानुकूलसंकल्पाश्रयस्तदुपायः इति चेत्, तत्र घटानुकूलत्वं यत् संकल्पनिष्ठम्, तदपि घटोपायत्वमेव लोकप्रसिद्धमिति व्युत्पत्तिसिद्धार्थत्यागो न युज्यते। व्रीहिभिर्यजेतेति प्रकृतिद्रव्यस्याप्युपायत्वं श्रूयते। यजेत स्वर्गकाम इति यागोऽपगतस्योपायत्वस्य रक्षणाय द्वारतया कस्यचिदपूर्वाकारेण परम्पराकारणस्यापि वचनबलादुपायत्वमिष्यते। सिद्धोपायः साध्योपायश्चेत्युपायद्वित्वं सर्वैरपीष्यते। साक्षात्साधनस्यैव चेद् उपायत्वम्, संकल्प एवोपायः स्यात्। तदाश्रयस्यासंकल्पकालाधारण्यादनुपायत्वं स्यात्। अन्यकर्तृकसंकल्पस्याकारणत्वात् ईश्वरस्यापि कारणत्वे स्वीकर्तव्ये संकल्पापेक्षया धर्मिभूते ईश्वरे प्राधान्यमनुसन्धीयते। संकल्पस्य तत उपायतावच्छेदकत्वम्। उपायतावच्छेदकस्योपायत्वं तदिष्टमेवेति चेत्, एवं साधनसाधनेऽपि प्रसङ्गमुपायत्वं स्वीकर्तव्यमिति प्रपत्तावपि परम्परयोपायत्वम्। महाश्चाकृष्णपादाः अभयप्रदानसारे परमात्मन एवोपायत्वात् प्रपत्तावुपायत्वमारोपितम्, न तु वास्तवमित्याहुः। स्यादिदम्, यदि अन्यनिष्ठमुपायत्वमन्यत्र विवक्षितम्। चरणौ शरणं प्रपद्ये इत्यत्र चरणयोरारोपितमेव हि तत्, भगवत एवोपायत्वादिति चेत्, किं तत् उपायत्वम्? न हि संकल्पाश्रयत्वरूपमुपायत्वं शरणशब्दार्थः। तस्य भक्तिविशिष्टस्य शरणागमनेन विशिष्टसाध्यसेवत्वाभावात्। 'उपाये गृहरक्षित्रोः शब्दः शरणमित्ययम्। वर्तते साम्प्रतं त्वेष उपायार्थैकवाचकः' इति रक्षकरूपार्थव्युदसनेन साध्योपायरूपार्थस्यैव शरणशब्दविवक्षणीयत्वकथनात्। एवञ्च चरणयोः साध्योपायभागेन चरणविशिष्टनारायणे उपायत्वारोपाभिप्रायमिति वक्तव्यम्। एवञ्च शरणशब्देन भक्त्यादिरूपसाध्योपायस्य तत्र विवक्षणीयतया तत्त्वस्य नारायणे बाधात्, अर्थान्तरविवक्षया आरोपमुखेनोपपादनीयस्य भक्त्यादिस्थ उपायत्वस्यासिद्धेश्च तत्राऽऽरोप इत्यर्थस्वीकारेऽपि प्रपत्तिरुपाय इति प्रयोगे किमिति उपायत्वारोपः। भगवति भक्तिस्थानापत्त्यापादक कृपोत्तम्भन-अनतिक्रमणीयग्रहणत्वादिरूपोपायत्वविवक्षायां च नारोपः॥

साध्योपायो भक्तिरिति प्रयोगे भक्तावुपायत्वमारोपितमिति न ह्युच्यते। उपायत्वसद्भावात् तत्र नारोप इति चेत्—संकल्पाश्रयत्वमुपायत्वं नास्त्येव हि। अथापि, "प्रसत्त्यै तस्योक्ते प्रपदननिदिध्यासनगती" इत्युक्तप्रसादसाधनत्वमस्त्येव। उपायशब्दस्य साक्षात्परम्परासाधारणसाधनत्वार्थकत्वात् तत् तत्राक्षतमेवेति वक्तव्यम्। इदं प्रपत्तावप्यविशिष्टम्। अस्ति तु कश्चित् विशेषः—भक्तिर्निष्पन्ना संकल्पस्य साक्षात् कारणं भवति, फलं प्रति संकल्पद्वारा। प्रपत्तिस्तु त्वमेवोपायभूतो मे भवेति, साध्योपायं नापेक्षेथा इति निरपेक्षत्वप्रार्थनारूपत्वात्, उपायानपेक्षः स्यामिति ज्ञानमुत्पाद्य अयमुपायान्तरप्रसंगरहित एव स्थित इति निश्चयद्वारा प्रसादहेतुः। सर्वविधमपि साधनत्वमुपायशब्दवाच्यमेव, यथा मृदादेर्घटादिकं प्रति साधनत्वे मध्ये संकल्पाद्यनपेक्षणात् साक्षात् साधने उपायशब्दप्रयोगः, यथा च संकल्पे उपायशब्दप्रयोगः, तथा संकल्पव्यवधानेन कारणे यजनभजनादावपि उपायशब्दप्रयोगः, तथैव भजनसाधने अंगप्रपदनेऽपि उपायशब्दप्रयोगः, भजननिरपेक्षतापादके प्रपदनविशेषे च। 'भक्त्या परमया वापि प्रपत्त्या वा महामते

इत्यत्र भक्ताविव प्रपत्तावपि वस्तुतः संभवत् यत् उपायत्वं तदेव विवक्षितम्। नेदं परम्परयोपायत्वं प्रपत्तिनिष्ठं त्वमेवोपायभूतो मे भवेति वाक्ये एवकारेण निषिध्यते। न हीश्वरमात्रे कारणत्वं स्वीकृत्य लोके किञ्चिदपि कुत्रापि साक्षाद्वा परम्परया वा न कारणमिति कथ्यते। सर्वथाऽपि प्रपत्तेरनुपायत्ववादिनो हि आचार्याश्रयणमेवोपाय इतीश्वरातिरेकस्य संकल्पानाश्रयस्योपायत्वमिच्छन्ति। अतो भक्तस्य भक्तिर्भगवांश्चेत्युभयमुपायः, अशक्तस्य तु भगवानेवोपायः, न भक्तिरिति भक्तिनिरपेक्षतापादनं प्रपत्तिकृत्यमिति उपायान्तरसाहित्यनिषेधः। यदि भगवन्निष्ठं यत् साक्षादुपायत्वम्, तत् कदाचित् प्रपत्तावाप्येत, महाविश्वासे वा गोप्तृत्ववरणादौ वा अञ्जलिमात्रे वा पूर्णप्रपत्तित्वारोपवत्, अननुष्ठितप्रपत्तौ पुरुषे न फलप्रसक्तिरिति तद्दार्ढ्यसंपादनाय, तदा स्यादुपायत्वारोपः। तत् सिद्धं भगवति यत् संकल्पाश्रयत्वात्मकमुपायत्वं तत् भक्तौ वा प्रपत्तौ वा कुत्रापि कैरपि नेष्यते, भक्तिस्थानापन्नत्वरूपं यत् भगवन्निष्ठं तदपि प्रपत्तौ नेष्यते। भक्तिस्थानापन्नत्वं प्रपत्तेरिति वादोऽपि प्रपत्त्यनन्तरकर्तव्याभावाभिप्रायकः। भक्तौ यत् साक्षात् संकल्पकारणत्वरूपमुपायत्वं तदपि प्रपत्तौ नेष्यते। निरपेक्षतारूपकारण्योऽऽस्रो तम्भनद्वारैव प्रसादस्य साध्यत्वात्। अतो भक्तितोऽधिकं परम्पराहेतुत्वं यत् अञ्जलिबन्धक्षेत्रवासनामसंकीर्तनादिवैलक्षण्येन प्रपत्तौ वर्तमानमुपायत्वं तत्र तत्रोपायशब्दाकरणविभक्त्यादिज्ञापितम्, न तदपलपितुं शक्यमिति व्यर्थ एवात्र कलहः।

३३४. पु. एके तु निरतिशयदीप्तियोगात्' इति वाक्यं नित्यविभूतेस्स्वयम्प्रकाशत्वपरं प्रथमव्याख्याकृदवतरणनिरीक्षणे आचार्यसंमतपक्षप्रदर्शकमिति भायात्। न तथा तत्त्वम्; सयूथ्यमतमेव तदिति द्वितीयव्याख्यावृतमवतरणमेव सम्यक्।

३९१. पु. 'परस्मिन्नेव शान्तोदितनित्योदितविभागोऽपि भाव्य इति। लक्ष्मीतन्त्रे द्वितीयेऽध्याये परः शान्तत्वेनोक्तः। पारमेश्वरे (9- 16) नित्योदितनिर्देशोऽस्ति। अन्यान्यपि वाक्यानि द्रष्टव्यानि। प्रथमव्याख्याने प्रमाणोपन्यासेन नित्योदितः परवासुदेवः, शान्तोदितो व्यूहवासुदेव इत्युक्तम्। मूले निर्देशक्रम एतदनुकूलो न दृश्यते। द्वितीयव्याख्या त्वितोऽपि संग्रहभूता। तत्त्वत्रयाख्यग्रन्थे नित्योदितशान्तोदितभेदस्य प्रस्तुतस्य विवरणे च वरवरमुनिभिः नित्यमुक्तानुभाव्यः नित्योदितसंज्ञकः परवासुदेवः; तत उत्पन्नः संकर्षणव्यूहकारणभूतः शान्तोदितसंज्ञकः व्यूहवासुदेव इत्युक्तमस्ति। इदमेव पश्चात्तनैरपि भण्यते। प्राक्तनसंप्रदायग्रन्थेषु श्रीवत्साङ्कमिश्रनिर्मिते वरदराजस्तवे, "प्रशान्तानन्तात्मानुभवजमहानन्दमहिमप्रसक्तस्तैमित्यानुकृतवितरङ्गार्णवदशाम्" इति, सुन्दरबाहुस्तवे च, "अतिपतितावधिस्वमहिमानुभवप्रभवत्सुखकृतनिस्तरंगजलधीयितनित्यदशाम्" इति लक्ष्यते। तत्र प्राच्यव्याख्यायाः, "भगवतः शान्तोदितदशा नित्योदितदशा चेति दशाद्वयमस्ति। तत्र हेयप्रत्यनीककल्याणैकतानस्वस्वरूपानुभवदशा प्रथमा; इतरा तु विभूत्यनुभवदशा" इति मूलस्वारस्यानुरोधी वाक्यराशिः। भट्टपादभणिते श्रीरङ्गराजस्तवे च, "यम श्रित्यैवाऽऽत्मम्भय इव ते सद्गुणगणाः प्रथन्ते सोऽनन्त स्ववशवनशान्तोदितदशः। त्वमेव त्वां वेत्थ स्तिमितवितरङ्गं वाद भोः स्वसंवेद्यस्वात्मद्वयसबहुलानन्दभरितम् (87) इति वरदराजस्तवश्लोकव्याख्यानाभि-

प्राय इव श्लोकः परस्वरूपानुभवदशां शान्तोदितपदविवक्षितां दर्शयति। एतदनन्तरं परस्य स्वरूपस्वभावयोर्मध्ये कतरस्य परत्वं महितत्वमिति चिन्तीयमाणेन चेतसा परव्यूहादिकं पश्चादेव प्रस्तुतमस्ति। **श्रीदेशिक**विरचितायां **वरदराजपञ्चाशति** च, "संचिन्तयन्त्यखिलहेयविपक्षभूतं शान्तोदितं शमवता हृदयेन धन्याः। नित्यं परं वरद सर्वगतं सुसूक्ष्मं निष्पन्दनन्दथुमयं भवतः स्वरूपम्" इति श्लोके **शान्तोदित**पदेन परमात्मस्वरूपविवक्षैव प्रतीयते। अत्र **सर्वगत**मिति पदस्य स्वरूपभावान्वयी सर्वव्यापीत्यर्थोऽपि सुवचः। तथापि श्रुतौ, 'नित्यं विभुं सर्वगतं सुसूक्ष्मम्" इत्यत्र भाष्यकारैर्विभुपदपौनरुक्त्यपरिहाराय, 'सर्वैः प्राप्यतया गतम्" इति व्याख्यानात् तथैव व्याख्यान्ति। सुसूक्ष्मपदस्वारस्यमपि परमात्मस्वरूपपरत्व एव। एवञ्च स्वरूपं शान्तोदितशब्दवाच्यम्, दिव्यमङ्गलविग्रहो वासुदेवरूपो **नित्योदित**पदवाच्यः, तस्य नित्यतया व्यक्तत्वादिति भाति। वरदराजपञ्चाशति चैतदनन्तरमेव, "विश्वातिशायिसुखरूप यदात्मकस्त्वं व्यक्तिं करीश कथयन्ति तदात्मिकां ते" इत्यादिना परादिविग्रहाणां प्रस्तावादपि शान्तोदितपदमात्मस्वरूपपरमिति वक्तव्यम्। एवंस्थिते **अत्र न्यायसिद्धाञ्जने परस्मिन्ने**वेत्यनेन पररूपविवक्षा संदर्भवशात् प्रतीता कथमिति विचारे, **आचार्यपाद**रहस्येषु **तत्त्वत्रयचुलके** स्थितं वाक्यमनुसंधेयं भवति। तत्र, 'नित्यसिद्धे तदाकारे' इत्यादिना परवासुदेवरूपमेव प्रस्तुत्य, दिव्यमङ्गलविग्रह एव "शान्तोदितादिविभागो द्रष्टव्यः" इत्युक्तम्। नित्यं व्यूहादिविलक्षणस्थैर्यवत् उदितं नित्योदितम्। एवं चकासतमिति **स्तोत्ररत्न**श्लोकभाष्येऽपि। तथा च परमात्मा आनन्दमयस्वरूपानुभवपरतयाऽन्यत्रोदासीन्यं यद्रूपसंनिवेशेन दर्शयति, तत् वासुदेवरूपं शान्तोदितम्, शान्तं स्वानुभवातिरिक्तव्यापाररहितम् उदितं विग्रहविशिष्टमिति। नित्यमुक्तानुभवपरतां विहाय विभूत्यनुभवपरतामपि प्रदर्शयत् रूपान्तरमपि परम्। लीलाविभूतिजगद्व्यापाराद्यनुभवप्रदर्शि व्यूहवासुदेवरूपम्। तत्र सहाराद्यैकैकव्यापृति संकर्षणादिरूपमिति सर्वमिदं विग्रहघटनेनैव कार्यमिति सर्वसामञ्जस्यमिति विमृश्यते।

**शान्तोदितनित्योदितशब्दार्थवर्णने व्युत्क्रमोऽपि लक्ष्यते। अत एव सुन्दरबाहुस्तवे नित्यदशम् इति प्रयोगः। यथा शमदमशब्दौ अव्यवस्थितार्थौ तद्वत् इति तत्र पूर्वैरुक्तमस्ति। यथैवं श्रीरङ्गराजेऽपि उभयथा प्रयोगः तद्वत् परव्यूहभेदभिन्नवासुदेवद्वयपरतया वचनोदाहरणमपि न सहसोपेक्ष्यमिति वक्तव्यं भवति। मुमुक्षुप्पडिग्रन्थे तिरुमेनियुम् इति दिव्यमङ्गलविग्रहप्रस्तावे तात्पर्यदीपिकायां लक्ष्मीतन्त्रमादाय, "आस्ते नारायणः श्रीमान् वासुदेवस्सनातनः। अकुमारो युवा देवः श्रीवत्सकृतलक्षणः॥ चतुर्भुजो विशालाक्षः" इति चतुर्भुजमुपन्यस्य पाद्मसंहितावचनं प्रदर्श्य, "द्विहस्तमेकवक्त्रं च शुद्धस्फटिकसन्निभम्। स वासुदेवो विज्ञेयः स एव पुरुषः परः॥...वासुदेवात् ततो जातः वासुदेवाह्वयोऽपरः। एकवक्त्रः चतुर्हस्तः......मयूरकण्ठवत् श्यामः......आत्मानं स द्विधा चक्रे पुनः केनापि हेतुना। तयोरेको वासुदेवः शुद्धस्फटिकसन्निभः॥ नारायणो द्वितीयस्तु नीलाम्बुदसमप्रभः। सङ्कर्षणो वासुदेवात् तस्मात्" इति दर्शनात् वासुदेवद्वयमस्तीति ज्ञायत इत्युक्तम्। आद्यस्वरूपस्य द्विभुजवोक्तिवत् एतदुक्तिरपि विलक्षणा॥ एतन्न्यायसिद्धाञ्जनप्रथमव्याख्यायामपि "आत्मानं स द्विधा चक्रे" इत्यादिकमुपादाय परवासुदेवात् व्यूहवासुदेवोत्पत्तिपरत्वं दर्शितम्। द्विभुजचतुर्भुजो वासुदेवौ शान्तोदितनित्योदितौ स्याताम्।**

"स्थित्यै चक्रं सरसिजं दधानः सृष्टये पुनः । मुक्तये पाञ्चजन्यं च गदां संहृतये तथा ॥ स वासुदेवो भगवान् सृष्टिस्थित्यन्तमुक्तिदः ॥" इति दर्शनात् चतुर्विधस्य प्रतिमतश्चतुर्भुजत्वं स्वानन्दानुभवमात्रनिमग्नस्य तु तावदनपेक्षणात् औत्सर्गिकं द्विभुजत्वमित्यभिप्रायः स्यात् । बद्धानां मुक्त्यर्थिनां चतुर्भुजेऽभिनिवेशं द्विभुजेऽपि रेखारूपेणान्यद्वयनिवेशं च विमृश्य प्रायेण चतुर्भुजरूपस्यैव वर्णनमित्यलम् ।

432 पु. प्रज्ञापरित्राणाख्ये पूर्वाचार्यप्रबन्धे प्रज्ञातत्त्वमेव बह्वन्यथाकृतमिति बुद्धिपरिच्छेदान्ते व्यक्तम् । "प्रज्ञा च तस्मात् प्रसृता पुराणी", 'स चानन्त्याय कल्पते" इत्यादौ भाष्यकारसूक्तिदर्शिनां ज्ञानस्य द्रव्यत्वं सुस्पष्टम् । ज्ञानमात्मैवेति वादिनः तस्य द्रव्यत्वे निर्विवादाः । धर्मभूतं ज्ञानमित्यस्मत्पक्षेऽपि प्रभारूपस्य धर्मभूतस्य तेजस इव द्रव्यत्वं निर्बाधम् । दध्यादेरपि गुणत्वं मीमांसका व्यवहरन्ति । अतो गुणत्वं न द्रव्यत्वविरोधि । तार्किकेष्टं गुणत्वं तु तदेकपरिभाषितम् । किं बहुना; अनुभवश्च द्रव्यतां साधयति—यथा हि मृदादौ अवस्थाभेदान् आदायैवोपादानोपादेयभावः, तथा ज्ञाने तदातदा प्रत्यक्षत्वा-नुमितित्वस्मृतित्वसुखत्वेच्छात्वाद्यवस्था आदाय स इति कथने प्रसिद्धोपादानोपादेयभावसंपत्तिः ; नानागुणकल्पनाभावश्च । अत एव बादरायणोऽपि आत्मन उत्पत्तिं प्रतिषिध्य, तर्हि जीवानां कार्यत्व-निर्वाहः कथमित्याक्षेपक्षेपाय, "ज्ञोऽत एव" इति ज्ञस्वाभाव्यमसूत्रयत् । 'पुंस्त्वादिवत्त्वस्य सतोऽभि-व्यक्तियोगात्' इति च तत्र सूत्रम् । अतः आत्मगतानां सविषयकधर्माणां ज्ञानसुखदुःखेच्छाद्वेषप्रयत्न-संस्काराणामेकज्ञानद्रव्यपरिणामता । श्रुतौ तदैच्छदिति प्रयोक्तव्ये, तदैक्षतेति प्रयोगोऽपीच्छाज्ञानयो-रेकवस्तुतां गमयति । 'तन्मनोऽकुरुत स्यामिति' इति प्रयोगात् मनस्कारः मानसव्यापारः सविषयकः कामसंकल्पविचिकित्सादिरूपः सर्व एकद्रव्यपरिणाम इति ज्ञायते । मनस इमे विकारा इति सांख्यादयः । वयं तु मनसश्चक्षुरादिवत् करणत्वात् ज्ञानेच्छाकृतिमतस्ततो भिन्नत्वादात्मधर्मत्वमेवेच्छन्तो मनोव्यापाराणां तत्र कारणत्वं संसारिविषये ब्रूमः, चाक्षुषादौ चक्षुर्व्यापारादेरिव । नन्वात्मन एव ज्ञानस्वरूपत्वात् तदवस्थारूपत्वमेवेष्यतामेषां विकाराणाम् ; विकारित्वेऽप्यात्मनां नित्यत्वं प्रकृतिकाल्योरिवास्त्विति चेत्— श्रुतितस्तथा प्रतिपत्तौ सत्यां न तदस्वीकारः । श्रुतिस्तु, 'न द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते । अविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्मा, इत्यादिः धर्मिधर्मोभयसद्भावनित्यत्ववादिनी प्रत्यक्षसिद्धधर्मधर्मि-भावानुकूला, 'आत्मनि चैवम्' इति नत्रयवत्त्व निर्विकारत्वश्रौतसूत्रोपष्टब्धाऽस्मत्पक्षस्यैव साधिका । अतो रूपा-दिगुणतदाश्रयद्रव्यभेदानुभवेन बौद्धेष्टतदैक्यस्येव ज्ञानज्ञात्रैक्यस्यापि प्रतिषेधः । सूत्रञ्च स्पष्टम्, "तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्" इति । यथा हि—'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यत्र ज्ञानशब्दः स्वरवलात्, 'ब्रह्मणा विपश्चिता' इत्युत्तरवाक्याच्च प्राज्ञपरः धर्मधर्मिभेदस्थापकः, तथा जीवविषयको ज्ञानशब्दोऽपीति ज्ञानगुणकत्वमेव सूत्रकारो मुख्यं मन्यते, स्वयम्प्रकाशतां तु 'यावदात्मभावित्वाच्च' इति चकारेण व्यञ्जयति; न तु स्पष्टमाह । अत एव ज्ञानमित्यप्रयुज्य ज्ञो एवेति प्रयोग इत्यवधेयम् । शांकरे ज्ञशब्दव्याख्यानकुसृतिस्तु तन्मनसाऽपि न संवादं लभेतेत्यलम् ।

41 पृ. असख्यातीत्यादि । न्यायपरिशुद्धिसंगृहीतार्थविस्तरमत्वादस्य ग्रन्थस्य तत्र विस्तृतत्वाद-व्याख्यानुक्तिः । तत्त्वमुक्ताकलापादौ च ख्यातिवादो द्रष्टव्यः । आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यानि-रन्यथा । अनिर्वाच्यख्यातिरेवं प्रसिद्धं ख्यातिपञ्चकम् ॥ भ्रमप्रमारूपज्ञानद्वैधे सुप्रसिद्धे भ्रमस्वरूपशोधने इमे ख्यातिवादाः प्रवृत्ताः । अत्राऽऽत्मख्याति—अनिर्वचनीयख्यातिवादिनोः योगाचारशांकराद्वैतिनोः प्रपञ्चज्ञानसामान्यं भ्रमः ; तद्रीतौ विज्ञानरूपे आत्मनि जगतः कल्पितत्वात् । अस्तु तावदिदम्, तथापि तत् भ्रान्तिरूपज्ञानम् अख्यातिपक्ष इव ज्ञानद्वयात्मकं वा तार्किकमत इवान्यथाख्यात्यात्मकैकज्ञानं वेति विमर्शे योगाचारो नावतरति । तथापि अयं घट इत्यादिज्ञाने अयमेव विज्ञानांशः स्वयं प्रकाशते तदेव घटग्रहणात्मकमित्येकज्ञानमिति वदेत् । शांकरास्तु अनिर्वाच्यस्य रजतादेः शुक्त्यादौ दोषकल्पितस्य चक्षुषा प्रत्यक्षमेवेति एकज्ञाने शुक्तिरजतयोर्विषयत्वमेवेति वदन्तोऽपि, घटोऽस्ति पटोऽस्तीत्यादि-जगद्भ्रमेषु सदंशस्य स्वयंप्रकाशतां तेन घटादिग्रहणञ्च योगाचारवदेव ब्रूयुः । वेदान्तपरिभाषोक्तरीत्या चाक्षुषस्थले अनिर्वाच्यवस्तूत्पत्तिकल्पनेऽपि परोक्षे तदकल्पनात् ह्रदोऽग्निमानित्यनुमित्यादौ अन्यथाख्यातिरेव तद्दृष्टा ॥ असत्ख्यातिवादी शुक्तौ इदं रजतमिति ज्ञाने वस्तुतः शशविषाणवत् असदपि रजतं विषय इति ब्रूयादिति तस्याप्येकमेव स्यात् ज्ञानम् । अख्यातिपक्षस्तु सांख्येष्टः । यथा शाखायां चन्द्रः इति शाखाचन्द्रयोरसंब-न्धाग्रहणम्, तथा शुक्तिरजतत्वयोरसंबन्धाग्रहणमिति । परं शाखाचन्द्रौ प्रत्यक्षौ । अत्र शुक्तिद्रव्यं-प्रत्यक्षम्, रजतत्वमसंनिकृष्टत्वात् स्मर्यमाणमिति ग्रहणस्मरणात्मकज्ञानद्वयम् । रजतत्वासंबन्धस्य च स्थितस्या-ख्यातिः अग्रह इति एतावता सर्वसंमतेनैव व्यवहारनिर्वाहे विशिष्टज्ञानं न कल्पनीयमिति लाघवं सांख्येन प्रदर्श्यते । तार्किकस्तु शुक्तिरजतज्ञानमेकमित्यनुभवात् स्वारस्यमनुसृत्यान्यथाख्यातिमाह । विशिष्टाद्वैतिनस्तु भ्रान्तिस्थले क्वचित् यथार्थख्यातिरेवैकज्ञानरूपा विलक्षणा ; वक्तुं शक्यत्वात् अनुभवसिद्धस्यापलापायोगाच्च । अन्यत्र तादृशयथार्थख्यातेर्दुर्वचत्वेऽपि तादृशभ्रान्तिरपि ज्ञानद्वयरूपतया, 'यथार्थं सर्वविज्ञानम्' इति प्राभाकरोक्तरीत्या यथार्था । ज्ञानमेकमिति व्यवहारस्तु तज्ज्ञानीयशुक्तिरजतविषयतयो-र्मिथो निरूप्यनिरूपकभावसत्त्वात् । शुक्तिनिष्ठविशेष्यतानिरूपिता रजतनिष्ठप्रकारतेत्येवम् ॥ क्वचित् भ्रान्तेर्यथार्थत्वमानुभविकमित्युक्तम् ; तत् कुत्रेति चेत्—लोके सदृशवस्तुदर्शने कदाचित् तत्सदृशमिति ज्ञाने जननीये तदेवेदमिति भ्रान्तिर्जायते । तत् कस्मात् ? व्रीहिसदृशे नीवारादौ व्रीह्यंशानां तद्विलक्ष-णांशानाञ्च सत्त्वात् तत्र विलक्षणांशाग्रहणेन व्रीह्यंशमात्रग्रहणे सति व्रीहिबुद्धिजनिते तदंशज्ञानविषयस्य व्रीहिभागस्य वस्तुतो वर्तमानत्वात् यथार्थत्वमेव । पश्चात्, नायं व्रीहिरिति धीः कथमिति चेत्—व्रीहिव्यव-हारप्रयोजकं यत् इतरापेक्षया व्रीह्यंशाधिक्यं तन्नास्तीति एवं चैत्रभ्रान्तौ चैत्रोऽयमित्यादिप्रतीति-रप्यनवधानकालभाविनी उपपाद्या । तद्वत् शुक्तिरजतस्थलेऽपि रजतांशमात्रस्य शुक्तिगतस्य ग्रहणे तद्बुद्धिः । परंतु तस्य रजतस्वल्पांशस्यांगुलीयकादिकार्यकरत्वाभावात् पश्चात् नेदं रजतमिति रजतबाधः । शुक्तौ रजतमिति व्यवहाराभावस्तदंशस्य तत्र न्यूनत्वात् पञ्चीकृतजलादौ पृथिव्यादिव्यवहाराभाववत् ।

एवं प्रत्यक्षरूपद्रव्यभ्रान्तिषु यथासंभवं यथार्थज्ञानमुपपाद्यम्। अनुमितिकत्वादनपलप्यत्वं। अन्यत् भ्रान्तिज्ञानं सर्वज्ञानयाथार्थ्यरक्षणाय लाघवाच्चाख्यातिरूपमेवास्तु इति नवीनेयं सरणिः सन्नाथमुनिमिश्राणाम्। तदभिमते अख्यातेः अविकलितयथार्थख्यातेः अपि भ्रान्तित्वमुच्यत इत्यन्यत्र विस्तरः ॥

अवान्तरे तत्र तत्र किञ्चिद् वक्तव्यं टिप्पणे कथितम्। शेषभागप्रकाशनाद्यधुना प्रस्तूयते, तथा सति भूमिकापि पृथक्प्रबन्धः स्यादिति ॥

गम्भीरं कुसुमाञ्जलिं हृदयतोग्रन्थं पुरा विस्तृत-
च्छायाव्याकृतिमारचय्य विशदाशेषार्थभावं व्यधाम्।
तादृग्विस्तरवर्णनीयविभवे श्रीन्यायसिद्धाञ्जने
कर्तुं तत्त्वमवाप्य कालमियदेवाद्य प्रकाशं नये ॥

इत्युभयव्याख्यातग्रन्थप्रतिप्रकटनेऽत्र शिष्टाऽस्ति।
देशिकसंस्कृतवाङ्मयमध्ये श्रीन्यायपरिशुद्धिः ॥

शुभमस्तु

12-3-76 संपादकः उत्तमूर्. ति. वीरराघवाचार्यः

श्रीः

## व्याख्याद्वयसमेतन्यायसिद्धाञ्जनविषयसूची

श्रीः

# श्रीन्यायसिद्धाञ्जने श्रीमन्निगमान्तदेशिकानुगृहीतकारिकाः

**अहंकारघट्टे** (जड). **यत्तूक्त**मित्यादिना भोजराजकारिकास्तिस्र उपात्ताः। तत्र **संभेदा**दित्यस्य परस्परभेदादित्यर्थं विहाय मेलनादिति प्रसिद्धार्थग्रहणमेव युक्तमिति प्रागेव टिप्पणेऽस्मदुक्तम्। तद्वैशद्याय तत्कारिकार्थः तद्ग्रन्थव्याख्यातृदर्शित एवेह संगृह्यते। भोजराजकृततत्त्वप्रकाशाख्यो ग्रन्थः। तत्रेमाः क्रमात् 53, 54, 55 संख्याकाः। एतदर्थश्च, अहमित्येवंरूपव्यापारवत् अहंकाराख्यं तत्त्वम्। तत् त्रेधा जीवनाहंकारः संरम्भाहंकारः गर्वाहंकारश्चेति। अहं जीवामीति आद्यः। अहं करोमीति द्वितीयः। अहं रूपवान् बलवानित्येवं तृतीयः। एवम्भूतस्याहंकारस्य **संभेदात्** संबन्धात् शब्दादिविषयो व्यवहार्यो भवति। अहं पश्यामि शृणोमि वदामि चरामीत्येवं विषयव्यवहारस्याऽऽत्मना निर्विकारेण संबन्धो नूनमेतदहंकारसंबन्धारोपित इत्यर्थः। अत्र जीवनपदेन प्राणनहेतुतया तार्किकसंमतजीवनयोनियत्नतुल्यः सरम्भो गृह्यते; अन्यः सर्वः प्रयत्नः **संरम्भ**पदेनेति विवेचनीयम्। ईदृशप्रयत्नसद्भावः प्रयत्नानां गर्वस्य च बुद्धिविशेषस्याहंकारनिष्ठत्वं च नास्मदिष्टम्। त्रैविध्यान्तरमाह **सात्त्विक** इति। **भेदात् संजायते** इत्यशुद्धः पाठः। **भेदेन स जायते** इत्येव पाठः। **स**मित्यस्य वैयर्थ्यात्, स इत्यस्यापेक्षितत्वाच्चैवम्। **वैकारिकतैजसभूतादिके**ति **तात्पर्यदीपि**काख्यव्याख्यासंमतः पाठः। वैकारिकपदेन सात्त्विकस्य तैजसपदेन राजसस्य च ग्रहणं श्रीविष्णुपुराणे प्रसिद्धम्। तत्र **विष्णुचित्तीये** व्याख्याने "कामं देवाश्च मुनयः सत्त्वस्था नृपसत्तम। हीनाः सूक्ष्मेण सत्त्वेन ततो वैकारिकाः स्मृताः" इति **मोक्षधर्म**वचनमुपादाय मिश्रसत्त्वस्य शुद्धसत्त्वाख्यपरमसत्त्वरूपाप्राकृतसत्त्ववैलक्षण्यज्ञापनाय वैकारिकपदेन व्यवहार इति व्युत्पादितम्। एतदनुरोधे, एतदनन्तरकारिकायां तैजसस्य पूर्वं निर्देशः छन्दोबन्धानुकूल्यायेति ध्येयम्। अत्रैव व्याख्याने, **तैजसवैकारिकभूतादि**केति पाठान्तरमादृत्य तैजसनाम सात्त्विकस्य, वैकारिकनाम राजसस्य च केचिदिच्छन्तीत्युक्तम्। **वृत्ति**नाम्नि व्याख्यानेऽयमाचार्यदर्शितः पाठ आदृतः। तैजसपदेन सात्त्विक एव गृहीतः। एवं नाम्नि विवादे तृतीयाकारिकोक्तप्रमेयेऽपि भेद आपतति। अत्र तत्र च तैजस एवाऽऽद्य इति सात्त्विकात् तैजसात् स्वच्छं मनः; वैकारिकात् राजसात् अक्षाणि; तत्र सात्त्विकाहंकारसहकृतात् राजसात् बुद्धीन्द्रियाणि, तामससहकृतात् राजसात् कर्मेन्द्रियाणीति व्याख्यादर्शितो विभागः। एवञ्च वैकारिकपदेन राजसग्रहणे ज्ञानकर्मेन्द्रियाणां दशानामपि राजसजन्यत्वं शैवेष्टम्। सात्त्विकग्रहणे तु सात्त्विकजन्यत्वमेव दशानाम्; मनस एव तु राजसजन्यत्वम्। कर्मेन्द्रियमात्रं राजसजन्यमिति शैवपक्ष इति तत्रतत्रोक्तम् इतो न सिध्यति। सात्त्विकाहंकारादेवैकादशापीन्द्रियाणीति अस्मत्पक्षाद् भेदस्तु सर्वथाऽस्त्येव। भूतादेः तामसाहंकारात् पञ्चापि तन्मात्राणीत्येतन्मतम्; न तु शब्दतन्मात्रमात्रमित्यस्मन्मतमेतदिष्टम्। **एषां सर्गोऽयमेतस्मा**दिति वाक्यं किमर्थमिति चेत्—इन्द्रियाणामहंकारत एव सर्गः, न भूतेभ्य इति तार्किकनिरासाय। नन्वयं शैवग्रन्थ इति आचार्याः जानन्त्येव; अत्रैव सरे उपरि शैवनिरासे एतद्ग्रन्थकारिकाणामनेकासामनुवादेन तन्निरूपणात्, अथ च खण्डनात्। एवं **परमतभंगे**ऽपि। अशैवग्रन्थत्वे तु अस्मदादरणीयताभ्रान्तिनिरासाय शैवागम-

मूलकत्वादश्रद्धेयमिति वक्तव्यम् । अत इदं सर्वमुपरि शैवनिरासावसरे प्राप्तावकाशम् ; न त्विहेति चेत्—शैवानुसार्येव भोजराजः शैवासंमतमप्यत्रैवमाह । तस्मात् शैवोपेक्ष्यमिदमस्मदीयसंमतमिति न मन्तव्यम् शैवावान्तरभेदेनापि तदुपपत्तिरिति ज्ञापनायात्रोक्तिः । **बाह्यशैवागममूलत्वेने**त्यस्य अन्तरंगशैवादन्यः बाह्यशैवपक्षः, आभासशैवपक्षोऽयमित्यर्थो वा । इहोपात्तकारिकार्थविषये व्याख्यातारो विवदन्त इति ज्ञापनमपि चिकीर्षितम् । एवं ह्यत्र वृत्तिः, "**तैजसात्** सात्त्विकात् मनः बुद्धीन्द्रियाणि च ; **वैकारिकात्** राजसात् कर्मेन्द्रियाण्येव । अन्यथा व्याख्यानं मूलवचनविरोधादुपेक्ष्यम् । उक्तञ्च **श्रीमन्मृगेन्द्रे** श्रोत्रं त्वक् चक्षुषी जिह्वा नासा च मनसा सह । प्रकाशान्वयतः सत्त्वात् तैजसश्च स सात्त्विकः । अन्यो गणः कर्मान्वयात् रजोभूयान् वैकारिकः" इति । एतन्निष्कर्षेण कर्मेन्द्रियाणां राजसाहंकारजन्यत्वं शैवेष्टमिति आचार्योक्तमिति च ध्येयम् ॥ अथात्रैव पाठभेदार्थवैशद्यार्थं तन्मतनिरासभागोऽपि व्याख्यायते—

**शैवागमे**ष्विति । **अर्थतत्त्वप्रकाशेऽयं** पञ्चमः (5) श्लोकः । शैवागमाः अष्टाविंशतिः संहिताः मूलभेदतया ख्याताः ; "कामिकं योगजं चिन्त्यं कारणं त्वजितं परम् । दीप्तं सूक्ष्मं सहस्रञ्च अंशुमान् सुप्रभेदकम् । विजयं चैव निश्वासं स्वायम्भुवमतःपरम् । वीरं च रौरवञ्चैव मकुटं विमलं(विद्रुमं) तथा । चन्द्रज्ञानञ्च बिम्बञ्च प्रोद्गीतं ललितं तथा । सिद्धं संतानसर्वोक्तं पारमेश्वरमेव च । किरणं वातुलञ्चैव त्वष्टाविंशतिसंहिताः । मूलभेदमिति ख्यातमसंख्यमुपभेदकम्" इत्युक्तेः । **पतिपशुपाशा** इति । 'पतिपाशपशुज्ञानविचारप्रतिपादकम् । किरणाख्यं महत् तन्त्रम्' इति **किरणे** । 'अजडं च जडश्चैव नियन्तृ च तयोरपि । पशुः पाशः पतिश्चेति कथ्यते त्रितयं क्रमात्' इति **श्रीवायवीये** । पशूनां पालनात् **पति**शब्देन शिव उक्तः । **पशवः** ब्रह्माद्याः स्थावरान्ताः । शिवस्वभावा अपि **अणवः** अणुत्वसंपादकमलादिसंबन्धिनः अनादिमलसंबन्धात् कर्मपाशसंबन्धः ; तस्मान्मायापाशसंबन्धः । अत एव पाशबद्धत्वात् पशुत्वम् । तेन किञ्चित्कर्तृत्वादिनाऽणुत्वम् ; न तु परमाणुवदवस्थानात् । अर्थपञ्चकं **मल**मित्यादिनोक्तम् । **तिरोधानकरी**त्येतत् मायापाशानुग्राहकशिवशक्तिरिति विवृतम् । मायाया एव सूक्ष्मस्थूलभेदेन द्वैविध्यात् शक्तेश्च शिवान्तर्भावात् मलकर्ममायात्रयं पाश इति ग्रन्थान्तरोक्तम् । **अत्र** च अन्यथा । सृष्टावन्येषामपि सद्भावेऽपि **सृष्टौ** प्रलये च नियतस्थितानि त्रीण्येवेत्याह **माये**ति (69) श्लोकेन । तत्त्वसंग्रह इति पदेन त्रेधा विभागो दर्शितः । तन्मते एकतत्त्वमारभ्य षट्त्रिंशदन्ता तत्त्वगणना मन्यते । सर्वं शिवेऽन्तर्भाव्य एकं तत्त्वमिति, प्रकृतिपुरुषयोः सर्वान्तर्भावः, उपहितानुपहितभेदेन शिवस्यैव द्वेधा पुरुषत्वादिति, पृथक्करणे च तत्त्वत्रयमिति एवं यथेच्छमन्तर्भावपृथग्भावचिन्तनया नानाप्रकारा गणना ; अन्ततस्तु षट्त्रिंशदिति स्थितिः । तानि षट्त्रिंशत् दर्शयति **शुद्धानी**ति (21,22,23) श्लोकत्रयेण । शिवतत्त्व-शक्तितत्त्व-सदाशिवतत्त्व-ईश्वरतत्त्व-विद्यातत्त्वानि शुद्धानि शिवप्रभेदरूपाणि । शुद्धाशुद्धानि पञ्चाऽऽह **पुंस** इति । पञ्चककारणं मायां पञ्चकोपहितं पुरुषञ्च संकलय्य सप्तकमिति कैश्चिद् गण्यते । तदा माया पुरुष इति द्वयं न पृथग्गणनीयम् । पुरुषपदार्थश्चैवमुक्तः, "तत्त्वैरेभिः

कलितो भोक्तृत्वदशां यदा पशुर्नीतः। पुरुषाख्यतां तदाऽयं लभते तत्त्वेषु गणनाञ्च" (49) इति। अत्र **अज्ञकर्तृतार्थ**मिति विभज्य जीवस्याज्ञानस्य कर्तृत्वस्य च संपादकं पञ्चकमिति **वृत्ति**रूपव्याख्याने। **ज्ञकर्तृतार्थ**मित्येव विभज्य ज्ञानक्रियाशक्त्युद्भवायेति व्याख्यान्तरम्। द्वादश तत्त्वानि स्थितानि; अवशिष्टान्याह **अव्यक्त**मिति।

अत्र **तन्मात्राणीति तत्त्वानी**त्यत्र **तन्मात्राण्यनु च पञ्च भूतानी**ति शुद्धः पाठः। अव्यक्तापेक्षया तज्जन्यं गुणतत्त्वं पृथगिति तत्र व्याख्या। तदा पञ्चविंशतिस्तत्त्वानीमानि भवन्ति। पूर्वं द्वादशीकृत्या सप्तत्रिंशत् तत्त्वानि भवेयुः। अतः अस्मदीयस्वामिव्याख्याने त्रिगुणात्मकमव्यक्तमित्येकीकृतम्। "अनभिव्यक्तगुणत्वादव्यपदेश्यं तदव्यक्तम्॥ अव्यक्तात् गुणतत्त्वं प्रख्या— ०॥परिनियमरूपमिह" (50,51.) इति तत्राप्युक्तम्। **परमतभंगे** च स्पष्टमिदम्। तथाऽपि 24 श्लोके 'यस्मात् प्रकृतिगुणानां नात्यन्तं वस्तुतो भेदः' इत्युक्त्या, तत्र व्याख्याने "**अव्यक्तगुणतत्त्वयोरत्यन्त**भेदाभावात् न तत्त्वाधिक्यम्" इति शैवरहस्यमनुसृत्योक्त्या चास्मत्स्वामिव्याख्यानं श्रेयः।

एवं गणितेषु षट्त्रिंशति तत्त्वेषु अशुद्धानां चतुर्विंशतेस्तत्त्वानां विषये न विवाद इति तदुपेक्षया शुद्धतत्त्वानि शुद्धाशुद्धतत्त्वानि च दूषयन् षट्त्रिंशत्त्वं निरसितुमारभते **तत्रे**त्यादिना। **न विवाद** इति। 'भोक्ता भोग्यं प्रेरितारञ्च' इत्यादिश्रुतेरिति भावः। **पञ्चानामि**ति। **शक्तितत्वादीनां** क्रमेणोत्पत्तिर्वक्तुं न शक्यते, सार्वदिकत्वेन कालव्यवस्थाराहित्यात्। तत्तच्छक्तिव्यापारयोः पौर्वापर्यात्तु क्रम इत्यर्थः। एवञ्चैकस्यैव तत्तद्व्यापारभेदेन नामभेद इति किं पञ्चतया गणनेनेति भावः। इदं विशदयितुमनन्तरश्लोकमुदाहरति (38) **तत्त्वमि**ति। पूर्वः श्लोकः प्रक्षिप्त इति **वृत्ति**व्याख्या। तथापि तत्राप्युत्तरश्लोकस्य स्वीकृतत्वादस्मदिष्टसिद्धिरित्याशयेन द्वितीयश्लोकस्याप्युद्धारः। न चास्मन्मते संकर्षणप्रद्युम्नादिभेदवत् तन्मते शिवतत्त्वभेद इति वाच्यम्, व्यूहात्मकविग्रहभेदादवतारभेद इति वयम्। तत्र **शक्तिव्यापृतिभेद**स्यैवोक्ततया न व्यक्तिभेद इति।

अत्र श्लोके **चित्रशक्तिशतखचितम्** इत्येव तद्ग्रन्थे पाठः। तथैव **परमतभंगे**ऽप्यनुवादः। **कल्पिता भेदा** इत्यत्र **कल्पनाभेदा** इति पाठः। एवं पञ्चकं निरस्तम्। विस्तरोऽस्य **परमतभंगे**॥

अथ द्वितीयश्लोकोक्तपञ्चकं दूषयन् व्युत्क्रमेण तदारभते **राग** इति। "**रागोभिष्वंगात्मा** विषयच्छेदं विनैव सामान्यः। पुरुषप्रवृत्तिहेतुर्विलक्षणो बुद्धिधर्मेभ्यः" इति (48) श्लोकः। विषयप्रदर्शनद्वारा प्रवृत्तिहेतुः बुद्धिधर्मो रागोऽन्यः। अयं तु वीतरागाणां प्रवृत्तिहेतुरिति तदर्थमाहुः। ज्ञानस्येव रागस्यापि निर्विषयकत्वमयुक्तम्। 'आचार्यान्वेषणे रागः शिवमुद्दिश्य सादरम्' इत्येतावता हेयविषयकत्वाभाव एव सिध्येत्; न निर्विषयकत्वम्। सर्वस्यापि रागस्य धर्मभूतज्ञानविकारस्य पुंधर्मत्वमेव, न बुद्धिधर्मत्वम्। यदि **अभिष्वंगात्मा** इत्यस्य अभिलाषात्मककार्यहेतुरित्यर्थ इति सविषयकसर्वविधरागहेतुः अत एव सामान्यभूतः स्वयं विषयानालीढः प्राकृततत्त्वविशेष एव राग इत्युच्यते,

तर्हि इदमेव ग्रन्थकाराभिमतं स्यात्, रागस्य तत्त्वेष्वन्यतमतया परिगणनात्। एवञ्च लौकिकसर्वविषयकप्रवृत्तिहेतुभूतेच्छाहेतुभूतं तत्त्वमित्युक्तं भवति। इदमप्ययुक्तमित्याशय्य विशदं दूषयति **नप्राकृते**त्यादिना। **परमतभंगे** वीतरागप्रवृत्तिहेतुः राग इति तत्पक्षं विहाय सांसारिकप्रवृत्तिहेतुत्वमेव रागस्य यदुक्तम्, तदप्येवं द्वितीयरीत्या व्याख्यानाभिप्रायेणेति ध्येयम्। चतुर्थतत्त्वं विद्यां दूषयति विद्याऽपीति। इयं विद्या शुद्धाशुद्धा। शिवतत्त्वरूपा तु विद्या शुद्धा। एतदावश्यकत्वं तदुपपादितमनुवदति **उद्बुद्धे**ति। अत्रान्तिमपादे, 'रूपञ्च करणवैशिष्ट्यात्' इति पाठोऽशुद्धः। 'रूपं **कलैवैषा**' इत्येव तद्ग्रन्थे दर्शनात्। अस्मत्स्वामिव्याख्याऽपि तमेव पाठं दर्शयति, "एषैव कला कर्तृशक्तिमुद्बोध्य" इति हि सूक्तिः। श्लोके कलाशब्दाभावात् कथम् एषैव कलेति व्याख्यानमित्याशय्यास्माभिरन्वेषणे कृते वास्तवपाठ उपलब्ध आसीत्। तत्र व्याख्या**याम्** (45), कलयाऽभिव्यक्तशक्तेः पुरुषस्य विषयानुभवार्थं कला विद्यातत्त्वं जनयति। तस्याः प्रकाशरूपत्वेन विषयप्रदर्शनहेतुत्वसंभवः" इति। **कलैवेषे**ति **एव**कारेण मायात एव विद्येति पक्षान्तरव्युदासः। आवश्यकत्वं नेत्याह **तत्रापी**ति। ननु तैरेव, बुद्धिरेव विषयग्रहणे करणं स्यात्; किमन्येनेत्याशंक्योपर्युक्तम् (47) "बुद्धिर्यदाऽस्य भोग्या सुखादिरूपा तदा भवेत् करणम्। विद्यैवम्; करणं स्यात् विषयग्रहणे पुनर्बुद्धिः" इति। न सर्वत्र विद्यापेक्षा, बुद्धिः सत्त्वरजस्तमोगुणात्मिका सुखदुःखमोहरूपेण परिणता यदा भोग्या भवति, तदा भोग्यभूतबुद्ध्यतिरिक्ता विद्या तद्ग्रहणे करणमित्यर्थः इति चेत्— अनेनैव वाक्येन तन्निरासोऽपि भाव्यः। विषया एव हि सत्त्वरजस्तमोमयाः सुखदुःखमोहात्मकाः। अतो विषयग्रहणनिमित्तमेव सुखादिग्रहणनिमित्तमिति किमन्येन तत्त्वेन। न च बुद्धेरध्यवसायरूपत्वात् सुखादिरूपविषयग्रहणरूपाध्यवसायस्यापि सुखादिरूपतया तद्ग्रहणं विद्ययेति वाच्यम्; विद्याया इव ग्रहणस्यापि ज्ञानतया स्वयंप्रकाशत्वात् तदर्थं तत्त्वान्तरानपेक्षणात्। सर्वं हि ज्ञानं स्वप्रकाशं विषयवत् स्वमपि प्रकाशयति। विद्याया अचेतनमायाकार्यत्वात् प्रकाशरूपत्वं सविवादम्। अयमर्थः **परमतभंगे** विद्यातत्त्वखण्डनार्थे गभीरे वाक्ये घटनीय इति तत्रैवेदं विशदयिष्यामः; तस्यापि व्याख्यायेदानीं प्रकाश्यमानत्वात्।

कालतत्त्वं व्युदसितुं व्युत्पादयति **मायात** इति। (48) अत्र एकतस्तिरस्कृत्येव **एकतस्तु कलत्वे**ति शुद्धः पाठः तद्ग्रन्थस्थः। **कला**शब्दव्युत्पादनञ्च **कलयित्वे**ति **पाठ** एव यथावत् सिध्यति। तदर्थस्तु—**तदनु**=कालनियतिरूपतत्त्वद्वयानन्तरं मायातः कला जायते। सा पशूनामाणवं मलं भोगप्रतिबन्धकम् **एकतः** एकप्रदेशे **कलयित्वा** क्षिप्त्वा अथवा संकुचय्य तेषां कर्तृशक्तिं व्यञ्जयतीति। कलाकार्यमन्यदप्याह **कालेने**ति (44) श्लोकेन। कालनियतिरूपस्वपूर्वकार्यसहिता सती कला **व्यापारं** कार्यजातं पृथिवीपर्यन्तं जनयतीति सर्वं कार्यं प्रति कालोऽपि कारणम्; नियतिरपि। तत एवेदं कार्यमिदानीमेवात्रैव भवतीति व्यवस्था। तदुभयसहकारेण सर्वकारणत्वं कलायाः। तत्र भोक्तृत्वरूपोपकारकत्वेनान्तरंगभूतेयमित्याहुः। इदं तत्त्वं निरस्यति **तत्रापी**ति। अव्यक्तं मायातो गुणतत्त्वमिति श्लोकेन

मायाया अव्यक्तादिभूतान्तसर्वाचेतनहेतुत्वमुक्तम् । अत्र मायाजन्यकलाया इदमुच्यते । तेन कला अव्यक्तपूर्वभाविनीति ज्ञायते । श्रुतौ, 'अव्यक्तमक्षरे लीयते' इति अक्षरावस्थं मध्ये गणितम् । कलायाः दृक्क्रियाशक्त्युद्बोधकत्वस्य भवदुक्ततया जीववाच्यक्षरशब्देन तदनुस्मरणात् श्रौतमक्षरमेव कलेति कथ्यत इति मत्या युक्त्यसाध्यमपि कलातत्त्वं न निषेधामः । परं तु अशुद्धतत्त्वग्रामे गणनीया स्यात्; नात्र । ननु पुंसि शक्त्याविर्भावकत्वादत्र गणनेति चेत्, कर्तृशक्तिहेतुत्वं तु नेच्छाम । मलनिवारणार्थं कलेति चेत् । अनादेर्मलस्य नयैवापाये सर्वदा बन्धभंगात् । जले शैवलस्येव मलस्यापसरणमात्रमनयेति चेत्—पुण्यादिकर्मणैव तद् भवेदिति ॥ नियतितत्त्वनिरासार्थमाह **नियतिरि**ति (12)। नियतित्वं व्यवस्थापकत्वम् । कालनियमवत् देशनियमोऽपि दृश्यते, तिलेषु तैलम् व्रीहिषु तण्डुला इत्येवम् । निरस्यति तत्रेति । नियमनं नाम नियामकम् । तत् क्लृप्तातिरिक्तं न भवतीति ॥ अनादिनिधनं कालतत्वमस्मदिष्टम् । पाशुपते तु मायाकार्यत्वं तस्योक्तम्, 'नानाविधशक्तिमयी सा जनयति कालतत्त्वमेवादौ । भाविभवद्भूतमयं कलयति जगदेष कालोऽतः' इति । तदसदित्यर्थः । **यत** इति । एकैककालांशात् प्रागपि क्षणादिरूपस्य कालांशस्य वर्तमानत्वात् इतः पूर्वं कालो नासीदिति दुर्वचम् । पूर्वमिति कालकथनात् व्याहतत्वादपि तत् दुर्वचमिति । कालं प्रति माया कारणमिति वाक्ये च किमिदं कारणत्वम् । पूर्वकालसत्त्वञ्चेत्, कथं कालाभावः इति । प्रकृतिकार्येषु सर्वत्र कालस्यायुर्व्यवस्थाकरत्वमित्येतत् सर्वेष्टमेव ॥

**मलं कर्म चेत्यनुष्टुप्श्लोकोऽत्रोदाहृतोऽन्यत्र स्थितः । एवं पाशविभागवत् पशुविभागोऽपि तन्मत एवम्—"पशवस्त्रिविधा ज्ञेयाः विज्ञानप्रलयकेवलौ सकलः । मलयुक्तस्तत्राद्यो मलकर्मयुतो द्वितीयः स्यात् ॥ 8 ॥ मलमायाकर्मयुतः सकलस्तेषु द्विधा भवेदाद्यः । आद्यः समाप्तकलुषोऽसमाप्तकलुषो द्वितीयः स्यात् ॥ 9 ॥**

**आद्यान् अनुगृह्य शिवो विधेशत्वे नियोजयत्यष्टौ । मन्त्रांश्च करोत्यपरान् ते चोक्ताः कोटयः सप्त ॥**

**प्रलयाकलेषु येषां पक्वे मलकर्मणी व्रजन्त्यन्ये । पुर्यष्टदेहयुताः योनिषु निखिलासु कर्मवशात् । स्यात् पुर्यष्टकमन्तःकरण धीकर्मकरणानि । कांश्चनुगृह्य वितरति भुवनपतित्वं महेश्वरस्तेषाम् ॥ 12 ॥ शेषा भवन्ति सकलाः कलादियोगादहर्मुखे काले । शतमष्टादश तेषां कुरुते स्वयमेव मन्त्रेशान् ॥ 13 ॥**

**तत्राष्टौ मण्डलिनः क्रोधाद्यास्तावसाश्च वीरेशः । श्रीकण्ठः शतरुद्राः शतमित्यष्टादशाभ्यधिकम् 14 बद्धान् शेषान् अपरान् विनियुंक्ते भोगभुक्तये पुंसः । तत्कर्मणामनुगमादित्येवं कीर्तिताः पशवः 15"**

**एतदर्थस्तु—अकलपशुः सकलपशुरिति पशुद्वैधे अकलपशोर्द्वैधा विभागे पशूनां त्रैविध्यम् । अकलपशुरित्यस्य कलातत्कार्यप्रयुक्तबन्धरहित इत्यर्थः । स द्विविधः—विज्ञानकेवलः प्रलयकेवलश्चेति । विज्ञानादिबलात् कर्मक्षये मलमात्रयुक्तः विज्ञानकेवलः । मलकर्मोभययुक्तः प्रलये कलाकार्यबन्धरहितः प्रलयकेवलः । विज्ञानाकलः प्रलयाकल इत्यप्येतौ निर्दिश्येते । सकलस्तु प्रलये मलकर्मोभयेन मायाकार्यकलादिना च युक्तः । उक्तेषु पशुषु आद्यो विज्ञानकेवलो द्विविधः—समाप्तकलुषः असमाप्तकलुश्चेति । मलशक्तिः कलुषम् । तत् समाप्तं नष्टं यस्य स समाप्तकलुषः । अन्यस्तु द्वितीयः । पक्वमलः अपक्वमलश्च त मलयुक्तद्वैविध्यम् । तत्र समाप्तकलुषाः अष्टविधाः विद्येश्वरा भवन्ति, न तेषां शिवसायुज्यम् । मलपाशसद्भावात् । नापि स्वर्गनरकादि, कर्मक्षयात् ।**

अलमात्मकलुषांस्तु मन्त्रदेवतारूपान् करोति । ते च महामन्त्राः सप्तकोटिसंख्याः । द्वितीये प्रलयकेवलविभागे केचित् पक्वमलकर्मका भवन्ति, तान् विहायान्येषां पुर्यष्टकदेहयुक्ततया नानायोनिषु जननम् । पुर्यष्टकं नाम पुरि=स्थूलशरीरे स्थितमष्टकम्—अन्तःकरणनामकं मनोबुद्ध्यहंकारत्रयं ज्ञानेन्द्रियपञ्चकञ्च । यद्वा शब्दादिविषयपञ्चकं ज्ञानेन्द्रियं कर्मेन्द्रियं मनश्चेत्यष्टकम् । अथवा पुरीणामष्टकम्—कर्मेन्द्रियपञ्चकं ज्ञानेन्द्रियपञ्चकं बुद्धिचित्ताहंकारमनश्चतुष्कं तन्मात्रपञ्चकं कामाः कर्माण्यविद्याश्चेति । पक्वमलादिकानां तु प्रलयकेवलानां मुक्तिर्वा अधिकारविशेषो वा ; यतो महेश्वरः तेषु केषाञ्चित् भुवनपतित्वं ददाति ; अत एवैकपलान् अष्टादशोत्तरशतसंख्याकान् मन्त्रेशान् कुरुते । ते च शतरुद्राः अष्टौ मण्डलिनः क्रोधाद्या अष्टौ वीरेशः श्रीकण्ठश्चेति। इति पशुविभागः। पाशविभागश्च मायायाः पृथग्गणनां परित्यज्य भोजदेवेन चतुर्धोक्तः 17. श्लोके, मलजः कर्मजः मायीयः तिरोधायकशक्तिसमुद्भवश्चेति । अत्र मलज इत्यादिना कार्यनिर्देशेऽपि मलादयः चत्वारः कारणभूता एव पाशा विवक्षिता इति केचित् । पाशविभागनिरासादेव तदधीनः पशुविभागोऽपि निरस्तप्रायः । विद्येश्वरभुवनपत्यादिसंख्याविशेषनिर्देशादिकं युक्तिमूलकत्वानर्हं शैवागममात्रमूलकमित्यतश्चानास्थेयमिति एतदंशो मूले उपेक्षितः ।

**धर्मव्याधादय**(जीव). इति । कौशिको नाम तपस्वी वृक्षमूले स्थितः शाखास्थितया बलाकया विसृष्टे उच्छिष्टे स्वशरसि पतिते कथमेवं करोतीति रुष्टो रूक्षं चक्षुषा तामुद्वीक्ष्य चाक्षुषेण तेजसा ददाह । ततो भैक्षार्थं प्रस्थितः कस्याश्चित् पतिव्रताया गृहं जगाम । सा भिक्षां देहीति प्रार्थिताऽपि स्वपतिशुश्रूषणपरायणतया तत्कार्यं विनिवर्त्य विलम्ब्यैवाऽऽगत्य भिक्षां दातुमुद्युयुजे । तदा तन्मुखं क्रोधकलुषितं निरीक्ष्य, किं मां बलाकां मन्यसे इति सा पप्रच्छ । स च चित्रीयमाणचेताः, 'कथमिदं त्वयाऽवगतम्' इत्यप्राक्षीत् । पातिव्रत्यरूपतपोबलात् सर्वमिदं जानामि । त्वमपि धर्मव्याधमुपसंपद्य धर्मसूक्ष्मं जानीहि इति तयोक्ते तदैव तमुपसंपद्य मातापित्रादिशुश्रूषणं तेन क्रियमाणमाकर्ण्य स्वयमहंकारहीन आसीदिति भारते वनपर्वणि 210. विस्तरेण द्रष्टव्यम् । **आदिना** विदुरतुलाधारादिग्रहणम् । विदुरः सुप्रसिद्धः तुलाधारवृत्तान्तः शान्तिपर्वणि (267—270) वनचरः कश्चित् जाजलिर्नाम द्विजः समुद्रोद्देशमासाद्य तपस्तेपे । वर्षास्वाकाशशायी हेमन्ते जलसंश्रयः ग्रीष्मे वातातपसहो निराहारो वायुभक्षः काष्ठवदवस्थित आसीत् तस्य शिरसि कुलिङ्गशकुनी दम्पती नीडं चक्रतुः । तत्रोषितवन्तौ अण्डान्युत्पादयामासतुः । तद्बुध्वा धर्मे वृतमनास्तेषां सञ्चारं सर्वं सोढ्वा तेषामनुकूलमेवावर्तत तपःपरः । अण्डजाः पक्षिणश्च तत्र संचेरुः । प्रत्यहं क्रमेणानेकदिनानन्तरं मासानन्तरमिति अयथायथमागतानामपि यथा सौकर्यं स्यात् तथा स सनीड एवाऽऽसीत् । तेषु कालक्रमेणापगतेषु द्विजः स्वात्मानं सिद्धोऽस्मीति मन्वानः कदाचित्, धर्मः प्राप्तो मयेत्याकाशे आस्फोटयत् । तदाऽन्तरिक्षे वागासीत्; पिशाचा अब्रुवन्, वाराणस्यां वर्तमानस्तुलाधारो धर्मे प्रतिष्ठितोऽप्येवं वक्तुं नार्हति, किमुत त्वमिति । तदैव कुतूहली प्रस्थाय पण्यानि विक्रीणन्तं तुलाधारं काश्यां ददर्श । स एतं प्रागेवान्तर्दृष्ट्या बुध्वा प्रत्युद्गम्य स्वागतेन संपूज्य सर्वं त्वद्वृत्तं विदितमित्युवाच । द्विज

आश्चर्ये मग्नः, कथमेतावत् ते पण्यविक्रयेण इति पप्रच्छ। अथ स धर्मसूक्ष्मोपदेशे प्रवृत्तः भूताना-'मद्रोहेणाल्पद्रोहेण वा स्ववृत्तिं वदन्,' रसांश्च तांस्तान् विप्रर्षे मद्यवर्ज्यान् बहूनहम्। क्रीत्वा वै प्रतिविक्रीणे परहस्तादमायया॥ सर्वेषां यः सुहृन्, स सर्वहिते रतो धर्मं वेद। तुला कृपा च सर्वभूतेषु मे समा। न भूतानामहिंसाया ज्यायान् धर्मोऽस्ति कश्चन। कृषिं साध्विति मन्यन्ते सा च वृत्तिः सुदारुणा। इष्टापूर्तादसाधूनां विदुषां जायते प्रजात् ज्ञानविज्ञानिनः केचि। परं पारं तितीर्षवः। यत्र गत्वा न शोचन्ति न च्यवन्ति व्यथन्ति च। ते तु तत् ब्रह्मणः स्थानं प्राप्नुवन्तीह सात्त्विकाः। नैव ते स्वर्गमिच्छन्ति न यजन्ति यशोधनाः। कर्तव्यमिति कर्तव्यम् वेत्ति वै ब्राह्मणो भयम्। काम्यां वृत्तिं लिप्समानाः कां गतिं यान्ति जाजले" इत्यादिकमुपदिदेश। जाजलिश्च शुचिः श्रद्धानः सदाचारः शान्तिमेवान्वपद्यतेति॥

(नित्यवि.) ज्ञानात्मकत्वं हि स्वयम्प्रकाशत्वमेवेत्यस्यायमर्थः—ज्ञानमित्यस्य यत्किञ्चित्प्रकाशकमित्यर्थः। ज्ञाधातुप्रयोगे तदर्थस्य सकर्मकावभासनया यत्किञ्चिद्विषयप्रकाशकत्वं स्पष्टम्। आत्मस्वरूपज्ञानं तु अन्यकिञ्चिदप्रकाशकत्वेऽपि स्वप्रकाशकं भवत्येव धर्मभूतज्ञाने विषयप्रकाशकत्ववत् स्वप्रकाशकत्वमप्यस्ति। आत्मन इव शुद्धसत्त्वद्रव्यस्यापि स्वान्यकिञ्चित्प्रकाशकत्वादर्शनात् तत्र ज्ञानस्वरूपत्वं स्वप्रकाशकत्व एव विश्राम्यतीति स्वयम्प्रकाशत्वमेव कथितं भवतीति। न तु ज्ञानपदस्य स्वयंप्रकाशत्वं साक्षादर्थः। स्वयंप्रकाशपदार्थानङ्गीकारितार्किकादिसर्वसाधारण्येन प्रयुज्यमानस्य ज्ञानशब्दस्य स्वयम्प्रकाशमित्यर्थवर्णनायोगात्। बद्धानि प्रति नित्यविभूतेः स्वयम्प्रकाशत्वाभावेऽपि अन्यान् प्रति तदस्तीति मन्तव्यम्। यद्यपि तेषां धर्मभूतज्ञानस्य सर्वदेशव्याप्ततया तत एव शुद्धसत्त्वमपि प्रकाश्येत, अथापि तन्निरपेक्षमेव प्रकाशते, तत्प्रसरे तदंशे कारणत्वं नेष्यते। स्वयम्प्रकाशता यावत्यंशे तावद्व्यतिरिक्तांशविशिष्टतया तत्प्रकाशस्य धर्मभूतज्ञानाधीनत्वमिष्यते। एवमेव हि नित्येश्वरस्वरूपात्मनां स्वयम्प्रकाशत्वविषये वक्तव्यम्। अन्यथा तेषां धर्मभूतज्ञानस्य नित्यनिरंकुशप्रसरतया तेषां स्वयम्प्रकाशत्वस्यैव त्यागापत्तेः। ज्ञानशब्दप्रयोगस्य यथाकथञ्चिन्निर्वाहस्य तत्राप्यविशिष्टत्वात्। विशिष्य तद्गुणसारत्वादित्युक्तरीत्या मुख्यतयैव तत्र निर्वाहसंभवाच्च। प्रकाशो हि व्यवहारानुगुण्यम्। व्यवहारे व्यवहर्तव्यस्य कारणत्वे साक्षात् संभवति ज्ञानद्वारा कारणत्वमनपेक्षितमिति स्वेतरानधीनव्यवहारकत्वरूपं स्वयंप्रकाशत्वं प्रतीतं संभवदनुपेक्ष्यम्। अस्तु तावदेवम्—तथापि बन्धदशायामस्वयंप्रकाशस्य तस्य बन्धनिर्मोके जीवान् प्रति धर्मभूतज्ञाननिरपेक्षं प्रकाशमानत्वं कथमपि भवेच्चेत्—आश्वासः स्यादिति यदि मन्यते—तर्हि मुमुक्षूणां पुण्यपापविधूननेन त्यक्तस्थूलशरीराणां परमपदपर्यङ्कारोहावसर एव प्रज्ञाविकासस्य भावित्वात्, ततः कोऽसीत्यादिप्रश्नोत्तरभावाच्च तावत्पर्यन्तं पूर्णनित्यविभूतिसाक्षात्कारस्याप्रसक्ततया तदात्वे तेषां श्रद्धाप्रेमाधिक्यसंपिपादयिषया, संभाविनकिञ्चिदाकारविशिष्टं परमं पदं स्वयंप्रकाशं तद्विषयकसंशयविपरीतज्ञानविच्छेदकं भवत्वित्याशयेन तस्य स्वयम्प्रकाशत्वमीश्वर इच्छतीति स्यादिति समाश्वसिहि। न हि प्रयोजनं नास्तीति कृत्वा

प्रमाणमन्यथा क्रियते । तथा च श्रीभाष्यम्, "न हि प्रयोजनानुगुणा प्रमाणप्रवृत्तिः । प्रयोजनं हि प्रमाणानुगुणम्" इति । अन्यथा तृणप्रत्यक्षस्य स्वर्णप्रत्यक्षता कल्प्येत । एवं परज्ञानेऽपि यदि तदुपयोगः, स्यान्नाम। अधिकप्रेमपात्र सत्त्विक कतिपयबद्धविषयेऽपि भगवदिच्छायां तत्स्वयंप्रकाशत्वं सफलं स्यादित्यलम्॥

**विग्रहस्यापि व्याप्त्यादिशक्ति**रिति । एतद्विषयविवादशमनं मोक्षे इत्युक्तं **परमतभंगे**। जडशब्दस्य लोके अज्ञार्थकत्वेऽपि ज्ञानप्रसक्तिमत्येव प्रतिषेधौचित्यात् चेतनेष्वेव तत्प्रयोगेऽपि अस्वयम्प्रकाशे जडशब्दपरिभाषा वेदान्तिनाम् ॥

**ज्ञानयोगः प्रकाश** (बुद्धि) इत्यादि। यदि प्रकाशो ज्ञानम्, तर्हि घटं जानातीतिवत् घटं प्रकाशत इति कुतो न प्रयोगः इत्याशंकायामुत्तरं **कर्मे**त्यादि । घटः प्रकाशत इति प्रथमान्ततया प्रत्ययभेददर्शनात् प्रकाशत इत्यत्र प्रकाशपदार्थे **कर्मकर्तृक्रियातन्त्रं ज्ञानम्** ज्ञाधातुकर्मीभूतघटकर्तृका या क्रिया ज्ञानयोगरूपा, तेनैकीकृतं तदुपसर्जनभूतं भवति ज्ञानमित्यर्थः । अतो न कर्मवदतन्त्रपदवैयर्थ्यम् । एवमभिप्रेत्यैव **प्रकाश इति शेषः** इति व्याख्याने उक्तम् । अत्र देवदत्तेन घटो ज्ञायत इतिवत् देवदत्तेन घटः प्रकाश्यत इति स्यादित्यपि शंका दर्शिता । प्रकाश्यत इत्यत्र णिजन्तकाश-धातुग्रहणे तस्याप्रकृतत्वात् नाशंकावसरः । अणिजन्तग्रहणेनैव शंकायां कर्तृगतक्रियातन्त्रत्वात् ज्ञानस्य नैवं प्रयोगापत्तिरिति परिहार इति चेत्—काममस्तु । तदुपरि घटः प्रकाशत इतिवत् घटो जानातीति प्रयोगः किं न स्यात्, ज्ञायत इति कथमिति ज्ञाधातुविषयकशंकायामुत्तरम् **प्रकाशत** इत्यादि । किं ज्ञानप्रकाशयोर्भेदः स्वीकृतः, उत न ; आद्ये पूर्ववाक्यत एवोत्तरं सिद्धम् । द्वितीयेऽपि यथा भिनत्ति पातयतीति पदयोः छेदानुकूलव्यापाररूपैकार्थकत्वेऽपि परशुना भिनत्ति, परशुं पातयतीति प्रयोगभेदो धातुभेदात्, तथेह ज्ञाधातुप्रयोगे घट इति प्रथमान्तप्रयोगस्य कार्यत्वे ज्ञायत इति यगन्तप्रयोग एव साधुरिति धातुनिबन्धनो व्यवहारभेदः । वस्तुतस्तत्रापि भेदनपातनयोरर्थतावच्छेदके विशेषोऽस्तीति चेत्—अत्रापि विशेषो भाव्यः । वस्तुतः कृतियत्नयोः सर्वथैक्यमेव ; घटं करोति घटे यतत इति प्रयोगभेदश्च धातुभेदप्रयुक्त इतीष्यते तान्त्रिकैरिति ॥

ग्रन्थोदाहृतकारिकाः स्फुटतया दृष्ट्वा तु तद्ग्रन्थगाः
तद्व्याख्याद्वययोजनाश्च बहुलं शैवं विमृश्याधुना ।
शिष्टं टिप्पण इत्युदीरितमथो व्याख्यातमन्यत् तथा
सर्वं स्यात् खलु दिक्प्रदर्शनतयेत्येतावति स्थीयते ॥

**उभयवेदान्तग्रन्थमाला संपादकः**

## न्यायसिद्ध[illegible]

—o—●—

# न्यायसिद्धाञ्जनशोधनिका

मूलोद्धृतशैवग्रन्थ कारिकादिशोधनं भूमिकापरिशिष्टतो ग्राह्यम् । अन्यदत्र ॥

| पुटम् | पङ्क्तिः | शुद्धम् | पुटम् | पङ्क्तिः | शुद्धम् | पुटम् | पङ्क्तिः | शुद्धम् |
|---|---|---|---|---|---|---|---|---|
| 12 | 1 | स्वान्त | 152 | 2 | तद्द्वय | 384 | 26 | सत्त्ववत्त्वमिति रजो- |
| 23 | 2 | पूर्वा | 192 | 3 | तदुपचार | | | रहितत्वे सति सत्त्ववत्त्वमिति च |
| 42 | 10 | अन्यथा | 203 | 4 | वरदविष्णु | 391 | 2 | तस्मात् |
| 44 | 3 | स्योत्पत्ति | 215 | 3 | कण्ठोक्तेन | 402 | 1 | नुमेयवादिनं |
| 71 | 9 | अनवस्थिते | 221 | 4 | मेघादि | 413 | 13 | निस्स्पृहा |
| 75 | 8 | प्रतिस्रोतः | 221 | 5 | नां ह्युपजंभ्य | 430 | 7 | इत्युक्त्वा |
| 80 | 1 | स्वेच्छया | 222 | अन्ते | भोक्तृ | 436 | 7 | दुःखं |
| 81 | 6 | वारणादीनां | 247 | 27 | व्याख्या | 454 | 7 | स्पष्टः |
| 90 | 1 | शरादिभि | 253 | 1 | अविद्या | 478 | 4 | ब्रह्म |
| 97 | 1 | वतिप्रसङ्गः | 254 | 6 | भगवच्चरण | 48 | 13,5 | निस्स्पन्द |
| 97 | 2 | यत्तु | 268 | 2 | ग्रन्थः, स तु | 488 | 2 | ब्रह्म |
| 105 | 1 | सहदश | 335 | 2 | सर्वमनैकान्त्य | 491 | 9 | महाश्चर्यं |
| 135 | 1 | तावन्तरेण | 350 | 3 | रपार्थिवत्वा | 493 | 3 | पवनाभ्यां |
| 192 | 1 | पिण्डौ | 359 | 7 | क्वचिद् | 517 | 3 | कल्पनमत्र |

## भूमिकाशोधनिका

| पुटम् | पङ्क्तिः | शुद्धम् | पुटम् | पङ्क्तिः | शुद्धम् | पुटम् | पङ्क्तिः | शुद्धम् |
|---|---|---|---|---|---|---|---|---|
| 13 | ४ | सम्मतम् | 30 | 10 | तदर्थमेव | 3[illegible] | 11 | निरपेक्ष |
| 14 | 1 | ज्ञानानन्दा | 2 | 3 | उभया | 40 | 4 | निस्स्पन्द |
| 16 | 21 | प्रज्ञापरि | ,, | 12 | अभिप्रायेण | 42 | 1 | असत्ख्याती |
| 17 | 10 | कलत्र | ,, | 19 | कार्यस्य विरजास्पर्श | 42 | 10 | घटादेर्ग्रहण |
| 22 | 16 | ह्रीः | 33 | 6 | द्योत्यते | 42 | 11 | हृद्यो |
| 24 | अन्ते | निष्कर्षं | 35 | 23 | प्रक्षेप | 42 | 16 | ज्ञानं |
| 27 | 10 | स्त्रीन्द्रिय | 37 | 8 | नारायणा | 42 | 25 | व्रीहि |
| 28 | 13 | तदनुक्त्या | 37 | 10 | कृत्यद्वय | 47 | 11 | प्रश्नः |
| ,, | 28 | कारणत्वाभावादि | 37 | 22 | द्वित्वपरत्व | | | |

अस्य न्यायसिद्धाञ्जनग्रन्थस्य मुद्रणार्थम् श्री.उ.वे.परमहंसपरिव्राजक श्रीरंगमहाश्रममुख्यस्थान.
श्रीमदाण्डवन् श्रीमद्वेदान्तरामानुजमहादेशिकानुगृहीता रूप्यकपञ्चशती ॥ 500 रू
श्री. उः वेः श्रीरंगंमुदलितिरुमालिकै ताताचार्यैः.................. 500 रू.

२६-७-७६

इति कृतज्ञो निवेदयिता

२५ः नाथमुनिवीथी. मद्रासः १७.

संपादकः

शुभमस्तु

—o—o—

॥ श्रीः ॥

श्रीमते हयवदनपरब्रह्मणे नमः ।
श्रीमते रामानुजाय नमः ।
श्रीमते निगमान्तमहादेशिकाय नमः ।

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

श्रीमन्निगमान्तमहादेशिकैरनुगृहीतम्

## ॥ श्रीन्यायसिद्धाञ्जनम् ॥

* * * * *

---

येनोपनिषदां भाष्यं रामानुजमतानुगम् ।
रम्यं कृतं प्रपद्ये तं रङ्गरामानुजं मुनिम् ॥

### श्रीरङ्गरामानुजमुनिविरचितं व्याख्यानम् ।

—*—*—

अतसीगुच्छसच्छायमञ्चितोरस्थलं श्रिया । अञ्जनाचलशृङ्गारमञ्जलिर्मम गाहताम् ॥ १ ॥
श्रीमत्तातार्यपादाब्जे हृदये भावये शुभे । आत्मानं लभते जन्तुर्ययोरत्वात्मसमर्पणात् ॥ २ ॥
मम शारीरकस्वान्तविज्ञानं यत्कृपाफलम् । तं तातयार्यप्रवणं वात्स्यानन्तगुरुं भजे ॥ ३ ॥
श्रीरामानुजभाष्याध्वा येन निष्कण्टकीकृतः । जयन्तु कृतयस्तस्य निगमान्तगुरोः शुभाः ॥ ४ ॥

---

श्रीमद्वेदवतंसदेशिकयतिक्ष्माभृच्छठार्यात्मकम्
श्रीश्रीवासमुनीन्द्रदेशिकमणेः मातागमान्तद्वयम् ।
तत्कल्याणकटाक्षकेळिनिलयं श्रीकृष्णसद्देशिकम्
श्रीशैलान्वयसिन्धुकौस्तुभमणिं सेवेय विद्वन्मणिम् ॥

### श्रीकृष्णतातयार्यविरचितं रत्नपेटिकासमाख्यं व्याख्यानान्तरम् ।

---

नमस्समस्तचिदचिद्वेत्रवेऽमृतसेतवे । रघुवीराय करुणासिन्धवेऽखिलबन्धवे ॥ १ ॥
शठकोपपदद्वन्द्वसक्तं रामानुजं मुनिम् । ध्यायते निगमान्तार्थगुरवे करवै नमः ॥ २ ॥
श्रीश्रीवासयतीन्दुर्विलसतु सर्वज्ञशेखरो हृदये ।
यत्पादसंगलेशादपसरति तमः प्रकाशते सर्वम् ॥ ३ ॥
लक्ष्मीकुमारतातार्यवंश्यः कृष्णाभिधस्सुधीः । न्यायसिद्धाञ्जनव्याख्यां तनुते रत्नपेटिकाम् ॥ ४ ॥
श्रीरंगरामानुजयोगिवर्यसन्दर्शितेनैव पथा प्रवृत्तेः ।
श्रीसूक्तिभक्तिप्रचयात् प्रसूतं सन्तः सहन्तामपराधमेतम् ॥ ५ ॥

श्रीमद्वेङ्कटनायकः श्रुतिशिरस्तात्पर्यपर्याप्तधीः
लब्धार्थो वरदार्यपादरसिकात् रामानुजाचार्यतः ।
बालानामतिवेलमोहपटलावष्टम्भसीदद्दृशां
सम्यक्तत्त्वनिरीक्षणाय तनुते सत्तर्कसिद्धाञ्जनम् ॥ १ ॥
सदसद्भूमिकाभेदैस्ततिसिद्धान्तनाटकैः ।
उपप्लुतस्य तत्त्वस्य शुद्ध्यर्थोऽयमुपक्रमः ॥ २ ॥

---

**रं-व्या.** चिकीर्षितस्य ग्रन्थस्याविघ्नपरिसमाप्त्यर्थं शिष्टाचारप्राप्तं गुरुपरम्परास्मरणरूपं मङ्गळमाचरन् प्रेक्षावत्प्रवृत्त्यर्थं विषयप्रयोजनाधिकारिणश्च निर्दिशन् सिद्धाञ्जननामकरणे प्रवृत्तिनिमित्तरूपं तत्सादृश्यञ्च व्यञ्जयन् वेदान्ततात्पर्यपरिज्ञानकुशलसम्प्रदायाभिज्ञकर्तृकत्वेन ग्रन्थान्तरवैलक्षण्यञ्च दर्शयति **श्रीमद्वेङ्कटनायक** इति । सिद्धाञ्जनपक्षे हि अयथार्थमोहजनकपटल[रोग?]संसर्गदूषितनयनानां यथावस्थितपदार्थनिरीक्षणोपयोगित्वम् । प्रकृते च मोहसमूहव्यापनदूषितबुद्धीनां तत्त्वनिरीक्षणोपयोगित्वमिति द्रष्टव्यम् ॥ तत्त्वस्य पूर्वाचार्यप्रदर्शितस्य निरीक्षणे भवद्ग्रन्थस्य कथमुपयोग इत्याशङ्क्याह-**सदसद्भूमिकेति** । नाटकेष्वितिवृत्तं त्रिविधम्-तात्त्विकं कविकल्पितं मिश्रञ्चेति । ततश्च सन्तमसन्तं वा भूमिकाभेदमाश्रित्य प्रवृत्तैर्नानाविधैः सिद्धान्तैर्विप्रतिपत्तिविषय-

---

**र-पे.** प्रारिप्सितप्रकरणग्रन्थाविघ्नपरिसमाप्तिप्रचयगमनादिप्रयोजनकं स्मृत्याचारप्राप्तं स्वाचार्यादिस्मरणरूपं मङ्गलमाचरन् प्रेक्षावत्प्रवृत्तये विषयप्रयोजनाधिकारिणः प्रदर्शयन्, वेदान्तनिपुणसंप्रदायाभिज्ञप्राज्ञकर्तृकतया ग्रन्थस्य इतरग्रन्थवैलक्षण्यं च दर्शयति **श्रीमदिति** । श्रीरिह, "सा हि श्रीरमृतासताम्" इत्यधीता ज्ञानसंपत् । भूम्नि अतिशायने च मतुप् । उक्तं हि, "भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशयने । संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः" इति । भूमा=प्राचुर्यम् । अतिशायनम् उत्कर्षः । **श्रुतिशिर** इति । श्रुतिशिरस्तात्पर्ये पर्याप्ता=कार्त्स्न्येन तादृशतात्पर्यं विषयीकुर्वाणा धीर्यस्येति बहुव्रीहिः । **बालानां** भाष्यादिग्रन्थपरिश्रमाशक्तानां ग्रहणधारणक्षमाणाम् । **अतिवेलेत्यादि** । सिद्धाञ्जनपक्षे अतिवेलो मोहो यस्मादिति व्युत्पत्त्या अतिवेलमोहशब्देन बहुविधमोहजनकत्वम्, दुस्तरमोहजनकत्वं वा बोध्यते । तथाविधः **पटला**भिधानो नेत्ररोगविशेषः, तत्संबन्धेन **सीदन्त्यः**-यथावस्थितार्थग्रहणासमर्थाः **दृशः**-नेत्राणि येषां तेषाम् । ग्रन्थपक्षे, अतिवेलानां **मोहानां**-भ्रमाणां, **पटलस्य**-समूहस्य, संसर्गेण **सीदन्त्यः**=तत्त्वविषयीकरणासमर्थाः **दृशः**-बुद्धयः येषां तेषाम् । **सम्यगिति** । प्रमात्मकतत्त्वनिर्णयायेत्यर्थः, दृढतरतत्त्वज्ञानायेति वा । अनेनातिवेलमोहपटलनिवृत्तिपूर्वकसम्यक्तत्त्वनिरीक्षणसाधनतया ग्रन्थस्य सिद्धाञ्जनसादृश्यात् तद्व्यपदेशन्यायेन श्येनादिनामवत् सिद्धाञ्जननामेति दर्शितम् ॥

ननु पूर्वाचार्यग्रन्थैरेव सम्यक् तत्त्वज्ञानसंभवात् किमर्थमपूर्वग्रन्थनिर्माणमित्यत आह **सदसदिति** । **भूमिकाभेदः**-कथाशरीररूपमितिवृत्तम्; तत् त्रिविधम्-प्रख्यातमुत्पाद्यं मिश्रञ्चेति । तत्र सच्छब्देन प्रख्यातस्य, असच्छब्देन कल्पितापरपर्यायोत्पाद्यस्य मिलिताभ्यां सदसच्छब्दाभ्यां आंशिकसत्त्वासत्त्वोभयबोधनेन मिश्रस्य चाभिधानात् त्रिविधमपीतिवृत्तमुक्तं भवति । यद्यपि नाटके प्रख्यातमेकमेवेतिवृत्तम्

यन्न्यायपरिशुद्धयन्ते सङ्ग्रहेण प्रदर्शितम् ।
पुनस्तद्विस्तरेणात्र प्रमेयमभिदध्महे ॥ ३ ॥

अशेषचिदचित्प्रकारं ब्रह्मैकमेव तत्त्वम्। तत्र प्रकारप्रकारिणोः प्रकाराणाञ्च मिथोऽत्यन्तभेदेऽपि

---

र-व्या. तामापन्नस्य विप्रतिपत्तिव्युदासार्थोऽयं यत्न इत्यर्थः॥ ननु न्यायपरिशुद्ध्यैव तत्त्वशुद्धेः कृतत्वात् तत्त्वस्य शुद्ध्यर्थोऽयमुपक्रमः इत्ययुक्तमित्यत्राह — यन्न्यायपरिशुद्धयन्त इति । ननु तत्त्वस्य परिशुद्ध्यर्थोऽयमुपक्रम इत्युक्तं तत्तत्त्वं किमित्यपेक्षायाम्, "तत्त्वं जिज्ञासमानानां हेतुभिः सर्वतोमुखैः । तत्त्वमेको महायोगी हरिर्नारायणः प्रभुः ॥" इत्यादिप्रमाणान्यभिप्रयन् आह अशेषेति । अत्र च अशेषशब्देन चितां मिथो भेदः, अचितां मिथो भेदश्च विवक्षितः । अशेषपदस्य प्रत्येकमन्वितत्वात् । प्रकारः शरीरम् — अपृथक्सिद्धविशेषणमिति यावत् । अनेन च प्रकारप्रकारिणोर्मिथोभेदश्च विवक्षितः; शरीरशरीरिभावस्य भेदरूपत्वात् । ननु प्रकारप्रकारिणोः प्रकाराणाञ्च अशेषप्रकारशब्दाभ्यां विवक्षितभेदसत्त्वे—"एकमेवाद्वितीयम्", "नेह नानास्ति किञ्चन" इत्याद्यैक्यश्रुतयो भेदनिषेधश्रुतयश्च कुप्येयुरित्याशङ्क्याह—तत्रेति ।

---

र-पे. स्पष्टं चेदं दशरूपकादौ; तथापीह नाटकशब्देन रूपकसामान्यस्यैव विवक्षिततया प्रकरणादिरूपकान्तरेषु मिश्रयोरपि सद्भावान्न दोषः । इह भूमिकाभेदशब्देन, "पश्य नीलोत्पलद्वन्द्वान्निस्सरन्ति शिताश्शराः" इत्यादौ नीलोत्पलादिशब्देन नेत्रादय इव साध्यवसानलक्षणया तत्तत्सिद्धान्तनिर्वाहकत्वाभिमताः प्रमाणोपपत्तयो विवक्षिताः । इदमत्रावधेयम्—संप्रतिपन्नप्रमाणभावैः प्रत्यक्षानुमानशब्दैरेव स्वसिद्धान्तोपपादनं सद्भूमिकाभेदः, प्रमाणत्वेनासंप्रतिपन्नैरर्थापत्त्यादिभिः[1] स्वसिद्धान्तोपपादनम्, माध्यमिकवत् प्रत्यक्षादीनां सर्वेषामप्रामाण्यमभ्युपगम्यतैरेव स्वसिद्धान्तोपपादनं वा असद्भूमिकाभेदः, प्रत्यक्षादिभिरर्थापत्त्यादिसहितैः स्वसिद्धान्तोपपादनं सदसद्भूमिकाभेद इति । यद्वा रसाद्यानुगुण्यात् प्रख्याते तिवृत्तस्यैव क्वचिदन्यथाकरणस्याभ्यनुज्ञाततया तदभिप्रायोऽयमसच्छब्दः । भूमिका-वेषपरिग्रहः । अनेन प्रमाणोपपत्तिभिस्तत्तत्पदार्थोपपादनमध्यवसीयते । तत्र सद्भूमिका-विद्यमानपदार्थोपपादनम् । असद्भूमिका-अविद्यमानपदार्थोपपादनम् । ततश्च नाटकशब्दो यथाश्रुतार्थपर एव । तत्तदिति । तेषां तेषां वादिनां सिद्धान्तैरेव नाटकैः । तत्र सिद्धान्तानां अन्यथाप्रतिपत्तिहेतुतया नाटकत्वरूपणम् । उपप्लुतस्य अन्यथाप्रतिपत्त्यादिविषयीकृतस्य । शुद्ध्यर्थं इति । शुद्धिरन्यथाप्रतिपत्त्यादिनिवृत्तिः ॥ २ ॥

ननु न्यायपरिशुद्ध्यैव तत्त्वस्य शोधितत्वादयमुपक्रमो निरर्थक इत्यत आह यदिति । अन्ते= प्रमेयाध्याये । विस्तरेणेति । परपक्षनिराकरणादिना उपक्रमसाफल्यमिति भावः ॥ ३ ॥

उपप्लुतस्य तत्त्वस्येति प्रस्तुतं तत् तत्त्वं किमित्यत आह अशेषेति । चिदचित्प्रकारम् अपृथक्सिद्धिसंबन्धेन चिदचिद्विशिष्टम्. तत्त्वम्=अनारोपितं प्रमितं वा । नन्विदमनुपपन्नम्, "तत्त्वमेको महायोगी हरिर्नारायणः परः" इत्यैक्यप्रतिपादनात्, "नेह नानास्ति किञ्चन" इति भेदनिषेधाच्च ब्रह्मैकमेव

---

1 अर्थापत्त्यादीनां पृथक्प्रमाणत्वाभावेऽपि क्लृप्तप्रमाणान्तर्भूततया प्रामाण्यसत्त्वात् नात्राऽऽस्था । अत एव पक्षान्तरारम्भः ।

विशिष्टैक्यादिविवक्षया एकत्वव्यपदेशः तदितरनिषेधश्च । अन्यथा समस्तप्रमाणसंक्षोभप्रसङ्गात् ।

र-व्या. **विशिष्टैक्यादीति** आदिपदेन प्राधान्यादिकं गृह्यते । **समस्तप्रमाणेति**–"पृथगात्मानं प्रेरितारञ्च मत्वा", "ज्ञाज्ञौ द्वावजावीशनीशौ", "द्वा सुपर्णा सयुजा सखाया", "यस्यात्मा शरीरम्", "यस्य पृथिवी शरीरम्", "यस्य तमः शरीरम्", "संयुक्तमेतत्क्षरमक्षरञ्च", "क्षरं प्रधानममृताक्षरं हरः। क्षरात्मानावीशते देव एकः", "प्रधानञ्च पुमांश्चैव सर्वभूतात्मभूतया। विष्णुशक्त्या महाबुद्धे वृतौ संश्रयधर्मिणौ ॥" इत्यादिशास्त्राणाम्, नाहमीश्वरः, घटः सन् पटः सन् इत्यादिप्रत्यक्षाणाम्, किञ्चिज्ज्ञत्वसर्वज्ञत्वसावद्यत्वनिरवद्यत्वादिलक्षण-विरुद्धधर्माध्यस्तत्त्वरूपलिङ्गकानुमानानाञ्च व्याकोपप्रसङ्गादित्यर्थः । ननु **तत्त्वनिरीक्षणाय तनुते, तत्त्वस्य**

र-पे. सत्यम्, इतरत् सर्वं मिथ्येति प्रतीतेः । 'न हि विशेषणमिथ्यात्वे विशिष्टस्य तत्त्वरूपत्वसंभवः' इत्यत्र आह तत्रेति । **मिथोऽत्यन्तभेदेऽपीति** । अनेन न प्रकारप्रकारिणोः स्वरूपैक्यविवक्षया एकत्वव्यपदेश इत्युक्तं भवति । **विशिष्टैक्यादीति** । अशेषचिदचिद्विशिष्टैक्यादीत्यर्थः । **आदिना** ब्रह्मापृथक्सिद्ध-विशेषणतारहितवस्त्वन्तराभावपरिग्रहः । तथाच विशिष्टैक्यविवक्षया एकत्वव्यपदेशः, ब्रह्मापृथक्सिद्ध-विशेषणतारहितवस्त्वन्तराभावविवक्षयेतरनिषेध इत्युक्तं भवति। अयमत्र भावः—'सदेवमेकम्' इत्याद्युक्त-मेकत्वं न संख्याविशेषादिरूपम्; सर्ववस्तुसाधारण्येनाव्यावर्तकतया तदुक्तिवैयर्थ्यात् । किन्तु सजातीय-द्वितीयराहित्यरूपमेव; स्वसजातीयनिष्ठभेदप्रतियोगितानवच्छेदकीभूतैकमात्रवृत्तिधर्मवत्त्वपर्यवसितम् । एकमात्रवृत्तित्वं च स्वप्रतियोगिवृत्तित्वस्वसामानाधिकरण्योभयसंबन्धेन भेदविशिष्टान्यत्वम् साजात्यं च अशेषचिदचिद्विशिष्टत्वेन । तथ च अशेषचिदचिद्विशिष्टनिष्ठभेदप्रतियोगितानवच्छेदकतादृशधर्मवत्त्वं विशिष्टैक्यमिति फलितम् । इदमेव **विशिष्टाद्वैत**मित्युच्यते । ननु देव्या अपि जगदुपादानत्वमन्यत्र प्रपञ्चनीयम् । तथाच तस्या अपि सर्वचिदचिद्विशिष्टत्वावश्यम्भावात् कथमुक्तैकत्वनिर्वाहः इति चेत्–उच्यते – स्वेतरसर्ववस्तुविशिष्टैक्यमेव **विशिष्टैक्य**मित्यनेन विवक्षितम्—वैशिष्ट्यञ्चापृथक्सिद्धि-संबन्धेन । अपृथक्सिद्धिश्च साक्षात्परम्परासाधारणी । तेन, "अशब्दम्" इत्यादिनिषेधेन ब्रह्मणि साक्षादपृथक्सिद्धसंबन्धेन शब्दादेरसत्त्वेऽपि न क्षतिः । देव्या अपि ब्रह्मापृथक्सिद्धविशेषणत्वसत्त्वात् ब्रह्मणः स्वेतरसर्वविशिष्टत्वोपपत्तिः, देव्यां च ब्रह्मविशिष्टत्वाभावान्नोक्तानुपपत्तिः । यद्यपि ब्रह्मदेव्युभयस्य स्वपदेनोपादाने स्वेतरसर्वविशिष्टत्वमुभयोरसंभवति— तथापि तादृशविशिष्टनिष्ठभेदप्रतियोगितानवच्छेद-कत्वस्य कचिदप्येकमात्रवृत्तिधर्मे असंभवान्न दोषः। अयमर्थः; [1]भेदविशिष्टैकमात्रवृत्तिधर्मवत्त्वं विशिष्टैक्यम्,

1 एकमात्रवृत्तिधर्मपदेन सर्वेश्वरगततद्व्यक्तित्वग्रहणम् । तदवच्छिन्नप्रतियोगिताकभेदो यत्रयत्र, तत्रतत्र तद्धर्माश्रयापृथक्सिद्धविशेषणत्वमिति व्याप्यव्यापकभावः। अयमेवार्थो नव्यनैयायिक-धोरण्याऽत्र विपुलीक्रियते। तस्य विशेषणत्वस्य भेदव्यापकत्वे स्वाश्रयापृथक्सिद्धविशेषणत्वसंबन्धेन धर्मस्यैव व्यापकत्वमुक्तं भवति। भेदव्यापकत्वं नाम भेदसमानाधिकरणात्यन्ताभावाप्रतियोगित्ववत् भेदसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वमपि । अनवच्छेदकत्वञ्चावच्छेदकभिन्नत्वम; अवच्छेदकत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वम् । स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वनिष्ठा-वच्छेदकताकप्रतियोगिताकभेदः । स एव स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसंबन्धा-वच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेद इत्युच्यते । उक्तरीत्या भेदव्यापकश्च धर्मो भेद-

इदमेव चेत्थम्भूतं सामान्यतः प्रमाविषयतया विशेषतः प्रकर्षेण मेयतया च प्रमेयमुक्तम् ।

१. व्या- शुद्ध्यर्थोऽयमुपक्रमः इति प्रतिज्ञाय समनन्तरश्लोके प्रमेयमभिदध्महे इति प्रतिज्ञानमसङ्गतमित्याशङ्क्याह इदमेव चेति । ब्रह्मैवेत्यर्थः । इत्थम्भूतं समस्तचिदचित्प्रकारिभूतमित्यर्थः । सामान्यत इति । प्रमेयमित्यत्र द्वौ पक्षौ सम्भवतः । तत्र, "पूर्वं धातुरुपसर्गेण युज्यते पश्चात्प्रत्ययेन" इति पक्षे प्रकृष्टा मितिः प्रमा, तस्या विषयः प्रमेयमित्यर्थः सिध्यति । "पूर्वं धातुः प्रत्ययेन युज्यते पश्चादुपसर्गेण" इति पक्षे मितेर्विषयो मेयं प्रकर्षेण मेयं प्रमेयमिति। द्विविधमपि प्रमेयत्वं ब्रह्मण्येव; नान्यत्र । अत एव न्यायपरिशुद्धौ- "अत्र यद्यपि प्रमाविषयः प्रमेयमिति व्युत्पत्त्या आरोपिताकारव्यवच्छेदार्थतया अनारोपितरूपं

२-पे. भेदवैशिष्ट्यं स्वप्रतियोगितावच्छेदकत्व-स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वोभयसंबन्धेन स्वनिष्ठावच्छेदकता स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसंबन्धेन । स्वाधिकरणता आश्रयतासंबन्धेन । भेदप्रतियोगितावच्छेदकता स्वाश्रयनिरूपितापृथक्सिद्धविशेषणतासंबन्धेन । इदं चात्यन्ततुच्छवस्तुद्वयसत्त्वे नोपपद्यत एव । अथवा प्रतियोगिताविशिष्टैकमात्रवृत्तिधर्मवत्त्वं तत् । प्रतियोगितावैशिष्ट्यम्— स्वावच्छेदकत्व-स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्व-उभयसंबन्धेन । स्वनिष्ठावच्छेदकता-स्वनिरूपकभेदसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसंबन्धावच्छिन्ना । भेदप्रतियोगितावच्छेदकतास्वाश्रयापृथक्सिद्धविशेषणतासंबन्धावच्छिन्ना । तेन भावरूपाभाववादे भेदस्य तत्तद्धर्मरूपतया अखण्डत्वाभावात् स्वतन्त्रवस्तुद्वयसत्त्वेऽपि उक्तैकत्वोपपत्तावपि न क्षतिरिति । अन्यथेति । एकत्वव्यपदेशस्य इतरनिषेधस्य च ब्रह्मैकमेव सत्यम्, इतरत् सर्वं मिथ्येत्येतदभिप्रायकत्वे इत्यर्थः । समस्तप्रमाणसंक्षोभप्रसङ्गादिति । ब्रह्मव्यतिरिक्तवस्तुग्राहकाणां सर्वेषामपि प्रमाणानामप्रामाण्यप्रसङ्गादित्यर्थः । तथाच, "आदित्यो यूपः" इत्यादेरिव न प्रत्यक्षादिविरुद्धार्थे तात्पर्यसंभव इति भावः । ननु तत्त्वशुद्ध्यर्थमुपक्रान्ते प्रबन्धे प्रमेयाभिधानप्रतिज्ञानमनुपपन्नमित्यत आह इदमेवेति । ब्रह्मैवेत्यर्थः । इत्थम्भूतम् अशेषचिदचित्प्रकारिभूतम् । सामान्यत इति । सर्ववस्तुसाधारणरूपेणेत्यर्थः । प्रमाविषयतान्वयभेदः तसिप्रत्ययार्थः । विशेषत इति । "आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्" इत्यक्षपादोक्तद्वादशमात्रवृत्तिरूपेणेत्यर्थः । अत्राप्यभेद एव तसर्थः, प्रकर्षान्वयी । प्रकर्षेणेति । तृतीयार्थो वैशिष्ट्यं सामानाधिकरण्यरूपं मेयत्वेऽन्वेति । प्रकर्षश्च, "यदज्ञानात् संसारः-यद्ज्ञानात् तन्निवृत्तिः,

---

समानाधिकरणभेदप्रतियोगितावच्छेदको न भवति। अतः स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसंबन्धेन भेदवान् भवति । तेन तत्संबन्धेन स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवान् भवति । धर्मस्य व्यापकत्वं स्वाश्रयापृथक्सिद्धविशेषणतासंबन्धेनेत्युक्तम् । व्यापकतावच्छेदकसंबन्धो नाम अत्यन्ताभावप्रतियोगितावच्छेदकसंबन्धः भेदप्रतियोगितावच्छेदकतावच्छेदकसंबन्धः । ईश्वरगततद्व्यक्तित्वं व्यापकम्, घटत्वादिकं सर्वमव्यापकंभेदप्रतियोगितावच्छेदकमेव । प्रथमतो भेदशब्देन ईश्वरतद्व्यक्तित्वावच्छिन्नभेदग्रहणमिति स्वप्रतियोगितावच्छेदकत्वसंबन्धनिवेशेन ज्ञापितं भवतीत्यलं विस्तरेण ॥

र. व्या– सर्वं प्रमेयम्। तथापि निःश्रेयसान्तरङ्गतया तदर्थिभिः प्रकर्षेण मेयं प्रमेयमिह विवक्षितम्। यद्विषयेण भ्रमेण संसरामः, यद्विषयेण च तत्त्वज्ञानेनापवृज्येमहि, तदिह नः प्रकर्षेण मेयं

र-पे. तत् प्रमेयम् –मुमुक्षुभिः प्रकर्षेण मेयत्वात्'' इति, ''यद्विषयेण भ्रमेण संसरामः, यद्विषयेण च तत्त्वज्ञानेनापवृज्येमहि तदिह नः प्रकर्षेण मेयम्'' इति च श्रीन्यायपरिशुद्धिसन्दर्शितः प्रकृतिसंबन्धप्रयोजकीभूताभावप्रतियोगिज्ञानविषयत्वरूपः प्रकृतिसंबन्धनिवृत्तिप्रयोजकज्ञानविषयत्वरूपो वा । प्रमाविषयतया मेयतया चेत्युभयत्र तृतीयार्थोऽवच्छिन्नत्वम्। तच्च उक्तमित्यनेन बोधिते ज्ञानविषयत्वेऽन्वेति । प्रमेयमुक्तमिति । प्रमेयमित्युक्तमित्यर्थः । प्रमेयपदजन्यबोधविषयत्वादिति यावत् । अत्रेदं बोध्यम्— प्रमेयपदे प्रशब्दस्य उपसर्गरूपत्वे प्रकर्षविशिष्टज्ञाने धातोरेव लक्षणा ; प्रशब्दस्तात्पर्यग्राहकः । उपसर्गाणां द्योतकत्वात् । द्योतकत्वं हि लक्षणातात्पर्यग्राहकत्वम् । तत्र प्रकर्षस्य याथार्थ्यरूपत्वे सामान्यरूपं प्रमेयत्वं सिद्धयति । प्रकृतिसंबन्धप्रयोजकीभूताभावप्रतियोगित्वरूपत्वे, प्रकृतिसंबन्धनिवृत्तिप्रयोजकरूपत्वे वा विशेषरूपसिद्धिः । निपातानामपि द्योतकत्वमेवेति कश्चित् पक्षः । वाचकत्वपक्ष एव बहुसंमतः । तत्र, ''प्रादयो गताद्यर्थे प्रथमया'' इति प्रगतो मेयः प्रमेय इति निपातरूपेण प्रशब्देन समासे तेन मेयगत एव प्रकर्षो बोध्यते । स च प्रकृतिसंबन्धप्रयोजकीभूताभावप्रतियोगिज्ञानविषयत्वरूपः प्रकृतिसंबन्धनिवृत्तिप्रयोजकज्ञानविषयत्वरूपो वेति । श्रीमद्गद्यरामानुजमुनयस्तु प्रमेयमित्यत्र द्वौ पक्षौ संभवतः । तत्र पूर्वं धातुरुपसर्गेण युज्यते—पश्चात् प्रत्ययेनेति पक्षे, प्रकृष्टा मितिः प्रमा । तस्या विषयः प्रमेयमित्यर्थः सिध्यति । पूर्वं धातुः प्रत्ययेन युज्यते-पश्चात् उपसर्गेणेति पक्षे, मितेर्विषयो मेयम्-प्रकर्षेण मेयं प्रमेयमिति । द्विविधमपि प्रमेयत्वं ब्रह्मण्येव, नान्यत्र'' इत्याचक्षते ; अत्र प्रकर्षेण मेयमिति तृतीयार्थो वैशिष्ट्यं मेयान्वयि ॥ प्रमेयमितीति ॥ अर्थः सिद्धयतीति पूर्ववाक्यस्थधात्वनुषङ्गेणान्वयः । प्रकृष्टा मितिरित्यत्र प्रकर्षो याथार्थ्यरूपः ; प्रकर्षेणेत्यत्र तु श्रीमन्न्यायपरिशुद्धिदर्शित इत्यभिप्रायः । अत्र यद्यपि उपसर्गरूपस्य प्रशब्दस्य धात्वर्थगतप्रकर्षद्योतकत्वमेव स्यात्-न तु प्रत्ययार्थगतप्रकर्षद्योतकत्वम् । ''उपसर्गाः क्रियायोगे'' इति धात्वर्थविशेषद्योतकत्व एव उपसर्गसंज्ञाविधानात् । तथापि पूर्वं धातोः प्रत्ययेन योगे प्रत्ययार्थोपस्थित्या तद्घटितपरंपरासंबन्धेन धात्वर्थगतप्रकर्षद्योतकत्वं प्रशब्दस्य संभवति । स च संबन्धः स्वाश्रयविषयकत्वरूप इति प्रमेयगतः प्रकर्षः सिध्यतीत्यभिप्रायः । यत्तु— पूर्वं धातुरुपसर्गेण युज्यत इति पक्षो न संभवत्येव, तथा सति प्रत्येति प्रत्ययः इत्यादौ पूर्वमुपसर्गयोगे अन्तरङ्गत्वात् सवर्णदीर्घे रूपासिद्धिप्रसङ्गादिति, तन्न ; पूर्वं धातुरुपसर्गेणेति पक्षानङ्गीकारे अनुभूयते इत्यादौ कर्मलकारानुपपत्तिप्रसङ्गात् । उपसर्गयोगं विना कर्मसाकांक्षार्थबोधकत्वरूपसकर्मकत्व संभावात् । न च तादृशार्थवृत्तिमत्त्वमेव सकर्मकत्वम् । तच्चोपसर्गयोगात् पूर्वमप्यस्त्येव । धातोरेव उपसर्गद्योत्यार्थान्तर्भावेण वृत्त्यङ्गीकारात् । तत्श्चोक्तस्थले पूर्वमेव कर्मलकारसिद्धौ पश्चात् श्रोतृबोधाय द्योतकोपसर्गसंबन्ध इति वाच्यम् ; तथासति उपसर्गरहितस्यापि कर्मलकारान्तभूधातोः साधुताप्रसङ्गात् । द्योतकत्वं हि तात्पर्यग्राहकत्वमेव ;

तदन्तर्गतञ्च सर्वं द्रव्याद्रव्यात्मना विभक्तम्।

उपादानं द्रव्यम्। अवस्थाश्रय उपादानम्। अतथाभूतमद्रव्यम्। प्रत्यक्षादिसिद्धोऽयं द्रव्या-

---

रं-ज्या प्रमेयम्" इत्युक्तम्। प्रकर्षेणेत्यस्य विवरण विशेषत इति। तत्त्वान्तर्गतञ्च वस्तु द्वेधा विभजति तदन्तर्गतञ्चेति। अवस्थेति। आगन्तुकापृथक्सिद्धो धर्मोऽवस्था॥ ननु द्रव्यमद्रव्यमित्युभयमसिद्धं रूपादेराश्रयाभावात्। निराधारा निर्धर्मका रूपादयश्चत्वारः पदार्थाः; ते च चक्षुराद्येकैकेन्द्रियग्राह्या इति वैभाषिकोक्तरीत्या द्रव्यापलापसम्भवात्। अथवा एकस्यैव द्रव्यस्य रूपादितया विकल्प्यमानत्वसम्भवेन न रूपादेः सत्त्वमभ्युपगन्तुं युक्तम्। अतो द्रव्याद्रव्ययोरन्यतरेणैवोपपत्तौ न द्वयमपि कल्प्यमित्याशङ्क्याह प्रत्यक्षादि-

---

र. पे-तात्पर्यग्रहश्च प्रकरणादिनापि संभवतीति न तदर्थमुपसर्गो नियमेन प्रोक्तव्यः। अतः कर्मसाकांक्षार्थ-बोधौपयिकसमभिव्याहारलक्षणाकांक्षाशालित्वरूपं तादृशार्थबोधकत्वमेव कर्मलकारनिमित्तमित्यवश्यमा-श्रयणीयम्। तच्चोपसर्गयोगमन्तरा न संभवतीति पूर्वं धातुरुपसर्गेणेति पक्ष आवश्यक एव। प्रत्येति प्रत्यय इत्यादिरूपं तु पूर्वं धातुः साधनेन युज्यते; पश्चादुपसर्गेणेति पक्षमाश्रित्य साधनीयम् इदं हि पक्षद्वयं लक्ष्यानुरोधात् व्यवस्थितमित्यलम्। अवस्थेति। आगन्तुकापृथक्सिद्धधर्मेत्यर्थः। प्रमेयत्वादिक-मादाय शब्दादावतिव्याप्तिवारणाय आगन्तुकेति। आगन्तुकत्वं—स्वाश्रयसमानकालिकप्रागभावप्रति-योगित्वम्। न तु जन्यत्वमात्रम्। शब्दादावपि शक्तिस्वीकारपक्षेऽतिव्याप्तितादवस्थ्यात्। अद्रव्येषु शक्तेः सहजत्वमेवेति न स्वाश्रयसमानकालिकप्रागभावप्रतियोगित्वसंभवः। आधेयतासंबन्धेन गगनादिमत्त्वमादाय शब्दादौ तद्दोषतादवस्थ्यवारणायापृथक्सिद्धत्वनिवेशः। गगनस्यापि हि स्वाश्रयीभूतब्रह्मनिष्ठप्रागभाव-प्रतियोगितया आगन्तुकत्वसंभवः। ननु गगनादेरपि ब्रह्मापृथक्सिद्धतया तद्दोषतादवस्थ्यम्। अपृथक्सिद्धिसंबन्धेनागन्तुकधर्मवत्त्वविवक्षायां धर्मे अपृथक्सिद्धित्वविशेषणवैयर्थ्यम्। स्वापृथक्सिद्ध-धर्मवत्त्वं तस्य लक्षणमित्युक्तौ त्वननुगमात् सामान्यलक्षणत्वहानिरिति चेन्न; अपृथक्सिद्धसंबन्धेन आगन्तुकधर्मवत्त्वस्यैव लक्षणतया विवक्षितत्वात्। धर्मे अपृथक्सिद्धत्वविशेषणं तु अपृथक्सिद्धे लक्षणतावच्छेदक[संबन्धः]त्वतात्पर्यग्राहकमेव; ईश्वरेऽपि, "नित्यं विभुं सर्वगतम्" इति श्रुत्या सर्वद्रव्य संयुक्तत्वसिद्ध्या अनवरतपरिस्पन्दमानपवमानादिसंयोगसत्त्वान्नाव्याप्तिः। अतथाभूतमिति। अपृथक्-सिद्धिसंबन्धावच्छिन्नागन्तुकधर्मत्वावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदवदित्यर्थः॥

ननु द्रव्याद्रव्यभेदोऽसिद्धः, रूपादेराश्रयाभावात्, निराधाराः निर्धर्मकारूपादय एव पदार्था इति वैभाषिकोक्तरीत्याऽभ्युपगमसंभवात्। अथवा, एकस्यैव द्रव्यस्य रूपादितया भ्रान्तिविषयत्वसंभवेन रूपादेर्न तात्त्विकत्वं स्वीकार्यम्। अतो द्रव्याद्रव्यभेदेन प्रमेयविभागोऽनुपपन्न इत्याशङ्कायामाह प्रत्यक्षादीति। रूपी घट इति प्रत्यक्षादीत्यर्थः। अनेन हि प्रत्यक्षेण रूपघटयोः आश्रयाश्रयिभावलक्षणभेदो गृह्यते। आदिना घटादिकं रूपादिभिन्नं अवस्थाश्रयत्वात्। यन्नैवं तन्नैवम्, यथा रूपादिकमित्याद्यनुमानसंग्रहः। ननु रूपरूपिप्रभृतीनां भेदग्राह्युक्तप्रत्यक्ष चन्द्रभेदग्राहि प्रत्यक्षमिव भ्रान्तिरूपमेव; ततश्च सौगतनयेना-

द्रव्यविभागः । न सौगताद्विनयेनान्यतरनिह्नवः शक्यः । रूपरूपिप्रभृतीनामबाधितानन्यथासिद्धभेदव्यवहारात् । रूपस्पर्शनियताभ्यां दर्शनस्पर्शनाभ्यां तदाश्रयैकार्थप्रतिसन्धानात् । ग्राह्यसङ्घातभावेऽपि ग्राहकयोर्विषयनियमानतिलङ्घनात् । सङ्घातोपाधेश्चैकस्यान्यस्यासिद्धेः ।

---

**र-न्या सिद्ध इति** । मतद्वयसाधारणं दूषणमाह—**रूपरूपीति** । **प्रभृ**तिशब्देन रसतद्वदादिकं गृह्यते । चन्द्रद्वित्वादिव्यवहारवन्न बाधितत्वम्, न वा घटाकाशादिव्यवहारवदुपाधिभेदविषयत्वेनान्यथासिद्धत्वमित्याह **अबाधितानन्यथासिद्धेति** । **व्यवहारादिति** । अत्र **व्यवहार**शब्दोऽभिज्ञाभिलपनसाधारणो द्रष्टव्य। धर्म्यभावपक्षं दूषयति **रूपस्पर्शनियताभ्यामिति** । अस्ति हि दृष्टमेव स्पृशामीति द्वीन्द्रियग्राह्यवस्तुविषया धीः ; न चैषा रूपाद्यतिरिक्तद्वीन्द्रियग्राह्यतदाश्रयद्रव्याभावे घटत इत्यर्थ । ननु रूपस्पर्शयोः प्रतिनियतेन्द्रियग्राह्यत्वेऽपि एकसङ्घातभावापन्नत्वात् द्वीन्द्रियग्राह्यत्वमप्यस्त्वित्याशङ्क्याह – **ग्राह्यसङ्घातभावेऽपीति** । दर्शनस्पर्शनग्राह्ययो रूपस्पर्शयोः सङ्घातभावेऽपि ग्राहकयोः दर्शनस्पर्शनेन्द्रिययोः स्वस्वविषयनियमातिलङ्घनाभावात् । **अन्यथा सङ्घातदशायामन्धस्य त्वचा रूपग्रहणप्रसङ्गादित्यर्थः** । **सङ्घातभावेऽपीत्यपि**शब्दसूचितां सङ्घातभावानुपपत्तिं दर्शयति—**सङ्घातोपाधेश्चेति** । संहन्यमानेषु वस्तुषु एकोपाध्यवच्छेदव्यतिरिक्तस्य सङ्घातस्यानुपलब्धिपराहततया एकोपाध्यवच्छेद एव सङ्घातशब्दार्थो

---

**र-पे** न्यतरापलापः संभवत्येवेत्यत **आह न सौगतेति** । **प्रभृतिशब्देन रसतद्वदादिकं गृह्यते** । **अबाधितेति** । चन्द्रभेदग्राहिप्रत्यक्षस्य **न द्वौ** चन्द्रावित्यदुष्टकारणजन्यप्रत्यक्षप्रमित्या बाधात् भ्रान्तित्वेऽपि इह तादृशबाधाभावान्न भ्रान्तित्वसंभवः—**अन्यथा सौगताभिमतस्वलक्षणज्ञानस्यापि** भ्रान्तित्वप्रसङ्ग इति भावः । **अनन्यथासिद्धेति** । इदं च घटाकाशादिभेदव्यवहारवत् उपाधिभेदविषयकत्वशङ्कावारणाय । **व्यवहारेति** । इह **व्यवहारशब्देन अभिज्ञानरूपं प्रत्यक्षं तत्कार्यशब्दप्रयोगश्च गृह्यते**—ततश्च प्रागुक्तस्य रूपरूपिभेदग्राहिप्रत्यक्षस्य बाधान्यथासिद्ध्योरभावात् तद्भेदापलापासंभवेन दर्शितं मतद्वयमप्यनुपपन्नमित्युक्तं भवति । एवं मतद्वयसाधारणं दूषणमभिधाय **आश्रयो** नास्तीति पक्षं विशिष्यापि दूषयति **रूपस्पर्शनियताभ्यामिति** । **आश्रयाभावपक्षेऽपि हि रूपादीनां चक्षुराद्येकैकेन्द्रियग्राह्यत्वमेव स्वीक्रियते;** **ततश्च दृष्टमेव स्पृशामीति द्वीन्द्रियग्राह्यवस्तुविषयया, बुद्ध्या तादृशस्य कस्यचिद्वस्तुनः सिद्धौ तं पक्षीकृत्य** चाक्षुषविषयत्वेन स्पर्शादिभेदः, स्पार्शनविषयत्वेन रूपादिभेदश्च साधनीय इति भावः । **अत्रायमनुमानप्रयोगः**—चाक्षुषविषयत्वस्पार्शनविषयत्वोभयवद्वस्तु रूपादिभिन्नं स्पार्शनविषयत्वात्, स्पर्शवत्। **एवं रूपदृष्टान्तेन चाक्षुषविषयत्वेन स्पर्शादिभेदसाधनं** बोध्यम् । ननु रूपस्पर्शयोरेकैकेन्द्रियग्राह्यत्वेऽपि संघाताभावापन्नयोर्द्वीन्द्रियग्राह्यत्वस्यापि संभवादप्रयोजकमनुमानमित्यत **आह ग्राह्यसंघातभावेऽपीति** । **विषयनियमानतिलङ्घनादिति** । चक्षुषः स्पर्शग्राहकत्वम्, त्वचो रूपग्राहकत्वं वा न संभवतीत्यर्थः । **अन्यथा संघातदशायामन्धस्य त्वचा रूपग्रहणम्, अस्पृशतश्चक्षुषा स्पर्शग्रहणं** च प्रसज्येतेति भाव. । ननु **सङ्घातभावरूपदोषवशेन रूपस्पर्शयोरभेदभ्रमरूपैवेयं दृष्टमेव स्पृशामीति** प्रत्यभिज्ञेति न ततो द्वीन्द्रियग्राह्य**वस्तुविशेषसिद्धिः**—ततश्चोक्तानुमाने आश्रयासिद्धिरित्यत **आह संघातोपाधेरिति** । **एकस्यान्यस्येति** ।

**देशकालयोस्तथाभूतयोस्त्वयाऽनभ्युपगमात् । अभ्युपगमेऽपि तदैक्येन संहतावतिप्रसङ्गात् । एककार्यकारणकत्वादेश्चासिद्धेः । सिद्धावतिप्रसङ्गस्य दुर्वारत्वात् ।**

---

**रं-व्या.** वाच्यः तादृशश्चोपाधिर्न दृश्यत इत्यर्थः. ननु देशरूपस्य कालरूपस्य वा उपाधेः संभवादेकदेशोपाध्यवच्छिन्नत्वम् एककालोपाध्यवच्छिन्नत्वं वा सङ्घातशब्दार्थः स्यादित्याशङ्क्याह **देशकालयोरिति । अनभ्युपमादिति** । न च त्वन्मते देश आकाशादिरूपः ; तस्य त्वया आवरणाभावमात्रत्वेनाभ्युपगमात् । नाप्युपादानरूपः ; रूपस्पर्श(रस)दीनां भिन्नक्षणोपादानत्वाभ्युपगमात् । एकोपादानत्वे तु तदेवोपादानं द्रव्यमित्यस्मदिष्टसिद्धेः । पृथिव्यादिदेशैक्यात् सङ्घातत्वे तु पृथिव्यादेरपि सङ्घातरूपतया तत्सङ्घातेऽपि सङ्घातान्तरापेक्षयाऽनवस्थाप्रसङ्गात् । कालस्य चानभ्युपगमादिति भावः । **तदैक्येनेति**—एकदेशनिष्ठत्वमात्रेण संहतावभ्युपगतायामित्यर्थः । **अतिप्रसङ्गादिति**—एकदेशवर्तिनां भिन्नकालानामपि सङ्घातप्रसङ्गादित्यर्थः. । ननु कार्यकारणयोः सङ्घातोपाधित्वमस्तु; तथाच एककार्यकत्वात्, एककारणकत्वाद्वा सङ्घातः स्यादित्याशङ्क्याह-**एककार्येति** । रूपस्पर्शक्षणानां भिन्नभिन्नकार्यकारणकत्वादित्यर्थः **अतिप्रसङ्ग-**

---

**र-पे.** एकोपाध्यवच्छिन्नत्वातिरिक्तस्य सङ्घातस्यानुपलम्भादेकोपाध्यवच्छेद एव सङ्घातपदार्थो वाच्यः । स च भवन्मते न संभवति; तादृशोपाध्यसिद्धेः । तन्निश्चो रूपप्रत्यभिज्ञाया भ्रमत्वासंभवेन नोक्ताश्रयासिद्धिरिति भावः। इदमुपलक्षणम्—सङ्घातदशायामेव रूपस्पर्शयोर्भेदस्य, रूपं न स्पर्श इत्यादिप्रत्यक्षेण स्पष्टं गृह्यमाणत्वेन तयोरभेदभ्रमासंभवात् उक्तप्रत्यभिज्ञायास्तदतिरिक्तविषयकप्रमात्वमेवावश्यकम्, बाधकाभावादित्यपि बोध्यम् । ननु देशरूपस्य कालरूपस्य वा सङ्घातोपाधेः संभवादेकदेशवर्तित्वमेककालवर्तित्वं वा सङ्घातः स्यादित्याशङ्क्याह **देशकालयोरिति । अनभ्युपगमादिति** आकाशस्याऽऽवरणाभावरूपत्वाङ्गीकारात् कालस्य स्वरूपेणैवानाश्रयणादिति भावः । ननु घटादिरूपस्य रूपादिसङ्घातस्य भूतलादिरूपैकदेशवृत्तितया सङ्घातत्वोपपत्तिः न च भूतलादेरपि रूपादिसङ्घातत्वायाऽऽश्रयान्तरान्वेषणे तस्यापि तद्रूपतया तथात्वायाऽऽश्रयान्तरमन्वेषणीयमित्यनवस्थाप्रसङ्ग इति वाच्यम् ; तस्याश्रयपरम्परारूपतया प्रामाणिकत्वेनादोषत्वात् । एवं अतिरिक्तकालानुपगमेपि घटपटादीनामेव इदानीमित्यादिप्रतीतिनियामकत्वेन कालरूपत्वाङ्गीकारात् एककालवृत्तित्वेनापि सङ्घातोपपत्तिरित्यत आह **अभ्युपगम इति । तदैक्येनेति** । देशैक्येन कालैक्येन वेत्यर्थः। **संहताविति** । एकदेशवृत्तित्वस्य एककालवृत्तित्वस्य वा सङ्घातरूपत्व इत्यर्थः। **अतिप्रसङ्गादिति** । भिन्नकालिकानामेकदेशवर्तिनां, भिन्नदेशीयानामेककालवर्तिनां च सङ्घातप्रसङ्गेनाभेदभ्रमप्रसङ्गादित्यर्थः । एतेन एकबुद्धिविषयत्वं सङ्घात इत्यपि प्रत्युक्तम् ; भिन्नकालिकानामपि सङ्घातप्रसङ्गात् । न च एककालावच्छिन्नैकदेशवर्तित्वमेव सङ्घात इति नोक्तदोषावसर इति वाच्यम्; तथासत्यपि वायुदीपप्रभयोरेकभूतलादिसंबन्धदशायां प्रभारूप-वायुस्पर्शयोरपि एकसङ्घातप्रसङ्गादिति भावः । ननु कार्यकारणयोः सङ्घातोपाधित्वमस्तु ; तथाचैककार्यकत्वं एककारणकत्वं वा सङ्घातः स्यात्; अत आह **एककार्येति । असिद्धेरिति** । रूपस्पर्शक्षणानां भिन्नभिन्नकार्यकारणकत्वादिति भावः। पूर्ववर्तित्वाविशेषात् सर्वेषां कारणत्वाभ्युपगमात् नासिद्धिरित्यत आह **सिद्धाविति । अतिप्रसङ्गस्येति** । भिन्नदेशवर्तिनामपि

एकस्मिन्नेव सन्निकर्षविप्रकर्षादिना पटुपटुप्रत्ययात् । वैयधर्म्याधिक्यन्यूनतोल्लेखमन्तरेण तयोरसम्भवात् । तत्रैवोदयविलयभाजामवस्थानामध्यक्षसिद्धत्वात् । एकक्षणेऽप्येकस्मिन् श्यामत्व-युवत्वाद्यनेकधर्मदर्शनात् । पीतशङ्खभ्रमादौ श्वैत्यानुपलम्भेऽपि शङ्खादिप्रतिसन्धानात् । तस्यैव च तदैव शुक्लतयाऽन्यैरुपलम्भात् । क्षणभङ्गस्य निराकरिष्यमाणत्वात् ।

**रं-व्या.** **स्येति** । एककार्यकारणकानामपि भिन्नदेशवर्तिनां सङ्घातत्वाभावादिति भावः ।

बुद्ध्यन्तराणि च धर्मधर्मिभेदसाधकान्याह **एकस्मिन्नेवेति** । **विप्रकर्षादिनेति आदिपदेन** आलोक-बहुलत्वविरलत्वादिकं गृह्यते . ततश्च स्फीतालोकमध्यवर्तिनि सन्निकृष्टे च घटे विशदा प्रतीतिर्जायते, दूरे च विरलालोके अविशदेति सिद्धम् । प्रतीत्योश्च वैशद्यावैशद्ये न भूयोल्पधर्मविषयत्वातिरेकेण सुवचे इति धर्मधर्मिणोर्द्वयोरपि प्रतीतिसिद्धतया न धर्मोऽपह्नवार्ह इति भावः । **तत्रैवेति**। पूर्वापरकालवर्तिन्येकस्मिन्नेव मृद्द्रव्ये उदयविलयभाजां तदाश्रितानां पिण्डत्वघटत्वकपालत्वाद्यवस्थानामुपलम्भान्न धर्मधर्मिभेदनिह्नवः शक्य इति भावः। एकस्मिन्नेव वस्तुनि कालभेदेनानेकधर्मवत्तायां प्रमाणमुपन्यस्य एककालेऽनेकधर्मवत्तायां प्रमाणमाह **एकक्षणेऽपीति** । यद्वा उदयविलयवत्त्वतच्छून्यत्वरूपविरुद्धधर्माश्रयत्वेन एकत्वाभावमुपपाद्य एकानेकयोस्तादात्म्यमनुपपन्नमित्याह **एकक्षणेऽपीति** । **श्वैत्याद्यनुपलम्भेऽपीति** । ततश्चानुपलभ्यमान-श्वैत्यस्य उपलभ्यमानशङ्खस्य च ऐक्यं न सम्भवतीति धर्मधर्मिभेदसिद्धिरिति भावः । ननु–पीतत्वप्रतीतिक्षणे श्वेतक्षणात्मा शङ्खो नष्टः ; वस्तुतः पीत एव शङ्ख उत्पन्नः क्षणभङ्गादित्याशङ्क्याह **तस्यैव चेति** ।

**र-पे.** सङ्घातप्रसङ्गस्येत्यर्थः। पूर्ववर्तित्वादिविशेषेण उक्तरीत्या कारणत्वस्य भवद्भिरभ्युपगन्तव्यत्वादिति भावः।

बुद्ध्यन्तराण्यपि धर्मधर्मिभेदसाधकान्याह **एकस्मिन्नेवेति** । विप्रकर्षादीति **आदिनाऽऽलोकबहळत्व-**विरळत्वादिकं गृह्यते । सन्निकृष्टे बहळालोकमध्यवर्तिनि च घटे विशदा प्रतीतिर्जायते । विप्रकृष्टे विरळालोक-वर्तिनि च अविशदा । तत्र प्रतीत्योर्वैशद्यावैशद्ये भूयोधर्मविषयकत्वाल्पधर्मविषयकत्वे एव ; अन्यस्य दुर्वचत्वात् । ततश्च धर्मधर्मिभेदस्य प्रत्यक्षसिद्धतया न तदपह्नवः शक्य इति भावः । **तत्रैवेति** । पूर्वापरकाल-वर्तिन्येकद्रव्य एवेत्यर्थः । **उदयविलयभाजाम्**–उत्पत्तिविनाशवतीनाम् । **अध्यक्षं**–प्रत्यक्षम् । एकस्मिन् मृद्द्रव्ये हि पिण्डत्व-घटत्व-कपालत्वाद्यवस्था उत्पत्तिविनाशयोगिन्यः प्रत्यक्षमीक्ष्यन्ते । प्रत्यक्षसिद्धे द्रव्ये तत्तदवस्थाप्रागभावकालीनत्व-तद्ध्वंसकालीनत्वादिभिर्वस्त्वन्तरदृष्टान्तेन तद्भेदः साधनीय इति भावः । धर्म-धर्मिणोरभेदे बाधकतर्कमभिप्रेत्याह **एकक्षणेऽपीति**। यदि धर्मधर्मिणोरभेदः स्यात्, तर्हि श्यामत्वादीनां युवत्वादिभेदो न स्यात्; तदभिन्नाभिन्नस्य तदभिन्नत्वनियमादिति तर्कोऽत्राभिप्रेतः । **श्वैत्यानुपलम्भेऽपि शङ्खादिप्रतिसन्धानादिति** । ततश्च शङ्खः श्वैत्यभिन्नः श्वैत्याविषयकप्रतीतिविषयत्वात्, नीलघटवत् । यत्र यदविषयकप्रतीतिविषयत्वं तत्र तद्भिन्नत्वमिति सामान्यव्याप्तिर्वा । ननु पीतत्वप्रतीतिक्षणे श्वेतरूपात्मकशङ्खो नष्टः ; पीत एव शङ्खस्तदानीं जातः ; क्षणभङ्गाङ्गीकारात् । इत्थंच श्वेतशङ्खेषु न श्वैत्याविषयकप्रतीति विषयत्वमस्ति, पीतशङ्खे तत्सत्त्वेपि तत्र श्वैत्यभेदस्यास्माभिरभ्युपगतत्वात् तत्र तत्साधने सिद्धसाधनमेवेत्यत आह **तस्यैवेति** । **तदैव शुक्लतयाऽन्यैरुपलम्भादिति** । तथाच क्षणभङ्गेपि न तदानीं पीतशङ्खोत्पत्तिसंभवः

सर्वेष्वपि भ्रमेष्वधिष्ठानभूतस्वरूपग्रहेऽपि विशेषाग्रहावश्यम्भावात्। तद्ग्रहेण च भ्रमोपमर्दाङ्गीकारात्। एतेन निर्विशेषैकब्रह्माधिष्ठानविश्वभ्रमवादोऽपि निर्मूलः।

न च सहोपलम्भनियमान्नीलतदाधारादेरभेदः; एकसामग्रीवेद्यत्वनियमात् तदुपपत्तेः। सहत्वतन्नियमाभ्यां भेदस्यैव स्थिरीकरणेन व्याघातात्। समस्य च सहोपलम्भनियमस्य शङ्खश्वैत्या-

---

र-व्या. सर्वेष्वपीति। अधिष्ठानेऽध्यस्तव्यावर्तकधर्मादर्शनात् भ्रमः, तद्धर्मदर्शनाच्च भ्रमनिवृत्तिरिति हि लोकसिद्धम्। इदञ्च निर्धर्मकत्ववादिनो न स्यादित्यर्थः। ननु गुणगुणिनौ मिथोऽभिन्नौ, सहोपलम्भनियमवत्त्वात्, मृद्घटवदित्यनुमानादभेदमा[द इत्या? ]शङ्क्याह न च सहोपलम्भेति। तदुपपत्तेरिति। सहोपलम्भनियमोपपत्तेरित्यर्थः। सहत्वेति। सहत्वस्य भेदगर्भतया तन्नियमस्य भेदनियमे हेतुत्वेन प्रत्युत विरुद्धत्वादित्यर्थः। किञ्च सहोपलम्भनियम इति कोऽर्थः? यदुपलम्भयोः समा व्याप्तिः तयोरभेद इति वा, उत यदुपलम्भयोर्व्याप्तिमात्रं तयोरभेद इति वा इति विकल्प्य आद्यं दूषयति — समस्य चेति। असिद्धेरिति। शङ्खे पीतत्वप्रतीतिदशायां शङ्खोपलम्भे सत्यपि श्वैत्यानुपलम्भादिति भावः।

---

र-पे. निर्दोषपुरुषान्तरप्रत्यक्षविरोधादिति भावः। धर्मधर्मिणोरभेदे बाधकतर्कान्तरमभिप्रयन्नाह सर्वेष्वपीति। स्वरूपग्रहेपीति। तस्य भ्रमहेतुत्वेन सत्त्वावश्यकत्वादिति भावः। विशेषाग्रहावश्यम्भावादिति। अधिष्ठानभूत शुक्त्याद्यसाधारण शुक्तित्वाद्यग्रहावश्यम्भावादित्यर्थः। कुतस्तदवश्यम्भाव इत्यत्राह तद्ग्रहेणेति। उक्तविशेषग्रहेणेत्यर्थः। भ्रमोपमर्दाङ्गीकारादिति। भ्रमानुत्पादाङ्गीकारादित्यर्थः। तथाच उक्तविशेषग्रहस्य भ्रमविरोधितया तदभाव आवश्यक इति भावः। अनेन च. यदि धर्मधर्मिणोरभेदः स्यात्; तर्हि कचिदपि भ्रमो न स्यादिति तर्क उक्तो भवति। धर्मधर्मिणोरभेदे हि अधिष्ठानभूतशुक्त्यादिगतयोरिदन्त्वशुक्तित्वाद्योरपि परस्परं भेदो न संभवति; उभयोरपि धर्म्यभिन्नत्वात्, तदभिन्नाभिन्नस्य तदभिन्नत्वनियमात। ततश्चाधिष्ठाने शुक्तित्वग्रहे शुक्तौ रजतमिति भ्रम इव इदन्त्वग्रहे इदं रजतमिति भ्रमोऽपि न संभवतीति। एतेनेति। धर्म्यतिरिक्तविशेषाभावे भ्रमासंभवप्रतिपादनेनेत्यर्थः। निर्विशेषेति। स्वातिरिक्तविशेषशून्येत्यर्थः। निर्मूल इति। उपपत्तिशून्य इत्यर्थः॥

ननु घटादिकं नीलाद्यभिन्नम्, नीलाद्युपलम्भसाहित्यनियमवदुपलम्भ विषयत्वात् मृद्घटवदित्यनुमाने घटादौ नीलाद्यभेदसिद्धिरिति शङ्कते न चेति। भेदे सत्यपि एकसामग्रीवेद्यत्वनियमेन सहोपलम्भनियमोपपत्त्या अप्रयोजकमनुमानमित्याह एकसामग्रीति। दर्शित हेतोर्भेदैकसाधकतया विरुद्धत्वमेवेत्य ह सहत्व-तन्नियमाभ्यामिति। साहित्यं हि भेदघटितम्, तद्भिन्नत्वे सति तदधिकरणवृत्तित्वरूपम्; स्वस्मिन् स्वसाहित्यव्यवहारविरहात्। इत्थं च तदुपलम्भसाहित्यवदुपलम्भ विषयत्वमेव तद्भेदसाधकम्। विषययोर्भेदाभावे एकोपलम्भे अपरोपलंभत्वावच्छिन्नप्रतियोगिताकभेदासंभवात्। ततश्च तदुपलम्भसाहित्यनियमवदुपलम्भविषयत्वस्य तद्भेदसाधकत्वं कैमुतिकन्यायेन सिद्धमिति भावः। अत्र तदुपलम्भसाहित्यनियमवदुपलम्भविषयत्वं तदुपलम्भसाहित्यसमनियतस्वोपलंभत्वकत्वं वा, तादृशसाहित्यव्याप्यस्वोपलम्भत्वकत्वं वा, स्वोपलंभसाहित्यव्याप्यतदुपलंभत्वकत्वं वेति विकल्प्य आद्ये दूषणमाह समस्य च सहोपलम्भ

द्रावसिद्धेः । असमस्यापि गन्धादौ । भास्वराध्वन्ताभास्वररूपाभ्यामनैकान्तत्वाच्च । न च ग्राहक-भेदाद् ग्राह्यभेद इव; अन्योन्याश्रयणात्; चक्षुःश्रोत्रादिभेदस्य रूपादिग्राह्यभेदोपाधित्वात् ।

---

**रं-व्या.** द्वितीयं दूषयति **असमस्यापीति** । **गन्धादाविति** असिद्धेरित्यनुषज्यते । ततश्च गन्धतदाश्रययोः परस्परं विनापि परस्परस्य भानादसमोऽपि नियमस्तत्रासिद्ध इत्यर्थः । सहोपलम्भनियमरूपहेतोरसिद्धिमुक्त्वा व्यभिचारमप्याह-**भास्वराध्वान्तेति** । घटादिगतस्याभास्वररूपस्य आलोकगतभास्वररूपेण सहैवोपलम्भात् तदभेदस्याभावात् व्यभिचार इत्यर्थः । अन्धकारगताभास्वररूपस्य भास्वररूपं विनापि भानात् **अध्वान्ते**-त्युक्तम्। तथाचान्धकारव्यतिरिक्तद्रव्यगताभास्वररूपस्य भास्वररूपेण सहैव भाननियमात् व्यभिचार इत्यर्थः। **भास्वरत्वं** परप्रकाशकत्वम् । नन्वस्तु दृष्टमेव स्पृशामीति प्रतिसन्धानबलादिन्द्रियग्राह्यं किञ्चित् । तत्तु रूपस्पर्शाद्यात्मकमिति वा तदाश्रय इति वा न सहामहे । तेषामेवाभावात् । एकस्मिन्नेव वस्तुनि चक्षुरादिग्राहकभेदात् तत्तद्रूपादिधर्मधीः । यथा मणिकृपाणादिव्यञ्जकभेदात् मुखादेरणुत्वपृथुत्वमलिनत्व विमलत्वादिधीरित्याशङ्क्याह **न च ग्राहकभेदादिति** । ग्राहकभेदोपाधिका ग्राह्यभेदधीरिति वदन् वादी प्रष्टव्यः, किं घटपटादिषु दृष्टभेदस्याकाशेऽध्यासवदध्यासः, उत सत्तया इन्द्रियभेदेन विषयभेद-भ्रान्तिः इति विकल्प्य आद्यं दूषयति **अन्योन्याश्रयणादिति** । तदेवोपपादयति—**चक्षुश्श्रोत्रादीति** ।

---

**र-पे. नियमस्येति** । तदुपलंभसाहित्यसमनियतस्योपलम्भत्वकत्वस्येत्यर्थः । **शङ्खश्वैत्यादाविति** । समनियतत्वस्य व्याप्यत्वे सति व्यापकत्वरूपतया पीतशङ्खभ्रमे शङ्खोपलंभत्वे पि श्वैत्योपलंभसाहित्य विरहेण व्यभिचारात् शङ्खोपलंभत्वे श्वैत्योपलम्भसाहित्यव्याप्यत्वासंभवादिति भावः द्वितीयं दूषयति **असमस्यापीति** । सहोपलंभनियमस्य-तदुपलंभसाहित्य व्याप्यत्वोपलंभत्वकत्वस्य, स्वोपलंभ साहित्य व्याप्य तदुपलंभत्वकत्वस्य वा । **गन्धादाविति** । असिद्धेरित्यनुषज्यते । गन्धमुपलंभमन्तरा चक्षुरादिना पृथिव्या द्युपलंभात्, पृथिव्युपलंभमन्तरेण वायवानीतसुरभिनागादौ गन्धमुपलंभाच्च पृथिव्युपलंभत्वे गन्धाद्युपलंभसाहित्यव्याप्यत्वस्य, गन्धमुपलंभत्वे पृथिव्युपलंभसाहित्य व्याप्यत्वस्य वा अभावा दिति भावः । यद्यपि द्वितीयकल्पस्यापि शङ्खश्वैत्यादवसिद्धिरस्ति, तथापि कल्पद्वयेऽपि एकत्र दूषण-संपादनाय स्थलान्तरानुधावनम् । असिद्धिमुक्त्वाऽनैकान्त्यमाह **भास्वरेति** स्वघटभास्वररूपस्य आलोक गतभास्वररूपेण सहैवोपलम्भात् तयोर्भेदस्य च संप्रतिपन्नत्वात् तत्र व्यभिचार इत्यर्थः। अन्धकारगताभा-स्वररूपस्य भास्वररूपं विनाऽप्युपलम्भात् **अध्वान्ते**त्युक्तम् । भास्वरत्वं [पर?]प्रकाशकत्वं शक्तिविशेष पर्यवसितम् । अद्रव्येपि शक्त्यङ्गीकारात् । तदनभ्युपगमे तु द्रव्यगताया एव शक्तेः सामानाधिकरण्येन वैशिष्ट्यं बोध्यम्। ननु प्रत्यक्षबलात् कस्यचिद्वस्तुनः स्वीकरणीयत्वेऽपि तस्य रूपाद्यात्मकत्व रूपाद्याश्रयत्वं वा नाश्रयणीयम्; मणिकृपाणादिव्यञ्जकभेदेन मुखादेरणुत्वपृथुत्वमलिनत्वविमलत्वादिबुद्धिवत् एकस्यैव चक्षुरादिग्राहकभेदेन रूपादिविभ्रमोपपत्तेरित्याशङ्क्याह **न च ग्राहकभेदादिति** । **ग्राह्यभेद इवेति** इवशब्देन ग्राह्यभेदस्यापारमार्थ्यं बोध्यते । अत्र च ग्राहकभेदस्य घटाकाशादिभेदधीहेतुभूत-

ग्राहकभेदेऽपि च ग्राह्यैक्यप्रतीतेरुदाहृतत्वात्। ग्राहकैक्येऽपि नीलपीतादिग्राह्यभेददर्शनात्, अन्यत्र च तदविशेषात्। अत एव स्पर्शाद्येकद्वित्रिचतुःस्वभावचातुर्विध्याणुचतुष्कवादो निरस्तः।

द्वितीयमन्वयव्यतिरेकाभ्यां दूषयति—**ग्राहकभेदेऽपीत्यादिना**। **उदाहृतत्वादि**ति। दृष्टमेव स्पृशामीति प्रतीतेरित्यर्थः। **अन्यत्रे**ति। नीलपीतादिभेदप्रतीतेर्ग्राहकभेदोपाधिकत्वाभावेन स्वाभाविकतया तत्प्रतीत्या नीलपीतादिभेदस्य प्रामाणिकत्वे सिद्धे तत्तुल्यतया रूपस्पर्शादिभेदः सिध्यति। न हि नीलपीतादिभेदप्रतीत्यपेक्षया रूपस्पर्शादिभेदप्रतीतौ मात्रयापि वैषम्यं दृश्यत इति भावः। **अत एवे**ति। धर्मधर्मिभेदप्रतीतेरेवेत्यर्थः। **स्पर्शादी**ति। स्पर्शमात्रस्वरूपपरमाणुसङ्घातो वायुः, रूपस्पर्शरूपाणुसङ्घातस्तेजः, रूपस्पर्शरसस्वरूपाणुसङ्घातो जलम्, रूपस्पर्शरसगन्धस्वरूपाणुसङ्घातः पृथिवी। अतो न धर्मधर्मिभेदः; अत एव द्वीन्द्रियग्राह्यत्वमुपपद्यत इति वदन्तोऽपि निरस्ता इत्यर्थः। इदमुपलक्षणम्। एकस्यानेकस्वभावत्वायोगात् तदभ्युपगमे वा जैनमतावतारात्, अनेकधर्मवत्त्वे च असन्न्तसिद्धेरित्यादीन्यपि दूषणानि द्रष्टव्यानि।

ननु योऽयं रूपादिर्यस्य गुणत्वेनाभिमतः, स स्वशून्ये वर्तते, उत स्वविशिष्टे? नाद्यः व्याघातात्।

घटादिभेदस्येव ज्ञानस्यैव तदुपयोगित्वम् उत चन्द्रभेदज्ञानादिहेतुभूततिमिरादेरिव स्वरूपसत एवेति विकल्पमभिप्रेत्याऽऽद्ये दूषणमाह **अन्योन्याश्रयणादि**ति। तदेवोपपादयति। **चक्षुश्श्रोत्रादी**ति। **ग्राह्यभेदोपाधित्वादि**ति **ग्राह्यभेदः उपाधिः=ज्ञापकः** यस्येति बहुव्रीहिवशात् रूपादिग्राह्यभेदज्ञानाधीनज्ञानविषयत्वादित्यर्थः। अयं भावः—चक्षुश्श्रोत्रादीन्द्रियाणामतीन्द्रियतया न तद्भेदः प्रत्यक्षेण ग्रहीतुं शक्यते—किन्तु श्रोत्रं चक्षुर्भिन्नं रूपाग्राहकत्वादित्यनुमानेनैव ग्राह्य—तत्र शब्दरूपयोर्भेदग्रहमन्तरेण शब्दग्राहके श्रोत्रे रूपग्राहकत्वनिर्णयायोगात् ग्राह्यभेदज्ञानाधीनोक्तहेतुज्ञानजन्यस्य ग्राहकभेदज्ञानस्य ग्राह्यभेदज्ञानहेतुत्वमन्योन्याश्रयप्रसङ्गान्न संभवतीति। द्वितीयं दूषयति **ग्राहकभेदेऽपीत्यादिना**। ग्राहकभेदे सत्यपि दृष्टमेव स्पृशामीति ग्राह्यैक्यप्रतीतेरुदाहृततया ग्राहकभेदाभावेऽपि चक्षुषा नीलपीतादिग्राह्यभेदप्रतीत्या चान्वयव्यतिरेकाभ्यां व्यभिचारात् ग्राहकभेदस्य ग्राह्यभेदप्रतीतिहेतुत्वं न संभवतीत्यर्थः। **अन्यत्र च तदविशेषादि**ति रूपस्पर्शादिभेदप्रतीतौ नीलपीतादिभेदप्रतीत्यपेक्षया वैषम्यादर्शनादित्यर्थः। तथ च नीलपीतादिभेदप्रतीतेर्ग्राहकभेदोपाधिकत्वाभावेन स्वाभाविकतया तत्प्रतीत्या नीलपीतादिभेदस्य प्रामाणिकत्वसिद्धिवत् उक्तरीत्या रूपस्पर्शादिभेदप्रतीतेरपि ग्राहकभेदोपाधिकत्वासंभवेन स्वाभाविकत्वावश्यकतया रूपस्पर्शादिभेदस्यापि प्रमाणिकत्वमावश्यकमिति भावः। **अत एवे**ति। रूपवत् स्पर्शवदित्यादिना धर्मधर्मिभावेन भेदस्य प्रत्यक्षसिद्धत्वादेवेत्यर्थः। **स्पर्शाद्येकेत्यादि**। स्पर्शमात्रस्वरूपपरमाणुसङ्घातो वायुः, रूपस्पर्शरूपपरमाणुसङ्घातस्तेजः, रूपस्पर्शरसरूपपरमाणुसङ्घातो जलम्, रूपस्पर्शरसगन्धरूपपरमाणुसङ्घातः पृथिवीति मतमित्यर्थः। **निरस्त इति**। इदमुपलक्षणम्—एकस्यानेकस्वभावत्वायोगः, तदभ्युपगमे च जैनमतावतार इत्यपि बोद्धव्यम्।

ननु रूपादीनां धर्मिणि वृत्त्यभ्युपगमे किं स्वशून्ये वृत्तिः, स्वविशिष्टे वा; आद्ये व्याघातः, द्वितीये

एवञ्च वैशिष्ट्यमपि तात्त्विकम्, विकल्पश्चाबाधितः प्रमाणमिति सिद्धम् । सम्बन्धानुपपत्त्यादिप्रलापस्तु तर्काङ्गपञ्चकान्यतमहान्यादिविध्वस्तः ॥

न द्वितीयः; स्वविशिष्टे स्वस्य वृत्तौ विशिष्टान्वयिनो विशेषणान्वयावश्यम्भावेन स्वस्य स्ववृत्तित्वप्रसङ्गात् । अतो धर्मस्य धर्मिणि वृत्त्यनुपपत्त्या धर्मधर्मिणोः वैशिष्ट्याभावात् परमार्थस्वलक्षणवस्तुमात्रविषयं निर्विकल्पकमेव प्रमाणम् इति शङ्कां निरस्यति एवञ्च वैशिष्ट्यमपीति । अनुभवसिद्धत्वाविशेषात् वैशिष्ट्यमपि तात्त्विकमिति भावः । विकल्पश्चेति—सविकल्पकमपीत्यर्थः । ननु पूर्वोक्तवैशिष्ट्यानुपपत्तीनामबाधितत्वात् कथं प्रमाणमित्याशङ्क्याह सम्बन्धानुपपत्त्यादीति । आदिपदेन सम्बन्धिनोर्वर्तमानः सम्बन्धः किं प्रतिसंबन्धि कार्त्स्न्येन वर्तते, उत एकदेशेन? आद्ये-उभयत्र वृत्तिर्न स्यात्; एकत्र कार्त्स्न्येन वर्तमानस्यापरत्र वृत्त्यसम्भवात् । द्वितीये सांशत्वप्रसङ्गः । किञ्च धर्मः किं धर्मिणोऽन्यः, उतानन्यः? आद्ये भिन्नस्यापि धर्मत्वे कुड्यस्यापि गोधर्मता स्यात् । अभिन्नत्वे च धर्मधर्मिभावासम्भवः इत्यादिकं ग्राह्यम् । तर्काङ्गपञ्चकेति । यदि धर्मः स्वविशिष्टवृत्तिः स्यात्, स्ववृत्तिः स्यात् । यदि धर्मधर्मिसंबन्धः एकत्र पर्याप्तवृत्तिः स्यात्, अन्यत्र न स्यात् । यद्युभ वृत्तिः स्यात्, सांशः स्यादित्यादित्वदुक्ततर्काणां प्रसञ्जकप्रसञ्जनीयव्याप्ति-प्रतितर्कप्रतिघात-प्रसञ्जनीयविपर्ययपर्यवसान-प्रसञ्जनीयानिष्टत्व-परपक्षासाधकत्वरूपतर्काङ्गपञ्चकान्यतमहानिविध्वस्तत्वादित्यर्थः । अत्र यद्यपि धर्मधर्मिभावमात्रप्रत्याख्याने ऽङ्गपञ्चकहानिः सुवचा, तथापि प्रतिपक्षासाधकत्वादिरूपाणामभावरूपधर्माणामधिकरणस्वरूपाभिन्नानां सम्भवमभिप्रेत्य अन्यतमहानिरित्युक्तम् ॥

परश्शतेति— वादिभिः परश्शतं परिक्षोदं कृत्वाऽपि स्वोक्तिनिर्वाहार्थं उपलम्भबलमेव पुरस्करणीयम् । तदुपलम्भबलं प्रथमं धर्मधर्मिभाव एव किं न गृह्यत इत्यर्थः । स्थेयमिति—स्थातव्यमित्यर्थः ।

---

स्वस्मिन्नपि वृत्तिप्रसङ्गः; विशिष्टे अन्वीयमानस्य विशेषणेप्यन्वयावश्यम्भावात्, अतो धर्मस्य धर्मिणि वृत्त्यनुपपत्त्या धर्मधर्मिणोर्वैशिष्ट्यविरहात् परमार्थस्वलक्षणवस्तुमात्रविषयं निर्विकल्पकमेव प्रमाणम्-न सविकल्पकमिति शङ्कां निरस्यति एवं चेति । धर्मधर्मिणोरिव वैशिष्ट्यस्यापि अबाधितप्रत्यक्षसिद्धत्वाविशेषेणेत्यर्थः। वैशिष्ट्यमपि तात्त्विकमिति। अन्यथा धर्मधर्मिणोरप्यतात्त्विकत्वापत्त्या शून्यवादप्रसङ्ग इति भावः। ननु संबन्धानुपपत्तेरुक्तत्वात् कथमिदमित्यत आह संबन्धानुपपत्त्यादीति । आदिना संबन्धिद्वये वर्तमानः संबन्धः किमुभयत्र कार्त्स्न्येन वर्तते-उतैकदेशेन, आद्ये उभयत्र वृत्तिर्न संभवति-एकत्र कार्त्स्न्येन वर्तमानस्यान्यत्र वृत्त्यसंभवात्, द्वितीये सांशत्वप्रसङ्ग इत्यादिकं गृह्यते । तर्काङ्गपञ्चकान्यतमहान्यादिविध्वस्त इति । तर्कस्य हि पञ्चाङ्गानि— आपाद्यापादकयोर्व्याप्तिः, प्रतितर्केणाप्रतिहतिः आपाद्यविपर्ययपर्यवसानम्, आपाद्यस्यानिष्टत्वम्, परपक्षासाधकत्वं चेति । एतदन्यतमहान्यादिविध्वस्त इत्यर्थः । अयं भावः— रूपादेः स्वशून्यवृत्तित्वे व्याघातप्रसङ्गः, स्वविशिष्टवृत्तित्वे स्ववृत्तित्वप्रसङ्ग इत्यनयोस्तर्कयोरापादकाभावादेव निरासः; स्वशून्यवृत्तित्वस्य स्वविशिष्टवृत्तित्वस्य वाऽनुपगमात् । स्वोपलक्षितधर्मिमात्रवृत्तित्वं हि रूपादीनामङ्गीकृतम् । ततश्च यदि स्वोपलक्षितधर्मिमात्रवृत्तित्वं स्यात्, तर्हि स्ववृत्तित्वं स्यादित्यापादने आपाद्यानिष्टत्वसत्त्वेपि आपाद्यापादकयोर्व्याप्तिर्नास्तीति । अत एवान्यतमेत्युक्तम् । हान्यादी-

किञ्च, परश्शतपरिक्षोदात्परस्तादपि वादिभिः। उपलम्भबले स्थैर्यं तदादौ किं न गृह्यते ॥५॥
इदमित्थन्त्वयोः किञ्चित् यदि केनापि भज्यते। इदं नास्तीति वाचोऽपि भङ्गोऽन्यतरभङ्गतः॥
विसंवादादिसाध्येषु विकल्पत्वादिहेतवः। व्याकुलाः पक्षहेत्वादिबाधाबाधविकल्पतः॥ ६॥

---

उपलम्भबलमेव शरणीकरणीयम्, इतरथा त्वदुक्ततर्काङ्गभूतव्याप्त्यादीनामप्यसिद्धेरिति भावः। **इदमित्थन्त्वयोरिति**। यदि केनापि हेत्वाभासेन धर्मधर्मिणोरन्यतरभङ्गः—तदा इदं नास्तीति तद्भङ्गप्रतिपादकमपि वचनं व्याहतार्थमेव स्यात्, तेनापि वाक्येन इदमंशस्य धर्मिणो नास्तित्वरूपधर्मस्य प्रतिपादनात् धर्मधर्मिभावाप्रतिपादकवाक्यस्यैवाभावादित्यर्थः। **विसंवादादीति**। विप्रतिपन्नः स्तम्भादिस

---

त्यादिना दर्शितापादकाभावपरिग्रहः। उपलम्भबलेनैव धर्मधर्मिभावसिद्धौ किमधिकविचारेणेत्याह **किञ्चेति**। परश्शतविचारकरणेपि तत्तत्स्वोक्तार्थनिर्वाहाय उपलंभबलमेवावलम्बनीयम्। तत् धर्मधर्मिभावविषय एव कुतो नावलंब्यत इत्यर्थः। उपलंभबलानवलंबने हि तर्काङ्गभूतव्याप्त्यादिकमेव न सिद्ध्येदिति भावः। धर्मधर्मिभावं निरस्यतां स्ववचनविरोधमाह **इदमित्थंत्वयोरिति**। धर्मिधर्मयोरित्यर्थः। **किञ्चित्**-धर्मिस्वरूपं धर्मस्वरूपं वा। **केनापि भज्यत इति**। हेत्वाभासेन तर्काभासेन वा निरस्यत इत्यर्थः। **इदं नास्तीत्यादि**। धर्मिस्वरूपं वा धर्मस्वरूपं वा नास्तीति प्रतिज्ञावचनमेव न संभवति-तस्य इदंत्वावच्छिन्ने धर्मिणि नास्तित्वरूपधर्मप्रतिपादकतया व्याघातादित्यर्थः। ननु स्तम्भादिप्रत्ययो भ्रमः-सविकल्पकत्वात्, शुक्तिरजतप्रत्ययवदित्याद्यनुमानेन सविकल्पकमात्रस्य भ्रमत्वसिद्ध्या कथमुपलम्भबलेन धर्मधर्मिभावसिद्धिरित्याशङ्क्याह **विसंवादादीति** बाधितविषयत्वरूपभ्रमत्वादीत्यर्थः। **आदिना** प्रमात्वाभावपरिग्रहः। न च भ्रमत्वं तदभाववति तत्प्रकारकत्वम्। तत्र तच्छब्देन स्तंभत्वादिग्रहणे दृष्टान्ते साध्यवैकल्यम्, रजतत्वादिग्रहणे च बाध इति वाच्यम्—प्रकारताविशिष्टविशेष्यतानिरूपकत्वरूपानुगतभ्रमत्वस्यैव साध्यत्वात्। वैशिष्ट्यं स्वाश्रयाभाववन्निष्ठत्व, स्वनिरूपितत्वोभयसंबन्धेन। यद्यपि सौगतमते असद्विषयकत्वमेव भ्रमत्वम्, तथापि असत्ख्यातिनिरासादुक्तरूपमेव तत् वाच्यम्। **विकल्पत्वादीति**। सप्रकारकत्वरूपसविकल्पकत्वादीत्यर्थः। **आदिना** तुरीयविषयताशालिज्ञानत्वरूपनिर्विकल्पकत्वाभावपरिग्रहः। यद्यपि सिद्धान्तिमते तुरीयविषयताया अप्रसिद्ध्या तद्घटितहेत्वप्रसिद्धिः, तथापि प्रकारतादित्रितयातिरिक्तत्वरूपतुरीयत्वेन निरूपकतासंबन्धेन विषयता नास्तीति प्रतीतिसिद्धस्य तुरीयत्वावच्छिन्नविषयतानिष्ठप्रतियोगिताकाभावस्य हेतुत्वेन विवक्षिततया न दोषः। सिद्धान्तिमते व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्योक्ताभावस्य प्रसिद्धिसंभवात्। तुरीयविषयतास्वीकर्तृमतेऽपि वह्नित्वेन महानसीयवह्निघटान्यतराभावादेरिवोक्ताभावस्यापि प्रसिद्धिरुपपद्यते; समान्यरूपेण विशेषाभावानात्मकत्वात्। तुरीयविषयतायाः, व्यधिकरणधर्मावच्छिन्नप्रतियोगिकाभावस्य चानुपगमे स्वाश्रयविषयतानिरूपकत्वसंबन्धावच्छिन्नोक्ततुरीयत्वावच्छिन्नप्रतियोगिताकाभावस्य व्यधिकरणसंबन्धावच्छिन्न-

अतः सिद्धोऽयं तात्त्विकद्रव्याद्रव्यविभागः ॥

(द्रव्यस्थिरत्वनिरूपणम्)

तानि च द्रव्याणि स्थिराण्येव । क्षणभङ्गे प्रमाणाभावात् । स हि प्रत्यक्षतः, अनुमानतो वा? नाद्यः; प्रत्यक्षस्य विपरीतरूपत्वात् । प्रत्यभिज्ञाप्रत्यक्षेण स्थिरत्वस्यैव सिद्धेः । भ्रान्तिरियमिति चेन्न, कारणदोषबाधकप्रत्ययाभावे तत्त्वायोगात् । यौक्तिकबाधेन दोषोऽनुमीयत इति चेत्, केयं युक्तिः?

विकल्पकप्रत्ययो विसंवादी सविकल्पकत्वात् सम्प्रतिपन्नवदित्यनुमानं न सविकल्पकाप्रामाण्यसाधकम्, हेत्वादिज्ञानानां किं बाधितविषयत्वम्, उत अबाधितविषयत्वम्? आद्ये, बाधासिद्ध्यादिदोषः । द्वितीये तस्मिन्नेव पक्षे हेत्वादिज्ञानरूपसविकल्पके विसंवादित्वरूपसाध्याभावात् व्यभिचार इत्यर्थः ॥

तत्त्वायोगादिति—भ्रान्तित्वायोगादित्यर्थः ।

प्रतियोगिताकाभावात्मकस्य हेतुता बोद्धव्या । व्याकुला इति । दुष्टा इत्यर्थः । पक्षहेत्वादिबाधाबाधविकल्पत इति । पक्षहेतुसाध्यानां पक्षतावच्छेदकाश्रयभावतद्वत्त्वविकल्पादित्यर्थः । अयं भावः—पक्षः किं पक्षतावच्छेदकाभाववान्, उत तद्वान् । आद्ये आश्रयासिद्धिः । द्वितीये सविकल्पकत्वरूपहेतुमति पक्षतावच्छेदकविशिष्टपक्षज्ञाने उक्तसाध्याभावात् व्यभिचारः। एवं हेत्वादावपि विकल्पेन हेत्वप्रसिद्धिसाध्याप्रसिद्धिव्यभिचाराः बोध्याः । द्रव्याद्रव्यविभागस्य तात्त्विकत्वमुपसंहरति अत इति ।

क्षणभङ्गं निरसितुमारभते तानिचेत्यादिना । स्थिराण्येवेति । स्ववृत्तित्व, स्वध्वंसाधिकरणकालवृत्तित्वोभयसंबन्धेन कालविशिष्टान्येवेत्यर्थः । एवकारेण क्षणभङ्गव्यवच्छेदः । क्षणभङ्ग इति स्वोत्पत्तिद्वितीयक्षणवृत्तिध्वंसप्रतियोगित्व इत्यर्थः । स्वोत्पत्तिकत्व, स्वाव्यवहितोत्तरक्षणवृत्तिध्वंसप्रतियोगित्वोभयसंबन्धेन क्षणविशिष्टत्व इति यावत् । प्रमाणाभावादिति । न हि प्रमाणमन्तरा किञ्चित् सिद्ध्येदिति भावः । प्रमाणाभावमेवोपपादयितुमाह स इति । प्रत्यक्षतोऽनुमानतो वेति प्रत्यक्षगम्योऽनुमानगम्यो वेत्यर्थः । शब्दादेः सौगतैः प्रमाणत्वानुपगमात्तन्न विकल्पकोट्यन्तर्भावः। विपरीतरूपत्वादिति । विरुद्धार्थग्राहकत्वादित्यर्थः । स्थिरत्वस्य सिद्धेरिति । सोऽयं घट इत्याद्याकारकेण प्रत्यभिज्ञाप्रत्यक्षेण घटादौ पूर्वापरकालद्वयसंबन्धस्य विषयीकरणादिति भावः । शङ्कते भ्रान्तिरिति । प्रत्यभिज्ञा भ्रान्तिः, संस्काराधीनज्ञानत्वात्, शुक्ताविदं रजतमिति ज्ञानवदित्यनुमानेन प्रत्यभिज्ञाया भ्रान्तित्वं सिद्ध्यतीति भावः । "शैत्यं हि यत् सा प्रकृतिर्जलस्य" इतिवत् इयमिति स्त्रीलिङ्गनिर्देशः । परिहरति कारणदोषबाधकप्रत्ययाभाव इति । दुष्टकारणजन्यत्वस्य ग्राह्याभावग्राह । प्रमितेश्चाभाव इत्यर्थः । तत्त्वायोगादिति । भ्रान्तित्वासंभवादित्यर्थः । अयं भावः—संस्काराधीनज्ञानत्वं स्मृतौ सुरभि चन्दनमिति चाक्षुषज्ञाने च व्यभिचरितम् । दुष्टकारणजन्यत्वस्य भ्रान्तित्वव्यापकताया निर्विवादतया प्रत्यभिज्ञायां दुष्टकारणजन्यत्वे प्रमाणाभावेन तदभावसिद्धेः पक्षे साध्यव्यापकाभावलक्षणो बाधश्च; तद्धेतावृद्धिं प्रति तद्व्यापकाभाववत्तानिश्चयस्यापि प्रतिबन्धकतयाऽस्यापि हि बाधत्वं नैयायिकग्रन्थेष्वभिधीयते । न च—दुष्टकारणजन्यत्वे प्रमाणाभावमात्रात् कथं तदभावः-न हि प्रमाणमन्तरेण किञ्चित् सिद्ध्येदिति-वाच्यम्;

करणाकरणाभ्यां सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्माध्यासप्रसङ्गात्मिका, समर्थश्चेत्, कुर्यादित्यकुर्वद्दशायामपि करणप्रसङ्गात्मिका वा इति चेन्न—सहकारिसन्निधौ कुर्वत्स्वभावत्वस्य, सहकार्य-

---

**करणाकरणाभ्यामि**ति । स्थिरत्ववादिभिर्हि अङ्कुरोत्पादनसामर्थ्यैकस्वभावमेव बीजं कुसूलनिक्षिप्ततादशायां न करोति, कृष्टक्षेत्रोप्ततादशायां तु करोतीत्यभ्युपेयते । तदयुक्तम्, करणाकरणसत्त्वे तत्प्रयोजकाभ्यां परस्परविरुद्धाभ्यां सामर्थ्यासामर्थ्याभ्यामपि[हि?] भवितव्यम् । यदि च विरुद्धधर्माध्यासभीत्या सामर्थ्यैकस्वभावत्वं स्वीक्रियते, तदा अकरणं वा परित्याज्यम्। अतः स्थिरत्वपक्षं परित्यज्य क्षणिकत्वपक्ष

---

प्रत्यभिज्ञा दुष्टकारणजन्यत्व-तदभावान्यतरवती प्रमेयत्वात्, ज्ञानत्वाद्वेत्यनुमानेन दुष्टकारणजन्यत्वे दोषादिकल्पनागौरवमिति तर्कसहकृतेन दुष्टकारणजन्यत्वाभावसिद्धेरभिप्रेतत्वात् । दुष्टकारणजन्यत्वे प्रमाणसत्त्वे तु तद्विरुद्धोक्ततर्कावतारासंभवात् तदभावस्य साधकत्ववानोयुक्तिः । एवमपि यदि बीजादिषु पूर्वापरकालवृत्तिसंबन्धाभावप्रमितिरूपो बाधकप्रत्ययः स्यात्, तदा तादृशसंबन्धाभाववति तादृशसंबन्धप्रकारकत्वमिति प्रतीत्या प्रत्यभिज्ञाया भ्रान्तित्वं सिद्ध्येत । तेन च दुष्टकारणजन्यत्वमपि सिद्ध्येत्; तस्य दुष्टकारणजन्यत्वव्याप्यत्वात् । स च बाधकप्रत्ययो नास्त्येवेति न प्रत्यभिज्ञाया भ्रान्तित्वसंभव इति । बाधनिश्चयस्त्व-मेवाहक्ने **लौकिकबाधेनेति** । उक्तप्रत्ययेन बीजादिषु पूर्वापरकालसंबन्धाभावनिश्चयेनेत्यर्थः । **दोषोऽपि**=कारणदोषोऽपि । दुष्टकारणजन्यत्वमपीति यावत् । **उन्नीयते**—अनुमीयते । उक्तरीत्या तद्व्याप्यभ्रान्तित्वनिश्चयसंभवादिति भावः । यद्यपि प्रत्यभिज्ञाया भ्रान्तित्वसिद्ध्यैव परस्य समीहितसिद्धिः—तथापि दुष्टकारणजन्यत्वग्राहकप्रमाणाभावे पूर्वोक्तरीत्या तदभावसिद्ध्या भ्रान्तित्वज्ञाने अप्रामाण्यज्ञानं स्यात्—व्यापकाभाववति व्याप्यप्रकारकत्वात् । तद्व्यापकाभाववति तत्प्रकारकत्वस्य तदभाववति तत्प्रकारकत्वव्याप्यत्वात् । अतो दोषोन्नयनाभिधानम् ।

**करणाकरणाभ्यामि**ति । **करणं** फलोपधानम्; फलाव्यवहितपूर्वक्षणवृत्तित्वरूपम् । **अकरणं** तदभावः । **सामर्थ्यासामर्थ्ये**ति । कार्यानुगुणशक्तितदभावेत्यर्थः । **अध्यासप्रसङ्गात्मिका**—संबन्धापत्त्यात्मिका । अयं भावः—कुसूलस्थबीजे अङ्कुरकरणं न दृश्यते । अतस्तत्र सामर्थ्याभाव आश्रयणीयः । क्षेत्रस्थबीजे तु अङ्कुरकरणं दृश्यत इति तत्र तत्सामर्थ्यमाश्रयणीयम् । इत्थं च कुसूलस्थबीजं यदि क्षेत्रस्थबीजाभिन्नं स्यात्, तर्हि सामर्थ्यासामर्थ्यरूपविरुद्धधर्मद्वयाश्रयं स्यादिति तर्केण पूर्वापरकालवर्तिबीजयोर्भेदसिद्धौ तदभेदावगाहिप्रत्यभिज्ञाया भ्रान्तित्वसिद्धिरिति । न च क्षेत्रस्थबीजाभिन्ने तस्मिन् सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्माश्रयत्वाभावेन आपाद्यापादकयोर्व्याप्तिविरहात् कथमुक्ततर्कसंभव इति वाच्यम्; यद्धर्माश्रयत्वे सति यद्धर्माश्रयाभेदो यत्र, तत्र तादृशधर्मद्वयवत्त्वम्, यथा द्रव्यत्वाश्रयत्वे सति नीलत्वाश्रयाभेदवति घटे नीलत्वद्रव्यत्वोभयाश्रयत्वमिति सामान्यव्याप्त्या असामर्थ्ये कुसूलस्थबीजे समर्थक्षेत्रस्थबीजाभिन्नत्वाभ्युपगमे असामर्थ्ये सति समर्थाभेदरूपापादकेन सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्माश्रयत्वप्रसङ्गस्योपपन्नत्वात् । **समर्थश्चेदिति** । कुसूलस्थबीजादिः क्षेत्रस्थसमर्थबीजाभिन्नश्चेदित्यर्थः । **कुर्यादिति** । अङ्कुराद्युत्पादकः स्यादित्यर्थः । **अङ्कुरदशायामपि करणप्रसङ्गात्मिकेति** । कुसूलस्था-

भावप्रयुक्तकार्याभाववत्त्वादेर्वा सामर्थ्यपदार्थत्वात्। ततश्च समर्थस्यैव करणाकरणयोः सहकारि-सान्निध्यसन्निधिप्रयुक्तत्वादेकत्र समावेशः। ननु तावप्येकस्य कथमुपपद्येते इति चेन्न, तत्तत्सामग्री-

---

एव स्वीकार्य इति भावः। सहकारिसन्निधाविति। न कुर्वद्रूपभावत्वमात्रं सामर्थ्यपदार्थः, येनाकरणं परिहर्तव्यं स्यादिति भावः। तावपीति। सहकारिसान्निध्यसन्निधी अपीत्यर्थः। तत्तत्सामग्रीति।

---

दशायामपि फलोपधानप्रसङ्ग इत्यर्थः। तेन नेष्टापत्तिरत्र इति भावः। फलोपधानमात्रापादने हि क्षेत्रस्थदशायां फलोपधानमादायेष्टापत्तिः स्यात्। न च क्षेत्रस्थसमर्थबीजाभेदस्याकुर्वद्रूपाभाविकरण-व्याप्यत्वविरहात् कथं तदापादनसंभव इति वाच्यम्; स्वाधिकरणक्षणत्वव्यापकफलाव्यवहितपूर्वत्वकत्व एवेहाऽऽपादनीयत्वात्। क्षेत्रस्थसमर्थबीजाभेदस्य तद्व्याप्यत्वानपायात्। तदापादनस्य चाकुर्वद्दशायां करणप्रसङ्ग एव पर्यवसानात्। न च तर्कस्य प्रमाणसहकारित्वमेव, न तु प्रमाणत्वम्। अतः कथं ततो भेदसिद्धिरिति वाच्यम्—प्रागुक्तरीत्या प्रमेयत्वेन भेदतदभावान्यतरसाधने उक्ततर्कसहकारेण भेदानुमितिसंभवात्। अनिष्टप्रसञ्जनरूपस्य तर्कस्यानुमानान्तर्भावपक्षेऽपि श्रीमन्न्यायपरिशुद्धौ दर्शिततथा तत्पक्षे केवलव्यतिरेकिणाऽप्यनुमितिसंभवाच्च। न चैवमुक्तक्रमेण कुसूलस्थबीजस्याङ्कुरकारिक्षेत्रस्थबीजाद्भेद-सिद्धावपि न क्षणभङ्गसिद्धिः, कुसूलस्थबीजस्याङ्कुरोत्पत्तिपूर्वतृतीयक्षणपर्यन्तस्थायित्वाभ्युपगमेऽपि बाधका-भावादिति वाच्यम्—अङ्कुरकारिबीजजननसमर्थतृतीयक्षणस्थबीजात् तदसमर्थचतुर्थक्षणस्थबीजस्य भेदः तृतीयक्षणस्थबीजजननसमर्थात् चतुर्थक्षणस्थबीजात् पञ्चमक्षणस्थबीजस्य भेदः इत्येवं प्रतिक्षणं बीजभेद-सिद्धिरित्यभिप्रायात्॥ आपादकाभावान्नोक्तापत्तिसंभव इत्यभिप्रायेण दूषयति नेति। असामर्थ्ये सति समर्थभेदरूपमापादकं नास्तीति वक्तुं सामर्थ्यपदार्थं निर्वक्ति सहकारीत्यादिना। सहकारिसन्निधौ कुर्व-द्रूपभावत्वं, सहकार्यविकरण-स्वाधिकरणक्षणत्वव्यापककार्याव्यवहितपूर्वत्वकत्वप्रयोजकीभूतधर्मवत्त्वम्। स च धर्मः शक्तिविशेषो जातिविशेषोऽन्यापोहो वेत्यन्यदेतत्। सहकार्यभावेति सहकार्यभावप्रयुक्तकार्या-भाववत्त्वं-सहकार्यभावप्रयोज्यकार्योपधायकत्वाभाववत्त्वम्। कुसूलस्थबीजादिनिष्ठाङ्कुरोपधायकत्वाभावो हि कृष्टक्षेत्रजलसंयोगादिरूपसहकार्यभावप्रयुक्त इति तत्र सामर्थ्योपपत्तिः। घटादिनिष्ठाङ्कुरोपधायकत्वा-भावस्तु स्वरूपयोग्यताविरहप्रयुक्तः, न सहकार्यभावप्रयुक्त इति न तेषां सामर्थ्यम्। न च क्षेत्रस्थबीजे फलोपधायके उक्तसामर्थ्यानुपपत्तिः, फलोपधायकत्वाभावरूपविशेष्यस्यैवाभावादिति वाच्यम्; कार्या-भावप्रयोजकीभूताभावप्रतियोगित्व(?)स्यैव सामर्थ्यरूपतया विवक्षितत्वात्। कार्याभाववत्त्वादेरित्यादिना अनन्यथासिद्धनियतपूर्ववृत्तितावच्छेदकधर्मस्वरूपस्य, शक्तिविशेषरूपस्य, अतिरिक्तपदार्थरूपस्य वा कारण-त्वस्य सङ्ग्रहः। सामर्थ्यपदार्थत्वादिति। तथा च कुसूलस्थबीजेऽपि सामर्थ्यानपायादसामर्थ्ये सति समर्थभेदरूपमापादकं नास्त्येवेति भावः। ननु सामर्थ्ये सति अकरणं नोपपद्यत इत्याशङ्क्याह ततश्चेति। सामर्थ्यस्योक्तरूपत्वे चेत्यर्थः। समर्थस्यैवेति। कुसूलस्थबीजादेः कथञ्चिदप्यसामर्थ्यासंभवात् अकरणदर्श-नेनासामर्थ्याश्रयणं न संभवतीति भावः। सहकारिसान्निध्यसन्निधीति। सहकारिसंबन्ध-तदभावेत्यर्थः।

सन्तानप्रतिनियतकालतया तदुपपत्तेः॥ तत्सामग्रीविशेषसम्बन्धासम्बन्धयोरपि चोद्यमपरिहार्यमिति चेन्न; भिन्नकालभाविसामग्रीविशेषादेव परिहृतत्वात्। तज्जातीयस्यैव बीजक्षणस्य समर्थ-

---

तत्तत्सहकारिसन्निध्यसन्निधिसामग्रीत्यर्थः। **सन्तान**त्यनेन सापि सामग्री पूर्वपूर्वसामग्र्यायत्तेति स्फोरयति। ततश्च यदा यत्सहकारिसन्निधिसामग्री, तदा तत्सहकारिसन्निधिर्भवतीति। अथवा **सन्तानशब्दः** पौष्कल्यपरः सम्बन्धपरो वेति। **भिन्नकालभावी**ति। सामग्रीविशेषाणां भिन्नकालभावित्वस्वभावत्वस्य

---

**एकत्र समावेश** इति। अतः करणाकरणयोरपि न भेदकत्वमिति भावः। **तावपी**ति। सहकारिसान्निध्यसान्निध्यावपीत्यर्थः। **कथमुपपद्येते** इति। प्रतियोग्यभावरूपतया परस्परविरोधादिति भावः। **तत्तत्सामग्रीसन्तानप्रतिनियतकालतये**ति। सहकारिसन्निध्यसन्निधिसामग्रीसन्तानवशेन विभिन्नकालतयेत्यर्थः। तथा च कालभेदान्न विरोधः, प्रतियोग्यभावयोरेककालावच्छेदेनैकाधिकरणवृत्तित्वस्यैवासंभवादिति भावः। साऽपि सामग्री पूर्वपूर्वसामग्र्यायत्तेति स्फोरणाय **सन्ताने**ति। परम्परेत्यर्थः। अथवा संतानशब्दः संबन्धपरः।

**शङ्कते तत्सामग्रीविशेषसंबन्धासंबन्धयोरपी**ति। सहकारिसंनिधि-सामग्रीविशेषसंबन्धासंबन्धयोरपीत्यर्थः। **अपि**ना सहकारिसंबन्धासंबन्धयोः करणाकरणयोश्च संग्रहः। **चोद्यमि**ति। कथं भिन्नकालिकत्वमित्याक्षेप इत्यर्थः। **भिन्नकालभाविसामग्रीविशेषादेवे**ति। सहकारिसंनिधि-सामग्रीविशेषसंबन्धसंपादकसामग्रीविशेषस्य भिन्नकालिकत्वादेवेत्यर्थः। तथाच भिन्नकालभावित्व-सामग्रीविशेषतदभावाभ्यां सहकारिसंपादकसामग्रीविशेषसंबन्धासंबन्धयोर्भिन्नकालिकत्वोपपत्त्या ततः सहकारिसन्निध्यादेरपि तदुपपत्तिरिति भावः। करणाकरणयोः सहकारिसन्निध्यसन्निधिप्रयुक्तत्वं सर्वैरप्याश्रयणीयमिति न तत्र चोद्यावकाश इत्याह **तज्जातीयस्यैवे**ति। कुसूलस्थबीजजातीयस्यैवेत्यर्थः। न हि कुसूलस्थबीजादङ्कुरकारिसमर्थबीजारंभकबीजे किञ्चिद्वैजात्यमुपलभ्यत इति भावः। **बीजक्षणस्ये**ति। बीजरूपक्षणस्येत्यर्थः। बौद्धमते हि वस्तुतः कालस्याभावात् घटादेरेव धर्मः स्वारसभङ्गुरतया क्षणकल्पनानिमित्तत्वेन, क्षण्यते=हिंस्यत इति व्युत्पत्त्या च क्षणशब्दार्थत्वम्। क्षणिकपरदेशस्तु वपुष्मान् शिलापुत्रक इतिवदौपचारिक इत्याहुः। **समर्थबीजारम्भे** अङ्कुरकारिबीजारम्भे। **एतदि**ति। कार्यारम्भस्य सहकारिसंनिधिप्रयुक्तत्वमित्यर्थः। **अपरिहार्यमि**ति। अन्यथा एकजातीयेष्वेव बीजेषु कस्यचिदेव समर्थबीजारम्भकत्वम्, नान्यस्येति नियमानिर्वाहादिति भावः। ननु कार्यारम्भस्य न सहकारिप्रयुक्तत्वमाश्रीयते, किंतु कार्याव्यवहितपूर्वक्षणस्वभावप्रयुक्तत्वमेव; तत एवोक्तनियमनिर्वाहात्। एकजातीयस्यापि क्षणान्तरस्य तादृशस्वभावविरहादेवानारम्भकत्वोपपत्तेः इत्याशङ्क्य उक्तस्वभाववादोऽस्मन्मतेऽपि तुल्य इत्याह **तत्पूर्वक्षणे**ति। समर्थबीजाव्यवहितपूर्वक्षणेत्यर्थः। **स्वभावा**दिति। यावदाश्रयभाविधर्मादित्यर्थः। स च धर्मः कारणात्मकः, तदवच्छेदकरूपात्मको वा। उपधायकत्वमिति शेषः। तथाचोक्तस्वभावप्रयुक्तमेव कस्यचिदुपधायकत्वम्; तदभावादेव चान्यस्यानुपधायकत्वमित्युक्तं भवति। अयं च भावः-अङ्कुरादिकार्यं प्रति कुर्वद्रूपत्वेनैव कारणता। कुर्वद्रूपत्वं चाङ्कुरादिकार्याव्यवहितपूर्ववृत्तयो यावत्यो बीजव्यक्तयः तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटावच्छिन्नप्रतियोगिताकभेदरूपः।

**बीजारम्भे** त्वयाऽप्येतत्परिहारार्थम् । **तत्पूर्वक्षणस्वभावादित्यपि** तत एव दत्तोत्तरम् । अन्यथा **अनुपलभ्यमानानन्तक्षणतत्स्वभावकल्पनागौरवप्रसङ्गात्** । अन्वयव्यतिरेकवतामपि सहकारिणामकार-

अपर्यनुयोज्यत्वादिति भावः । ननु कालभेदेन एकत्रैव सान्निध्यतदभावलक्षणविरुद्धधर्मसमावेशस्वीकारे गोत्वाश्वत्वादिलक्षणविरुद्धधर्माणामपि कालभेदेन समावेशसम्भावनया विरोधकथोच्छेदप्रसङ्ग इति चेन्न; यथादर्शनं व्यवस्थाया स्वीकर्तव्यत्वादिति भावः । उक्तमर्थं प्रतिबन्द्याऽपि स्थिरीकरोति **तज्जातीयस्यैवेति** । **बीजक्षणस्येति** । क्षण्यते हिंस्यत इति **क्षणः** । बीजरूपः क्षणः बीजक्षण इति समानाधिकरणसमासः । बौद्धमते वस्तुतः कालस्याभावात् घटादेरेवोक्ततः स्वरसभङ्गुरतया क्षणकल्पनानिमित्ततया, क्षण्यत इति व्युत्पत्त्या च क्षणशब्दार्थत्वात् । क्षणिकव्यपदेशस्तु वपुष्मान् शिलापुत्रक इतिवदौपचारिक इति तदुक्तेः । **त्वयाऽप्येतदिति** । एकजातीयेष्वेव बीजक्षणेष्वेक एव बीजक्षणः समर्थबीजक्षणारम्भकः, न तज्जातीयं क्षणान्तरमित्यत्र प्रतिनियतकालभाविसामग्रीविशेषसांनिध्यमहिमैव त्वयाऽपि शरणीकरणीय इत्यर्थः । ननु कालविशेषभाविसामग्रीसांनिध्यमहिमा न शरणीक्रियते ; अपितु समर्थबीजक्षणे तत्पूर्वक्षण एवारम्भकः, न तज्जातीयमपि क्षणान्तरम् ; तथैव स्वभावाभ्युपगमादित्याशङ्क्य स्वभाववादालम्बने अस्माकमपि सामग्रीविशेषाणां कालविशेषभावित्वे स्वभाव एव तवोत्तरं भविष्यतीत्यभिप्रयन् आह **तत्पूर्वक्षणस्वभावादित्यपीति** । ननु आवयोः स्वभाववादालम्बने अविशिष्टे त्वदीय एव मार्गः किमित्यनुसर्तव्य इत्याशङ्क्याह–**अन्यथेति**। ननु बीजं सहकार्यन्तरसमवधानदशायां अङ्कुरादिकार्यमारभते, नान्यदेत्ययुक्तम् । तेषां कारणत्वे हि तत्संनिधिरपेक्षितः स्यात् । नैतदस्ति । कुर्वद्रूपत्वप्रसङ्गादिति दूषणस्य सहकारिष्वपि समत्वात् । किञ्च यत् कारणं तत् स्वस्मिन्नेव कार्यजनकं दृष्टम्; यथोपादानमित्यतोऽपि न सहकारित्वाभिमतानां कारणत्वमित्याशङ्क्य, 'अन्वयव्यतिरेकावसेय-हेतुभावानामपि सहकारिणां परित्यागे पूर्वबीजक्षणस्याप्युत्तरबीजक्षणहेतुत्वं न स्यात्। तथा, "अधिपतिसहकार्यालम्बनसमनन्तरप्रत्ययाश्चत्वारोऽपि ज्ञानोत्पत्तिहेतवः" इति त्वदुक्तिविरोध. स्यादित्याह **अन्वयव्यतिरेकेति** ।

स चाखण्डोऽन्यापोहशब्दितः । तस्य च कारणविशेषणतया स्वरूपत एव भानात् तथैवावच्छेदकत्वाच्च न दुर्विज्ञानता–गौरवयोरवकाशः । तादृशकुर्वद्रूपबीजं प्रत्यपि तदव्यवहितपूर्ववृत्तिबीजस्योक्तविधान्यापोह-रूपेणैव हेतुतेत्येवं क्रमेणाङ्गीकारान्न काप्यतिप्रसङ्ग इति । **तत एवेति**। सहकारिसन्निधावेव कुर्वद्रूपात् स्वभावादेवेत्यर्थः । **दत्तोत्तरमिति** । कुसूलक्षेत्रस्थबीजयोरैक्येऽपि कुसूलस्थतादशायां करणप्रसङ्ग इत्येवं दत्तोत्तरमित्यर्थः । एवं पक्षद्वयस्यापि दुरुक्तत्वेऽस्मदीय एव पक्षः परिगृह्यतामित्यत आह **अन्यथेति** । क्षणभङ्ग इत्यर्थः । **अनुपलभ्यमानेति** । उपलम्भविरोधे हि लाघवं नादरणीयमिति भावः। **अनन्तक्षण-तत्स्वभावकल्पनेति** । अनन्तक्षणिकबीजानामनन्ततत्कारणतानां च कल्पनेत्यर्थः । सौगतमते हि एकबीजस्थाने अनन्तानि क्षणभेदभिन्नानि बीजानि स्वीक्रियन्ते । बीज-कृष्टक्षेत्रजलसंयोगादिगतकतिपय कारकतास्थाने क्षणभेदभिन्ना उक्तान्यापोहावच्छिन्ना अनन्ताः करणताः स्वीक्रियन्त इति सुस्पष्टमेव गौरवम् । ननु करणाकरणयोः सहकारिसन्निध्यसन्निधिप्रयुक्तत्वाभिधानमसङ्गतम् ; सहकारिणः कारणत्वस्यैवानुपगमात् । कारणत्वे सति हि तत्सन्निधिरपेक्षितः स्यादित्यत आह **अन्वयव्यतिरेकवता**

णत्वे दुर्निर्वहमुपादानस्यापि कारणत्वम् । यदि च कालभेदभिन्नयोरेव करणाकरणयोः सहकारिसन्निध्यसन्निध्योर्वा वस्तुभेदकत्वम्, देशभेदभिन्नयोरपि करणाकरणयोः सामर्थ्यासामर्थ्ययोः सहकारिसन्निध्यसन्निध्योर्वा तयोर्भेदकत्वप्रसङ्गेन क्षणेऽपि क्षुद्यमाने अनवधिकभेदप्रसङ्गेन कचिदेकं न सिध्येदिति शून्यवादप्रसङ्गः ।

---

**कालभेदभिन्नयो**रिति— भिन्नकालविषययोरित्यर्थः । एवं **देशभेदे**त्यत्रापि । **देशभेदे**ति —सर्वस्यापि बीजक्षणस्य सर्वदेशे कार्यानारम्भकत्वात् कश्चिद्बीजक्षणः कचिदेवाङ्कुरमुत्पादयति ; कचिदेव समर्थम्, नान्यत्रेति सिद्धम् । ततश्च **देशभेदेन** करणाकरणयोरपि विरुद्धत्वादेकोऽपि क्षणो भिद्येत ; इतरथा अत्र देशे कार्यवत् सर्वत्र कार्यं वा कुर्यात् । सामर्थ्यासामर्थ्यविरुद्धधर्माध्यासो मिति । **सहकारिणा**मिति । सहकारित्वेनाभ्युपगतानां कृष्टक्षेत्रजलसंयोगादीनामित्यर्थः । **दुर्निर्वहमुपादानस्यापि कारणत्वमि**ति । अङ्कुराद्युपादानत्वेन सर्वसंप्रतिपन्नस्य बीजादेरङ्कुरादिकारणत्वेऽन्वयव्यतिरेकयोरेव शरणीकरणीयत्वादिति भावः । इदमुपलक्षणम्—सहकारिणामकारणत्वे, "अधिपतिसहकार्यालम्बनसमनन्तरप्रत्ययाश्चत्वारोऽपि ज्ञानोत्पत्तिहेतवः" इति स्ववचनविरोध इत्यपि बोद्धव्यम् । उक्तं कालभेदेन करणाकरणादीनामविरोधादभेदकत्वं प्रतिबन्द्या स्वीकारयति **यदिचे**ति । **कालभेदभिन्नयोरेवे**ति । भिन्नकालावच्छिन्नयोरपीत्यर्थ. । **देशभेदभिन्नयोरपि**— भिन्नदेशावच्छिन्नयोरपि । अपिना दृष्टान्तार्थं भिन्नकालावच्छिन्नसङ्ग्रहः । **तयोः** पूर्वोक्तस्याश्रययोः । सप्तम्यर्थः षष्ठ्यर्थो वा विशेष्यत्वम् । **भेदकत्वप्रसङ्गेने**ति । परस्परभेदप्रकारकानुमितिजनकत्वप्रसङ्गेनेत्यर्थः । **क्षणेऽपि क्षुद्यमान** इति । एकस्मिन्नपि क्षणे इदं बीजमिहाङ्कुरं करोति, देशान्तरे तु न करोतीति प्रतीतिसिद्धाभ्यां करणाकरणाभ्यां सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्माध्यासप्रसङ्गेन कुर्वदकुर्वदंशभेदस्वीकारे कुर्वदंशेऽपि देशान्तरे करणाभावात् तत्राप्युक्तरीत्या अंशे भेद इत्येवं क्षणस्यापि क्षोद इत्यर्थः । **अनवधिकभेदप्रसङ्गेने**ति । अव्यवस्थितांशभेदपरम्परारूपानवस्थाप्रसङ्गेनेत्यर्थः. **क्वचिदेकं न सिद्ध्येदि**ति। कस्याप्येकस्य प्रमितिविषयत्वं न स्यादित्यर्थः । उक्तानवस्थया सर्वस्याप्यनुपपन्नतया ऐन्द्रजालिकप्रासादनिगरणादिवत् कस्यापि सत्यत्वासंभवादिति भावः । **शून्यवादप्रसङ्ग** इति । माध्यमिकाभिमतसर्वमिथ्यात्ववादप्रसङ्ग इत्यर्थः । ननु इदं बीजमिह करोति, देशान्तरे तु न करोतीति प्रतीत्या न देशान्तरावच्छेदेन एतद्बीजे करणाभावः सिध्येत ; देशान्तरस्यैतद्बीजासंबन्धित्वात् । अवच्छेद्याधिकरणासंबन्धिनोऽवच्छेदकत्वासंभवात् । अत एव द्रव्यत्वे गुणे न पृथिवीत्वसामानाधिकरण्यमिति प्रतीतेर्न गुणावच्छेदेन द्रव्यत्वे पृथिवीत्वे सामानाधिकरण्याभावविषयकत्वम् । किन्तु द्रव्यत्वनिष्ठपृथिवीत्वसामानाधिकरण्ये गुणावच्छेद्यत्वाभावविषयकत्वमेवेत्युक्तं दीधितिकारादिभिः । तद्रीत्यैवात्रापि करणे कार्याव्यवहितपूर्ववृत्तित्वरूपे देशान्तरावच्छेद्यत्वाभावविषयकत्वमेवोक्तप्रतीतेराश्रयणीयमिति कथमेकक्षण एव करणाकरणप्रसक्तिः ? कथन्तरां तन्निबन्धनक्षणक्षोद इति चेत्-एवं सति कुसूलस्थबीजे इदानीं न करोतीत्यकरणसाधकतयाऽभिमतप्रतीतेरपि नाकरणविषयकत्वम् ; करणाकरणयोरेकत्रासंभवरूपबाधसद्भावात् । किन्तु करणे कार्याव्यवहित-

**देशभेदे स्वसन्निध्यसन्निधिभ्यामेव तदुपपत्तिरिति चेन्न ; तयोरपि तद्वदेव विरुद्धयोर्भेदकत्वप्रसङ्गात् ॥**

वा स्यादित्यापादनस्य तौल्यादिति भावः। ननु बीजक्षणो यद्देशसन्निहितः, तत्रैव कार्यमुत्पादयति, नान्यत्रेति व्यवस्था सिध्यतीत्याशङ्क्य देशसन्निध्यसन्निधिरूपविरुद्धधर्माध्यासाद्भेदो दुष्परिहर इत्याह **देशभेद इति** ।

पूर्ववृत्तत्वरूपे एतत्कालानिरूपितत्वविषयकत्वमेवेत्याश्रयणीयम् । इत्थं च नोक्तविरुद्धधर्माध्यासादिप्रसङ्ग इति कथं क्षणभङ्गावकाशः यदि च इदानीं न करोतीति करणान्विततयैव नञर्थोल्लेखात् प्रतीतेः करणाभावविषयकत्वमेव स्वारसिकम् । करणाकरणयोरेकत्रासंभवरूपबाधकं तु क्षणभङ्गाङ्गीकारेणैव दुष्परिहरम् । एवं प्रतीतिस्वारस्यसिद्धाभ्यां करणाकरणाभ्यां क्षणभङ्गे सिद्धे अगत्या प्रत्यभिज्ञाया भ्रमत्वमेवाऽऽश्रयणीयमित्युच्यते ; तदा देशान्तरे न करोतीत्युक्तप्रतीत्याऽपि करणान्विततयोल्लिखितया स्वरसतः करणाभावस्यैव विषयीकरणीयतया प्रतीतिस्वारस्यानुरोधेनावच्छेद्याधिकरणासंबन्धिनोऽप्यवच्छेदकत्वम् एककालिकत्वादिसंबन्धस्यैव वाऽवच्छेदकतानियामकत्वमित्याश्रयणीयम् । इत्थंचोक्तरीत्या क्षणक्षोदेन शून्यवादसिद्धौ अगत्या घटादिसत्त्वप्रतीतेर्भ्रान्तित्वमेव स्वीकार्यमिति स्यात् । अतः करणाकरणयोर्भिन्नकालावच्छिन्नयोर्भिन्नदेशावच्छिन्नयोर्वा न भेदकत्वमित्येवाकामेनापि स्वीकार्यमित्यभिप्रायः। देशभेदेन करणाकरणयोरेकत्र न समावेश इति नोक्तरीत्या शून्यवादप्रसङ्ग इत्यभिप्रायेण शङ्कते **देशभेद इति** । **स्वसन्निध्यसन्निधिभ्यामेवेति** । स्ववृत्तिकरणाधिकरणत्वतदभावरूपाभ्यां स्वसंबन्धतदभावाभ्यामेवेत्यर्थः । **तदुपपत्तिरिति** । इह करोति, देशान्तरे तु न करोतीति प्रतीत्युपपत्तिरित्यर्थः । अयं भावः—इह करोतीत्यनेन एतद्देशाधिकरणकं करणमुल्लिख्यते; एतद्देशाधिकरणककरणञ्च एतद्देशावच्छिन्नं कार्याव्यवहितपूर्वक्षणनिरूपितमाधेयत्वम्, एतद्देशनिरूपितं कार्याव्यवहितपूर्वक्षणावच्छिन्नमाधेयत्वं वा । देशान्तरे न करोतीत्यनेन तु देशान्तराधिकरणकस्य करणस्याभाव उल्लिख्यते । न त्वेतद्देशावच्छिन्नं करणं, देशान्तरावच्छिन्नः करणसामान्याभावश्च । अतो विरोधाभावान्नोक्तरीत्या शून्यवादप्रसङ्ग इति । **देशभेद** इत्यादेः, स्वसंबन्धतदभावाभ्यां तत्तद्देशावच्छिन्नयोः करणाकरणयोरुपपत्तिरिति तु नार्थः । यथाकथंचिदेकस्मिन् क्षणे करणाकरणयोः समावेशाभ्युपगमे शून्यवादप्रसङ्गेन करणाकरणयोरुपपादनमात्रेण तत्परिहारासंभवेन शङ्काग्रन्थस्यैवानुत्थितिप्रसङ्गात् । अत्र च देशभेदेन करणाकरणावगाहिप्रतीतेरेकदेशाधिकरणककरणदेशान्तराधिकरणककरणाभावयोरेव विषयत्वमित्यभ्युपगम्योक्तशून्यवादपरिहारे, कालभेदेन करणाकरणावगाहिप्रतीतेरपि एककालावच्छिन्नं करणं कालान्तरावच्छिन्नस्य करणस्याभावश्च विषय इत्यभ्युपगमसंभवात् विरुद्धयोरेकत्र समावेशाप्रसक्त्या न क्षणभङ्गसिद्धिः। यदि च, कालान्तरे न करोतीत्यादिषु नञर्थ एव कालान्तरावच्छिन्नत्वोल्लेखानुभवात् कालान्तरावच्छिन्नस्य करणसामान्याभावस्यैव उक्तप्रतीतिविषयत्वमावश्यकमिति करणाकरणयोर्विरुद्धयोरेकत्र समावेशप्रसङ्गेन क्षणभङ्गसिद्धिरित्युच्यते, तदा देशान्तरे न करोतीत्यत्रापि करणाभाव एव देशान्तरावच्छिन्नत्वोल्लेखेन करणाकरणसमावेशावश्यम्भावेन उक्तरीत्या शून्यवादप्रसङ्ग इति । एतत् सर्वमभिप्रेत्य दूषयति **नेति** । **तयोरपीति** । पूर्वमस्तुतयोर्देशभेदभिन्नयोः करणाकरणायोरित्यर्थः । **तद्वदेवेति** । कालभेदभिन्नकरणाकरणादिवदेवेत्यर्थः । **विरुद्धयोरिति** ।

परस्परविरुद्धपूर्वापरकालसम्बन्ध एव एकस्य कथमिति चेन्न; स्वापेक्षया पूर्वापरत्वस्यासिद्धेः। न हि स्वप्रागभावप्रध्वंसावच्छिन्नकालसम्बन्धित्वं वस्तुनो ब्रूमः। अन्यापेक्षया पूर्वापरयोरपि कालयोरेतदपेक्षया स्वकालत्वे विरोधाभावः क्षणेऽपि स्वीकार्यः। यथा परमाणुद्वयापेक्षया पूर्वापरीभूतस्यापि तन्मध्यदेशस्य परमाण्वन्तरं प्रति स्वदेशतया न तस्य तत्सम्बन्धविरोधः। अन्यथा पूर्ववत् क्षणोऽपि क्षुण्णः।

---

मुखान्तरेण क्षणभङ्गमाशङ्कते **परस्परविरुद्धेति** । प्रागभावध्वंसावच्छिन्नकालवृत्तित्वलक्षणपूर्वापरकालसम्बन्धस्य विरुद्धत्वादिति भावः। ननु यत्किञ्चित्प्रतियोगिकप्रागभावध्वंसावच्छिन्नकालसम्बन्धित्वं विरुद्धमित्युच्यते, उत स्वप्रतियोगिकप्रागभावप्रध्वंसावच्छिन्नसमयवृत्तित्वम्? अन्त्यस्तु अनभ्युपगमादेव निरस्तः। प्रथमस्तु परैरभ्युपगन्तव्य इत्याह **स्वापेक्षयेत्यादिना** । **एतदपेक्षया स्वकालत्व इति** । एतदाधारकालत्व इत्यर्थः। यदि च स्वस्य स्वपूर्वापरकालसम्बन्धित्ववत् अन्यपूर्वापरकालसम्बन्धित्वमपि विरुद्धम्; तर्हि स्वस्य स्वपूर्वापरदेशसम्बन्धित्ववत् अन्यपूर्वापरदेशसम्बन्धित्वमपि विरुद्धमेवेति त्वदभिमतक्षणपरमाण्वाधारदेशक्षणस्यापि परमाणुरूपस्य परमाणुरूपदेशान्तरापेक्षया पूर्वतया परतया च तत्सम्बन्धस्यापि भेदकत्वं स्यादिति भावः।

---

उभयत्रापि नञर्थ एव सप्तम्यर्थावच्छिन्नत्वोल्लेखाभ्युपगमावश्यंभावादिति भावः। **भेदकत्वप्रसङ्गादिति** । अतः शून्यवादापत्त्या करणाकरणयोरवच्छेदकभेदेन एकत्र समावेशो न विरुद्ध इति अकामेनापि स्वीकार्यमिति नोक्तरीत्या क्षणभङ्गः सिद्ध्येदिति भावः। ननु पूर्वापरकालरूपावच्छेदकभेदेन करणाकरणयोरेकत्र समावेशसंभव इत्ययुक्तम्; अवच्छेद्याधिकरणासंबन्धिनोऽवच्छेदकत्वासंभवात् न हि परस्परविरुद्धपूर्वापरकालसंबन्ध एकस्य संभवतीत्यभिप्रायेण शङ्कते **परस्परेति** । स्वस्मिन् स्वप्रागभावावच्छिन्नकालसंबन्धः स्वध्वंसावच्छिन्नकालसंबन्धश्च न संभवति; न तु वस्त्वन्तरप्रागभावध्वंसावच्छिन्नकालसंबन्धः। ततश्च परस्परप्रागभावध्वंसाधिकरणतया पूर्वापरभावापन्नयोः कालयोरेकवस्तुसंबन्धस्याविरुद्धतया नोक्तशङ्कावकाश इति समाधत्ते **नेति** । **स्वापेक्षया पूर्वापरत्वस्यासिद्धेरिति** । स्वाधिकरणकाले स्वापेक्षया पूर्वापरत्वस्यैवासंभवादित्यर्थः। इह तादृशकालसंबन्धाभिधाने दोषो दुर्वार इत्यत आह **नहीति** । एकक्षणमात्रवर्तिन्यपि अन्यापेक्षया पूर्वापरकालसबन्धस्य स्वीकार्यतया अनेककालसंबन्धिनि कैमुतिकन्याय एवेत्यभिप्रेत्याह **अन्यापेक्षयेति** एतदपेक्षया **स्वकालत्वे**–एतदधिकरणकालत्वे **क्षणेऽपीति** एकक्षणमात्रवर्तिन्यपीति भावः। अत्र चैकस्यैव क्षणस्य तदन्यैकापेक्षया पूर्वत्वं तादृशान्यापेक्षया चापरत्वं बोध्यम्। **पूर्वापरयोरिति** द्विवचनं पूर्वत्वापरत्वरूपधर्मद्वित्वाभिप्रायम्; नीलघटयोरभेद इतिवत्। तथैव च पदार्थतावच्छेदकभेदात् द्वन्द्वः। कालाविरोधं देशदृष्टान्तेनोपपादयति **यथेति** । **परमाणुद्वयापेक्षया पूर्वापरीभूतस्यापीति** । एकपरमाण्वपेक्षया प्राग्देशरूपस्य परमाण्वन्तरापेक्षया प्रत्यग्देशरूपस्यापीत्यर्थः। **परमाण्वन्तरं प्रति स्वदेशतया**–परमाण्वन्तराधारदेशतया। **अन्यथेति** । उक्तकालदेशसंबन्धस्य विरुद्धत्वे इत्यर्थः। **क्षणोऽपि क्षुण्ण इति**। तथा च शून्यवादप्रसङ्ग इति भावः।

तथापि पूर्वापरकालयोस्तदुपाध्योर्वा विरुद्धयोस्तेजस्तमसोरिव कथमेकत्र समावेशः ; अविरोधे तु यौगपद्यप्रसङ्ग इति चेन्न । यौगपद्ये हि तयोर्विरोधः ; न त्वेकवस्तुसम्बन्धे । अन्यथा एकज्ञानसम्बन्धेऽपि विरोधप्रसङ्गेन प्रत्यभिज्ञास्वरूपस्यानुपपत्तिप्रसङ्गात् । यदि पुनः कालयोः स्वरूपभेदेन तादात्म्यविरोधो विवक्षितः, तर्हि रूपरसयोरिव नैकवस्तुसम्बन्धं प्रतिभन्त्स्यति ।

---

ननु प्रागभावध्वंसावच्छिन्नकालसम्बन्धो विरुद्ध इति न ब्रूमः ; येनैवमुच्येत । अपितु कालद्वयसम्बन्धो विरुद्ध इत्येव । न च कालद्वयसम्बन्धयोरविरोधः सुवचः, तद्यौगपद्यप्रसङ्गादित्याशङ्कते **तथापि पूर्वेति** । स च विकालभेदानभ्युपगन्तारं प्रत्याह **तदुपाध्योर्वेति** । **अन्यथैकज्ञानेति** । यदि एकस्मिन् वस्तुनि वस्तुद्वयसम्बन्धनत्वं विरुद्धम्, तर्हि एकस्मिन् ज्ञाने विषयद्वयसम्बन्धोऽपि विरुद्ध इति कालद्वयविषयकप्रत्यभिज्ञादिकं नोपपद्येत इत्यर्थः । यद्वा विरुद्धयौगपद्यानां कालभेदेनाप्येकत्र समावेशाभावे विरुद्धयौगपद्ययोरभिज्ञाप्रत्यभिज्ञयोरप्येकस्मिन् आत्मनि समावेशो न स्यादित्यर्थः ॥ भिन्नकालद्वयसम्बन्धमात्रं विरुद्धमिति न ब्रूमः ; अपितु कालयोः परस्परभिन्नत्वात् कालान्तरतादात्म्येन विरुध्यते । ततश्च भिन्नकालद्वयतादात्म्यस्य परस्परविरुद्धत्वान्नैकत्र कालद्वयसमावेश इत्याशंकते **यदि पुनरिति** । **तर्हीति** । यथा परस्परभिन्नरूपरसादितादात्म्ययोर्विरोधस्तयोः समावेशमेव प्रतिबध्नाति ; न त्वेकस्मिन् वस्तुनि परस्परभिन्नरूपरसादिसम्बन्धम् — तथेत्यर्थः । एकस्यानेकसम्बन्धः कश्चिदपि नास्तीत्यपि वक्तुं न

---

ननु तद्वस्तुप्रागभावावच्छिन्नकाल-तद्वस्तुध्वंसावच्छिन्नकालयोर्नैकेन सह संबन्धसंभवः ; तथासति एकेन क्षणेनापि संबन्धप्रसङ्गात् । तथाच करणाकरणावच्छेदकतयाऽभिमतयोः पूर्वापरकालयोर्मध्यवर्तिवस्तुप्रागभावध्वंसाधिकरणतया एकवस्तुसंबन्धासंभवात् कथमेकस्मिन् वस्तुनि करणाकरणनिर्वाहकतेत्यभिप्रायेण शङ्कते **तथापीति** । अतिरिक्तकालानुपगमादाह **तदुपाध्योरिति** । **यौगपद्यमेकक्षणसंबन्धः** । उक्तकालयोरेकक्षणसंबन्ध एव न संभवति—न त्वेकवस्तुसंबन्धः, बाधकाभावादित्याशयेन समाधत्ते **नेति** । **अन्यथेति** । एकवस्तुसंबन्धेऽपि विरोधाभ्युपगम इत्यर्थः । **एकज्ञानसंबन्धेऽपीति** । कालद्वयस्य एकज्ञानविषयत्वेऽपीत्यर्थः । **प्रत्यभिज्ञास्वरूपस्येति** । प्रत्यभिज्ञायाः प्रमात्व-भ्रमत्वविषये विवादेऽपि स्वरूपे न विवाद इत्याशयेन **स्वरूपे**त्युक्तम् । ननु कालस्य वस्तुभिस्तादात्म्यमेव संबन्धः । ततश्चैकस्य वस्तुनः कालद्वयसंबन्धो न संभवत्येव—तथा सति कालयोः परस्परतादात्म्यप्रसङ्गात् ; तदभिन्नाभिन्नस्य तदभिन्नत्वनियमात् । न हि भिन्नयोः कालयोस्तादात्म्यं संभवतीत्याशंकामनुभाषते **यदीति** । न हि कालस्य वस्तुभिस्तादात्म्यमेव संबन्ध इति संभवति ; तथासति अनतीतमनुत्पत्स्यमानं सर्वमेतत्क्षणे वर्तत इति प्रतीतिसिद्धस्य तादृशसर्ववस्तुष्वेकक्षणसंबन्धस्यानुपपत्तिप्रसङ्गात् । अतः कालिकविशेषणताभिधानं स्वरूपमेव संबन्ध इत्याश्रयणीयम् । इत्थंच कालद्वयस्य परस्परतादात्म्यासंभवेऽपि एकस्य कालद्वयसंबन्धे न कश्चिद्विरोध इत्याशयेन समाधत्ते **तर्हीति** । तादात्म्यविरोधस्य विवक्षितत्व इत्यर्थः । **रूपरसयोरिवेति** । यथा रूपरसयोः परस्परतादात्म्यासंभवस्तयोरेकद्रव्यसंबन्धं न प्रतिबध्नाति, तद्वदित्यर्थः । **नैकवस्तुसंबन्धं प्रतिभन्त्स्यतीति** । एकवस्तुसंबन्धस्य प्रतिबन्धको न

**न चैकस्यानेकसम्बन्धः क्वचिदपि नास्तीति वाच्यम्; क्षणिकनिर्धर्मकपरमाणावपि पुञ्जदशायामनेकनैरन्तर्यादेरभ्युपेतत्वादिति।**

**एतेन वर्तमानत्वप्रत्ययात् क्षणभङ्गसिद्धिरिति वदन्तोऽपि निरस्ताः। न हि तेन पूर्वापरकालसम्बन्धाभावो गृह्यते। न चाऽऽक्षिप्यते। तद्विरोध्यवर्तमानत्वमात्रनिषेधात्। तस्य च तदानीं प्रागभावप्रध्वंसाभावनिषेधात्मकत्वेन पूर्वापरकालसंबन्धाविरोधित्वात्॥**

---

शङ्कयत इत्याह **नचैकस्येति।**

**वर्तमानत्वप्रत्ययादिति।** यथा दण्डीति प्रतीतिः अदण्डिव्यावृत्तिं गोचरयति, एवं वर्तमानत्वप्रतीतिरप्यवर्तमानेभ्यः कालान्तरसम्बन्धिभ्यो व्यावृत्तिं गोचरयतीति वर्तमानस्य पुरोवर्तिनः कालान्तरसम्बन्धाभावनिश्चयीकरणात् क्षणिकत्वसिद्धिरिति वदन्तो निरस्ता इत्यर्थः। **न हि तेनेति।** यथा रूपीत्युक्ते अरूपिव्यावृत्तिरेव प्रतीयते, न तु रसादिगुणान्तरव्यावृत्तिः; तद्वदित्यर्थः। **तस्य चेति।** अवर्तमानत्व-

---

भविष्यतीत्यर्थः। **तादात्म्यविशेष** इत्यनुषज्यते। **पुञ्जदशायामिति।** घटादिरूपपुञ्जावस्थायामित्यर्थः। तन्मते घटादेः परमाणुपुञ्जरूपत्वादिति भावः। **अनेकनैरन्तर्यादेरिति।** उक्तपुञ्जान्तर्गत प[कै?]कस्मिन् परमाणौ परमाण्वन्तर-मृत्-जल-वाय्वादिभिस्संयोगरूपनैरन्तर्यादेरित्यर्थः। तन्मते नैरन्तर्यस्यैव संयोगरूपत्वादिति भावः। **आदिना** अनेकज्ञानविषयत्वपरिग्रहः।

**एतेनेति।** एकस्य कालद्वयसंबन्धसंभवोपपादनेनेत्यर्थः। **वर्तमानत्वप्रत्ययात् क्षणभङ्गसिद्धिरिति।** वर्तमानत्वप्रत्ययेनैतत्क्षणसंबन्धे सिद्धे एकस्य वस्तुनः कालद्वयसंबन्धासंभवात् पूर्वापरक्षणसंबन्धाभावः सिद्ध्येदित्यभिमानः। अत्र वर्तमानत्वप्रत्ययेन कथं पूर्वापरकालसंबन्धाभावसिद्धिः; किं तादृशप्रत्ययेनैव पूर्वापरकालसंबन्धाभावस्य विषयीकरणात्, उत औत्तरकालिकमानसबोधे तस्य विषयत्वात्, अथवा तादृशप्रत्ययविषयीभूतेन वर्तमानत्वेन तदनुमानाद्वेति विकल्प्याऽऽद्यं निरस्यति **नहीति। तेन**-वर्तमानत्वप्रत्ययेन। **गृह्यते**-विषयीक्रियते। वर्तमानत्वमात्रस्यैवोल्लेखादिति भावः। द्वितीयतृतीयौ एकीकृत्य निरस्यति **न चाऽऽक्षिप्यत** इति। नोत्तरकालिकमानसबोधेन विषयीक्रियते, न चानुमीयत इत्यर्थः। अत्राऽऽवृत्त्याऽर्थद्वयबोधकत्वमवसेयम्। प्रथमं मानसविषयत्वासंभवमुपपादयति **तद्विरोधीति।** वर्तमानत्वाभावरूपेत्यर्थः। **अवर्तमानत्वमात्रनिषेधादिति।** औत्तरकालिकमानसबोधेनावर्तमानत्वाभावमात्रस्यैव विषयीकरणादित्यर्थः। मात्रपदेन पूर्वापरकालसंबन्धाभावाविषयीकरणं बोध्यते। यथा रूपवदिति प्रतीतौ सत्यां रूपाभावो नास्तीत्येवौत्तरकालिकमानसबोधो जायते; न तु रसादिकं नास्तीति; रसादेः रूपाभावानात्मकत्वात्—तथा वर्तमानत्वप्रत्यये अवर्तमानत्वं नास्तीत्येव मानसबोधः स्यात्; न तु पूर्वापरकालसंबन्धो नास्तीति। पूर्वापरकालसंबन्धस्य वर्तमानत्वाभावानात्मकत्वादिति भावः। अनुमितिविषयत्वाभावमुपपादयति **तस्य चेति।** वर्तमानत्वस्य चेत्यर्थः। चो भिन्नक्रमोऽविरोधित्वादित्यनन्तरं योज्यः। **तदानीं प्रागभावप्रध्वंसाभावनिषेधात्मकत्वेनेति।** यादृशक्षणवृत्तित्वं वर्तमानत्वरूपम्, तादृशक्षणवृत्तिप्रागभाव-प्रध्वंसान्यतरप्रतियोगित्वसामान्याभावरूपत्वेनेत्यर्थः। प्रागभाव-प्रध्वंसाभावयोरेव

**प्रत्यक्षेणेन्द्रियसम्बन्धक्षणो गृहीतः; क्षणान्तरं तु तस्य कुतः सिद्धमिति चेन्न। प्रत्यभिज्ञानस्य तदबाधस्य चोक्तत्वात्॥ प्रत्यभिज्ञात्वादेव दीपप्रत्यभिज्ञावत् सर्वाऽपि प्रत्यभिज्ञा भ्रान्तिरिति चेत्, पूर्वोक्तेनैव सोपाधिकत्वात्। एतदनुमानमात्रबाध्यत्वे प्रत्ययत्वादेव सर्वः प्रत्ययो भ्रान्तिरिति माध्य-**

---

निषेधस्य चेत्यर्थः। ननु वर्तमानत्वप्रत्ययात्र क्षणिकत्वसिद्धिं तर्णयामः; किन्तु क्षणान्तरसम्बन्धग्राहि-प्रमाणाभावादेवेत्याशङ्कते **प्रत्यक्षेणे**ति। **उक्तत्वादि**ति। **"प्रत्यभिज्ञाप्रत्यक्षेण स्थिरत्वस्यैव सिद्धेः"** इत्युक्तत्वादित्यर्थः। **पूर्वोक्तेने**ति: कारणदोषबाधकप्रत्ययादिनेत्यर्थः। बाधकप्रत्ययरूपोपाधौ साधनव्याप-कत्वमाशङ्क्य परिहरति **एतदनुमानमात्रबाध्यत्व इ**ति। अत्र **मात्र**पदेन प्रमाणान्तराननुगृहीतत्वानु-

---

निषेधो वर्तमानेति हेतृतीयबहुव्रीहिबलादुक्तार्थलाभो बोद्धव्यः। तत्क्षणवृत्तित्वस्यैव वर्तमानत्वरूपतया न यथाश्रुतार्थोपपत्तिः। **पूर्वापरकालसंबन्धाविरोधित्वादि**ति। तादृशकालसंबन्धाभावाव्याप्यत्वादित्यर्थः। **एकस्य** वस्तुनः कालद्वयसंबन्धसंभवस्योपपादिततया एतत्क्षणसंबन्धरूपस्य वर्तमानत्वस्य क्षणान्तरसंबन्धा-भावादिव्याप्यत्वासंभवादिति भावः। तथा च वर्तमानत्वेन न क्षणान्तरसंबन्धाभावोऽनुमातुं शक्य इत्युक्तं भवति। यद्वा वर्तमानत्वप्रत्ययेन किं क्षणान्तरसंबन्धाभावः साक्षादेव विषयीक्रियते, अथवा तद्विषय-वर्तमानत्वेन सोऽनुमीयत इति द्विशिरस्क एव विकल्पः। प्रथमशिरोदूषणं पूर्वं व्याख्यातमेव। **न** **चाक्षिप्यत** इत्यस्य च नाप्यनुमीयत इत्येवार्थः। **तद्विरोधी**ति। तद्व्यापकाभावप्रतियोगीत्यर्थः। **अवर्तमानत्वमात्रनिषेधादि**ति। अवर्तमानत्वमात्राभावानुमानादित्यर्थः। अवर्तमानत्वाभावमात्र-स्यैवानुमानादिति यावत्। ननु अवर्तमानत्वं नाम क्षणान्तरसंबन्ध एवेति सिद्धं नस्समीहितमित्यत आह **तस्य चे**ति। अवर्तमानत्वनिषेधस्य चेत्यर्थः। **तदानीं प्रागभावप्रध्वंसाभावनिषेधात्मकत्वेने**ति। पूर्ववदेवार्थः। क्षणान्तरसंबन्धाभावानात्मकत्वेनेत्यभिप्रायः। **पूर्वापरकालसंबन्धाविरोधित्वात्**— तादृशकालसंबन्धप्रतीत्यबाधकत्वात्। तथाच वर्तमानत्वप्रत्ययेन न कथञ्चिदपि क्षणभङ्गसिद्धिरित्युक्तं भवति।

प्रकारान्तरेण क्षणभङ्गसिद्धिमाशङ्कते **प्रत्यक्षेणे**ति **क्षणान्तरमि**ति। क्षणान्तरसंबन्ध इत्यर्थः। **तस्य**–एकक्षणसंबन्धितया प्रत्यक्षेण गृहीतस्य वस्तुनः। **कुत** इति। **किं**शब्दः क्षेपे। न कुतश्चिदित्यर्थः। तथाच प्रमाणाभावादेव क्षणान्तरसंबन्धाभावसिद्धया पूर्वक्षणवृत्तित्वे सति तत्क्षणावृत्तित्वेन हेतुना तत्क्षण-वृत्तिध्वंसप्रतियोगित्वानुमानात् क्षणभङ्गसिद्धिरित्यभिप्रायः। **उक्तत्वादि**ति। "प्रत्यभिज्ञाप्रत्यक्षेण स्थिरत्व-स्यैव सिद्धेः" इत्यादिनोक्तत्वादित्यर्थः। **प्रत्यभिज्ञात्वादि**ति। संस्कारसन्निकर्षोभयजन्यत्वादित्यर्थः। अयं घट इत्याद्यभिज्ञायां स्वलक्षणमात्रविषयकनिर्विकल्पक एव वा व्यभिचारवारणाय **संस्कारे**ति। स्मृतौ तद्वारणाय **सन्निकर्षे**ति। **पूर्वोक्तेने**ति। "कारणदोषबाधकप्रत्ययाभावे तत्त्वायोगात्" इत्यत्रोक्तेन कारणदोषेण बाधकप्रत्ययेन चेत्यर्थः। दुष्टकारणजन्यत्वं बाधकप्रत्ययविषयविषयकत्वं चोपाधिः; तस्य संप्रतिपन्नभ्रान्तिषु साध्यव्यापकत्वात्, पक्षे साधनाव्यापकत्वाच्चेति। उपाध्योः साधनव्यापकत्वमाशङ्क्य परिहरति **एतदनुमानमात्रबाध्यत्व इ**ति। एतदनुमानमात्रप्रयोज्यबाध्यत्व इत्यर्थः। बाध्यत्वं बाधार्हत्वम्। अदुष्टकारणजन्यत्वनिषेधबुद्धिर्बाधः। तत्प्रयोजकत्वं च दुष्टकारणजन्यत्वेन। तद्बुद्धेर्दुष्टकारणजन्यत्वमन्तरा

मिकमतसमुत्थानस्य दुष्परिहरत्वात् ॥

क्षणभङ्गपक्षे भ्रान्तिरूपाऽपि प्रत्यभिज्ञा, स्मृतिमात्रमपि नोपपद्यत इत्यात्मनि वक्ष्यामः। ततश्च व्याप्तिप्रतिसन्धानाद्यनुपपत्तेः अनुमानमात्रमेव निर्मूलमिति कुतः क्षणभङ्गानुमानम्? यत् सत् तत् क्षणिकम्; यथा घटः; सन्तश्चामी भावा इत्यपि न। भावशब्देन विश्वपक्षीकारे पक्षहेतुदृष्टान्त-

---

कूलतर्कराहित्यादिकं विवक्षितम् ॥ स हि प्रत्यक्षतः, अनुमानतो वेति विकल्पे प्रत्यक्षत इति विकल्पं दूषयित्वा अनुमानत इति विकल्पं दूषयितुमुपक्रमते क्षणभङ्गपक्ष इति। आत्मनि वक्ष्याम इति। जीवपरिच्छेदे वक्ष्याम इत्यर्थः ततश्चेति। क्षणभङ्गपक्षे स्मृतिमात्रस्यानुपपत्तेरित्यर्थः। यत्सदित्यादिना उदाहरणं प्रदर्श्य हेतोः पक्षधर्मताप्रदर्शकमुपनयमाह सन्तश्चेति। अत्र च भावाः पक्षाः। भावा इति भावशब्दो वस्तुपरः। पक्षहेतुदृष्टान्तेति। सन्दिग्धसाध्यस्य पक्षस्य निश्चितसाध्यस्य सपक्षस्य च पक्षनिष्ठस्य च

---

तन्निषेधबुद्धिदुष्टकारणजन्यत्वसंभवात्। तथा चोक्तप्रत्यभिज्ञात्वहेतुकानुमाने बाधकप्रत्ययाविषयविषयकत्वस्य दुष्टकारणजन्यत्वस्य च पक्षे साधन इति पर्यवसितार्थः। तथा चोक्तधर्मयोः साधनव्यापकत्वस्य पक्षावृत्तित्वस्य चाऽभावान्नोपाधित्वमिति भावः। मात्रपदेनानुकूलतर्कराहित्यादिकं विवक्षितम्। प्रत्ययत्वादेवेत्यादि। सर्वोऽपि प्रत्ययो भ्रान्तिः प्रत्ययत्वात् शुक्तिरजतादिप्रत्ययवदिति माध्यमिकमतसमुत्थानस्येत्यर्थः। दुष्परिहरत्वादिति। बाधकप्रत्ययविषयविषयकत्वस्य दुष्टकारणजन्यत्वस्य चोपाधित्वाभिधाने प्रत्ययत्वेनैव हेतुना शुक्तिरजतादिप्रत्ययदृष्टान्तेन पक्षे तयोः साधनसंभवादिति भावः। तथा चाप्रयोजकत्वादेव प्रत्ययत्वहेतुकानुमानमिव प्रत्यभिज्ञात्वहेतुकानुमानमपि नोक्तोपाध्योर्न वा भ्रान्तित्वस्य साधकमिति निगूढोऽभिसन्धिः ॥ पूर्वोक्ते स हि प्रत्यक्षतोऽनुमानतो वेति विकल्पे प्रत्यक्षत इति कल्पं दूषयित्वा अनुमानत इति कल्पं दूषयितुमुपक्रमते क्षणभङ्गपक्ष इति। आत्मनि वक्ष्याम इति। जीवपरिच्छेदे वक्ष्याम इत्यर्थः। तत इति। स्मृतिमात्रस्यानुपपत्तेरित्यर्थः। तुष्यतु दुर्जन इति न्यायेन व्याप्तिप्रतिसन्धानादिसंभवमभ्युपगम्य तदभिमतक्षणभङ्गसाधकानुमानं दूषयति यत्सदिति। क्षणिकमिति। एकक्षणमात्रवृत्तीत्यर्थः। तत्त्वं चानेकक्षणावृत्तित्वे सति कालवृत्तित्वम्। सिद्धसाधनवारणाय सत्यन्तम्। असत्त्वमादायार्थान्तरवारणाय विशेष्यम्। अनेकक्षणावृत्तित्वं च स्वप्रतियोगिक्षणवृत्तित्व–स्वाश्रयक्षणवृत्तित्वोभयसंबन्धेन भेदविशिष्टान्यत्वम्, स्वध्वंसाधिकरणकालवृत्तित्व स्ववृत्तित्वोभयसंबन्धेन कालविशिष्टान्यत्वं वा। अत्र जन्यमात्रं क्रियामात्रं वा कालत्वेन विवक्षितम्। यथा घट इत्यन्तं व्याप्तिप्रतिपादकमुदाहरणम्। सन्तश्चामी भावा इति पक्षधर्मताप्रतिपादक उपनयः। अवयवद्वयमेव बौद्धैरङ्गीक्रियत इति तावन्मात्रमेवानूदितम्। विश्वपक्षीकार इति। वस्तुत्वापरपर्यायभावत्वरूपपक्षतावच्छेदकावच्छेदेन क्षणिकत्वरूपसाध्यसिद्धेरुद्देश्यत्वे इत्यर्थः। पक्षहेतुदृष्टान्तभेदासिद्धिरिति। दृष्टान्ते हेतौ च पक्षभेदासिद्धेरित्यर्थः। दृष्टान्ते पक्षभेदाभावे पक्षतावच्छेदकाक्रान्ते तस्मिन् साध्यस्य सिद्धतया सिद्धसाधनम्। हेतौ पक्षभेदाभावे पक्षात्मके तस्मिन् हेतुतावच्छेदकसंबन्धेन हेतोरवृत्त्या भागासिद्धिः। न ह्यभेदे आधाराधेयभावः संभवतीति भावः। न चावच्छेदकावच्छेदेनानुमितौ सामानाधिकरण्येन सिद्धेरविरोधितया नात्र सिद्धसाधनदोष

मेदासिद्धिः । घटव्यतिरिक्तपक्षीकारेऽपि घटस्य क्षणिकत्वासम्प्रतिपत्तेर्दृष्टान्तत्वायोगः। विरुद्धधर्माध्यासस्य च परिहृतत्वात् । अत एव प्रदीपादिदृष्टान्तोऽपि प्रत्युक्तः। तेषामपि त्रिचतुरक्षणस्थायित्वाभ्युपगमात् ॥ अस्तु तर्हि क्षणोपाधिर्दृष्टान्तः । स हि न स्थिरः । तथात्वे क्षणावच्छेदकत्वायोगादिति चेन्न—स्थिरैरेव परस्परावच्छिन्नारम्भा[1]वसानैस्तदवच्छेदोपपत्तेः । परस्परावच्छेदश्च युगपद्विशिष्ट-

हेतोर्भेदावश्यम्भावादिति भावः । विरुद्धेति । सामर्थ्यासामर्थ्यादिलक्षणविरुद्धधर्माध्यासस्येत्यर्थः । परस्परावच्छिन्नेति । पूर्वस्य क्रियारूपस्योपाधेरवसानमुत्तरस्य विभागस्यारम्भेणावच्छिद्यते । उत्तरविभागारम्भोऽवसानेनावच्छिद्यते । अयं भावः-उपाधीनां त्रिचतुरक्षणस्थायितया अवच्छेदकत्वासम्भवेऽपि उत्तरोपाध्यारम्भावच्छिन्न(न्नावसान?)स्य पूर्वोपाधेः पूर्वावसानावच्छिन्नारम्भस्योत्तरस्य वा अंशभेदेनोपाधित्वसम्भवादिति॥

इति वाच्यम्; प्राचीननैयायिकरीत्या अवच्छेदकावच्छेदेनानुमितावपि सामानाधिकरण्येन सिद्धेर्विरोधित्वमेवेत्यभिप्रायात् । तथाहि-अवच्छेदकावच्छेदेनानुमितिर्नाम पक्षतावच्छेदकव्यापकोद्देश्यताकानुमितिरेव । न तु साध्ये तत्संबन्धे वा पक्षतावच्छेदकव्यापकत्वावगाह्यनुमितिः । अनुमितौ तद्भासकाभावात् । पक्षधर्मताबलेन साध्ये पक्षसंबन्धमात्रस्यैव भानसंभवात् तदुद्देश्यकानुमितौ तद्विशेष्यसिद्धेः प्रतिबन्धकत्वमित्येवं समानविषयतयैवानुमितिसिद्ध्योः प्रतिबन्ध्यप्रतिबन्धकभावः । इत्थंच दृष्टान्ते साध्यसिद्धावनुमितेस्तदुद्देश्यकत्वासंभवात् दर्शितावच्छेदकावच्छेदेनानुमितिर्न संभवत्येवेति तस्या उद्देश्यत्वेऽपि अंशतःसिद्धसाधनं दोष एव। उक्तं हि गदाधरेण पक्षताग्रन्थे, "मणिकृता पक्षतावच्छेदकैक्ये अंशतस्सिद्धसाधनस्यादोषत्वोपगमेऽपि तदितरप्राचीनैरनुमितिमात्र एवांशतस्सिद्धसाधनस्यापि दोषत्वमुपेयते" इति । ननु घटव्यतिरिक्तभावस्यैवानुमित्युद्देश्यत्वमभिमतम् । उद्देश्यता च भावत्वेनैव, घटव्यतिरिक्तभावत्वेन वेत्यन्यदेतत् । ततश्च तादृशानुमितौ घटविशेष्यकसिद्धेरविरोधितया नोक्तसिद्धसाधनावकाशः । सत्त्वरूपहेतोरन्यापोहापरपर्यायासद्व्यावृत्त्यात्मकतया भावत्वरूपपक्षतावच्छेदकानाक्रान्तत्वान्न भागासिद्धेरप्यवकाश इत्यत आह घटव्यतिरिक्तेति। घटस्य क्षणिकत्वासंप्रतिपत्तेर्दृष्टान्तत्वायोग इति । तथाचोक्तक्षणद्वयावृत्तित्वविशिष्टकालवृत्तित्वस्य क्वचिदप्यप्रसिद्ध्या साध्याप्रसिद्धिरिति भावः । विरुद्धधर्मेति । सामर्थ्यासामर्थ्यलक्षणेत्यादिः । अत एवेति । विरुद्धधर्माध्यासस्य परिहृतत्वादेवेत्यर्थः । प्रदीपादिदृष्टान्तोऽपि प्रत्युक्त इति । तत्र साध्यप्रसिद्धिसंपादनमपि निरस्तमित्यर्थः । प्रदीपादीत्यादिना दावानलादिपरिग्रहः । त्रिचतुरेति । तथाच न तत्र एकक्षणमात्रवृत्तित्वरूपसाध्यप्रसिद्धिसंभव इति भावः । क्षणोपाधिरिति । क्षणपदवाच्यतावच्छेदक इत्यर्थः । एकक्षणमात्रवृत्तिवस्त्ववच्छिन्नकालस्यैव क्षणपदवाच्यत्वादिति भावः । क्षणावच्छेदकत्वायोगात् क्षणपदवाच्यतावच्छेदकत्वायोगात् । परस्परावच्छिन्नारम्भावसानैरिति । आरंभाश्चावसानानि चेति द्वन्द्वः । ततः परस्परावच्छिन्नानि आरंभावसानानि येषामिति बहुव्रीहिः । आरंभावच्छिन्नावसानकैः, अवसानावच्छिन्नारंभकैश्चेति फलितम् । एकवस्त्वारम्भावच्छिन्नावसानकवस्त्वन्तरम्, एकवस्त्ववसानावच्छिन्नारंभकवस्त्वन्तरं च क्षणोपाधिरित्युक्तं

1 आरम्भः उत्पत्त्यवस्थता । अवसानं विनश्यदवस्थता । यस्योत्पत्त्यवस्था यस्य विनश्यदवस्थता च युगपत्, तयोः एकावच्छिन्नमितरत् क्षणोपाधिरित्यर्थः । अवच्छिन्नत्वं कालिकसंबन्धेन ।

बुद्धिविषयतया सिद्धः। यथा दीर्घयोरेव मानदण्डयोर्विरुद्धदिक्प्रसृतयोर्मध्ये किञ्चित्संयुक्तयोः परस्परसंयोगावच्छिन्नांशेन अल्पतरदेशावच्छेदः कर्तुं शक्यः। एवं कालेऽपीति न कश्चिद्दोषः॥

मा भूदन्वयः। यदक्षणिकं तदसत्; यथा शशविषाणमिति व्यतिरेकः स्यात्॥ न स्यात्। त्वदभिमताक्षणिकत्वासिद्धेरेव तन्निरूपिताक्षणिकत्वासिद्धेस्तस्य व्याप्यत्वग्रहणायोगात्। चिरकाल-

---

ननु पूर्वोत्तरोपाध्यवसानारम्भयोः परस्परावच्छेद्यावच्छेदकभावे किं प्रमाणमित्याशङ्क्य उत्तरारम्भावच्छिन्नं पूर्वावसानम्, पूर्वावसानावच्छिन्नः उत्तरारम्भः इत्येवंरूपया अवच्छिन्नत्वधिया परस्परावच्छेदः सिध्यतीत्याह **परस्परेति**। अतिप्रसक्तस्याप्यंशभेदेनावच्छेदकत्वे दृष्टान्तमाह **यथेति**। **त्वदभिमतेति**। क्षणिकत्वरूपप्रतियोग्यप्रसिद्ध्या तदभावाप्रसिद्धेरिति भावः। ततः किमित्यत आह **तस्येति**। ननु चिरकाल-

---

भवति। तथा हि—नैयायिकमते क्रिया, क्रियातो विभागः, विभागात् पूर्वसंयोगनाशः, पूर्वसंयोगनाशादुत्तरसंयोगः, ततः कर्मनाश इति क्रमः; तत्र स्वजन्यविभागप्रागभावावच्छिन्नं कर्म क्षणोपाधिः। तत्र कर्मोत्पत्तिद्वितीयक्षणे नश्यतो विभागप्रागभावस्य कर्मोत्पत्तिक्षणोऽवसानम्; चरमक्षणस्यैवावसानपदार्थत्वात्। प्रथमक्षणश्च प्रारम्भपदार्थः। उक्तारम्भावसानयोर्वैशिष्ट्यघटकतयैव प्रवेशः। स्वाधिकरणकालवृत्तित्वसंबन्धेनैव हि प्रागभाववैशिष्ट्यं कर्मणः। एवं विभागावच्छिन्नपूर्वसंयोगः, पूर्वसंयोगावच्छिन्नविभागो वा क्षणोपाधिः। अत्र पूर्वसंयोगस्यावसानं विभागस्य त्वारम्भः। एवमुत्तरसंयोगप्रागभावावच्छिन्नः पूर्वसंयोगनाशः, उत्तरसंयोगावच्छिन्नं कर्म च क्षणोपाधिः। सिद्धान्ते संयोगातिरिक्तं कर्म नास्तीत्येकः पक्षः, अस्तीत्यपरः। तत्र प्रथमपक्षे पूर्वसंयोगनाशातिरिक्त उत्तरसंयोग इत्यङ्गीकारे उत्तरसंयोगप्रागभावावच्छिन्नः पूर्वसंयोगनाशः, पूर्वसंयोगनाशावच्छिन्न उत्तरसंयोगप्रागभावो वा क्षणोपाधिः। पूर्वसंयोगनाशात्मक एवोत्तरसंयोग इत्यङ्गीकारे उत्तरसंयोगप्रागभावावच्छिन्ना तत्सामग्र्येव क्षणोपाधिः। एवं सर्वत्र तत्तत्कार्यप्रागभावावच्छिन्ना तत्तत्कार्यसामग्र्येव सः। द्वितीयपक्षे क्रिया, क्रियातः पूर्वसंयोगनाशात्मक उत्तरसंयोगः, ततः कर्मनाशः इति क्रमः। संयोगनाशातिरिक्तविभागानुपगमात्। तत्र उत्तरसंयोगप्रागभावावच्छिन्नं कर्म, उत्तरसंयोगावच्छिन्नं कर्म च क्षणोपाधिरिति; **तदवच्छेदोपपत्तेः** क्षणव्यवहारविषयतया अवच्छेद्यत्वोपपत्तेः। उत्तरसंयोगप्रागभावस्य कर्मणश्च तत्तद्रूपेणानेकक्षणवर्तित्वेऽपि तादृशप्रागभावविशिष्टकर्मत्वेन तादृशकर्मण एकक्षणमात्रवर्तितया स्वजन्योत्तरसंयोगप्रागभावविशिष्टकर्मविशिष्टकालस्य क्षणपदार्थत्वमुपपद्यत एवेति भावः। एवं क्षणोपाध्यन्तरेऽपि बोध्यम्। विभागप्रागभावादेर्विभागाद्याश्रय एव सत्त्वेन कर्मणि कथं तद्वैशिष्ट्यमित्याशङ्क्याह **परस्परावच्छेदश्चेति**। परस्परवैशिष्ट्यं चेत्यर्थः। **युगपद्विशिष्टबुद्धिविषयतयेति**। युगपदिति विशिष्टबुद्धिः युगपद्विशिष्टबुद्धिरिति व्युत्पत्त्या एककालिकत्वसंबन्धावगाहिविशिष्टबुद्धिविषयतयेत्यर्थः। स्वाधिकरणकालवृत्तित्वरूपमेककालिकत्वमेव वैशिष्ट्यमिह विवक्षितम्। तच्च विभागप्रागभावादेः कर्मादावप्यक्षतमिति भावः। स्वाधिकरणकालवृत्तित्वं च स्वावच्छिन्नकालनिष्ठनिरूपकताकाधेयत्वम्। तेन स्वाधिकरणमहाकालवृत्तित्वस्य सार्वत्रिकत्वेपि न क्षतिः। तदधिकरणक्षणवृत्तेरेव पदार्थस्य कालनिष्ठायां

**स्थायित्वविवक्षायां तु निःस्वभावे शशशृङ्गे तदयोगः। अथ शशशृङ्गाभावो दृष्टान्तः ; स तर्हि सन्नेव;**

स्थायित्वमेवाक्षणिकत्वम् । न तु क्षणिकत्वाभावः ; येनाप्रसिद्धिः स्यादित्यत आह-**चिरकालेति** । **तदयोग इति**-चिरकालस्थायित्वायोग इत्यर्थः । ननु **निःस्वभावे शशशृङ्गे** इति वदता शशशृङ्गाभावस्याभ्युपेतत्वात् स एव चिरकालस्थायित्वे दृष्टान्तो भविष्यतीति शङ्कते-**अथेति** । परिहरति-**स तर्हीति** । तस्य

तन्निष्ठविधेयतानिरूपकतायामवच्छेदकत्वात् । प्रत्येकमतिप्रसक्तस्यापि विशिष्टरूपेणानतिप्रसक्तौ दृष्टान्तमाह **यथेति** । **त्वदभिमतक्षणिकत्वासिद्धेरिति** । त्वया साध्यतया स्वीकृतस्य एकक्षणमात्रवृत्तित्वरूपस्य क्षणिकत्वस्य क्वचिदप्यप्रसिद्धेरित्यर्थः । **तन्निरूपिताक्षणिकत्वासिद्धेरिति** । तज्ज्ञानाधीनज्ञानविषय क्षणिकत्वाभावप्रतीत्यसंभवादित्यर्थः । अभावप्रत्यये प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्यापेक्षितत्वादिति भावः । ततः किमित्यत्राह **तस्य व्याप्यत्वग्रहणायोगादिति** । व्यतिरेकिणि साध्याभावे हेत्वभावव्याप्यत्वस्यैव गमकत्वादिति भावः । ननु विशिष्टप्रसिद्ध्यभावेऽपि विशेषणविशेष्ययोर्विशृङ्खलप्रसिद्ध्या व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावप्रत्यय उपपद्यते ; यथा घटत्वेन पटो नास्तीति । न हि तत्र घटत्वविशिष्टपटप्रसिद्धिरस्ति । इत्थंच प्रकृते क्षणद्वयावृत्तित्वस्य कालसंबन्धिनि शशविषाणादौ, कालवृत्तित्वस्य च घटादौ प्रसिद्ध्या क्षणद्वयावृत्तित्ववैशिष्ट्यावच्छिन्नप्रतियोगिताकाभावरूपसाध्याभावप्रसिद्धिसंभवात् नानुपपत्तिः । न हि व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावः सिद्धान्ते नाभ्युपगम्यत इति शक्यं वक्तुम् ; "अथ शशशृङ्गाभावो दृष्टान्तः, स तर्हि सन्नेव प्रामाणिकत्वात्" इत्यनुपदमेवाभिधानात् । **सर्वार्थसिद्ध्यादौ** तदभ्युपगमस्य विस्पष्टं प्रतीतेश्च । अतः कथमिदमिति चेत्-अत्रोच्यते—क्षणद्वयावृत्तित्वरूपविशेषणप्रसिद्धेः शशशृङ्गादावेव वक्तव्यतया असत्ख्यात्यनभ्युपगन्तृसिद्धान्तिमते तदसंभवात् व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावोऽपि न प्रसिद्ध्यति । एवं व्यतिरेकिस्थले हेतौ साध्याभावव्यापकीभूताभावप्रतियोगित्वज्ञानं साध्याभावे हेत्वभावव्याप्यत्वज्ञानं वाऽनुमितिजनकम् । तत्र साध्याभावस्य प्रतियोगितासंबन्धेन साध्यविशेषिताभावत्वेनैव निवेशः ; न तु साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावत्वेन । प्रतियोगित्वादेः प्रकारतया निवेशे तत्संसर्गस्यापि निवेशयनीयतया गौरवात् । ततश्च विशिष्टसाध्याप्रसिद्धौ तद्विशेषिताभावस्य सुतरामप्रसिद्ध्या न व्यतिरेकव्याप्तिग्रहसंभव इति । नन्वनेकक्षणावृत्तित्वमात्रमेव साध्यतयाऽङ्गीक्रियते; असत्त्वमादायार्थान्तरस्य सत्त्वरूपहेतोः कालवृत्तित्वरूपत्वाङ्गीकारादेव परिहारात । इत्थंच यत्रानेकक्षणवृत्तित्वम्, न तत्र सत्त्वमित्येवं व्यतिरेकव्याप्तिसंभवान्नानुपपत्तिरित्यत आह **चिरकालस्थायित्वविवक्षायां त्विति** । अनेकक्षणावृत्तित्वस्य साध्याभावरूपत्वमङ्गीकृत्यानेकक्षणस्थायित्वस्य साध्याभावरूपत्वविवक्षायामित्यर्थः । **तदयोगः**=अनेकक्षणवृत्तित्वायोगः । ततश्च न शशशृङ्गस्य व्यतिरेकदृष्टान्तत्वसंभव इति भावः । शङ्कते **अथेति** । **शशशृङ्गाभाव इति** । शशीयत्वेन शृङ्गाभाव इत्यर्थः। तेन न प्रतियोग्यप्रसिद्धिः । **दृष्टान्त इति** । तस्यानेकक्षणस्थायित्वरूपसाध्याभाववत्त्वादिति भावः। परिहरति **स इति** । **तर्हीति** । शशशृङ्गाभावस्य चिरस्थायित्व इत्यर्थः । **सन्नेवेति** । कालवृत्तित्वरूपहेतुमानेवेत्यर्थः । तथा हेत्वभावविरहान्न तस्य व्यतिरेकदृष्टान्तत्वसंभव

प्रामाणिकत्वात् ॥ भावेतरत्वलक्षणमसत्त्वमस्तीति चेन्न—भावान्तराभाववादे तस्याप्यसिद्धेः । अन्यत्राप्यभावस्यैव भावस्यापि सुवचत्वात्। प्रत्यक्षत्वादिविरोधपरिहारकुसृष्टेश्चाविशिष्टत्वादिति ॥

केचित्तु नित्यमपि किञ्चित् तत्त्वं बुद्धोपदिष्टमिति सत्त्वाख्यसाधनमागमबाधितं कृत्वा

---

चिरस्थायित्व इत्यर्थः । **सत्त्वेनेति**। कालसम्बन्धित्वस्यैव सत्त्वरूपत्वादिति भावः । ननु कालसम्बन्धित्वं न सत्त्वम् ; अपि तु भावत्वमेवेति शङ्कते **भावेतरत्वेति** । **तस्याप्यसिद्धेरिति**। शशशृङ्गाभावे भावभिन्नत्वलक्षणासत्त्वस्याप्यसिद्धेरित्यर्थः । **अन्यत्रापीति** । भावातिरिक्ताभाववादेऽपीत्यर्थः । **अभावस्यैवेति** । अभावे भावभिन्नत्वलक्षणपारिभाषिकासत्त्ववत् अभावभिन्नत्वलक्षणपारिभाषिकासत्त्वस्याभावेऽपि सुवचत्वादित्यर्थः । ननु अभावभिन्नत्वमसत्त्वञ्चेत् ; घटादीनामप्यसत्त्वात् प्रत्यक्षत्वादिकं विरुध्येतेत्याशङ्क्य भावभिन्नत्वस्यासत्त्वपक्षेऽपि घटाभावादीनामपि प्रत्यक्षत्वं विरुध्येतेत्यापादनसाम्यात् कालसम्बन्धित्वलक्षणसत्त्वस्यैव प्रत्यक्षत्वादिप्रयोजकत्वमिति तत्परिहारस्य पक्षान्तरेऽपि समत्वादित्याह **प्रत्यक्षत्वादीति** ।

**केचित्त्विति** । सर्वमपि सत् पक्षीकृत्य सत्त्वेन हेतुना क्षणिकत्वे साध्ये बुद्धोपदिष्टशून्याख्यतत्त्वे क्षणिकत्वस्य तदागमबाधितत्वात् सत्त्वेन हेतुना सर्वस्य सतः क्षणिकत्वसाधनमयुक्तं मन्यमानास्तत्तत्कार्यवस्तुध्वंसं

---

इति भावः। **प्रामाणिकत्वादिति**। प्रमाविषयत्वादित्यर्थः। तथाच कालसंबन्धस्तस्याऽऽवश्यक इति भावः। ननु भावत्वमेव हेतूक्रियते । तत एव नार्थान्तरम् ; असतो भावत्वासंभवात् । कालसंबन्धित्वस्य पक्षतावच्छेदकघटकत्वाङ्गीकाराद्वा नार्थान्तरम् । इत्थंच शशशृङ्गाभावे हेत्वभावस्यापि संभवान्न तस्य दृष्टान्तत्वानुपपत्तिरित्याशङ्कते **भावेतरत्वलक्षणमिति** । भावत्वाभावरूपमित्यर्थः । **असत्त्वं** सत्त्वाभावः । **भावान्तराभाववाद** इति । "भावान्तरमभावो हि कयाचित्तु व्यपेक्षया" इत्युक्तरीत्या अभावाभावन्यायेनानुयोगिताविशेषरूपाभावत्वस्य भाव एव संभवादभावो न भावातिरिक्तः; किन्तु प्रतियोगिविरुद्धभावान्तररूप एवेति सिद्धान्त इत्यर्थः। **तस्याप्यसिद्धेरिति**। भावत्वाभावरूपहेत्वभावस्याप्यसंभवादित्यर्थः। अपिना कालसंबन्धित्वाभावपरिग्रहो दृष्टान्तार्थः। **अन्यत्रापीति**। भावातिरिक्ताभाववादेऽपीत्यर्थः। **अभावस्यैव भावस्यापि सुवचत्वादिति** । भावेतरत्वमेवासत्त्वमित्यङ्गीकृत्य तद्वतः स्थिरत्वस्वीकारे अभावेतरत्वमेव सत्त्वमित्यङ्गीकृत्य तद्वतो भावस्यापि स्थिरत्वेन वक्तुं शक्यत्वादित्यर्थः। तथा चानुमानमप्रयोजकमेवेति भावः । नन्वभावेतरत्वस्यासत्त्वरूपत्वमङ्गीकृत्य घटादीनामसत्त्वस्वीकारे तेषां प्रत्यक्षविषयत्वानुपपत्तिः ; असतः प्रत्यक्षायोगादित्याशङ्क्य, एवंसति अभावस्यासत्त्वे तस्य प्रत्यक्षविषयत्वानुपपत्तिः । यदि च प्रत्यक्षविषयत्वे कालसंबन्धरूपसत्त्वमेव नियामकम् ; तच्चाभावेऽस्त्येवेति नानुपपत्तिरित्युच्यते—तर्हि तत् घटादीनामप्यस्तीति न तेषां प्रत्यक्षत्वानुपपत्तिरिति न कश्चिद्विशेष इत्याह **प्रत्यक्षत्वादीति** ।

बौद्धैकदेशिनां मतमुपन्यस्यति **केचिदिति** । **नित्यमपि किञ्चित्तत्त्वमिति** शून्याख्यमिति शेषः । **सत्त्वाख्यसाधनमागमबाधितं कृत्वेति** । सर्वमपि सत् पक्षीकृत्य सत्त्वेन हेतुना क्षणिकत्वसाधने शून्याख्यतत्त्वस्य नित्यत्वग्राहकतदागमेन बाध इति मत्वेत्यर्थः । इदमुपलक्षणम्—तादृशतत्त्वे सत्त्वरूपहेतोः व्यभिचारमपि मत्वेत्यपि बोध्यम् । एतेन तादृशतत्त्वव्यतिरिक्तसत्पक्षीकारे न बाध

**ध्रुवभावित्वमेव हेतुमभिमन्यन्ते । तथा हि–यत् ध्रुवभावि, न तत् हेतुसापेक्षम् । अन्यथा ध्रुवभावित्वविरोधात् । अतः कार्याणां ध्रुवभाविनः प्रध्वंसस्याहेतुकत्वसिद्धेर्विलम्बायोगादुदीयमानमेव वस्तु तेन ग्रस्यत इति । तत्र ध्रुवभावित्वशब्देन तत्समकालभावित्व-तदनन्तरभावित्वनियम-तन्मात्रजन्यत्व-तदेकसामग्रीजन्यत्वाहेतुकत्वाद्यर्थविवक्षायां यथायथमसिद्धिव्याघातसाध्याविशेषादिदोषा-**

---

पक्षीकृत्य ध्रुवभावित्वेन हेतुना हेतुनिरपेक्षत्वं प्रसाध्य तन्मुखेन क्षणिकत्वं वर्णयन्तीत्यर्थः । **तेन ग्रस्यत इति** । प्रध्वंसेन गृह्यत इत्यर्थः । किं नाम ध्रुवभावित्वम्? कार्यसमकालभावित्वं वा? नियमेन कार्यसमनन्तरभावित्वं वा? कार्यमात्रजन्यत्वं वा? कार्यमात्रसामग्रीजन्यत्वं वा? अहेतुकत्वं वा? अन्यद्वा?। नाद्यद्वितीयौ; असिद्धेः । नापि तृतीयचतुर्थौ; तयोरहेतुकत्वविरुद्धत्वेन व्याघातात् । न च पञ्चमः; साध्याविशिष्टत्वात्, एष्यत्त्वातिरिक्तस्यान्यस्य दुर्वचत्वात्; एष्यत्त्वमात्रस्य च मुद्गरप्रहारजन्ये विसभागसन्तानारम्भककपालक्षणे तदविनाभूते प्रतिसङ्ख्यानिरोधादौ चानैकान्त्यादित्याह **तत्र ध्रुवभावित्वशब्देनेति** ।

---

इत्यपास्तम् । न च तादृशतत्त्वव्यतिरिक्तसत्त्वस्यैव हेतूकरणात् न व्यभिचार इति वाच्यम्; तादृशतत्त्वस्येव इतरस्यापि स्थिरत्वोपपत्त्या तदितरसत्त्वमप्रयोजकमपि इत्यभिप्रायात् । **ध्रुवभावित्वमेव हेतुमभिमन्यन्त इति** । ध्रुवभावित्वेन अहेतुकत्वसिद्धिद्वारा क्षणिकत्वसिद्धिमभिमन्यन्त इत्यर्थः । एतदेवोपपादयति **यदित्यादिना** । **न तद्धेतुसापेक्षमिति** । अन्यापोहवदिति शेषः । इदञ्च व्याप्तिबोधकमुदाहरणम् । विपक्षे बाधकमनुकूलतर्कमाह **अन्यथेति** । हेतुसापेक्षत्वे इत्यर्थः । **ध्रुवभावित्वविरोधात्** ध्रुवभावित्वानुपपत्तिप्रसंगात् । सहेतुकत्वे कदाचित् हेत्वभावेन तदभावसंभवात् ध्रुवभावित्वं न स्यादिति भावः । पक्षधर्मताप्रदर्शनपूर्वकं ध्वंसे अहेतुकत्वसिद्धिमुपसंहरन् तेन क्षणिकत्वसिद्धिमाह **अत इत्यादिना** । **विलम्बायोगादिति** । हेतुसापेक्षत्वे हि तद्विलम्बात् विलम्बसंभव इति भावः । **तेन ग्रस्यत इति** । ध्वंसेन गृह्यत इत्यर्थः । द्वितीयक्षणवृत्तिध्वंसप्रतियोगी भवतीति यावत् । अयं भावः–घटध्वंसो घटाधिकरणसमयध्वंसाधिकरणयावत्कालवर्ती अहेतुकत्वात् अन्यापोहवत्, नित्यतत्त्वान्तरवद्वेत्यनुमानेन क्षणभङ्गसिद्धिः । स्वप्रतियोग्यधिकरणकाले विरोधेन ध्वंसस्य विद्यमानत्वासंभवात् बाधः स्यादिति तद्वारणाय **यावदिति** । इत्थञ्च द्वितीयक्षणस्यापि यावदन्तर्गततया तद्वृत्तिध्वंसप्रतियोगित्वसिद्धिरिति । अहेतुकत्वसाधकतयाऽभिमतं ध्रुवभावित्वं विकल्प्य दूषयति **तत्रेत्यादिना** । **तत्समकालभावित्वं** प्रतियोग्यधिकरणकालवृत्तित्वम् । **तदनन्तरभावित्वनियमः** स्वक्षणाव्यवहितपूर्वक्षणोत्पत्तिकत्वप्रतियोग्यधिकरणत्वोभयसंबन्धेन घटत्वादिव्यापकत्वम् । **तन्मात्रजन्यत्वं** प्रतियोगीतराजन्यत्वे सति तज्जन्यत्वम् । **तदेकसामग्रीजन्यत्वम्** प्रतियोगिसामग्रीमात्रजन्यत्वम् । **अहेतुकत्वम्** अजन्यत्वम् । **आदिपदात्** तत्त्वमुक्ताकलापसर्वार्थसिद्ध्यनुगृहीतप्रतियोगिरूपत्वपरिग्रहः । **असिद्धीत्यादि** । प्रतियोग्यभावयोर्विरोधात् प्रतियोग्यधिकरणकाले ध्वंसासंभवात् प्रथमे स्वरूपासिद्धिः । द्वितीये तु साध्याविशेषापरपर्याया संदिग्धासिद्धिः; वस्तुस्थिरत्वपक्षे तत्संप्रतिपत्त्यभावात् । तृतीयचतुर्थयोः व्याघातशब्दितो विरोधः । पञ्चमे साध्याविशेषः । षष्ठे प्रतियोग्यभावयोर्विरुद्धयोः तादात्म्यासंभवात् स्वरूपासिद्धिः ।

वैध्यर्त्वनियममात्रमवशिष्यते । तच्च भवतामपि विसभागसन्तानारम्भककपालक्षणतद्विनाभूतप्रति-सङ्ख्यानिरोधादिना अनैकान्तिकमिति । अन्यथा सर्वेषामप्युत्तरक्षणानामैष्यत्त्वाविशेषात् प्रथमक्षण

**विसभागेति**। विसदृशेत्यर्थः। तन्मते सन्तानो द्विविधः सदृशसन्तानः, विसदृशसन्तानश्चेति। नाशोऽपि द्विविधः प्रतिसङ्ख्यानिरोधः, अप्रतिसङ्ख्यानिरोधश्चेति। सङ्ख्या=बुद्धिः। वस्तुप्रतिकूला सङ्ख्या प्रतिसङ्ख्या। तदेत(सदेत?)दसत्करोमीत्येवंरूपा या बुद्धिः विनाशकपुरुषनिष्ठा, सा प्रतिसङ्ख्येत्युच्यते। तया बुद्ध्या मुद्गर-प्रहारादिद्वारा जातो यो विनाशः, स प्रतिसङ्ख्यानिरोधः । तदितरो निर्हेतुकः प्रतिक्षणमुत्पद्यमानो विनाशः अप्रतिसङ्ख्यानिरोधः । ततश्च मुद्गरप्रहारादिना घटक्षणसन्तानविसजातीयकपालक्षणसन्तानारम्भकाद्यकपालक्षणः प्रतिसङ्ख्यानिरोधश्च युगपज्जायेते इति तेषां परिभाषा । **अन्यथेति**। एष्यतः सर्वस्याप्यहेतुकत्व इत्यर्थः

**अन्यथा** ध्वंसानन्तरमपि प्रतियोगिनः सत्त्वापत्त्या क्षणभङ्गसाधनाय प्रवृत्तैः स्थिरत्वमेव साधितं स्यात् आदिपदात् प्रथमे तत्समानकालीनसहेतुकवस्त्वन्तरे व्यभिचारस्य संग्रहः । **एष्यत्त्वनियममात्रमिति** स्वप्रागभावाधिकरणकालवृत्तित्वसंबन्धेन घटत्वादिव्यापकत्वमात्रम् इत्यर्थ. । **अवशिष्यते** उक्तदूषणैः न दूष्यते । **विसभागेति** । विसदृशेत्यर्थः । तन्मते हि सन्तानो द्विविधः सदृशसन्तानो विसदृशसन्तान श्चेति । प्रतिक्षणं जायमानघटसंतानः सदृशसंतानः । मुद्गरप्रहारादिसमकालभाविकपालादिसन्तानो विसदृशसन्तान इति। **सन्तानारम्भककपालक्षणेति** । तादृशसन्तानारम्भकप्राथमिककपाले मुद्गरपातादि-जन्यतया निर्हेतुकत्वरूपसाध्याभाववति उक्त—एष्यत्त्वनियमसद्भावात् व्यभिचार इत्यर्थः । ननु स्वप्राग-भावाधिकरणकालवृत्तित्वप्रतियोगित्वोभयसंबन्धेनैव व्यापकत्वस्य विवक्षणीयतया नोक्तव्यभिचार इत्यत आह **तद्विनाभूतप्रतिसंख्यानिरोधेति** । तन्मते हि नाशो द्विविधः—प्रतिसंख्यानिरोधः अप्रतिसंख्या-निरोधश्चेति । संख्या=बुद्धिः । वस्तुप्रतिकूला संख्या प्रतिसंख्या । तदेतत् (सदेतत् ?) असत्करोमि इत्येवंरूपा विनाशकपुरुषनिष्ठा बुद्धिः प्रतिसंख्या । तया मुद्गरप्रहारादिना जातो विनाशः प्रतिसंख्यानिरोधः। तदितरो निर्हेतुकः प्रतिक्षणमुत्पद्यमानो विनाशः अप्रतिसंख्यानिरोध इति । मुद्गरप्रहारादिना घटक्षणसंतान-विसदृशसन्तानारम्भकप्राथमिककपालक्षणः प्रतिसंख्यानिरोधश्च युगपज्जायत इति तैरङ्गीक्रियते । तत्र मुद्गरपातादिजन्यतया साध्याभाववति प्रतिसंख्यानिरोधरूपनाशे उक्तहेतुसत्त्वात् व्यभिचार इत्यर्थः । ननु मुद्गरपातादीनामपि विसदृशसन्तानारम्भकत्वमेव ; न तु नाशकत्वमित्यङ्गीकारात् नोक्तव्यभिचारावकाशः । तत्र निर्हेतुकत्वरूपसाध्यस्यैव सत्त्वादित्यत आह आदीति । आदिना पूत्कारादिजन्यदीपनाशसंग्रहः । तत्र सदृशसन्तानारम्भस्य भवदनभिमततया पूत्कारादेः नाशजनकत्वमेव वाच्यमिति तत्र व्यभिचार इत्यर्थः। वस्तुतस्तु अन्वयव्यतिरेकाविशेषात् मुद्गरपातादीनां विसदृशसन्तानाऽऽ-रम्भकत्वमेव, न तु नाशकत्वमिति नियन्तुमशक्यम् । नाशकत्वमेव न तु सदृशसन्तानारम्भकत्वमिति विपरिवर्तस्यापि प्रसंगात् । किंच तादृशनाशे मुद्गरपातादीनां कारणत्वास्वीकारे तस्याऽऽकस्मिकत्वापत्त्या पूर्वमपि उत्पत्तिप्रसंगः । अथ विसदृशसन्तानस्यैव तन्नियामकत्वाङ्गीकारात् न पूर्वं तदुत्पत्तिरिति

एव सर्वक्षणोत्पत्तौ विश्वविनिवृत्तिप्रसङ्गः ॥ आस्थानिवृत्त्यर्थं क्षणिकत्वमुपदेष्टव्यमिति चेत्-अहो ! महाधार्मिकस्यानळीकवादिनो महानयमधर्मः प्रसज्येत । सूक्ष्मधियस्तत्रैवाऽऽस्थानिवृत्तिप्रसङ्गाच्च । विश्वानित्यतामात्रोपदेशादपि च तत्सिद्धेः । अन्यथा शून्योपदेशस्यैव अवश्यकर्तव्यत्वप्रसङ्गादिति ॥

प्रत्यनुमानानि च—विगीता प्रत्यभिज्ञा स्वविषये प्रमा ; अबाधितबुद्धित्वात् । स्वलक्षण-

---

**आस्थानिवृत्त्यर्थमि**ति । विषयेषु वैराग्यसिद्ध्यर्थमतात्त्विकमपि क्षणिकत्वमुपदेष्टव्यम् । न तु तात्त्विकमित्यर्थः । **अनळीकवादिन** इति । अतात्त्विकस्य क्षणिकत्वस्योपदेशादनृतवदनलक्षणमहापातकप्रसङ्ग इत्यर्थः । **तत्रैवास्थानिवृत्ती**ति । क्षणिकत्ववाद एव बुद्धिमतामश्रद्धा स्यात् । त्वदुक्तयुक्तेर्दुर्युक्तित्वज्ञानादित्यर्थः । **तत्सिद्धेरि**ति । आस्थानिवृत्तिसिद्धेरित्यर्थः ॥

---

चेत्-किं तस्य कारणत्वमङ्गीकृत्य नियामकत्वं स्वीक्रियते, उत तदनङ्गीकृत्यैव । आद्ये, उक्तव्यभिचारो दुष्परिहरः । तादृशसन्तानजन्यतयैव साध्यासंभवात् । द्वितीये चार्वाकवादसमुत्थानम् ; सर्वत्र एवमेव कस्यचिन्नियामकत्वमाश्रित्य कालान्तरे तदापत्तिपरिहारसंभवेन कार्यकारणभावमात्रविलोपप्रसंगात् । एवं विसभागसन्तानारम्भकाद्यक्षणस्यैव अहेतुकत्वेऽपि एष्यत्वनियमोपपत्त्या अप्रयोजकत्वमित्यादिकमूह्यम् । एष्यत्वस्य अहेतुकत्वव्याप्यत्वे बाधकमाह **अन्यथे**ति । एष्यत्वस्य अहेतुकत्वव्याप्यत्वे इत्यर्थः । एष्यत्वाविशेषादिति अहेतुकत्वापत्त्येति शेषः । **प्रथमक्षण एव सर्वक्षणोत्पत्तावि**ति । भवदुक्तरीत्यैव हेतुनिरपेक्षस्य विलम्बासंभवादिति भावः । **विश्वविनिवृत्तिप्रसङ्ग इति** । क्षणिकतया द्वितीयक्षणसत्त्वासंभवादिति भावः । **आस्थानिवृत्त्यर्थमि**ति । विषयेषु वैराग्यसिद्ध्यर्थमतात्त्विकमपि क्षणिकत्वमुपदेष्टव्यमित्यर्थः । **अनळीकवादिनः**=सत्यवदनशीलस्य, **महानयमधर्मः**=अनृतवदनरूपं महापापम् । **तत्रैवास्थानिवृत्ती**ति । तदुपदेश एव बुद्धिमतामविश्वासः स्यात् ; त्वदुक्तयुक्तेराभासत्वज्ञानादित्यर्थः । **तत्सिद्धेः**=आस्थानिवृत्तिसिद्धेः । **अन्यथा**=आस्थानिवृत्त्यर्थमवास्तवोपदेशादरणे, **शून्योपदेशस्ये**ति । तस्यैव तीव्रवैराग्यजनकत्वादिति भावः ॥

**प्रत्यनुमानानी**ति । बाधकानि प्रतिरोधकानि चेत्यादिः । बाधकं प्रत्यनुमानमाह **विगीतेत्या-दिना** । अनेन सोऽयं घट इत्यादेर्घटादावतीत-वर्तमानकालद्वयसंबन्धावगाहिप्रत्यभिज्ञायाः प्रमात्वसिद्धौ क्षणिकत्वानुमानं निश्चितप्रामाण्यकतादृशप्रत्यभिज्ञाप्रत्यक्षबाधितं भवतीति भावः । संस्कारसन्निकर्षोभय-जन्यज्ञानत्वरूपप्रत्यभिज्ञात्वावच्छेदेन प्रमात्वसाधने दीपादिप्रत्यभिज्ञायां बाधः स्यादिति **विगीते**ति विशेषणम् । विगीतत्वं च विप्रतिपत्तिविषयत्वम् । प्रमात्वतदभावकोटिकसंशयविषयत्वमिति यावत् । ततश्च दीपादिप्रत्यभिज्ञायाः प्रमात्वाभाववत्तया उभयसंप्रतिपन्नतया तत्रोक्तसंशयविषयत्वाभावान्न तत्र बाधावकाशः । अथ तत्रापि कस्यचित् प्रमात्वाभावनिश्चयरहितस्योक्तसंशयसंभवाद्बाधतादवस्थ्यम् । यदि च दीपादिप्रत्यभिज्ञातिरिक्तविशेष्यकतादृशसंशयविषयत्वमेव विवक्षितव्यमित्युच्यते ; तदा दीपादिप्रत्यभि-ज्ञातिरिक्तत्वेनैव निवेशसंभवाच्छेषवैयर्थ्यम् , शिरोवेष्टनेन नासिकास्पर्शनतुल्यता चेति चेत्-न; उक्तसंशयस्य तद्व्यक्तित्वेनैव लाघवान्निवेशनीयतया दोषानवकाशात् । अत एव संशयत्वनिवेशनानर्थक्यमित्यपि न । अयं घट इत्यभिज्ञायां स्वलक्षणप्रमायामेव वा सिद्धसाधनवारणाय **प्रत्यभिज्ञे**ति । अवच्छेदकावच्छेदेना-

र-पे. अनुमितेरुद्देश्यत्वेऽपि सामानाधिकरण्येन सिद्धसाधनस्यापि दोषत्वमस्त्येवेत्युक्तम् । प्रत्यभिज्ञात्वं च संस्कारसन्निकर्षोभयजन्यत्वम् । स्मृतौ संस्कारमात्र सन्निकर्षेति ; स्मृतिसाधारणयाथार्थ्यलक्षणप्रमात्वसाधने स्मृतौ सिद्धसाधनवारणमेव तत्फलं बोद्धव्यम् । दीपादिप्रत्यभिज्ञातिरिक्तप्रत्यभिज्ञाविशेष्यकसंशयस्य तद्व्यक्तित्वेन विषयतासंबन्धेन लाघवात् पक्षतावच्छेदकत्वसंभवेऽपि यथासन्निवेशे न वैयर्थ्यम् । स्वविषये प्रमेति । स्वविषययावदवच्छेदेन प्रमेत्यर्थः । स्वविषयताव्यापकप्रमात्ववतीति यावत् । व्यापकता चावच्छेदकतासंबन्धेन । प्रमात्वं ह्यांशिकम् ; शुक्तिरजतादिज्ञानस्यापि धर्म्यंशे प्रमात्वात् । उक्तं हि, "सर्वं ज्ञानं धर्मिण्यभ्रान्तं प्रकारे तु विपर्ययः" इति । ततश्च सर्वांशेऽपि यस्य प्रमात्वम्, तस्यैवोक्तसाध्यसंपत्तिः । इदञ्च विशेषणं सिद्धसाधनवारणाय । प्रत्यभिज्ञायां हि वर्तमानकालसंबन्धांशे प्रमात्वमुभयसंप्रतिपन्नम् । न च सोऽयं घट इति प्रत्यभिज्ञायां किञ्चिदंशेऽपि प्रमात्वाभावासत्त्वस्यैव सिद्धान्त्यभिमततया तत्र प्रमात्वस्य व्याप्यवृत्तित्वमेवेति तत्र विषयस्य कथमवच्छेदकत्वमिति वाच्यम् ; सर्वविषयेऽपीयं प्रमेति प्रतीत्यनुरोधेन व्याप्यवृत्तेरपि सर्वविषयावच्छिन्नत्वाङ्गीकारात् । अङ्गीकृतं हि तार्किकशिरोमणिभिरपि पर्वते रूपे न वह्निमत्संयुक्तत्वमिति प्रतीत्या व्याप्यवृत्तावपि रूपनिष्ठवह्निमत्संयुक्तत्वाभावे पर्वतावच्छिन्नत्वम् । व्याप्यवृत्तित्वं हि स्वसमानाधिकरणाभावाप्रतियोगित्वम् । तच्च किञ्चिदवच्छिन्नत्वेऽपि न हीयत इति । यदि च व्याप्यवृत्तेः किञ्चिदवच्छिन्नत्वं नास्तीत्याग्रहः, तदा प्रमात्वाभाववद्भेद एव साधनीयः । प्रत्यभिज्ञायाः अतीतकालसंबन्धांशे प्रमात्वाभावे तत्र नोक्तसाध्यसंपत्तिः ; भेदस्य व्याप्यवृत्तित्वात् । अतो न सिद्धसाधनावकाशः, अभिमतसिद्धिश्च । अथवा अनवच्छिन्नाश्रयतासंबन्धेनैव प्रमात्वं साधनीयमिति न काचिदनुपपत्तिः । वस्तुतस्तु तद्वति तत्प्रकारकत्वरूपप्रमात्वस्य प्रकारभेदेन भिन्नतया सोऽयं घट इति प्रत्यभिज्ञायां कस्यापि प्रमात्वस्य नानवच्छिन्नाश्रयतासंबन्धेन वर्तमानत्वसंभवः । वर्तमानकालसंबन्धप्रमात्वस्यातीतकालसंबन्धरूपविषयावच्छेदेन, अतीतकालसंबन्धप्रमात्वस्य वर्तमानकालसंबन्धरूपविषयावच्छेदेन चाभावसत्त्वेनोभयोरपि प्रमात्वयोस्तत्राव्याप्यवृत्तित्वात् । अतः प्रागुक्तस्वविषयताव्यापकप्रमात्वसाधनमेव सम्यक् । व्यापकता च प्रमात्वत्वेन । स्वविषयतासमानाधिकरणाभावनिरूपितावच्छेदकतासंबन्धावच्छिन्नप्रतियोगितानवच्छेदकप्रमात्वत्वावच्छिन्नं साध्यमिति तु निष्कर्षः । प्रमात्वत्वञ्च संबन्धविशिष्टप्रकारतानिरूपकतात्वम् । वैशिष्ट्यं स्वानुयोगिनिष्ठविशेष्यतानिरूपितत्व-स्वप्रतियोगिनिष्ठत्व-स्वावच्छिन्नत्वैतत्रितयसंबन्धेन ।

अथ स्वलक्षणप्रमाया निर्विकल्पकरूपतया तदभिमतत्वात् तत्रोक्तसाध्यसंप्रतिपत्तिरिति तस्या दृष्टान्तत्वानुपपत्तिः ; यदि च अर्थजन्यत्वमेव प्रमात्वमिति तैरङ्गीकारात् तदेवेह साध्यतया स्वीक्रियत इत्युच्यते, तदा सिद्धसाधनमर्थान्तरं वा ; प्रत्यभिज्ञायामतीतकालसंबन्धांशे प्रमात्वविरहेऽपि घटादिजन्यत्वमात्रेण साध्योपपत्तेः । स्वविषययावदर्थजन्यत्वस्य, स्वविषयताव्यापक-स्वनिष्ठजन्यतानिरूपकत्वपर्यवसितस्य साधने बाधः ; अतीतकाले प्रत्यभिज्ञाजनकत्वविरहादिति चेत् ; तर्हि संबन्धविशिष्टान्यप्रकारतानिरूपकत्वाभावरूपो भ्रमत्वाभाव एव साधनीयः । संबन्धवैशिष्ट्यं प्रागुक्तत्रितयसंबन्धेन । इत्थञ्च

बुद्धिवत्। सा हि स्वविषये प्रमैव अस्माकम्, वैभाषिकस्यापि। यत् सत् न तत् क्षणिकम्; यथा

दृष्टान्तस्योभयवादिसम्प्रतिपत्तिं दर्शयति—**अस्माकम्, वैभाषिकस्यापीति।**

---

निर्विकल्पके प्रकारतानिरूपकत्वविरहादेव साध्यसंपत्तिः। यद्यपि प्रत्यभिज्ञायां वर्तमानकालांशे भ्रान्तत्वाभावमादाय सिद्धसाधनम्, तथापि स्वविषययावदवच्छिन्नत्वं प्रागुक्तव्यापकत्वपर्यवसितमभावविशेषणं देयमिति न दोषः। यदि च स्वविषयताव्यापकेत्यत्र स्वपदेन पक्षोपादाने दृष्टान्ते साध्यवैकल्यम्, दृष्टान्तोपादाने च बाध इत्युच्यते—तदा स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वपर्यवसितस्वानवच्छेदकाविषयकत्व-आश्रयत्वोभयसंबन्धेन तादृशाभावस्य साध्यत्वमाश्रयणीयम्। स्वनिष्ठावच्छेदकता च अवच्छेदकतासंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवद्विषयकत्वसंबन्धावच्छिन्ना। व्याप्यवृत्तेः किञ्चिदवच्छिन्नत्वास्वीकारे तु अनवच्छिन्नाश्रयतासंबन्धेन तादृशाभावः साधनीय इति दिक्। **अबाधितबुद्धित्वादिति।** बाधितविषयकबुद्धित्वाभावादित्यर्थः। न त्वबाधितविषयकबुद्धित्वादिति। दीपादिप्रत्यभिज्ञाया अपि वर्तमानकालांशे अबाधितविषयकत्वसत्त्वेन व्यभिचारापत्तेः। तत्र बुद्धित्वनिवेशस्यानतिप्रयोजनकतया बाधितविषयकत्वाभाव एव फलितो हेतुः। बाधितत्वञ्चादुष्टकारणजन्यनिषेधबुद्धिविषयत्वम्। दोषानधीनज्ञानविषयीभूताभावप्रतियोगित्वमिति यावत्। तेन घटोऽतीतकालसंबन्धाभाववान् वर्तमानकालसंबन्धित्वादित्यानुमानिकज्ञानहेतोरीश्वरादेरदुष्टत्वेऽपि, घटो न नित्य इति निषेधबुद्धौ घटादेर्विषयत्वेऽपि च नासिद्धिः। न चैवमप्यतीतो घटो वर्तमानकालसंबन्धाभाववानिति बुद्धिविषयीभूताभावप्रतियोगिवर्तमानकालसंबन्धविषयकत्वमादायासिद्धिर्दुर्वारैवेति वाच्यम्; दोषानधीनबुद्धौ यद्यद्धर्मावच्छिन्ने यद्यद्धर्मावच्छिन्न-यद्यत्संबन्धावच्छिन्नप्रतियोगिताकाभाववैशिष्ट्यं विषयः, तत्तद्धर्मावच्छिन्न-तत्तत्संबन्धावच्छिन्नप्रकारतानिरूपकत्वाभावकूटवत्त्वस्यैव बाधितविषयकत्वाभावरूपतया दोषविरहात्। वीप्साकरणात् घटो न नित्य इति निषेधबुद्धिविषयाविषयकत्वस्य दीपादिप्रत्यभिज्ञायां सत्त्वेऽपि न व्यभिचारः। यदि चासर्वज्ञदुर्विज्ञानत्वमालोच्यते; तदा दोषानधीनज्ञाननिरूपितप्रकारताविशिष्टप्रकारतानिरूपकत्वसामान्याभाव एव बाधितविषयकत्वाभावरूपो हेतुर्वाच्य इति न कोऽपि दोषः। प्रकारतायां प्रकारतावैशिष्ट्यं स्वावच्छेदकसंबन्धभूतप्रतियोगितावच्छेदकसंबन्धावच्छिन्नत्व स्वावच्छेदकधर्मावच्छिन्नत्व – स्वनिरूपिताभावत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितत्वैतत्त्रितयसंबन्धेन। इत्थं च दीपोऽतीतकालसंबन्धाभाववानित्याकारकदोषानधीनज्ञानीया या अतीतकालसंबन्धनिष्ठा आश्रयतासंबन्धावच्छिन्नप्रतियोगितासंबन्धावच्छिन्ना प्रकारता, तद्विशिष्टैव सोऽयं दीप इति प्रत्यभिज्ञानिरूपितातीतकालसंबन्धनिष्ठप्रकारतेति न कश्चिद्दोषः। घटो भूतकालसंबन्धाभाववानिति भ्रममादायासिद्धिवारणाय दोषानधीनेति। हेतुकोटिप्रविष्टविशेषणानां व्यभिचारवारकतयैव सार्थक्यमिति मन्त्रपाठस्तु नादर्तव्यः; रूपादिषु मध्ये गन्धस्यैवाभिव्यञ्जकत्वादित्यादीन्द्रियपार्थिवत्वादिसाधकहेतौ रूपादिषु मध्य इत्यसिद्धिवारकविशेषणस्य दूरेव दानाच्च। दृष्टान्ते साध्यस्योभयसंप्रतिपन्नत्वमाह साहीति।

सम्प्रतिपन्नं नित्यम्। सन्तश्चामी भावा इति। यत् प्रतीयते तदक्षणिकम्; यथा शशशृङ्गमिति भवद्व्यवहारेणापि प्रसज्यते। प्रध्वंसः सहेतुकः पूर्वावधिमत्त्वात् पटवदित्यादीनि च स्वयमुन्नेयानि। एवं द्रव्यस्य स्थिरत्वं सिद्धम्॥ तच्च—

(द्रव्यविभागप्रकारः)

**द्वेधा जडाजडतया प्रत्यक्तदितरतयाऽपि वा द्रव्यम्।**
**षोढा त्रिगुणानेहोजीवेश्वरभोगभूतिमतिभेदात्॥ ७॥**

---

**सम्प्रतिपन्नं नित्य**मिति। बुद्धोपदिष्टमिति शेषः। दृष्टान्तस्योभयवादिसम्प्रतिपत्त्यभावादाह—**भवद्व्यवहारेणा-पीति**। जडाजडतया प्रत्यक्तदितरतया वा द्वेधापि विभक्तं द्रव्यं प्रकारान्तरेण षोढा विभजति—**षोढेति। अनेहा**

---

प्रतिरोधकं प्रत्यनुमानमाह **यत्सदिति**। सत्त्वं कालसंबन्धः। तेन नित्यतत्त्वास्वीकर्तृमतेऽपि घटत्वादिरूपान्यापोहस्य दृष्टान्तत्वं संभवति। तत्रार्थक्रियाजनकत्वरूपसत्त्वानुपगमेऽपि कालसंबन्ध-स्वीकारात्। **न तत् क्षणिकमिति**। स्वध्वंसाधिकरणसमयवृत्तित्वस्ववृत्तित्वोभयसंबन्धेन काल-विशिष्टान्यत् नेत्यर्थः। उक्तोभयसंबन्धेन कालविशिष्टमिति यावत्। तेन सिद्धान्तिमते उक्तोभयसंबन्धेन कालविशिष्टान्यस्याप्रसिद्धावपि न क्षतिः। **संप्रतिपन्नं नित्यमिति**। बुद्धोपदिष्टमिति शेषः। सिद्धान्त्यभ्युपगतनित्यतत्त्वेषु यत्र कचन तदन्तर्भावसंभवादिति भावः। अनुमानान्तरमाह **यत् प्रतीयत इति**। प्रतीयमानत्वं ज्ञानविषयत्वम्। **तदक्षणिकमिति**। स्वध्वंसाधिकरणकालवृत्तित्व-स्ववृत्ति-त्वोभयसंबन्धावच्छिन्नकालत्वावच्छिन्नप्रतियोगिताकात्यन्ताभाव-कालवृत्तित्वोभयाभाववदित्यर्थः। तेन सिद्धान्ते क्षणिकत्वस्यैवाप्रसिद्ध्या न तद्भेदसाधनसंभवः; उक्तोभयसंबन्धेन कालविशिष्टत्वरूपस्थिरत्व-साधने तु शशशृङ्गस्य दृष्टान्तत्वानुपपत्तिरित्यपास्तम्। न च शशशृङ्गादिवदसत्त्वेऽप्युक्तसाध्योपपत्त्या अर्थान्तरमिति वाच्यम्; कालसंबन्धस्यैव पक्षतावच्छेदकत्वस्वीकारेण स्थिरत्वमादायैवानुमानपर्यवसानस्य वाच्यतया दोषविरहात्। दृष्टान्तस्योभयसंप्रतिपन्नत्वविरहादाह **भवद्व्यवहारेणापीति**। तन्मतसिद्धां शशशृङ्गप्रतीतिमभ्युपगम्य तस्य दृष्टान्तत्वेनोपन्यास इति भावः। कालवृत्तित्वस्थाने उत्पत्तिमत्त्व-घटितोभयाभावसाधने तु अनादेः प्रागभावस्य नित्यतत्त्वस्य वा दृष्टान्तत्वसंभवो बोद्धव्यः। उत्पत्तिमत्त्व-स्यैव पक्षतावच्छेदकत्वाभ्युपगमाच्च नानुत्पन्नत्वमादायार्थान्तरम्। प्रध्वंसस्य निर्हेतुकत्वसाधकानुमानस्य प्रत्यनुमानमाह **प्रध्वंस इति। पूर्वावधिमत्त्वात्** प्रागभावप्रतियोगित्वात्। **इत्यादीनीत्यादिना** प्रध्वंसः सहेतुकः उत्पत्तिमत्त्वात्, घटवत्; घटः स्थिरः प्रमेयत्वात् नित्यतत्त्ववदित्यादेः सङ्ग्रहः। उत्पत्तिश्च स्वाधिकरणसमयध्वंसानधिकरणसमयवृत्तित्वम् स्ववृत्तित्व-स्ववृत्तिभेदप्रतियोगितावच्छेदकत्व-उभयसंबन्धेन समयविशिष्टत्वपर्यवसितम्। अवच्छेदकता च स्वाधिकरणसमयध्वंसाधिकरणत्वसंबन्धा-वच्छिन्ना। तेन नाननुगमात् दृष्टान्तपक्षसाधारण्यानुपपत्तिः।

द्वेधेत्यादिगीतिद्वयं द्रव्यविभागपरम्। द्रव्यं द्विविधम्, जडमजडं चेति। पुनरपि द्विविधं प्रत्यक्-पराक् चेति। पुनरपि षड्विधम्—त्रिगुण-काल-जीवेश्वर-शुद्धसत्त्व-धर्मभूतज्ञानभेदात् इति आर्यागीतेरर्थः। तत्र **भोगभूतिः** नित्यविभूतिः। क्वचित् **नित्यभूतीति** पाठः। द्रव्यस्य षड्विधत्वे

**धी-काल-भोगभूतीरविवक्षित्वा गुणादिरूपत्वात् ।**
**देहात्मेशभिदार्थं त्रेधा तत्त्वं विविञ्चते केचित् ॥ ८ ॥**

**परत एव भासमानं जडम् । तदन्यदजडम् । स्वस्मै भासमानं प्रत्यक् । परस्मै भासमानं** कालः । **भोगभूतिः** नित्यविभूतिः । ननु द्रव्यस्य षोढा विभागे चिदचिदीश्वरभेदेन त्रेधा विभागकथनविरोध इत्याशङ्क्य कालधर्मभूतज्ञाननित्यविभूतीनां तत्त्वत्रयरूपभोग्यभोक्तृप्रेरितृविशेषणत्वेन गुणत्वात् प्रकृत्यात्मभ्रमस्वतन्त्रात्मभ्रमनिवृत्तौ प्रकृतिजीवेश्वरविभागस्यैवोपयुक्तत्वेन कालधर्मभूतज्ञाननित्यविभूतिविभागस्यानुपयुक्तत्वाच्च न तद्विभागः कृतः । धर्मभूतज्ञानस्य ज्ञातृविशेषणत्वं स्पष्टम् । नित्यविभूतेर्विग्रहादिरूपेणेश्वरविशेषणत्वञ्च स्पष्टम् । कालस्य भोग्यभूतमहदादिपरिणामहेतुतया भोग्यप्रकृतिविशेषणत्वञ्च स्पष्टम् । स्वतन्त्रात्मभ्रम-प्रकृत्यात्मभ्रमनिवृत्त्यनुपयुक्तत्वञ्च स्पष्टम्-इत्यभिप्रेत्य कैश्चिदाचार्यैस्त्रेधा विभक्तमित्याह—**धीकालभोगभूतीरिति**। ननु जडत्वाजडत्वयोरेव प्रत्यक्तदितरत्वरूपतया **प्रत्यक्तदितरतयापि वेति** वाशब्दोऽनुपपन्न इत्याशङ्क्याह—**परत एवेति** । धर्मभूतज्ञानस्य पराक्त्वे तदभावप्रतिपादक**नीतिमाला**विरोधमाशङ्क्याह तत्र

---

चिदचिदीश्वरभेदेन त्रेधा तद्विभागः केषाञ्चित् कथमुपपद्यत इत्याशङ्क्य चिदचिदीश्वरतत्त्वत्रयनिरूपणस्यैव देहात्मभ्रम-स्वतन्त्रात्मकभ्रमनिवर्तकतया अत्यन्तावश्यकत्वात्, धर्मभूतज्ञानस्य ज्ञानाश्रयरूपचेतनविशेषणतया, नित्यविभूतेर्विग्रहादिरूपेण ईश्वरविशेषणतया कालस्य तत्त्वत्रयविशेषणतया [च ?] प्रतीयमानत्वात्, देहात्मभ्रमस्वतन्त्रात्मभ्रमनिवृत्त्यनुपयोगित्वाच्च तत्त्वत्रयनिरूपणमेव कैश्चित् कृतमिति समाधत्ते **धीकालेति** । **गुणादीत्यादिना** देहात्मभ्रम-स्वतन्त्रात्मभ्रमनिवृत्त्यनुपयुक्तत्वं गृह्यते । **देहात्मेशभिदार्थं**=देहजीवेश्वराणां परस्परवैलक्षण्यप्रतिपत्त्यर्थं, **त्रेधा**=चिदचिदीश्वररूपेण भोक्तृभोग्यनियन्तृरूपेण वा, **विविञ्चते**=विभज्य निरूपयन्ति । ननु **जडाजडतया प्रत्यक्तदितरतयापि वेति** वाकारोऽनुपपन्नः ; जडत्वाजडत्वयोरेव प्रत्यक्त्वपराक्त्वरूपत्वादित्याशङ्क्याह **परत एवेति** । परत एव भासमानत्वम् = स्वनिरूपितविषयताशून्यत्वे सति स्वेतरनिरूपितविषयतावत्त्वम् । अत्र स्वनिरूपितविषयताशून्यत्वमात्रमेव जडत्वम्—न तु स्वेतरनिरूपितविषयतावत्त्वमपि तत्र प्रविष्टम् ; प्रयोजनविरहात् । स्वनिरूपितविषयताशून्यत्वं च निरूपकत्व-आश्रयत्वोभयसंबन्धेन विषयताविशिष्टान्यत्वम् । तेन, 'स्वनिरूपितविषयताशून्यत्वमित्यत्र स्वपदस्य यत्र शून्यत्वमुपपादनीयं तत्परत्वेऽप्रसिद्धिः ; जडस्य विषयतानिरूपकत्वविरहात् । स्वनिष्ठविषयतानिरूपकत्वशून्यत्वस्य तदर्थत्वेऽपि अननुगमः । स्वनिष्ठविषयतानिरूपकं यद्यत् तद्भेदकूटवत्त्वस्य विवक्षणे दुर्विज्ञानत्वम्' इति दूषणस्य नावकाशः । **तदन्यदिति** । निरूपकत्वाश्रयत्वोभयसंबन्धेन विषयताविशिष्टमित्यर्थः । **स्वस्मै भासमानमिति** । स्वकर्तृकव्यवहारप्रयोजकविषयतावदित्यर्थः । स्वानुकूलकृतिमत्त्वसंबन्धेन बुबोधयिषापूर्वकतत्तद्विषयकव्यवहारं प्रति तत्तद्विषयकज्ञानस्यापृथक्सिद्धि-तादात्म्यान्यतरसंबन्धेन हेतुतया आत्मनिष्ठविषयताया जनकतावच्छेदकतया व्यवहारप्रयोजकत्वात् । स्वयंप्रकाशस्याऽऽत्मनः स्वव्यवहारहेतुतासिद्धये तादात्म्यस्यानुप्रवेशः । शुकादि-

परागिति व्यवहरन्ति । तेनाजडाया अपि मतेः पराक्त्वं सिद्धम् । यत्तु नीतिमालायां नारायणार्यै-रुक्तम्-"ज्ञानस्य तु पराक्त्वाभावमात्रमेव । न तु प्रत्यक्त्वम्" इति । एतदपि पूर्वपक्षप्रोक्तदृग्विषय-त्वमात्राधीनसिद्धिकत्वरूपेदन्त्वाभावाभ्युपगमादिति मन्तव्यम् । एवं हि तत्र पूर्वपक्षितम्—"तस्य

---

पराक्त्वशब्दस्य प्रकरणानुसारेणेदन्त्वलक्षणजडत्वपरत्वमित्याह— यत्तु नीतिमालायामिति । दृग्विषय त्वमात्रेति । ज्ञानान्तराधीनसिद्धिकत्वमात्रेत्यर्थः ।

---

व्यवहारे व्यभिचारवारणाय बुबोधयिषापूर्वकेति । पश्वादिशरीरप्रविष्टात्मनोऽपि मनुष्यादिशरीर प्राप्तिकालिकव्यवहारकर्तृत्वमादाय प्रत्यक्त्वोपपत्तिः । स्वनिष्ठसंशयाभावप्रयोजकविषयतावत्त्वं वा स्वस्मैभासमानत्वम् । स्वात्मन्येकत्वादिवैशिष्ट्यावगाहिधर्मभूतज्ञानविरहेऽपि एकत्वादिसंशयाभावस्याऽऽनु-भाविकतया तदनुरोधेन एकत्वादिसंशयं प्रति अपृथक्सिद्धि-तादात्म्यान्यतरसंबन्धेन एकत्वादि विशिष्टविषयज्ञानस्य प्रतिबन्धकताया वाच्यतया प्रतिबन्धकतावच्छेदकस्य कार्याभावप्रयोजकतायाः सर्वसंप्रतिपन्नतया च आत्मनिष्ठविषयतायाः संशयप्रतिबन्धकतावच्छेदिकायास्तन्निष्ठसंशयाभावप्रयोज कत्वमक्षतमिति तत्र प्रत्यक्त्वोपपत्तिः । घटादिनिष्ठे अपृथक्सिद्धिसंबन्धावच्छिन्नप्रतियोगिताक संशयाभावे आत्मभेदस्यैव प्रयोजकत्वम् ; न तु तद्गतविषयताया इति तत्र नातिप्रसङ्गः । सामानाधि करण्य-प्रयोजकत्वोभयसंबन्धेन संशयाभावविशिष्टविषयत्वं प्रत्यक्त्वमिति निष्कर्षः । तेन नाननुगमः । इह विषयतायां स्वनिरूपितत्वं कैश्चिन्निवेशितमपि प्रयोजनाभावात् स्वस्मैभासमानशब्दालभ्यत्वा च्चोपेक्षितम् । स्वस्मैभासमानमित्यत्र हि चतुर्थ्यन्तेन स्वगतसंशयाभावप्रयोजकतायाः, भासमानमित्यनेन विषयताश्रयस्य च लाभः । परस्मै भासमानमिति । स्वभिन्नकर्तृकव्यवहारप्रयोजकविषयतावदित्यर्थः । स्वभिन्ननिष्ठसंशयाभावप्रयोजकविषयतावदिति वा । सामानाधिकरण्यसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताक प्रतियोगिताकभेदवत्त्व-स्वप्रयोजकत्वोभयसंबन्धेन संशयाभावविशिष्टं विषयत्वं पराक्त्वमिति निष्कर्षः । नन्वेवं सति आत्मनोऽपि पराक्त्वप्रसङ्गः ; प्रवृत्त्यादिलिङ्गकानुमानादिना तस्यापि परस्मैभासमानत्वसत्त्वादिति वाच्यम् ; इष्टत्वात् । आत्मान्तरस्यात्मान्तरीयाहंबुद्ध्यविषयत्वात् तं प्रति पराक्त्वोपपत्तेः । "अहंबुद्ध्या परागर्थात् प्रत्यगर्थो हि भिद्यते" इति ह्युच्यते । न चैवं सति प्रत्यक्त्वपराक्त्वयोर्द्रव्यत्वपृथिवीत्वयो रिवाविरुद्धतया विभाजकत्वानुपपत्तिरिति वाच्यम् ; प्रत्यक्त्व-प्रत्यग्भिन्नत्वाभ्यामेव विभजनात् । "प्रत्यक्त्वादितरतयापि वा" इति ह्युच्यते । इह पराक्त्वनिर्वचनं तु प्रत्यक्त्वनिर्वचनप्रासङ्गिकम् । अथवा श्रीमत्सर्वार्थसिद्ध्यनुगृहीतरीत्या परस्मा एव भासमानत्वमिह पराक्त्वं स्वस्मै भासमानत्वरूप-प्रत्यक्त्वाभावपर्यवसितमिति न दोषः । प्रत्यग्भिन्नत्वे सति स्वप्रकाशत्वं पराक्त्वमिति केषाञ्चिन्निर्वचनं तु नादर्तव्यम् ; देहेन्द्रियादीनां जडानामपि पराक्त्वस्य सिद्धान्तसंप्रतिपन्नत्वात् । पराक्त्वं सिद्धमिति । प्रत्यग्भिन्नत्वं सिद्धमित्यर्थः । तथाच पूर्वोक्तविभाग उपपन्न इति भावः । धर्मभूतज्ञानस्य पराक्त्वाभाव प्रतिपादकनीतिमालाविरोधमाशङ्क्य तत्र प्रकरणानुसारेण पराक्त्वशब्दस्य जडत्वपरतया न विरोध इत्याह यत्त्वित्यादिना । दृग्विषयत्वमात्राधीनसिद्धिस्वरूपेति । स्वभिन्नज्ञानविषयत्वमात्राधीनसंशय-

नीलादिवद्विदमित्यनवभासात् पराक्त्वाभावेन प्रत्यक्त्वञ्च विद्यते" इति।

(अथ जडद्रव्यपरिच्छेदः)

**तत्र रजोगुणकत्वतमोगुणकत्वमहदाद्यवस्थाहेत्वानि त्रिगुणलक्षणानि। अध्यक्षादिभिर्यथासम्भवं नानावस्थस्य तस्य सिद्धेः। तच्च अधःप्रभृतिदेशेष्वनन्तम्। ऊर्ध्वं हि भोगविभूत्यवच्छिन्नम्। नित्यविभूतेस्तमःपरत्वश्रुतेः; त्रिगुणस्य च, "तदनन्तमसङ्ख्यातप्रमाणञ्च" इति वचनात्।**

**रजोगुणकत्वे**ति। सत्त्वगुणकत्वं तु न तल्लक्षणम्। नित्यविभूतावतिप्रसक्तत्वादिति भावः। लक्षणप्रमाणाभ्यां वस्तुसिद्धिमभिप्रयन् लक्षणमुक्त्वा प्रमाणमाह-**अध्यक्षादिभि**रिति। घटाद्यवस्थत्रिगुणद्रव्ये प्रत्यक्षम्, महदाद्यवस्थत्रिगुणद्रव्ये आगमः प्रमाणमिति भावः। **तस्य सिद्धे**रिति। त्रिगुणद्रव्यसिद्धेरित्यर्थः। **अधःप्रभृती**ति। प्रभृतिशब्देन पूर्वोत्तरदक्षिणादिकं विवक्षितम्। अधःप्रदेशेनाऽऽनन्त्ये ऊर्ध्वमवच्छिन्नत्वे च व्युत्क्रमेण हेतुद्वयमाह-**नित्यविभूते**रिति। ननु, "मायां तु प्रकृतिं विद्यात्" इति **माया**शब्दितसदसद्विलक्षणाविद्याया एव प्रकृतिशब्दितोपादानत्वश्रवणात् कथं त्रिगुणद्रव्यस्योपादानत्वमुच्यते इत्यत्राह-

---

विषयत्वभावरूपेत्यर्थः। प्रागुक्तजडत्वरूपेति तु फलितोऽर्थः।

त्रिगुणलक्षणमाह **तत्रे**ति। **रजोगुणकत्वतमोगुणकत्वे**ति। रजोगुणस्तमोगुणो वा अपृथक्सिद्धिसंबन्धेन लक्षणमित्यर्थः। तेन कालिकसंबन्धेन काले रजस्तमसस्त्वेऽपि नातिव्याप्तिः; लक्षणतावच्छेदकसंबन्धेनालक्ष्यवृत्तित्वस्यैवातिव्याप्तिरूपत्वात्। सत्त्वगुणस्तु न लक्षणम्; शुद्धसत्त्वेऽतिव्याप्तेः। **महदादी**ति। महत्त्वाद्यवच्छिन्नतादात्म्यसंबन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणत्वम्, महत्त्वाद्यवस्थानिष्ठापृथक्सिद्धिसंबन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणत्वं वा लक्षणमित्यर्थः। तादात्म्येन महत्त्वावच्छिन्नं प्रति तादात्म्येनाऽव्यक्तत्वावच्छिन्नस्य घटत्वावच्छिन्नं प्रति पिण्डत्वावच्छिन्नस्येव, अपृथक्सिद्धिसंबन्धेन महत्त्वावस्थां प्रति तादात्म्येन त्रिगुणद्रव्यस्य रूपादिकं प्रति घटादेरिव च हेतुतया लक्षणसंगतिः। लक्षणमुक्त्वा प्रमाणमाह **अध्यक्षादिभि**रिति। **यथासंभव**मिति। घटादिरूपत्रिगुणद्रव्ये प्रत्यक्षम्, महदादौ चाऽऽगम इत्यर्थः। तत्परिमाणमाह **तच्चे**ति। **अधःप्रभृती**ति। प्रभृतिशब्देन पार्श्वपरिग्रहः। **अनन्त**मिति। तादृशदेशनिष्ठभेदप्रतियोगितानिरूपितसंयोगसंबन्धावच्छिन्नावच्छेदकताशून्यमित्यर्थः। ननु, "तदनन्तमसंख्यातप्रमाणम्" इति वचनात् विभुत्वमेव वाच्यमिति कुतः कतिपयदेशेष्वेवानन्तत्वमुच्यत इत्याशङ्क्याह **ऊर्ध्वं ही**ति। **भोगविभूत्यवच्छिन्न**मिति। भोगविभूतिनिष्ठभेदप्रतियोगितानिरूपितसंयोगसंबन्धावच्छिन्नावच्छेदकतावदित्यर्थः। तत्र प्रमाणमाह **नित्यविभूते**रिति। **तमःपरत्वश्रुते**रिति। "आदित्यवर्णं तमसः परस्तात्" इति श्रुत्या नित्यविभूतौ त्रिगुणव्याप्त्यभावबोधनादित्यर्थः। तथाच नित्यविभूत्यसंयुक्तद्रव्यनिष्ठभेदप्रतियोगितानिरूपितसंयोगसंबन्धावच्छिन्नावच्छेदकताशून्यत्वरूपमेवाऽऽनन्त्यं **तदनन्त**मित्यादिप्रमाणार्थो वाच्यः; न तु द्रव्यनिष्ठभेदप्रतियोगितानिरूपिततादृशावच्छेदकताशून्यत्वात्मकविभुत्वरूपमित्यभिप्रायेणाह **त्रिगुणस्य चे**ति। ननु त्रिगुणद्रव्यस्य महदाद्युपादानत्वाभिधानमनुपपन्नम्; मायायाः, प्रकृतेः, अविद्याया वोपादानत्वस्य

**तच्च विचित्रसृष्ट्युपकरणत्वान्माया, विकारान् प्रकरोतीति प्रकृतिः, विद्याविरोधादिभिरविद्यादिश्चोच्यते । समविषमविकारसन्तानांश्च कालभागभेदाभ्यामारभते ।**

---

**तच्चेति । विचित्रेति ।** विचित्रार्थकारित्वमेव **माया**शब्दप्रवृत्तिनिमित्तम् । "तेन मायासहस्रं तच्छम्बरस्याशुगामिना", "देवमायेव निर्मिता" इत्यादिप्रयोगात् ; न तु मिथ्यात्वमिति भावः । **विकारान् प्रकरोतीति** । प्रकरोत्यस्या इति प्रकृतिः । अपादाने क्तिन्प्रत्ययः । ततश्च, "स्त्रियां क्तिन्" इत्यत्र, "अकर्तरि च कारके" इत्यधिकारात् कर्तरि कथं क्तिन् प्रत्ययः इति शङ्का निरस्ता । "अस्मान् मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्धः" इति पूर्ववाक्ये मायामायिनोः प्रस्तुततया का माया, को वा मायी इति मायामायिशब्दार्थबुभुत्सायां मायायाः प्रसिद्धप्रकृतिशब्दितत्रिगुणद्रव्यपरतां(रूपतां?) मायिनश्च प्रसिद्धमहेश्वराभेदश्च(दं?) प्रतिपादयितुं प्रवृत्तमिदं वाक्यम् ; न तु त्वदभिमताज्ञानस्योपादानत्वं प्रतिपादयितुमिति भावः । **अविद्यादिश्चोच्यत** इति । "क्षरं त्वविद्या ह्यमृतं तु विद्या", "अविद्यायामन्तरे वर्तमानाः", "सोऽविद्याग्रन्थिं विकिरतीह सोम्य", "अविद्यासञ्चितं कर्म" इत्यादिष्वित्यर्थः । **समविषमेति** । कालभेदेन भागशब्दितदेशभेदेन च समान् विषमांश्च विकारसन्तानान् आरभते इत्यर्थः । कालभेदो नाम सृष्टिकालः संहारकालश्च । देशभेदो नाम गुणवैषम्ययुक्तस्तद्रहितश्च । विकारस्य समत्वं नामरूपविभागनिर्देशानर्हत्वम् । विषमत्वञ्च नामरूपविभागनिर्देशार्हत्वम् । ततश्च महदादिविषमविकारान् गुणवैषम्ययुक्तप्रदेशविशेषे आरभते । प्रदेशान्तरे तु समान् विकारान् आरभते; प्रकृतिस्वरूपस्य सततविकारशीलत्वात् । प्रलयकाले तु सर्वत्र समा एव विकारा भवन्ति । न च प्रलयत्वव्याघातः ; विषमविकारराहित्यस्यैव प्रलयपदार्थत्वादिति ध्येयम् । ननु प्रकृतेर्निश्छिद्रत्वे तन्मध्यपरिणतभूतेन्द्रियादिपरिस्पन्दाद्यसम्भवात् तदन्यथानुपपत्त्या सच्छिद्रत्वमभ्युपगन्तव्यम् ।

---

तत्रतत्र श्रवणादित्यतः उक्तत्रिगुणस्यैव तत्तच्छब्देन तत्रतत्र प्रतिपादनात् न विरोध इत्याह **तच्चेति । विचित्रेति ।** विचित्रार्थकारित्वमेव मायाशब्दप्रवृत्तिनिमित्तम् । "तेन मायासहस्रं तच्छम्बरस्याऽऽशुगामिना । बालस्य रक्षता देहमेकैकश्येन सूदितम्", "देवमायेव निर्मिता" इत्यादिप्रयोगात् ; न तु मिथ्यात्वमिति भावः । **विकारान् प्रकरोतीति** । अस्या इति शेषः । ईश्वरः कर्ता । अपादाने क्तिन्प्रत्ययः । एतेन, "स्त्रियां क्तिन्" इत्यत्र, "अकर्तरि च कारके" इत्यधिकारात् कर्तरिक्तिन्प्रत्ययासंभवेऽपि न क्षतिः । **विद्याविरोधेति ।** अविद्येत्यत्र विरोधार्थे नञिति भावः । **आदिना** ज्ञानाभावपरिग्रहः । **अविद्यादिरित्यादिना** अचेतनाचिदादिपरिग्रहः । **समविषमेत्यादि** । सृष्टिकाले महदादिविषमविकारान् गुणवैषम्ययुक्तप्रदेशे आरभते ; गुणसाम्ययुक्तप्रदेशे तु समानेव विकारान् । प्रळयकाले तु सर्वत्र समानेव विकारान् । एवं कालभेद-भागशब्दितप्रदेशभेदाभ्यां समविषमविकारारम्भकत्वं त्रिगुणस्येत्यर्थः । विकाराणां समत्वं च विषमत्वाभावः । विषमत्वं च उद्भूतसत्त्वादिजन्यत्वम् । उद्भवश्च शक्तिविशेषः । अद्रव्येषु शक्त्यनभ्युपगमे चाऽऽश्रयगतायाः शक्तेस्सामानाधिकरण्येन वैशिष्ट्यं बोद्धव्यम् । त्रिगुणद्रव्यस्य सततविकारशीलत्वात् प्रळयेऽपि विकाराभ्युपगमः । न चैवं प्रळयत्वानुपपत्तिः ; विषमविकारराहित्यस्यैव प्रळयपदार्थत्वात् । ननु प्रकृतिमध्यपरिणतभूतेन्द्रियादीनां परिस्पन्दे सति प्रकृतेस्सच्छिद्रत्वावश्यम्भावेन

इदञ्च परिस्पन्दादियोग्यभूतेन्द्रियपरिणामदशायामपि निश्छिद्रमेव । तत एव हि स्वकार्यव्यापकत्वम् । द्वयोरन्यतरस्य वा स्पर्शशून्यतया न सप्रतिघत्वविरोधः । वाय्वादिभूतचतुष्टयं हि स्पर्शवत् अस्पर्शेनाकाशेन व्याप्तम् । इदमेव त्रिगुणं पूर्वावस्थोपमर्दकावस्थाभेदाच्चतुर्विंशतिस्तत्त्वानि, मूलप्रकृतिर्महानहङ्कार इन्द्रियाण्येकादश पञ्च तन्मात्राणि पञ्च भूतानि चेति ॥

ननु एकस्य कथं बहुधावस्थितविश्वात्मना परिणामः? एकस्यैव मृत्पिण्डस्य घटशरावादिरूपेणेवेति चेन्न; निरवयवे तथाऽनुपपत्तेः । सावयवत्वे वा बहूनामेव बहुधा परिणामप्रसङ्गात् । तथा च गतमेकोपादानवादेन ॥ एकमेव सत् अनेकभागात्मकमव्यक्ताख्यमुपादानमिति चेन्न; विकल्पासहत्वात् । तथा हि—किं एकत्वमनेकत्वञ्च एकाश्रयमिति मन्यसे? उत एकत्वमंशिनि अंशेषु चानेकत्वमिति? यद्वा परिषद्वनसेनादिष्विव अनेकेषामेव सतामेकत्वमेकोपाधिसम्बन्धायत्तमिति? न प्रथमः; व्याघातात् । अन्यथा भेदाभेदवादाय कथं कुप्येः? । न द्वितीयः; अवयव्यङ्गीकारप्रसङ्गात् । तदभ्युपगमेऽपि तस्मादेकस्माज्जगदुत्पत्त्यभावात् । तदंशा एव हि ततो भिन्ना बहुधा परिणमन्ति । ततो वरमनारूढनिरर्थकैकद्रव्यैः परमाणुभिरेव जगद्द्रव्यारम्भः । अत एव न तृतीयः; पृथक्पृथगारम्भकत्वे समुदायनिर्देशस्य निरर्थकत्वात् । वास्तविकस्य च एकत्वस्य वनादिष्वसंभवात् । औपाधिकैक्यव्यपदेशस्य च वैशेषिकाद्यभिमतानन्तपरमाणूपादानवादेऽप्यविशेषात् ।

---

अतश्च स्वकार्यव्यापकत्ववादो नोपपद्येत इत्याशङ्कां निराकरोति **इदञ्च परिस्पन्दादियोग्येति** । ननु भूतेन्द्रियादिविकारप्रदेशेऽपि प्रकृतेर्व्यापित्वे परस्परप्रतिघातकत्वात् सहानवस्थानलक्षणविरोधप्रसङ्गः इत्याशङ्क्याह **द्वयोरन्यतरस्य वेति**। आकाशपर्यन्तविकारेषु प्रकृतिविकृत्योर्द्वयोरपि निःस्पर्शत्वान्न सप्रतिघत्वविरोधगन्धोऽपि; वाय्वादिविकारेषु विकृतेः स्पर्शवत्त्वेऽपि प्रकृतेर्निःस्पर्शत्वान्न परस्परप्रतिघातकत्वमिति भावः । अन्यतरनिःस्पर्शत्वेऽपि सप्रतिघत्वविरोधो नास्तीत्यत्र दृष्टान्तमाह **वाय्वादिभूतेति** । **पूर्वावस्थोपमर्दकेति** । वाय्वाद्याकारेण परिणतेष्वाकाशाद्यंशेषु आकाशत्वाद्यवस्थोपमर्दादिति भावः ॥

**बहूनामेवेति** । अवयवातिरेकेणावयविनस्त्रिगुणद्रव्यस्याभावेन नानावयवा एव नानाकार्यात्मना परिणमन्ते इत्यर्थपर्यवसानादिति भावः । ननु प्रकृतिद्रव्यस्य सावयवत्वेऽपि अवयवानाञ्च नानात्वेऽपि एकत्वस्यापि सत्त्वादेकोपादानकत्वं न परित्यक्तमित्याशङ्कते **एकमेव सदिति** । **अनारूढेति** । निरर्थकैकावयव्यनाधारैरित्यर्थः । **अविशेषादिति** । परमाणुत्वादिधर्मैक्यमादाय तत्राप्यैक्योपचारस्य सुवचत्वादिति भावः ।

---

तस्याः स्वकार्यव्यापकत्वानुपपत्तिः; अत आह **इदञ्चेति** । ननु भूतेन्द्रियादिप्रदेशे कथं प्रकृतेर्व्यापित्वम् परस्परप्रतिघातेन एकत्र द्वयोर्वृत्त्यसंभवात् इत्यत आह **द्वयोरन्यतरस्य वेति** । उभयोः स्पर्शवत्त्व एव परस्परप्रतिघातकत्वमिति भावः । **सप्रतिघत्वविरोधः**=परस्परप्रतिघातकत्वप्रयुक्तः एकत्र वृत्त्यसंभवः । अन्यतरस्य स्पर्शशून्यत्वेऽपि प्रतिघातकत्वाभावं दर्शयति **वाय्वादीति** । **पूर्वावस्थोपमर्दकेति** । पूर्वावस्थाध्वंसात्मकेत्यर्थः । न तु पूर्वावस्थाध्वंसजनकेति; उत्तरावस्थातिरिक्त-पूर्वावस्थाध्वंसानुपगमात् । **सावयवत्व इत्यादि** । अवयवातिरिक्तावयव्यभावात् नानाभूतावयवा एव नानाकार्यात्मना परिणमेरन्निति एकोपादानवादानुपपत्तिरित्यर्थः । ननु प्रकृतिद्रव्यस्य सावयवत्वेऽपि अवयवानां बहुत्वेऽपि च तत्रैकत्वस्यापि सत्त्वान्नैकोपादानवादानुपपत्तिरिति शङ्कते **एकमेवेत्यादि** । **अनारूढनिरर्थकैकद्रव्यैरिति**; जगदारम्भानुपयुक्ततया निरर्थकावयव्यनाधारैरित्यर्थः । **वास्तविकस्येति** । मुख्यस्य

अतः एकमनेकधा परिणमतीति कल्पना विवर्तवादस्य प्राग्रूपमिति ॥—अत्र ब्रूमः—

**प्रदेशवर्तिसंयोगाद्याधाराणुविभुक्रमात् । निरंशस्यापि घटते प्रादेशिकविकारिता ॥ ९ ॥**

न तावत् सर्वमद्रव्यं स्वाश्रयव्यापि ; संयोगादेरव्याप्योपलम्भात् । नापि सर्वमाश्रयैकदेशवर्ति ; स्वाभावसामानाधिकरण्यरहितधर्मोपलब्धेः ॥

**अतो विभुष्वणुषु च ग्राह्याः प्रादेशिका गुणाः । तथाचाभ्युपगम्यन्ते सर्ववैशेषिकादिभिः ॥**

---

विवर्तेति । समसत्ताकोऽन्यथाभावः परिणामः ; विषमसत्ताकोऽन्यथाभावो विवर्तः । प्राग्रूपमिति । एकमेव ब्रह्म बहुधाऽवस्थितविश्वात्मना विवर्तते इति मायावादस्य प्रथमावस्थेत्यर्थः । अयं भावः—एकमेवानेकात्मकमित्युक्ते न ह्येकस्य सतोऽनेकत्वं सम्भवतीत्यन्यतरस्य मिथ्यात्वमविरोधायाऽऽश्रयणीयम् । तत्र नैकत्वस्य मिथ्यात्वम् ; तस्य कारणवाक्यावगतस्य त्यागायोगात् । मानान्तराप्रतिपन्नत्वेन कारणवाक्यस्य तत्र तात्पर्यात् । अनेकत्वस्य च मानान्तरप्रतिपन्नत्वेन श्रुतेस्तत्र तात्पर्याभावादनेकत्वस्य मिथ्यात्वे क्रमेण पर्यवस्यतीति ॥

**प्रदेशवर्तिसंयोगादीति ।** आदिशब्देन शब्दादिकं गृह्यते । यथा निरंशेष्वणुषु विभुषु च प्रादेशिकसंयोगादिः ; तथा विकारोऽप्युत्पद्यते इत्यर्थः । यदि संयोगादेरेकदेशवर्तित्वमनुभवसिद्धमपलप्यते ; तर्हि रूपरसादेरनुभवसिद्धं व्यापित्वमप्यपलपनीयं स्यादिति प्रतिबन्दीमभिप्रयन्नाह **नापि सर्वमिति।**

---

बहुत्वं तरो घन इत्यर्थः । औपाधिकैकत्वव्यपदेशस्येति ; एकोपाधिकत्वमादाय एकत्वोपचारस्येत्यर्थः । अविशेषादिति । परमाणुसंहतपुञ्जत्वादिधर्मैक्यमादाय तत्राप्युपचारसंभवादिति भावः । विवर्तेति । समसत्ताकोऽन्यथाभावः परिणामः । विषमसत्ताकोऽन्यथाभावो विवर्तः । प्राग्रूपमिति । एकमेव ब्रह्म बहुधाऽवस्थितविश्वात्मना विवर्तत इति मायावादस्य प्रथमावस्थेत्यर्थः । एतदुत्तरावस्था साक्षान्मायावाद एव स्यादिति भावः । तथाहि—एकस्यानेकात्मकत्वं वास्तविकं न सम्भवति ; विरोधात् । अतः अविरोधायैकत्वस्यानेकत्वस्य वा मिथ्यात्वमाश्रयणीयम् । तत्रैकत्वस्य मानान्तराप्रतिपन्नतया तत्र श्रुतेस्तात्पर्यावश्यम्भावेन तस्य मिथ्यात्वायोगात् मानान्तरप्रतिपन्नतया श्रुतितात्पर्याविषयस्य बहुत्वस्य मिथ्यात्वमावश्यकमिति प्रसज्जेदिति । त्रिगुणद्रव्यस्य निरवयवत्वेऽपि प्रादेशिकविकारोपपत्त्या एकत्वेऽपि बहुधाऽवस्थितप्रपञ्चरूपेण परिणाम उपपद्यत इत्यभिप्रेत्याह अत्र ब्रूम इति । प्रदेशवर्तीति । एकदेशवर्तीत्यर्थः । स्वाभावसमानाधिकरणेति यावत् । संयोगादीत्यादिना शब्दादिपरिग्रहः । अणुविभुक्रमादिति । अणुषु विभुषु च निरवयवेष्वपि यथा स्वाभावसमानाधिकरणसंयोगाद्युपपत्तिः, तद्वदित्यर्थः । प्रादेशिकविकारिता=स्वाभावसमानाधिकरणमहत्त्वाद्यवस्थावत्त्वम् । नन्वद्रव्याणां व्याप्यवृत्तित्वनियमात् संयोगादीनामपि कथमव्याप्यवृत्तित्वमित्याशङ्क्य प्रत्यक्षविरोधान्न तथा नियमसंभव इत्याह न तावदिति । यथा स्वाभावसामानाधिकरण्यरहितधर्मोपलम्भात् सर्वस्याप्यद्रव्यस्याव्याप्यवृत्तित्वाभ्युपगमो न संभवति, तथैव व्याप्यवृत्तित्वाभ्युपगमोऽपि न संभवतीति प्रतिपादयितुमाह नापीति । विभुष्वणुषु च प्रादेशिकगुणसद्भावमुपसंहरति अत इति । उक्तार्थस्य परमतेऽपि सिद्धत्वमाह तथाचेति । ननु नैयायिकमते निमित्तभूतवायुसंयोगाद्यवच्छिन्ने आकाशप्रदेशे शब्दोत्पत्तिः स्वीक्रियते। तत्र स्वाभाविक-

अत्र यद्यपि विभुषु निमित्तभूतमूर्तद्रव्यसंयोगावच्छिन्ने प्रदेशे गुणान्तरोत्पत्तिरिष्यते—तथापि मूर्तद्रव्यसंयोगस्यैव प्रादेशिकत्वं कुतः सिद्धम्? न हि विभुषु स्वतःप्रदेशभेदमिच्छथ। न च संयोगोपाधिके प्रदेशे संयोगस्योत्पत्तिः ; परस्पराश्रयप्रसङ्गात्। संयोगविशेषात्प्रदेशभेदसिद्धिः ; सिद्धे च तस्मिन् प्रादेशिकसंयोगोत्पत्तिरिति। अत एव मूर्तैर्घटादिभिर्विभुषु स्वपरिमाणानुरूपप्रदेशावच्छेद इत्यपि वार्तम्। अणुद्वयसंयोगे तदनुपपत्तेश्च। अतः सामग्रीविशेषादुत्पद्यमान एव संयोगो

---

ननु निमित्तवायुसंयोगावच्छिन्नदेशे शब्दादिरङ्गीक्रियते ; स्वाभाविकप्रदेशाभावेऽप्यौपाधिकप्रदेशभेदसत्त्वात्। अतोऽस्य युज्यते प्रादेशिकविकारिता ; न त्रिगुणद्रव्ये तथाऽभ्युपगम्यते इत्याशङ्क्य परिहरति-यद्यपीत्यादिना। परस्पराश्रयमेवोपपादयति-संयोगविशेषादिति। ननु घटस्तटस्थ एव सन् निरंशे आकाशे स्वोपलक्षितदेशं सम्पाद्य तेन संयुज्यतामित्याशङ्क्याह-अत एवेति। अन्योन्याश्रयणादेवेत्यर्थः। असंयुक्तप्रदेशस्य अवच्छिन्नत्वासम्भवात् स्वसंयोगे सति स्वानुरूपप्रदेशावच्छेदसिद्धिः ; तस्मिश्च सति स्वसंयोगसिद्धिरित्यन्योन्याश्रयणमित्यर्थः। वार्तमिति असारमित्यर्थः। अणुद्वयेति। तत्र हि एकेन परमाणुना स्वानुरूपपरिमाणस्यापि परमाणोरवच्छेदे परमाणुद्वयसंयोगस्य कृत्स्नपरमाणुद्वयव्यापित्वं स्यात्। ततश्च असंयुक्तप्रदेशाभावेन द्व्यणुकादिकं कार्यं परमाणुपरिमाणानधिकपरिमाणमेव स्यादित्यर्थः। अतः संयोगस्य औपाधिकप्रदेशवृत्तित्वस्य वक्तुमशक्यत्वात् सामग्रीमहिम्ना जायमानः संयोगः स्वप्रदेशे स्वात्यन्ताभावप्रदेशात् भेदबुद्धिं जनयन् भेदात्मना तत्र वर्तते इत्याह अत

---

प्रदेशभेदविरहेऽपि औपाधिकप्रदेशभेदसत्त्वात् प्रादेशिकविकारित्वोपपत्तिः। त्रिगुणे तु तथाविधोपाध्यदर्शनात् कथं प्रादेशिकविकारित्वमित्याशङ्कते यद्यपीति। परिहरति तथापीति। संयोगोपाधिक इति। संयोगाधीनप्रादेशिकधर्मावच्छिन्न इत्यर्थः। संयोगावच्छिन्न एव संयोगोत्पत्तिस्वीकारे आत्माश्रय इति भावः। परस्पराश्रयमेवोपपादयति संयोगविशेषादिति। प्रदेशभेदसिद्धिरिति। प्रदेशभेदप्रतीतिनियामकप्रादेशिकधर्मसिद्धिरित्यर्थः। अत एवेति। अन्योन्याश्रयणादेवेत्यर्थः। स्वपरिमाणानुरूपप्रदेशावच्छेद इत्यपि वार्त्तमिति। स्वपरिमाणानुरूपप्रदेशभेदकधर्मोत्पादनमित्यप्यसारमित्यर्थः। विभुषु घटादीनां संयोगमन्तरा तादृशधर्मोत्पादकत्वासंभवादिति भावः। अणुद्वयसंयोगे तदनुपपत्तेरिति। एकेन परमाणुना परमाण्वन्तरे स्वपरिमाणानुरूपप्रदेशभेदकधर्मोत्पादनपूर्वकसंयोगोत्पादनाङ्गीकारे परमाणुद्वयसंयोगस्य कृत्स्नपरमाणुव्यापित्वप्रसङ्गात् द्व्यणुकादीनां परमाणुपरिमाणानधिकपरिमाणप्रसङ्ग इति भावः। एतेन एकपरमाण्ववच्छिन्ने परमाण्वन्तरे संयोग इत्यपास्तम्। संयोगमन्तरा एकस्य परमाणोः परमाण्वन्तरावच्छिन्नत्वासंभवात्। अत इति। विभुष्वणुषु च निरवयवत्वस्वान्तरसंयोगस्य प्रदेशभेदधीनियामकधर्मान्तरमादाय प्रादेशिकत्वोपपादनासंभवादित्यर्थः। सामग्रीविशेषादित्यादि। निरवयवेऽणौ विभौ वा संयोग उत्पद्यमानः स्वसामग्रीमहिम्नैव स्वाभावसमानाधिकरणमनुत्पद्यते। अतस्तत्र स्वाभावसामानाधिकरण्यसंपादनाय न प्रदेशभेदनियामकधर्मान्तरमन्वेषणीयम्। अस्यैव च स्वाभावाभावात्मकतया स्वाभावावच्छिन्नात् स्वावच्छिन्नस्य भेदधीनियामकत्वं संभवति। इत्थंच निरवयवेऽणौ विभौ च प्रादेशिकसंयोगस्य न काचिदनुपपत्तिरिति नैयायिकादिभि

निरवयवेऽपि परमाणौ परममहति वा वस्तुनि स्वाभावसामानाधिकरण्यमनुभवन् स्वाभावाभावात्मकत्वानुबन्धेन यथोपलम्भप्रतिनियतप्रदेशभेदधियमुपदधातीति प्रमाणबलादभ्युपगन्तव्यम् । एवमिहापि निरवयवेऽपि त्रिगुणे परमेश्वरसङ्कल्पविशेषपर्यवसितैः सामग्रीभेदैः स्वाभाविकसंवि-

---

इति । रूपरसयोः स्वाश्रयदेशभेदप्रतीतिनिमित्तत्वाभावादाह-स्वाभावाभावात्मकत्वानुबन्धेनेति । ततश्च परस्परविरहरूपयोर्द्वयोरेकत्रावस्थित्यभावात् परस्परविरुद्धौ संयोगतदत्यन्ताभावौ आश्रयप्रदेशभेदप्रतीतिमुपजनयत इति भावः । अत्र स्वानुबन्धेन भेदधियमुपदधातीत्युक्त्या स्वयमेव भेद इति दर्शितं भवति । यथोपलम्भेति । उपलम्भानुसारी यो नियतप्रदेश इत्यर्थः । स्वाभाविकसंविभक्तेति ।

---

यथाऽभ्युपगम्यते, तथा भगवत्सङ्कल्पमहिम्ना शक्तिविशेषरूपमहत्त्वाद्यवस्थानामुत्पद्यमानानां निरवयवेऽपि त्रिगुणे स्वाभावसमानाधिकरणत्वेनैवोत्पत्त्या तासां प्रादेशिकत्वं स्वावच्छिन्नस्य स्वाभावावच्छिन्नात् भेदधीनियामकत्वं चोपपद्यत इति न काचिदनुपपत्तिरिति समुदायार्थः । ननु प्रतियोगितदभावयोर्विरुद्धयोरेकत्र वृत्तौ विरोधभञ्जनायावच्छेदकभेदोऽवश्यमपेक्षितः । वृक्षादौ कपिसंयोगतदभावयोरग्रमूलादिरूपविभिन्नप्रदेशावच्छेदेनैव वृत्त्यनुभवात् । अवच्छेदकभेदमनपेक्ष्य तत्तदभावयोरेकत्र वृत्त्यभ्युपगमे भेदाभेदवादप्रसङ्गात् । स्पष्टं चेदं मणिग्रन्थे । अतो निरवयवेषु परमाण्वादिषु अवच्छेदकप्रदेशभेदस्य वक्तुमशक्यतया कथं संयोगमहत्त्वावस्थादीनां स्वाभावसामानाधिकरण्यसंभव इति चेत्—अत्रोच्यते ; निरवयवे परमाण्वादौ वस्त्वन्तरसंयोगः स्वावच्छेदेनैवोत्पद्यते । तत्राऽऽत्माश्रयस्त्वगत्याऽङ्गीक्रियते । अत एव बौद्धाधिकारशिरोमणौ घटाभावस्य स्ववृत्तित्वस्वीकारे आत्माश्रये इष्टापत्तिरुक्ता । ततश्च त्रिगुणद्रव्ये स्वाभावसमानाधिकरणा महत्त्वावस्था जायतामित्यादिभगवत्सङ्कल्पमहिम्ना जायमानाः महत्त्वाद्यवस्थाः स्वाभावसमानाधिकरणास्सत्य उत्पद्यमानाः स्वावच्छेदेनैवोत्पद्यन्त इत्यत्राप्यात्माश्रयोऽगत्यैवाङ्गीक्रियते । अयमर्थः स्वाभाविकसंविभक्ताश्रया इत्यनेन स्पष्टीकृतः । स्वातिरिक्तावच्छेदकमनपेक्ष्यैव स्वाभावानवच्छेदकावच्छिन्नवृत्तिका इति हि तदर्थः । यत्तु, अत्र महानुत्पद्यताम्, अत्राहङ्कार उत्पद्यतामित्यादित्रयोविंशतिभगवत्सङ्कल्परूपद्रव्यसंयोगानां स्वस्वावच्छेदेनैवोत्पत्तिसंभवेन प्रादेशिकत्वोपपत्त्या तत्तत्सङ्कल्पावच्छेदेनैव महत्त्वाद्यवस्थानामुत्पत्त्या तासां प्रादेशिकत्वोपपत्तिरिति । तच्चिन्त्यम् ; तथा सति महत्त्वाद्युत्पत्तिरूप विषयसिद्धया तादृशसङ्कल्पनिवृत्त्यवश्यंभावेनानन्तरं महत्त्वादीनां निवृत्तेः, अनवच्छिन्नवृत्तिकत्वस्य वा प्रसङ्गात् । गगनादावणुसंयोगस्य स्वावच्छेदेनैवोत्पत्तिरिति स्वयमेवाभिधानेन तद्दशरीतेरिहाप्याश्रयणसंभवाच्च । तत्रापि हि तदुत्पादकसङ्कल्पावच्छेदेनैव तत्संभवादात्माश्रयः स्वीकार्यः । स्वानुबन्धेनेति । स्वसंबन्धेनेत्यर्थः । यथोपलम्भप्रतिनियतप्रदेशभेदधियमुपदधातीति । उपलम्भानुरोधेन स्वाभावावच्छिन्नप्रदेशात् स्वावच्छिन्नप्रदेशस्य, स्वावच्छिन्नप्रदेशात स्वाभावावच्छिन्नप्रदेशस्य च भेदबुद्धिं जनयतीत्यर्थः । तदवच्छिन्ननिरूपकताकाधेयताशून्यत्वमेवावश्यैव तद्विशिष्टभेदरूपत्वात् । संयोगतदभावयोः परस्परावच्छिन्ननिरूपकताकाधेयताशून्यतया परस्परविशिष्टभेदरूपत्वोपपत्तेरिति भावः । प्रमाणबलादिति । प्रादेशिकत्वग्राहकप्रमाण-

भक्ताश्रयाः प्रतिनियतप्रदेशाः परिणतिभेदाः प्रादुष्यन्तीति । तत्र स्पर्शादिलक्षणप्रादेशिकपरिणतिदशायां छेदनभेदनपरिस्पन्दनादीनामपि सिद्धिरिति किं नोपपद्यते ? स्पन्दस्पर्शादिभेदाश्रयांशानामपि भेदाः त एव विलक्षणधर्माः । यथा निर्भिदाकाशवादे प्रदेशानां संयोगविशेषास्तीव्रतरशब्दादिधर्मा एव वा भेदाः; तद्वदत्रापि । नन्वेवमप्यनतिलङ्घनीयैव भेदाभेदवागुरेति चेन्न; ईदृशभेदाभेदप्रसङ्गस्य वैनाशिकमतेऽप्यविवादात् । अविरोधाच्च । तस्य च अतत्त्ववादे हि विरोधं ब्रूमः ।

---

स्वाभाविकभेदवत्प्रदेशनिष्ठा इत्यर्थः । स्वानुबन्धेन प्रदेशभेदधियमुपदधातीति पूर्वग्रन्थानुसारात् स्वाभाविकभेदोऽपि परिणामरूप इति ध्येयम् । ननु त्रिगुणस्य निरवयवत्वे छेदनपरिस्पन्दनादीनामसम्भवात् वाय्वादिदशापन्नत्रिगुणद्रव्येषु च्छेदनादि न स्यादित्याशङ्क्य, यदा त्रिगुणद्रव्यस्य स्पर्शादिमत्त्वम्; तदा दर्शनबलात् छेदनादिकमपि संभवतीत्याह तत्र स्पर्शेति । तत्र त्रिगुणद्रव्ये इत्यर्थः । प्रादेशिकमहदादिपरिणतौ उक्तं धर्मं स्पन्दस्पर्शादिपरिणतावतिदिशति स्पन्दस्पर्शादीति । त एवेति । स्पन्दस्पर्शादय एवेत्यर्थः । ततश्च तत्रापि न ततोऽतिरिक्तप्रदेशभेदः स्वीकार्य इति भावः । नन्वेवमिति । निर्भेद एव त्रिगुणद्रव्ये महदाद्यवस्थापरिणतिलक्षणभेदाभ्युपगमे इत्यर्थः । वैनाशिकमतेऽपीति । क्षणिकत्ववादिमतेऽपि क्षणिकपरमाणुपुञ्जानुप्रविष्टक्षणपरमाणूनां परस्परनैरन्तर्यात्मकसंयोगस्यापि कृत्स्नप्रदेशव्यापित्वाभावेन प्रदेशभेदस्याभ्युपगन्तव्यतया भेदाभेदस्य तेनाभ्युपगन्तव्यत्वादिति भावः । अतत्त्ववादे

---

बलादित्यर्थः । सङ्कल्पविशेषपर्यवसितैः=सङ्कल्पविशेषरूपैः, प्रतिनियतप्रदेशाः=परस्परानवच्छेदकावच्छिन्नवृत्तिकाः । प्रादुष्यन्ति=उत्पद्यन्ते । छेदनभेदनपरिस्पन्दनादीनामपि सिद्धिरिति । दर्शनबलादिति भावः । भेदास्त एवेति । स्पन्दस्पर्शादय एव तदाश्रयांशानां भेदनियामकाः; न तु तदतिरिक्ता धर्माः स्वीकरणीया इत्यर्थः । भेदकान्तरमनपेक्ष्यैव प्रदेशभेदसिद्धौ दृष्टान्तमाह यथेति । निर्भिदाकाशवादे=निरवयवाकाशाभ्युपगन्तृमते, संयोगविशेषाः=भेरीमृदङ्गवीणादिसंयोगाः । तीव्रतरशब्दादिधर्मा एव वेति । आदिना मृदु-मृदुतरशब्दपरिग्रहः । एकत्र तत्तदभावोभयवृत्त्यभ्युपगममात्रेण भेदाभेदप्रसङ्गमाशङ्क्य परिहरति नन्वेवमित्यादि । ईदृशभेदाभेदप्रसङ्गस्येति । अवच्छेदकभेदेन तत्तदभावाभ्युपगमनिबन्धनभेदाभेदप्रसङ्गस्येत्यर्थः । वैनाशिकमतेऽपीति । सर्वथा तत्तदभावयोर्विरोधात् कालभेदेनापि करणाकरणयोरेकत्र वृत्तिर्न संभवतीत्यभिमानेन जगत्क्षणिकत्ववादिबौद्धमतेऽपीत्यर्थः । कालभेदेनावच्छेदकदेशभेदेन च तत्तदभावयोरेकत्र वृत्त्यभ्युपगन्तृमतान्तरे कैमुतिकन्याय इति भावः । अविवादादिति । घटादिरूप परमाणुपुञ्जानुप्रविष्टपरमाणूनां परस्परनैरन्तर्यात्मकसंयोगस्यापि कृत्स्नप्रदेशव्यापित्वाभावेन प्रदेशभेदस्याभ्युपगन्तव्यतया तन्मतेऽपीदृशभेदाभेदस्याऽऽवश्यकत्वादिति भावः । अविरोधाच्चेति । अवच्छेदकभेदेन तत्तभावयोरेकत्र वृत्तौ विरोधाभावादित्यर्थः । ननु तर्हि भेदाभेदवादपरित्यागः कुत इत्यत्राह तस्य चातत्त्ववाद इति । अवच्छेदकभेदमनपेक्ष्य भेदाभेदयोरेकत्र वृत्त्यङ्गीकार इत्यर्थः । भेदाभेदमते तथैवाङ्गीकारादिति भावः । अत एव मणिकारेण वृक्षे कपिसंयोगतदभावावङ्गीकृत्य, "न चैवं भेदाभेद" इत्यनेन

न पुनः तथाभूतस्यातथापरिणामे। अवस्थारूपयोरेकत्वबहुत्वयोः कालभेदेन परिहारात्। तथा च भाष्यम्, "कपालत्वचूर्णत्वपिण्डत्वावस्थाप्रहाणेन घटत्वावस्थावत् एकत्वावस्थाप्रहाणेन बहुत्वावस्था; तत्प्रहाणेन एकत्वावस्थेति न कश्चिद्विरोधः" इति॥ भवतु अवस्थारूपस्यैकत्वस्य पूर्वापरभाविना बहुत्वेनाविरोधः। तद्द्रव्यस्वरूपैक्येन तु विरोधः स्यात्॥ न स्यात्; तद्द्रव्यस्य हि अतद्द्रव्यत्वं विरुद्धम्। न तु तस्यैव सतोऽनेकधर्मयोगोपाधिकं बहुत्वम्। स्मरति च भगवान् पराशरः, "परमात्मात्मनोर्योगः परमार्थ इतीष्यते। मिथ्यैतत् अन्यद्द्रव्यं हि नैति तद्द्रव्यतां यतः" इति॥

---

इति। तदन्यत्ववादे इत्यर्थः। **नपुनस्तथाभूतस्येति**। पूर्वमेकीभूतस्य पश्चादनेकधा परिणामे इत्यर्थः। **तथा च भाष्यमिति**। आरम्भणाधिकरणभाष्यमित्यर्थः। **तद्द्रव्यस्वरूपैक्येनेति**। अयं भावः—ऐक्यं हि द्विविधम्। यावत्स्वरूपमनुवर्तमानं स्वरूपरूपमैक्यम्; यथा स्वात्मनि स्वेनैक्यम्। तद्धि कदापि स्वरूपभेदं न सहते। अन्यत् अवस्थारूपमागमापायशाल्यौपाधिकम्; यथा मृदि। ततश्च नित्ये स्वरूपैक्ये विद्यमाने कथं तद्विरुद्धनानात्वं स्यात्? एकस्मिन् काले तदुभयविरोधादित्यर्थः। **तद्द्रव्यस्य हीति**। मृद्द्रव्यस्य हि मृद्द्रव्यभेदो विरुद्धः; न मृद्द्रव्यस्यैव सत औपाधिकावस्थायोगेन परस्परभेद इत्यर्थः। **परमात्मेति**। परजीवयोरभेदः परमार्थ इति कैश्चिदिष्यते। तन्मिथ्या। कुत इत्यत्राह **अन्यद्द्रव्यं** यतोऽन्यद्द्रव्यमन्यद्द्रव्यतां न प्राप्नोति। अतोऽपरमात्मभूतो जीवः परमात्मभावं न प्राप्नोतीत्यर्थः।

---

भेदाभेदमतमापाद्य, "अवच्छेदकभेदाभ्युपगमात्" इत्यनेनोक्तमतापत्तिः परिहृता। **विरोधं ब्रूम इति**। अवच्छेदकभेदमनपेक्ष्य तत्तदभावयोरेकत्र वृत्त्यसंभवादिति भावः। **तथाभूतस्यातथापरिणाम इति**। पूर्वमेकीभूतस्य पश्चादनेकधा परिणाम इत्यर्थः। **अवस्थारूपयोरेकत्वबहुत्वयोरिति**। नामान्तरभजनार्ह-परस्परविशिष्टावृत्तिनानाधर्मावच्छिन्नविषयकज्ञानविषयत्वं बहुत्वम्, तादृशधर्मशून्यत्वमेकत्वमिति भावः। **नामान्तरभजनार्हत्वं** रूढिनिमित्तत्वम्। तन्निवेशाच्च प्रलयदशायां महत्त्वनाशतदभावयोः प्रागुक्तरीत्या प्रादेशिकयोस्तादृशत्वेऽपि नैकत्वहानिः। तयोः किञ्चिच्छब्दरूढिनिमित्तत्वाभावात्। **भाष्यमित्यस्य** आरम्भणाधिकरणेति आदिः। **तद्द्रव्यस्वरूपैक्येनेति**। तद्द्रव्यस्वरूपनिष्ठं यत् तद्द्रव्यव्यक्तित्वं तदवच्छिन्नप्रतियोगिताकभेदाभावैकरूपत्वेनेत्यर्थः। बहुत्वस्येति शेषः। **विरोधः स्यादिति**। तादृशैक्यस्य सर्वदा सत्त्वात् कालभेदेन विरोधपरिहारासंभवादिति भावः। तद्व्यक्तित्वावच्छिन्नप्रतिगिताकभेदाभावेन तादृशभेदस्यैव विरोधः; न तु प्रादेशिकानेकधर्मयोगस्येत्यभिप्रायेण परिहरति **न स्यादिति**। **तद्द्रव्यस्य**=तद्व्यक्तित्वावच्छिन्नस्य, **अतद्द्रव्यत्वम्**=तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदवत्त्वम्, **तस्यैव सतः**=तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदशून्यस्य सतः। **अनेकधर्मयोगोपाधिकमिति**। उक्तानेकधर्मावच्छिन्नविषयकप्रतीतिविषयत्वरूपमित्यर्थः। **परमात्मेत्यादि**। परमात्मजीवयोरभेदः परमार्थ इति कैश्चिदभ्युपगम्यते। **मिथ्यैतदिति** सामान्ये नपुंसकम्। उक्ताभेदो मिथ्येत्यर्थः। कुत इत्यत्राह **अन्यद्द्रव्यं हीति**। यतः तदन्यत् द्रव्यं तद्द्रव्यतां न प्राप्नोति, अतः परमात्मनो भिन्नस्य जीवस्य परमात्मभेदो न संभवतीत्यर्थः।

अस्तु वा स्वतः सांशत्वं पिण्डवत् अव्यक्तस्य। तथाऽपि पिण्डवदेव न भेदाभेदावयविवाद प्रसङ्गः। नन्वेवं यथांशं स्वकार्यारम्भकत्वे किमेकीभावावस्थाकल्पनेन इति चेत्; यदि वयं कापिलवत् कल्पयेमहि, तदैवमुपालभ्येमहि। कारणश्रुतिसमधिगता तु एकत्वावस्था न कल्पनागौरवानुयोग-

---

ननु स्वरूपैकत्वे विद्यमाने उत्पद्यमानस्वरूपनानात्वं मिथ्याभूतमित्यभ्युपेयं स्यात्; एवञ्च घटादिस्वरूपव्यवहारः सर्वोऽपि दत्तजलाञ्जलिः स्यादिति विवर्तवादस्वीकारः इत्यरुचेः स्वरूपैक्यपक्षं परित्यज्याह अस्तु वेति। ननु अंशनानात्वाभ्युपगमे एकत्वमप्यंशनिष्ठमिति यद्यभ्युपगम्यते, तदा भेदाभेदाभ्युपगमः; अंशेषु नानात्वमवयविन्येकत्वमित्यभ्युपगमेऽवयविवादप्रसङ्ग इत्युभयतस्पाशा रज्जुरित्याशङ्क्याह पिण्डवदेवेति। न च दृष्टान्ते वा कथमविरोध इति शङ्क्यम्; नानाभूतानामंशानां स्वरूपैक्यं नाभ्युपगम्यते; अपि तु एकत्वावस्थायोगमात्रमिति भावः। कारणश्रुतीति। "एकमेव" इत्यादिश्रुतिसमधिगतेत्यर्थः।

---

त्रिगुणद्रव्यस्य स्वतस्सांशत्वपक्षोऽपि संभवतीत्यभिप्रायेणाह अस्तु वेति। स्वतस्सांशत्वमिति। स्वाभाविकांशवत्त्वमित्यर्थः। औपाधिकांशवत्त्वस्य पूर्वकल्पेऽपि सत्त्वात् तद्व्यावृत्तये स्वत इत्युक्तम्। रङ्गरामानुजमुनयस्तु, "ननु स्वरूपैक्ये विद्यमाने उत्पद्यमानं स्वरूपनानात्वं मिथ्याभूतमित्यभ्युपेयं स्यात्। एवं च घटादिस्वरूपव्यवहारः सर्वोऽपि दत्तजलाञ्जलिस्स्यादिति विवर्तवादस्वीकार इत्यरुचेः स्वरूपैक्यपक्षं परित्यज्याऽऽह अस्तुवेति" इति व्याचख्युः। अत्र स्वरूपनानात्वमिति किं विवक्षितम्? स्वरूपे स्वरूपनिष्ठतद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदवत्त्वं वा, बहुत्वं वा। नाऽऽद्यः; अनभ्युपगमात्। न द्वितीयः; अविरोधस्य मूल एवोपपादितत्वात्। अतो यथाश्रुते परापादितमेकत्वानेकत्व-विरोधं 'तुष्यतु दुर्जन' इति न्यायेनाङ्गीकृत्य पक्षान्तराभिधानमित्येव स्वामिनामभिप्रायवर्णनं युक्तम्। अरुचेरित्यत्र ल्यब्लोपे पञ्चमी। अरुचिमभिनीयेत्यर्थः। अस्तु वेत्येतत्स्वारस्यात्; न च तत्पक्षे महत्त्वाद्यवस्थानां स्वावच्छेदेनैवोत्पत्तिस्वीकारात् आत्माश्रय इति वाच्यम्; सांशत्वपक्षेऽपि पार्थिवादि-परमाणूनां परस्परसंयोगेष्विव प्रकृत्यंशानामपि परस्परसंयोगेषु तदावश्यकत्वात्। अन्यथा तादृश संयोगानां व्याप्यवृत्तित्वे प्रकृतेरेकांशाविशिष्टपरिमाणत्वप्रसङ्गात्। नैयायिकमते पार्थिवादिपरमाणुसंयोगेष्विवागत्या तत्रात्माश्रयस्यादोषत्वाभ्युपगमे तु निरंशत्वपक्षेऽपि तस्य तौल्यान्न कश्चित् सांशत्वपक्षे विशेषः। अतो निरंशत्वपक्षोऽपि सिद्धान्तसंप्रतिपन्न एवेति बोद्धव्यम्। नन्वंशनानात्वे एकत्वस्यांशगतत्वस्वीकारे भेदाभेदवादः, अंशातिरिक्तावयविगतत्वस्वीकारे अवयविवादः, अतोऽव्यक्तस्य स्वतस्सांशत्वं न संभवतीत्या-शङ्क्याह पिण्डवदेवेति। स्वतस्सांशत्वे यस्य दृष्टान्तत्वम्—तस्यैवोक्तानुपपत्त्यभावेऽपि दृष्टान्तत्वमिति एव=काराभिप्रायः। न च दृष्टान्ते वा कथमुपपत्तिरिति वाच्यम्; नानात्वविरोधिनः स्वरूपैक्यस्य तत्रास्वी-कारात् अवस्थारूपस्य तद्विलक्षणस्यैव पृथग्व्यपदेशानर्हत्वस्यान्ततः शक्तिविशेषात्मकस्य स्वरूपनानात्वा-विरोधिनस्तत्र स्वीकारात्। तादृशैकीभावसद्भावे च पिण्डांशा एकीया इत्यादि प्रत्यक्षमेव प्रमाणम्। एकीभावावस्थाकल्पनेनेति। पिण्ड इवाव्यक्ते एकीभावावस्थायाः प्रत्यक्षेणावगन्तुमशक्यत्वादिति भावः। कारणश्रुतीति। "एकमेव" इत्यादिश्रुतीत्यर्थः।

विषयः। न च नैरर्थक्यम्; श्रुतिबाधपरिहाराय प्रयोजनकल्पनोपपत्तेः। न च एकत्वमौपाधिकत्वात् अवास्तविकम्; सम्पिण्डितानामेकारम्भादेकत्वारम्भस्यैव लघुत्वात्। अवयविभङ्गे चैतत् स्थापयिष्यामः। न च एवमपि पराभिमतपरमाणुपुञ्जमात्रत्वमाशङ्कनीयम्; गन्धरसरूपस्पर्शादिरहित-परस्पराप्रतिघातक सत्त्वरजस्तमोरूपगुणत्रयाश्रय-परस्परसुश्लिष्टपञ्चभूतसूक्ष्मद्रव्यरूपत्वेन श्रुत्यादिसिद्धे पराभिमतपरमाणुस्वभावगन्धाभावेनार्थान्तरत्वसिद्धेः। यत्तु औपाधिकभेदाभेदवादिनं प्रति भाष्ये ब्रह्मण उपाधिसंसर्गादपि छेदनाद्यनुपपत्तिकथनम्, तत् ब्रह्मस्वरूपस्य निष्कलत्वाच्छेद्य-

---

औपाधिकत्वादिति। वस्तुतो भिन्नानामंशानां वास्तवैकत्वासम्भवेन एकावयव्यारम्भकत्वस्यौपाधिकत्वस्यैव वक्तव्यतया न एकत्वस्य वास्तविकत्वसिद्धिरित्यर्थः। एकारम्भादिति। सम्पिण्डितानां बहूनामंशानामेकत्वावस्थाश्रयातिरिक्तावयव्यारम्भकत्वकल्पनापेक्षया, धर्मिकल्पनातो वरं धर्मकल्पनमिति न्यायेन एकत्ववास्यारम्भकत्वमेव लघु। अत एव, मृदंशा एकीभूता इत्येव व्यवहारः; न तु एकारम्भकीभूता इतीत्यर्थः। गन्धरसेति। परमाणवो हि गन्धरसादिमन्तः परस्परप्रतिघातकाः सत्त्वादिगुणत्रयानाश्रयाः परस्परासुश्लिष्टाः पञ्चभूततन्मात्रत्वाद्यवस्थायोग्यत्वगन्धविधुराश्च; अस्मदभिमतप्रकृत्यवयवास्तु नेदृशा इति भावः। श्रुत्यादिसिद्ध इति। "शब्दस्पर्शविहीनं तद् रूपादिभिरसंयुतम्। त्रिगुणं तज्जगद्योनिः" इत्यादिप्रमाणसिद्ध इत्यर्थः। ननु निरवयवेऽपि त्रिगुणे स्पर्शादिलक्षणप्रादेशिकविकारदशायां छेदनभेदनपरिस्पन्दनादीनामपि सिद्धिरित्युक्तमयुक्तम्; भाष्ये ब्रह्मणि निरवयवत्वेन च्छेदनाद्यनुपपत्तिकथनादित्याशङ्क्य परिहरति यत्त्विति। निष्कलेति। निष्कलत्वं निर्विकारत्वं प्रकृते विवक्षितम्। अयं भावः— निरवयवत्वात् ब्रह्मणिच्छेदनाद्यसम्भव इति न भाष्याभिप्रायः; येन त्रिगुणेऽपि तन्न स्यात्। अपितु निर्विकारत्वाच्छेद्यत्वादिश्रुतिमवलम्ब्य। तादृश्याश्च श्रुतेस्त्रिगुणेऽभावात् छेदनादिविकारः

---

प्रयोजनकल्पनोपपत्तेरिति। यथा प्रत्यक्षावगतस्य प्रयोजनाभावमात्रेण नापलापः, तद्वदिति भाव.। औपाधिकत्वात् एकावयव्यारम्भकत्वरूपोपाध्यधीनभ्रमविषयत्वात्। अवास्तविकम् विशेष्यावृत्ति। वस्तुतोभिन्नानां वास्तवैकत्वसंभवादिति भावः। समाधत्ते संपिण्डितानामिति। लघुत्वादिति एकारम्भे तद्गतगुणादीनामप्यारम्भस्य स्वीकरणीयतया गौरवम्। एकत्वारम्भे च न तदिति भावः। गन्धेत्यादि। परमाणूनां गन्धरसरूपस्पर्शाश्रयतया, अत एव परस्परप्रतिघातकतया, सत्त्वरजस्तमोरूपगुणत्रयानाश्रयतया परस्परासुश्लिष्टतया, पञ्चभूततन्मात्रत्वाद्यवस्थायोग्यतागन्धरहिततया च अतथाभूतेभ्य. प्रकृत्यवयवेभ्यो वैलक्षण्यस्य विस्पष्टतया न पराभिमतपरमाणुपुञ्जत्वशङ्कावकाश इति भावः। श्रुत्यादिसिद्ध इति। "शब्दस्पर्शविहीनं तत् रूपादिभिरसंयुतम्। त्रिगुणं तज्जगद्योनिः" इत्यादिप्रमाणसिद्ध इत्यर्थः। ननु निरवयवत्वपक्षे तत्र स्पर्शादिलक्षणप्रादेशिकपरिणतिदशायां छेदनभेदनपरिस्पन्दनादीनामपि सिद्धिरित्येतन्न संभवति; निरवयवत्वमेवावलम्ब्य ब्रह्मणि छेदनाद्यनुपपत्तेर्भाष्येऽभिहितत्वादित्याक्षिप्य समाधत्ते यत्त्वित्यादिना। निष्कलत्वाच्छेद्यत्वादिवचनबलमवलम्ब्येति। न तु निरवयत्वमेवावलम्ब्य। तथाच त्रिगुणे तादृशवचनविरहान्नच्छेदनादीनामनुपपत्तिरिति भावः।

त्वादिवचनबलमवलम्ब्य। अन्यथा ब्रह्मस्वरूप एव सविकारत्वापत्तौ निर्विकारत्वश्रुतेरनवकाशत्वप्रसङ्गात्। तत्र च सर्वज्ञत्वात् सर्वांशगतसुखदुःखादिप्रतिसन्धानप्रसङ्गो दुष्परिहरः। इह तु अंशभेदप्रतिनियतविकारेषु न स्वभावसङ्कर इति॥ एतेन परमाणुकारणवादो निरस्तः। जालालोकविलोकनीयत्रसरेणुशब्दवाच्यद्रव्यातिरिक्ताप्रत्यक्षाणुकल्पने प्रमाणाभावात्। तेष्वेव मात्रया भेदमवलम्ब्य परमाणुद्व्यणुकत्र्यणुकादिव्यपदेशः प्रमाणग्रन्थेषु। तेषामेव रूपाद्यनुद्भवदशायां

---

सर्वोऽप्युपपद्यत इति। अन्यथेति। निरवयवत्वमात्रमवलम्ब्य त्रिगुणेऽपि विकारच्छेदनाद्यनभ्युपगमे उपादानत्वश्रुतिमहिम्ना सर्वेऽपि विकारा अद्वारका एव ब्रह्मणि प्रादुष्ष्युरिति निर्विकारत्वश्रुतिर्विरुध्येतेत्यर्थः। तन्मते दूषणान्तरमप्याह तत्र चेति। भेदाभेदवादिमते इत्यर्थः। सर्वज्ञत्वादिति। स्वाभिन्नसर्वजीवगतं दुःखं स्वगततया जानत ईश्वरस्य अत्यन्तसावद्यत्वप्रसङ्गात् सावद्यनिरवद्यस्वभावसङ्कर इत्यर्थः। इह त्विति। अस्मिन् पक्षे इत्यर्थः। अंशभेदेति। विशेषणांशभेदव्यवस्थितेषु विकारेष्वित्यर्थः। ननु प्रमाणभूतेष्वेव ग्रन्थेषु विकाराणुस्वरूपैरित्यादिपरमाण्वादिव्यवहारो दृश्यते। ततस्ते प्रामाणिका एवेत्याशङ्क्य तद्व्यवहारस्यान्यथासिद्धिमाह तेष्वेवेति। जालकालोकविलोकनीयसूक्ष्मद्रव्येष्वेवेत्यर्थः। तेष्वेव ग्रन्थेषु परमाणूनामप्रत्यक्षत्वव्यपदेशोऽपि न पराभिमतपरमाणुसाधकः; किन्तु अन्यथासिद्ध इत्याह तेषामेवेति।

---

अन्यथेति। निरवयवत्वमात्रेण विकारित्वप्रतिषेधे इत्यर्थः। ब्रह्मस्वरूप एव सविकारत्वापत्ताविति। उपादानत्वश्रुतिमहिम्ना विकाराणां ब्रह्मण्यद्वारकतयैव प्रसक्तावित्यर्थः। त्रिगुणद्रव्यस्य निरवयवतया विकारित्वासंभवेनोपादानत्वश्रुत्यवगतपरिणामे विशेषणद्वारकत्वस्य वक्तुमशक्यत्वादिति भावः। निर्विकारत्वश्रुतेरनवकाशत्वप्रसङ्गादिति। तादृशश्रुतिविरोधप्रसङ्गादित्यर्थः। किञ्च निरवयवस्य विकारित्वसंभवेऽप्यौपाधिकभेदाभेदवादो न संभवत्येव; दूषणान्तरसद्भावात्। त्रिगुणस्य निरवयवस्यापि विकारित्वाभ्युपगमे तु न तादृशं दूषणमिति निरवयवत्वेऽपि त्रिगुणद्रव्यस्य विकारित्वमुपपद्यत एवेत्यभिप्रेत्याह तत्र चेति। ब्रह्मणि चेत्यर्थः। सर्वज्ञत्वादित्यादि। स्वाभिन्नजीवगतं दुःखं स्वगततया जानत ईश्वरस्यात्यन्तसावद्यत्वप्रसङ्गात् सावद्यत्वनिरवद्यत्वस्वभावसङ्कर इत्यर्थः। इहेति त्रिगुणद्रव्य इत्यर्थः। अंशभेदेति। निरंशत्वपक्षेऽप्यौपाधिकांशभेदसद्भावादिति भावः। प्रतिनियतविकारेषु वाय्वादिष्वेव स्पर्शादिविकारः, न ततः प्राचीनेष्वित्येवंव्यवस्थितविकारेषु। न स्वभावसङ्कर इति। न छेद्यत्वाच्छेद्यत्वादिस्वभावसङ्कर इत्यर्थः। एतेनेति। आगमावगतत्रिगुणद्रव्यकारणत्वे सर्वासामप्यनुपपत्तीनामुद्धारेणेत्यर्थः। अत्रानुपपत्तिसत्त्वे हि परमाणुकारणवादः शङ्क्येतापीति भावः। निरस्त इति। साधकाभावात् बाधकसद्भावाच्चेति भावः। तदेव क्रमेण विवृणोति जालालोकेत्यादिना। ननु प्रमाणभूतेष्वेव ग्रन्थेषु परमाणुद्व्यणुकत्र्यणुकादिव्यवहारसत्त्वात् तेष्वेव ग्रन्थेषु परमाणूनामप्रत्यक्षत्वप्रतिपादनेन जालालोकविलोकनीयानां परमाणुत्वासंभवेन तदतिरिक्तपरमाण्वभ्युपगम आवश्यक इत्यत आह तेष्वेवेति। मात्रया भेदमवलम्ब्य=अल्पं परिमाणादिभेदमाश्रित्य। तर्हि तत्राप्रत्यक्षत्वव्यवहारविरोध इत्यत आह रूपादीति। अनुद्भवदशायामिति। अनुद्भूतरूपवत एव चाक्षुषत्वासंभवादिति भावः। ननु तर्हि

गृह्यमाणगन्धाश्रयगन्धवाहानीतसूक्ष्मद्रव्यवत् अचाक्षुषत्वादिसम्भवात् परमाणोरप्रत्यक्षत्वव्यवहारः कचित् कृतोऽपि न विरुध्यते। न च पवनानीतगन्धाश्रयद्रव्येषु परमाणुत्वं भवतामपीष्टम्; परमाणूनां प्रत्यक्षगुणाश्रयत्वानभ्युपगमात्। अतः प्रत्यक्षात् आगमाद्वा न भवदभिमतपरमाणुसिद्धिः। अनुमानानि न पश्यामः—अणुपरिमाणतारतम्यं क्वचिद्विश्रान्तम्; परिमाणतारतम्यरूपत्वात्।

---

**गृह्यमाणगन्धाश्रयेति**। गृह्यमाणो यो गन्धस्तदाश्रयेत्यर्थः। ननु गन्धवाहानीतसूक्ष्मद्रव्याभ्युपगमे त एवास्मन्मते परमाणव इति सिद्धं नः समीहितमित्याशङ्क्याह **नचेति**। **आगमाद्वेति**। "नित्यं विभुं सर्वगतं सुसूक्ष्मम्" इत्यादिभिर्भूतयोने सुसूक्ष्मत्वप्रतिपादनस्य ब्रह्मण इन्द्रियाग्राह्यस्वरूपसौक्ष्म्यपरत्वादिति भावः। **अणुपरिमाणतारतम्यमिति**। अणुपरिमाणपारम्यमित्यर्थः। अणुत्वोत्कर्ष इति यावत्। **अणुपरिमाणतारतम्य**मित्यनेन किमिह पक्षीकृतम्? किं पारिमाण्डल्यम् उत महत्त्वापकर्षतारतम्यम् उत

---

वायवानीतगन्धाश्रयद्रव्याणामेव परमाणुत्वमस्त्वित्यत आह न चेति। **अणुपरिमाणतारतम्यमिति**। अणुत्वनिष्ठोऽपकर्षसमानाधिकरणोत्कर्ष इत्यर्थः। **क्वचिद्विश्रान्तमिति**। किञ्चिन्निष्ठापकर्षासमानाधिकरणोत्कर्षावधिनिष्ठ इत्यर्थः। **परिमाणतारतम्यरूपत्वादिति**। परिमाणनिष्ठापकर्षसमानाधिकरणोत्कर्षरूपत्वादित्यर्थः। **महत्परिमाणतारतम्यवदिति**। महत्त्वनिष्ठापकर्षसमानाधिकरणोत्कर्षवदित्यर्थः। अत्र च, पर्वताद्यपेक्षया घटोऽणुः, तदपेक्षया कपालोऽणुतरः तदपेक्षया त्रसरेणुरणुतमः इत्यादिव्यवहारात् कपालनिष्ठाणुत्वे त्रसरेण्वणुत्वादपकर्षस्य घटाणुत्वादुत्कर्षस्य च सत्त्वात् तादृशापकर्षसमानाधिकरणोत्कर्षस्य पक्षत्वम्। घटो महान्, गजो महत्तरः, पर्वतो महत्तम इत्यादिव्यवहारात् गजमहत्त्वे पर्वतमहत्त्वादपकर्षस्य घटमहत्त्वादुत्कर्षस्य च सद्भावात् गजमहत्त्वनिष्ठस्यापकर्षसमानाधिकरणोत्कर्षस्य दृष्टान्तत्वम्। तादृशमहत्त्वे परममहत्परिमाणनिष्ठापकर्षासमानाधिकरणोत्कर्षावधित्वसद्भावात् दृष्टान्ते साध्योपपत्तिः, पक्षे चोक्तसाध्यसिद्धावपकर्षासमानाधिकरणोत्कर्षाश्रयपरिमाणत्वसिद्ध्या तदाश्रयपरमाणुसिद्धिरिति तात्पर्यम्। अत्रोत्कर्षत्वमात्रस्य पक्षतावच्छेदकत्वे परममहत्परिमाणनिष्ठोत्कर्षे उक्तसाध्यविरहात् बाधः स्यादित्यपकर्षसमानाधिकरणेति। तावताऽपि सिद्धसाधनावारणादणुपरिमाणनिष्ठत्वविशेषणम्। अणुपरिमाणनिष्ठोत्कर्षत्वेन पक्षत्वे सिद्ध्यत्परमाणुपरिमाणनिष्ठोत्कर्षे बाधः स्यादित्यपकर्षसमानाधिकरणेति। अनुमितेः प्रागुक्तबाधज्ञानासंभवेऽप्यनुमित्यनन्तरं तथाविधबाधज्ञानादुत्पन्नानुमितावप्रामाण्यग्रहसंभवात् तस्यापि परिहरणीयत्वमेव। अवधिनिष्ठत्वस्योत्कर्षावधिनिष्ठत्वस्य वा सिद्धसाधनग्रस्ततया अपकर्षसमानाधिकरणत्वमुत्कर्षविशेषणम्। उत्कर्षत्वमात्रस्य परममहत्परिमाणनिष्ठोत्कर्षे व्यभिचारादपकर्षसमानाधिकरणेति। अत्राणुपरिमाणनिष्ठापकर्षत्वेन पक्षत्वं परिमाणनिष्ठापकर्षत्वस्य हेतुत्वं महत्परिमाणनिष्ठापकर्षस्य दृष्टान्तत्वं च सुवचमिति बोद्धव्यम्। **तारतम्यरूपत्वादित्येतावतापीति**। अपकर्षसमानाधिकरणोत्कर्षत्वस्यापकर्षत्वस्यैव वा हेतुत्वाश्रयणेऽपीत्यर्थः। **व्यभिचाराभावेनेति**। ज्ञानशक्त्यादितारतम्यस्यापि क्वचिद्विश्रान्तिसत्त्वादिति भावः। अत्राणुशब्दस्य महत्त्वानात्मकपरिमाणविशेषनिमित्तीकृत्य परमाणुद्व्यणुकयोः प्रयोग इति नैयायिकादिभिरभ्युपगम्यते। त्रसरेण्वतिरिक्तपरमाण्वादिकमनिच्छद्भिरपकृष्टमहत्त्वमपकृष्टपरिमाणमेव वा निमित्तीकृत्य घटादिष्वपि प्रयोगः स्वीक्रियते। ततश्च पक्षकोटावणुपरिमाण

महत्परिमाणतारतम्यवदिति चेन्न; तारतम्यरूपत्वादित्येतावतापि व्यभिचाराभावेन परिमाणविशेषणस्य व्यर्थत्वात्। पारिमाण्डल्यविवक्षया अणुशब्दप्रयोगे अन्योन्याश्रयणात्। महत्त्वापकर्षतारतम्यस्य त्रसरेणावेव पर्यवसितत्वाभ्युपगमात्। सामान्यतः परिमाणापकर्षतारतम्यविवक्षया प्रयोगेऽपि तद्विश्रान्तेरपि दृश्यमान एवोपपत्तेः। एवमवयवापकर्षतारतम्यविश्रान्तेरपि। अस्तु वा तस्याविश्रान्तिः। तथापि आधिक्यन्यूनताभ्यां प्रमाणसिद्धाभ्यां सर्षपमहीधरादिपरिमाणविशेष-

---

परिमाणापकर्षतारतम्यमिति विकल्प्य क्रमेण दूषयति **पारिमाण्डल्येति**। पारिमाण्डल्यं पराभिमतपरमाणुपरिमाणमेव। ततश्च पक्षसिद्धावनुमानप्रवृत्तिः; अनुमानेन च पक्षसिद्धिरित्यन्योऽन्याश्रयणं स्यादित्यर्थः। **पर्यवसितत्वाभ्युपगमादिति**। त्वयाऽपीति शेषः। द्व्यणुकादौ महत्त्वस्य तेनाप्यनभ्युपगमादिति भावः। **दृश्यमान एवेति**। त्र्यणुक एवेत्यर्थः। **अवयवापकर्षतारतम्यं क्वचिद्विश्रान्तं तारतम्यत्वात्** इत्यनुमानस्यापि स्वापकृष्टावयवशून्यतया अत्यन्तापकृष्टे त्रसरेणुरूपावयव एव विश्रान्त्या न तदभिमतसिद्धिरित्याह **एवमिति**। अप्रयोजकत्वेनाप्यनुमानं दूषयति **अस्तु वेति**। ननु कारणपरम्पराविश्रान्तिभूमेर्निरवयवस्य कस्यचिदभावे सर्वस्याप्यनन्तावयवारब्धत्वेन मेरुसर्षपयोस्तुल्यपरिमाणप्रसङ्गः **इत्याशङ्क्याह तथापीति**। ननु सत्यं मेरुसर्षपयोः परिमाणतारतम्यं प्रमाणसिद्धमिति; तथापि

---

शब्देन किं परमाण्वादिपरिमाणं विवक्षितम्; उतापकृष्टमहत्त्वम् आहोस्विदपकृष्टपरिमाणमात्रमिति विकल्प्य आद्ये दूषणमाह **पारिमाण्डल्यविवक्षयेति**। परमाण्वादिपरिमाणविवक्षयेत्यर्थः। **अन्योन्याश्रयणादिति**। परमाण्वादिसिद्धावनुमानप्रवृत्तिः, अनुमानप्रवृत्त्या च परमाण्वादिसिद्धिरित्यन्योन्याश्रयणादित्यर्थः। द्वितीये तदाह **महत्त्वेति**। अयं भावः—अपकृष्टमहत्त्वशालिघटादिपरिमाणनिष्ठमपकर्षसमानाधिकरणोत्कर्षम् अपकर्षमेव वा पक्षीकृत्यापकर्षसमानाधिकरणोत्कर्षावधिनिष्ठत्वरूपाया उत्कर्षविश्रान्तेः साधने परममहत्परिमाणमादाय सिद्धसाधनादुद्देश्यासिद्धेश्चोत्कर्षसमानाधिकरणापकर्षावधिनिष्ठत्वरूपापकर्षत्रसरेणावेव संभवतीति तमादायानुमानपर्यवसानसंभवादुद्देश्यासिद्धिरिति। तृतीय आह **सामान्यत इति**। सामान्यरूपेणेत्यर्थः। **परिमाणापकर्षतारतम्यविवक्षया प्रयोगेऽपीति**। अपकृष्टपरिमाणनिष्ठस्यापकर्षसमानाधिकरणोत्कर्षस्य, अपकर्षस्यैव वा पक्षत्वाङ्गीकारेऽपीत्यर्थः। **तद्विश्रान्तेरपि दृश्यमान एवोपपत्तेरिति**। अपकर्षसमानाधिकरणोत्कर्षावधिनिष्ठत्वरूपाया उत्कर्षविश्रान्तेः, उत्कर्षासमानाधिकरणापकर्षावधिनिष्ठत्वरूपाया अपकर्षविश्रान्तेर्वा साधने परममहत्परिमाणनिष्ठोत्कर्षं त्रसरेणुनिष्ठापकर्षं वाऽऽदायानुमानपर्यवसानसंभवादित्यर्थः। तथाच सिद्धसाधनमुद्देश्यासिद्धिश्चेति भावः। **अवयवापकर्षतारतम्यविश्रान्तेरपीति**। अवयवगतापकर्षे उत्कर्षसमानाधिकरणापकर्षावधिनिष्ठत्वस्येत्यर्थः। **दृश्यमान एवोपपत्तेरित्यनुषज्यते**। अयं भावः— घटावयवगतः पर्वतावयवावपकर्षः किञ्चिदवयवगतोत्कर्षासमानाधिकरणापकर्षावधिनिष्ठः अपकर्षत्वादित्यनुमानेन सर्वापकृष्टावयवस्य कस्यचित्सिद्धावपि दृश्यमानत्रसरेणुरेव तादृशावयवो भवितुमर्हतीति नाभिमतसिद्धिरिति। दर्शितसाध्याभावेऽप्युक्तहेतूपपत्त्या अप्रयोजकतयाऽपीदमनुमानमसार्थकमित्याह **अस्तु वेति**। नन्ववयवापकर्षाविश्रान्तौ सर्षपमहीधरयोः समपरिमाणत्वप्रसङ्गः अनन्तावयवारब्धत्वसाम्यादित्यत आह **तथाऽपीति**। **प्रमाणसिद्धाभ्या-**

**प्रसङ्गः परिहृतः अनन्तत्वाविशेषेऽपि परापरजातीयेषु क्षणदिवसपक्षमाससंवत्सरचतुर्युगकल्पादिषु च आधिक्यन्यूनतयोर्भवद्भिरप्यभ्युपगतत्वात् । विप्रतिपन्नं कार्यद्रव्यारब्धम्; महत्त्वे सति चाक्षुषत्वात्, चाक्षुषद्रव्यत्वात् इत्यादीनां विपक्षे बाधकाभावादप्रयोजकत्वम् ॥ द्रव्यचाक्षुषताप्रकर्षो महत्त्वावयवसङ्ख्याप्रकर्षानुविधायी दृष्टस्तद्धेतुक एव । अतस्तदभावे चाक्षुषत्वं न स्यादिति चेन्न;**

तन्निर्वाहकतया न्यूनाधिकावयवारब्धत्वं तयोः कल्पनीयम्; अनन्तावयवारब्धत्वाविशेषे वैषम्यानुपपत्तेरित्याशङ्क्याह **अनन्तत्वाविशेषेऽपीति** । **परापरजातीयेष्विति** । सत्ता परजातिः । द्रव्यत्वादिरपरजातिः । सद्द्रव्यघटादीनामानन्त्याविशेषेऽपि घटानन्त्यापेक्षया द्रव्यानन्त्ये आधिक्यम्; द्रव्यानन्त्यापेक्षया च सदानन्त्ये आधिक्यं दृष्टमिति भावः । एवं क्षणदिवसादिष्वपि पूर्वपूर्वानन्त्यमुत्तरोत्तरानन्त्यापेक्षयाऽधिकं दृष्टमित्यर्थः ननु जालकालोकविलोकनीयत्रसरेणौ न विश्रान्तिः; द्व्यणुकं कार्यद्रव्यारब्धमित्यनुमानात्तत्कारणपरमाणुसिद्धिसंभवादित्याशङ्क्याह **विप्रतिपन्नमिति** । **महत्त्वे सतीति** । रूपत्वादौ व्यभिचारवारणार्थं सत्यन्तम् । आत्मनि व्यभिचारवारणार्थं **चाक्षुषत्वादिति** । एवमुत्तरत्रापि द्रष्टव्यम् । **महत्त्वावयवसङ्ख्येति** । अत्र महत्त्वं दृष्टान्ततयोपात्तम् । तथाच यथा महत्त्वं चाक्षुषत्वे प्रयोजकम्; एवमनेकावयवत्वमपि चाक्षुषत्वे प्रयोजकमित्यर्थः । **तद्धेतुक एवेति** । न हि अकारणोत्कर्षं कार्यमनु

मिति । दृश्यमानपरिमाणतारतम्येनाऽनुमिताभ्यामित्यर्थः । **परिमाणाविशेषप्रसङ्गः**–तुल्य–परिमाणत्वप्रसङ्गः । नन्वनन्तत्वाविशेषे कथं न्यूनाधिकभावसंभव इत्यत आह **अनन्तत्वाविशेषेऽपीति** । **परापरजातीष्विति** । परजातिः सत्ता । अपरजातिर्द्रव्यत्वादिः । तत्र सत्ताश्रयव्यक्तीनां घटत्वा-(द्रव्यत्वा?)श्रयव्यक्तीनां चानन्तत्वाविशेषेऽप्याधिक्यन्यूनतयोर्भवद्भिरप्यभ्युपगतत्त्वादित्यर्थः । **क्षणदिवसेत्यादि** । क्षणदिवसादीनां सर्वेषामानन्त्याविशेषेऽपि पूर्वपूर्वापेक्षयोरुत्तरोत्तरन्यूनताया भवद्भिर[प्य?]भ्युपगतत्वादित्यर्थः । ननु त्रसरेणौ न विश्रान्तिः; अनुमानेन तस्याप्यवयवसिद्धेरित्याशङ्क्य परिहरति **विप्रतिपन्नमिति** । प्रकृतसाध्यतदभावकोटिकसंशयविषयीभूतमित्यर्थः । जालालोकविलोकनीयानामनुगमकरूपापरिचयेऽपि तावद्विषयकसमूहालम्बनसंशयस्य तद्व्यक्तित्वेन विशेष्यतासंबन्धेन पक्षतावच्छेदकत्वं संभवतीत्यभिप्रायेण विप्रतिपन्नमित्युक्तम् । **कार्यद्रव्यारब्धमिति** । कार्यद्रव्यजन्यमित्यर्थः । **महत्त्वे सतीति** । इदं च घटत्वरूपत्वादौ व्यभिचारवारणाय । **चाक्षुषत्वादिति** । इदं चात्मादौ व्यभिचारवारणाय । **चाक्षुषद्रव्यत्वादिति** । चाक्षुषत्वे सति द्रव्यत्वादित्यर्थः । आत्मादौ व्यभिचारवारणाय सत्यन्तम् रूपत्वादौ तद्वारणाय विशेष्यम् । **विपक्षे बाधकाभावादिति** पक्षे साध्यानुपगमे बाधकाभावादित्यर्थः । दर्शितसाध्याभावेऽप्युक्तहेतूपपत्तेरिति भावः । साध्याभावे हेत्वनुपपत्तिं शङ्कते **द्रव्येत्यादिना** । **द्रव्यचाक्षुषताप्रकर्षः** द्रव्यविषयकचाक्षुषज्ञाननिष्ठवैशद्यातिशयः । **महत्त्वावयवसङ्ख्याप्रकर्षानुविधायी दृष्ट इति** । महत्त्वप्रकर्षप्रयोज्यः अवयवसङ्ख्याप्रकर्षप्रयोज्यश्च दृष्ट इत्यर्थः । **महत्त्वे**त्येतत् दृष्टान्तार्थम् । महत्त्वप्रकर्षे चाक्षुषप्रकर्षः तदभावे तदभाव इति चाक्षुषप्रकर्षस्य महत्त्वप्रकर्षानुविधानदर्शनात् चाक्षुषे महत्त्वस्य कारणत्वमन्तरा तत्प्रकर्षे तत्प्रकर्षस्य प्रयोजकत्वासंभवात् चाक्षुषे यथा

यथोपलम्भं योग्यतास्वीकारात्। अन्यथा महावयवारब्धत्वस्यापि व्याप्तावनुप्रवेशप्रसङ्गात्। लाघवञ्चास्मन्मते। वायवीयतैजसाप्यपार्थिवत्रसरेण्वादेरपि पूर्वपूर्वभूतात्मकार्यद्रव्यारब्धत्वात् अस्मन्मतेन सिद्धसाधनत्वञ्च। कार्यावयवित्वसाधनेऽपि चाक्षुषतया अस्मदुपगतेन कालेनानैकान्त्यं दुष्परिहरम्। परिदृश्यमानमेव परमाणुमिच्छतां महत्त्वविशेषणमसिद्धञ्च। चाक्षुषद्रव्यत्वादेव महत्त्वसाधनमपि पूर्ववद् दूष्यम्। पृथिवीत्वं नित्यसमवेतवृत्ति, घटपटजातित्वात् सत्तावत् इत्यादि-

---

महत्त्वस्य कारणत्वम्, तथाऽनेकावयवकत्वप्रकर्षस्यापि चाक्षुषप्रकर्षप्रयोजकत्वदर्शनादनेकावयवकत्वमपि विद्यते इति भावः। **यथोपलम्भमिति**। उद्भूतरूपवति चाक्षुषत्वोपलम्भात् उद्भूतरूपवत्त्वमात्रमेव चाक्षुषत्वे प्रयोजकमित्यर्थः। **अन्यथेति**। क्वचित्तदुत्कर्षानुविधानदर्शनात् तस्यापि प्रयोजकत्वे इत्यर्थः। **अनुप्रवेशप्रसङ्गादिति**। तदुत्कर्षानुविधानस्य तत्राप्यविशेषादिति भावः। **लाघवञ्चेति**। उद्भूतरूपमात्रस्य चाक्षुषत्वप्रयोजकत्वस्वीकारादिति भावः। कार्यद्रव्यारब्धत्वञ्च किम्? कार्यद्रव्यजन्यत्वं वा कार्यद्रव्यसमवेतावयवित्वं वेति विकल्प्य आद्यं दूषयति **वायवीयेति**। अत्र वायवीयत्रसरेणुपक्षीकरणे चाक्षुषत्वघटितहेतोरभावाद्भागासिद्धिरित्यपि द्रष्टव्यम्। द्वितीयं दूषयति **कार्यावयवित्वेति** कार्यद्रव्यसमवेतत्वेत्यर्थः। अन्यतरासिद्धिश्चेत्याह **परिदृश्यमानमिति**। **असिद्धश्चेति**। परमाणुत्वमहत्त्वयोर्विरोधादिति भावः। **पूर्ववदिति**। **यथोपलम्भं योग्यतास्वीकारात्** इत्यादिनेत्यर्थः। **नित्यसमवेतेति**। यद्यपि नित्यवृत्तित्वमात्रेण परमाणुः सिध्यति; तथापि सिद्धान्तिमते द्रव्यस्वरूपस्य नित्यत्वात् तद्वृत्तित्वमादाय सिद्धसाधनं मा प्रसाङ्क्षीदिति **नित्यसमवेतवृत्तीत्युक्तम्**। **घटपटजातित्वादिति**। घटपटोभयवृत्तिजातित्वादित्यर्थः।

---

चाक्षुषे हेतुरिति कार्यद्रव्यारब्धत्वविरहे चाक्षुषत्वमेव न स्यादित्यर्थः। **यथोपलम्भं योग्यतास्वीकारादिति**। उद्भूतरूपवत एव चाक्षुषत्वोपलम्भात् तस्यैव चाक्षुषे कारणत्वं न महत्त्वस्य न वाऽनेकावयवकत्वस्येत्युपगमादित्यर्थः। महत्त्वप्रकर्षस्य चाक्षुषप्रकर्षप्रयोजकत्वेऽपि न महत्त्वस्य चाक्षुषे कारणत्वम्; मानाभावात्, कारणप्रकर्षस्यैवं कार्यप्रकर्षे प्रयोजकत्वमिति निर्बन्धस्य निर्निबन्धनत्वात्। अत एवानेकावयवकत्वस्यापि न कारणत्वम्; त्रसरेणौ व्यभिचारसंशयसत्त्वेन कारणताग्रहासंभवादित्यभिप्रायः। **अन्यथेति**। व्यभिचारसंशये सत्यपि कारणताग्रहाभ्युपगम इत्यर्थः। **व्याप्तावनुप्रवेशप्रसङ्गादिति**। व्याप्तिघटितकारणताग्रहप्रसङ्गादित्यर्थः। त्रसरेणौ महावयवारब्धत्वविवाददशायां तत्र व्यभिचारसंशयस्यैव सत्त्वादिति भावः। व्यभिचारसंशये सत्यपि लाघवज्ञानसत्त्वे तस्योत्तेजकतया कारणताग्रहो भवेत्। अस्मन्मते तदभावात् न तत्संभव इत्यभिप्रयन् आह **लाघवञ्चास्मन्मत इति**। उद्भूतरूपमात्रस्य चाक्षुषकारणताभ्युपगमात् अदृश्यमानद्व्यणुकाद्यनभ्युपगमाच्चेति भावः। **पूर्वपूर्वभूतात्मककार्यद्रव्यारब्धत्वादिति**। तादृशकार्यद्रव्यजन्यत्वादित्यर्थः। ननु कार्यद्रव्यावयवकत्वमेव कार्यद्रव्यारब्धत्वमिति विवक्षणान्नोक्तसिद्धसाधनावकाश इत्यत आह **कार्यावयवित्वसाधनेऽपीति**। कार्यद्रव्यसमवेतत्वसाधनेऽपीत्यर्थः। **महत्त्वविशेषणमसिद्धं चेति**। तथा च पक्षे विशिष्टहेत्वभावात् स्वरूपासिद्धिरिति भावः। **पूर्ववत् दूष्यमिति**। अप्रयोजकत्वेन दूष्यमित्यर्थः। **नित्यसमवेतवृत्तीति**। यद्यपि नित्यवृत्तित्वसाधनमात्रेणाभिमत-

कुटिलानुमानान्यपि पूर्वं प्रतिपक्षे बाधकाभावात्, विषयनियमराहित्येनातिप्रसञ्जकत्वात्, पृथिवीत्वं नित्यवृत्ति न भवति; पृथिवीमात्रजातित्वाद् घटत्ववत् इत्यादिभिस्तादृशैरनुमानैः प्रतिपक्षयितुं शक्यत्वात्, अभिमतविशेषपर्यवसानासिद्धेश्च निरूपका नानुमानेषु गणयन्ति। घटादीनां सर्वेषां नित्येश्वराश्रितत्वाभ्युपगमादतिरिक्तसमवायानभ्युपगमाच्च सिद्धसाधनत्वञ्च। नित्यवृत्तीतिसाधनेऽपि घटाद्रिरूपेण परिणतस्यापि त्रिगुणद्रव्यस्य स्वरूपतो नित्यत्वाभ्युपगमात् स एव दोषः॥

एवमारम्भकाणामणूनां कृत्स्नैकदेशसंयोगविकल्पेन अधिकपरिमाणद्रव्यानारम्भकत्वसमाग-

---

सिद्धिस्संभवति, तथापि सिद्धान्तिमते घटादिरूपेण परिणतस्यापि त्रिगुणद्रव्यस्य स्वरूपतो नित्यत्वाभ्युपगमात् सिद्धसाधनं स्यादिति तथोक्तम्। **घटपटजातित्वादिति**। घटपटोभयवृत्तिजातित्वादित्यर्थः। पटत्वे व्यभिचारवारणाय घटेति। घटत्वे तद्वारणाय पटेति। घटपटान्यतरत्वादौ तद्वारणाय जातीति। पटत्वे व्यभिचारवारणाय घटेत्युक्तम्। घटत्वे व्यभिचारवारणाय पटेत्युक्तम्। घटपटान्यतरत्वे व्यभिचारवारणाय जातित्वादित्युक्तम्। **अतिप्रसञ्जकत्वादिति**। पृथिवीत्वं जलवृत्ति घटपटवृत्तिजातित्वात् सत्तावदित्येवमपि साधनसम्भवेनातिप्रसञ्जकत्वादित्यर्थः। **अभिमतविशेषेति**। तावता पृथिवीत्वाश्रयसमवायिनः कस्यचिन्नित्यस्य सिद्धावपि सिषाधयिषितस्य परमाणुनित्यत्वस्यासिद्धेरित्यर्थः। ननु पृथिवीत्वस्य नित्येश्वराश्रितघटाश्रितत्वसिद्धिमात्रेण न सिद्धसाधनम्; नित्यसमवेतवृत्तित्वस्यैव साध्यत्वेनाभिमतत्वात्; ईश्वराश्रितस्यापि घटादेरतत्समवेतत्वादित्याशङ्क्य तत्समवेतत्वञ्च न समवायसम्बन्धेन वृत्तिमत्त्वम्; समवायस्य अप्रामाणिकत्वात्। अपि तु तदाश्रितत्वमात्रमेव। तच्च सिद्धमेवेत्यभिप्रयन्नाह **अतिरिक्तसमवायेति**। **स एव दोष इति**। सिद्धसाधनत्वरूपो दोष इत्यर्थः॥

एवं परमाणुषु साधकाभावमुपपाद्य परमाणुषु बाधान्तरोक्तं भाष्यकारानुमतञ्च दूषणान्तरमाह— **एवमारम्भकाणामिति**। असंयुक्तानामारम्भकत्वं न शक्यशङ्कम्; असमवायिकारणाभावे कार्यासम्भवात्। अतः संयोगः आवश्यकः। स किं संयोगः कृत्स्नदेशवृत्तिः उत एकदेशवृत्तिः? न तावदाद्यः; द्वयोरपि परस्परं कृत्स्नदेशसंयुक्तत्वे कार्त्स्न्येन संयुक्ताभ्यामणुभ्यामारभ्यमाणस्य द्व्यणुकस्य तदधिकपरिमाणत्वाभावप्रसङ्गात्। लोके हि तन्तुप्रभृतयः पटावयवाः प्रत्येकं दशदिग्वर्तिदशपार्श्वसंयुक्ता इतरेषु पार्श्वेषु बहिष्ठेष्वेव त्रिभिस्त्रिभिः पार्श्वैः संयुक्ताः स्वाधिकपरिमाणमवयविनमारभन्ते इति दृष्टम्।

---

**अतिप्रसञ्जकत्वादिति**। पृथिवीत्वं जलवृत्ति घटपटवृत्तिजातित्वात् सत्तावदित्यपि साधनसंभवादिति भावः। **अभिमतविशेषपर्यवसानासिद्धेरिति**। त्रसरेणुनित्यत्वमादायानुमानपर्यवसानसंभवेनाभिमतपरमाणुनित्यत्वासिद्धेरित्यर्थः। अत्र च नित्यसमवेतत्वं नित्यनिरूपितसमवायसंबन्धावच्छिन्नाधेयत्वं चेत्, साध्याप्रसिद्धिः; अतिरिक्तसमवायानभ्युपगमात्। नित्यनिरूपितापृथक्सिद्धिसंबन्धावच्छिन्नाधेयत्वं नित्यनिरूपिताधेयतामात्रं वा यदि विवक्षितम्; तदा घटादीनां नित्येश्वरऽपृथक्सिद्धिसंबन्धेन सत्त्वाभ्युपगमात् सिद्धसाधनमित्याह **घटादीनामिति**। एतावता परमाणुसाधकाऽभाव उक्तः।

अथ बाधान्तरोक्तं भाष्यकारानुमतं च दूषणमाह **एवमिति**। **कृत्स्नैकदेशे**त्यादि। असम-

त्वादिचोद्यं परमाणुदूषकैः सर्वैरपि क्रियते। भाष्यकारैश्च, "महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्" इत्य[illegible]णे तदेव चोद्यं कृतम्। तदेतत् माध्यमिकानामेवोपपद्यते; न त्वन्येषाम्। तथा हि सौत्रान्तिकाद्यैरपि पुञ्जदशायां परमाणूनां संयोगानभ्युपगमेऽपि परस्परमावृतत्वानावृतत्वादिकं

---

अतः कार्त्स्न्येन संयोगेऽधिकपरिमाणानारम्भकत्वप्रसङ्गः, एकदेशेन संयोगे सावयत्वानित्यत्वादिप्रसङ्गः इति चोद्यं सर्वैरपि क्रियते। "महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्" इति सूत्रे चेदमेव चोद्यं कृतमित्यर्थः। **ह्रस्वपरिमण्डलाभ्यां** द्व्यणुकपरमाणुभ्याम्, **महतो दीर्घस्य** त्र्यणुकस्यारम्भवदितरदपि तन्मतमसमञ्जसमिति सूत्रार्थः। **माध्यमिकानामिति**। बुद्धस्य हि चत्वारः शिष्याः वैभाषिकसौत्रान्तिकयोगाचारमाध्यमिकभेदेन। तत्र ये तावत् गुरूक्तसर्वशून्यत्वरूपार्थश्रवणमात्रेणैव वयं कृतार्थाः इति मन्यमानास्तदुपपत्तिप्रकारं नापृच्छन्; ते माध्यमिकाः। शिष्यैर्हि योगश्चाचारश्चेति द्वयं करणीयम्। तत्राप्राप्तस्यार्थस्य प्राप्तये पर्यनुयोगो योगः। गुरूक्तस्यार्थस्याङ्गीकरणमाचारः। ततश्च ते गुरूक्तस्यार्थस्याङ्गीकरणादुत्तमाः-पर्यनुयोगस्याकरणादधमाश्च। अतस्तेषां माध्यमिका इति प्रसिद्धिः। ते च सर्वशून्यत्ववादिनः। ये तावद् गुरूक्तसर्वशून्यत्वे बाह्यार्थशून्यत्वमात्रमङ्गीकृत्य कथमान्तरस्यापि शून्यत्वमिति पर्यनुयोगमकुर्वन्, ते पर्यनुयोगाचाराङ्गीकारात् योगाचाराः। ये तावद् बुद्धेन सूत्रस्यान्तं पृष्टवन्तो भवन्तः सौत्रान्तिका भवन्त्वित्यभिहिताः; ते सौत्रान्तिकाः। ते बाह्यान्तरपदार्थानां सत्यत्वमेव; अपि तु क्षणिकत्वम्; बाह्यार्थस्यानुमेयत्वञ्च(श्चेति?) वदन्ति। ये तावत्, "माध्यमिकान् प्रति सर्वशून्यत्वमुपदिष्टम्; योगाचारान् प्रति बाह्यार्थशून्यत्वमुपदिष्टम्; सौत्रान्तिकान् प्रति बाह्याभ्यन्तरसत्यत्वमेव; अपि तु सर्ववस्तुनः क्षणिकत्वं बाह्यस्यानुमेयत्वमेवेत्युक्तम्; अतो भवतो विरुद्धेयं भाषा" इत्यवोचन्; तेषां वैभाषिका इति प्रसिद्धिः। ते च बाह्यान्तरसर्वपदार्थप्रत्यक्षत्वक्षणिकत्वसत्यत्ववादिनः। अतश्चतुर्विधा बौद्धा इति द्रष्टव्यम्। **संयोगानभ्युपगमेऽपीति**। परस्परावृतत्वलक्षणनैरन्तर्यातिरिक्तसंयोगानभ्युपगमादिति भावः। **आवृत**-

---

वायिकारणविरहेणासंयुक्तानामारम्भकत्वायोगात् संयोगस्यावश्यकत्वे परमाणुद्वयस्य कार्त्स्न्येन परस्परं संयोगेऽधिकपरिमाणानारम्भकत्वप्रसङ्गः, एकदेशेन संयोगे सावयवत्वानित्यत्वप्रसङ्ग इत्यर्थः। **महदित्यादि**। **ह्रस्वपरिमण्डलाभ्यां**=द्व्यणुकपरमाणुभ्याम्, **महतो दीर्घस्य**=त्र्यणुकस्यारम्भवदितरदपि तन्मतमसमञ्जसमिति सूत्रार्थः। उक्तदूषणमाक्षिपति **तदेतदिति**। माध्यमिकानामेवेति। तेषां सर्वशून्यत्ववादितया सर्वत्राऽनुपपत्त्यभिधानं युज्यते; मतान्तरे त्वीदृशरीतेः कचिदवलम्बनीयतया नोक्तदूषणाभिधानमुपपद्यत इत्यर्थः। अन्यथा स्वव्याघातः स्यादिति भावः। तदेवोपपादयति **तथा हीति**। ननु सौत्रान्तिकादिमते संयोगानभ्युपगमात् कथमुक्तदोषप्रसङ्ग इत्यत आह **सौत्रान्तिकाद्यैरिति**। **आद्य**-शब्देन वैभाषिकपरिग्रहः। **संयोगानभ्युपगमेऽपीति**। नैरन्तर्यरूपाऽऽवृतत्वातिरिक्तसंयोगानभ्युपगमेऽपीत्यर्थः। **परस्परमित्यादि**। एकस्य परमाणोः परमाण्वन्तरेणाऽऽवृतत्वकमेकदिगवच्छेदेनास्ति, दिगन्तरावच्छेदेन तु तदभाव इत्यङ्गीकरणीयमित्यर्थः। अन्यथा एकस्य परमाणोः परमाण्वन्तरेण

दिगवच्छेदभेदेन स्वीकार्यम्। ज्ञानमात्रवादिनोऽपि ज्ञानस्यैकस्यानेकज्ञेयाकारसम्बन्धे कृत्स्नैकदेश-विकल्पस्तदवस्थ एव। ज्ञेयमिथ्यात्वं तु न तत्परिहारः; मिथ्याभूतेऽपि उल्लेखावश्यम्भावात्। यस्तु प्रत्यक्षाण्येव सूक्ष्मद्रव्याणि निर्भागान्यभ्युपगच्छति, तस्यापि विभूनां निरवयवानां संयोगे तदेव चोद्यं स्थितम्। यस्तु विभुद्रव्यमपि नैच्छत्, तस्यापि सामान्ये स्यात्। तस्याप्यनभ्युपगमे संयोगसमवायादावनेकनिष्ठे स्यात्। न हि द्रव्य एवेदं चोद्यमिति नियमोऽस्ति॥ द्रव्याणामेव भागवत्त्वयोग्यतेति चेत्; तर्हि अणुविभुव्यतिरिक्तद्रव्याणामित्यपि ग्राह्यम्॥ सत्यम्; कथं तर्हि

---

त्वानावृतत्वादिकमिति। अयं परमाणुः पूर्वदिगवच्छेदेन परमाण्वन्तरावृतः; न प्रदेशान्तरेणेति हि वक्तव्यमिति भावः। **ज्ञानमात्रेति**। ज्ञानव्यतिरिक्तमिथ्यात्ववादिनः इत्यर्थः। **कृत्स्नैकदेशविकल्प इति**। ज्ञानस्य विषयेण कार्त्स्न्येन सम्बन्धे विषयान्तरग्रहणं न स्यात; एकदेशेन सम्बन्धे सावयवत्वं स्यादिति दूषणं तदवस्थमेवेत्यर्थः। ननु तन्मते ज्ञानस्य अनेकज्ञेयाकारसम्बन्धे कृत्स्नैकदेशविकल्पो नोपपद्यते; तन्मते ज्ञेयस्य मिथ्यात्वेन ज्ञानस्य ज्ञेयेन समं संयोगस्यैवाभावादित्याशङ्क्य परिहरति **ज्ञेयमिथ्यात्वमिति**। ज्ञेयस्य मिथ्यात्वेऽपि ज्ञानस्य तदुल्लेखित्वाभावे तद्भानाभावप्रसङ्गात्, तदुल्लेखात्मनस्तत्सम्बन्धस्य सत्त्वेन कृत्स्नैकदेशविकल्पप्रवृत्तेर्निवारकाभावात्, ज्ञेयमिथ्यात्वं तत्परिहारो न भवतीत्यर्थः। ननु यस्य मते जालालोकविलोकनीयं सूक्ष्मद्रव्यमेव निर्भागम्; न तदतिरिक्तं जगदारम्भकमणुद्रव्यमस्ति; जगदारम्भकं तु प्रकृत्याद्येवेति—तन्मते नानुपपत्तिः; निर्भागसंयोगस्यानभ्युपगमात्। प्रत्यक्षाणां निर्भागसूक्ष्मद्रव्याणाम् अनारम्भकतया परस्परसंयोगे प्रमाणाभावादित्याशङ्क्य तन्मतेऽपि निर्भागसूक्ष्मद्रव्याणां जगदारम्भाय परस्पर संयोगानावश्यकत्वेऽपि विभुना संयोगोऽवश्यं वाच्यः; अन्यथा सर्वमूर्तद्रव्यसंयोगित्वरूपविभुत्वव्याघात-प्रसङ्गात्। तत्र चोक्तदोषस्यावर्जनीयत्वमित्याह **यस्तु प्रत्यक्षाणी**ति। **सामान्ये स्यादिति**। सामान्यस्य व्यक्तिद्वयसम्बन्धेऽपि कृत्स्नैकदेशविकल्पप्रसङ्गादित्यर्थः। **भागवत्त्वयोग्यते**ति। भागप्रसक्तिमत्स्येव तदा पादनस्योचितत्वादित्यर्थः। **तर्ही**ति। अणूनां विभूनाञ्च भागप्रसक्तिशून्यत्वादित्यर्थः। यदि च प्रसक्तिशून्यत्वं

---

कार्त्स्न्येनाऽऽवरणे पुञ्जदशायामधिकपरिमाणोपलम्भानुपपत्तिरिति भावः। **ज्ञानमात्रे**ति। ज्ञानव्यतिरिक्त मिथ्यात्ववादिनो योगाचारस्येत्यर्थः। **कृत्स्नैकदेशविकल्पस्तदवस्थ इति**। ज्ञानस्यैकेन विषयेण कार्त्स्न्येन संबन्धे ज्ञेयान्तरसंबन्धानुपपत्तिः, एकदेशेन संबन्धे सावयवत्वप्रसङ्ग इति दोषस्तदवस्थ इत्यर्थः। ननु तन्मते ज्ञेयस्य मिथ्यात्वान्नोक्तदोषः; परमार्थतो ज्ञेयसंबन्धस्यैवाभावेनोक्तविकल्पाप्रसक्ते-रित्यत आह **ज्ञेयमिथ्यात्वमिति**। **उल्लेखावश्यम्भावादिति**। विषयस्य मिथ्यात्वेऽपि ज्ञानस्य तद्विषयकत्वावश्यम्भावादित्यर्थः। तथाच तद्विषयकत्व एव कृत्स्नैकदेशविकल्पप्रवृत्तिसंभव इति भावः। ननु यन्मते जालालोकविलोकनीयसूक्ष्मद्रव्याणां निरवयवत्वं प्रकृत्यादीनामेव जगदारम्भकत्वं च स्वीक्रियते, तन्मते सूक्ष्मद्रव्याणां परस्परसंयोगस्यानुपगमान्नोक्तदोषावकाश इत्यत आह **यस्त्वि**ति। **विभूनामित्यादि**। उक्तसूक्ष्मद्रव्याणां विभुसंयोगानुपगमे सर्वमूर्तद्रव्यसंयोगित्वरूपविभुत्वानुपपत्तिप्रसङ्गेन तत्संयोगस्याऽऽवश्यकतया तत्रोक्तविकल्पप्रवृत्तिरित्यर्थः। **सामान्ये स्यादिति**। तस्य व्यक्तिद्वयसंबन्धे उक्तविकल्पप्रवृत्तेरिति भावः। **भागवत्त्वयोग्यतेति चेदि**ति। भागप्रसक्तिमत्स्येव तदापादनस्योचितत्वा-दित्यभिमानः। **तर्ही**ति। भागप्रसक्तिमत्स्येव तदापादनस्योचितत्व इत्यर्थः। **अणुविभुव्यतिरिक्ते**ति।

**भाष्यम्** ॥ **दृश्यमानातिरिक्तकल्पनानिरासाभिप्रायम् । निर्भागतया उपलभ्यमानस्यापि यः सावयवतां कल्पयति, तस्य, 'सर्वं द्रव्यारम्भकमवयवतः संयुज्यैवारभते ; दिगवच्छेदभेदोऽप्यवयवत एव' इति व्याप्तिः स्यात् । ततः पराभिमतप्रतिष्ठितपरमाण्वसिद्धिरिति । प्रत्यक्षागमसिद्धाण्वीश्वरादिषु यथा-**

---

तर्केऽनुगुणम् ; "बाधस्तर्केऽनुगुणः" इति न्यायात्— तर्हि गुणादावपि स्यादित्यत्र तात्पर्यम् । निरासाभिप्रायमेव दर्शयति **निर्भागतये**ति । निर्भागतयोपलभ्यमानस्य त्रसरेणोरित्यर्थः । नन्ववयवभेदाभावेऽपि तत्तद्दिगवच्छेदाद्युपाधिभेदात् संयोगतदभावौ भविष्यतः इत्याशङ्क्याह **दिगवच्छेदभेदोऽपी**ति । **व्याप्तिः स्यादि**ति । नियमः स्यादित्यर्थः । निरवयवानामप्यणुद्रव्याणां विभूनाञ्च संयोगादिदर्शनेन कृत्स्नैकदेशविकल्पस्य तदतिरिक्तविषयतया सङ्कोचकल्पनेऽपि अणुसंयोगस्य प्रमाणाप्रतिपन्नतया अणुव्यतिरिक्तेष्वेवायं नियमः इति सङ्कोचासम्भवात् । इतरथा जन्यत्वेन विनाशित्वापादनस्य ध्वंसेऽसम्भवात् ; अन्यत्रापि तदापादनासम्भवप्रसङ्गादिति भावः । एतदेवाभिप्रेत्योक्तम् **पराभिमतप्रतिष्ठिते**ति ।

---

अणूनां विभूनाञ्च भागवत्त्वप्रसक्तिरहितत्वादिति भावः । भागवत्त्वप्रसक्तिशून्ये भागवत्त्वापत्तेर्न कश्चिदनुपपत्तिः ; प्रत्युत भागवत्त्वापत्तौ भागवत्त्वप्रसक्तिशून्यत्वमनुगुणमेव ; भागवत्त्वाभावनिश्चयोपयोगित्वात् आपाद्यव्यतिरेकनिश्चयस्य आपत्तौ कारणत्वात् । अन्यथा इष्टापत्तिसंभवात् । अत एव हि, बाधस्तर्केऽनुगुण' इति प्रसिद्धिः । इत्थंचाद्रव्येऽप्युक्तचोद्यमस्त्येवेति निगूढोऽभिसन्धिः । **दृश्यमानातिरिक्तकल्पनाभिप्रायमि**ति । प्रत्यक्षविषयातिरिक्तवस्तुकल्पनायामुक्तविकल्पप्रसक्तिरित्यभिप्रायेण **भाष्ये** तदुपन्यास इत्यर्थः । नन्वणुषु विभुषु च स्वतः प्रदेशभेदविरहेऽपि औपाधिकप्रदेशसंभवस्य प्रागेवोपपादिततया एकदेशसंयोगेऽपि स्थितःप्रदेशभेदरूपसावयवत्वाप्रसक्तेरौपाधिकप्रदेशभेदसाधारण्येन प्रदेशभेदसम्पादने औपाधिकप्रदेशभेदमादायेष्टापत्तिसंभवात् कथमणुद्वयसंयोगे उक्तविकल्पोपन्यास इति चेत्—न ; आत्माश्रयमभ्युपगम्यैवाणुद्वयसंयोगे आंशिकत्वोपपादनेन प्रत्यक्षविषयशास्त्रविषययोरेव तथाऽऽत्माश्रयाभ्युपगमसंभवेन कल्पनाविषये तदसंभव इत्यभिप्रायात् । कल्पनायामुक्तदोषप्रसक्तिमेवोपपादयति **निर्भागतये**त्यादि । **उपलभ्यमानस्य**=जालालोकविलोकनीयस्य त्रसरेणोः । **सर्वंद्रव्य मि**त्यादि । द्रव्यारम्भकद्रव्यत्वं यत्रयत्र, तत्रतत्र स्वाश्रयावयवावच्छिन्नसंयोगवत्त्वमिति वा, द्रव्यारम्भकसंयोगत्वं यत्रयत्र, तत्रतत्र स्वाश्रयावच्छिन्नत्वमिति वा व्याप्तिः प्रसज्येतेत्यर्थः । ननु संयोगतदभावयोरेकत्र वृत्त्यनुरोधेनैव हि सावयवत्वमावश्यकमित्युच्यते । दिगवच्छेदभेदेनापि तयोरेकत्र वृत्त्यनुपपत्त्या (वृत्त्यनुपपत्ति परिहारात् ?) न तदावश्यकतेत्यत आह **दिगवच्छेदभेदोऽपी**ति । विभिन्नदिक्संयोगोऽपीत्यर्थः । **अवयवत एवे**ति । अवयवाधीन एवेत्यर्थः । यत्रयत्र विभिन्नदिक्संबन्धवत्त्वम् , तत्रतत्र सावयवत्वमिति व्याप्तिः स्यादिति यावत् । दर्शनानुरोधित्वात् कल्पनाया इति भावः । **पराभिमतप्रतिष्ठितपरमाण्वसिद्धिरि**ति । अवयवधाराविश्रान्तिभूतपरमाण्वसिद्धिरित्यर्थः । ननु प्रत्यक्षसिद्धाणुविभुसंयोगस्य, आगमसिद्धेश्वरे स्थूलचिदचिद्विशिष्टरूपावस्थायाश्च कथमांशिकत्वमित्यत आह **प्रत्यक्षे**ति । **यथाप्रमाणमि**ति । अणौ विभुसंयोगः स्वावच्छेदेनैव वर्तते । आत्माश्रयस्तु प्रमाणबलादङ्गीकार्यः ।

प्रमाणमङ्गीकार्यम् । अत एव, "कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा" इति सूत्रे, "श्रुतेस्तु शब्दमूलत्वात्" इत्यादि च परिहारसूत्रम् ॥ अस्तु तर्हि प्रत्यक्षसिद्धैरेव सूक्ष्मद्रव्यैर्जगदारम्भः ॥ मैवम्; स्वतन्त्रारम्भे शास्त्रविरोधात् । परतन्त्रारम्भाभ्युपगमे च यथागमं प्रकृतेरपि स्वीकार्यत्वात् । भूतचतुष्टयपूर्वभाविनश्च प्रपञ्चस्य तदारम्भणीयत्वविरोधात् । महाभूतचतुष्टयावयवानामाकाशशब्देनाभिधानमिति हास्यम् ।

---

**कृत्स्नप्रसक्तिरिति** ब्रह्मणः कार्त्स्न्येन परिणामे प्रपञ्चातिरेकेण ब्रह्म नावशिष्येत, एकदेशेन परिणामे निरवयवत्वश्रुतिव्याकोपप्रसङ्गः इति "कृत्स्नप्रसक्ति." इति सूत्रेण परिचोद्य, "श्रुतेस्तु शब्दमूलत्वात्" इति **सूत्रकृता** परिहृतमित्यर्थः । निरवयवस्यापि ब्रह्मणः उपादानत्वश्रुतिबलात् तथैवाभ्युपगन्तव्यम्; शब्दैकसमधिगम्यार्थे यथाशब्दं प्रतिपत्तव्यत्वादिति "श्रुतेस्तु" इति सूत्रस्यार्थः । **अस्तु तर्हीति** । प्रत्यक्षातिरिक्तद्रव्यप्रमाणानभ्युपगमे तथैव रीत्या प्रकृतिरपि नाभ्युपगन्तव्या; दृष्टैरेवोपपत्तेरिति भावः । **स्वतन्त्रेति** । अब्रह्मशरीरभूतानामेवारम्भकत्वाभ्युपगमे ब्रह्मणः एवाभिन्ननिमित्तोपादानत्वप्रतिपादकशास्त्रविरोध इत्यर्थः । **यथागममिति** "अव्यक्तं कारणं यत्तत्प्रधानमृषिसत्तमैः । प्रोच्यते प्रकृतिः सूक्ष्मा नित्या सदसदात्मिका", "गौरनाद्यन्तवती सा जनित्री भूतभाविनी" "अव्यक्तं कारणं यत्तन्नित्यं सदसदात्मकम्" इत्यादिभिः प्रकृतेरेव कारणत्वप्रतिपादनादित्यर्थः । **भूतचतुष्टयेति** । आकाशादिलक्षणस्य प्रपञ्चस्य प्रत्यक्षसिद्धभूतचतुष्टयावयवरूपत्र्यणुकारब्धत्वायोगादित्यर्थः । ननु भूतचतुष्टयपूर्वभावी आकाशादिलक्षणः प्रत्यक्षसिद्धाणुव्यतिरिक्त एव नास्ति; येन तदारम्भणीयत्वविरोधः स्यादित्याशङ्कते **महाभूतेति** । **हास्यमिति** । त्रसरेण्वाकाशभेदस्य आबालगोपालप्रत्यक्षसिद्धत्वादित्यर्थः । प्रत्यक्षसिद्धानां तत्तद्भूतावयवानामेव तत्तद्भूतारम्भकत्वे, "आकाशा-

---

एवमीश्वरेऽपि स्थूलचिदचिद्विशिष्टस्य स्वात्मच्छेदनेऽङ्गीकार्यमित्यर्थः । **अत एवेति** । प्रमाणबलादाश्रयणीयत्वादेवेत्यर्थः । **कृत्स्नप्रसक्तिरिति** । स्थूलचिदचिद्विशिष्टरूपपरिणामस्य ब्रह्मणः कार्त्स्न्येन वृत्तौ सूक्ष्मचिदचिद्विशिष्टब्रह्मरूपकारणं नावशिष्येत । एकदेशेन वृत्तौ सावयवत्वप्रसंगात् निरवयवत्वश्रुतिविरोध इति परिचोद्य, "श्रुतेस्तु शब्दमूलत्वात्" इति **सूत्रकारेण** परिहृतमित्यर्थः । निरवयवस्यापि ब्रह्मण उपादानत्वश्रुतिबलात् तथैव वाच्यम्; शब्दैकसमधिगम्येऽर्थे यथाशब्दमेव स्वीकार्यत्वादिति श्रुतेस्त्वित्यादिसूत्रार्थः । **तर्हीति** । प्रत्यक्षागोचरपरमाण्वनभ्युपगम इत्यर्थः । **प्रत्यक्षसिद्धैरेव सूक्ष्मद्रव्यैरिति** । जालालोकनीयैस्त्रसरेणुभिरेवेत्यर्थः; नत्वागमगम्यैः प्रकृत्यादिभिरिति एवकारार्थः । दृष्टैरेवोपपत्त्या लाघवादिति भावः । **स्वतन्त्रारम्भ इति** ब्रह्मापृथक्सिद्धविशेषणतापन्नानां तेषामारम्भकत्वाभ्युपगमे इत्यर्थः । **शास्त्रविरोधादिति** । ब्रह्मण एव जगन्निमित्तोपादानत्वप्रतिपादकशास्त्रविरोधादित्यर्थः । **परतन्त्रारम्भाभ्युपगम इति** । ब्रह्मविशेषणतापन्नानामेवाऽऽरम्भकत्वाभ्युपगम इत्यर्थः । तद्विशिष्टब्रह्मण एवारम्भकत्वाभ्युपगम इति यावत् । **यथागममिति** । 'अव्यक्तं कारणं यत् तत् प्रधानमृषिसत्तम । प्रोच्यते प्रकृतिः सूक्ष्मा नित्या सदसदात्मिका ।", "गौरनाद्यन्तवती सा जनित्री भूतभाविनी", 'अव्यक्तं कारणं यत्तन्नित्यं सदसदात्मकम्' इत्यादिभिः प्रकृतेरेव कारणत्वप्रतिपादनादित्यर्थः । **भूतचतुष्टयपूर्वभाविन इति** । प्रमाणबलेन तथैव स्वीकार्यत्वादिति भावः । **तदारम्भणीयत्वविरोधादिति** । न हि

भूतानामन्योन्योपादानोपादेयत्वविशिष्टसृष्टिक्रमप्रक्रियाविरोधश्च ॥ भूतचतुष्टयातिरिक्तं नास्तीति चेन्न; आगमविरोधात्। तथा त्रसरेणूनामेव गन्धादिरहितावस्था अस्त्विति स्वीकारे तद्वद्-विभागापत्तिः स्वीकार्येति सैव मूलप्रकृतिरिति सिद्धम्॥ सा च समत्रैगुण्या मूलप्रकृतिः। तस्यामपि मात्रया भेदमवलम्ब्य अव्यक्ताक्षरविभक्ताविभक्ततमोरूपावस्थाचतुष्टयमामनन्ति।

---

द्वायुः। वायोरग्निः" इत्यादिश्रुतिव्याकोपश्चेत्याह **भूतानामिति**। ननु पृथिव्यादीनि चत्वार्येव भूतानि; नाधिकानि; ततश्च न तत्पूर्वभाविन तदारम्भकत्वविरोध इत्यत आह **भूतचतुष्टयेति**। **आगमविरोधादिति**। "खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी" इत्याद्यागमविरोधादित्यर्थः। **गन्धादिरहितावस्थास्त्विति**। "शब्दस्पर्शविहीनं तत्" इत्यागमगम्या अवस्था त्रसरेणूनामेवास्त्विति स्वीकारे इति भावः। **अविभागापत्तिरिति**। एकत्वावस्थापत्तिरित्यर्थः॥

**समत्रैगुण्येति**। त्रय एव गुणाः त्रैगुण्यम्। चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्। सत्त्वरजस्तमांसीत्यर्थः। ननु सत्त्वरजस्तमसां साम्यावस्थाश्रयस्य मूलप्रकृतित्वे अव्यक्ताक्षरत्वाद्यवस्थाश्रयाणां प्रकृतिभिन्नत्वात् महदादिप्रपञ्चस्य प्रकृत्यव्यक्ताक्षरादिकारणत्ववादिप्रमाणानां परस्परविरोधप्रसङ्ग इत्यत आह **तस्यामपीति**। अव्यक्ताक्षरादीनां न मूलप्रकृतितो भिन्नत्वम्; किंतु तस्या एवानतिभिन्ना अव्यक्ताक्षरविभक्ताविभक्ततमोरूपाश्चतस्रोऽवस्थाः। समत्रैगुण्यत्वरूपप्रकृतित्वादस्यायां विद्यमानायामेवाक्षरत्वाद्यवस्थाः, "अव्यक्तमक्षरे लीयते। अक्षरं तमसि लीयते। तमः परे देव एकीभवति" इति शास्त्रसमधिगता मात्रया भिन्नाः सन्ति; अतो नानुपपत्तिरिति भावः। **अवस्थाचतुष्टयमिति**। गुणत्रयवैषम्यस्यानन्तरपूर्वावस्थागुणसाम्यमेव हि अव्यक्तता; यस्यामवस्थायां गुणसाम्यमप्यस्फुटम्, तदवस्थस्य चेतनसमष्टिगर्भत्वमक्षरशब्देनोच्यते; (अनन्तरपूर्वावस्था गुणसाम्यम्। गुणसाम्यलक्षणमव्यक्तमेवाक्षरे लीयत इति यस्यामव

---

तदुत्तरभाविनस्तदारम्भकत्वसंभव इत्यर्थः। ननु त्रसरेणूनामेवाऽऽकाशशब्देनाभिधानात् तदतिरिक्ताकाशाभावान्नोक्तदोष इत्याशंकां निरस्यति **महाभूतेति**। **द्वारमिति**. त्रसरेण्वाकाशभेदस्याऽऽपामरं प्रसिद्धेरिति भाव। तत्तद्भूतावयवानामेव तत्तद्भूतारम्भकत्वे, "आकाशाद्वायुः, वायोरग्निः" इत्यादिश्रुतिविरोधश्चेत्याह **भूतानामिति**। ननु, 'शब्दस्पर्शविहीनम्' इत्याद्यागमस्य त्रसरेणूनामेवावस्थाविशेषप्रतिपादकतयोपपत्तौ न प्रकृत्यादिकं स्वीकार्यमित्याशंक्याह **तथेति**। **अविभागापत्तिरिति**। एकत्वावस्थावैशिष्ट्यमित्यर्थः।

त्रिगुणद्रव्यं चतुर्विंशतिविधम्—मूलप्रकृतिर्महान् अहंकारः शब्दतन्मात्रमाकाशः स्पर्शतन्मात्रं वायुः रूपतन्मात्रं तेजो रसतन्मात्रं जलं गन्धतन्मात्रं पृथिवी एकादशेन्द्रियाणि चेत्यभिप्रायेण मूलप्रकृतेर्लक्षणमाह **समत्रैगुण्येति**। त्रय एव गुणाः **त्रैगुण्यम्**। चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्। गुणत्रयमित्यर्थः। **साम्यञ्चोद्भवराहित्यम्**। तथाचोद्भवरहितगुणत्रयवत्त्वं मूलप्रकृतिलक्षणं फलितम्। सात्त्विकमहदहंकारयोः रजस्तमोद्भवस्य, राजसयोस्तयोः सत्त्वतमोद्भवस्य तामसयोस्तयोः सत्त्वरजोद्भवस्य च उद्भवराहित्येऽपि नातिप्रसंगः; उद्भवरहितगुणत्रयवत्त्वविरहात्। मूलप्रकृतेश्चातुर्विध्यमाह **तस्यामपीति**। मूलप्रकृतावपीत्यर्थः। **मात्रया भेदमवलम्ब्येति**। सर्वत्र समत्रैगुण्यत्वे सत्यपि अल्पावस्थाभेद-

उक्तञ्च न्यायसुदर्शने वरदनारायणभट्टारकैः—"द्विविधाः स्मृतिकाराः—केचिदव्यक्तकारणवादिनः, केचित् तमःकारणवादिनः। अव्यक्तस्यैव सूक्ष्मावस्था भेदोऽक्षरं तमश्च; नातीव भेदः इत्यव्यक्ते पर्यवस्यता[1]मभिप्रायः। तमपि भेदमुररीकृत्य तमसि पर्यवस्यताम्। तस्मादुभयेषामविरोधः" इति। यत्तु भाष्यादिषु अव्यक्तसहपठिताक्षरशब्दस्य चेतनविषयतया बहुशः उपादानम्, तत्

---

स्थायां गुणसाम्यमप्यस्फुटं तदवस्थं चेतनसमष्टिगर्भमक्षरशब्देनोच्यते) न तु चेतनमात्रम्। तस्याव्यक्तप्रकृतित्व-तमोविकृतित्वायोगात्। अतः सर्वं तत्त्वजातं चिदचिदात्मकं मन्तव्यम्। "प्रधानादिविशेषान्तं चेतनाचेतनात्मकम्" इति पराशरवचनात्। अत्र तु चिद्गर्भे वस्तुनि अक्षरशब्द उपचरितः। प्रयोगेऽन्यथासिद्धे शक्त्यन्तरकल्पनायोगात्। "अक्षरं तमसि लीयते" इति चिद्गर्भत्वमपि यत्र विवेक्तुमशक्यम्; तदवस्थमतिसूक्ष्मं प्रधानं तमःशब्देनाभिलप्यम्। अक्षराद्यवस्थाप्राप्त्यौन्मुख्यविशिष्टं तदेव विभक्तं तमः। तदौन्मुख्यरहितमविभक्तं तमः परमात्मशरीरतयाऽपि चिन्तयितुमशक्यं सलिलविलीनलवण-चन्द्रकान्तस्थसलिल-सूर्यकान्तस्थवह्निकल्पं एवं परमात्मैकवेद्यमवतिष्ठते। 'कुसूलनिहितबीजस्थानीयमविभक्तं तमः; मृन्निस्सृतबीजस्थानीयं विभक्तं तमः; सलिल संसृष्टार्द्रशिथिलावयवबीजतुल्यमक्षरम्; उच्छूनबीजसमानमव्यक्तम्। अङ्कुरस्थानीयो महान्— इति विवेकः' इति श्रुतप्रकाशिकाचार्यैः सुबालोपनिषद्व्याख्याने प्रदर्शितमवस्थाचतुष्टयमत्रानुसन्धेयम्।

अव्यक्ते पर्यवस्यतामिति। अव्यक्तस्यैव कारणपरम्पराविश्रान्तिभूमित्वमभिदधतामिति भावः। तमपि भेदमिति। सूक्ष्मेक्षिकया तमपि भेदमुद्वीक्ष्य नाव्यक्तमात्रे पर्यवसानमुचितमिति मत्वा तमोवस्थामेव प्रकृतिमामनन्तीत्यर्थः। पर्यवस्यतामिति। अभिप्रायः इत्यनुषज्यते। बहुश उपादानमिति। "अक्षर-

---

माश्रित्येत्यर्थः। अयं भावः— अंकुरस्थानीयो महान्; बीजस्थानीया मूलप्रकृतिः; तत्रापि भूतलनिहितबीजस्थानीयमविभक्ततमः; मृन्निस्सृतबीजवत् विभक्तं तमः; सलिलसंसृष्टार्द्रशिथिलावयवबीजतुल्यमक्षरम्; उच्छूनबीजसमानमव्यक्तमिति। अनुगृहीतश्चायमर्थः सुबालोपनिषद्व्याख्यमाने व्यासार्यैः। अत्रेदं बोध्यम्— 'तमःपरे देवे एकीभवति' इति श्रुतिबोधिता शक्तिविशेषविशिष्टसंयोगात्मिका शक्तिविशेषात्मिकैव वा सलिलनिलीनलवणन्यायेन पृथग्व्यपदेशानर्हत्वलक्षणातिसूक्ष्मदशापत्तिरूपा एकीभावावस्था अविभक्ततमस्त्वावस्था; अक्षरत्वावस्थाहेतुभूतशक्तिविशेषात्मिका विभक्ततमस्त्वावस्था; अव्यक्तत्वावस्थाहेतुभूतशक्तिविशेषात्मिका अक्षरत्वावस्था; महत्त्वावस्थाहेतुभूतशक्तिविशेषात्मिका अव्यक्तावस्थेति।

अव्यक्ते पर्यवस्यतामिति। अव्यक्तस्यैव कारणपरम्पराविश्रान्तिस्थानत्वमभिदधतामित्यर्थः। एवं तमसि पर्यवस्यतामित्यत्राप्यर्थोऽवसेयः। पर्यवस्यतामिति। अभिप्राय इत्यनुषज्यते। सूक्ष्मेक्षिकया तादृशभेदोऽप्यादरणीय एवेत्यभिप्राय इति तदर्थः। ननु च "अव्यक्तमक्षरे लीयते, तमः परे देव एकीभवति" इति सुबालश्रुतिर्हि मूलप्रकृतिगतावस्थाचतुष्टये प्रमाणमिति वक्तव्यम्। तच्च नोपपद्यते; "अक्षरमम्बरान्तधृतेः" इत्यधिकरण भाष्ये तादृशाक्षरशब्दस्य जीवपरतया व्याख्यानादित्याशंकया समाधत्ते

---

1 पर्यवस्यताम्=निष्ठां भजताम्।

परव्याख्यानप्रकारमनुरुध्य वा, स्वरूपतो निर्विकारे जीवे मुख्यत्ववचनात् चिद्रूपविकारवत्त्वेऽपि यथा अक्षरशब्दप्रवृत्तिः, तथा परब्रह्मेतरविषयस्याक्षरशब्दस्याचिदवस्थाविशेषेऽपि शक्तिकल्पनोपपद्यते इति प्रतिपादयितुं वा, क्वचित् क्षरे प्रकृतिविशेषे अक्षरशब्दप्रयोगस्य मुख्यत्वायोगात् परब्रह्मरूपाक्षरसम्बन्धेन लक्षणायां प्रयोजनाभावात्, जीवसम्बन्धेनाजहल्लक्षणायां लयविशेषादिप्रतिपादनौचित्यात्, "उभावेतौ लीयेते परमात्मनि" इत्यादिना द्वयोरपि लयाभिधानाच्च अत्र अजहल्लक्षणैव युक्तेत्यभिप्रायेण चेति न कश्चिद्विरोध इति ॥

(महदाख्यद्रव्यनिरूपणम्)

अव्यक्ताहङ्कारावस्थाऽव्यवहितोत्तरपूर्वावस्थाविशिष्टं त्रिगुणं महान् ।

मम्बरान्तधृतेः" इत्याद्यधिकरणभाष्येषु, "प्रत्यगात्मन्यक्षरशब्दप्रयोगदर्शनात्" इत्यादिभाषणादिति भावः। परव्याख्यानुसारस्य मन्दप्रयोजनत्वादाह **स्वरूपतो निर्विकारे इति ।** चिद्रूपविकारवत्त्वोपपादकम् **मुख्यत्ववचनादि**त्येतत्। जीवेऽक्षरशब्दप्रयोगदर्शनस्य विकारेऽप्यक्षरशब्दप्रयोगसम्भावनामात्रप्रदर्शनपरत्वानतिप्रयोजनत्वादाह **क्वचित्क्षरे इति । प्रयोजनाभावादि**ति। गङ्गायां घोष इत्यादौ गङ्गाशब्देन तीरलक्षणायां घोषपावनत्वसिद्ध्या सप्रयोजनत्वदर्शनात् तत्र लक्षणाया युक्तत्वेऽपि निष्प्रयोजनलक्षणाप्रयोगस्य, "स्वायत्ते शब्दप्रयोगे" इति न्यायपराहतत्वादिति भावः। "अक्षरं तमसि लीयते" इति वाक्यस्याजहत्स्वार्थलक्षणया चेतनाचेतनलयप्रतिपादनपरत्वेन सप्रयोजनत्वमुपबृंहणानुसारीति दर्शयति **उभावेतावि**ति ।

**अव्यक्ताहङ्कारे**ति । अव्यक्ताहङ्कारमध्यमावस्थाविशिष्टमित्यर्थः । यद्वा अव्यक्ताव्यवहितोत्तरा

यद्वित्यादिना । **परव्याख्यानप्रकारमनुरुध्ये**ति । तथाच न तत्र तात्पर्यमिति भावः । परव्याख्यानानुसारस्य मन्दप्रयोजनत्वादाह **स्वरूपतोनिर्विकार** इत्यादि । जीवे धर्मभूतज्ञानगतसङ्कोचविकासरूपविकारस्य परम्परया सत्त्वेऽपि साक्षात्संबन्धावच्छिन्नविकारत्वावच्छिन्नप्रतियोगिताकाभाववाचकाक्षरशब्दस्य यथा प्रवृत्तिः, तथा गुणवैषम्यनिबन्धनविकाराभावपरतया अचिदवस्थाविशेषेऽपि अक्षरशब्दस्य शक्तिरुपपद्यत इति दृष्टान्तार्थं जीवपरत्वप्रतिपादनमित्यर्थः । नन्वक्षरशब्दस्य विकारसामान्याभावबोधकत्वमेव स्यात ; न तु विकारविशेषाभावबोधकत्वम्—नञोऽन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकाभावबोधकत्वव्युत्पत्तेः । न हि नीलघटवति श्वेतघटाभावपरतया अघट इति व्यवहार उपपद्यत इत्यतः कल्पान्तरमाह **क्वचिदि**ति । **मुख्यत्वायोगादि**ति । विकारसामान्याभावस्य बाधादिति भावः । **प्रयोजनाभावादि**ति । ब्रह्मरूपाक्षरसंबन्धविशिष्टे लक्षणायां विशेषणे लयान्वयरूपप्रयोजनासंभवादिति भावः । **लयविशेषादिप्रतिपादनौचित्यादि**ति । "अक्षरं तमसि लीयते" इत्यत्र जीवरूपाक्षरसंबन्धविशिष्टे लक्षणायां विशेषणेऽपि लयान्वयसंभवादिति भावः । उक्तप्रयोजनस्योपबृंहणानुसारित्वं दर्शयति **उभावेतावित्यादि**ना । **अजहल्लक्षणैवे**ति । शक्यार्थे पदार्थान्तरान्वयप्रयोजनलक्षणैवेत्यर्थः ॥

महतो लक्षणमाह **अव्यक्तेति** । अव्यक्तत्वाव्यवहितोत्तरावस्थावत्त्रिगुणत्वं, अहङ्कारत्वाव्यवहितपूर्वावस्थावत्त्रिगुणत्वञ्च महतो लक्षणमित्यर्थः । तदव्यवहितोत्तरत्वं तद्ध्वंसाधिकरणसमयध्वंसानधिकरणत्वे सति तद्ध्वंसाधिकरणं यः समयः तदुत्पत्तिकत्वम् । अहङ्कारादिवारणाय सत्यन्तम् । अक्षरादिवारणाय

तच्छब्दवाच्यत्वमेव वा तल्लक्षणम् ।

---

दस्थत्वम्, अहङ्काराव्यवहितपूर्वावस्थाविशिष्टत्वमिति तल्लक्षणद्वयपरमिति द्रष्टव्यम् । न च त्रिगुणवदेव नित्यविभूतेरपि चतुर्विंशतितत्त्वात्मकत्वस्य वक्ष्यमाणत्वादप्राकृते महत्यव्याप्तिरिति वाच्यम्; मतान्तरानुसारेणास्य लक्षणस्योक्तत्वात् । तच्छब्देति । यथा मन्त्रः इत्यभियुक्तैर्व्यवह्रियमाणत्वं मन्त्र-

---

विशेष्यम् । यद्यप्यव्यक्तत्वध्वंससाधिकरणसमयध्वंसानधिकरणत्वं न महत्त्वोत्पत्तिक्षणस्य संभवति, अतीतकल्पान्तरीयाव्यक्तत्वध्वंसाधिकरणसमयध्वंसाधिकरणत्वात् । यत्किंचिदव्यक्तत्वध्वंसाधिकरणसमयध्वंसानधिकरणत्वस्य सत्यन्तार्थत्वे तु भविष्यत्कल्पीयाव्यक्तत्वमादायाहङ्कारादिष्वतिव्याप्तिः; एतत्कल्पीयाव्यक्तत्वमादाय विशेष्यसत्त्वात्—तथापि अव्यक्तत्वविशिष्टसमयोत्पत्तिकत्वमेवाव्यक्तत्वाव्यवहितोत्तरत्वमिति विवक्षणान्न दोषः । अव्यक्तत्ववैशिष्ट्यञ्च स्वध्वंसाधिकरणसमयध्वंसाधिकरणत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्व-स्वध्वंसाधिकरणत्वोभयसंबन्धेन । अहङ्काराव्यवहितपूर्वत्वञ्च तत्प्रागभावाधिकरणसमयप्रागभावानधिकरणत्वे सति तत्प्रागभावाधिकरणं यः समयः तदुत्पत्तिकत्वम् । अव्यक्तादिवारणाय सत्यन्तम् । अहङ्कारादिवारणाय विशेष्यम् । स्वप्रागभावाधिकरणसमयप्रागभावाधिकरणत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्व-स्वप्रागभावाधिकरणत्वोभयसंबन्धेनाहङ्कारत्वविशिष्टसमयोत्पत्तिकत्वं तदिति तु निष्कर्षः । तेन महत्त्वोत्पत्तिक्षणस्य भविष्यत्कल्पीयाहङ्कारत्वप्रागभावाधिकरणसमयप्रागभावाधिकरणत्वेऽपि, अव्यक्तत्वाधिकरणक्षणस्यातीतकल्पीयाहङ्कारत्वमादाय किञ्चिदहङ्कारत्वप्रागभावाधिकरणसमयप्रागभावानधिकरणत्वेऽपि च नासंभवातिव्याप्ती । तात्कालिकक्षणत्वाद्यवस्थामादाय कालादावतिव्याप्तिवारणाय त्रिगुणेति । अत्र त्रिगुणद्रव्यस्य स्वतो निरंशत्वपक्षे आंशिकानेकशक्त्यात्मकाव्यक्तत्वावस्थासु कतिपयशक्तिनाशात्मिका आंशिकानेकशक्तिरूपाः महत्त्वावस्थाः, तासु कतिपयशक्तिनाशरूपा 'आंशिकानेकशक्त्यात्मिका अहङ्कारत्वावस्था जायन्ते । स्वतस्सांशत्वपक्षे तु अव्यक्तत्वाश्रयानन्तांशमध्ये कतिपयांशेष्वेव अव्यक्तत्वनाशरूपा महत्त्वावस्थाः महत्त्वाश्रयकतिपयांशेषु तन्नाशरूपा अहङ्कारत्वावस्था जायन्ते । अवस्थानामपि प्रत्यंशं भेद एव । अन्यथा कतिपयांशेषु तन्नाशः, कतिपयांशेषु तत्स्थितिरित्यनुपपत्तेः । इत्थंच महत्त्वोत्पत्तिक्षणस्याप्यव्यक्तत्वावस्थाविशिष्टेऽतिव्याप्तिवारणायोत्पत्तिनिवेशः ।

यत्तु अव्यक्तत्वावस्थानाशरूपत्वे सति अहङ्कारत्वावस्थाप्रागभावरूपत्वं महत्त्वावस्थालक्षणम् । अव्यक्तत्वावस्थानाशत्वस्याहङ्कारत्वतन्मात्रत्वादिसाधारणत्वात् तद्वारणाय विशेष्यम् । तावन्मात्रस्याव्यक्तत्वाक्षरत्वादिसाधारण्यात् तद्वारणाय सत्यन्तमिति—तन्न; अव्यक्तत्वादेरप्यतीतकल्पीयाव्यक्तत्वनाशरूपतयाऽतिव्याप्तेः । स्वनाशप्रतियोगिकत्वस्वप्रतियोगिकत्वोभयसंबन्धेनाव्यक्तत्वविशिष्टनाशत्वस्य सत्यन्तार्थत्वे तु विशेष्यदलवैयर्थ्यम् । अहङ्कारत्वतन्मात्रत्वादेरव्यक्तत्वनाशात्मकमहत्त्वनाशरूपतयाऽतिव्याप्तिविरहात् । तथाच उक्तोभयसंबन्धेनाव्यक्तत्वविशिष्टनाशवत्त्वमपि महतो लक्षणं बोद्धव्यम् । एवं स्वप्रागभावाप्रतियोगिकत्वस्वप्रतियोगिकत्वोभयसंबन्धेनाहंकारत्वविशिष्टप्रागभाववत्त्वमपि तथा । अव्यक्तत्वादे-

रहङ्कारत्वप्रागभावरूपमहत्त्वप्रागभावात्मकतया अहङ्कारत्वादीनां तत्प्रागभावानात्मकतया च नातिव्याप्तिः।

यदप्यव्यक्तत्वावस्थाध्वंसत्वावच्छिन्नविषयताकसङ्कल्पजन्यावस्थात्वं तल्लक्षणम्। अव्यक्तत्वावस्थाश्रयेष्वनन्तांशेषु मध्ये केषुचिदंशेष्वव्यक्तत्वावस्थाध्वंसरूपमहत्त्वावस्थोत्पद्यतामिति सङ्कल्पेन तादृशावस्थोत्पत्तेर्लक्षणसङ्गतिः। अत्र सङ्कल्पनिष्ठजनकता विषयतासंबन्धावच्छिन्ना ग्राह्या। तेन तादृशसङ्कल्पगतोत्तरावस्थायां नातिव्याप्तिरिति–तदपि न समञ्जसम्; इह महत्त्वावस्थोत्पद्यतामिति सङ्कल्पस्यैव तत्र हेतुत्वसंभवेन उक्तसङ्कल्पे महत्त्वावस्थाया अव्यक्तत्वावस्थाध्वंसत्वेनापि तद्विषयत्वे प्रमाणाभावात्। अन्यथा प्रमेयत्वाभिधेयत्वाद्रव्यत्वादिनापि तद्विषयत्व प्रसङ्गात्, इष्टापत्तौ तुल्ययुक्त्या अहङ्कारत्वावस्थाविषयकसङ्कल्पेऽपि तादृशावस्थायास्तद्गतसर्वधर्मप्रकारेण भानापत्त्या अव्यक्तत्वावस्थाध्वंसत्वेनापि भानमावश्यकमिति तत्रातिव्याप्ति॥ महत्त्वावस्थाया अव्यक्तत्वावस्थाविरोधित्वसंपत्तये तद्ध्वंसत्वेन तद्भानमावश्यकमिति चेत्–प्रमेयत्वादिसंपत्तये तेनापि तद्भानमावश्यकं स्यात्॥ महत्त्वावस्था प्रमेया भवत्वित्यादिसंकल्पात् तत्र प्रमेयत्वादिसंपत्तिरिति चेत्–तुल्यन्यायेन सा अव्यक्तत्वध्वंसरूपा भवत्विति संकल्पात् तद्ध्वंसत्वसंपत्त्या तज्जनकसंकल्पे तेन रूपेण तद्भानमप्रामाणिकमेवेति।

यदप्यव्यक्तत्वावस्थान्यूनवृत्तित्वे सति अहङ्कारत्वावस्थाव्यापकप्रकृतिविभाजकोपाधिमत्त्वं वा तल्लक्षणम्। अव्यक्तत्वाक्षरत्वादिवारणाय सत्यन्तम्। अहङ्कारत्वादिवारणाय विशेष्यम्। व्यापकत्वञ्च तत्समानाधिकरणभेदप्रतियोगितानवच्छेदकत्वे सति तदभाववद्वृत्तित्वम्। तेनाहङ्कारत्वादेस्तद्व्यापकत्वेऽपि न तद्दोषतादवस्थ्यम्। प्रकृतिविभाजकोपाधित्वनिवेशात् अव्यक्तत्वन्यूनवृत्त्यहङ्कारत्वव्यापकान्यतमत्वादौ नातिव्याप्तिरिति—तदपि न समञ्जसम्; महत्त्वे अहङ्कारत्वसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वासंभवात्। अहङ्कारत्वाश्रयेष्वंशेषु तद्दशायां महद्भेदसत्त्वात्। भेदस्य देशिकाव्याप्यवृत्तित्वमङ्गीकुर्वद्भिरपि तान्त्रिकैः पाकरक्तघटे अयमिदानीं ननील इत्यादि प्रतीत्यनुरोधेन कालिकाव्याप्यवृत्तित्वस्वीकारात्। यदि च—तस्य कालिकाव्याप्यवृत्तित्वमपि न संभवत्येवेत्यभिप्रायः; अथवा अहङ्कारत्वसमानाधिकरणभेदप्रतियोगिव्यधिकरणात्यन्ताभावप्रतियोगित्वमेव लक्षणघटकमिति न कश्चिद्दोषः–इत्युच्यते— तदा निरङ्कुशस्वातन्त्र्यभगवत्सङ्कल्पबलेन कल्पान्तरीयाऽहङ्कारत्वस्यैतत्कल्पीयाऽहङ्कारत्वाधिकदेशवृत्तित्वसंभवात् तत्रातिव्याप्तिः; नहि–एतत्कल्पे येषु त्रिगुणद्रव्यांशेष्वहङ्कारत्वावस्था, तेष्वेवांशेषु कल्पान्तरेऽपि सा जायेत न कतिपयाधिकांशेष्वपीति नियमे प्रमाणमस्ति। न चाहङ्कारत्वसमानकालिकत्वमपि लक्षणेति निवेश्यम्। कल्पान्तरीयाहङ्कारत्वस्य चाऽतथात्वान्नातिव्याप्तिरिति वाच्यम्—तथासत्यऽहङ्कारत्वाश्रयांशेषु विनष्टायां महत्त्वावस्थायां अव्याप्त्यापत्तेः, अहङ्कारत्वस्यैव तन्नाशरूपतया तस्यास्तत्समानकालिकत्वासंभवात्। यदि चाऽहङ्कारत्वाव्यवहितपूर्ववृत्तित्वमेव लक्षणघटकतया विवक्षितमित्युच्यते; तदा इतरांशवैयर्थ्यम्; अहङ्कारत्वाव्यवहितपूर्ववृत्तित्रिगुणविभाजकधर्मवत्त्वस्यैव सम्यक्त्वात्। महङ्कारत्व व्यवहितपूर्ववृत्तित्रिगुणत्वं च महतो लक्षणम् मूलोक्तमिति दिक्॥ तच्छब्दवाच्यत्वमेवेति। महच्छब्दवाच्यत्वमेवेत्यर्थः। पूर्वोक्त-

एवमहङ्कारादिष्वपि भाव्यम् ॥ अध्यवसायरूपवृत्तिः महानिति साङ्ख्याः । यथाहुः "अध्यवसायो बुद्धिः" इति । तदसत् ; अध्यवसायस्याऽऽत्मधर्मत्वात् । यदि पर[2] तन्निमित्तत्वमात्रं महतः ; तावतैव बुद्ध्यध्यवसायादिप्रयोगविषयत्वम् । न च तन्निमित्तत्वमात्रं लक्षणम् ; अतिव्याप्तेः । अवान्तरविषयस्याप्यनवधारणात् । अवधारयतां तु तदपि लक्षणम् । एवं धर्माधर्मादिकारणतादिकमपि लक्षणं निरसनीयम् ॥

---

लक्षणम् इति मीमांसकैरुक्तम् ; तद्वदिति भावः । आत्मधर्मत्वादिति । तथाचासम्भव इति भावः । ननु अध्यवसायनिमित्तत्वमेव महतो लक्षणम् ; न च अध्यवसायनिमित्तत्वमात्रे अभ्युपगम्यमाने बुद्धिशब्दिते महति, "अध्यवसायो बुद्धिः" इत्यध्यवसायपदप्रयोगः कथमिति शङ्क्यम् ; 'आयुर्घृतम्' इतिवत् उपपत्तेः ; तथैव वाचस्पतिना व्याख्यातत्वाच्च । अतो नासम्भव इत्याशङ्कते यदि परमिति । तन्निमित्तत्वमात्रमिति । अस्यानन्तरं लक्षणमिति शेषः । किमिदं निमित्तत्वसामान्यं लक्षणम् । तद्विशेषो वेति विकल्प्य, आद्यं दूषयति तन्निमित्तत्वमात्रमिति । अतिव्याप्तेरिति । कालादृष्टादाविति शेषः । द्वितीयं दूषयति अवान्तरेति । निरसनीयमिति । 'धर्माधर्मादिगतस्वधर्मत्वात्

---

लक्षणस्य यत् लक्ष्यतावच्छेदकत्वेनाभिमतं तदेव लक्षणमस्त्विति मत्येवकाराभिप्रायः। अस्य लक्षणस्य लक्ष्यतावच्छेदकस्य पूर्वोक्तलक्षणमेवेति बोद्धव्यम् । लक्षणलक्ष्यतावच्छेदकयोरैक्येऽपि बाधकाभावात् तदभिप्राय एव एवकारः। न च लक्षणलक्ष्यतावच्छेदकयोरैक्ये लक्षणेनेतरभेदानुमाने हेतुसाध्ययोः सामानाधिकरण्यघटितव्याप्तिनिर्णयदशायां पक्षतावच्छेदकसाध्ययोस्सामानाधिकरण्यनिश्चयात् सिद्धसाधनमिति वाच्यम् ; सिद्धान्ते लक्षणेनेतरभेदसाधनस्यानभ्युपगमात् ; पक्षतावच्छेदकधर्मितावच्छेदककसाध्यनिश्चयविरहेण सिद्धसाधनाप्रसक्तेश्च । एवमहङ्कारादिष्वपीति । अहङ्कारादीनामप्यहङ्कारादिशब्दवाच्यत्वं लक्षणं बोद्धव्यमित्यर्थः । अध्यवसायरूपवृत्तिर्महानिति । अध्यवसायत्वं महतो लक्षणमित्यर्थः । आत्मधर्मत्वादिति । तथाचासंभव इति भावः। नन्वध्यवसायनिमित्तत्वमेव महतो लक्षणं विवक्षितमिति नासंभवावकाश इत्याशङ्कते यदिपरमिति । तावतैवेति । आयुर्घृतमितिवदिति भावः । दूषयति न चेति । तन्निमित्तत्वमात्रमिति । लक्षणमिति शेषः । लक्षणमित्यपि क्वचित् पाठः । अतिव्याप्तेरिति । कालादृष्टादाविति भावः । नन्वध्यवसायनिष्ठकार्यतानिरूपितकारणत्वं अध्यवसायत्वावच्छिन्नकार्यतानिरूपितकारणत्वमेव वा लक्षणं विवक्षितमिति नोक्तदोषः ; कालादृष्टादीनां कार्यसामान्यं प्रत्येव कारणतया तदीयकार्यतायाः कार्यत्वावच्छिन्नत्वादित्यत आह अवान्तरविशेषस्याप्यनवधारणादिति । महत्तत्त्वमात्रासाधारणस्य कारणताविशेषस्यासिद्धेरित्यर्थः। उक्तासाधारणकारणत्वस्य शरीरतया परिणतचतुर्विंशतितत्त्वसाधारणतयाऽतिव्याप्तिः स्यादिति भावः । महत्तत्त्वमात्रस्याध्यवसायं प्रति विशेषकारणत्वस्य प्रामाणिकत्वे तदपि लक्षणमस्त्वित्याह अवधारयतामिति । निरसनीयमिति ।

---

2 यदिपरमिति प्राचीनन्यायरत्नमालादिग्रन्थसिद्धं-समुचितमव्ययम्-तदर्थस्तु-'यदि निर्वहणीयम्, तर्हि' इति। प्रायः परंत्वित्येतत्तुल्यम्। व्याख्ययोर्गतिः, लक्षणमित्यध्याहारः कुतः, कुत्रेति च विमृश्यम्।

**स त्रिधा—सात्त्विको राजसस्तामसश्चेति । तत्र तत्तद्गुणोन्मेषवशात् अंशभेदात् तत्तद्व्यपदेशः॥**

**(अहङ्कारद्रव्यनिरूपणम्)**

**इन्द्रियाव्यवहितपूर्वावस्थाविशिष्टं त्रिगुणमहङ्कारः । अत्रापि पूर्ववत्, "अभिमानोऽहङ्कारः" इति साङ्ख्यलक्षणं दूषणीयम् । स च अनात्मनि देहे अहम्भावकरणहेतुत्वमात्रात् अहङ्कारशब्दवाच्यः; न त्वहमर्थत्वात् । प्रतीच आत्मन एव तत्त्वात् । न चैवं त्याज्यत्ववचनविरोधः; अहङ्कारस्य उत्कृष्ट-**

---

र्वस्य मतत्वमात्रस्यातिप्रसक्तत्वात्' इत्यादिना दूषणीयमिति भावः नन्‌ सात्त्विकादिविभागो महत्यनुपपन्नः, गुणत्रयसम्पर्कस्य सर्वत्र सत्त्वादित्याशङ्क्य ह तत्तद्गुणेति । "वैशेष्य तु तद्वादस्तद्वादः", "त्र्यात्मकत्वात्तु भूयस्त्वात्" इत्यादिमूलोक्तन्यायेन सत्त्वगुणप्रचुरांशभेदे सात्त्विकत्वव्यवहारः रजःप्रचुरांशे राजसत्व व्यवहारः इत्यादि द्रष्टव्यम् ॥

पूर्ववदिति । 'आत्मधर्मत्वान्निमित्तत्वमात्रस्यातिप्रसक्तत्वात्' इति पूर्वोक्तेन दूषणीयमिति भावः । स चेति । अव्यक्तपरिणामाहङ्कारः इत्यर्थः । **अहम्भावेति** । अहम्बुद्धीत्यर्थः । उक्तञ्च भाष्ये, "स तु अनात्मनि देहे अहम्भावकरणहेतुत्वेन अहङ्कार इत्युच्यते । अस्याहङ्कारशब्दस्य, अभूततद्भावे च्विप्रत्ययमुत्पाद्य व्युत्पत्तिर्द्रष्टव्या ।" इति । **प्रतीच आत्मन इति** । प्रत्यगात्मनः इत्यर्थः । **नचैवमिति** । अव्यक्तपरिणामस्या-

---

धर्माधर्मादिकारणत्वम् तु कालादृष्टादावतिव्याप्तम्; धर्माधर्मासाधारणकारणत्वमपि चतुर्विंशतितत्त्व साधारणमिति रीत्या दूषणीयमित्यर्थः । **तत्तद्गुणोन्मेषवशादिति** । तत्तद्गुणगतोद्भूतत्वशक्तिविशेषवशादित्यर्थः । **अंशभेदात् तत्तद्व्यपदेश इति** । उद्भूतसत्त्वगुणविशिष्टांशे सात्त्विकत्वव्यपदेशः उद्भूतरजोगुणविशिष्टांशे राजसत्वव्यपदेशः, उद्भूततमोगुणविशिष्टांशे तामसत्वव्यपदेश इत्यर्थः ॥

**इन्द्रियाव्यवहितेति** । इन्द्रियत्वावस्थाऽव्यवहितपूर्वावस्थाविशिष्टत्वे सति रजोगुणवत्त्वं तमोगुणवत्त्वं वाऽहङ्कारलक्षणमित्यर्थः । अव्यक्तादिवारणाय सत्यन्तम्, कालादिवारणाय विशेष्यम् । यत्तु महत्त्वावस्थानाशरूपत्वे सति तन्मात्रत्वावस्थाप्राक्कालीनत्वमहङ्कारत्वस्य लक्षणमिति, तन्न; महत्त्वाव्यक्तत्वाद्यवस्थाया अपि प्रागभावरूपीयमहत्त्वावस्थानाशरूपतयाऽतिव्याप्तेः । स्वनाशप्रतियोगिकत्व-स्वप्रतियोगिकत्वोभयसंबन्धेन महत्त्वावस्थाविशिष्टनाशत्वविवक्षायां तु शेषवैयर्थ्यम् । एवं महत्त्वावस्थानाशत्वावच्छिन्नविषयताकसङ्कल्पप्रयोज्यावस्थात्वम् महत्त्वावस्थान्यूनवृत्तित्वे सति तन्मात्रत्वावस्थाव्यापकप्रकृतिविभाजकोपाधिमत्त्वं वा तल्लक्षणमित्यपि पूर्वोक्तदिशा दूषणीयम् । **पूर्ववदित्यादि** । आत्मधर्माभिमानत्वस्य त्रिगुणद्रव्यावान्तरभेदरूपाहङ्कारलक्षणत्वे असंभवः; तादृशाभिमानहेतुत्वस्य तथात्वे कालादृष्टादावतिव्याप्तिरिति रीत्या साङ्ख्योक्तहङ्कारलक्षणं दूषणीयमित्यर्थः । ननु अहमर्थत्वमेवाहंकारलक्षणमास्ताम्; तस्याहमर्थत्वाभावे अहङ्कारशब्दवाच्यत्वासंभवादहमर्थत्वमावश्यकमिति नासंभव इत्यत आह **स चेति** । त्रिगुणद्रव्यावान्तरभेदरूपाहङ्कारस्त्वित्यर्थः अहंभावः= अहंबुद्धिः । अत्र भाष्यम्, "स त्वनात्मनि देहे अहंभावकरणहेतुत्वेनाहङ्कार इत्युच्यते । अस्याहङ्कारशब्दस्य अभूततद्भावे च्विप्रत्ययमुत्पाद्य व्युत्पत्तिर्द्रष्टव्या" इति । **प्रतीच इति** । स्वस्मैभासमानस्वरूपप्रत्यक्त्वाश्रयस्येत्यर्थः। तत्त्वात् अहमर्थत्वात् ।

जनावमानहेतोर्गर्वापरपर्यायस्याभिमानस्य तथोक्तेः ; सोऽपि पूर्ववत् त्रिविधः । तत्र सात्त्विकात् इन्द्रियाणि । तामसात् शब्दतन्मात्रम् । राजसः उभयानुग्राहकः । राजसतामसयोरपीन्द्रियाव्यवहितपूर्वभावित्वमात्रं सिद्धमिति नाव्याप्तिः । त्रयाणां प्रत्येकलक्षणमपि यथास्वं कार्यकारणप्रकाराः । यत्तूक्तं भोजराजेन—

"स्यात् त्रिविधोऽहङ्कारो जीवनसंरम्भगर्वरूपोऽयम् । सम्भेदादस्य सतो विषयो व्यवहार्यता मेति ॥ सात्त्विकराजसतामसभेदात् सञ्जायते पुनस्त्रेधा । स च तैजसवैकारिकभूतादिकनाम भिः समुच्छ्रितिति ॥ तैजसतस्तत्र मनो वैकारिकतो भवन्ति चाक्षाणि । भूतादेस्तन्मात्राण्येषां सर्गोऽयमेतस्मात् ॥" इति ।

---

हङ्कारस्य त्यक्तुमशक्यत्वात्, "अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् । विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥" इति त्याज्यत्ववचनविरोधो यः; स न प्रसज्यते इत्यर्थः । अभिमानस्य तथोक्तेरिति । अहङ्कारशब्दस्य च्विप्रत्ययान्ताहंशब्दात् कृञो भावसाधनघञन्ततया व्युत्पन्नस्य उत्कृष्टदेहविषयाहम्बुद्धिलक्षणगर्वापरपर्यायाभिमानवाचित्वम्, करणसाधनघञन्तस्याव्यक्तपरिणामाहङ्कारवाचित्वम्, "अथातोऽहङ्कारादेशः" इत्यादौ तु अच्विप्रत्ययान्तादुत्पन्नतया तस्याहङ्कारशब्दस्याहमर्थे ऽवात्मन्यहम्बुद्धिपरत्वमिति विवेको द्रष्टव्यः । पूर्वभावित्वमात्रं सिद्धमिति इन्द्रियोपादानत्वाभावेऽपीति शेषः । यथास्वमिति । इन्द्रियकारणत्वं तन्मात्रकारणत्वम् उभयानुग्रहकारणत्वमित्येवंरूपाः प्रकाराः इत्यर्थः । सम्भेदादस्य सत इति एवं त्रिरूपेण

---

ननु त्रिगुणद्रव्यविशेषस्यैव हंकाररूपत्वे, "अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् । विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते" इति तस्य त्याज्यत्ववचनविरोधः, तस्य त्यक्तुमशक्यत्वादित्याशङ्क्य निरस्यति नचेति । एवम् त्रिगुणद्रव्यविशेषस्याहङ्कारशब्दवाच्यत्वे । तथोक्तेरिति त्याज्यत्वोक्तेरित्यर्थः । अहङ्कारशब्दस्य नानार्थत्वात् त्याज्यत्वाभिधानानुरोधेन तत्रत्याहङ्कारशब्दस्य गर्वार्थकत्वमेवेति भावः । अयमत्र विवेकः—अहंकारशब्दस्य च्विप्रत्ययान्ताहंशब्दात् भावघञन्ततया व्युत्पन्नस्य उत्कृष्टदेहविषयाहंबुद्धिलक्षणगर्वापरपर्यायाभिमानवाचित्वं, करणघञन्ततया व्युत्पन्नस्याव्यक्तपरिणामाहङ्कारवाचित्वम्, अच्व्यन्तात् भावघञन्ततया व्युत्पन्नस्य त्वहमर्थ एवात्मन्यहंबुद्धिपरत्वम्, "अथातोऽहंकारादेशः" इत्यादाविति सोऽपि=अहङ्कारोऽपि । पूर्ववदिति । सात्त्विकराजसतामसभेदेनेत्यर्थः । इन्द्रियाव्यवहितपूर्वभावित्वमात्रं सिद्धमिति । इन्द्रियोपादानत्वाभावेऽपीति आदिः । यथास्वं कार्यकारणप्रकारा इति । तत्तत्कार्यकारणत्वरूपाः प्रकारा इत्यर्थः । सात्त्विकाहङ्कारस्येन्द्रियकारणत्वं तामसाहङ्कारस्य शब्दतन्मात्रकारणत्वं राजसाहङ्कारस्योभयानुग्रहकारणत्वं लक्षणमिति यावत् । अनुग्रहश्च तत्तदुपादाननिष्ठस्तत्तत्कार्यानुकूलः शक्तिविशेषः । तथाचाहङ्कारत्वावस्थाऽव्यवहितोत्तरक्षणे सात्त्विकाहङ्कारे तामसाहङ्कारे च राजसाहङ्कारात् तत्तत्कार्यानुकूलशक्तिविशेषोत्पत्तिः, ततस्तत्कार्योत्पत्तिरिति बोद्धव्यम् । इत्थञ्चेन्द्रियाव्यवहितपूर्वत्वे तत्प्रागभावाधिकरणसमयप्रागभावाधिकरणसमयप्रागभावानधिकरणत्वमेव घटकमित्यङ्गीकार्यमिति दिक् । संभेदादस्य सतः इति । एवं-

तत्र विरुद्धांशो बाह्यशैवागममूलत्वेनानादरणीयः । एवं भगवत्पराशराद्युक्तप्रमाणतमपुराणाद्यानुगुण्येन पुराणान्तरादिवचनादीनि निर्वाह्याणि । अत्यन्तविरुद्धानि तु अनादेयानि ॥

(इन्द्रियद्रव्यनिरूपणम्)

प्राणाद्यन्यत्वे सति हृत्कर्णचक्षुरादिशरीरप्रदेशविशेषावच्छिन्नव्यापारतया तत्तत्कार्यविशेषशक्तमिन्द्रियम् । "अशरीरं प्राणधार्यमेव यद् द्रव्यं पुरुषोपकारकं तत् इन्द्रियम्" इति वरदविष्णुमिश्रैरुक्तम् । "सात्त्विकाहङ्कारोपादानकमिन्द्रियम्" इति 1 ...ङ्कारादिलक्षणमप्राकृतेन्द्रियाव्याप्ते-

---

वर्तमानस्यैवाहङ्कारस्य पर परभेदात्(?) 2 विषयव्यवहारः प्रवर्तते इत्यर्थः । विरुद्धांश इति । जीवनादित्रिविधविभागः, "तैजसतस्तत्र मनः" इत्यादिना इतरेषामिन्द्रियाणां मनसश्च भिन्नोपादानत्वकथनम्, पञ्चानामपि तन्मात्राणां भूताद्युपादानत्वम् इति विरुद्धांशोऽनादरणीयः इत्यर्थः। उक्तञ्च वेदार्थसङ्ग्रहे, "वैकारिकाहङ्कारात् एकादशेन्द्रियाणि जायन्ते इति वैदिकाः । यथोक्तं भगवता पराशरेण, 'तैजसानीन्द्रियाण्याहुर्देवा वैकारिका दश । एकादशं मनश्चात्र देवा वैकारिकाः स्मृताः ॥' इति । अयमर्थः — वैकारिकस्तैजसो भूतादिरिति त्रिविधोऽहङ्कारः । स च क्रमात् सात्त्विको राजसस्तामसश्च । तत्र तामसात् भूतादेराकाशादीनि भूतानि जायन्ते" इति सृष्टिमुक्त्वा, "तैजसाद्राजसाहङ्कारादेकादशेन्द्रियाणि जायन्ते" इति परमतमुपन्यस्य, सात्त्विकाहङ्काराद्वैकारिकादिन्द्रियाणि जायन्ते इति स्वमतमुच्यते, 'देवा वैकारिकाः स्मृताः' इति । देवा इन्द्रियाणि" इति । प्रमाणतमेति । पुलस्त्यवसिष्ठवरदानलब्धपरदेवतापारमार्थ्यज्ञानवत्प्रणीतत्व नष्टकोशत्व शङ्कानास्पदत्व-प्राच्योदीच्यादिसर्वमहाजनपरिगृहीतत्वादयः श्रीविष्णुपुराणप्राबल्यहेतवः श्रुतप्रकाशिकायां विस्तरेणानुसन्धेयाः ॥

प्राणाद्यन्यत्वे सतीति । आदिपदेन व्यानादिकं गृह्यते । हृत्प्रदेशावच्छिन्नव्यापारं सत् स्मृत्यादि-

---

रूपेण... वर्त... अहंकारस्य परस्परभेदात्?(?) विषयव्यवहारः प्रवर्तत इत्यर्थः। विरुद्धांश इति । जीवनादित्रिविधविभागः मनसस्तैजसशब्दितराजसाहङ्कारोपादानकत्वं पञ्चानामपि तन्मात्राणां भूताद्युपादानकत्वमित्येवंरूप इत्यर्थः प्रमाणतमेति। पुलस्त्यवसिष्ठवरप्रदानलब्धपरदेवतापारमार्थ्यज्ञानवत्प्रणीतत्व नष्टकोशत्व-शङ्कानास्पदत्व-प्राच्योदीच्यादिसर्वमहाजनपरिगृहीतत्वादयः श्रीविष्णुपुराणे प्राबल्यहेतवः श्रुतप्रकाशिकायां विस्तरेणानुसन्धेयाः ।

इन्द्रियलक्षणमाह प्राणाद्यन्यत्वे सतीति। आदिना व्यानादिपरिग्रहः । हृत्कर्णेत्यादि । हृत्प्रदेशावच्छिन्नव्यापारं सत् स्मृत्यादिकार्यजनकं मनः । तथाऽन्यदपि द्रष्टव्यम् । तथा च प्राणाद्यन्यत्वे सति स्मृत्यादिकार्यजनकशरीरप्रदेशविशेषावच्छिन्नव्यापारवत्त्वमिन्द्रियलक्षणं फलितम् । प्राणादिवारणाय सत्यन्तम् ; घटादिवारणाय विशेष्यम् ; चाक्षुषादिजनकचक्षुस्संयोगादिमद्घटादिवारणायावच्छिन्नान्तं व्यापारविशेषणम् । अशरीरमित्यादि । शरीरान्यत्वे सति पुरुषप्रयोजनप्रयोजकीभूतप्राणाधीनस्थिति-

---

1 एवं स्थिते पूर्वं महदहंकारयोरुपादानघटितलक्षणकथनं स्वयमप्राकृतयोर्महदहंकारयोः अनंगीकारादिति ध्येयम्। 2 विषयहानोपादानादिव्यवहारे अहंकारतत्त्वमपि हेतुरिति संभेदः = संसर्ग एव स्यात्।

रयुक्तम्- "शरीरसंयोगे सत्येव साक्षात्प्रमितिसाधनमप्रत्यक्षम्, साक्षात्कारसाधनम्" (तार्किकरक्षा) इत्यादि वैशेषिकाद्युक्तं तु कर्मेन्द्रियाव्याप्त्यादेरनुपपन्नम्। वक्ष्यते च वागादीनामिन्द्रियत्वम्॥

(प्राकृताप्राकृतविभागः)

द्विधेन्द्रियं प्राकृतमप्राकृतमिति। शुद्धाशुद्धसत्त्वयोगादेस्तद्भेदः। अव्यक्तमहदहङ्कारेष्वपि प्राकृता-

---

कार्यविशेषजनकं मनः। तथाऽन्यदपि द्रष्टव्यम्। प्राणवायोरप्येव शरीराख्यद्रव्यस्य पुरुषोपकारकत्वात्, तद्व्यावृत्त्यर्थं अशरीरमित्युक्तम्। शरीरेति शरीरसंयोगे सत्येव साक्षात्कारप्रमाहेतुत्वमात्मनोऽप्यस्तीति तद्व्यावृत्त्यर्थम् अप्रत्यक्षमित्युक्तम्। साक्षात्कारप्रमासाधनत्वे सति अप्रत्यक्षत्वमिन्द्रियसन्निकर्षेऽप्यस्तीत्यतः उक्तं शरीरसंयोगे सत्येवेति। साक्षात्कारसाधनम् इति लक्षणान्तरम्। तच्च तत्करणत्वम्, तत्तु नान्येषामिति द्रष्टव्यम्। आदिपदेन शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगा-

---

मद्द्रव्यत्वमिन्द्रियलक्षणमित्यर्थः। शरीरवारणाय सत्यन्तम्; घटादिवारणाय विशेष्यम्; प्राणगत-क्रियादिवारणाय द्रव्यत्वनिवेशः। अन्ये तु शब्दाश्रयान्यत्वे सति आत्मप्रयत्नजन्यव्यापारवत्त्वरूपा-त्मोपकरणत्वमिन्द्रियसामान्यलक्षणम्। शरीरप्राणयोरतिप्रसक्तिवारणाय सत्यन्तम्; महदहंकारवारणाय विशेष्यमित्याहुः। वैशेषिकादिलक्षणमनूद्य दूषयति शरीरसंयोगे सत्येवेति। शरीरसंयोगप्रयुक्त-साक्षात्कारोपधायकत्वे सति अप्रत्यक्षत्वमेकमिन्द्रियलक्षणम्। साक्षात्कारकरणत्वमपरम्। तत्र प्रथमे गगनादिवारणाय सत्यन्तम्। इन्द्रियसन्निकर्षवारणाय प्रयुक्तान्तमुपधायकत्वविशेषणम्। आत्मवारणाय विशेष्यम्। द्वितीये करणत्वं व्यापारवत्कारणत्वरूपम्। तज्जन्यत्वे सति तज्जन्यजनकत्वं व्यापारत्वम्। तथा च साक्षात्कारजनकजनकत्वे सति साक्षात्कारजनकत्वमिन्द्रियलक्षणमिति फलितम्। तत्रेन्द्रियसन्निकर्षवारणाय सत्यन्तम्। इन्द्रियावयववारणाय विशेष्यम्। यद्यप्येवं सति आत्मन्यतिव्याप्तिः; साक्षात्कारजनकीभूतात्ममनस्संयोगजनकत्वस्य साक्षात्कारजनकत्वस्य च तत्र सत्त्वात्—तथापि साक्षात्कारत्वव्याप्यधर्मावच्छिन्नजन्यतानिरूपितजनकताया एव विशेष्यरूपतया न दोषः। आत्मनो ज्ञानत्वावच्छिन्नं प्रत्येव कारणत्वात्। न च तथापि इन्द्रियसन्निकर्षेऽतिव्याप्तिर्दुर्वारा; सविकल्पकसाक्षात्कारजनकीभूतनिर्विकल्पकजनकत्वस्य तत्र सत्त्वादिति वाच्यम्; सत्यन्तेऽपि साक्षात्कारत्वव्याप्यधर्मावच्छिन्नजन्यताया एव निवेशनीयत्वात्; निर्विकल्पात्मकविशेषणज्ञानजन्यतायां विशिष्टज्ञानत्वेनैवावच्छेदादिति दिक्। आदिपदेन शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनस्संयोगाश्रयत्वमित्यादिलक्षणं विवक्षितम्। कर्मेन्द्रियाव्याप्त्यादेरिति। आदिना द्वितीयलक्षणस्य घटाद्यतिव्याप्तिपरिग्रहः। तथाहि घटं चक्षुषे घटस्य विषयविधया हेतुत्वमस्ति। तत्र जन्यतायास्तद्व्यक्तित्वेनैवावच्छेदात् साक्षात्कारत्वव्याप्यधर्मावच्छिन्नत्वमप्यक्षतम्। चाक्षुषजनकघटचक्षुस्संयोगजनकत्वञ्च घटेऽस्तीत्यतिव्याप्तिरिति। ननु कर्मेन्द्रियमिति किञ्चिन्नास्त्येवेत्यत आह वक्ष्यत इति।

शुद्धाशुद्धेति। रजस्सामानाधिकरण्यं तमस्सामानाधिकरण्यं वा अशुद्धत्वम्। तद्राहित्यं च शुद्धत्वम्। तथा च शुद्धसत्त्ववदिन्द्रियत्वाशुद्धसत्त्ववदिन्द्रियत्वाभ्यां विभाग इति भावः। योगादेरिति। आदिना

प्राकृतविभागोऽस्तीति केचिदाचार्याः। शब्दतन्मात्रसहभवत्वसात्त्विकाहङ्कारोपादानद्रव्यत्वादि प्राकृतेन्द्रियलक्षणम्। पुनश्चेन्द्रियं द्विविधम्—ज्ञानेन्द्रियं कर्मेन्द्रियमिति। ज्ञानप्रसरणशक्तमिन्द्रियं ज्ञानेन्द्रियम्। तत् षोढा—मनःश्रोत्रादिभेदात्। उक्तश्चैवंविभागस्तत्त्वरत्नाकरे भट्टपराशरपादैः— "तच्च षोढा" इत्युपक्रम्य, "आन्तरं मनः" इत्यन्तेन।

मनःपूर्वकत्वात् सर्वप्रवृत्तीनां मनः कर्मेन्द्रियमिति साङ्ख्यादयः। यथाऽऽहुः—

"बुद्धीन्द्रियाणि चक्षुश्श्रोत्रघ्राणरसनात्वगाख्यानि।

वाक्पाणिपादपायूपस्थं कर्मेन्द्रियं द्या(याण्या)हुः॥ उभयात्मकमत्र मनः" (कारि. 26) इति।

तदसत्; तस्य च ज्ञानद्वारैव कर्महेतुत्वात्। तावता च तथात्वे चक्षुरादावपि प्रसङ्गात्। क्वचित् कर्मेन्द्रियत्वव्यवहारस्तु औपचारिकः। मानसवाचिककायिककर्मविभागस्तु कर्मशब्दस्य शुभा-

---

श्रयत्वमित्यादिलक्षणानि विवक्षितानि। **केचिदाचार्या इति।** नित्यविभूतिरपि चतुर्विंशतितत्त्वात्मिकेति ये वदन्ति, ते आचार्या इत्यर्थः। **शब्दतन्मात्रसहभवत्वेति।** यथा भूतादिनाम्नस्तामसाहङ्कारात् शब्दतन्मात्रमुत्पद्यते, तथा इन्द्रियाणि सात्त्विकाद्वैकारिकादुत्पद्यन्ते इति तत्सहभूतत्वं द्रष्टव्यम्। **यथाऽऽहुरिति।** **साङ्ख्यसप्ततौ** इति शेषः। ननु मनसः कर्मेन्द्रियत्वाभावे मानसं कर्म, वाचिकं कर्म, इत्यादिव्यवहारः कथमित्याशङ्क्याह **मानसवाचिककायिकेति।** **प्राकृतविभागमिति।** प्राकृतमनःप्रभृति

---

रजोगुणवत्त्व-तद्राहित्ययोस्तमोगुणवत्त्व-तद्राहित्ययोश्च परिग्रहः। **शब्दतन्मात्रसहभवत्वेत्यादि।** शब्दतन्मात्रभिन्नत्वे सति तदुत्पत्तिक्षणोत्पत्तिकत्वमेकं प्राकृतेन्द्रियलक्षणम्। यदा भूतादिनाम्नस्तामसाहंकाराच्छब्दतन्मात्रोत्पत्तिः, तदैव वैकारिकनाम्नस्सात्त्विकाहंकारादिन्द्रियाणि जायन्त इति लक्षणसंगतिः। शब्दतन्मात्रवारणाय सत्यन्तम्; घटादिवारणाय विशेष्यम्। सात्त्विकाहंकारोपादानकत्वे सति द्रव्यत्वमपरं प्राकृतेन्द्रियलक्षणम्। घटादिवारणाय विशेष्यम्। आदिना रजोगुणवदिन्द्रियत्व-तमोगुणवदिन्द्रियत्वयोः परिग्रहः। तद्रहितेन्द्रियत्वं चाप्राकृतेन्द्रियलक्षणं बोध्यम्। **ज्ञानप्रसरणेति।** ज्ञानविकास-हेतुत्वे सति इन्द्रियत्वं ज्ञानेन्द्रियलक्षणम्। कर्मेन्द्रियवारणाय सत्यन्तम्। इन्द्रियसन्निकर्षवारणाय विशेष्यम्। **तदिति।** ज्ञानेन्द्रियमित्यर्थः। **श्रोत्रादीत्यादिना** त्वक्चक्षूरसनाघ्राणपरिग्रहः। उक्त-विभागस्य सांप्रदायिकत्वं दर्शयति **उक्तश्चेति।** **यथाहुरिति।** **सांख्यसप्ततावि**ति शेषः। **ज्ञान द्वारैवेति।** ज्ञानाद्वारकोच्चारणाद्यन्यतमक्रियाहेत्विन्द्रियत्वमेव कर्मेन्द्रियत्वमिति भावः। ननु क्रिया हेत्विन्द्रियत्वमेव कर्मेन्द्रियत्वमस्तु; तत्र ज्ञानाद्वारकत्वप्रवेशे गौरवात्। तथाच मनसोऽपि कर्मेन्द्रियत्व-मक्षतम्—अत आह **तावता चेति।** ज्ञानद्वारकक्रियाहेतुत्वेनापीत्यर्थः। कर्मेन्द्रियत्वशरीरे ज्ञाना-द्वारकत्वानिवेशेनेति यावत्। **तथात्वे** मनसोऽपि **कर्मेन्द्रियत्वे।** **प्रसङ्गात्** कर्मेन्द्रियत्वप्रसङ्गात्। चक्षुरादीनामपि ज्ञानद्वारा क्रियाहेतुत्वाक्षतेरिति भावः। ननु याज्ञवल्क्यस्मृतौ, "हस्तौ पायुरुपस्थं च जिह्वा पादौ च पंच वै। कर्मेन्द्रियाणि जानीयान्मनश्चैवोभयात्मकम्" इति मनसि कर्मेन्द्रियत्वव्यवहारः कथमित्यत्राऽऽह **क्वचिदिति।** प्रमाणग्रन्थ इति शेषः। **औपचारिक इति।** अन्यथा प्रागुक्तदोष-प्रसङ्गादिति भावः। ननु मनसः कर्मेन्द्रियत्वाभावे मानसं कर्मेति व्यवहारः कथमित्यत आह **मानसेति।**

शुभसङ्कल्पादिरूपज्ञानेऽपि प्रयोगात्। अतः षडपि ज्ञानेन्द्रियाणि। तत्र प्राकृतविभागं प्रत्युच्यते॥ अशुद्धसत्त्वे सति पञ्चविषयसाधारणेन्द्रियत्वम्, स्मृतिकरणेन्द्रियत्वम् इत्यादि प्राकृतमनोलक्षणम्। तच्च हृत्प्रदेशमात्राधिष्ठानम्। इन्द्रियान्तराणामपि हृत्प्रदेश एव कन्दस्थानम्। स्थानान्तरेष्वपि यथासम्भवं वृत्तिः। आत्मनोऽपि तत्रैव भूयसा वृत्तिः। तथा च भाष्यम्, "सर्वेन्द्रियकन्दभूते स्थानविशेषे वृत्तिरिति चक्षुषि नावस्थानम्" इति। मन एकमेव अन्तःकरणम्। सङ्कल्पाध्यवसायादयस्तद्व्यापारभेदादेव जायन्ते इति नान्तःकरणवैविध्यम्। तथा च भाष्यम्, "अध्यवसायाभिमानचिन्तावृत्तिभेदात् मन एव बुद्ध्यहङ्कारचित्तशब्दैर्व्यपदिश्यते" इति। उदाहृतञ्चैतत् प्राणे सूत्रकारैः, 'पञ्चवृत्तिर्मनोवद् व्यपदिश्यते' इति। अतः, 'अन्तःकरणं त्रिविधम्' इत्यादिवादिनः

---

विशेषं प्रति लक्षणमुच्यते इत्यर्थः। **तथा च भाष्यमिति**। "अवस्थितेरसम्भवाच्च नेतर." इति सूत्रे इति शेषः। **तथा च भाष्यम्—अध्यवसायेति**। "हस्तादयस्तु स्थितेऽतो नैवम्" इति सूत्रे इति शेषः। **उदाहृतञ्चैतदिति**। एकस्मिन्नेवान्तःकरणे अध्यवसायादिवृत्तिवैविध्यं भवतीत्येतदित्यर्थः। "पञ्चवृत्तिर्मनोवद् व्यपदिश्यते।" यथा कामादिवृत्तिभेदेऽपि न कामादिकं मनसस्तत्त्वान्तरम्; "कामः सङ्कल्पो विचिकित्सा श्रद्धा अश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव" इति वचनात्। एवम्—"प्राणोऽपानो व्यान उदानः समानः इत्येतत् सर्वं प्राण एव" इति वचनादपानादयोऽपि प्राणस्यैव वृत्तिविशेषाः, न तत्त्वान्तरमित्यवगम्यते इति सूत्रार्थः। **त्रिविधमिति**। मनोबुद्ध्यहङ्कारभेदेन त्रिविधमिति वादिन इत्यर्थः॥

---

**प्रयोगादिति**। तत्रत्यकर्मशब्दस्य कृतिसाध्यपरत्वादिति भावः।

**तत्रेति**। प्राकृताप्राकृतमध्य इत्यर्थः। **प्राकृतेत्यादि**। प्राकृतमनःप्रभृतिविशेषाणां लक्षणमुच्यत इत्यर्थः। **अशुद्धसत्त्वेसतीति**। रजोगुणवत्त्वे सतीति तमोगुणवत्त्वे सतीति वा अर्थः; न तु रजस्तमस्समानाधिकरणसत्त्ववत्त्वे सतीति। अधिकांशवैयर्थ्यात्। **पञ्चविषयसाधारणेन्द्रियत्वमिति**। शब्दस्पर्शरूपरसगन्धसाक्षात्कारपञ्चकसाधनेन्द्रियत्वमित्यर्थः। अत्र शब्दसाक्षात्कारस्पर्शसाक्षात्करोभयसाधनेन्द्रियत्वं शब्दसाक्षात्काररूपसाक्षात्कारोभयसाधनेन्द्रियत्वमित्यादिकमेव लक्षणमुचितम्। तत्र त्वगिन्द्रियवारणाय शब्दसाक्षात्कारस्य, श्रोत्रवारणाय स्पर्शसाक्षात्कारस्य, आत्मादिवारणायेन्द्रियत्वस्य च निवेशः। **स्मृतिकरणेन्द्रियत्वमिति**। स्मृतिजनकेन्द्रियत्वमित्यर्थः, श्रोत्रादिवारणाय स्मृतिजनकत्वस्य, आत्मादिवारणायेन्द्रियत्वस्य च निवेशः। **आदिना** हृत्प्रदेशमात्रवृत्तिरिन्द्रियत्वसङ्ग्रहः। **तथाच भाष्यमिति**। "हस्तादयस्तु स्थितेऽतो नैवम्" इति सूत्र इति शेषः। **उदाहृतमिति**। दृष्टान्ततयोपन्यस्तमित्यर्थः। **एतदिति**। एकस्मिन्नेवान्तःकरणे अध्यवसायादिवृत्तिवैविध्यं भवतीत्येतदित्यर्थः। "पञ्चवृत्तिर्मनोवद्व्यपदिश्यते," यथा कामादिवृत्तिभेदेऽपि न कामादिकं मनसस्तत्त्वान्तरम्; "कामस्सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव" इति वचनात् एवं "प्राणो व्यानोऽपान उदानस्समान इत्येतत् सर्वं प्राणएव" इति वचनादपानादयोऽपि प्राणस्यैव वृत्तिविशेषाः, न तत्त्वान्तरमित्यवगम्यत इति सूत्रार्थः। **त्रिविधमिति**। मनोबुद्ध्यहङ्कारभेदादिति भावः। **त्रिविधमित्यादीति**। **आदिना** चित्तमनोभेदेन चातुर्विध्यपरिग्रहः॥

साङ्ख्यादयो निरस्ताः ॥

शब्दादिपञ्चके शब्दमात्रग्रहणशक्तमिन्द्रियं प्राकृतश्रोत्रम्। तन्मनुष्यादीनां कर्णशष्कुल्यवच्छिन्नवृत्ति। द्विजिह्वानां नयनवृत्ति। तदुक्तं न्यायतत्त्वे करणपादाष्टमाधिकरणे, "चक्षुषा श्रवणं सर्पाणामेवेति नियम्यते" इत्यादि। यत्तूक्तं तत्त्वरत्नाकरे, "कर्णशष्कुलीशरीरनयनगोलकरसनानासिकाधिष्ठानानि च तानि" इति; तत् प्रायिकं मन्तव्यम्। एतस्य नाभसत्व दिगुपादानत्व(त्वादि?)वादानामनन्यथासिद्धा-

शब्दादिपञ्चके इति। शब्दत्वकत्वादेरपि श्रोत्रेण ग्रहणादसम्भवव्यावृत्त्यर्थं शब्दादिपञ्चके इत्युक्तम्। मनसि अतिव्याप्तिवारणाय मात्रपदम्। एवमुत्तरत्रापि द्रष्टव्यम्। आलोकशब्दाद्यारम्भकत्वमिति। आलोकशब्दितप्रभायाः नयनधर्मत्वाभिधानात् नयनस्य तेजस्त्वं फलितम्। तथा आकाशधर्मभूतशब्दस्य श्रोत्रधर्मत्वाभिधानात् श्रोत्रस्याऽऽकाशत्वं फलितमिति भाव नन्नु मोक्षधर्मे, "शब्दः श्रोत्रं तथा (?)खादि त्रयमाकाशसम्भवम्। वायोः स्पर्शस्तथा चेष्टा त्वक् चैव त्रितयं स्मृतम्। रूपं चक्षुस्तथा व्यक्तिः त्रितयं तेज उच्यते। रसः क्लेदश्च जिह्वा च त्रयो जलगुणाः स्मृताः। घ्राणं घ्रेयं शरीरं च ते तु भूमिगुणाः स्मृताः॥" इत्यादिवचनैः श्रोत्रादीनां नाभसत्वादिप्रतीतेः, "अग्निर्वाग्भूत्वा मुखं प्राविशत्। वायुर्प्राणो भूत्वा नासिके प्राविशत्। आदित्यश्चक्षुर्भूत्वा अक्षिणी प्राविशत्। दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्" इत्यादिश्रुतिबलात् श्रोत्रस्य दिगुपादानत्वप्रतीतेश्च आकाशोपादानत्वं दिगुपादानत्वमेव वा स्वीकर्तव्यमित्याशङ्क्याह एतस्येति। नाभसत्वेति। नभोविकारत्वेत्यर्थः। अनन्यथासिद्धेति। "तैजसानीन्द्रियाण्याहुर्देवा वैकारिकाः स्मृताः। एकादशं मनश्च" इतीन्द्रियाणां तैजसवैकारिकशब्दितराजससात्त्विका-

प्राकृतश्रोत्रलक्षणमाह शब्दादिपञ्चक इति। शब्दादिपञ्चकान्तर्गतशब्देतरविषयकसाक्षात्कारजनकत्वे सति शब्दसाक्षात्कारजनकेन्द्रियत्वं प्राकृतश्रोत्रलक्षणम्। मनोवारणाय सत्यन्तम्। श्रोत्रस्य शब्देतरशब्दत्वकत्वादिसाक्षात्कारजनकतयाऽसंभववारणाय अन्तर्गतान्तं शब्देतरविशेषणम्। श्रोत्रसंयोगवारणायेन्द्रियत्वनिवेशः। स्पर्शसाक्षात्काराजनकत्वे सति शब्दसाक्षात्कारजनकेन्द्रियत्वं रूपसाक्षात्काराजनकत्वे सति शब्दसाक्षात्कारजनकेन्द्रियत्वमित्यादिकं पर्यवसितलक्षणं बोद्धव्यम्। कर्णशष्कुल्यवच्छिन्नवृत्तीति। कर्णशष्कुल्यन्तर्गतशरीरप्रदेशवृत्तीत्यर्थः। चक्षुषा श्रवणमिति। नयनगोळकाधिष्ठानकेन्द्रियेण शब्दसाक्षात्कार इत्यर्थः चक्षुश्श्रोत्रेन्द्रिययोरुभयोरप्येकमेव नयनगोळकमधिष्ठानमित्युक्तं भवति। तत्प्रायिकमिति। तेन द्विजिह्वानां श्रोत्रस्य नयनवृत्तित्वेऽपि न विरोध इति भावः। ननु मोक्षधर्मे, "शब्दःश्रोत्रं तथा(?)खादि त्रयमाकाशसंभवम्। वायोः स्पर्शस्तथाचेष्टा त्वक् चैव त्रितयं स्मृतम्॥ रूपं चक्षुस्तथा व्यक्तिस्त्रितयं तेज उच्यते। रसः क्लेदश्च जिह्वा च त्रयो जलगुणाः स्मृताः॥ घ्राणं घ्रेयं शरीरं च ते तु भूमिगुणाः स्मृताः" इत्यादिवचनैः श्रोत्रादीनां नाभसत्वादिप्रतीतेः, "दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्" इति श्रुतिबलात् श्रोत्रस्य दिगुपादानत्वप्रतीतेश्चाकाशोपादानकत्वं दिगुपादानकत्वमेव वा श्रोत्रस्य स्वीकरणीयमित्याशङ्क्याह एतस्येति। नाभसत्वं नभोविकारत्वम्, अनन्यथासिद्धेति। "तैजसनीन्द्रियाण्याहुः" इतीन्द्रियाणां राजसाहङ्कारकार्यत्वं परमतसिद्धमुपन्यस्य

नामनन्यथासिद्धाहङ्कारिकत्ववचनबलादाप्यायनादिभि(आप्यायितत्वादिभि)र्निर्वाहः। यत्तु करणपादपञ्चमाधिकरणे नेत्रश्रोत्रादिशक्तीनामालोकशब्दाद्यात्मकत्वमुक्तम्, यच्च तथैव सप्तमाधिकरणे, "अन्नस्यातिसूक्ष्मपरिणाममिन्द्रियम्" इत्यादिना, "कर्मेन्द्रियाणामप्यन्नपरिणामत्वात्" इत्यादिना च इन्द्रियाणां भौतिकत्वं प्रतीतम्; तदप्यखिलमाप्यायनाभिप्रायेण निर्वाह्यम्। तथैव हि स्मृतिवचनमपि वेदार्थसङ्ग्रहे निर्व्यूढम्; यथा, "वैकारिकादहङ्कारात् एकादशेन्द्रियाणि जायन्ते इति हि वैदिकाः" इत्युपक्रम्य, "एवमाहङ्कारिकाणामिन्द्रियाणां भूतैराप्यायनं महाभारते उच्यते" इति।

श्रोत्रं भौतिकं न इन्द्रियत्वात्, आकाशः इन्द्रियारम्भकः भूतत्वात्, शब्दः स्वसमानजातीयगुणवतेन्द्रियेण गृह्यते बहिरिन्द्रियव्यवस्थ हेतुगुणत्वात्, श्रोत्रं स्वग्राह्यगुणसजातीयगुणवत् बहिरिन्द्रियत्वात्

---

हङ्कारकार्यत्वरूपपक्षद्वयमुपन्यस्य, "अत्र देवा वैकारिकाः स्मृताः" इति स्वक्षतया वैकारिकशब्दितसात्त्विकाहङ्कारकार्यत्वस्यैव आविष्करणेन अस्य वचनस्यानन्यथासिद्धत्वादिति भावः। आप्यायनादिभिरिति। आप्यायनं=पोषणम्। मोक्षधर्मे भृगुभरद्वाजसंवादे, "आप्याय्यन्ते च ते नित्यं धातवस्तैस्तु पञ्चभिः" इति सुव्यक्तमभिधानादिति द्रष्टव्यम्[1]। आलोकशब्दाद्यात्मकत्वमिति। आलोकशब्दितप्रभायाः नयनधर्मत्वाभिधानात् नयनस्य तेजस्त्वं फलितम्। तथा आकाशधर्मभूतशब्दस्य श्रोत्रधर्मत्वाभि-

---

"देवाः वैकारिकाः स्मृताः" इति देवशब्दप्रतिपाद्येन्द्रियाणां सात्त्विकाहङ्कारकार्यत्वस्य स्वमतसिद्धतयोपन्यासादुक्तवचनस्यानन्यथासिद्धत्वम्। आप्यायितत्वादिभिरिति। आप्यायितत्वम् पोषणम्। तेन सहैकसङ्घाततादि। मोक्षधर्म एव भृगुभरद्वाजसंवादे, 'आप्याय्यन्ते च ते नित्यं धातवस्तैस्तु पञ्चभिः' इति सुव्यक्ताभिधानादिति भावः। नेत्रश्रोत्रादिशक्तीनां=चक्षुश्श्रोत्रादिधर्मिणाम्। आलोकशब्दाद्यात्मकत्वमिति प्रभाशब्दादिस्वरूपत्वमित्यर्थः। तथा च नेत्रस्य तेजोरूपत्वं श्रोत्रस्याकाशरूपत्वं चोक्तं भवति। अन्यथा प्रभाशब्दधर्मकत्वानुपपत्तेः। श्रोत्रेन्द्रियस्य भौतिकत्वम् [illegible] वैशेषि[illegible]कानुमानान्याह श्रोत्रमित्यादि। भौतिकं भूतत्ववत्। न ह्येन्द्रियत्वात् मनोभिन्नेन्द्रियत्वात्। मनसि व्यभिचारवारणाय मनोभिन्नत्वनिवेशः। आत्मादौ व्यभिचारवारणायेन्द्रियत्वनिवेशः। चक्षुरादिकं दृष्टान्तः। आकाश इन्द्रियारम्भक इति। ननु किं नामेन्द्रियारम्भकत्वम्? न तावदिन्द्रियसमवायिकारणत्वम्; वैशेषिकादिभिः श्रोत्रेन्द्रियस्याकाशरूपत्वाभ्युपगमेऽपि आकाशसमवायिकारणकत्वानुपगमेन बाधप्रसङ्गात्। नापीन्द्रियरूपत्वम्; भूतत्वहेतोर्घटादौ व्यभिचारात्। नापीन्द्रियवृत्तिधर्मवत्त्वम्; इन्द्रियाणामाहङ्कारिकत्वपक्षेऽपीन्द्रियवृत्तिप्रमेयत्वादिमत्त्वस्याकाशे सिद्धतया सिद्धसाधनात्; अर्थान्तराच्च नापीन्द्रियवृत्तिभूतत्वव्याप्यधर्मवत्त्वम्; आकाशरूपेन्द्रियविरहेऽप्याकाशपृथिव्यन्यतरत्वस्यादायोक्तसाध्योपपत्त्याऽर्थान्तरप्रसङ्गादिति॥ अत्रोच्यते–इन्द्रियारम्भकत्वमिन्द्रियसजातीयत्वम्, साजात्यं च भूतविभाजकरूपेण इत्थं च घटादिष्वप्युक्तसाध्यसत्त्वान्न व्यभिचारः। उक्तानुमानेनाकाशरूपेन्द्रियसिद्ध्याऽभिमतसिद्धिः। शब्द इत्यादि। स्वसमानजातीयेति। साजात्यं गुणविभाजकरूपेण बहिरिन्द्रिय-

---

1 × आलोकेत्यादिकमिदमत्रैव युक्तम्। पूर्वं (पु 72. 1) सन्निवेशस्तु सर्वकोशदृष्टः अनवधानकृतः; प्रतीकक्रमात्। द्वितीयव्याख्यानुसाराच्च।

इत्यादीनां चक्षुराद्यभौतिकत्वस्य वक्ष्यमाणत्वात् साध्यविकलत्वश्रुतिबाधादिदूषणानि बाध्यानि ॥

शब्दस्य भूतधर्मत्वात् श्रुतेर्वैकारिकत्वतः। संयुक्तनिलयो योग्यः स तया सम्प्रतीयते ॥११

शब्दस्य द्रव्य-द्रव्यत्व-श्रोत्रगमन-शब्दागमनादिविवादमद्रव्ये शमयिष्यामः ॥

त्वगादीनामतीन्द्रियाणां पूर्वोक्तश्रोत्रलक्षणे शब्दमात्रग्राहकत्वस्य नेत्रत्वात् स्पर्शमात्रादिपदन्यासेन

मानात् श्रोत्रस्याऽऽकाशत्व फलनीयमिति भावः × । साध्यविकलत्वेति । चक्षुरादीन्द्रियपृथिव्यादिभूत रूपरसादिरूपाणां प्रथमद्वितीयतृतीयानुमानेषु दृष्टान्तभूतानां चक्षुराद्यभौतिकत्वसमर्थनादेव साध्यवैकल्यं सिद्धमित्यर्थः श्रुतेर्वैकारिकत्वतः इति । श्रोत्रस्य वैकारिकाहङ्कारकार्यत्वादित्यर्थः । संयुक्तनिलय इति । आहङ्कारिकश्रोत्रेन्द्रियसंयुक्ताकाशादिनिष्ठो योग्यशब्दः संयुक्ताश्रितत्वप्रत्यासत्त्या श्रोत्रेन्द्रियेण गृह्यते इत्यर्थः । श्रोत्रगमनेति । चक्षुरादीन्द्रियवत् श्रोत्रमेव शब्ददेशं गत्वा शब्दं गृह्णातीति केचित् । वीचीतरङ्गन्यायेन शब्द एव श्रोत्रदेशं गत्वा गृह्यते इत्येके । तेषां विवादमद्रव्ये शमयिष्याम इत्यर्थः ॥

---

व्यवस्थाहेतुगुणत्वादिति । बहिरिन्द्रियव्यवस्थाग्राह्यगुणत्वादित्यर्थः । स्पार्शनाविषयत्वे सति चक्षुषा विषयत्वे सति वा मनोभिन्नेन्द्रियग्राह्यगुणत्वादिति तु निष्कर्षः । रूपं स्पर्शो वा दृष्टान्तः द्रवत्वे व्यभिचारवारणाय सत्यन्तम् । ज्ञानादौ तद्वारणाय विशेष्यम् । श्रोत्रमित्यादि । साजात्यं गुणविभाजकरूपेण । बहिरिन्द्रियत्वात् मनोभिन्नेन्द्रियत्वात् । मनसि व्यभिचारवारणाय मनोभिन्नेति । इन्द्रियसंयोगे तद्वारणाय इन्द्रियत्वनिवेशः । आदिना शब्दः स्वग्राहकेन्द्रियवृत्तिगुणसजातीयः बहिरिन्द्रियव्यवस्थाहेतुगुणत्वात्, रूपवत्, श्रोत्रं स्ववृत्तिगुणसजातीयग्राहकम् बहिरिन्द्रियत्वात्, चक्षुर्वत् इत्यादेः सङ्ग्रहः । साध्यविकलत्वेति । चक्षुराद्यभौतिकत्वसमर्थनात् प्रथमानुमाने दृष्टान्तस्य चक्षुरादेर्भूतत्वरूपसाध्यासम्भवात् द्वितीयानुमाने दृष्टान्तस्य पृथिव्यादिभूतस्य इन्द्रियसजातीयत्वरूपसाध्यासम्भवात्, तृतीयानुमाने दृष्टान्तस्य रूपरसादेः स्वसमानजातीयगुणवदिन्द्रियग्राह्यत्वरूपसाध्यासंभवात्, चतुर्थानुमाने चक्षुरादेः स्वग्राह्यगुणसजातीयगुणवत्त्वरूपसाध्यासम्भवाच्च दृष्टान्ते साध्यवैकल्यमित्यर्थः । श्रुतिबाधेति । अभौतिकत्वग्राहकागमबाधेत्यर्थः । श्रुतिबाधादीति आदिना अप्रयोजकत्वसंग्रहः ।

श्रुतेरितीति । श्रोत्रेन्द्रियस्येत्यर्थः । वैकारिकत्वतः—सात्त्विकाहङ्कारकार्यत्वात् । संयुक्तनिलयः—संयुक्ताश्रितः, सः शब्दः, तया श्रुत्या । संप्रतीयत इति । आहङ्कारिकश्रोत्रसंयुक्ताकाशादिनिष्ठो योग्यशब्दः संयुक्ताश्रितत्वरूपप्रत्यासत्त्या श्रोत्रेन्द्रियेण गृह्यत इत्यर्थः । श्रोत्रगमनादीति । श्रोत्रेन्द्रियमेव चक्षुर्वत् विषयदेशं गत्वा शब्दं गृह्णातीति केचित् । वीचीतरङ्गन्यायेन शब्द एव श्रोत्रदेशं गतो गृह्यत इत्यन्ये । तेषां विवादमद्रव्यनिरूपणे शमयिष्याम इत्यर्थः। त्वगादीनामिति । अयमर्थः—शब्दादिपञ्चके स्पर्शमात्रग्राहकत्वं त्वगिन्द्रियलक्षणम् । तस्य च रूपाग्राहकत्वे सति स्पर्शग्राहकेन्द्रियत्वे पर्यवसानम् । मनोवारणाय सत्यन्तम् । श्रोत्रादिवारणाय स्पर्शग्राहकेति । त्वक्संयोगवारणायेन्द्रियत्वनिवेशः । एवं रसग्राहकत्वादिघटितलक्षणान्तरसंभवोऽपि बोध्यः । तथा शब्दादिपञ्चके रूपमात्रग्राहकत्वं चक्षुरिन्द्रियलक्षणम् । तस्य च शब्दाग्राहकत्वे सति रूपग्राहकेन्द्रियत्वे पर्यवसानम् । पदन्यासेति पूर्वोक्तदिशोह्या ।

लक्षणमूह्यम्। तत्र त्वगाश्रयः कृत्स्नं वपुः। "प्रदेशभेदेन स्पर्शोपलम्भतारतम्यम्, नखदन्तकेशादिषु स्पर्शानुपलम्भश्च प्राणमान्द्यतारतम्यात्" इति करणपादाष्टमाधिकरणे प्रोक्तम्। यथायोग्यं वाय्वादिचतुष्टयं संयोगेन तया गृह्यते। स्पर्शादयस्तु संयुक्तनिष्ठतया। चक्षुरादीनामाश्रयाः नयनगोलकताल्वग्रनासाः। तत्र गजानां नासा हस्त इति पाणिघ्राणयोरेकमेवाधिष्ठानमुच्यते। तत्रो-(तच्चो?)क्तम्, "हस्तेन गन्धोपलब्धिः गजानामेव" इत्यादि। जङ्गमशरीरे त्वेव प्रायशोऽयमिन्द्रियप्रदेशनियमः। चक्षुषा वायुव्यतिरिक्तभूतचतुष्टयं तथैव गृह्यते। रूपादयोऽपि स्पर्शादिवत्। दूरस्थग्रहणे तु चाक्षुषमहःप्रसरणात् सम्बन्धसिद्धिः। तच्च करणपादद्वितीयाधिकरणे प्रपञ्चितम्॥

प्रतिबिम्बग्रहणे तु स्वच्छद्रव्यप्रतिहतस्य नयनमहसः प्रतिस्रोतःप्रसरणादिमूलकत्वं भ्रान्त्यधि-

---

तत्र त्वगाश्रय इति। कृत्स्नं वपुः त्वगाश्रयः इत्यर्थः। स्पर्शोपलम्भतारतम्यमिति। नयनगोलकावच्छिन्नप्रदेशस्य यादृशं स्पर्शग्राहकत्वं न तादृशं पादतलप्रदेशावच्छिन्नस्य। अत एव उष्णद्रव्यादिकं पादतलेन स्प्रष्टुं शक्ता अपि नयनगोलकादिना स्प्रष्टुं न शक्नुवन्तीति तारतम्यमित्यर्थः। प्राणमान्द्येति। प्राणव्याप्त्यल्पत्वभूयस्त्वाभ्यामित्यर्थः। न च केशनखादिषु प्राणव्याप्तिर्नास्तीति शङ्क्यम्; न्यायतत्त्वशास्त्रे प्राणव्याप्तेः प्रतिपादितत्वात्। तयेति। त्वचेत्यर्थः। चक्षुरादीनामिति। चक्षूरसनघ्राणानामित्यर्थः। नासा हस्त इति। (?) नासाया एव हस्तत्वादित्यर्थः। भूतचतुष्टयमिति। पृथिव्यप्तेजआकाशाः इत्यर्थः। तथैवेति। संयोगेनेत्यर्थः। स्पर्शादिवदिति। संयुक्तनिष्ठतया गृह्यन्ते इत्यर्थः। चाक्षुषमहःप्रसरणादिति। चाक्षुषतेजःप्रसरादित्यर्थः। ननु चक्षुस्संयुक्तमेव चक्षुषा गृह्यते इत्ययुक्तम्; दर्पणावलोकनदशायां ग्रीवास्थस्य मुखस्य, ग्रहणदर्शनेन तत्र चक्षुस्संयोगाभावादित्याशङ्क्य प्रतिबिम्बग्रहणं दर्पणाभिहत्या मुखाभिमुखीकृतनयनरश्मिनिबन्धनमित्याह प्रतिबिम्बग्रहणे

---

एवं स्पर्शग्राहकत्वादिव तल्लक्षणान्तरमपि बोध्यम्। तथा शब्दादिपञ्चके रसमात्रग्राहकं रसनेन्द्रियम्। तथा शब्दादिपञ्चके गन्धमात्रग्राहकं घ्राणेन्द्रियम्; पर्यवसानादिकं पूर्ववद्बोध्यम्। तत्रेति। त्वगादिष्वित्यर्थः। ननु कृत्स्नस्यापि वपुषस्त्वगाश्रयत्वे नयनगोलकपादतलयोरुष्णस्पर्शोपलम्भतारतम्यं नखदन्तकेशादिषु स्पर्शानुपलम्भश्च कथमित्यत आह प्रदेशभेदेनेति। प्राणमान्द्येनेति। प्राणव्याप्त्यल्पत्वभूयस्त्वाभ्यामित्यर्थः। केशनखादिष्वपि प्राणव्याप्तिसद्भावो न्यायतत्त्व एव प्रतिपादितः। तया=त्वचा। चक्षुरादीनामिति। चक्षूरसनघ्राणानामित्यर्थः। नासा हस्त इति। (?)[1] नासाया एव हस्तत्वादित्यर्थः।

वायुव्यतिरिक्तभूतचतुष्टयमिति। आकाशस्य चक्षुषा ग्रहणस्य वक्ष्यमाणत्वादिति भावः। तथैवेति। संयोगेनेत्यर्थः। स्पर्शादिवदिति। संयुक्तनिष्ठतयेत्यर्थः। चाक्षुषमहःप्रसरणादिति। चाक्षुषतेजःप्रसरादित्यर्थः। ननु दर्पणावलोकनदशायां चक्षुरसंयुक्तस्यापि स्वमुखस्य चक्षुषा ग्रहणदर्शनात् दूरस्थस्यापि तथैव ग्रहणसंभवात् किमर्थं चाक्षुषमहःप्रसरणाङ्गीकार इत्यतः, 'असंयुक्तग्रहणाङ्गीकारे भित्त्यादिव्यवहितस्यापि ग्रहणप्रसङ्गात् संयुक्तस्यैव ग्रहणमित्याश्रयणीयम्, दर्पणावलोकनदशायां चाक्षुषमहसो दर्पणप्रतिहतस्यास्यैव स्वमुखसंयोगः' इत्याह प्रतिबिम्बेत्यादिना। ननु संयुक्तग्रहण-

---

1 गजानां नासा हस्त इतीत्यस्य इति वाक्येनेत्यर्थो युक्तः। तत्रोक्तमित्यत्र तच्चोक्तमिति स्यात्।

करणपूर्वपक्षे अभिहितम्। स्फटिकादौ दर्शनवशात् नयनादिप्रभामात्रप्रवेशयोग्यं संस्थानमिति सर्वेषां तद्व्यवहितोपलम्भः। अञ्जनादिसंस्कृतनयनप्रभायाः पृथिव्याद्यनुप्रवेशात् तद्युक्तचक्षुषां निधिप्रभृतेरुपलम्भः। जिह्वाघ्राणाभ्यां तु रसगन्धौ क्रमात् संयुक्तनिष्ठतया गृह्येते। उक्तञ्च सम्बन्धद्वैविध्यं तत्त्वरत्नाकरे—

"तत्र वृद्धा विदामासुः संयोगं सन्निकर्षणम्। संयुक्ताश्रयणञ्चेति यथासंभवमूह्यताम्॥" इति।

तदेवं मनःस्पर्शनलोचनानि द्रव्याद्रव्यग्राहकाणि, श्रोत्रजिह्वाघ्राणानि अद्रव्यग्राहकाणि। सर्वेषामपि इन्द्रियाणां तत्तत्कालादिविशिष्टवस्तुग्राहकत्वात् द्रव्याद्रव्यग्राहकत्वमेव वा। उक्तञ्च प्रमेयसंग्रहे श्रीविष्णुचित्तार्यैः सन्मात्रप्रत्यक्षनिराकरणप्रसङ्गेन, "कालस्य वस्तुधर्मतया सर्वप्रतीत्यन्तर्भावात् न पृथग्रूपत्वम्" इति॥

यत्तु वैशेषिकादिभिरुच्यते—त्वगादीनीन्द्रियाणि क्रमात् वाय्वाद्यात्मकानि स्पर्शादिषु मध्ये स्पर्श-

---

रिवति। ननु स्फटिकान्तरितस्यापि ग्रहणात् चक्षुषो न संयुक्तग्राहकत्वमित्याशङ्क्याह **स्फटिकादाविति। न पृथग्रूपत्वमिति।** स्वातन्त्र्येण कालो न प्रतीयते इत्यर्थः। **त्वगादीनीन्द्रियाणीति।** त्वगिन्द्रियं वाय्वात्मकं स्पर्शादिषु पञ्चसु मध्ये स्पर्शस्यैवाभिव्यञ्जकत्वात् शैत्याभिव्यञ्जकपवनवत्,

---

नियमे स्फटिकादिव्यवहितग्रहणं कथमित्यत आह **स्फटिकादाविति।** दर्शनवशादिति। तद्व्यवहितदीपादिप्रभाया बहिर्निस्सरणदर्शनानुरोधादित्यर्थः। **सर्वप्रतीत्यन्तर्भावादिति।** सर्वविधप्रत्यक्षविषयत्वादित्यर्थः। **न पृथग्रूपत्वमिति।** प्रत्यक्षनिरूपितमुख्यविशेष्यत्वं नेत्यर्थः॥

**त्वगादीनीत्यादेरयमर्थः**—त्वगिन्द्रियं वायुत्ववत् स्पर्शादिषु मध्ये स्पर्शमात्राभिव्यञ्जकत्वात्, शैत्याभिव्यञ्जकपवनवदिति त्वगिन्द्रियस्य वायुत्वसाधकमनुमानम्। अत्र स्पर्शमात्राभिव्यञ्जकत्वं स्पर्शेतरविषयकसाक्षात्काराजनकत्वे सति स्पर्शसाक्षात्कारजनकत्वम्। मनसि व्यभिचारवारणाय सत्यन्तम्। स्पर्शसाक्षात्कारजनकेषु सर्वत्र स्पर्शेतरस्पर्शत्वादिसाक्षात्कारजनकत्वसत्त्वात् साधनाप्रसिद्धिवारणाय स्पर्शादिषु मध्य इति। स्पर्शादिघटकीभूतं यत् स्पर्शेतरत् तत्साक्षात्काराजनकत्वं सत्यन्तार्थ इति न साधनाप्रसिद्धिः। रूपसाक्षात्काराजनकत्वे रससाक्षात्काराजनकत्वे गन्धसाक्षात्काराजनकत्वे वा सत्यन्तार्थनिष्कर्षः। आकाशादौ व्यभिचारवारणाय विशेष्यम्। त्वक्सन्निकर्षे व्यभिचारवारणाय द्रव्यत्वं निवेश्यम्। एवं चक्षुरिन्द्रियं तेजस्त्ववत् स्पर्शादिषु मध्ये रूपमात्राभिव्यञ्जकत्वात्, दीपप्रभावदिति चक्षुरिन्द्रियस्य तेजस्त्वसाधकमनुमानम्। स्पर्शसाक्षात्काराजनकत्वे रससाक्षात्काराजनकत्वे गन्धसाक्षात्काराजनकत्वे वा सति रूपसाक्षात्कारजनकत्वं [इति?] हेत्वर्थनिष्कर्षः। मनसि व्यभिचारवारणाय सत्यन्तम्। आकाशादौ व्यभिचारवारणाय विशेष्यम्। चक्षुस्सन्निकर्षे व्यभिचारवारणाय द्रव्यत्वं निवेश्यम्। एवं रसनेन्द्रियं जलत्ववत्, स्पर्शादिषु मध्ये रसमात्राभिव्यञ्जकत्वात्, दन्तान्तर्गततोयवत् इति रसनेन्द्रियस्य जलत्वसाधकमनुमानम्। स्पर्शसाक्षात्काराजनकत्वे रूपसाक्षात्काराजनकत्वे गन्धसाक्षात्काराजनकत्वे वा सति रससाक्षात्कारजनकत्वं [इति?] हेत्वर्थनिष्कर्षः। दलप्रयोजनादिकं पूर्वोक्तदिशा अवसेयम्। एवं घ्राणेन्द्रियं पृथिवीत्ववत्, स्पर्शादिषु मध्ये गन्धमात्राभिव्यञ्जकत्वात्, कुङ्कुमगन्धाभि

रूपरसगन्धप्रभाभिव्यञ्जकत्वात्, स्वेदशैत्याद्यभिव्यञ्जकपवनवत्, दीपप्रभावत्, दन्तान्तर्गततोयवत्, कुङ्कुमगन्धाभिव्यञ्जकघृतवत् इति। तत्र व्यञ्जकत्वं नाम व्यक्तिं प्रति करणत्वम्, तदनुग्राहकत्वं वा, सामान्येन हेतुत्वमात्रं वा, इन्द्रियत्वं वा? न प्रथमद्वितीयौ; स्वेतरहेतुवर्गप्रतियोगिकस्य साधकतमत्वादेर्विवक्षितत्वेन साधनवैकल्यासिद्धिप्रसङ्गात्। न तृतीयः; इन्द्रियाधिष्ठानतत्संस्कारादिभिरनैकान्तिकत्वात्। न तुरीयः; साधनवैकल्यात्। सर्वेषाञ्चाऽऽगमबाधः। स एव धर्मिग्राहकबाधोऽपि; आगममन्तरेण गोळकातिरिक्तेन्द्रियासिद्धेः। किञ्चि करणपूर्वकेत्येतावतापि करणमात्रं

---

एवं दीपप्रभादिदृष्टान्तेन चक्षुरादीनामपि तैजसत्वादिकं प्रसाध्यमिति भावः। साधनवैकल्यासिद्धीति। प्रथमाभिव्यक्तिं प्रति इन्द्रियाणामेव करणत्वे विवक्षिते व्यजनपवनादेरकरणत्वात् दृष्टान्ते साधनवैकल्यम्, व्यजनपवनादेः करणत्वे विवक्षिते इन्द्रियाणां करणत्वाभावादसिद्धिरित्यर्थः। एवं द्वितीयपक्षे करणानुग्राहकत्वेऽपि द्रष्टव्यम्। इन्द्रियाधिष्ठानेति। इन्द्रियाधिष्ठाने गोळकादौ इन्द्रियसंस्कारे अञ्जनादौ च अनैकान्तिकमित्यर्थः। साधनवैकल्यादिति। दृष्टान्त इति शेषः। धर्मिग्राहकत्वमुपपादयति। आगममिति। ननु गोळकस्य प्राप्यकारित्वासंभवादिन्द्रियाणाञ्च प्राप्य-

---

व्यञ्जकघृतवदिति घ्राणेन्द्रियस्य पृथ्वीत्वसाधकानुमानम्। निष्कर्षादिकं पूर्वोक्तदिशा ज्ञेयम्।

उक्तान्यनुमानानि दूषयितुं स्पर्शाद्यभिव्यञ्जकत्वं विकल्पयति तत्रेत्यादिना। व्यक्तिं प्रति करणत्वं साक्षात्कारनिरूपितसाधकतमत्वं, स्वेतरतादृशसाक्षात्कारजनकयावदवधिकोत्कर्षवत्त्वरूपम्। तदनुग्राहकत्वं करणनिष्ठसामर्थ्यसंपादकत्वम्। सामान्येन हेतुत्वमात्र–करणतदनुग्राहकसाधारणं कारणतामात्रम्। इन्द्रियत्वमिति। तत्साक्षात्कारजनकेन्द्रियत्वमित्यर्थः। तेनेन्द्रियान्तरे न व्यभिचारः। स्वेतरहेतुवर्गेत्यादि। त्वगिन्द्रियनिष्ठस्य स्वेतरयावत्कारणावधिकोत्कर्षस्य त्वगिन्द्रियनिष्ठसामर्थ्यसंपादकत्वस्य वा हेतुतया विवक्षायां प्रथमे दृष्टान्तस्य साधनविकलता; द्वितीये स्वरूपासिद्धिः। शैत्याभिव्यञ्जकपवनगतोत्कर्षविवक्षायां प्रथमे स्वरूपासिद्धिः; द्वितीये तन्निष्ठशक्तिसंपादकत्वविवक्षायां साधनविकलता चेत्यर्थः। इन्द्रियाधिष्ठानेति। इन्द्रियाश्रयभूतनयनगोळकादिषु इन्द्रियसंस्कारभूताञ्जनादिषु च साक्षात्कारजनकत्वसत्त्वात् व्यभिचार इत्यर्थः। न च–इन्द्रियाधिष्ठानस्य कारणत्वे प्रमाणाभावान्न तत्र व्यभिचारः; एवमिन्द्रियसंस्कारस्यापि सन्निकर्षसंपादकत्वमेव, न तु साक्षात्कारजनकत्वमिति तत्रापि न व्यभिचार इति वाच्यम्—प्रभायाश्चाक्षुषजनकत्वाभावस्य वक्ष्यमाणतया दृष्टान्ते साधनवैकल्यपरिहाराय साक्षात्कारप्रयोजकत्वस्यैवावश्यं हेतुकोटौ निवेशनीयतया दर्शितव्यभिचार इत्यभिप्रायात्। आगमबाध इति। वैकारिकाहङ्कारजन्यत्वग्राहकप्रागुपदर्शितागमबाध इत्यर्थः। आगमस्य धर्मिग्राहकत्वमुपपादयति आगममन्तरेणेति। रूपसाक्षात्कारे किञ्चित्करणपूर्वकत्वानुमानस्य गोळकमादायैव पर्यवसानसंभवात् न गोळकातिरिक्तं सिद्ध्येदित्यर्थः। शङ्कते गोळकादेरित्यादिना। अतिरिक्तं कल्प्यत इति। तत्कालिककार्याभावस्तत्प्राक्क्षणावच्छिन्नकारणाभावप्रयुक्तः तत्कालिककार्याभावत्वात्, यत्र तत्कालिककार्याभावत्वं तत्र तत्प्राक्क्षणावच्छिन्नकारणाभावप्रयुक्तत्वमिति सामान्य-

हि सिध्येत्; नातिरिक्तम्॥ गोलकादेरवैकल्येऽपि कार्यवैकल्यादतिरिक्तं कल्प्यते इति चेन्न; सूक्ष्मस्य वैकल्यस्य मूषिकाघ्रातबीजवत् दुर्दर्शत्वात्। परिमलादिप्रसर इव पार्थिवगोलकावयवविशेषप्रसरवशादेव विषयसंबन्धसिद्धेः, प्राप्यकारित्वाविरोधाच्च। अतोऽन्वयव्यतिरेकसिद्धस्य आगमसिद्धस्य वा पक्षीकारे ग्राहकप्रमाणबाधोऽवर्जनीयः। यत्तु आलोकाभावे जायमानो रूपसाक्षात्कारः तेजःकरणकः; रूपसाक्षात्कारत्वात्, सति आलोके जायमानरूपसाक्षात्कारवदिति चक्षुषस्तैजसत्वमिति—तदपि न; आप्यायकतेजसा सिद्धसाधनत्वात्। तेजसस्तत्र कारणत्वेऽपि तत् चक्षुरेवेति नियामकाभावात्। इन्द्रियवदेवानुद्भूतरूपस्पर्शस्य कस्यचिद्बाह्यतेजसोऽपि ग्रीष्मोष्मवत् संभवात्। उद्भूतरूपस्यापि साधने भवद्भिस्तेन्द्रियस्यापि तथात्वप्रसङ्गेन तमस एवासिद्धिप्रसङ्गात्।

कारित्वनियमात् गोलकातिरिक्तेन्द्रियसिद्धिरित्याशङ्कयाह **परिमलादीति**। **अन्वयव्यतिरेकसिद्धस्येति**। कनीनिकलक्षणगोलकसत्त्वे चाक्षुषज्ञानम्; तदभावे चाक्षुषज्ञानाभावः इत्यन्वयव्यतिरेकसिद्धस्य पार्थिवत्वेन सम्प्रतिपन्नस्य गोलकादेर्वा, आगमसिद्धस्य आहङ्कारिकस्य वा पक्षीकारे तैजसत्वादिरूपं साध्यं धर्मिग्राहकप्रमाणबाधितमेव स्यादित्यर्थः। **रूपसाक्षात्कार इति**। अन्धकारगतरूपसाक्षात्कारेत्यर्थः। ततश्च पार्थिवगोलकातिरिक्ततैजसेन्द्रियसिद्धिरिति भावः। **आप्यायकेति**। आलोकस्थानीयेन सहकारितेजसा अर्थान्तरादित्यर्थः। बाधादेव नेन्द्रियव्यतिरिक्ततेजसाऽर्थान्तरमित्यत आह। **इन्द्रियवदेवेति**।

व्याप्त्या तत्त्वावच्छिन्नाभावप्रतियोगिनः कस्यचित् सिद्धौ गोलकादेस्तथात्वासंभवादतिरिक्तं सिद्ध्यतीत्यर्थः। **सूक्ष्मस्य** प्रत्यक्षायोग्यस्य। **वैकल्यस्य**=अवयवसंस्थानविशेषनाशस्य, शक्तिविशेषनाशस्य वा। **मूषिकाघ्रातबीजवदिति**। तत्र प्रत्यक्षेण वैकल्यादर्शनेऽप्यङ्कुरोत्पादकत्वविरहेण वैकल्याभ्युपगमावश्यम्भावादित्यर्थः। **दुर्दर्शत्वादिति**। तथाच पुष्कलगोलकाद्यभावप्रयुक्तत्वस्यैव संभवान्न तदतिरिक्तं सिद्ध्येदिति भावः। ननु गोलकस्य प्राप्यकारित्वासंभवादिन्द्रियाणां च प्राप्यकारित्वनियमात् गोलकातिरिक्तेन्द्रियसिद्धिरित्यत आह **परिमलादीति**। **अन्वयव्यतिरेकेत्यादि**। कनीनिकालक्षणगोलकसत्त्वे चाक्षुषज्ञानम्। तदभावे चाक्षुषज्ञानाभाव इत्यन्वयव्यतिरेकसिद्धस्य पार्थिवत्वेन संप्रतिपन्नस्य गोलकादेर्वा, आहङ्कारिकत्वेनाऽऽगमसिद्धस्य वा पक्षीकारे तैजसत्वादिसाध्यं धर्मिग्राहकप्रमाणबाधितमेव स्यादित्यर्थः। **आलोकाभावे जायमानो रूपसाक्षात्कार इति**। आलोकजन्यरूपसाक्षात्कार इत्यर्थः। स च तमोगतरूपसाक्षात्कारः। तमोगतरूपसाक्षात्कारत्वेन तु न पक्षत्वसंभवः। नैयायिकमते तमोगतरूपाप्रसिद्ध्या आश्रयासिद्धेः। दृष्टान्तमाह **सतीति**। अनेन चानुमानेन गोलकातिरिक्ततैजसेन्द्रियसिद्धिरिति भावः। **आप्यायकतेजसा सिद्धसाधनत्वादिति**। सिद्धान्तिमते आहङ्कारिकस्यापि चक्षुषस्तेजआप्यायितत्वात्, आप्यायनस्य तेन सहैकसंघाततापत्तिरूपतया तेजोंशस्यापि रूपसाक्षात्कारकारणतायाः सिद्धान्तसंप्रतिपन्नत्वादिति भावः। ननु तादृशतेजोंशस्य भवद्भिरिन्द्रियत्वानुपगमात् कारणीभूतेन्द्रियसहभूतस्य तस्यान्यथासिद्धेरेव वाच्यतया न सिद्धसाधनावकाश इत्यत उक्तानुमानेन चक्षुरनात्मकस्यानुद्भूतरूपस्पर्शवतः कस्यचित् तेजसस्सिद्धिमादायार्थान्तरमाह **तेजस इत्यादि**। **उद्भूतरूपस्यापि साधन इति**। उद्भूतरूपवत्तेजोजन्यत्वसाधन इत्यर्थः; तथाच नोक्तरीत्यार्थान्तरमिति भावः। **तमस एवेति**। उद्भूतरूपवत्तेजसा तस्य

ईश्वरज्ञानेन चानैकान्त्यात्। अनित्यत्वेन विशेषणेऽपि, स्वाप्नयोगिसाक्षात्कारैरनैकान्त्यात्। सर्वव्यभिचारस्थलव्यतिरिक्तत्वे सतीति विशेषणे तर्ककौशलम्। एवमनुमानान्तरेऽपि यथासम्भवं

---

तमस एवेति। उद्भूतरूपवत्तेजसा तस्य विरोधादिति भावः। ईश्वरज्ञानेनेति। तस्य नित्यत्वेन तेजः-करणकत्वाभावादित्यर्थः। स्वाप्नेति स्वप्ने बाह्येन्द्रियाणामुपरतत्वादिति भावः। यद्यपि सिद्धान्ते स्वाप्नदेहेन्द्रियालोकादिसृष्ट्यभ्युपगमान्नानैकान्त्यम्; तथाऽपि मतान्तरानुसारेणेदमुक्तमिति द्रष्टव्यम्। अनुमानान्तरेऽपीति। आलोकाभावस्थली रूपसाक्षात्कारत्वं तेजःकरणकवृत्ति; रूपसाक्षात्कारवृत्ति-

---

विरोधादिति भावः। तथाचोद्भूतरूपवत्तेजो जन्यत्वसाधने बाध एवेति तात्पर्यम्। ईश्वरज्ञानेनेति। तस्य नित्यत्वेन तेजःकारणकत्वाभावात् रूपसाक्षात्कारत्वस्य च तत्र सत्त्वादिति भावः। अनित्यत्वेनेति। तथाच हेतुविरहान्नैकान्त्यमिति भावः। स्वाप्नेत्यादि। यद्यपि सिद्धान्ते स्वप्ने देहेन्द्रियालोकादिसृष्टिः स्वीक्रियते; तथापि तदातनरूपसाक्षात्कारस्याऽऽलोकजन्यत्वे मानाभावः। स्वाप्निकतमस्सृष्टिदशायां घटादिरूपसाक्षात्कारविरहस्य विषयसृष्ट्यभावादेवोपपत्तेः। तथाचानैकान्त्यमस्त्येव। ननु स्वप्नज्ञानस्य स्मृतिरूपत्वाङ्गीकारान्नैकान्त्यमित्यतः योगीति। न च—रूपनिष्ठलौकिकविषयताशालि साक्षात्कारत्वमेव हेतुरिति न योगिप्रत्यक्षे व्यभिचारः; तदीयविषयताया लौकिकत्वासंभवादिति वाच्यम्; अन्धकारे जायमानरूपसाक्षात्कारस्यापि भवन्मते लौकिकसन्निकर्षाजन्यतया तदीयविषयताया अपि लौकिकत्वसंभवेन स्वरूपासिद्ध्यापत्तेः न च—साक्षात्कारत्वव्यञ्जकविषयतैव लौकिकविषयता। अन्धकारे रूपसाक्षात्कारदशायां साक्षात्करोमीति प्रतीतिसत्त्वेन तत्रापि लौकिकविषयताऽस्त्येव; लौकिकसन्निकर्षस्येव दोषविशेषस्यापि लौकिकविषयताप्रयोजकत्वस्वीकारादिति वाच्यम्; तथासति योगधर्मजन्यसाक्षात्कारस्थलेऽपि साक्षात्करोमीति प्रतीतिसंभवेन लौकिकविषयत्वावश्यम्भावेनानैकान्त्यतादवस्थ्यात्। अस्मन्मतेन मुक्तसाक्षात्कारमादायानैकान्त्यस्य दुष्परिहरत्वाच्च। ननु यत्र यत्र व्यभिचारः प्राप्नोति, तत्तद्भेदकूटवत्त्वं हेतुकोटौ निवेश्यत इत्याशङ्कय।प्रयोजकत्वमाह सर्वेति। अत्रेदं बोद्धव्यम्—विषयतासंबन्धेन चक्षुषं प्रति संयोगसंबन्धेन संयुक्ताश्रितत्वसंबन्धेन च तमसः प्रतिबन्धकत्वम्। न संयोगसंबन्धेनालोकस्य कारणत्वम्; रूपादिचाक्षुषे व्यभिचारात्। न च द्रव्यवृत्तिलौकिकविषयतासंबन्धेन चाक्षुषं प्रति संयोगसंबन्धेनाऽऽलोकस्य कारणत्वाभ्युपगमात् नोक्तव्यभिचारः, अन्धकारस्थघटमुपनीतमाने व्यभिचारवारणाय लौकिकेति-इति वाच्यम्; तथाप्यालोकचाक्षुषे व्यभिचारात्। तत्र संयोगसंबन्धेनालोकविरहात् अनुगृहीतं हि प्रथमसूत्रभाष्ये, "प्रदीपप्रभायास्तु चक्षुरिन्द्रियस्य ज्ञानमुत्पादयतो विरोधितमोनिरसनद्वारेणोपकारकत्वमात्रमेव" इति। इत्थञ्च तेजोजन्यत्वसाधने आलोककालीनचाक्षुषेऽपि तेजोजन्यत्वविरहात् दृष्टान्ते साध्यवैकल्यं व्यभिचारश्च तेजःप्रयोज्यत्वसाधने चाऽऽप्यायकतेजःप्रयोज्यत्वाक्षतेः सिद्धसाधनम् एवं संसारकालिकज्ञानत्वसामान्ये शरीरजन्यतायास्संमतिपन्नतया शरीरस्य चावश्यव्यनभ्युपगमेन प्रत्यक्षसङ्कोचात्मकत्वासिद्धस्य च दुर्वारामिति। अनुमानान्तरेऽपीति। आलोकाविषयक

दूषणमूह्यम्। अप्राकृतश्रोत्रादिषु तु मुक्तेश्वरादीनां करणाधीनज्ञानप्रसराभावेऽपि स्वेच्छया परिग्रहवशात् विषयसहकारिनियमे न निर्बन्धः। तत्तदधिष्ठानविशेषादिभिः तल्लक्षणम्। बौद्धास्तु, बुद्धश्चक्षुषैव सर्वं जानातीति वदन्ति। तदयुक्तम्; तादृशमदर्भिमतसार्वज्ञ्ये प्रमाणाभावात्। चक्षुःप्रकर्षतारतम्यं क्वचिद्विश्रान्तं प्रकर्षतारतम्यत्वादित्यादेरपि चक्षुर्ग्राह्यवर्ग एव सर्वातिशायित्व-

---

धर्मत्वात् रूपसाक्षात्कारत्ववदित्याद्यनुमानेऽपीत्यर्थः। ननु शब्दादिषु पञ्चसु शब्दमात्रग्राहकं श्रोत्रमित्यादीनि श्रोत्रादिलक्षणानि प्राकृताप्राकृतसाधारणानि किं न स्युरित्याशङ्क्य तेषां विषयादिनियमाभावेन शब्दमात्रग्राहकं श्रोत्रेन्द्रियमित्यादिलक्षणानामव्याप्तिं प्रदर्शयन् करणाधीनप्रसररहितानामपि तेषां श्रोत्रादिपरिग्रहे हेतुञ्च दर्शयति अप्राकृतश्रोत्रादिष्विति। स्वेच्छया परिग्रहवशादिति। अस्यानन्तरं सम्बन्ध इति शेषः। तत्तदधिष्ठानविशेषादिभिरिति। कर्णशष्कुल्यधिष्ठानत्वं श्रोत्रेन्द्रियस्य लक्षणम्। नयनगोलकाधिष्ठानत्वं चक्षुरिन्द्रियस्येत्यादिकं द्रष्टव्यम्। बौद्धास्त्विति। ततश्च रूपमात्रग्राहकत्वं चक्षुर्लक्षणं बुद्धचक्षुष्यव्याप्तमिति भावः।

---

चक्षुष्ट्वेन तेजोजन्यं चाक्षुषज्ञानत्वात्, आलोकविषयकचाक्षुषज्ञानवत् इत्यनुमानेपीत्यर्थः। यथासंभवं दूषणमूह्यमिति। उक्तानुमाने आलोकविषयकचाक्षुषप्रत्यक्षस्य विषयविधयाऽऽलोकात्मकतेजोजन्यतया न दृष्टान्ते साध्यवैकल्यम्, न वा व्यभिचारः। आप्यायकतेजसाञ्च कारणत्वविरहान्न सिद्धसाधनम्। परन्तु घटादिचाक्षुषे आलोकजन्यतामादायानुमानस्य व्यवसानसंभवाच्चक्षुषस्तेजस्त्वासिद्ध्यार्थान्तरम्। यदि चाऽऽलोकाविषयकचाक्षुषत्वावच्छेदेन तेजोजन्यत्वसिद्धेरुद्देश्यतया तमश्चाक्षुषे आलोकजन्यत्वसिद्ध्यसंभवे चक्षुषस्तेजस्त्वसिद्धमादायैवानुमानस्य व्यवसानस्य वाच्यतया समीहितसिद्धिरित्युच्यते—तदाप्युद्भूतरूपशून्यतेजोऽन्तरजन्यत्वमादाय प्रागुपदर्शितमर्थान्तरमस्त्येव। एवमीश्वरज्ञाने चाक्षुषत्वानुगमेन तत्र व्यभिचारविरहेऽपि स्वाप्नयोगिसाक्षात्कारादिभिरनैकान्त्यमस्त्येवेत्यादिकं बोद्धव्यमित्यर्थः। शब्दादिपञ्चके शब्दमात्रग्राहकत्वादिरूपाणां प्राकृतश्रोत्रादिलक्षणानामप्राकृतश्रोत्रादिष्वतिव्याप्तिमाशङ्क्य निराचष्टे अप्राकृतेत्यादिना। अप्राकृतश्रोत्रादीनां लक्षणमाह तत्तदधिष्ठानविशेषादिभिरिति। कर्णशष्कुल्यवच्छिन्नदेशवृत्त्यप्राकृतेन्द्रियत्वमप्राकृतश्रोत्रलक्षणम्, नयनगोलकवृत्त्यप्राकृतेन्द्रियत्वमप्राकृतचक्षुषो लक्षणमिति रीत्या तत्तदधिष्ठानवृत्त्यप्राकृतेन्द्रियत्वं तत्तल्लक्षणमित्यर्थः। तत्र इन्द्रियान्तरे अतिव्याप्तिवारणाय तत्तदधिष्ठानवृत्तित्वस्य, प्राकृतेन्द्रियवारणायाप्राकृतत्वस्य, तत्तदधिष्ठानवृत्तिवस्त्वन्तरवारणायेन्द्रियत्वस्य च निवेशः। बुद्धश्चक्षुषैव सर्वं जानातीति। तथा च रूपमात्रग्राहकत्वस्य चक्षुर्लक्षणत्वं न संभवति, बुद्धचक्षुष्यव्याप्तेरिति भावः। प्रमाणाभावादिति। तथाचोक्तचक्षुर्लक्षणं समीचीनमिति भावः। उक्तसार्वज्ञ्ये प्रमाणमाशङ्क्य निराचष्टे चक्षुरित्यादिना। चक्षुःप्रकर्षतारतम्यं चक्षुर्निष्ठापकर्षसमानाधिकरणोत्कर्षः। क्वचिद्विश्रान्तमिति। किञ्चिन्निष्ठापकर्षासमानाधिकरणोत्कर्षवच्चिन्निष्ठ इत्यर्थः। प्रकर्षतारतम्यत्वादिति। अपकर्षसमानाधिकरणोत्कर्षत्वादित्यर्थः। इत्यादेरिति आदिना दृष्टान्तस्य शब्दत्वादिनिष्ठापकर्षसमानाधिकरणोत्कर्षस्य परिग्रहः। अनेन चानुमानेन सर्वोत्कृष्टचक्षुःसिद्ध्या सर्वग्राह-

सम्भावनया तदतिलङ्घनेन रसादिविषयविश्रान्त्ययोगादिति ॥— अथ कर्मेन्द्रियम्—

उच्चारणादिषु अन्यतमक्रियाहेतुत्वं तल्लक्षणम्। तत् पञ्चधा; वागादिभेदात्। वर्णोच्चारणकरणमिन्द्रियं वाक्। तच्च हृत्कण्ठजिह्वामूलतालुदन्तोष्ठनासामूर्धरूपस्थानाष्टकवृत्ति। शुकादिव्यतिरिक्तविहङ्गादीनां तत्तदष्टसंस्थानादिसहकारिविरहात् वर्णोच्चारणाशक्तिः। शुकादीनामपि किञ्चित्तद्वैषम्यात् उच्चारणवैषम्यम् ॥

शिल्पकरणमिन्द्रियं पाणिः। स च मनुष्यादीनां अङ्गुल्यादिवृत्तिः। वारणादीनां नासावृत्तिः। ननु तालुपादादिभिरपि अभ्यासपाटवात् मौक्तिकग्रथनलिपिकरणादिशिल्पदर्शनात् तत्रापि तद्वृत्तिरास्थेया ॥ सत्यम्। मात्रया तद्वृत्तिरस्त्येव। विरोधाभावात् देशभेदेन (देशभेदे)(?) इन्द्रियान्तरव्याप्ते देशे अवस्थानादेश्चक्षुःस्पर्शनादौ दर्शनादिति।

सञ्चरणकरणमिन्द्रियं पादः। स च मनुष्यादीनां चरणादिवृत्तिः। भुजगपतगादीनां तु उरःपक्षादिवृत्तिः। तदुक्तं करणपादाष्टत्वाधिकरणे, "सर्पाः पादात् कर्मेन्द्रियात् ऋते, वक्षसा गच्छन्ति। तेषां गतिशक्तिरुरसि। तस्मादुरगास्ते पन्नगाश्च" इति। "पादात् कर्मेन्द्रियात्"

स्थानाष्टकवृत्तीति। तदुक्तम्, (पाणिनिशिक्षा) "अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा। जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥" इति। देशभेदेनेति। प्रदेशविशेषेणेत्यर्थः; मात्रयेति यावत्। [उत्तरत्रान्वयः ?]। देशभेदे इति क्वचित् पाठः तस्मिंश्च पाठे देशभेदशब्दः प्रदेशविशेषवाची। प्रदेशभेदे विरोधाभावात् इति पूर्वेणान्वयः चक्षुःस्पर्शनादाविति गोलके इन्द्रियद्वयसमावेशदर्शनादित्यर्थः। पन्नगाश्चेतीति। पद्भ्यां न गच्छन्तीति हि पन्नगा इति व्युत्पत्तिरिति भावः। ननु पादेन्द्रियस्य भुजगपतगाद्युरःपक्षवृत्तित्वे भवदभिमतन्यायतत्त्वग्रन्थस्यासाक्षिता; पादात् कर्मेन्द्रियादृते इत्युरगादिषु

कत्वमन्तरा तस्य सर्वोत्कर्षासंभवात् दर्शितसार्वज्ञ्यसिद्धिरत्यासमानः। चक्षुर्ग्राह्यवर्ग एव सर्वातिशायित्वसंभावनयेति। सूक्ष्मव्यवहितविप्रकृष्टरूपादिग्राहकत्वेनापि चक्षुषस्सर्वोत्कर्षसंभवेनेत्यर्थः ॥

अथ कर्मेन्द्रियमिति: कर्मेन्द्रियं प्रस्तूयत इत्यर्थः। अथशब्दस्याधिकारापरपर्यायप्रस्तावार्थकत्वात्। अथवा निरूप्यत इति शेषः। तदा अथशब्दस्य ज्ञानेन्द्रियनिरूपणानन्तर्यमर्थः। इयं च प्रतिज्ञा कर्मेन्द्रियेषु विवादाविषयेन वक्तव्याविषयात् अवधानार्था उच्चारणादिष्वित्यादि उच्चारणाद्यन्यतमहेतुत्वे सति इन्द्रियत्वं कर्मेन्द्रियलक्षणम्। ज्ञानेन्द्रियवारणाय सत्यन्तम्। शरीरादिवारणाय विशेष्यम्। वागादिभेदादिति। वाक्पाणिपादपायूपस्थभेदादित्यर्थः। वागिन्द्रियलक्षणमाह वर्णोच्चारणेति तदुक्तम्, "अष्टौ स्थानानि वर्णानामुरःकण्ठश्शिरस्तथा। जिह्वामूलञ्च दन्ताश्च नासिकोष्ठौ च तालु च" इति। शिल्पकारणमिति। विलेखनग्रथनादिकारणमित्यर्थः। मौतिकहस्तवारणायेन्द्रियत्वनिवेशः। वागादीन्द्रियवारणाय शिल्पकारणमिति मात्रया वृत्तिरस्त्येवेति। अल्पीयस्याः पाणीन्द्रियवृत्तेस्तत्र प्रसरणाङ्गीकारादिति भावः ननु पादेन्द्रियाधिष्ठाने कथं पाणीन्द्रियवृत्तिरित्याशङ्क्याह विरोधाभावाद्देशभेदेनेति। अधिष्ठानभेदसत्त्वेन विरोधाभावादित्यर्थः। गोळकाधिष्ठानस्य चक्षुरिन्द्रियस्य वृत्त्या इन्द्रियान्तराधिष्ठानदेशेऽपि प्रसरणदर्शनादिति भावः। वस्तुतः एकस्येन्द्रियस्य द्व्यधिष्ठानत्वमपि न विरुद्धमित्याह इन्द्रियान्तरेति। गोळकरसनादौ त्वगिन्द्रियसद्भावदर्शनादित्यर्थः। पन्नगाश्चेतीति: पद्भ्यां न गच्छन्तीति

इत्यवयवविशेषलक्षणा। सर्वेषामपि जन्तूनामेकादशेन्द्रियवत्त्वेन साक्षादिन्द्रियनिषेधायोगात्। तस्य च तत्तत्संस्थानादिसहकारेण स्थलजलगगनादिसञ्चारहेतुता। विहगादिपरकायप्रवेशे अन्वय-व्यतिरेकदर्शनात्॥ मलविसर्गकरणमिन्द्रियं पायुः। स च तत्तदवयववृत्तिः। विहङ्गविशेषादीनां तु मुखादिवृत्तिः। तच्चोक्तं तत्रैव भूमाधिकरणे, "यथा वा मान्धालादीनामास्येन विण्मूत्रविसर्गः" इति।

आनन्दविशेषकरणमिन्द्रियमुपस्थः। स च मेहनादिवृत्तिः।

ये तु कर्मेन्द्रियाणि नाभ्युपगच्छन्ति; तैर्ज्ञानेन्द्रियाणि नाभ्युपेयानि। तर्कागमयोरुभयत्राविशेषात्। चक्षुर्गोलकादाविव दृष्टावैकल्येऽपि पादादौ सञ्चारादेः क्वचित् सूक्ष्मदोषविशेषेण प्रतिबन्ध इति। एतेषां सङ्ख्यानिर्णयाधिकरणोपसंहारे भाष्यम्—"इत्यादिश्रुतिस्मृतिसिद्धेन्द्रियसङ्ख्या स्थिता। अधिकसङ्ख्यावादा मनोवृत्तिभेदाभिप्रायाः। न्यूनव्यपदेशास्तु तत्र तत्र विवक्षितगम-

---

कर्मेन्द्रियाभावस्यैव प्रतिपादनादित्याशङ्क्य, स शब्दः पादाख्यकर्मेन्द्रियाधिष्ठानावयवविशेषलक्षक इत्याह पादात् कर्मेन्द्रियादिति लक्षणाबीजं मुख्यार्थबाधमाह सर्वेषामपीति। ननु सञ्चरणसाधनस्य पादेन्द्रियस्य साधारण्ये सञ्चारवैषम्ये किंनिबन्धनमित्याशङ्क्याह तस्य तत्तत्संस्थानेति। तस्य पादेन्द्रियस्येत्यर्थः। विहगादीति। आकाशसञ्चरणासमर्थस्य मनुष्यस्य विहगकायप्रविष्टस्याऽऽकाशसञ्चारदर्शनादित्यर्थः। ननु चक्षुर्गोलकादिषु पूर्ववत्स्थितेष्वेव सत्सु दोषविशेषेण चाक्षुषोत्पत्तिप्रतिबन्धो दृश्यते, तत्र च दोषविशेषापाद्यमानशक्तिवैकल्याश्रयस्य कस्यचित् वक्तव्यतया अतिरिक्तेन्द्रियसिद्धिरित्याशङ्क्य तत् प्रकृतेऽपि सममित्याह चक्षुर्गोलकादाविति। सङ्ख्यानिर्णयाधिकरणेति। "सप्तगतेर्विशेषितत्वाच्च" इत्यधिकरणेत्यर्थः। इत्यादिश्रुतीति। "इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः। तैजसानीन्द्रियाण्याहुर्देवा वैकारिका दश॥ एकादशं मनश्चात्र इत्यादिश्रुतिस्मृतिसिद्धेन्द्रियसङ्ख्या स्थिता" इति तत्रत्यभाष्यग्रन्थः। अधिकसङ्ख्यावादा इति। "चक्षुश्च द्रष्टव्यञ्च श्रोत्रञ्च श्रोतव्यञ्च घ्राणञ्च घ्रातव्यञ्च रसनञ्च रसितव्यञ्च वाक् च वक्तव्यञ्च हस्तौ चाऽऽदातव्यञ्च पादौ च गन्तव्यञ्च

---

पन्नगा इति हि व्युत्पत्तिरिति भावः। ननु भुजगानां पादेन्द्रियवत्त्वे न्यायतत्त्वे विरोध इत्याशङ्क्य तत्रत्येन्द्रियशब्दस्येन्द्रियाधिष्ठानावयवविशेषलाक्षणिकतया न विरोध इत्याह पादादित्यादिना। लक्षणाबीजभूतं मुख्यार्थभेदमाह सर्वेषामपीति। ननु सञ्चारहेतुपादेन्द्रियस्य सर्वजन्तुसाधारण्ये मनुष्यविहगादीनां सञ्चारवैषम्यं किंनिबन्धनमित्याशङ्क्याह तस्येति। पादेन्द्रियस्येत्यर्थः। विहगादीति। मनुष्यशरीरे आकाशसञ्चरणासमर्थस्यापि विहगादिकायप्रवेशे तत्सामर्थ्यदर्शनादित्यर्थः। ननु चक्षुर्गोलकादौ दृष्टसंस्थानवैकल्येऽपि दोषविशेषेण चक्षुर्ज्ञानोत्पत्तिप्रतिबन्धदर्शनात् तादृशप्रतिबन्धयोग्यं गोलकातिरिक्तमिन्द्रियमवश्यमङ्गीकार्यम्, इह तु न तथेत्याशङ्क्य प्रकृतेऽपि तत् तुल्यमित्याह चक्षुरित्यादिना। संख्यानिर्णयाधिकरणेति। "सप्तगतेर्विशेषितत्वाच्च" इत्यधिकरणेत्यर्थः। इत्यादिश्रुतिस्मृतीति। 'अतः, दशेमे पुरुषे प्राणा आत्मैकादश." इति आत्मशब्देन मनोऽभिधीयते। 'इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः,' 'तैजसानीन्द्रियाण्याहुर्देवा वैकारिका दश। एकादशं मनश्चात्र' इत्यादिश्रुतिस्मृतिसिद्धेन्द्रियसंख्या स्थिता" इति तत्रत्यभाष्यग्रन्थः। अधिकसंख्यावादा इति। "चक्षुश्च द्रष्टव्यञ्च" इत्यारभ्य, "मनश्च मन्तव्यञ्च, बुद्धिश्च बोद्धव्यञ्च, अहङ्कारश्चाहङ्कर्तव्यञ्च, चित्तञ्च चेतयितव्यञ्च"

नादिकार्यविशेषप्रयुक्ताः” इति । अणुत्वञ्च एषामुपलब्ध्ययोग्यपरिच्छिन्नपरिमाणत्वमात्रमेव; “अणवश्च” इति सूत्रोक्तमिति भाष्ये व्यक्तम् । “एते सर्व एव समाः सर्वे एवानन्ताः” इति श्रुतिस्तु उपकरणत्वसाम्यम्, “अथ यो हैतान् अनन्तान् उपास्ते” इत्युपास्यतया विहितप्राणविशेषणभूतकार्यबाहुल्यञ्चाभिप्रैति । अत एव तेषां परिच्छिन्नविचित्रपरिमाणत्वं स्थितम् । विकारशीलत्वाच्च मशकमातङ्गादिनानादेहेषु विचित्रपरिमाणत्वम् । कालभेदेन परिमाणभेदाविरोधं ज्ञाने समर्थयिष्यामः । सर्वेषाञ्च एषां स्वाधिष्ठानदोषादिरेव दोषः । सुषुप्त्याद्यवस्थास्वेव स्थावराद्यवस्थासु अदृष्टादिवशात् तत्तद्वृत्तिनिरोधतारतम्यम् । प्रबलादृष्टसहकारात् गन्धर्वयोगिप्रभृतीन्द्रियाणामतिसूक्ष्मव्यवहितविषयता । उत्पत्तेरारभ्य अदृष्टवशात् प्रतिपुरुषनियतानामपि तेषां जीववत् परकायप्रवेशे विशिष्टादृष्टान्तरवशात् कायवदेव परोपकारकत्वम् । स्वेन्द्रियैः सह सर्वत्र प्रवेशात् तेषामेव वा तत्राप्युपकारकत्वम् । मृतकायप्रवेशे हि स्वेन्द्रियैरेव तथा । जीवत्कायप्रवेशेऽपि स

---

पायुश्च विसर्जयितव्यञ्चोपस्थश्चानन्दयितव्यञ्च मनश्च मन्तव्यञ्च बुद्धिश्च बोद्धव्यञ्चाहङ्कारश्चाहङ्कर्तव्यञ्च चित्तञ्च चेतव्यञ्च” इत्यादिवादा इत्यर्थः । **न्यूनव्यपदेशास्त्विति** । “सप्त प्राणाः प्रभवन्ति तस्मादष्टौ ग्रहा अष्टावतिग्रहाः सप्त वै शीर्षण्याः प्राणा द्वाववाञ्चौ, ‘नव वै पुरुषे प्राणा नाभिर्दशमी” इत्यादिवादा इत्यर्थः । **विवक्षितेति** । जीवेन सह गमनादिकार्यविशेषविवक्षयेत्यर्थः । **भाष्ये व्यक्तमिति** । “उत्क्रान्त्यादिषु पार्श्वस्थैरनुपलभ्यमानत्वादणवश्च प्राणाः” इति भाष्योक्तेरिति भावः। ननु परिच्छिन्नपरिमाणत्वमानन्त्यश्रुतिविरुद्धमिति शङ्कां परिहरन् साम्यश्रुतेरप्यर्थमाह । **एते सर्व इति** । **उपकरणत्वसाम्यमिति** । न तु परिमाणसाम्यमित्यर्थः । ततश्च सर्वव्यापित्वं त्वगिन्द्रियस्य इन्द्रियान्तराणामतथात्वमित्याद्युपपद्यते इति भावः । **कार्यबाहुल्यञ्चेति** । कार्यबाहुल्यमेवानन्त्यम् । ततश्च बाहुल्यविशेषणविशिष्टतयोपासनार्थमुपन्यस्तानन्त्यस्यानुवादः इत्यर्थः। **मशकमातङ्गेति** । मशकशरीरानुप्रविष्टस्य मातङ्गशरीरगमने अधिकतरपरिमाणत्वं मातङ्गशरीरानुप्रविष्टस्य मशकशरीरानुप्रवेशे अल्पपरिमाणत्वञ्चोपपद्यते इति भावः । ननु परिमाणभेदे द्रव्यभेदोऽवश्यम्भावी; एकस्यैव वस्तुनः कालभेदेनापि परिमाणभेदासम्भवादित्याशङ्क्य, ‘इमामाशङ्कां बुद्धिपरिच्छेदे शमयिष्यामः’ इत्याह **कालभेदेनेति** । **स्वाधिष्ठानेति** । ततश्चान्धस्य शरीरान्तरपरिग्रहे मृतशरीरप्रवेशे वा नान्धत्वानुवृत्तिरिति भावः । **तत्तद्वृत्तिनिरोधेति** । तत्तदिन्द्रियवृत्तिनिरोधेत्यर्थः ।

---

इत्यादिवादा इत्यर्थः । **न्यूनव्यपदेशास्त्विति** । ‘सप्त प्राणाः प्रभवन्ति तस्मात्’, ‘अष्टौ ग्रहा अष्टावतिग्रहाः’, ‘सप्त वै शीर्षण्याः प्राणाः; द्वाववाञ्चौ’, ‘नव वै पुरुषे प्राणाः; नाभिर्दशमी” इत्यादिवादा इत्यर्थः । **विवक्षितेति** । जीवेन सह गमनादिकार्यविशेषविवक्षयेत्यर्थः । **भाष्ये व्यक्तमिति** । “उत्क्रान्त्यादिषु पार्श्वस्थैरनुपलभ्यमानत्वादणवश्चेति” ‘भाष्योक्तेरिति भावः । **उपकरणत्वसाम्यमिति** । न तु परिमाणसाम्यमित्यर्थः । तथाच त्वगिन्द्रियस्य सर्वशरीरव्याप्तत्वमिन्द्रियान्तराणामतथात्वञ्चोपपद्यत इति भावः । **कार्यबाहुल्यञ्चेति** । उपासनार्थं कार्यबाहुल्यरूपानन्त्यानुवाद इति भावः । **ज्ञाने** बुद्धिपरिच्छेदे ॥ **स्वाधिष्ठानदोषादिरेव दोष इति** : तेनान्धस्य परकायप्रवेशेऽपि नान्ध्यानुवृत्तिरिति भावः। **प्रतिपुरुषनियतानामपि तेषामिति** । परकीयेन्द्रियाणामेवेत्यर्थः । **विशिष्टादृष्टान्तरवशात्**=परकायप्रवेशहेतु-

एव समाधिरुचितः। स्मृतिश्च—"शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः। गृहीत्वैतानि संयाति वायुर्गन्धानिवाऽऽशयात्" ॥ इति।

मृतकायस्य च परकायव्यवहारः उपचारात्। परकायारम्भकशरीरैकदेशैः अस्थ्यादिभिः प्रविष्टस्य कायलक्षण सङ्घातः आरभ्यते। तदा च स्वशरीरं मृतमेव। मृतपरकायप्रवेशवत् पुनः प्रवेशः। अनेकशरीराधिष्ठानशक्तानां तु यथेष्टम्। शरीरविनाशे च इन्द्रियाणि आप्यायकैर्भूतैः क्षीयन्ते। शरीरान्तरे पुनरापूर्यन्ते। मुक्तपरित्यक्तानि अन्यपरिगृहीतानि अपरिगृहीतानि वा यावत्प्रलयमवतिष्ठन्ते इत्यादिकं द्रष्टव्यम्।

ननु कर्मेन्द्रियाणां शरीरेण सहोत्पत्तिविनाशौ; न पुनः शरीरान्तरगमनमस्ति। तथा हि सारे अभिहितम्—"हस्तादयोऽपि इन्द्रियाणि; जीवे देहान्तरवस्थिते उपकारकत्वाविशेषात्'

---

प्रतिपुरुषनियतानामपि तेषामिति। परकायनिष्ठानामेव तदिन्द्रियाणामित्यर्थः। शरीरं यदवाप्नोतीति। अयमर्थः यच्च शरीरमवाप्नोति यस्माच्छरीरात् उत्क्रामति। तत्रायमिन्द्रियाणां ईश्वरः एतानि इन्द्रियाणि भूतसूक्ष्मैः सह गृहीत्वा संयाति वायुर्गन्धानिवाशयात्। यथा वायुः स्रक्चन्दनकस्तूरिकाद्याशयात् तत्त स्थानात् सूक्ष्मावयवैः सह गन्धान् गृहीत्वा अन्यत्र सयाति तद्वदित्यर्थः। ननु परकायप्रवेशाभ्युपगमे एकस्यैव शरीरस्य कालभेदेनोभयशरीरत्वस्याभ्युपगन्तव्यत्वेन यावत्सत्त्वं मृतेन वा प्रविष्टेन वा अधार्यत्वादुभावपि प्रति शरीरत्वं न स्यात्। तथा परकायप्रवेशदशायां परित्यक्तस्याशिथिलस्य पूर्वावस्थस्यैव सतः कालान्तरे पुनः परिग्रहस्य स्वीकर्तव्यतया शरीरलक्षणं तत्राप्यव्याप्तम्; यावत्सत्त्वं धार्यत्वाभावादित्याशङ्कां शरीरभेदाभ्युपगमेन परिहरति मृतकायस्येत्यादिना। उपचारादिति। दग्धपटे पटव्यवहारवदिति भावः। अस्थ्यादिभिरिति। प्रविशता पुरुषेणाऽऽनीतैर्भूतसूक्ष्मैश्चेति शेषः तदा चेति। परकायप्रवेशदशायामित्यर्थः। प्रवेशवदिति। सङ्घातान्तरारम्भादिति भावः। यथेष्टमिति। शरीरद्वयाधिष्ठानेच्छायां शरीरद्वयमधितिष्ठति; इतरथा एकं त्यजतीति भावः। यावत्प्रलयमिति। इन्द्रियाणां प्रलये एव लय-

---

भूतोत्कृष्टादृष्टवशात्। स्वेन्द्रियैरेव तथेति। उपकार इत्यर्थः। उपकार इति शेषो वा। शरीरमित्यादि। यच्च शरीरमवाप्नोति, यस्माच्छरीरादुत्क्रामति, अयमिन्द्रियाणामीश्वरः एतानीन्द्रियाणि भूतसूक्ष्मैस्सह गृहीत्वा संयाति, यथा वायुराशयात् स्रक्चन्दनकस्तूरिकादिस्थानात् सूक्ष्मावयवैस्सह गन्धान् गृहीत्वाऽन्यत्र संयाति तद्वदित्यर्थः। ननु मृतकायप्रवेशस्थले तस्य शरीरस्य कञ्चिदपि प्रति शरीरत्वानुपपत्तिः; यावत्सत्त्वं केनापि धार्यत्वविरहात्। एवं परकायं प्रविशता परित्यक्तस्य शरीरस्य तद्दशायां तेन धार्यत्वविरहात् तत्र पूर्वमपि शरीरत्वानुपपत्तिः; यावत्सत्त्वं तद्धार्यत्वविरहात् इत्याशङ्क्य, तत्तत्र सङ्घातभेदाभ्युपगमाच्छरीरतयाभ्युपगतस्यसङ्घातस्य यावत्सत्त्वं धार्यत्वमस्त्येवेत्याशयेनाह मृतकायस्येत्यादिना। उपचारादीति। दग्धपटे पटव्यवहारवदिति भावः। अस्थ्यादिभिरिति। प्रविशता पुरुषेणाऽऽनीतैर्भूतसूक्ष्मैश्चेति शेषः। तदाचेति। परकायप्रवेशदशायामित्यर्थः। प्रवेशवदिति। सङ्घातान्तरारम्भादिति भावः। यथेष्टमिति। इच्छानुरोधेनैकस्यानेकस्य वा शरीरस्याधिष्ठानमित्यर्थः। यावत्प्रलयमवतिष्ठन्त इति। इन्द्रियाणां प्रलय एव लयश्रवणादिति भावः। सारेऽभिहितमिति। "हस्तादयस्तु स्थितेऽतो नेदम्" इति

इति। एवं भाष्येऽप्युक्तम्—"न सप्तैवेन्द्रियाणि ; अपि तु एकादश । हस्तादीनामपि शरीरे स्थिते जीवे तस्य भोगोपकरणत्वात् ; कार्यभेदाच्च । दृश्यते हि श्रोत्रादीनामिव हस्तादीनामपि कार्यभेद आदानादिः" इति ; "न्यूनव्यपदेशास्तु तत्र तत्र विवक्षितगमनादिकार्यविशेषप्रयुक्ताः" इति च । दीपे तु व्यक्तमेवोक्तम्, "तत्र श्रोत्रादीनि जीवेन सह शरीरान्तरगमनेऽपि गच्छन्ति । वाग्घस्तादीनि कर्मेन्द्रियाणि तु स्थिते शरीरे तेनैव सहोत्पत्तिविनाशयोगीनि उपकारकाणि" इत्यादि । अतो यादवप्रकाशवत् कर्मेन्द्रियाणां प्रतिशरीरमुत्पत्तिविनाशौ भाष्यकाराभिमतौ ॥

नैतदेवम् । "प्राणगतेश्च" इति सूत्रे, "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति । प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इत्यादिश्रुतेरुदाहृतत्वात्, "सप्त गतेः" इत्यधिकरणे, "यानि त्वितराणि । विषयाणां ग्राहकत्वेन, तेषामौपचारिकः प्राणव्यपदेशः" इति पूर्वपक्षं कृत्वा "हस्तादयस्तु स्थितेऽतो नैवम्" इति तेषामपि प्राणत्वसमर्थनाच्च । "प्राणगतेश्च" इत्यस्यैव समनन्तरे,

---

श्रवणादिति भावः । सारे अभिहितमिति । "हस्तादयस्तु स्थितेऽतो नैवम्" इति सूत्रे इति शेषः । "हस्तादयोऽपीन्द्रियाणि" इति सिद्धान्तिनः प्रतिज्ञा । तत्र युक्तिं वदति जीवे देहे स्थिते इति । अत्र स्थिते इत्युक्त्या शरीरान्तरगमने उपकारकत्वाभावः प्रतीयते इति भावः । "प्राणगतेश्च"=देहात् देहान्तरं गच्छन् जीवः शरीरारम्भकभूतसूक्ष्मपरिष्वक्त एव गच्छति । प्राणानामपि जीवेन सह गतिश्रवणात् निराश्रयाणाञ्च प्राणानां गमनासंभवादिति सूत्रार्थः । तमुत्क्रामन्तमिति । जीवमुत्क्रामन्तं मुख्यप्राणोऽनूत्क्रामति । मुख्यप्राणमुत्क्रामन्तं सर्वाणि इन्द्रियाण्यनूत्क्रामन्तीत्यर्थः । ननु उदाहृतश्रुत्या प्राणोत्क्रमणसिद्धावपि हस्ताद्युत्क्रमणं(णे) किमायातमित्याशङ्क्याह. "सप्तगतेः" इत्यधिकरणे चेति । "सप्तगतेर्विशेषितत्वाच्च" । अस्य सूत्रस्यायमर्थः— सप्तैवेन्द्रियाणि, कुतः ? "सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहिताः सप्तसप्त" इति जीवेन सह सप्तानामेव गतिश्रवणात, "यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह" इति योगदशायां पञ्चानामेव ज्ञानानीति विशेषितत्वाच्चेति । यानि त्वितराणीति । श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणबुद्धिमनोरूपेभ्यः सप्तभ्योऽतिरिक्तानि यानि उक्तिशिल्पगमनादिविषयेषु प्रवर्तमानानि वाक्पाणिपादादीन्द्रियाणि तेषु सविषयत्वात् प्राणव्यपदेशः औपचारिकः ; न तु वस्तुतः प्राणशब्दवाच्यत्वमिति पूर्वपक्षं कृत्वेत्यर्थः । "हस्तादयस्तु स्थितेऽतो नैवम्" । अयमर्थः-हस्तादयोऽपीन्द्रिया-

---

सूत्र इति शेषः । हस्तादयोपीऽन्द्रियाणीति सिद्धान्तिनः प्रतिज्ञा । तत्साधकयुक्तिर्जीवे देहान्तरवस्थित उपकारत्वविशेषादिति, अत्र जीवे देहान्तरावस्थित इत्युक्त्या देहान्तरगमन-उपकारकत्वाभावः प्रतीयत इति भावः । गमनादिकार्यविशेषप्रयुक्ता इति चेति । अनेन कतिपयेन्द्रियाणां गमनाद्यभावः प्रतीयत इति भावः । प्राणगतेश्चेति सूत्र इति । अयमत्र सूत्रार्थः—देहात् देहान्तरं गच्छन् जीवः शरीरारम्भकभूतसूक्ष्मपरिष्वक्त एव गच्छति । प्राणानामपि जीवेन सह गतिश्रवणात्, निराश्रयाणाञ्च प्राणानां गमनासंभवादिति। तमुत्क्रामन्तमिति । जीवमुत्क्रामन्तं मुख्यः प्राणोऽनूत्क्रामति ; मुख्यप्राणमुत्क्रामन्तं सर्वाणीन्द्रियाण्यनूत्क्रामन्तीत्यर्थः । अत्र बहुवचनान्तप्राणशब्दस्येन्द्रियपरत्वं दर्शयितुमाह × सप्तगतेरित्यधिकरण इति । प्राणत्वसमर्थनात् = प्राणशब्दवाच्यत्वसमर्थनात् ।

---

× वाचोऽत्र गतिविषये इन्द्रियसंख्याधिकरणश्रुतप्रकाशिकायामन्यमतनिरासभागो द्रष्टव्यः ।

"अग्न्यादिगतिश्रुतेरिति चेन्न; भाक्तत्वात्" इति सूत्रे भाष्यम्—"यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वायुं प्राणश्चक्षुरादित्यम् इत्यादिना प्राणानां जीवमरणकाले अग्न्यादिषु अप्ययश्रवणात् न तेषां जीवेन सह गमनमिति गतिश्रुतिरन्यथा नेयेति चेन्न; भाक्तत्वात् अग्न्यादिष्वप्ययश्रवणस्य" इत्यादिकम्। अतः कर्मेन्द्रियस्य वाचोऽत्र गतिरभ्युपेतेत्युपलभ्यते। ननु अन्येषामपि सममेव। सारेऽपि उक्तम्, "ज्ञानानां गतिश्रवणं विशेषणञ्च तेषां प्राधान्यात्" इति। दीपेऽपि, "ज्ञानानामेव गतिश्रवणं योगकाले विशेषणञ्च ज्ञानेन्द्रियाणां मनसः तत्प्रवृत्तिरूपबुद्धेश्च प्राधान्यात्" इत्यादि। न च आहङ्कारिकेन्द्रियवादिनः प्रतिशरीरमिन्द्रियोत्पत्तिविनाशाभ्युपगम उपपद्यते। पाण्याद्यधिष्ठानानि तु नेन्द्रियाणि इति तदुत्पत्तिलयोपपत्तिः॥ कथं तर्हि श्रोत्रादीनीत्यादेर्निर्वाहः॥? इत्थम्। परमतवत् प्रतिशरीरमुत्पत्तिविनाशाभ्युपगमेऽपि तेषामिन्द्रियत्वं सिध्यतीति कृत्वा, "हस्तादयस्तु स्थितेऽतो नैवम्" इति सूत्रस्य योजनान्तराभिप्रायेणैवमुक्तम्। अत एकादशेन्द्रियाण्यपि शरीरान्तरेष्वपि अनुवर्तन्ते इति भाष्यकाराभिप्रेतमिति प्रतीमः।

एवमेषामेव एतावतामेव एवंस्वभावानामेव आगमेनैव सिद्धत्वात् सौगतवैशेषिकचार्वाकप्रभृ-

---

त्येव। देहे स्थिते जीवे तेषामप्युपकारकत्वाविशेषात्। अतो नैवम्=इन्द्रियाणि सप्तैवेति नेत्यर्थः॥ तदन्येषामपीति। पाण्यादीनामपीत्यर्थः। विशेषणञ्चेति। "यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह" इति ज्ञानशब्देन विशेषणञ्चेत्यर्थः। आहङ्कारिकेन्द्रियवादिन इति। शब्दतन्मात्रसमकालोत्पत्तिलयकत्वादिन्द्रियाणामिति भावः। ननु वाक्पाण्यादीनां शब्दतन्मात्रसमकालोत्पत्तिकत्वे इदानीं पाणिपादाद्यनुत्पत्त्या शरीरारम्भ एव न स्यादित्याशङ्क्य शब्दतन्मात्रसमकालोत्पत्तिकत्वमिन्द्रियरूपाणामेव पाण्यादीनाम्; न तु तदधिष्ठानानामित्यभिप्रयन्नाह पाण्याद्यधिष्ठानानि त्विति। कथं तर्हीति। पूर्वोदाहृतदीपवाक्यनिर्वाहः कथमित्यर्थः। परमतवदिति। यादवप्रकाशमतवदित्यर्थः। योजनान्तरेति। भाष्यसारयोः, "स्थिते" इत्येतत् जीवविशेषणतया व्याख्यातम्; दीपे तु शरीरविशेषणतयेति भावः।

एषामेवेति। ज्ञानेन्द्रियकर्मेन्द्रियाणामित्यर्थः। अनेनावधारणेन स्त्रीन्द्रियपुरुषेन्द्रियकल्पनाव्युदासः। एतावतामेवेति। अवधारणेन कर्मेन्द्रियपरित्यागव्युदासः। एवंस्वभावानामेवेति। अनेन शरीर-

---

विशेषणञ्चेति। "यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह" इति ज्ञानशब्देन विशेषणञ्चेत्यर्थः। आहङ्कारिकेन्द्रियवादिन इति। शब्दतन्मात्रसमकालोत्पत्तिलयकत्वादिन्द्रियाणामिति भावः। तदुत्पत्तिलयोपपत्तिरिति। शरीरेण सहेन्द्रियाधिष्ठानभूतभौतिकपाण्याद्युत्पत्तिलयोपपत्तिरित्यर्थः। तेषामनिन्द्रियत्वादिति भावः। श्रोत्रादीनीत्यादेरिति। दीपवाक्यस्येति शेषः। परमतवत्=यादवप्रकाशमतवत्। योजनान्तरेति। भाष्यसारयोः, 'स्थित' इत्येतत् जीवविशेषणतया योजितम्; दीपे तु शरीरविशेषणतयेति भावः।

एषामेवेति। ज्ञानेन्द्रियकर्मेन्द्रियाणामेवेत्यर्थः। अनेनावधारणेन स्त्रीन्द्रियपुरुषेन्द्रिय-कल्पनाव्युदासः। एतावतामेवेति। न तु न्यूनानां नाप्यधिकानामित्यर्थः। अनेन कर्मेन्द्रिय-परित्यागस्य बुद्ध्यहङ्काराधिकेन्द्रियकल्पनायाश्च व्युदासः। एवंस्वभावानामेवेति। शब्दतन्मात्र-

तीनां स्त्रीन्द्रियपुरुषेन्द्रियादिकल्पनम्, कर्मेन्द्रियपरित्यागः, एकेन्द्रियवादः, तत्रापि त्वगिन्द्रियैकस्वीकारः, शरीरस्यैवेन्द्रियत्वम्, कर्मेन्द्रियाणां शरीरोत्पत्तिविनाशौ, मनोविभुत्वनित्यत्वतैजसत्वनिर्मनस्कत्वादीनि राजसाहङ्कारजन्यत्वभौतिकत्वादीनि अन्यान्यपि प्रलपितानि अनादरणीयानि। युक्तिबाधादयश्च यथासंभवमुन्नेया इति ॥

अथ तन्मात्रादिसृष्टिः। भूतानामव्यवहितसूक्ष्मावस्थाविशिष्टं द्रव्यं तन्मात्रम्। दधिरूपेण परिणम-

---

समकालोत्पत्तिविनाशत्वादिव्युदासः। **स्त्रीन्द्रियेति**। इन्द्रियेष्वेव स्त्रीपुंनपुंसकविभागपरिकल्पनमित्यर्थः। **एकेन्द्रियेति**। एकैकेषु शरीरेष्वेकैकमेवेन्द्रियम्; प्रदेशभेदैस्तु रूपादिप्रकाशनशक्तिनियमः; धर्मिकल्पनातो वरं धर्मकल्पनेति न्यायात्। देहव्यापिनः स्पर्शनेन्द्रियस्य करतलप्रकोष्ठनेत्रादिषु स्पर्शग्रहणशक्तिवैषम्यदर्शनादिति बाह्यैकदेशिनो मन्यन्ते इति भावः। **मनोविभुत्वेति**। ज्ञानासमवायिकारणसंयोगाश्रयत्वात् स्पर्शशून्यद्रव्यत्वाद्वा विभुत्वम्। अत एव नित्यत्वञ्चेति केचित्। 'तैजसानि इन्द्रियाण्याहुः' इति स्मृत्यनुसारात् तेजोमयत्वं केचिदाचक्षते। केचित्, "तैजसानीन्द्रियाण्याहुः" इत्यत्र तैजसशब्दस्य तैजसाख्यराजसाहङ्कारकार्यपरत्वं मन्यमाना भोजराजप्रभृतयो राजसाहङ्कारकार्यं मन इत्याचक्षते। केचित्, "अन्नमयं हि सोम्य मनः" इति श्रुत्यनुसारात् पार्थिवत्वमाचक्षते। अनन्यथासिद्धमनस्साधकप्रमाणाभावात्, सुखादिप्रतीतेश्च स्वप्रकाशतयाऽप्युपपत्तेः, स्मृत्यादेश्चाऽऽत्मनो नाडीविशेषसम्बन्धादेवोपपत्तेर्न मनस्तत्त्वमेव कल्पनीयमिति केचिदाचक्षते। एषां पक्षाणामागमबाधो व्यक्तः। युक्तिबाधश्च यथासम्भवमुन्नेयः ॥

---

समकालोत्पत्तिलयादिस्वभावानामेवेत्यर्थः। अनेन शरीरसमकालोत्पत्तिलयत्वादिव्युदासः। **स्त्रीन्द्रियेति**। इन्द्रियेष्वेव स्त्रीपुंनपुंसकभेदपरिकल्पनमित्यर्थः। **एकेन्द्रियेति**। एकैकेषु शरीरेष्वेकैकेन्द्रियमेव; इन्द्रियप्रदेशभेदैस्तु रूपादिप्रकाशनशक्तिनियमः; धर्मिकल्पनातो वरं धर्मकल्पनमिति न्यायात्, देहव्यापिनः स्पर्शनेन्द्रियस्य करतलप्रकोष्ठनेत्रादिषु स्पर्शग्रहणशक्तिवैषम्यदर्शनादिति बाह्यैकदेश्यभिमतैकेन्द्रियवाद इत्यर्थः। **मनोविभुत्वेत्यादि**। मनो विभु ज्ञानासमवायिकारणसंयोगाश्रयत्वात्, स्पर्शनशून्यद्रव्यत्वाद्वा आत्मवदित्यनुमानेन मनसो विभुत्वसिद्धिः; उक्तहेतुभ्यां विभुत्वेन च नित्यत्वसिद्धिरिति **केचन**। "तैजसानीन्द्रियाण्याहुः" इति स्मृत्यनुसारात् तेजोमयत्वमित्यन्ये; "तैजसानीन्द्रियाण्याहुः" इत्यत्र तैजसशब्दस्य तैजसाख्यराजसाहङ्कारकार्यपरतया मनसो राजसाहङ्कारकार्यत्वमेवेति **भोजराजप्रभृतयः**। "अन्नमयं हि सोम्य मनः" इति श्रुत्यनुसारात् पार्थिवत्वमेव मनस इत्यन्ये; अनन्यथासिद्धमनस्साधकप्रमाणाभावात्, सुखादिप्रतीतेश्च स्वप्रकाशतयाऽप्युपपत्तेः, स्मृत्यादेश्चात्मनो नाडीविशेषसंबन्धादेवोपपत्तेर्मनस्तत्त्वमेव न कल्पनीयमिति **केचिदाचक्षते**। एषां पक्षाणामागमबाधादिभिरनादरणीयत्वमेवेत्यर्थः।

अथ **तन्मात्रादिसृष्टिरिति**। अथ कर्मेन्द्रियमित्यत्रेवार्थोऽवसेयः। तन्मात्रसामान्यलक्षणमाह **भूतानामिति**। स्वप्रागभावाधिकरणसमयप्रागभावाधिकरणत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्व-स्वप्रागभावाधिकरणत्वस्वसामानाधिकरण्यैतत्त्रितयसंबन्धेन भूतत्वा-

मानस्य पयसो मध्यमावस्थावत् भूतरूपेण परिणममानस्य द्रव्यस्य ततःपूर्वा काचित् अवस्था तन्मात्रा। तद्विशिष्टमपि द्रव्यं तन्मात्रमित्युच्यते। तदेव च भूतोपादानमिति न शब्दादिगुणमात्रात् भूतसृष्टिः।

विशिष्टशब्दादिविषयाधिकरणं भूतम्। अत्रापि प्राकृताप्राकृतविवेकः पूर्ववत्। तन्मात्राणि च भूतानि च प्रत्येकं पञ्चधा; शब्दतन्मात्राकाशादिभेदात्। तत्र तामसाहङ्काराकाशयोर्मध्यमावस्थाविशिष्टं द्रव्यं शब्दतन्मात्रम्। एवमुत्तरोत्तरतन्मात्रेष्वपि तत्तद्भूतद्वयमध्यमअवस्थाविशिष्टत्वम्, अविशिष्टतत्तद्गुणाश्रयत्वम्, तत्तद्भूतोपादानत्वञ्च लक्षणमूह्यम्—

---

विशिष्टशब्दादिविषयेति। तन्मात्रव्यावृत्त्यर्थं विशिष्टेत्युक्तम्। विशिष्टत्वं विशेषवत्त्वम्। तन्मात्रावस्थायां हि, "तन्मात्राण्यविशेषाणि अविशेषास्ततो हि ते। नापि शान्ता न घोरास्ते न मूढाश्चाविशेषिणः" इत्युक्त्या अनुकूलप्रतिकूलोदासीनवेदनीयत्वरूपशान्तत्वघोरत्वमूढत्वरूपविशेषशून्यत्वात् न तत्रातिव्याप्तिरिति भावः। यद्वा तन्मात्रावस्थायां तद्गतशब्दादिगुणानां कत्वादिविशेषशून्यत्वादिति भावः। तत्तद्भूतद्वयेति। आकाशवायुमध्यमावस्थाविशिष्टत्वं स्पर्शतन्मात्रत्वम्। एवमुत्तरत्रापि द्रष्टव्यम्। अविशिष्टेति। भूतव्युदासार्थं अविशिष्टेत्युक्तम्। पूर्वपूर्वेति। शब्दतन्मात्रमहङ्कारा

---

वस्थाविशिष्टावस्थावत्त्वं तन्मात्रलक्षणमित्यर्थः। अहङ्कारादिवारणाय प्रथमसंबन्धस्य, आकाशत्वविशिष्टवायुत्वमादाय वायावतिव्याप्तिवारणाय द्वितीयसंबन्धस्य, कालादिवारणाय सामानाधिकरण्यस्य च निवेशः। सूक्ष्मत्वोत्कीर्तनं स्वरूपाख्यानमात्रम्; न तु तदपि लक्षणशरीरप्रविष्टम्, प्रयोजनाभावात्। लक्षणवाक्ये द्रव्यपदं सामानाधिकरण्यरूपतृतीयसंबन्धलाभाय। इदमुपलक्षणम्—सूक्ष्मशब्दादिमत्त्वमपि तल्लक्षणं बोद्धव्यम्। सूक्ष्मत्वं चोद्भूतत्वाभावः। उद्भूतत्वं च शक्तिविशेषः। अनुगृहीतं हि सर्वार्थसिद्धौ, 'आगमेन विना सिद्धिस्तन्मात्राणां च दुर्वचा। उद्भवानुद्भवाद्यैस्तु लोकेसूक्ष्मार्थकल्पना' इति। भूतलक्षणमाह विशिष्टेति। विशिष्टत्वं विशेषवत्त्वम्। इदं च तन्मात्रवारणाय। तन्मात्रेष्वपि हि शब्दादिमत्त्वमस्त्येव; परन्तु, "तन्मात्राण्यविशेषाणि अविशेषास्ततो हि ते नापि शान्ता न घोरास्ते न मूढाश्चाविशेषिणः" इत्युक्त्या अनुकूलप्रतिकूलोदासीनवेदनीयत्वरूपशान्तत्वघोरत्वमूढत्वात्मकविशेषरहिताः तदीयशब्दादय इति न तत्रातिव्याप्तिः। अथवा शब्दत्वादिव्याप्यकत्वादिकं वा विशेषः; तन्मात्रानिष्ठशब्दादौ तदभावान्नातिव्याप्तिः। यद्वा विशिष्टत्वं स्थूलत्वापरपर्यायोद्भूतत्वं शक्तिविशेषरूपम्। तन्मात्रनिष्ठशब्दादौ तदभावान्नातिव्याप्तिः। अत्र च विशिष्टशब्दवत्त्वमात्रमेव भूतलक्षणम्। न तत्र स्पर्शाद्यन्तर्भावः; प्रयोजनाभावादिति बोद्धव्यम्। शब्दतन्मात्राकाशादिभेदादिति। शब्दतन्मात्रस्पर्शतन्मात्ररूपतन्मात्ररसतन्मात्रगन्धतन्मात्रभेदात् तन्मात्राणि पञ्चधा, आकाशवायुतेजोजलपृथिवीभेदात् भूतानि पञ्चधेत्यर्थः। तामसेति तामसाहङ्काराव्यवहितोत्तर-आकाशाव्यवहितपूर्वावस्थाविशिष्टत्वं शब्दतन्मात्रलक्षणमित्यर्थः। एवमित्यादीति। आकाशत्वनाशरूपवायुत्वप्रागभावरूपावस्थावत्त्वं स्पर्शतन्मात्रलक्षणमित्यादिकं द्रष्टव्यम्। अविशिष्टतत्तद्गुणाश्रयत्वमिति। अनुद्भूतशब्दवत्त्वं शब्दतन्मात्रलक्षणम्। आकाशवारणायानुद्भूतेति। यद्यपि स्पर्शतन्मात्रेऽप्याकाशोपादानके शब्दवत्त्वमा-

साङ्ख्यास्तु, "पञ्चापि तन्मात्राणि साक्षात् तामसाहङ्कारोत्पन्नानि। तत्र शब्दतन्मात्रमाकाशारम्भकम्। इतराणि तु तन्मात्राणि पूर्वपूर्वतन्मात्रसहकृतानि उत्तरोत्तरभूतारम्भकाणि" इत्याहुः। तदसत्; "आकाशाद्वायुः" इत्याद्यनन्यथासिद्धोपादानक्रमविशेषाभिधानदर्शनात्। [illegible]

---

स्पर्शतन्मात्रं वाय्वारम्भकम्। तदुभयसहकृतं रूपतन्मात्रं तेजआरम्भकमित्यादिक्रमेण [illegible]। न च उत्तरोत्तरस्य पूर्वपूर्वसहितस्यारम्भकत्वम्; न तु पूर्वस्योत्तरसाहित्यमित्यत्र किं नियामकमिति वाच्यम्; शब्दस्य वाय्वादावुपलम्भात् वाय्वाद्युत्तरोत्तरधर्मस्य पूर्वपूर्वत्रोपलम्भाभावात्। ततश्च तन्मात्रक्रमे भूतोपादानम्; न तु भूतान्तरस्य भूतान्तरोपादानत्वमिति वदन्तीति भावः। भगवत्पराशरेति।

"भूतादिस्तु विकुर्वाणः शब्दतन्मात्रकं ततः। ससर्ज शब्दतन्मात्रमाकाशं शब्दलक्षणम् ॥
आकाशश्च विकुर्वाणः स्पर्शमात्रं ससर्ज ह। बलवान् अभवद्वायुस्तस्य स्पर्शो गुणो मतः ॥
ततो वायुर्विकुर्वाणो रूपमात्रं ससर्ज ह।" इत्यादीनि श्रीविष्णुपुराणवचनानि. तथा —
"शब्दतन्मात्रमभवत् तस्माकाशमजीजनत्। स्पर्शमात्रं तथाकाशात् तस्माद्वायुरजायत ॥
रूपमात्रमभूद्वायोस्तस्मादग्निरजायत। रसमात्रं तु जज्ञेऽग्नेस्तस्मादापः प्रजज्ञिरे ॥
गन्धतन्मात्रमद्भ्योऽपि गन्धमात्रात् तथा मही। शब्दैकगुण आकाशः शब्दस्पर्शगुणोऽनलः ॥

---

वश्यकम्। परन्तु तन्मात्रगुणानामुद्भवासंभवात् तदीयशब्दस्याप्यनुद्भूतत्वमेव इत्थंचोक्तलक्षणस्य स्पर्शतन्मात्रे अतिव्याप्तिः—तथापि स्पर्शशून्यत्वमपि लक्षणे निवेश्यमिति न दोषः। एवं रूपशून्यत्वे सति अनुद्भूतस्पर्शवत्त्वं स्पर्शतन्मात्रलक्षणम्। रूपतन्मात्रवारणाय सत्यन्तम्। आकाशादिवारणाय विशेष्यम्। वायुवारणाय तत्रानुद्भूतेति। एवं रसशून्यत्वे सति अनुद्भूतरूपवत्त्वं रूपतन्मात्रलक्षणम्। रसतन्मात्रवारणाय सत्यन्तम्। वाय्वादिवारणाय विशेष्यम्। तेजोवारणायानुद्भूतेति। एवं गन्धशून्यत्वे सति अनुद्भूतरसवत्त्वं रसतन्मात्रलक्षणम्। गन्धतन्मात्रवारणाय सत्यन्तम्। तेजःप्रभृतिवारणाय विशेष्यम्। जलवारणायानुद्भूतेति। अनुद्भूतगन्धवत्त्वं गन्धतन्मात्रलक्षणम्। पृथिवीवारणायानुद्भूतेत्युक्तम्। एवमाकाशोपादानत्वं शब्दतन्मात्रस्य, वायूपादानत्वं स्पर्शतन्मात्रस्य, तेजउपादानत्वं रूपतन्मात्रस्य, जलोपादानत्वं रसतन्मात्रस्य, पृथिव्युपादानत्वं गन्धतन्मात्रस्य च लक्षणमुह्यमित्यर्थः। पूर्वपूर्वतन्मात्रसहकृतानीति। शब्दतन्मात्रसहकृतं स्पर्शतन्मात्रं वाय्वारम्भकम्, शब्दतन्मात्रस्पर्शतन्मात्रोभयसहकृतं रूपतन्मात्रं तेजआरम्भकम्, शब्दस्पर्शरूपतन्मात्रत्रितयसहकृतं रसतन्मात्रं जलारम्भकम्, इतरतन्मात्रचतुष्टयसहकृतं गन्धतन्मात्रं पृथिव्यारम्भकमित्यर्थः। पूर्वपूर्वतन्मात्रगुणानामुत्तरोत्तरभूतेषु दर्शनानुरोधेन तेषां सहकारित्वस्वीकारः। भगवत्पराशरेत्यादि। "भूतादिस्तु विकुर्वाणः शब्दतन्मात्रकं ततः। ससर्ज शब्दतन्मात्रमाकाशं शब्दलक्षणम् ॥ आकाशश्च विकुर्वाणः स्पर्शमात्रं ससर्ज ह। बलवान् अभवद्वायुस्तस्य स्पर्शो गुणो मतः ॥ ततो वायुर्विकुर्वाणो रूपमात्रं ससर्ज ह" इत्यादि श्रीविष्णुपुराणवचनानि; तथा, "शब्दतन्मात्रमभवत् तस्माकाशमजीजनत्। स्पर्शमात्रं तथाऽऽकाशात् तस्माद्वायुरजायत ॥ रूपमात्रमभूद्वायोस्तस्मादग्निरजायत ॥ रसमात्रं तु जज्ञेऽग्नेस्तस्मादापः प्रजज्ञिरे ॥ गन्धतन्मात्रमद्भ्योऽपि गन्धमात्रात् तथा मही" इत्यादिभग

शराभिरिदिश्च प्रपञ्चितत्वात् ॥ "तन्मात्राणि भूतादौ" इति श्रुतिस्तु न साक्षात् यौगपद्येन अप्ययपरा; 'पृथिव्यप्सु प्रलीयते' इत्यादिपूर्ववाक्यावरोधात् । "आकाशाद्वायु" इत्यादिश्रुत्यन्तरविरोधाच्च ।

---

शब्दस्पर्शौ तथा रूपं तद्गुणान्ग्रहणाह्नः । शब्दस्पर्शौ रसो रूपं चातुर्गुण्यमपां स्मृतम् ॥

शब्दस्पर्शौ रसो रूपं गन्धः पञ्चगुणा मही ॥" इत्यादिभगवच्छास्त्रवचनानि च अनुसन्धेयानि ॥

ननु भवत्पक्षे शब्दतन्मात्रस्यैव भूतादिनामकतामसाहङ्कारोपादानकत्वे, "तन्मात्राणि भूतादौ लीयन्ते" इति श्रुतिः कुप्येदित्याशङ्कयाह तन्मात्राणि भूतादाविति श्रुतिस्त्विति । ननु भूतानां

---

वच्छास्त्रवचनानि चात्रानुसन्धेयानि । शब्दतन्मात्रस्य भूतादिनामकतामसाहङ्कारोपादानकत्वम् , इतरेषां तन्मात्राणां पूर्वपूर्वमुपादानकत्वमेवेत्यङ्गीकारे, "तन्मात्राणि भूतादौ लीयन्ते" इति श्रुतिविरोधः ; तत्र तन्मात्राणीति बहुवचनादविशेषेण सर्वेषां तन्मात्राणां भूतादौ लयप्रतीतेः। न ह्यनुपादाने लयः संभवतीत्यत आह तन्मात्राणीति । न साक्षाद्यौगपद्येनाप्ययपरेति । अयं भावः—भूतादौ लीयन्त इत्यनेन भूताद्यधिकरणकनाशप्रतियोगित्वमेव शब्दतो लभ्यते । तच्च स्पर्शतन्मात्रादीनां भूताद्युपादानकत्वाभावेऽपि तेष्वक्षतमेव, जलत्वावस्थाया इव तन्नाशरूपरसतन्मात्रत्वावस्थायाः तन्नाशरूपतेजस्त्वाद्यवस्थायाश्च गन्धतन्मात्रनाशरूपत्वात् । एवं तेजस्त्वाद्यवस्थाया इव तन्नाशरूपरूपतन्मात्रत्वाद्यवस्थाया अपि रसतन्मात्रनाशरूपत्वमित्येवंरीत्या भूतादित्वावस्थायाः सर्वतन्मात्रनाशरूपत्वात् । प्रतियोगिनोऽपि नाशनाशं प्रति प्रतियोगित्वावश्यम्भावात् । अन्यथा नाशनाशदशायां प्रतियोग्युन्मज्जनप्रसङ्गात् । अत एव हि नैयायिकैः प्रागभावनाशात्मकप्रतियोगिनो नाशं प्रति प्रागभावस्यापि प्रतियोगित्वमङ्गीक्रियते ; यदि पुनः उक्तश्रुत्या तन्मात्राणां भूतादौ युगपदेव साक्षाल्लयः प्रतीयेत, तदा विरोधः स्यात् , भूतादित्वस्य शब्दतन्मात्रं प्रत्येव साक्षाल्लयरूपत्वात् गन्धतन्मात्रं प्रत्यतथात्वात् , तत्प्रतियोगिकसाक्षाल्लयत्वं हि तन्नाशप्रतियोगिकत्वे सति तन्नाशत्वम् । न ह्यत्र साक्षात्त्वबोधकं किञ्चित् पदमस्ति प्रकृतीयं वियदादिकं प्रकृतौ प्रलीनमित्यादिव्यवहारसत्त्वेन साक्षान्नाशस्यैव लीधात्वर्थत्वमित्यङ्गीकारायोगात् । 'पृथिव्यप्सु प्रलीयते' इत्यादिवत् लडर्थाविवक्षया भूतादौ घटो लीयत इति व्यवहारस्येष्टत्वात् । अतो न विरोध इति । यद्यपि शब्दतन्मात्रमिन्द्रियाणि चाहङ्कारे लीयन्त इति साक्षाद्यौगपद्येनाप्ययपरतयाऽपि प्रयोगोऽस्ति—तथापि तत्र साक्षात्त्वयौगपद्ययोरर्थापत्त्यैव भानम् , सिद्धान्ते अर्थापत्तिलभ्यस्यापि शब्दबोधे भानाङ्गीकारात् । अत्र च साक्षात्त्वयौगपद्ये अन्तरा इह परम्परायाः कालभेदस्य चानुक्तिरनुपपन्नेत्यर्थापत्तिसत्त्वात् । इत्थं च प्रकृते परम्परायाः कालभेदस्य च ग्राहकप्रमाणसद्भावादर्थापत्त्याऽपि साक्षात्त्वयौगपद्ययोर्भानं न भवतीत्याह पृथिव्यप्सु प्रलीयत इत्यादिना । पूर्ववाक्यविरोधादिति । सर्वेषां तन्मात्राणां भूताद्यधिकरणकसाक्षाल्लयप्रतियोगित्वे, "पृथिव्यप्सु प्रलीयते" इत्यादिना प्रतिपाद्यमानस्य पृथिव्यादौ जलाद्यधिकरणकलयप्रतियोगित्वस्यासंभवात् । गन्धतन्मात्रस्याप्सु लये हि तत्संभवः । पृथिव्या गन्धतन्मात्रे लयो हि सर्वसम्प्रतिपन्न इति भावः । श्रुत्यन्तरविरोधाच्चेति । "आकाशाद्वायु" इत्यादिना प्रतीयमानस्य वाय्वादावाकाशाद्युपादानकत्वस्य साक्षाद्वाय्वाद्युपादानभूतस्पर्शतन्मात्रादेराकाशाद्युपादानकत्व-

तथात्वे हि, "पृथिवी गन्धतन्मात्रे लीयते । आपो रसतन्मात्रे लीयन्ते ।" इत्यादिक्रममुक्त्वा "तन्मात्राणि भूतादौ" इति वक्तव्यम् । न चेयं श्रुतिरत्यन्तक्रमनिबन्धनपरा "आकाश इन्द्रियेषु । इन्द्रियाणि तन्मात्रेषु" इति भवतामपि अनभिमतक्रमविशेषापातप्रतीतेः । एवम् "अष्टौ प्रकृतयः

---

भूतान्तरोपादानत्वे, "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः ।" इति साङ्ख्यश्लोकसमानार्था, "अष्टौ प्रकृतयः षोडश विकाराः" इति श्रुतिः पीड्येत ; तस्य साङ्ख्यश्लोकस्य हि अयमर्थः — मूलप्रकृतिः न कस्यापि विकृतिः। महदहङ्कारपञ्चतन्मात्रलक्षणमहदाद्याः सप्तापि किञ्चिदपेक्षया प्रकृतयः किञ्चिदपेक्षया विकृतयश्च भवन्ति । ज्ञानेन्द्रियाणि पञ्च, कर्मेन्द्रियाणि पञ्च, भूतानि पञ्च, मन इत्येवंरूपाः षोडशापि पदार्था विकारा एव; न कस्यापि प्रकृतयः । पुरुषस्तु न प्रकृतिः, न विकृतिरिति । ततश्च, "अष्टौ प्रकृतयः षोडश विकाराः" इति श्रुतेरप्येतच्छ्लोकसमानार्थत्वात् सा श्रुतिर्भूतानामुपादानत्वे बाध्येतेत्याशङ्क्याह **एवमष्टाविति । यथा कथञ्चिदिति**, "मनो बुद्धिरहङ्कारः खानिलाग्निजलानि भूः । एताः प्रकृतयस्त्वष्टौ विकाराः षोडशापरे ॥ श्रोत्राक्षिरसनाघ्राणं त्वक् च सङ्कल्प एव च । शब्दरूपरसस्पर्शगन्धाः कर्माणि पायवः ॥ उपस्थपादाविति च विकाराः षोडश

---

मन्तरा असंभवात् स्पर्शतन्मात्रादीनामाकाशाद्युपादानकत्वावश्यकत्वे साक्षादनुपादाने भूतादौ स्पर्शतन्मात्रादीनां साक्षाल्लयासंभवादिति भावः । प्रमाणान्तराविरोधेऽपि तात्पर्यसत्त्व एव शाब्दबोधेऽर्थपत्त्या पदार्थभानसंभवः, इह तु साक्षात्त्वयौगपद्यभाने तात्पर्यमपि दुर्वचमित्याह **तथात्वे हीति** । साक्षाद्यौगपद्ये नाप्ययपरत्वे हीत्यर्थः। **इति वक्तव्यमिति** । अतो **न साक्षाद्यौगपद्ये नाप्ययपरेति** पूर्वेण संबन्धः । नन्वाकाशादीनां स्पर्शतन्मात्राद्युपादानत्वस्वीकारे, "अष्टौ प्रकृतयः षोडश विकाराः" इति श्रुतिविरोधः ; प्रकृतिमहदहङ्काराणां तन्मात्रपञ्चकस्याकाशादिभूतचतुष्टयस्य च प्रकृतित्वात्, 'द्वादश प्रकृतयो द्वादश विकारा इत्येव वक्तव्यत्वात् । सांख्यमते तु भूतानां प्रकृतित्वविरहेण, अष्टौ प्रकृतयः षोडश विकारा इत्येतत् सम्यगुपपद्यते । उक्तं हि तैः, "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयस्सप्त । षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः" इतीत्याशङ्क्याऽऽह **एवमत्यादि । यथाकथञ्चिन्नयेति** । अयं भावः—"अष्टौ प्रकृतयः षोडश विकाराः शरीरे तस्य" इति हि श्रुतिः। इयं च न चतुर्विंशतेस्तत्त्वानां प्रकृतिविकृतिभावेन भेदप्रतिपादनपरा ; किन्त्वव्यक्तमहदहङ्काराणां भूतपञ्चकस्य च शरीरारम्भकतया प्रकृतित्वम्, शब्दादिपञ्चविषयाणामेकादशेन्द्रियाणां च शरीराश्रितत्वेन विकारत्वमित्येवम्परैव ; शरीरे तस्येत्येतत्स्वारस्यानुरोधात्, उपबृंहणानुरोधाच्च । उपबृंहिता हीयं श्रुतिः **मोक्षधर्मे** जनकयाज्ञवल्क्यसंवादे, "अष्टौ प्रकृतयः प्रोक्ता विकाराश्चैव षोडश । अव्यक्तञ्च महांश्चैव तथाऽहङ्कार एव च ॥ पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् । एताः प्रकृतयस्त्वष्टौ विकारानपि मे शृणु । श्रोत्रं त्वक् चैव चक्षुश्च जिह्वा घ्राणं च पञ्चमम्। वाक् च हस्तौ च पादौ च पायुर्मेढ्रं तथैव च । शब्दस्पर्शौ च रूपञ्च रसो गन्धस्तथैव च । एते विशेषा राजेन्द्र महाभूतेषु पञ्चसु ॥ दशेन्द्रियाण्यर्थतानि सविशेषाणि मैथिल । मनः षोडशमित्याहुरध्यात्मगतिचिन्तकाः" इति ॥ एवं **यमस्मृतौ**, "मनो बुद्धिरहङ्कारः खानिलाग्निजलानि भूः । एताः प्रकृतयस्त्वष्टौ विकाराः षोडशापरे ॥ श्रोत्राक्षिरसनाघ्राणं त्वक् च संकल्प एव च ।

षोडश विकाराः" इति श्रुतिरपि यथाकथञ्चित् नेया ।

अत उक्तस्य शब्दतन्मात्रलक्षणस्य नातिव्याप्तिः । सहोत्पत्तावपि समानकालीनत्वमेव; न तु आकाशाहङ्कारापेक्षया स्पर्शतन्मात्रत्वादीनां मध्यमावस्थात्मकत्वमिति नातिव्याप्तिः ॥

(आकाशद्रव्यनिरूपणम्)

अस्पर्शत्वे सति विशिष्टशब्दाधारत्वं श्रोत्राप्यायकत्वञ्च आकाशलक्षणम् । अयञ्च अवकाश-

---

यमस्मृत्यादिवचनानुसारेण तदर्थो वर्णनीय इति भावः ।

उक्तस्येति तामसाहङ्काराकाशमध्यमावस्थाविशिष्टद्रव्यमित्यस्य लक्षणस्येत्यर्थः । मध्यमावस्थात्मकत्वमिति अहङ्कारोपादेयत्वे सति आकाशोपादानत्वस्य तत्राभावादिति भावः ॥

अस्पर्शत्वे सतीति । वाय्वादावतिव्याप्तिवारणार्थं सत्यन्तम् । न च वाय्वादेः शब्दाधारत्वाभावादेव नातिव्याप्तिरिति वाच्यम्; शब्दः पञ्चभूताश्रित इति वक्ष्यमाणत्वात् । प्रकृत्यादिव्यावृत्त्यर्थं शब्दाधारत्वमित्युक्तम्; शब्दतन्मात्रे अतिव्याप्तिवारणार्थं विशिष्टेत्युक्तम् । ननु आकाशस्य अवकाशप्रदानरूपोपकारहेतुत्वं न संभवति; आकाशशून्य-कुक्षिप्रदेशेऽपि भूतसूक्ष्मयुक्तस्य परमपदं जिगमिषोः गत्यादिश्रवणात् अवकाशस्यान्यत्रापि सत्त्वादित्याशङ्कय शास्त्रबलादभ्युपेयार्थस्य कुतर्क[त ?]प्रतिक्षेपासम्भवात्

---

शब्द परसम्पर्शगन्धवाक्पाणिपायवः । उपस्थपादाविति च विकाराः षोडश स्मृताः । चतुर्विंशतिमित्येतत् ज्ञानमाहुर्मनीषिणः" इति । अत्र प्रकृतिषु परिगणनात् प्रथमोपादानाच्च मनश्शब्देनाव्यक्तमेवोच्यते; सर्वविकारमूलप्रकृतित्वेन मन्तव्यमिति तदर्थः । इन्द्रियपरिगणने सङ्कल्पशब्दस्तत्साधनीभूतमनःपरः । ज्ञानमित्यत्र, 'कृत्यल्युटो बहुळम्' इति कर्मणि ल्युट्; ज्ञातव्यमित्यर्थः। अत इति । स्पर्शतन्मात्रादीनां साक्षात्तामसाहङ्कारोत्पन्नत्वाभावादित्यर्थ । उक्तस्येति । 'तामसाहङ्काराकाशयोर्मध्यमावस्थाविशिष्टम्' इत्युक्तस्येत्यर्थः । नातिव्याप्तिरिति । स्पर्शतन्मात्रत्वादीनामाकाशपूर्वत्वाभावादिति भावः । तामसाहङ्कारत्वनाशरूपा, आकाशत्वावस्थाप्रागभावरूपा च याऽवस्था तद्विशिष्टत्वमेवोक्तलक्षणस्यार्थ इत्यङ्गीकारे पञ्चानामपि तन्मात्राणां तामसाहङ्कारात् युगपदुत्पत्त्यङ्गीकारेऽपि नातिव्याप्तिः । स्पर्शतन्मात्रत्वादीनामाकाशत्वावस्थाप्रागभावानात्मकत्वात् । न हि शब्दतन्मात्रत्वनाशपूर्वकं तदाश्रये आकाशत्वावस्थोत्पत्तिवत् स्पर्शतन्मात्रत्वादिनाशपूर्वकं तदाश्रयेष्वाकाशत्वावस्थोत्पत्तिरस्ति; येन तेषामाकाशत्वप्रागभावरूपता स्यात् इत्यभिप्रायेणाह सहोत्पत्तावपीति। पञ्चानामपि तन्मात्राणां तामसाहङ्कारात् युगपदुत्पत्तावपीत्यर्थः ॥

आकाशलक्षणमाह अस्पर्शत्वे सतीति । स्पर्शत्वावच्छिन्नापृथक्सिद्धिसंबन्धावच्छिन्नप्रतियोगिताकाभाववत्त्वे सतीत्यर्थः। विशिष्टशब्दाधारत्वमिति । अपृथक्सिद्धिसबन्धेनोद्भूतशब्दवत्त्वमित्यर्थः वाय्वादिवारणाय सत्यन्तम् । प्रकृत्यादिवारणाय विशेष्यम् । शब्दतन्मात्रवारणाय तत्रोद्भूतेति । श्रोत्राप्यायकत्वमिति । श्रोत्रेण सहैकसङ्घाततापन्नत्वमित्यर्थः। तत्परिमाणवृद्धिहेतुभूतविलक्षणसंयोगवत्त्वमिति यावत् । वैलक्षण्यं च शक्तिविशेषः । न च श्रोत्रानाप्यायकभागेष्वव्याप्तिरिति वाच्यम्; श्रोत्राप्यायकत्वसमानाधिकरणभूतविभाजकधर्मवत्त्वस्य विवक्षितत्वात् । अयमिति । आकाश इत्यर्थः। अवकाशदानादिना=स्पर्शवद्द्रव्य-

दानादिना उपकरोतीति शास्त्रसिद्धत्वादभ्युपेत्यम् । आकाशरूपपरिणामरहितप्रकृत्यादिप्रदेशेष्वपि अवकाशोऽस्त्येव । अन्यथा तत्र स्पर्शवद्गत्यादिनिरोधप्रसङ्गात् ॥ आकाशादेर्नित्यत्वादिसाधनानि निरवयवद्रव्यत्वादीनि आगमबाधान्यतरानैकान्त्या(कान्तिकत्वा)दिभिर्दूषणीयानि। किञ्च इदं नित्यत्वं

---

प्रकृत्यादिसाधारणनिविडद्रव्याभावलक्षणावकाशविलक्षणावकाशप्रदानात्मा उपकार आकाशेन क्रियते इत्यभ्युपगन्तव्यमित्याह अथश्चेति। अन्यतरानैकान्त्यादिभिरिति। अवयवासमवेतत्वं विवक्षितञ्चेत्, सिद्धान्ते महदहङ्कारादिषु व्यभिचारः। उपादानराहित्यं विवक्षितञ्चेदन्यतरासिद्धिरित्यादीनि द्रष्टव्या

---

प्रतिबन्धहेतुत्वादिना । उपकरोतीति । उपकाराश्रय इत्यर्थः । उपकारान्वय्यभेदस्तृतीयार्थः । शास्त्रसिद्धत्वादभ्युपेत्यमिति । अनेन स्पर्शवद्गत्यप्रतिबन्धो नाम स्पर्शवद्गत्यनुत्पादाभावः स्पर्शवद्गत्युत्पत्तिरूपः । तत्र च नाऽऽकाशस्य हेतुत्वम्, गौरवात्, प्रयोजनाभावाच्च। स्पर्शवद्गतौ हि स्पर्शवद्द्रव्याभिघातः प्रतिबन्धकः । आकाशवत्प्रदेशेऽपि स्पर्शवद्द्रव्याभिघाते स्पर्शवद्गत्यनुपपत्तेः। ततश्च तादृशप्रतिबन्धकविरहादेवाकाशपरिणामशून्यप्रकृत्यादिप्रदेश इवाकाशवत्प्रदेशेऽपि स्पर्शवद्गत्युपपत्तिसंभवात् तत्राकाशस्य हेतुत्वाङ्गीकारो निरर्थक इति शङ्का परास्ता; प्रत्यक्षसिद्धार्थस्येव शास्त्रसिद्धार्थस्यापि गौरवप्रयोजनाभावाभ्यां परित्यागायोगात् । निरोधप्रसङ्गादिति । भूतसूक्ष्मयुक्तस्य परमपदं जिगमिषोस्तत्र गत्यादिश्रवणेनेष्टापत्तिसंभवादिति भावः । न चाकाशपरिणामशून्यप्रकृत्यादिप्रदेशेऽप्यवकाशसत्त्वे अवकाशं प्रति आकाशस्य हेतुता शास्त्रसहस्रेणापि प्रतिपादयितुं न शक्यत एव; व्यतिरेकव्यभिचारेण हेतुतायाः सर्वथाऽसंभवादिति वाच्यम्; कार्यसङ्कोचेन व्यतिरेकव्यभिचारस्य परिहारसंभवेन शास्त्रेण हेतुत्वप्रतिपादनोपपत्तेः। यथा, "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यादिशास्त्रेण ज्योतिष्टोमयागस्य स्वर्गहेतुतासिद्धौ दर्शपूर्णमासादिजन्यस्वर्गस्थले व्यतिरेकव्यभिचारप्रसक्तौ विजातीयस्वर्गं प्रति ज्योतिष्टोमस्य कारणतामङ्गीकृत्य व्यभिचारः परिह्रियते, यथा चान्वयव्यतिरेकाभ्यां तृणारणिमणीनां त्रयाणामपि वह्निं प्रति कारणतासिद्धौ परस्परजन्यवह्नौ परस्परव्यभिचारः कार्यतावच्छेदककोटौ अव्यवहितोत्तरत्वसंबन्धेन कारणवैशिष्ट्यं निवेश्य वार्यते—तथा प्रकृतेऽपि कार्यतावच्छेदककोटौ कारणवैशिष्ट्यं निवेश्य व्यभिचारपरिहारसंभवात् शास्त्रेण हेतुतासिद्धिरप्रत्यूहैवेति ।

वैशेषिकादयस्तु—आकाशं नित्यं निरवयवद्रव्यत्वात् आत्मवत्; एवं मनस्यपि नित्यत्वं साधनीयमिति वदन्ति । मीमांसकास्तु स्पर्शशून्यद्रव्यत्वेन हेतुना आकाशादिदृष्टान्तेन मनसो विभुत्वं साधयन्ति। तदेतत् सर्वं दूषयति आकाशेत्यादिना । आकाशादेरिति आदिपदान्मनःपरिग्रहः। नित्यत्वादीति। आदिपदात् विभुत्वपरिग्रहः। निरवयवद्रव्यत्वादीति। आदिपदात् स्पर्शशून्यद्रव्यत्वपरिग्रहः । आगमबाधेति । आकाशस्य मनसश्चोत्पत्त्यादिप्रतिपादकश्रुत्यादिबाधेत्यर्थः । अन्यतरानैकान्तिकत्वेति। अनित्येषु महदादिषु निरवयवद्रव्यत्वसत्त्वादिति भावः । महदादेरुभयसंप्रतिपन्नत्वाभावेऽपि सिद्धान्तिसंप्रतिपन्नतया तन्मतरीत्या तत्रानैकान्तिकत्वमस्त्येवेत्यभिप्रायेण अन्यतरानैकान्तिकत्वेत्युक्तम् यदि निरवयवशब्देनोपादानराहित्यं विवक्ष्यते ; तदा त्वादिपदग्राह्या अन्यतरासिद्धिः।

किं अवस्थापत्तिराहित्यम्? किं वा द्रव्यस्य सर्वदा सत्त्वमिति। न प्रथमः; पार्थिवपरमाण्वादिभिरनैकान्तिकत्वात्। पक्षे च शब्दवत्त्वतदभावाद्यवस्थाभेदस्वीकारेण बाधापसिद्धान्तप्रसङ्गात्। न द्वितीयः; सिद्धसाधनत्वात्॥ अवयवविश्लेषलक्षणो विनाशो निषिध्यते इति चेन्न; अहङ्कारादिदशाप्राप्तस्य सिद्धसाधनत्वादेव। वायुत्वपञ्चीकरणादिप्राप्तावस्थाभेदे सर्वोपपत्तिः प्रागेवोक्ता॥

(आकाशस्य प्रत्यक्षत्वनिरूपणम्)

प्रत्यक्षश्चायमाकाशः। यदा उन्मीलनं चक्षुषः, तदैव आकाशोऽयमिति प्रतीतेः। न च नीरूपस्य

---

नीत्यर्थः। **पार्थिवपरमाण्वादिभिरिति**। द्व्यणुकारम्भकसंयोगपाकजरूपाद्युत्पत्तेरिति भावः। **अपसिद्धान्तेति**। शब्दवत्त्वाद्यवस्थायास्त्वैरभ्युपेतत्वादिति भावः। किमाकाशस्य पूर्वावस्थायां विश्लेषलक्षणविनाशाभाव उच्यते, उत उत्तरावस्थायाम्, उत तदवस्थायाम्? पूर्वत्र महदादिदशामादाय सिद्धसाधनम्। द्वितीये वाय्वादिदशायामवयवविश्लेषलक्षणविनाशसत्त्वाद्बाधः। तृतीये पञ्चीकरणदशायामाकाशस्य अवयवविश्लेषसत्त्वाद्बाध इत्याह **अहङ्कारादीत्यादिना**। **प्रागेवोक्तेति**। **"तत्र स्पर्शादिलक्षणप्रादेशिकपरिणतिदशायां छेदनभेदनपरिस्पन्दनादीनामपि सिद्धिः"** इत्युक्तत्वादिति भावः॥

**तदैवेति**। व्याप्त्यादिप्रतिसन्धानविलम्बमन्तरेणेत्यर्थः। न च इयं प्रतीतिरालोकविषयेति शक्यं वक्तुम्; इहाऽऽलोकः, इह तमः इत्यालोकाधिकरणतया प्रतीतेरिति भावः। **उपलम्भसिद्धयेति**।

---

सिद्धान्तिमते आकाशे उपादानराहित्यासिद्धेः। वस्तुतस्तु सिद्धान्तिमते आकाशे निरवयवत्वमप्यसिद्धमेव। पञ्चीकरणाद्युपदेशेन तस्यापि सावयवत्वाभ्युपगमात्। यदि अवयवासमवेतत्वमेव विवक्षितम्, तदा घटादिष्वनैकान्तिकत्वम्, अवयविनिरासादित्यादिकं बोद्धव्यम्। असमवेतत्वमात्रविवक्षायां तत्र समवेतत्वघटकसमवायस्यातिरिक्तपदार्थरूपत्वे सिद्धान्ते तदप्रसिद्ध्या हेत्वप्रसिद्धिः। ईश्वरे अपृथक्सिद्धिसंबन्धेन वर्तमान आकाशे उक्तनिरवयवत्वरूपविशेषणाभावाद्विशिष्टहेत्वभावरूपान्यतरासिद्ध्यभिधाना स्वरूपासिद्धिः। एवं विभुत्वसाधकस्पर्शशून्यद्रव्यत्वहेतोर्महदहङ्कारादिषु व्यभिचार इति रीत्या दूषणीयमित्यर्थः। **अवस्थापत्तिराहित्यम्**=जन्यधर्मराहित्यम्। **द्रव्यस्य सर्वदा सत्त्वमिति**। आकाशत्वाश्रयस्य कालत्वव्यापकाधिकरणतानिरूपकत्वमित्यर्थः। आकाशत्वाश्रयद्रव्यस्वरूपे उक्तसाध्यसिद्धेरुद्देश्यताद्योतनाय द्रव्यस्येत्युक्तम्। **पार्थिवपरमाण्वादिभिरिति**। तत्र संयोगपाकजरूपादिस्वीकारादिति भावः। **अपसिद्धान्तेति**। शब्दवत्त्वाद्यवस्थायाः स्वमतसिद्धत्वादिति भावः। **अवयवविश्लेषलक्षणो विनाशो निषिध्यत इति**। अवयवसंयोगविशेषनाशाभावः साध्यत इत्यर्थः। अत्र किमाकाशत्वाश्रयद्रव्यस्वरूपे यदाकदाचित् तथाविधनाशाभावः साध्यते; उत सर्वदा; आहोस्विदाकाशत्वविशिष्टे तथाविधनाशाभावः साध्यत इति विकल्प्य आद्ये दूषणमाह **अहङ्कारादीति**। द्वितीये तदाह **वायुत्वेति**। आकाशत्वाश्रयद्रव्यस्वरूप एव वायुत्वावस्थायामवयवविश्लेषसत्त्वात् सर्वदा तदभावसाधने बाध इत्यर्थः। तृतीये दूषणमाह **पञ्चीकरणेति**। पञ्चीकरणदशायामाकाशत्वविशिष्ट एवावयवविश्लेषसत्त्वाद्बाध इत्यर्थः। **प्रागेवोक्तेति**। "तत्र स्पर्शादिलक्षणप्रादेशिकपरिणतिदशायां छेदनभेदनपरिस्पन्दनादीनामपि सिद्धिः" इत्युक्तत्वादिति भावः।

**तदैवेति**। एवकारेण व्याप्त्यादिप्रतिसन्धानविलम्बव्यवच्छेदः। तेन आकाशोऽयमिति प्रतीतेरनु-

कथं चाक्षुषमिति वाच्यम्; रूपवतो वा कथं चाक्षुषमिति प्रसङ्गात्॥ उपलम्भसिद्ध्या योग्यतयेति चेत्; तुल्यम्। अन्यथा रूपरूपिरूपैकार्थसमवायाद्यवान्तरभेदकल्पनानुपपत्तेश्च॥

---

चाक्षुषत्वोपलम्भान्यथानुपपत्तिकल्पिततया योग्यतयेति चेदित्यर्थः। यदि उद्भूतरूपवत्त्वातिरिक्ता चाक्षुषत्व-

---

मिति त्वादिष्युद्दासः। न च नीलं नभ इति प्रतीतेरुपनीतभानरूपत्वमेवास्त्विति वाच्यम्; स्वायोग्य-विशेष्यकज्ञानजनने इन्द्रियाणामसामर्थ्यस्य नैयायिकैरेव स्वीकृतत्वात्। नीलंनभस्साक्षात्करोमीति प्रतीत्यनुपपत्तिप्रसङ्गाच्च। कथं चाक्षुषमिति। ईश्वरादीनां चाक्षुषवारणाय द्रव्यवृत्तिविषयतासंबन्धेन प्रत्यक्षं प्रति आश्रयतासंबन्धेन रूपस्य कारणताया आवश्यकत्वादिति भावः। रूपवतो वा कथं चाक्षुष मिति। रूपवत एव चाक्षुषमिति नियमः कथमित्यर्थः। कालस्य षडिन्द्रियवेद्यताया सिद्धान्तसिद्धतया तत्र व्यभिचारादिति भावः। तथाच द्रव्यवृत्तिविषयतासंबन्धेन[चाक्षुषं प्रति आश्रयतासंबन्धेन?] रूपस्य कारणत्वं काले व्यभिचारान्नसंभवतीत्युक्तं भवति। ननु कालस्यापि चाक्षुषोपलम्भात्तदनुरोधेन कालान्यद्रव्यवृत्तिविषयता-संबन्धेन चाक्षुषं प्रति रूपस्य कारणत्वमभ्युपगम्यते। अन्यथा ईश्वरादिचाक्षुषप्रसङ्गस्य दुर्वारत्वात्। तत्र च नोक्तव्यभिचारावकाश इति शङ्कते उपलम्भेति। योग्यतयेति। रूपात्मककारणसंपत्त्येत्यर्थः। रूपवतश्चाक्षुषमित्यनुषज्यते। रूपवत एव चाक्षुषमिति नियम इति तदर्थः। परिहरति तुल्यमिति। आकाशस्यापि चक्षुषोपलम्भस्य तुल्यतया तदनुरोधेन कालान्यत्ववदाकाशान्यत्वमपि निवेश्य कालाका-शान्यद्रव्यवृत्तिविषयतासंबन्धेन चाक्षुषं प्रति रूपस्य कारणत्वमित्येवानायत्या स्वीकार्यमित्यर्थः। उप लम्भानुरोधेनैव कार्यकारणभावस्य शिक्षणीयत्वादिति भावः। ननु कालस्याऽऽकाशस्य वा चाक्षुषस्वीकारे उक्तकार्यतावच्छेदकसंबन्धशरीरे कालान्यत्वाकाशान्यत्वयोर्निवेशनीयतया गौरवप्रसंगान्न तयोस्तत्स्वीकार-संभव इत्याशङ्कयाह अन्यथेति। कार्यतावच्छेदकगौरवप्रसङ्गभयेनोपलम्भसिद्धपदार्थापलाप इत्यर्थः। रूप रूपीत्यादि। उक्तकार्यतावच्छेदकशरीरे द्रव्यवृत्तित्वनिवेशस्यापि गौरवग्रस्ततया तदपि परित्यज्य विषयता-संबन्धेन चाक्षुषं प्रति आश्रयतासंबन्धेन रूपस्य कारणत्वमित्येवमेव स्वीकारापत्त्या रूपरूपैकार्थसमवेत योरपि चाक्षुषस्यापलापप्रसङ्गादित्यर्थः। तथाचोपलम्भानुरोधेनैव कार्यकारणभावस्य शिक्षणीयता उक्तरीत्या कार्यतावच्छेदकसंबन्धगौरवस्यादोषतया आकाशस्य चाक्षुषं निर्बाधमेवेति भावः।

अथवा--रूपवतो वा कथं चाक्षुषमिति प्रसङ्गादित्यन्तस्य पूर्ववदेवार्थः। ननु विषयतासंबन्धेन चाक्षुषं प्रति तादात्म्येन शक्तिमतः कारणत्वमिति स्वीक्रियते। सा च शक्तिरुपलम्भानुरोधात् रूपवति रूपे रूपैकार्थ समवेते, काले चाङ्गीक्रियते। न त्वीश्वरादिषु गुरुत्वादिषु च। तथाच घटादीनां चाक्षुषत्वं कालस्य षडिन्द्रिय वेद्यत्वञ्चोपपद्यते। ईश्वरादीनां गुरुत्वादीनां च न चाक्षुषत्वप्रसङ्गः। युक्तञ्चैतत्; उद्भूतरूपस्य द्रव्यादिभेदेन गुरुभूतनानाकारणत्वानां गुरुत्वादिप्रतिबन्धकत्वानां च स्वीकारापेक्षया महालाघवात्। इत्थं च कथमाकाशस्य चाक्षुषत्वसंभव इत्याशङ्कते उपलम्भेति। योग्यतया=शक्तिमत्तया। अनुषङ्गादिकं प्राग्वत्। तुल्यमिति। आकाशस्यापि चक्षुषोपलम्भात् तदनुरोधेन तत्रापि शक्तिस्वीकारावश्यकत्वं तुल्य-मित्यर्थः। ननाकाशस्य चाक्षुषानुपगमेनैवोपपत्त्या तत्र शक्तिस्वीकारो गौरवपराहत इत्यत आह रूपरूपी

पञ्चीकरणेन वा व्यष्टिरूपसिद्धिर्भाष्योक्ता। प्रमेयसंग्रहे च उक्तम् यथा, [1]'कालस्य वस्तुधर्मतया सर्वप्रतीत्यन्तर्भावात् न पृथग्रूप(?)वत्त्वम्। गगनस्य दिशाश्च त्रिवृत्करणेन रूपवत्त्वम्' इत्यादि। यत्तूक्तं भाष्ये, 'न च चक्षुषा सन्मात्रं गृह्यते; तस्य रूपरूपिरूपैकार्थसमवेतपदार्थग्राहित्वात्' इति; तत् प्रत्यक्षस्य विशिष्टविषयत्वपरम्। न तु रूपवन्मिश्रितत्वाख्यसम्बन्धवर्जनपरम्। अत एव हि "रूपरूपिरूपैकार्थसन्निवेशाद्यालिप्तमेव चाक्षुषमिति स्थितम्" इति प्रमेयसंग्रहोक्तिः। अतः संयुक्तसमवेतस्यापि

---

योग्यता नास्तीति मन्यसे, तदा रूपस्य रूपत्वस्य घटत्वादेश्चाचाक्षुषत्वप्रसङ्गः। यदि च तत्र रूपत्व-रूपवृत्तित्व-रूपसमानाधिकरणत्वादिकमपि चाक्षुषत्वयोग्यतेत्यङ्गीक्रियते; तर्हि आकाशेऽपि किञ्चित् कल्प्यतामिति भावः। **भाष्योक्तेति**। "अण्डान्तर्वर्तिनश्च आकाशस्य त्रिवृत्करणोपदेशप्रदर्शितपञ्चीकरणेन रूपवत्त्वात् चाक्षुषत्वेऽप्यविरोध." इति, "आकाशे चाविशेषात्" इति सूत्रे भाष्योक्तेति भावः। **न पृथग्रूपवत्त्वमिति**। अपेक्षितमिति शेषः। रूपैकार्थसमवायितया प्रतीयमाने सङ्ख्यादिप्रत्यक्षे पृथग्रूपानपेक्षावदिति भावः। **गगनस्य दिशाश्चेति**। तथाच रूपरूपिरूपैकार्थसमवायवत् रूपवन्मिश्रितत्वमपि प्रयोजकमिति भावः। रूपवन्मिश्रितत्वस्यापि चाक्षुषत्वप्रयोजकत्वे भाष्यविरोधमाशङ्क्य परिहरति **यत्तूक्तं भाष्ये इत्यादिना**। सन्मात्रग्राहिप्रत्यक्षभङ्गभाष्ये इत्यर्थः। **सम्बन्धवर्जनपरमिति**। रूपवन्मिश्रितत्वाख्यसम्बन्धस्य प्रयोजकत्वनिराकरणपरमित्यर्थः। **सन्निवेशाद्यालिप्तमिति**। **आदिपदं** रूपवन्मिश्रितत्वादिकमभिप्रेत्य प्रयुक्तम्। ततश्च रूपञ्च गृह्यते, रूपि च गृह्यते, रूपैकार्थसमवेतं रूपवन्मि-

---

त्यादि। रूपिप्रभृतिष्वपि शक्तिस्वीकारस्य गौरवेण त्यागापत्त्या तेषामपि चाक्षुषापलापप्रसङ्गेन रूपरूपीत्यादिचाक्षुषावान्तरभेदासिद्धेरित्यर्थः। तथाचोपलंभानुरोधेनाकाशस्यापि तादृशशक्तिस्वीकारस्यावश्यकतया तस्य चाक्षुषत्वं निष्प्रत्यूहमिति भावः। द्रव्यवृत्तिविषयतासंबन्धेन चाक्षुषं प्रति आश्रयत्व-स्वाश्रयसंयोगान्यतरसंबन्धेन रूपस्य कारणत्वाभ्युपगमान्न कालचाक्षुषे व्यभिचारः। इत्थंचाकाशस्यापि चाक्षुषमुपपद्यत एवेत्यभिप्रायेण पक्षान्तरमाह **पञ्चीकरणेति**। **भाष्योक्तेति**। "अण्डान्तर्वर्तिनश्चाकाशस्य त्रिवृत्करणोपदेशप्रदर्शितपञ्चीकरणेन रूपवत्त्वाच्चाक्षुषत्वेऽप्यविरोध.' इति। "आकाशे चाविशेषादिति" सूत्रभाष्योक्तेत्यर्थः। **न पृथग्रूपवत्त्वमिति**। आश्रयतासंबन्धेन रूपवत्त्वमित्यर्थः[1]। अपेक्षितमिति शेषः। स्वाश्रयसंयोगसंबन्धेन रूपसत्त्वादिति भावः। रूपवत्संयुक्तत्वस्य चाक्षुषप्रयोजकत्वे भाष्यविरोधमाशङ्क्य परिहरति **यत्त्वित्यादिना**। **प्रत्यक्षस्येति**। चाक्षुषप्रत्यक्षस्येत्यर्थः। **विशिष्टविषयत्वपरमिति**। रूपविशिष्टविषयत्वपरमित्यर्थः। रूपैकार्थसमवेतसंयोगादिचाक्षुषस्यापि **द्रव्यांशे** रूपप्रकारकत्वनियमान्न सन्मात्रस्य चाक्षुषविषयत्वमिति भाष्याशय इत्यभिप्रायः। **नत्वित्यादेः** स्वाश्रयसंयोगात्मकस्य रूपसंबन्धस्य कारणतावच्छेदकत्वनिरसनपरं नेत्यर्थः। **सन्निवेशादीत्यात् आदिशब्देन**

---

1 यथेति। पूर्वमिन्द्रियसामान्यस्य कालग्राहित्वोपपादनावसरे यथाशब्दं विना एतद्वाक्योपादानादत्रापि यथाशब्दस्तदन्तर्गतः स्यात्? पूर्वं पृथग्रूपत्वमिति पाठदर्शनादन्योऽर्थो वर्णितः। अत्र पृथग्रूपवत्त्वमिति। एक एव पाठोऽर्थश्चोचितः।

रूपस्य कार्यकरत्वमुपलम्भबलात् ग्राह्यम्। न च ईश्वरादाविति प्रसङ्गः; गुरुत्वादितुल्यत्वात्। वाय्वादीनां तु पञ्चीकरणेन रूपवत्त्वेऽपि रूपानुद्भवादचाक्षुषत्वम्॥ यत्तु प्रमेयसंग्रहे, "अद्यजातस्य चक्षुरपि न हि अरूपं वायुं गृह्णाति" इति, तदपि उद्भूतरूपाभावपरमेव। अत एवम्प्रकारेण रूपित्वात् नभसः, आकाशमस्ति श्याममिति प्रतीतिः। अत एव चेयं प्रतीतिर्नाऽऽवरणाभावावलम्बना, विधिरूपत्वात्। भावान्तराभाववादिनस्तु अदोषत्वात्। अतिरिक्तवादिनां तु प्रागभावादिविकल्प-

---

श्रितश्च गृह्यते इति भावः। **न चेश्वरादाविति**। कालादाविवेश्वरेऽपि रूपवत्संयुक्तत्वस्य सत्त्वादिति भावः। **गुरुत्वादितुल्यत्वादिति**। यथा रूपैकार्थसमवेतत्वाविशेषेऽपि सङ्ख्यादिकमेव चक्षुषा गृह्यते; न तु गुरुत्वम्—तद्वत् रूपवत्संयुक्तत्वाविशेषेऽपि कालादिकमेव प्रत्यक्षम्; न त्वीश्वर इति भावः। **रूपानुद्भवादिति**। उद्भवानुद्भवयोः फलबलकल्प्यत्वादिति भावः। **अद्यजातस्येति**। तरुणस्येत्यर्थः।

---

रूपवन्मिश्रितत्वसंग्रहः। **न चेश्वरादाविति**। कालादाविवेश्वरादावपि स्वाश्रयसंयोगसंबन्धेन रूपसत्त्वादिति भावः। **गुरुत्वादितुल्यत्वादिति**। यथा द्रव्यसमवेतवृत्तिविषयतासंबन्धेन चाक्षुषादिकं प्रति समवायघटितसामानाधिकरण्यसंबन्धेन रूपादेः कारणतया सङ्ख्यापरिमाणादेरिव गुरुत्वादेरपि चाक्षुषादिप्रसङ्गे तत्परिहाराय विषयतासंबन्धेन चाक्षुषादिकं प्रति तादात्म्येन गुरुत्वादेः प्रतिबन्धकतामङ्गीकृत्य तादृशापत्तिर्वार्यते—तथा विषयतासंबन्धेन चाक्षुषादिकं प्रति तादात्म्यसंबन्धेनेश्वरादेः प्रतिबन्धकतामङ्गीकृत्येश्वरादिचाक्षुषापत्तेर्वारणीयत्वादित्यर्थः। वाय्वादिषु पञ्चीकरणेन रूपवत्त्वेऽपि तादृशरूपस्यानुद्भूततया उद्भूतरूपस्यैवाश्रयत्वस्वाश्रयसंयोगान्यतरसंबन्धेन कारणत्वाभ्युपगमात् वाय्वादिचाक्षुषापत्तिविरहेण न तेषामुक्तविधप्रतिबन्धकत्वं स्वीकरणीयमित्याह **वाय्वादीनामिति**। **रूपानुद्भवादिति**। फलानुरोधेन तथाकल्पनादिति भावः। न च वाय्वन्तर्गतपार्थिवादिभागगतरूपस्यानुद्भूतत्वेऽपि घटादिगतोद्भूतरूपस्य काल इव वायावपि स्वाश्रयसंयोगसंबन्धेन सत्त्वात् तच्चाक्षुषं दुर्वारमिति वाच्यम्; विलक्षणस्यैव स्वाश्रयसंयोगस्योक्तकारणतावच्छेदकसंबन्धघटकत्वाङ्गीकारात्, घटवायुसंयोगस्यातथात्वात्। वैलक्षण्यं च शक्तिविशेषः। न चैवं सतीश्वरादिगतोद्भूतरूपवत् संयोगस्योक्तशक्तिविशेषानुपगमादेव सामञ्जस्ये तेषां गुरुत्वादिवत् प्रतिबन्धकत्वाभ्युपगमो निरर्थक इति वाच्यम्; केवलस्य स्वाश्रयसंयोगस्य कारणतावच्छेदकसंबन्धघटकत्वेऽपीश्वरादिचाक्षुषवारणप्रकारोऽस्तीत्यावेदयितुमेव तथाऽभिधानात् वस्तुतस्तथाविधप्रतिबन्धकत्वमनावश्यकमित्येवाशयात्=**अद्यजातस्य**। तरुणस्येत्यर्थः। इदञ्च पटुकरणत्वद्योतनाय। **उद्भूतरूपाभावपरमेवेति**। इदमुपलक्षणम्; आश्रयतासंबन्धेन रूपसामान्याभावपरमित्यपि बोद्धव्यम्। आकाशान्तर्गतपार्थिवभागगतरूपस्योद्भूततया तत्पुरस्कारेणैव तस्य प्रत्यक्षविषयत्वमस्तीत्याह **अतएवंप्रकारेणेत्यादि**। आकाशमस्ति श्याममिति प्रतीतेः रूपप्रकारकत्वादेव नावरणाभावविषयकत्वसंभव इत्याह **अत एवेति**। श्यामत्वप्रकारकत्वादेवेत्यर्थः। तथाच नीलं नभ इति प्रतीतिरावरणाभावविशेष्यकत्वाभाववती रूपप्रकारकप्रमात्वात् नील- ?ट इति प्रतीतिवदित्युक्तं

दुःस्थत्वात् । कृत्स्नप्रतियोगिकनिषेधस्यासिद्धेः । आवरणेष्वपि तादात्म्याभावस्य सामानाधिकरण्य-

अनेन पटुकरणत्वं व्याख्यातं । विधिरूपत्वादिति । नञुल्लेख(नुल्लेखः)त्वादित्यर्थः । भावान्तरेति । भावरूपस्यैवाऽऽकाशस्य आवरणाभावरूपत्वे न दोष इति भावः । प्रागभावादिविकल्पेति । प्रागभाव-प्रध्वंसाभावात्यन्ताभावान्योन्याभावविकल्पदुःस्थत्वादित्यर्थः । तदेवोपपादयति कृत्स्नप्रतियोगिकेति। केषाञ्चिदावरणानां प्रागभावस्य, केषाञ्चित् प्रध्वंसस्य, केषाञ्चित् अत्यन्ताभावस्य सत्त्वेऽपि सर्वेषां प्रागभावस्य वा ध्वंसस्य वा अत्यन्ताभावस्य वा असिद्धेरित्यर्थः । आवरणेष्वपीति । सत्स्विति शेषः । सामानाधिकरण्यनिषेधात्मकत्वादिति । प्रतियोगितावच्छेदकाधिकरणतावच्छेदकसामानाधिकरण्य निषेधरूपत्वादित्यर्थः। आवरणान्योन्याभावस्य आवरणत्वाभावरूपत्वादिति यावत् । ततश्च आवरणत्वनिषेधस्य आवरणभूते पृथिव्यादावसम्भवात् भूतले आकाश इति प्रतीतिर्न स्यादिति भावः । यद्वा अन्योन्या-भावस्य सामानाधिकरण्यनिषेधत्वेन आवरणत्वनिषेधत्वाभावादावरणनिरोधित्वं न स्यादिति भावः । ननु यथा घटाभावप्रतीतिः कस्यचित् घटस्य प्रागभावं, कस्यचित् ध्वंसं, कस्यचिदत्यन्ताभावञ्चावगाहते, एवमावरणाभावलक्षणाकाशप्रतीतिरपि कस्यचिदावरणस्य प्रागभावं कस्यचित् ध्वंसम्, कस्यचिदत्यन्ता

भवात । हेत्वन्तरमाह विधिरूपत्वादिति । नञुल्लेखराहित्यत्वादित्यर्थः । यद्यपि प्रमेयत्वभावभिन्नत्व-ध्वंसत्वादिना अभावविषयकप्रतीतिर्नञुल्लेखराहित्यत्वमस्ति ; तथापि नञुल्लिखितप्रतीत्यविषयतया आकाशपदार्थे अभावभेदसाधने तात्पर्यान्न दोषः । ध्वंसादेरपि इह घटो नेति प्रतीतिविषयत्वात् । न चाकाशघटादेरपि इहाकाशाभावो न, इह घटाभावो नेत्यादिप्रतीतिविषयतया स्वरूपासिद्धिसाधन वैकल्ये इति वाच्यम् ; प्रतियोगितासंबन्धावच्छिन्नभावावृत्तिप्रकारतानिरूपितभ्रमानिरूपितविशेष्यता शून्यत्वस्य विवक्षिततया दोषविरहात् । अदोषत्वादिति । भावरूपत्वाविरोधादिति भावः । प्राग-भावादीति । आवरणप्रागभावो वा आवरणध्वंसो वा आवरणात्यन्ताभावो वा आवरणान्योन्या-भावो वा आकाश इति विकल्पे कस्यापि कल्पस्यासंभवादित्यर्थः । तदेवोपपादयति कृत्स्नेति । केषाञ्चिदावरणानां प्रागभावस्य केषाञ्चिद्ध्वंसस्य केषाञ्चिदत्यन्ताभावस्याकाशप्रतीतिस्थले सत्त्वेऽपि कृत्स्नप्रतियोगिकस्य प्रागभावस्य ध्वंसस्यात्यन्ताभावस्य वा असंभवादित्यर्थः । इदं च ध्वंसप्रागभावाधि-करणे अत्यन्ताभावानुपगमेन । आवरणेष्वपीति । सत्स्वपीति शेषः । तादात्म्याभावस्य=तादात्म्य-संबन्धावच्छिन्नप्रतियोगिताकाभावरूपावरणान्योन्याभावस्य । सामानाधिकरण्यनिषेधात्मकत्वादिति । प्रतियोगितावच्छेदकाधिकरणतावच्छेदकयोस्सामानाधिकरण्यनिषेधरूपत्वादित्यर्थः । आवरणान्योन्या-भावस्य आवरणत्वाभावरूपत्वादिति यावत् । ततश्च आवरणवत्यपि प्रदेशे आवरणत्वाभावसंभवात् आकाशप्रतीतिप्रसङ्ग इति भावः । ननु इह घटो नास्तीति प्रत्ययो यथा ध्वंसप्रागभाववति घटत्वावच्छिन्न-प्रतियोगिताकध्वंसप्रागभावावेव विषयीकरोति, ध्वंसप्रागभावयोरत्यन्ताभावविरोधित्वे—तयो कदाचित् सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वाङ्गीकारात, अत्यन्ताभाववति च तमेव विषयीकरोति, एवमा-काशप्रतीतिरपि यथासंभवं ध्वंसं प्रागभावमत्यन्ताभावं वा आवरणत्वावच्छिन्नप्रतियोगिकं विषयीकरो-

निषेधात्मकत्वात् । संसर्गाभावस्य च यत्किञ्चित्संसर्गिप्रत्ययमन्तरेणानुपपत्तेः । तथा च स एव आकाश इति स्यात् । न च काल्पनिकाधिकरणनिषेधः ; अबाधितत्वायोगात् । नाप्यालोकतिमिरावलम्बनः ; तेषु आकाशप्रतीति-व्यवहारयोरयोगात् । आरोपस्यापि प्रतीतिपूर्वकत्वात् । अप्रत्यक्षत्वे च तस्याङ्गुल्या निर्देशपूर्वकपामरव्यवहारगोचरता निर्मूला स्यात् । शब्दाधिकरणपरिशेषानुमानादेरपामरविषयत्वात् ; अशक्यत्वाच्च । न हि शब्दस्य गन्धवत् मेर्यधि-

---

मावच्छिन्नावलम्बनामित्याशङ्क्याह **संसर्गाभावस्य चेति** । **संसर्गिप्रत्ययमन्तरेणेति** । अधिकरणप्रत्ययमन्तरेणेत्यर्थः । ततश्च इहावरणं नास्तीत्यावरणाभावाश्रयतया इहप्रत्ययावलम्बनमस्मदभिमताकाशमेवेत्यर्थः । ननु इहावरणं नास्तीति प्रतीतिः काल्पनिकाधिकरणे निषेधमुल्लिखतीत्याशङ्क्य निषेधति **न च काल्पनिकेति** । काल्पनिकमधिकरणं यस्येति बहुव्रीहिः **तेष्वाकाशेति** । आकाशे आलोकः, आकाशे तमः इत्यालोकाद्यधिकरणतया प्रतीयमानस्य आकाशस्य आलोकादिप्रतीतिविषयत्वायोगादित्यर्थः । ननु आकाशपदार्थः कश्चित् आरोपितः, "नीलं नभः" इति प्रतीतिविषयोऽस्तु इत्याशङ्क्याह **आरोपस्यापीति** । **प्रतीतिपूर्वकत्वादिति** । अप्रमितस्याऽऽरोपासंभवादिति भावः । ततश्च, "नीलं नभः" इति प्रतीतेरावरणाभावालोकतिमिरादिविषयत्वासम्भवात्, "नीलं नभः" इति प्रत्यक्षस्य आकाशविषयत्वस्यावश्यवक्तव्यत्वात् प्रत्यक्षश्चायमाकाश इति सिद्धमिति भावः । अप्रत्यक्षत्वे बाधकमाह **अप्रत्यक्षत्वे चेति** । **पामरेति** । ततश्च तेषामाकाशव्यवहारस्याऽऽगममूलत्वायोगात् प्रत्यक्षस्याप्यभावे पामराणां आकाश इति व्यवहारो निर्मूलः स्यादित्यर्थः । ननु आकाशस्य अप्रत्यक्षत्वेऽपि पामराणामाकाशव्यवहारोऽनुमानमूलोऽस्तु इत्याशङ्क्याह **शब्दाधिकरणेति** । अशक्यत्वमेवाह

---

त्वित्यत आह **संसर्गाभावस्य चेति** नास्तीति प्रतीयमानस्य अन्योन्याभावभिन्नाभावस्य चेत्यर्थः । **संसर्गिप्रत्ययमन्तरेणेति** । अधिकरणप्रतीतिमन्तरेणेत्यर्थः । **स एवेति** । इहावरणं नास्तीति प्रतीतावाश्रयतया यो विषयः, स एवेत्यर्थः । नन्विहावरणं नास्तीति प्रतीतौ इहेत्युल्लिख्यमानः काल्पनिक एव कश्चित् पदार्थः; न तु वास्तविकः, येन स एवाकाश इत्युच्येत इत्यत आह **न चेति** । काल्पनिकाधिकरणं यस्य निषेधस्येति । **अबाधितत्वायोगादिति** । काल्पनिकस्य बाधितत्वनियमादिति भावः । **नाप्यालोकतिमिरावलम्बन इति** । इहावरणं नास्तीति प्रतीतौ इहेत्युल्लिख्यमान आलोकोऽन्धकारो वा न स्यादित्यर्थः । **तेष्वाकाशप्रतीतिव्यवहारयोरयोगादिति** । आकाशे आलोकः, आकाशे तम इत्याकाशवृत्तितया प्रतीयमानेषु आकाशप्रतीतिव्यवहारासंभवादित्यर्थः । ननु शुक्तिरजतादिवत् आरोपित एव कश्चित् पदार्थो नीलं नभ इत्यत्र प्रतीयत इत्यङ्गीक्रियत इत्यत आह **आरोपस्यापीति** । **प्रतीतिपूर्वकत्वादिति** । प्रमितिपूर्वकत्वादित्यर्थः । क्वचित्प्रमितस्यैवान्यत्राऽऽरोपः संभवति, यथा आपणे प्रमितस्यैव रजतस्य शुक्ताविति भावः । एतावता आकाशप्रत्यक्षे साधकमुक्तम्; इतःपरं तस्याप्रत्यक्षत्वे बाधकमाह **अप्रत्यक्षत्वे चेति** । **पामरेति** । तेषामाकाशव्यवहारस्यागममूलत्वासंभवादिति भावः । नन्वप्रत्यक्षत्वेऽप्यनुमानमूल एव पामराणामप्याकाशव्यवहारोऽस्त्वित्याशङ्क्याह **शब्दाधिकरणेति** । **परिशेषानुमा-**

वयवधर्मत्वे, कारकतया व्यञ्जकतया चाभ्युपगतवायुधर्मत्वे वा कश्चित् दोषः। न च स्पर्शनादिग्राह्यत्वप्रसङ्गः; एकभूतगुणस्यैव गन्धरसरूपादेर्भिन्नाक्षग्राह्यत्वस्य दृष्टत्वात्। एवं बाधकान्तरमपि दूष्यम्। गौरवञ्च भवतो बाधकं स्यात्, आगमवशात्तु वयमाकाशे शब्दमिच्छामः।

---

नहीति। शब्दः क्वचिदाश्रितो गुणत्वात् इत्यनुमानेन परिशेषसहकृतेन तत्सिद्धेः पामरस्यासम्भवादिति भावः. गन्धवदिति। यथा गन्धः कस्तूरिकादिगुण एव; अन्यत्रोपलम्भस्तु वायुवशानीततदवयवसमवेतविषयक इत्यभ्युपेयते—एवं शब्दोऽपि भेरीधर्म एव; दूरे शब्दोपलम्भस्तु वायुवशानीतभेर्यवयवसमवेतो गृह्यते इति किं न स्यात्? तथाच शब्दानित्यत्वपक्षे उत्पादकतया, तन्नित्यत्वपक्षे व्यञ्जकतयाऽभ्युपेतवायुधर्मत्वे वाऽनुपपत्त्यभावात् असम्भवः परिशेष इति भावः। ननु शब्दस्य वायुधर्मत्वे त्वगिन्द्रियेण स्पर्शवत् गृह्येत। द्वयोरपि वाय्वात्मकैकभूतगुणत्वेन एकेन्द्रियग्राह्यत्वस्य वाच्यत्वादिति मन्दाशङ्कामनैकान्त्यात् परास्करोति न च स्पर्शनेति। बाधकान्तरमपीति। ये पृथिव्यादिगुणाः न ते श्रोत्रग्राह्याः; यथा रूपादयः; शब्दश्च श्रोत्रग्राह्यः; अतो न पृथिव्यादिगुण इत्यादि बाधकम्—यदि गन्धः पृथिवीधर्मः स्यात्; घ्राणग्राह्यो न स्यात् रूपादिवदित्याभाससाम्येन दूष्यमित्यर्थः। गौरवञ्चेति। भूतचतुष्टयातिरिक्तकल्पने गौरवादित्यर्थः। ननु तर्हि भवदुक्तरीत्या शब्दस्य वाय्वादिधर्मत्वोपपत्तौ आकाशः शब्दाश्रयतया नाभ्युपेयः स्यादित्याशङ्क्याह आगमवशात्त्विति।

---

नादेरिति। शब्दः पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रितः—उक्ताष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितत्वादित्यनुमानादेरित्यर्थः। आदिना इतरबाधसहितानुमानपरिग्रहः। पृथिव्याद्याश्रितत्वाभावनिश्चयसहितस्य हि द्रव्याश्रितत्वसाधकानुमानस्य पृथिव्याद्यतिरिक्तद्रव्याश्रितत्वसाधकत्वमस्ति। यथा महानसीयेतरवह्निबाधनिश्चयसहितस्य वह्निसाधकानुमानस्य महानसीयवह्निसाधकत्वम्, तद्वत्। अशक्यत्वादिति। पृथिव्याद्यनाश्रितत्वसिद्धेरसम्भवादिति भावः। तदेवोपपादयति नहीति। गन्धवदिति। यथा गन्धस्य कस्तूरिकाद्याश्रितत्वेऽपि दूरे गन्धोपलम्भस्य वाय्वानीततदवयवगन्धविषयकतयोपपत्तिः, तथा शब्दस्य भेर्यादिपृथिव्याश्रितत्वेऽपि दूरे शब्दोपलम्भस्य वाय्वानीतावयवगतशब्दविषयकतयोपपत्त्या शब्दस्य पृथिव्याश्रितत्वसंभवात्। एवं शब्दानित्यत्वपक्षे उत्पादकतया, तन्नित्यत्वपक्षे व्यञ्जकतयाभ्युपेतवायुधर्मत्वसंभवाच्च न परिशेषसंभव इत्यर्थः। शब्दस्य वायुविशेषगुणत्वे त्वगिन्द्रियग्राह्यत्वप्रसङ्गः, एवं पृथिव्यादिगुणत्वे चक्षुरादिग्राह्यत्वप्रसङ्ग इत्याशङ्क्य, अप्रयोजकतया अनैकान्त्येन च दूषयति न चेत्यादिना। बाधकान्तरमपीति। शब्दो न पृथिवीगुणः श्रोत्रग्राह्यत्वात् यन्नैवं तन्नैवं यथा पार्थिवरूपमित्यादिकमित्यर्थः। दूष्यमिति। गन्धो न पृथिवीगुणः घ्राणग्राह्यत्वात् यन्नैवं तन्नैवम्, यथा पार्थिवरूपमित्याभाससाम्यादिति भावः। गौरवमिति। भूतचतुष्टयातिरिक्तकल्पनागौरवमित्यर्थः। भवत इति। अनुमानेनाकाशं कल्पयत इति भावः। अस्माकं त्वाकाशस्य प्रत्यक्षसिद्धतया न गौरवस्य दोषावहत्वमिति। ननूक्तरीत्या शब्दस्य पृथिव्यादिधर्मत्वसंभवादाकाशे शब्दस्वीकारः किमर्थं इत्याशङ्क्याह आगमवशादिति॥

आकाशात् स्पर्शतन्मात्रम्। ततो वायुः। तस्य विशिष्टस्पर्शवत्त्वे सति रूपशून्यत्वम्, अस्मदादिस्पर्शनैकेन्द्रियग्राह्यद्रव्यत्वम्, अनुष्णाशीतस्पर्शविशिष्टत्वे सति गन्धशून्यत्वम् इत्यादि लक्षणम्।

अस्य त्वगिन्द्रियायोग्यत्वाप्रत्यक्षत्वादिसाधनानि अरूपिद्रव्यत्वादीनि उपलम्भविरोधानैकान्त्या-

---

स्पर्शतन्मात्रमिति। अत्र उत्तरोत्तरतन्मात्रेष्वपि तत्तद्भूतद्वयमध्यमावस्थाविशिष्टद्रव्यत्वमित्यादिना लक्षणोहस्य प्रदर्शितत्वात् न लक्षणमुक्तमिति ध्येयम्। विशिष्टेति। तन्मात्रातिव्याप्तिवारणाय सर्वत्र विशिष्टपदम्। आकाशातिव्याप्तिवारणाय सत्यन्तम्। पृथिव्यादावतिव्याप्तिवारणाय रूपशून्यत्वम्। मुक्तेन्द्रियाणां विषयनियमाभावात् असम्भववारणाय अस्मदादीति। पृथिव्याद्यतिव्याप्तिवारणाय एकेति। स्पर्शातिव्याप्तिवारणाय द्रव्येति। एवमुत्तरत्राप्यूह्यम्। उपलम्भविरोधेति। त्वगिन्द्रियव्यापनानन्तरमेव शीतो वायुरिति प्रतीतेरिति भावः। अनैकान्त्येति। कालेऽनैकान्त्यात् अप्रत्यक्षत्वसाध्ये आत्मन्यप्यनैकान्त्याच्चेति भावः। आदिपदेन अप्रयोजकत्वं गृह्यते। तदेवोपपादयति स्पर्शत्वमेव हीति। इन्द्रियाणां स्वस्वव्यवस्थापकगुणपुरस्कारस्यैवापेक्षितत्वादिति भावः।

---

आकाशात् स्पर्शतन्मात्रमिति। उत्तरोत्तरतन्मात्रेष्वपि तत्तद्भूतद्वयमध्यमावस्थाविशिष्टद्रव्यत्वमित्यादिना आकाशवायुमध्यमावस्थाविशिष्टद्रव्यत्वं तल्लक्षणं सिद्धमिति नेह लक्षणाभिधानमिति बोद्धव्यम्॥ विशिष्टेति प्रागुक्तार्थकं तन्मात्रवारणाय। आकाशवारणाय सत्यन्तम्। पृथिव्यादिवारणाय विशेष्यम्; रूपत्वावच्छिन्नाश्रयतासंबन्धावच्छिन्नप्रतियोगिताकाभावार्थकम्। तेन संयोगसंबन्धावच्छिन्नरूपत्वावच्छिन्नप्रतियोगिताकाभावस्य पृथिव्यादौ सत्त्वेऽपि न क्षतिः। अस्मदादीति। स्पार्शनेतरास्मदादिप्रत्यक्षाविषयत्वे सति अस्मदादिस्पार्शनविषयद्रव्यत्वं तादृशप्रत्यक्षविषयद्रव्यत्वं वेत्यर्थः। घटादिवारणाय सत्यन्तम्। स्पार्शनप्रत्यक्षविषयतया असंभववारणाय तत्र स्पार्शनेतरेति। मुक्तेन्द्रियाणां विषयनियमाभावात् तद्वारणायास्मदादीति, कर्मविशिष्टार्थकम्। वैशिष्ट्यं एककालावच्छिन्नैकात्मवृत्तित्वसंबन्धेन। इन्द्रियादिवारणाय विशेष्यम्। स्पर्शवारणाय तत्र द्रव्यत्वनिवेशः। मुक्तादिप्रत्यक्षविषयतामादाय स्पर्शेऽतिव्याप्तिवारणायास्मदादीति प्रागुक्तार्थकम्। अनुष्णाशीतेत्यादि। जलादिवारणाय सत्यन्तम्। पृथिवीवारणाय विशेष्यम्। आश्रयतासंबन्धावच्छिन्नगन्धत्वावच्छिन्नप्रतियोगिताकाभावार्थकम्। तेन संयोगसंबन्धावच्छिन्नगन्धाभावस्य पृथिव्यां सत्त्वेऽपि न क्षतिः। आदिना चाक्षुषविषयत्वे सति स्पार्शनविषयद्रव्यत्वसङ्ग्रहः। ननु वायौ अरूपिद्रव्यत्वेन हेतुना स्पार्शनाविषयत्वप्रत्यक्षाविषयत्वयोस्सिद्धया स्पार्शनविषयत्वप्रत्यक्षविषयत्वघटितलक्षणासंभव इत्याशङ्क्याह अस्येति। अरूपिद्रव्यत्वादीति। आदिना अचाक्षुषद्रव्यत्वपरिग्रहः। घटादौ व्यभिचारवारणाय अरूपीति। स्पर्शे तद्वारणाय द्रव्येति। उपलम्भविरोधेत्यादि। वायुं स्पृशामि, वायुं त्वचा साक्षात्करोमीत्याद्युपलम्भेन वायोः स्पार्शनविषयत्वप्रत्यक्षविषयत्वयोस्सिद्धया बाधात्, काले व्यभिचारात्, प्रत्यक्षाविषयत्वसाध्ये आत्मन्यपि व्यभिचाराच्च निरसनीयानीत्यर्थः। आदिना अप्रयोजकत्वसङ्ग्रहः। तदेवोपपादयति

दिभिर्निरस्तनीयानि। स्पर्शवत्त्वमेव हि स्पर्शनेन्द्रियग्राह्यत्वौपयिकम्; न रूपवत्त्वम्। तथा च भाष्यश्च।[1] तदनुसारि विवरणकारवचनञ्च, "स्पर्शनमपि न सन्मात्रविषयम्; स्पर्शवद्वस्तुविषयत्वात्" इति। प्रमेयसंग्रहश्च, "त्वगिन्द्रियस्यापि स्पर्शवद्वस्तुविषये शक्तिः" इति। यदि च स्पर्शानुमेयो वायुः स्यात्; क्षितिसलिलतेजसामपि स्पर्शनग्राह्यत्वं न स्यात्; तत्रापि ततस्तदनुमानस्य सुवचत्वात्। उपलम्भस्य समत्वात्।

तस्य च वायोः स्वभावाद्वा अदृष्टात्मकेश्वरसङ्कल्पाद्वा स्वारसिकं तिर्यक्प्रसरणम्। पार्थिवादिद्रव्येण वा वाय्वन्तरेण वा अभिघातवशात् भ्रमणोर्ध्वगमनादयः। ते च दूरस्थेन तृणरजःप्रभृतीनां भ्रमणोर्ध्वगमनादिभिरनुमेयाः। तत्रत्येन तु स्पर्शनग्राह्याः। एतेन वायोर्नानात्वमपि सिद्धम्।

अस्य च सर्वतः पार्थिवाप्योपरोधे सति स्तम्भः। सलिलातपकुसुमादियोगात् शीतोष्णसौरभारोपः। तथा च अन्वयव्यतिरेकौ। एतेन, "वृद्धिः समानैः सर्वेषां विपरीतैर्विपर्ययः" इति न्यायात्

---

**भाष्यश्चे**ति। "नापि त्वचा स्पर्शवद्वस्तुविषयत्वात्" इति सन्मात्रप्रत्यक्षभङ्गभाष्ये दर्शनादिति भावः। ननु वायोस्त्वगिन्द्रियग्राह्यत्वे तदूर्ध्वगमनादिकर्मणामपि त्वगिन्द्रियग्राह्यत्वसम्भवेन तृणादिभ्रमणोर्ध्वगमनाद्यनुमेयत्वं न स्यादित्याशङ्क्याह **ते च दूरस्थेने**ति। पुंसेति शेषः। **एतेने**ति। वायुभ्रमणोर्ध्वगमनादेर्वाय्वन्तराभिघाताद्यत्वेनेत्यर्थः। स्पर्शनेन्द्रियेणेत्यर्थः। **पार्थिवाप्योपरोधे** इति। पार्थिवेन वा आप्येन वा उपरोधे सति वायुः स्तब्धो भवतीत्यर्थः; भस्त्रिकान्तर्गतवाय्वादौ तथा दर्शनात्। **वृद्धिः समानै**रिति। शीतद्रव्यस्य वातवर्धकत्वं वैद्यशास्त्रसिद्धम्। येन यत् संवर्ध्यते, तत् तत्सजातीयमित्यायुर्वेदः। अतः शीतद्रव्येण संवर्ध्यमानस्य वातस्य शीतत्वेनाऽऽकारेण शीतद्रव्यसाजात्य

---

**स्पर्शवत्त्वमेवे**ति। कालान्यद्रव्यवृत्तिविषयतासंबन्धेन स्पार्शनं प्रति उद्भूतस्पर्शस्य हेतुत्वाभिप्रायेणेदम्। **औपयिकं** प्रयोजकम्। **भाष्यश्चे**ति। "नापि त्वचा स्पर्शवद्वस्तुविषयत्वात्" इति सन्मात्रप्रत्यक्षभङ्गभाष्ये दर्शनादिति भावः। **उपलम्भस्ये**ति। घटं स्पृशामि, त्वचा घटं साक्षात्करोमीत्याद्युपलम्भस्येत्यर्थः। **स्वभावादि**ति। शक्तिविशेषादित्यर्थः। **अदृष्टात्मकेश्वरसङ्कल्पादि**ति। पार्थिवादिद्रव्येण वाय्वन्तरेण वाऽभिघाताभावे वायोः तिर्यक्प्रसरणं भूयादित्याकारकादित्यादिः। सिद्धान्ते ईश्वरसङ्कल्पातिरिक्तादृष्टानुपगमादिति भावः। वायुतिर्यग्गमनस्यादृष्टकारितत्वं कणादसूत्रेऽप्युक्तम्, "अग्नेरूर्ध्वज्वलनं वायोस्तिर्यग्गमनम् अणूनां मनसश्चाद्यं कर्मादृष्टकारितम्" इति। **दूरस्थेने**ति। इदं च त्वक्संयोगविरहेण प्रत्यक्षासंभवप्रदर्शनाय। **एतेने**ति। एकस्य वायोर्वाय्वन्तरेणाभिघातदर्शनेनेत्यर्थः। **सर्वत** इत्यादि। भस्त्रिकादौ तथा दर्शनादिति भावः। अनुष्णाशीतस्पर्शवत्त्वादिघटितलक्षणाव्याप्तिमाशङ्क्याह **सलिले**त्यादि। **तथाचे**ति। **चो हेतौ**। सलिलादिसंसर्गे सति वायौ शीतस्पर्शादिप्रत्ययः, तदभावे तु नेत्यनुभवादित्यर्थः। **एतेने**ति। वायौ शीतस्पर्शप्रत्ययस्यान्वयव्यतिरेकाभ्यां सलिलसंयोगकृतत्वनिर्णयेनेत्यर्थः। **वृद्धिरित्यादि**। शीतद्रव्यरूपस्य जलस्य वातवर्धकत्वं वैद्यशास्त्रसिद्धम्। यस्य यत् संवर्धकम्, तत् तत्सजा-

---

1 वायोरस्पर्शनत्वं वैशेषिकोक्तमपि न नैयायिकेष्टम्। तथाच नैयायिकोक्तिवत् असद्भाष्यमपीति तत्समुच्चयार्थो भाष्यश्चेति चकारः। 'स्पर्शानुमेयो वायुः', वायोर्वायुसंमूर्छनं नानात्वलिङ्गम्' इत्यादिवैशेषिकसूत्रप्रत्यभिज्ञानमत्रोपदिर्शितवाक्ये भाष्यम्।

वायुः शीत इत्यायुर्वेदानुसारिणां वादिनां मतं निरस्तम् । शीतसंवर्ध्यत्वोष्णापचेयत्वादिभिः साम्यात्तु शीतत्वो(त्वयो)पदेशः । न तु सजातीयविजातीयाभ्यामेवोपचयापचयाविति नियमः; पार्थिवादिभिर्दोषाणामनियमेनोपचयापचयदर्शनात् ॥ तत्रापि तत्तत्पदार्थसांसिद्धिकसलिलाद्यंश-शक्त्या तदुपपत्तिरिति चेत्—अत्रापि तथात्वे को विरोधः? व्यष्टयवस्थस्य मारुतस्य तदुपचयापचयहेतूनाञ्च पाञ्चभौतिकत्वात् । "आपोमयः प्राणः" इति श्रुत्या प्राणस्य सलिलाप्यायितत्वसिद्धेश्च शीतसंवर्ध्यत्वाद्युपपत्तेः । दुरूहां वस्तुशक्तिमवलम्ब्यैव स्वभावः प्रभावश्च तैरेव क्वचित्क्वचित् वर्ण्यते ; यथा दुन्दुभिस्वनादौ । सा चात्राप्यनिवार्येति न सङ्कटं किञ्चित् ॥

---

मङ्गीकार्यमित्यर्थः । उष्णापचेयत्वेति । उष्णनिवर्त्यत्वेत्यर्थः । शीतत्वोपदेश इति । वैद्यशास्त्र इति शेषः । ननु शीतसंवर्ध्यत्वे शीतत्वं दुर्वारमित्याशङ्क्याह नत्विति । पार्थिवादिभिरिति । वातपित्त-श्लेष्मरूपाणां दोषाणां सजातीयविजातीयाभ्यामेव उपचयापचयाविति नियमं परित्यज्य अनुष्णाशीतपार्थि-वादिभिरुपचयापचययोरायुर्वेदे एव प्रतिपादनदर्शनादिति भावः । ननु न पार्थिवेन कदापि वायोरुपचयः; अपि तु तदवष्टब्धेन सलिलांशेन शीतेनैवेति शङ्कते तत्रापीति । अत्रापि तथात्वे इति । यत्र शीतेन वायोरुपचय उच्यते, तत्र तदुपष्टब्धानुष्णाशीतपार्थिवांशेन अनुष्णाशीतवायोरुपचय इत्यस्त्विवत्यर्थः । पाञ्चभौतिकत्वादिति । ततश्च व्यष्टयवस्थवायौ विद्यमानशीतांशस्तेन वर्ध्यते इत्यभिप्रायः । सलिला-प्यायितत्वसिद्धेश्चेति । न च एतद्बलादेव प्राणस्यापि शीतत्वमङ्गीकर्तव्यम्; अशीतस्य शीताप्यायित-त्वासम्भवादिति वाच्यम्; "अन्नमयं हि सोम्य मनः" इति निस्स्पर्शस्यापि मनसोऽन्नाप्यायितत्वश्रवणेन शीतं शीतमेवाप्याययतीति निर्बन्धस्य निर्निबन्धनत्वादिति भावः । दुरूहामिति । अतर्क्यामित्यर्थः । तैरेवेति । आयुर्वेदविद्भिरेवेत्यर्थः । दुन्दुभिस्वनादाविति । अल्पपरिमाणदुन्दुभिताडनस्य सर्वदिग्व्यापिमहाध्वन्या-

---

तीयमित्यायुर्वेदशब्दितवैद्यशास्त्रसिद्धो नियमः । तथाच वायोर्जलसजातीयत्वावश्यम्भावाच्छीतस्पर्शवत्त्व-मेवाश्रयणीयमित्यायुर्वेदविदां मतमित्यर्थः । ननु शीतसंवर्ध्यत्वान्यथानुपपत्त्या शीतत्वासिद्धावपि वैद्य-शास्त्र एव कण्ठरवेण शीतत्वोपदेशात् तद्बलेन वायौ शीतत्वसिद्धिर्दुर्वारैवेत्यत आह शीतसंवर्ध्यत्वेति । उष्णापचेयत्वम्=उष्णद्रव्यनिवर्त्यत्वम् । ननु तर्हि प्रागुक्तनियमभङ्ग इत्याशङ्क्य तादृशनियम एव नास्तीत्याह ननु सजातीयेति । दोषाणां वातपित्तश्लेष्मणाम् ; अनियमेनोपचयापचयदर्शनादिति । अनुष्णाशीत-स्पर्शवतः केनचित् पार्थिवेन शीतस्याप्यभिवृद्धेर्वैद्यशास्त्र एव प्रतिपादनदर्शनादित्यर्थः । ननु पार्थिवेन शीतस्य नाभिवृद्धिः; किन्तु तदन्तर्गतसलिलांशेनैव ; पञ्चीकरणेन पार्थिवेऽपि सलिलांशसद्भावादित्याशङ्क्यते तत्रापीति ॥ अत्रापि तथात्व इति । यत्र शीतेन सलिलेन वायोरभिवृद्धिरभिधीयते, तत्रापि न सलिलेन वायोरभिवृद्धिः ; किन्तु तदन्तर्गतेनानुष्णाशीतस्पर्शवता पार्थिवेनैवेत्यङ्गीकार इत्यर्थः । पाञ्चभौतिकत्वा-दिति । तथाच व्यष्टयवस्थवाय्वन्तर्गतशीतांशः सलिलेन संवर्ध्यत इत्यभिप्रायः । एकसङ्घाततापन्नत्व-रूपाप्यायकत्ववत् संवर्धकत्वमपि विजातीयस्य संभवत्येवेत्याह आपोमय इत्यादिना । आप्यायकत्वं हि सजातीयस्यैवेति न नियमः; "अन्नमयं हि सोम्य मनः" इति निस्स्पर्शस्य मनसोऽप्यन्नाप्यायितत्व-दर्शनादिति भावः । दुरूहामिति । एवंविधहेतुसद्भावादत्रैवं रूपा शक्तिरित्येवमूहितुमशक्यामित्यर्थः ।

स च त्वगिन्द्रियाप्यायनेन प्राणशरीरविषयात्मतया चोपकरोति । तत्र शरीरधारणादिहेतुर्वायुविशेष एव प्राणसंज्ञः। न [वा] वायुमात्रम्; नापि वायुक्रिया। सूत्रितञ्च, 'न वायुक्रिये पृथगुपदेशात्' इति । स एव व्यापारभेदात् पञ्चधा दशधा चोच्यते । सूत्रितञ्च, "पञ्चवृत्तिर्मनोवद् व्यपदिश्यते"

---

रम्भकत्वदर्शनादिति भावः । आदिपदेन अयस्कान्तादेरयआकर्षणादिहेतुत्वमित्यादि द्रष्टव्यम् ।

प्राणात्मना शरीरात्मना विषयात्मना च उपकारकत्वं प्रपञ्चयति **तत्रेत्यादिना । वायुविशेष एवेति ।** कश्चन अवस्थाविशेषमापन्नो वायुरेवेत्यर्थः । **न वायुक्रिये पृथगुपदेशात् ।** अयमर्थः — "यः प्राणः स वायुः; स एष वायुः पञ्चविधः" इति श्रुतिबलात् वायुरेव प्राण इत्यपि न; उच्छ्वासनिःश्वासादिषु प्राणः प्रसिद्धेः वायुक्रिया प्राण इति पक्षोऽपि न सम्भवति; कुतः? **पृथगुपदेशात्,** "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी" इति वाय्वपेक्षया प्राणस्य पृथगुपदेशात् । न हि प्राणस्य वायुत्वे तत्क्रियात्वे वा पृथगुपदेशः समञ्जसो भवति । अभेदे वैयर्थ्यात् । क्रियात्वेऽपि भूतान्तरेषु तत्तत्क्रियायाः पृथगुपदेशाभावेन इहापि तदयोगादिति । **व्यापारभेदादिति ।** (?)उच्छ्वास-निश्वासबलवत्कर्मकरणोत्क्रमणसर्वाङ्गान्तरव्यापनरूपवृत्तिभेदात् प्राणापानव्यानोदानसमानरूपेण पञ्चधा व्यपदिश्यते इत्यर्थः । **पञ्चवृत्तिर्मनोवत् व्यपदिश्यते ।** अयमर्थः—यथा कामादिवृत्तिभेदेऽपि न कामादिकं मनसस्तत्त्वान्तरम्, "कामः सङ्कल्पो विचिकित्सा श्रद्धा अश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव" इति वचनात्; एवम्, "प्राणोऽपानो व्यान उदानः समानोऽन इत्येतत् सर्वं प्राण एव" इति

---

तैरेवेति । आयुर्वेदविद्भिरेवेत्यर्थः । **दुन्दुभिस्वनादाविति ।** ओषधिविशेषसंप्रयोगवशेन दुन्दुभिस्वने रोगविशेषनिवर्तकत्व-सर्पापसारकत्वादेस्तैः प्रतिपादनादिति भावः। अत एव हि[1] यादवाभ्युदयेऽप्युक्तम्, "सर्पापसारौषधिसंप्रयुक्ता भेरीव साभीमतरं ररास" (4. 118) इति । **आदिना** अयस्कान्तादिसङ्ग्रहः । वायुश्चतुर्विधः; त्वगिन्द्रियाप्यायकप्राणशरीरविषयभेदात् इति विभागाभिप्रायेणाह **सचेत्यादिना** । त्वगिन्द्रियेणैकसङ्घाततापन्नो वायुविशेष इन्द्रियाप्यायकः। ननु वायुमात्रस्य वायुक्रियाया वा प्राणरूपत्वयोक्तविभागोऽनुपपन्न इत्याशङ्कयाह **तत्रेति । वायुविशेष एवेति ।** कश्चनावस्थाविशेषमापन्नो वायुरेवेत्यर्थः। प्राणो न वायुमात्रं न च तत्क्रिया; "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः-पृथिवी विश्वस्य धारिणि" इति वाय्वपेक्षया प्राणस्य पृथगुपदेशात् । न हि प्राणस्य वायुत्वे तत्क्रियात्वे वा पृथगुपदेशः समञ्जसो भवति; अभेदे वैयर्थ्यात् । क्रियात्वेऽपि भूतान्तरेषु । तत्तत्क्रियायाः पृथगुपदेशाभावेनेहापि तदयोगादिति । नन्वपानादिसद्भावादुक्तविभागानुपपत्तिरित्याशङ्कयाह **स एवेति ।** प्राण एवेत्यर्थः । **व्यापारभेदादिति ।** (?) उच्छ्वासनिश्वासबलवत्कर्मकरणोत्क्रमणसर्वाङ्गव्यापनरूपवृत्तिभेदात् प्राणापानव्यानोदानसमानरूपेण पञ्चधा व्यपदिश्यत इत्यर्थः। **पञ्चवृत्तिरित्यादि ।** अयमर्थः; कामादिवृत्तिभेदेऽपि न कामादिकं मनसस्तत्त्वान्तरम्, "कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव" इति वचनात्, एवं, "प्राणोऽपानोव्यान उदानस्समानोऽन इत्येतत् सर्वं प्राण एव"

---

1 अत्र माघेऽप्युक्तमित्येव पाठोऽस्ति। तत्र रोगविशेषनिवर्तकत्वपरश्लोकोऽस्ति चेत् उपात्तः स्यात्।

इति । प्राणापानव्यानोदानसमानभेदात् पञ्चधा । नागकूर्मकृकरदेवदत्तधनञ्जयाख्यैर्भेदैः स दशधा । प्राणशब्दस्तु वादशब्दवत् सामान्यतो विशेषतश्च व्युत्पन्नः(निष्पन्नः) ॥ अस्य शरीरेन्द्रियधारकत्वम्, "यस्मिन्नुत्क्रान्ते इदं शरीरं पापिष्ठतरमिव दृश्यते" "एतस्यैव सर्वे रूपमभवन्" इत्यादिश्रुति-

---

वचनात् अपानादयोऽपि प्राणस्यैव वृत्तिविशेषाः ; न तत्त्वान्तरमित्यवगम्यते इति । नागकूर्मेति । "प्राणोऽपानः उदानश्च समानो व्यान एव च । नागः कूर्मश्च कृकरो देवदत्तो धनञ्जयः॥ चरन्ति दशनाडीषु दशप्राणादिवायवः। तुन्दस्थं जलमन्नञ्च रसादि च समीकृतम् ॥ तुन्दमध्यगतः प्राणः तथा कुर्यात् पृथक्पृथक् । इत्यादि चेष्टनं प्राणः करोति वपुषः स्थितिम् ॥ अपानवायुर्मूत्रादेः करोति च विसर्जनम् । हानोपादानचेष्टादिः क्रियते व्यानवायुना ॥ उन्नीयते शरीरस्थमुदानेन नभस्वता । पोषणादि शरीरस्य समानः कुरुते सदा । उद्गारादिक्रियो नागः कूर्मोऽक्ष्यादिनिमीलनः । कृकर(ल)श्च क्षुधः कर्ता दत्तो निद्रादिकर्मकृत् ॥" इत्यादिप्रमाणानि अनुसन्धेयानि । ननु यदि अपानादीनामपि प्राणत्वम्; तर्हि कथम्, "प्राणापान"[1] इत्यादिना प्राणेन सहपाठ इत्याशङ्कयाह प्राणशब्दस्त्विति । यथा वादशब्दः कथामात्रसाधारणोऽपि तत्त्वबुभुत्सु-कथारूपे विशेषे वर्तते, एवं पञ्चवृत्तिसाधारणोऽपि प्राणशब्दः प्राणवृत्तिविशेषेऽपि विशिष्य प्रयुज्यते इत्यर्थः। यस्मिन्नुत्क्रान्ते इति। प्राणानां मध्येऽहमेव ज्यायान् अहमेव ज्यायानित्येवं विवदमानान् ब्रह्मसमीप

---

इति वचनादपानादयोऽपि प्राणस्यैव वृत्तिविशेषाः, न तत्त्वान्तरमित्यवगम्यत इति । नागकूर्मेति । "प्राणोऽपान उदानश्च समानो व्यान एव च । नागः कूर्मश्च कृकरो(लो) देवदत्तो धनञ्जयः ॥ चरन्ति दशनाडीषु दशप्राणादिवायवः । तुन्दस्थं जलमन्नञ्च रसादि च समीकृतम् ॥ तुन्दमध्यगतः प्राणस्तानी-कुर्यात् पृथक् पृथक् । इत्यादिचेष्टनं प्राणः करोति वपुषःस्थितिम् ॥ अपानवायुर्मूत्रादेः करोति च विसर्जनम् । हानोपादानचेष्टादिः क्रियते व्यानवायुना ॥ उन्नीयते शरीरस्थमुदानेन नभस्वता । पोषणादि शरीरस्य समानः कुरुते सदा ॥ उद्गारादिक्रियो नागः कूर्मोऽक्ष्यादिनिमीलनः । कृकरश्च क्षुधः कर्ता दत्तो निद्रादिकर्मकृत् ॥" इत्यादिप्रमाणान्यत्रानुसन्धेयानि । ननु अपानादीनामपि प्राणरूपतायाः प्रागुक्ततया कथं प्राणापानेत्यादिना दशधा विभागः । प्राणत्वस्यापानत्वाद्यविरुद्धत्वात् । न ह्यविरुद्धानां द्रव्यत्वजलत्वादीनां विभाजकत्वं दृश्यत इत्यत आह प्राणशब्द इति । वादशब्दवदिति । यथा वादशब्दः कथात्वरूपसामान्यधर्मावच्छिन्नस्य तत्त्वबुभुत्सुकथात्वरूपविशेषधर्मावच्छिन्नस्य च वाचकः, तथेत्यर्थः । सामान्यतो विशेषतश्च निष्पन्न इति । अपानादिसाधारणधर्मावच्छिन्नस्य तद्व्यावृत्त-धर्मावच्छिन्नस्य च वाचक इत्यर्थः । तथाच विशेषधर्मस्य विभाजकत्वसंभवात् तदभिप्रायेणै। विभागः वादजल्पवितण्डाभेदेन कथाविभागवदिति भावः ॥

प्राणस्य शरीरेन्द्रियधारकत्वे प्रमाणमाह अस्येत्यादिना । यस्मिन्नुत्क्रान्त इति । अहमेव ज्यायान् अहमेव ज्यायानित्येवं विवदमानान् ब्रह्मसमीपं गतान् प्राणान् प्रति, "यस्मिन्नुत्क्रान्त इदं शरीरं

---

1 तत्त्वमुक्ताकलापे (.—53) आनन्ददायिन्याम्, "नाग उद्गिरणकरः, कूर्म उन्मीलनहेतुः, कृकलः क्षुधासाधनः, देवदत्तो जृम्भणहेतुः, धनञ्जयः पोषणकरः इति योगरहस्ये शास्त्रे उपयोग उक्तः" इति।

सिद्धम् । भाष्यञ्च, "प्राणस्य तु शरीरेन्द्रियधारणम्" इत्यादि । प्रपञ्चितश्चायमर्थः प्राणविद्यायाम् । एवं जङ्गमशरीरेष्विव स्थावरशरीरेष्वपि अस्यावस्थेयः; मूलनिषिक्तसलिलदोहदपार्थिवधातूनामभ्यादानात् । अत्रापि भाष्यम्, "स्थावरेषु हि प्राणस्य भावेऽपि तस्य पञ्चधाऽवस्थाय शरीरस्य धारणार्थत्वेनावस्थानं नास्ति" इति । "अत एव प्राणः" इति सूत्रे दीपश्च, "शलाकाकाष्ठादिषु प्राणापत्तेः स्थित्यभावात्" इति। नखदन्तरोमकिणादीनामपि मन्दप्राणाश्रयत्वं स्थायतत्त्वे करणपादाष्टमाधिकरणे प्रपञ्चितम् । अस्यैव रेचकपूरककुम्भकरूपं नियमनम् अष्टाङ्गयोगे चतुर्थमङ्गम् । आयुर्वेदेषु

---

गतान् प्राणान् प्रति, 'यस्मिन्नुत्क्रान्त इदं शरीरं पापिष्ठतरमिव दृश्यते स वः श्रेष्ठः' इति ब्रह्मणो वचनादुपन्यस्य वागाद्युत्क्रमणेऽपि शरीरस्य यथापूर्वावस्थानं प्रदर्श्य मुख्यप्राणोत्क्रमणे च, "स यथा सुहयः [1] पड्वीशशङ्कून् संखिदेत् एवमितरान् प्राणान् समखिदत् तं हाभिसमेत्योचुः भगवन्नेहि त्वं नः श्रेष्ठोऽसि, मोत्क्रमीः" इत्येवं यथा बलवान् अश्वः परीक्षार्थं कशया ताड्यमानः पड्बन्धनशङ्कून् पाटयति; एवं मुख्यप्राणस्य उज्जिगमिषतः इतरेन्द्रियोत्पाटनसामर्थ्यं शीघ्रं प्रदर्श्य पश्चात् तैरिन्द्रियैः स्वस्वस्थानप्रच्युतैः, 'भगवानेव श्रेष्ठः समुत्क्रमणं मा कार्षीः' इति प्रार्थितो मुख्यप्राणस्तूष्णीं बभूवेति प्रदर्शयन्ती छान्दोग्यवाजसनेयकश्रुतिरेव शरीरधारकत्वमिन्द्रियधारकत्वञ्च मुख्यप्राणस्य दर्शयतीत्यर्थः । एतस्यैव सर्वं रूपमभवन्निति। मुख्यप्राणस्यैव इतरे प्राणा नियाम्या अभवन्नित्यर्थः । भाष्यञ्चेति । "भेदश्रुतेर्वैलक्षण्याच्च" इति सूत्रे इति शेषः । प्रपञ्चितश्चेति । प्रपञ्चनप्रकारश्चास्माभिः, "यस्मिन्नुत्क्रान्ते" इति व्याख्याने समनन्तरमेवोक्तोऽत्रानुसन्धेयः । पार्थिवधातूनामिति । तत्सूक्ष्मांशानामित्यर्थः । अत्रापि भाष्यमिति । "न तु दृष्टान्तभावात्" इति सूत्रे इति शेषः । रेचकेति । अत्र, 'प्राणो वायुः शरीरस्थ आयामस्तस्य

---

पापिष्ठतरमिव दृश्यते स वः श्रेष्ठः" इति ब्रह्मणो वचनमुपन्यस्य वागाद्युत्क्रमेऽपि शरीरस्य यथापूर्वमवस्थानं प्रदर्श्य मुख्यप्राणोत्क्रमणे च, "स यथा सुहयः पड्वीशशङ्कून् संखिदेत्, एवमितरान् प्राणान् समखिदत् तं हाभिसमेत्योचुः भगवन् एहि त्वं नः श्रेष्ठोऽसि मोत्क्रमीः" इत्येवम्, यथा बलवानश्वः परीक्षार्थं कशया ताड्यमानः पड्बन्धनशङ्कून् पाटयति, एवं मुख्यप्राणस्योज्जिगमिषत इतरेन्द्रियोत्पाटनसामर्थ्यं प्रदर्श्य पश्चात्तैरिन्द्रियैः स्वस्वस्थानप्रच्युतैः भवानेव श्रेष्ठः समुत्क्रमणं मा कार्षीः इति प्रार्थितो मुख्यः प्राणस्तूष्णीं बभूवेति प्रदर्शयन्ती छान्दोग्यवाजसनेयकश्रुतिरेव शरीरधारकत्वमिन्द्रियधारकत्वं च मुख्यप्राणाय दर्शयतीत्यर्थः । एतस्यैव सर्वं रूपमभवन्निति । मुख्यप्राणस्यैव इतरे प्राणा नियाम्या अभवन्नित्यर्थः । भाष्यं चेति । "भेदश्रुतेर्वैलक्षण्याच्च" इति सूत्र इति शेषः । प्रपञ्चित इति । प्रपञ्चनप्रकारश्च व्यवहितपूर्वं, "यस्मिन्नुत्क्रान्ते" इत्येतद्विवरणे समुपदर्शितः । पार्थिवधातूनामिति । तत्सूक्ष्मांशानामित्यर्थः । अत्रापि भाष्यमिति । "न तु दृष्टान्तभावात्" इति सूत्र इति शेषः । अस्यैवेत्यादि ।

---

1 एतदर्थोऽस्माभिः परिष्कारे दर्शितः (छा. ५. 1–12) पड्विंशः पादसंहतिः । तस्या ईशाः— नियामका इत्यानन्दगिरिः । पड्वीशपदं नपुंसकमृग्वेदे (1-16-14) पादबन्धनसाधनं वा बन्धनक्रिया वा तदर्थ इति । "पश्चाच्चरणशंकौ तु पड्वीशो घुटिकोऽपि च" इति वैजयन्ती (भू. क्ष) इति ।

योगानुशासने चास्य प्रपञ्चो द्रष्टव्यः। प्राणाख्यात् वायोरन्य एव शरीरोपादानभूतो वायुः। तदुपादानत्वं वायुप्रचुरेषु मारुतादिशरीरेषु व्यक्तम्। विषयत्वं चण्डवातत ळवृन्तपवनादिषु ॥

वायोः कृत्स्नतेजः। ततस्तेजः। "वायोरग्निः" इत्यग्निशब्दस्तेजोमात्रपरः।

---

निग्रहः। प्राणायाम इति प्रोक्तो द्विविधः प्रोच्यते हि सः॥ पूरकः कुम्भको रेचः प्राणायामस्त्रिलक्षणः। नासिकाकृष्ट उच्छ्वासो ध्मातः पूरक उच्यते॥ कुम्भको निश्चलश्वासो रेच्यमानस्तु रेचकः। कुम्भकेन जपं कुर्यात् प्राणायामस्य लक्षणम्॥ दक्षिणनासारन्ध्रेण रेचयेत् प्रथमं द्विज। प्राणायामेऽथ वामेन नासारन्ध्रेण पूरयेत्॥" इत्यादिप्रमाणानि अनुसन्धेयानि। अष्टाङ्गयोग इति। यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाध्यष्टाङ्ग इत्यर्थः। प्राणात्मना उपकारकत्वप्रकारमाह—प्राणाख्यादिति। विषयात्मना उपकारकत्वप्रकारमाह विषयत्वञ्चेति।

ननु, "वायोरग्निः" इति श्रुतौ अग्निमात्रस्यैव वायूपादानकत्वश्रवणात् कथं कृत्स्नस्य तेजसो वायूपादानकत्वमित्याशङ्क्याह वायोरग्निरित्यत्रेति। यथा छान्दोग्ये, "ता अन्नमसृजन्त" इति श्रुतस्य अन्नशब्दस्य, "अधिकाररूपशब्दान्तरेभ्यः" इति सूत्रोक्तन्यायेन पृथिवीमात्रपरत्वम्; एवमिहापि, "आकाशाद्वायुः। वायोरग्निः। अग्नेरापः।" इति भूताधिकारात्, छान्दोग्ये, "तत्तेज ऐक्षत। बहु स्यां प्रजायेयेति। तदपोऽसृजत।" इति तेजोमात्रस्यैव जलप्रकृतित्वावेदनाच्च तैत्तिरीयके अपां प्रकृतौ

---

"प्राणो वायुः शरीरस्थ आयामस्तस्य निग्रहः। प्राणायाम इति प्रोक्तो द्विविधः प्रोच्यते हि सः॥ पूरकः कुम्भको रेच्यः प्राणायामस्त्रिलक्षणः। नासिकाकृष्ट उच्छ्वासो ध्मातः पूरक उच्यते॥ कुम्भको निश्चलश्वासो रेच्यमानस्तु रेचकः। कुम्भकेन जपं कुर्यात् प्राणायामस्य लक्षणम्॥ दक्षिणनासारन्ध्रेण रेचयेत् प्रथमं द्विजः। प्राणायामेऽथ वामेन नासारन्ध्रेण पूरयेत्॥" इत्यादिवचनसिद्धो रेचकपूरककुम्भकात्मकः प्राणायामः—यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाध्यात्मकाष्टाङ्गयोगे च प्रथमङ्गमित्यर्थः। ननु प्राणापेक्षयाऽतिरिक्तस्य शरीरोपादानभूतस्य वायोरपि सत्त्वादिन्द्रियाव्यापकप्राणशरीरविषयभेदेन त्रिधा विभागोऽनुपपन्न इत्याशङ्क्याह प्राणाख्यादिति। अन्य एवेति। पञ्चीकरणसिद्धस्य वायोः शरीरोपादानत्वात् तस्य च प्राणोत्क्रमणानन्तरमपि सद्भावादिति भावः। तदुपादानत्वमिति। वायूपादानकत्वमित्यर्थः। वैशेष्यात् तद्वाद इति भावः। वायुप्रचुरेष्विति। तस्य तत्राविभागरूपत्वादिति भावः। विषयं दर्शयति विषयत्वं चेति। इन्द्रियाव्यापकप्राणशरीरातिरिक्तं विषयत्वम्॥

ननु, "वायोरग्निः" इति श्रुतौ अग्निमात्रस्यैव वायूपादानकत्वश्रवणात् कथं कृत्स्नस्य तेजसो वायूपादानकत्वमित्याशङ्क्याह वायोरग्निरित्यत्रेति। तेजोमात्रपर इति। कृत्स्नतेजःपर इत्यर्थः। यथा छान्दोग्ये, "ता अन्नमसृजन्त" इत्यत्र श्रुतस्यान्नशब्दस्य, "अधिकाररूपशब्दान्तरेभ्यः" इति सूत्रोक्तन्यायेन कृत्स्नपृथिवीपरत्वम्। एवमिहापि, "आकाशाद्वायुः, वायोरग्निः अग्नेरापः" इति भूताधिकारात्, छान्दोग्ये, "तत्तेज ऐक्षत, बहु स्यां प्रजायेयेति, तदपोऽसृजत" इति तेजोमात्रस्यैव जलप्रकृतित्वप्रतिपादनाच्च। तैत्तिरीयके अपां प्रकृतौ प्रयुज्यमानस्याग्निशब्दस्य तेजश्शब्दसमानार्थकतया

ननु, 'वायोरग्निः' इत्युपादानत्वविवक्षायां प्रत्यक्षविरोधः। पर्णतृणकाष्ठादीनामेव भस्म-धूम-धूमध्वजादिरूपेण परिणामदर्शनात्। पर्णादीनाञ्च पार्थिवत्वात्। अप्रत्यक्षैस्तदानीमप्यदृष्टाद्युपनीतैः तेजोऽवयवैर्ज्वालारम्भ इति कल्पनस्य गुरुत्वात्। विचित्रारम्भस्य च भस्मधूमाङ्गारादिषु दृष्टत्वेनावर्जनीयत्वात्। स्पर्शविशेषस्य धूमादिगतगन्धविशेषवत् दुरालभास्पर्शादिवदुपपत्तेः। अतः सलिलस्य सहकारिभेदात् फेनतरङ्गबुद्बुदवत् पृथिव्या एवांशतो हुतवहादिपरिणामः इति सिद्धे, "वायोरग्निः" इत्यादि निमित्तकारणत्वमात्रेणापि उपपद्यते इति॥ तदसत्। अनन्यथासिद्धोपादानप्रकरणपठितसृष्टिप्रलयक्रमप्रक्रियाविरोधात्। पर्णतृणादीनामपि पाञ्चभौतिकत्वस्य वक्ष्यमाणत्वात्। तत एव तदंशतो

---

प्रयुज्यमानोऽग्निशब्दः छान्दोग्यगततेजश्शब्दसमानार्थक इति भावः। ननु तृणपर्णादीनां भस्माद्यात्मना परिणतानां न वह्न्युपादानत्वमुपपद्यते; अतोऽदृष्टवशानीततादात्विकतेजोन्तरकल्पनमेव युक्तमित्याशङ्क्याह विचित्रारम्भस्य चेति। विसदृशानां भस्मधूमादीनां तृणपर्णाद्यारब्धत्वस्य त्वयाप्यभ्युपगतत्वादिति भावः। ननु वह्नेः पार्थिवोपादानकत्वे कथं तद्विलक्षणोष्णस्पर्शोपलम्भ इत्याशङ्क्याह स्पर्शविशेषस्येति। धूमादीति। न हि धूमादौ विद्यमानो गन्धविशेषस्तदुपादानभूते तृणादावप्यस्ति। न वा दुरालभाद्यौषधिविशेषगतः कण्डूतिजनकः स्पर्शविशेषस्तदुपादानेऽप्यस्तीति भावः। अनन्यथासिद्धेति। पञ्चम्याः हेतुमात्रसाधारणतया, "वायोरग्निः" इति सृष्टिश्रुतेः कथंचित् अन्यथासिद्धिसम्भवेऽपि "आत्मन आकाशः सम्भूतः। आकाशाद्वायुः। वायोरग्निः" इत्युपादानप्रायपाठानुगृहीता, "वायोरग्निः" इति सृष्टिश्रुतिरनन्यथासिद्धत्वात् उपादानत्वे प्रमाणं भवत्येव। तथाच लयप्रकरणे, "पृथिव्यप्सु प्रलीयते। आपस्तेजसि लीयन्ते। तेजो वायौ लीयते" इति लयक्रमप्रतिपादिकाया अपि श्रुतेरनन्यथासिद्धत्वाच्चोपादानत्वं सिद्धम्; निमित्तकारणे लयासम्भवादिति भावः। तत एव तदंशत इति।

---

एव युक्तत्वादिति भावः। ननु, "वायोरग्निः" इत्यत्र पञ्चम्या निमित्तकारणत्वमात्रपरताया एवावश्यकतया न तस्य तेजोमात्रपरत्वमित्यभिप्रायेण शङ्कते नन्विति। धूमध्वजः=वह्निः। नन्वप्रत्यक्षैस्तदानीन्तनादृष्टाद्युपनीतैस्तेजोऽवयवैरेव ज्वालारम्भ इति कल्प्यत इत्याशङ्क्याह अप्रत्यक्षैरिति। ननु विचित्रारम्भायोगाद्गौरवं सोढव्यमित्याशङ्क्याह विचित्रारम्भस्य चेति। विसदृशारम्भस्य चेत्यर्थः। दृष्टत्वेनावर्जनीयत्वादिति। भस्मादीनां तृणादिविसदृशत्वस्य प्रत्यक्षसिद्धत्वादिति भावः। ननु वह्नेः पार्थिवोपादानकत्वे कथं तद्विलक्षणोष्णस्पर्शोपलम्भ इत्याशङ्क्याह स्पर्शविशेषस्येति। धूमादीति। न हि धूमादिगतो गन्धविशेषस्तदुपादानभूते तृणादावस्ति। न वा दुरालभाद्यौषधिविशेषगतः कण्डूतिजनकः स्पर्शविशेषः तदुपादानेऽस्तीति भावः। अनन्यथासिद्धेति। पञ्चम्या हेतुमात्रवाचकत्वेऽपि, "आत्मन आकाशः संभूतः आकाशाद्वायुः वायोरग्निः" इत्युपादानप्रायपाठानुगृहीतायाः, वायोरग्निरिति सृष्टिश्रुतेरुपादानपरताया आवश्यकत्वादिति भावः। प्रळयेति। लयप्रकरणे, "पृथिव्यप्सु प्रलीयते, आपस्तेजसि लीयन्ते, तेजो वायौ लीयत" इति लयक्रमप्रतिपादिकाऽपि श्रुतिरनन्यथासिद्धैव; निमित्तकारणे लयासंभवादिति भावः। तत एवेति। पाञ्चभौतिकत्वादेवेत्यर्थः। तदंशत इति। पर्णादिसंसृष्टतेजोंशैरित्यर्थः।

निवृत्तेरपीष्टत्वात्। ज्वालानिर्वापणानन्तरमेव तदवयवानुपलम्भवत्, तदुत्पत्तेः प्रागपि तथैवोपपत्तौ गौरवस्याप्यभावात्। अबिन्धने च जातवेदसि पार्थिवपरिणामात्मकत्वकल्पनाऽयोगात्। अनियतोपादानकल्पनेर्गुरुत्वात्। तदेवं तत्रतत्र लीन एवाग्निः सहकारिविशेषात् अदृष्टाद्युपनीतसजातीयावयवयोगाच्च उद्भूत उपलभ्यते। व्यवहरन्ति च महर्षयोऽपि, "काष्ठेऽग्निरिव शेरते", "दारुण्यग्निर्यथा तैलं तिले तद्वदसौ पुमान्" इत्यादि। अतः समष्टिसृष्टिदशायां वायोरेवोपादानात् अग्नेरुत्पत्तिरुपपन्ना। व्यष्टिदशायां तु तेजस एव सूक्ष्मात् स्थूलतेजसः समुद्भव इति॥ उष्णस्पर्शत्वभास्वररूपवत्त्वादिकश्च तेजसो लक्षणम्। तच्च वाक्चक्षुषोराप्यायकम्। "तेजोमयी वाक्", "आदित्यश्चक्षुर्भूत्वा अक्षिणी प्राविशत्", "रश्मिभिरेषोऽस्मान् प्रतिष्ठितः" इत्यादिश्रुतेः। दिवाभीतादिव्यतिरिक्तलोचनानामञ्जनविशेषादिशून्यानां तिमिराद्यतिरिक्तविषयप्रत्ययोत्पादने प्रभूतरूपमाप्यायकाति-

---

पाञ्चभौतिकत्वात् तत्संसृष्टतेजोंऽशैरेव वह्न्यारम्भः; न तु पार्थिवांशैरिति भावः। ननु तृणादिषु पाञ्चभौतिकतया तेजोंशसत्त्वे वह्न्युत्पत्तेः प्रागपि तेजोंश उपलभ्येत इत्याशङ्क्याह **ज्वालेति**। **अवयवानुपलम्भवदिति**। सतामेव तदवयवानां अनुपलम्भकरानवत् प्रागपि शास्त्रसिद्धपञ्चीकरणप्रक्रियया सतामेवानुपलम्भोपपत्तौ तदानीमेवादृष्टादिवशानीततेजोन्तरलक्षणधर्मिकल्पनागौरवस्यापि अनाश्रयणीयत्वादित्यर्थः। **अबिन्धने इति**। समुद्रमध्यवर्तिवडवामुखाग्नावित्यर्थः। ननु अबिन्धने ऽपामेवोपादानत्वम्, तार्णादिषु तृणादीनामेव पार्थिवानामित्याशङ्क्याह **अनियतेति**। ततश्च पञ्चीकृततेजोंश एवोपादानमिति भावः। ननु पञ्चीकृततेजोंशः किं उद्भूतरूपः, उत न? आद्ये उपलम्भावश्यम्भावः। द्वितीये अनुद्भूतरूपस्य उद्भूतरूपारम्भकत्वमयुक्तम् इत्याशङ्क्य, तप्ततैलवह्नेरनुद्भूतरूपस्य जलादिसंसर्गसहकारिवशात् उद्भूतरूपतेजोन्तरारम्भकत्वस्य प्रत्यक्षसिद्धतया तद्वदेव प्रागनुद्भूततेजोंशादेव उद्भूतरूपतेजोन्तरोद्भवे दोषाभावादित्यभिप्रयन्नाह **तदेवं तत्रतत्रेति**। **समष्टिसृष्टिदशायामिति**। भौतिकत्वानापन्नापञ्चीकृतभूतसृष्टिः समष्टिसृष्टिः। **आप्यायकमिति**। कार्यजननसामर्थ्यापादकमित्यर्थः। **आप्यायकातिरिक्तमिति**। "रश्मिभिरेषोऽस्मिन् प्रतिष्ठितः", 'आदित्यश्चक्षुर्भूत्वा' इत्यादिशास्त्रसिद्धाप्यायकसौरतेजस्संवलनस्य सार्वत्रिकतया सत्यपि तस्मिन् तमोवर्तिपदार्थाग्रहणात्

---

ननु तृणादिषु तेजोंशसत्त्वे वह्न्युत्पत्तेः प्रागपि तदुपलम्भः स्यादित्याशङ्क्याह **ज्वालेति**। **गौरवस्येति**। तदानीमदृष्टवशानीततेजोन्तरकल्पनागौरवस्येत्यर्थः। **अबिन्धन इति**। समुद्रमध्यवर्तिवडवामुखाभिविधुरादावित्यर्थः। नन्वबिन्धनेऽपामेवोपादानत्वम्। तार्णादिषु तृणादीनामेव पार्थिवानामित्याशङ्क्याह **अनियतेति**। ततश्च पञ्चीकृततेजोंश एव सर्वत्रोपादानमित्याश्रयणीयमिति भावः। ननु पञ्चीकृततेजोंशस्योद्भूतरूपवत्त्वे उपलम्भप्रसङ्गः, अनुद्भूतरूपवत्त्वे उद्भूतरूपवदारम्भकत्वानुपपत्तिरित्याशङ्क्य तप्ततैलान्तःपातिवह्नेरनुद्भूतरूपस्यापि जलसंसर्गरूपसहकारिवशादुद्भूतरूपवत्तेजोन्तरारम्भकत्वस्य प्रत्यक्षसिद्धतया अनुद्भूतरूपवत्तेजोंशादुद्भूतरूपवत्तेजोन्तरोत्पत्तौ न किञ्चिद्बाधकमित्यभिप्रायेणाह **तदेवं तत्रतत्रेति**। **समष्टीति**। भौतिकत्वानापन्नापञ्चीकृतभूतसृष्टिः समष्टिसृष्टिः। **व्यष्टीति**। पञ्चीकरणानन्तरभाविसृष्टिर्व्यष्टिसृष्टिः। **प्रभूतरूपमिति**। प्रचुरात्मकमित्यर्थः। उत्कृष्टमहत्त्ववदिति यावत्।

रिक्तं तत् अवश्यापेक्षितम्। वैश्वानराद्यात्मना च तदुपकारः। वैश्वानरो नाम शरीरान्तर्वर्ती प्राणादिसंयोगात् अशितपीतपाकादिहेतुस्तेजोविशेषः। शरीरत्वं तेजसः तेजःप्रचुरेषु दहनतपनादिशरीरेषु व्यक्तम्। विषयत्वं चन्द्रिकातप-शतह्रदा-हुतवहादिषु। तत्र हुतवहस्य ज्वालात्मकस्य दाह्यनाशे नाशदर्शनात्, पुष्कलकारणक्रमोपनिपातात्, एकदा अनेकदीपादर्शनाच्च

---

तदतिरिक्तप्रौढालोकापेक्षाऽस्तीति भावः। **अवश्यापेक्षितमि**ति। वश्यं न भवतीत्यवश्यम्, **अवश्यञ्च** तत् अपेक्षितञ्च अवश्यापेक्षितम्। अकामेनापि स्वीकरणीयमित्यर्थः। तेन **अपेक्षित**शब्दस्य कृत्यप्रत्ययान्तत्वाभावात्, "लुम्पेदवश्यमः कृत्ये" इति मकारलोपः कथम् इति शङ्का निरस्तेति द्रष्टव्यम्। **वैश्वानरो नामे**ति। "अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः। प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्"॥ इति प्रमाणमत्रानुसन्धेयम्। **शतह्रदे**ति। विद्युदित्यर्थः। **दहनः** दिक्पालाग्निशरीरम्। **हुतवहादिष्वि**ति। **व्यक्तम्** इत्यनुषङ्गः। **दाह्यनाश इति**। इन्धननाश इत्यर्थः। ततश्च प्रकृतेऽपि तैलवर्त्यवयवरूपदाह्यनाशेन ज्वालानाशोऽभ्युपगन्तव्य इति भावः। **पुष्कले**ति। तैलवर्त्यवयवान्तरसंयोगरूपपुष्कलकारणानां क्रमेण उपनिपातात् क्रमिकज्वालोत्पत्तिरवश्यम्भाविनीति भावः। तथापि क्रमेणोत्पन्नानां ज्वालानां यौगपद्यमेवास्तु; न तु पूर्वोत्पन्नानां विनाशः; येन क्षणिकत्वं स्यादित्याशङ्क्याह **एकदे**ति। दीपज्वालानां त्रिचतुरक्षणावस्थायित्वेन क्षणमात्रसम्बन्धित्वलक्षणक्षणिकत्वाभावमभिप्रयन् आह **आशुतरे**ति। ननु सेयं दीपज्वालेति प्रत्यभिज्ञैव स्थैर्यं साधयिष्यति। न चेयं प्रत्यभिज्ञा निर्वापितारोपितदीपप्रत्यभिज्ञातुल्यशीलेति शक्यम्; निर्वापितारोपणस्थले प्रत्यभिज्ञाया एवाभावादित्याशङ्क्य निर्वापणारोपणे पश्यतस्तत्र प्रत्यभिज्ञाया असम्भवेऽपि तददर्शिनो निष्क्रान्तप्रविष्टस्य प्रत्यभिज्ञादर्शनादि-

---

त्रसरेणुवारणायेदं, चक्षुराप्यायकतेजसस्तत्रापि संभवादाप्यायकातिरिक्तमिति। **तत्**=तेजः। **अवश्यापेक्षितमि**ति। वश्यं=सत्यामिच्छायां स्वीकार्यम्। तन्न भवतीत्यवश्यम्, अवश्यं च तदपेक्षितञ्चेति अवश्यापेक्षितम्। अकामेनापि स्वीकार्यतयाऽवश्यापेक्षित[व्यः?]मित्यर्थः। तेनापेक्षितशब्दस्य कृत्यप्रत्ययान्तत्वविरहात्, "लुम्पेदवश्यमः कृत्ये" इति लोपासंभवात् कथमवश्यापेक्षितमिति रूपसिद्धिरित्यपास्तम्। तच्चतुर्विधम्, इन्द्रियाप्यायक-वैश्वानर-शरीर-विषयभेदादिति विभागमभिप्रेत्येन्द्रियाप्यायकस्य प्रागुक्ततया वैश्वानरादिकमाह **वैश्वानरेत्यादिना**। **वैश्वानरो नामे**ति। "अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः। प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्" इत्यादिकमिहानुसन्धेयम्। दहनः=दिक्पालाग्निदेवता। शतह्रदा=विद्युत्। हुतवहः=परिदृश्यमानोऽग्निः। **दाह्यनाश इति**। इन्धननाश इत्यर्थः। ततश्च प्रकृतेऽपि तैलवर्त्यवयवरूपदाह्यनाशेन ज्वालानाशोऽभ्युपगन्तव्य इति भावः। **पुष्कले**ति। तैलवर्त्यवयवान्तरसंयोगरूपपुष्कलकारणानां क्रमेणोपनिपातात् क्रमिकज्वालोत्पत्तिरवश्यम्भाविनीति भावः। नन्वस्तु क्रमिकज्वालोत्पत्तिः; तथापि क्रमेणोत्पन्नानां ज्वालानां यौगपद्यमेवास्तु; न तु पूर्वोत्पन्नानामाशुतरमेव विनाशः-येन क्षणिकत्वं स्यादित्याशङ्क्याह **एकदे**ति। अनेन दाह्यनाशेऽविलम्बेनैव ज्वालानाश इत्युक्तं भवति। ज्वालानां त्रिचतुरक्षणस्थायित्वात् द्वितीयक्षणवृत्तिध्वंसप्रतियोगित्वरूपक्षणिकत्वासंभवादाह

आशुतरविनाशित्वरूपं क्षणिकत्वं सिद्धम्। प्रत्यभिज्ञा तु [1]निष्क्रान्तप्रविष्टवदसंभवात् निर्वापिता(निष्क्रान्तप्रविष्टस्य निष्क्रमणदशानिर्वापिता?)रोपितदीपादिष्विवान्यथासिद्धा। प्रत्यक्षत्वं ज्वालाभेदस्योक्तं तत्त्वरत्नाकरे, "निपुणनिरीक्षणे च जलवेणिकावत् ज्वालासञ्चरणं दृश्यते" इति। "अहेतुक एव ज्वालाविनाशः" इति बौद्धगन्धिनः केचिदाहुः। तदयुक्तम्; क्षणभङ्गप्रसङ्गात् अदृष्टेश्वरादेश्च हेतोरवर्जनीयत्वात्। वेगादेश्चाविनाभूतस्यावस्थान्तरापादकत्वोपपत्तेः। एवमन्त्यशब्द-चरमसंस्कारादिष्वपि स्वतोविनाशवादिनो निरस्ताः। तदखिलमभिप्रेत्योक्तं वेदार्थ-

तत्राऽपि प्रत्यभिज्ञा तादृशीत्याह प्रत्यभिज्ञेति। जलवेणिका सूक्ष्मजलधारा। बौद्धगन्धिन इति। मृषावादिन इत्यर्थः। अहेतुकचरमवृत्तिनाशे ज्वालानाशस्य दृष्टान्तीकरणादिति भावः। क्षणभङ्गेति। नाशस्य विलम्बाप्रसक्तेरिति भावः। वेगादेश्चेति। वेगेन वियति विक्षिप्तभिदुरमृत्पिण्डस्य वियत्येव शकलीभावदर्शनेन नाशहेतुत्वमस्तीति भावः। अवस्थान्तरेति। अस्यायं भावः—नाशस्य अभावरूपत्वे हि अहेतुकत्वशङ्काऽपि। अस्मन्मते तु नाशो नाम भावरूपावस्थान्तरमेव; न तस्याहेतुकत्वमिति। एवमन्त्यशब्देति। उपान्त्यशब्दस्य वा फलस्य वा कारणनाशादीनां वा सर्वत्र सुलभत्वादिति भावः।

---

आशुतरविनाशित्वरूपमिति। ननु निष्क्रान्तप्रविष्टे देवदत्तादौ सोऽयं देवदत्त इति प्रत्यभिज्ञयेव सेयं दीपज्वालेति प्रत्यभिज्ञया स्थैर्यसिद्ध्या न दीपज्वालाया आशुतरविनाशित्वसंभव इत्याशङ्क्याह प्रत्यभिज्ञा त्विति। निष्क्रान्तप्रविष्टवदसंभवादिति सप्तम्यन्ताद्वतिः। निष्क्रान्तप्रविष्टे देवदत्तादाविव याथार्थ्यासंभवादित्यर्थः। निर्वापितारोपितदीपादिष्विवान्यथासिद्धेति। निर्वापितारोपितदीपादिषु निर्वापणारोपणे अजानतो जायमाना सोऽयं दीप इति प्रत्यभिज्ञा सादृश्यदोषमूलकतया यथा भ्रान्तिरूपा, तथा सेयं दीपज्वालेति प्रत्यभिज्ञाऽपि भ्रान्तिरूपेत्यर्थः। प्रबलप्रमाणेन भेदसिद्धेरिति भावः। रङ्गरामानुजस्वामिनस्तु, "ननु सेयं दीपज्वालेति प्रत्यभिज्ञैव स्थैर्यं साधयिष्यति; न चेयं प्रत्यभिज्ञा निर्वापितारोपितदीपप्रत्यभिज्ञातुल्ययशीलेति शङ्क्यम्; निर्वापितारोपणस्थले प्रत्यभिज्ञाया एवासंभवादित्याशङ्क्य निर्वापणारोपणे पश्यतस्तत्र प्रत्यभिज्ञाया असंभवेऽपि तददर्शिनो निष्क्रान्तप्रविष्टस्य प्रत्यभिज्ञादर्शनादित्रापि प्रत्यभिज्ञा तादृशीत्याह प्रत्यभिज्ञेति" इति व्याचख्युः। इदं च निष्क्रान्तप्रविष्टस्य संभवादिति पाठाभिप्रायम्। निष्क्रान्तप्रविष्टस्य निष्क्रमणदशानिर्वापितारोपितदीपादिष्विवान्यथासिद्धेत्यपि पाठान्तरम्। जलवेणिकां=जलधाराम्, बौद्धगन्धिन=अद्वैतिनः। क्षणभङ्गप्रसङ्गादिति। द्वितीयक्षणवृत्तिध्वंसप्रतियोगित्वप्रसङ्गादित्यर्थः। विलम्बहेत्वभावादिति भावः। अविनाभूतस्येति। ज्वालाविनाभूतस्येत्यर्थः। तथाच तस्यैव नाशकत्वं संभवति; वियति विक्षिप्तलोष्टादिनाशे तस्य हेतुत्वदर्शनादिति भावः। अवस्थान्तरेति। अयं भावः—नाशस्य भावातिरिक्तत्वे हि अहेतुकत्वशङ्काऽपि; भावान्तराभावपक्षे नाशस्यापि भावान्तरतया न तत्र तच्छङ्का युक्तेति। एवमन्त्यशब्देति। उपान्त्यशब्दस्य वा

---

[1] निष्क्रान्तप्रविष्टवदिति पाठे उपर्यपि इवकारसत्त्वात् प्रथमव्याख्यारीतौ वतिप्रत्ययवैयर्थ्यमिति अन्यथा द्वितीयव्याख्या। निष्क्रान्तप्रविष्टस्येवेत्यन्वयो भवति।

संग्रहे, "दावाग्न्यादीनामपि पूर्वावस्थाविरोधिपरिणामपरम्परा अवर्जनीयैव" इति ।

तत्र भौमदिव्यादिभेदस्तत्रतत्र सामग्रीकार्याणि क्षणिकत्वस्थिरत्वादीनि यथायोगमुन्नेयानि ॥

तेजः पुनस्सामान्यतो द्विविधम्—प्रभा प्रभावच्चेति । आवरणसदसद्भावाधीनसङ्कोचविकासो यथावेगशक्ति अधिष्ठानदेशाधिकदेशप्रसारी तेजोविशेषः प्रभा । सा च प्रभावद्भिः सहोत्पद्यते, सह च विनश्यति । न चासौ विशीर्णदीपाद्यवयवः; ऊर्ध्वगमनस्वभावानां वाताद्यभिघातादर्शने

---

चरमसंस्कारेति । मुक्तिप्राक्कालीनानुभवजन्यसंस्कारेत्यर्थः । वेदार्थसंग्रह इति । दावानलविषनाशनविषादिवत् चरमवृत्तेः स्वतोऽपि नाशशङ्कामुद्धाव्य दावानलादावपि विनाशस्यावस्थान्तरापत्तिरूपत्वात् भावरूपावस्थान्तरापत्तेश्चाकारणकत्वासंभवात् अहेतुकविनाशो न सम्भवतीति प्रतिपादितमित्यर्थः । भौमदिव्यादीति । आदित्यादीनि ज्योतींषि दिव्यानि । आदिपदेन औदर्यादि गृह्यते । यथायोगमिति । यत्र योगो यस्य सम्भवति, तत्रेत्यर्थः ॥

यथावेगशक्तीति । वेगशक्त्यनुसारेण अधिष्ठानाधिकदेशं प्रसरतीत्यर्थः । न चासाविति । असौ प्रभेत्यर्थः । किं दीपावयवास्तिर्यग्गतिस्वभावाः, उत ऊर्ध्वगमनस्वभावाः इति विकल्प्य आद्ये ऊर्ध्वगतिर्न स्यात् ; ?[किञ्च] अग्न्यवयवानां लोकदृष्टोर्ध्वगमनस्वभावविरुद्धस्वभावकल्पनञ्च विरुद्धमिति दोषं हृदि निधाय द्वितीयं दूषयति ऊर्ध्वगमनस्वभावानामिति । दीपः किं पिण्डीभावस्वभावः, उत विशरणस्वभावः? आद्ये विशरणं न स्यात्, अन्त्ये पिण्डीभावो न स्यात्, परस्परविरुद्धस्वभावद्वयासम्भवात् । एकस्य स्वाभाविकत्वम्, अपरस्य औपाधिकत्वमित्यभ्युपगमे अत्यन्तापरिदृष्टोपाधिकल्पनागौरवमित्यादिकमिहानुसन्धेयम् । विरुद्धस्वभावानधिष्ठितायामुपलम्भानुगुणविष्वग्विशरणशीलायामतिरिक्तप्रभायां तु नायं विकल्पः

---

फलस्य वा कारणनाशादीनां वा सर्वत्र सुलभत्वादिति भावः । चरमसंस्कारः=मुक्तिप्राक्कालीनसंस्कारः । भौमदिव्यादिभेद इति । आदिना औदर्यादिपरिग्रहः । आदित्यादिज्योतींषिदिव्यानि ॥

प्रभास्वरूपमाह आवरणसदसद्भावेति । यथावेगशक्तीति । वेगशक्त्यनुसारेणाधिष्ठानदेशाधिकदेशप्रसारीत्यर्थः । अनेन स्वापृथक्सिद्धस्वासंयुक्तदेशसंयोगित्वोभयसंबन्धेन तेजोविशिष्टतेजस्त्वं प्रभाया लक्षणमिति फलितम् । एकदीपासंयुक्तदेशसंयोगिनि दीपान्तरेऽतिप्रसङ्गवारणायापृथक्सिद्धत्वनिवेशः । प्रभापृथक्सिद्धदीपवारणाय स्वासंयुक्तेत्यादि । स्वापृथक्सिद्धत्वं च स्वसंयोगाभावनिरूपितकालविशेषावच्छिन्नाधिकरणताशून्यत्वे सति स्वसंयुक्तत्वम् । यस्मिन् दीपे कदाचिदपि यस्य दीपस्य संयोगो नाभूत्—तत्रैकदीपनिष्ठाया दीपान्तरसंयोगाभावाधिकरणतायाः कालविशेषानवच्छिन्नतया तत्रापृथक्सिद्धत्ववारणाय स्वसंयुक्तत्वनिवेशः । कदाचिदेकदीपसंयुक्तदीपान्तरवारणाय सत्यन्तम् । न चासाविति । असौ=प्रभा । ऊर्ध्वगमनस्वभावानामिति । तिर्यग्गतिस्वभावत्वे प्रथममूर्ध्वगत्यनुपपत्तेः, अग्न्यवयवानां लोकदृष्टोर्ध्वगमनस्वभावविरुद्धस्वभावकल्पनासंभवाच्च तेषामूर्ध्वगमनस्वभावत्वमावश्यकमिति भावः । अत्रेदं बोद्धव्यम् ; दीपस्य पिण्डीभावस्वभावत्वे विशरणानुपपत्तिः, विशरणस्वभावत्वे पिण्डीभावानुपपत्तिः । परस्परविरुद्धस्वभावद्वयञ्चैकत्र न संभवति, एकस्य स्वाभाविकत्वमन्यस्यौपाधिकत्वमित्यभ्यु

युगपद्विष्वग्विशरणादिकल्पनस्य गुरुत्वात् । प्रभायाः [illegible] तथाभ्युपगमात् । स्थिरतरेषु मणिद्युमणिप्रभृतिषु च विशरणप्रसङ्गात् । तदभ्युपगमे च तेषां दीपादिवत् [illegible]ङ्गात् । तत्रापि प्रतिक्षणोत्पत्त्यादिकल्पनस्यातिगुरुत्वात् । तैलदशादिवत् सामग्रीविशेषादर्शनात् । न च मण्यादीनां प्रत्यभिज्ञा भ्रान्तिः ; विशरणे सिद्धे तद्भ्रान्तित्वसिद्धिः; तत्सिद्धौ विशरणसिद्धिरिति परस्पराश्रयणात्॥ विशीर्णगन्धाश्रयचम्पककुसुमादिवत् अंशतो विशरणेऽपि प्रत्यभिज्ञानमिति चेन्न, भ्रान्तेर्दत्तोत्तरत्वात् । यथोपलम्भं द्रव्यान्तराभ्युपगमे भ्रान्तित्वकल्पनानवकाशात् । गन्धोपलम्भे तु वायुगतिविशेषानुविधाननियमात् आश्रयभूतचम्पकादिनाशेऽपि गन्धावस्थानदर्शनाच्च प्रभातुल्यत्वपरित्यागः । ग्रीष्मनिशा(शीथा)दिषु औष्ण्योपलम्भेऽपि प्रभात्मकं स्वरूपं नास्त्येव ।

---

प्रसरतीति प्रदर्शयति प्रभायास्त्विति । स्थिरतरेष्विति । स्थैर्यस्य सोऽयं मणिरिति प्रत्यभिज्ञासिद्धत्वादिति भावः। ननु दीपप्रभावदस्त्वित्याशङ्क्याह तैलदशादिव दिति। विशरणेऽपि प्रत्यभिज्ञानमिति। भ्रमरूपमिति शेषः । ततश्च यथा गन्धाश्रयप्रत्यभिज्ञाया भ्रमरूपत्वम्, एवमत्रान्यत्राऽस्त्विति भावः। दत्तोत्तरत्वादिति । अन्योन्याश्रयेणेति भावः । गत्यभावात् तथाऽस्त्वित्याशङ्क्य अतिरिक्तप्रभावादिनः तस्य मते न दोष इत्याह यथोपलम्भमिति । ननु प्रभाश्रयतुल्योत्पत्तिविनाशाया अधिष्ठानाधिकदेशव्यापिन्या द्रव्यरूपायाः प्रभायाः स्वीकारे गन्धस्थलेऽपि तादृशमेवाभ्युपगम्यताम् ; किमवयवविशरणाभ्युपगमेन ? ततश्च प्रत्यभिज्ञाऽपि तपस्विनी प्रमात्वमनुभवत्वित्याशङ्क्य तद्वैषम्यमाह गन्धोपलम्भे त्विति । ननु प्रभाश्रयाविनाभूतत्वं प्रभाया नास्ति ; अस्तमितेऽपि सूर्ये औष्ण्यानपगमदर्शनेन तदाश्रयस्याप्यवस्थितेरित्याशङ्क्य उपलभ्यमानौष्ण्याश्रयस्य प्रभाद्रव्यातिरिक्तत्वात् न दोष इत्याह ग्रीष्मेति । यद्वा ग्रीष्मनिशीथादौ विशीर्णेषु तेजोवयवेषु उपलभ्यमानौष्ण्याश्रयतया सत्स्वपि प्रभाया अभावात् न विशीर्णतेजोवयवानां [1]प्रभात्वमित्याह । ग्रीष्मनि[2]शीथादिष्विति । ननु विशीर्णावयवानां प्रभात्वान-

---

गमेऽत्यन्तापरिदृष्टोपाधिकल्पनागौरवमिति । विरुद्धस्वभावानधिष्ठितायां प्रभायामुपलम्भानुरोधेन विष्वग्विशरणस्वभावत्वाभ्युपगमे न काचिदनुपपत्तिरित्यभिप्रायेणाह प्रभायास्त्विति । स्थिरतरेष्विति । घटाद्यपेक्षयाऽपि स्थिरेष्वित्यर्थः । अनेन तत् स्थैर्यं वैनाशिकातिरिक्तमते संप्रतिपन्नमिति द्योतितम् । अतिगुरुत्वादिति । सामग्रीविशेषस्यापि कल्पनीयत्वादिति भावः । विशरणेऽपि प्रत्यभिज्ञानमिति । भ्रान्तिरूपमिति शेषः । ततश्च गन्धाश्रयप्रत्यभिज्ञावदत्रापि प्रत्यभिज्ञाया भ्रान्तित्वमेवागत्या स्वीकार्यमिति भावः। दत्तोत्तरत्वादिति । अन्योन्याश्रयणेनेति भावः । प्रकृते न तथागत्यभाव इत्याह यथोपलम्भमिति । ननु गन्धस्थलेऽपि प्रभातुल्यत्वस्वीकारे प्रत्यभिज्ञायाः प्रमात्वोपपत्त्या कुतो न तथा स्वीकार इत्याशङ्क्याह गन्धोपलम्भे त्विति । ननु प्रभायाः प्रभाश्रयापृथक्सिद्धत्वं न संभवति ; ग्रीष्मनिशीथादिषु औष्ण्योपलम्भेन तदाश्रयप्रभासत्त्वादित्याशङ्क्य, उपलभ्यमानौष्ण्याश्रयद्रव्यं न प्रभारूपं किन्तु अतिरिक्तमेव रविकिरणोपात्तमुक्तावयवरूपमित्यभिप्रेत्योक्तं ग्रीष्मेति "वसन्ते ग्रीष्मके रश्मिशतैः संतपति त्रिभि । शरद्यपि च वर्षासु चतुर्भि. संप्रवर्षति ॥ हेमन्ते शिशिरे चैव हिममुत्सृजति त्रिभिः" इति मात्स्यवचन-

---

1 रश्म्यनुसारी (4.1.17.) इति सूत्रे रश्मिशब्दः प्रभासंपृक्तविशीर्णतेजोवयवपर इति भावः।

2 मूले निशापदमेवास्ति। तावदेवालम्।

अस्याश्च मूलाग्रयोर्घनविरलत्वादयो यथादर्शनं ग्राह्याः। यत्तु वरदविष्णुमिश्रैर्निरवयवात्मज्ञानसङ्कोचविकासदृष्टान्ततया प्रभामुपन्यस्योक्तम्, "प्रभाया निरवयवत्वमवयवानुपलम्भात्" इति तत् छेदभेदनयोग्यावयवविरहाभिप्रायेणेति मन्तव्यम्। न चैषा स्वतन्त्रा; दीपाद्यपृथक्सिद्धतयैव प्रतीतेः।

तद्विशिष्टं तेजः प्रभावत्। तच्च मणिद्युमणिदीपादि बहुप्रकारम्। सामग्रीविशेषाधीनस्वभावभेदात् तेजसः शोकहर्षशोषणवृद्धिपाकप्रकाशादिजनकत्वतारतम्यम्। ऊर्ध्वज्वलनमपि तत एव वा, अदृष्टादेव वा। तस्य रोहितभास्वरैकस्वभावस्यापि सलिलादिसंसर्गभेदात् वर्णवैचित्र्योपलम्भः। एतच्च "यदग्ने रोहितं रूपम्" इत्यादिश्रुतिसिद्धम्। वैशेषिकादीनां शुक्लत्वसाधकान्वयव्यतिरेकौ श्रुतिबाधितौ।

---

भ्युपगमे मूले बहलावयवत्वम् अग्रे च विरलावयवत्वम्, मूले च औष्ण्यम् अग्रे च तदभाव इत्यादि न स्यादित्याशङ्क्याह अस्याश्चेति। ननु प्रभाया मूलाग्रयोर्घनविरलभावाभ्युपगमे निरवयवत्वप्रतिपादकवरदविष्णुमिश्रग्रन्थविरोध इत्याशङ्क्य परिहरति यत्त्वित्यादिना। न चैषेति। प्रभा न स्वतन्त्रा; अपि तु दीपादिपरतन्त्रैव तिष्ठतीत्यर्थः। प्रभाप्रभावद्रूपेण उपन्यस्ते तेजोद्वैविध्ये प्रथममुक्त्वा द्वितीयमाह तद्विशिष्टं तेज इति। शोकहर्षेति। सौरस्य तेजसः शोकशोषणहेतुत्वम्, चान्द्रस्य तु हर्षजलवृद्ध्यादिहेतुत्वम्, अग्निरूपस्य तु पाकादिहेतुत्वमित्यादिकं तत्तत्तारतम्यादिकञ्चेत्यर्थः। तत एवेति। अदृष्टादिघटितसामग्रीविशेषाधीनस्वभावभेदादित्यर्थः। ननु सामग्रीविशेषस्यावश्याश्रयणीयत्वे स्वभावविशेषकल्पनं मुधा इत्यस्वरसादाह अदृष्टादेव वेति। यदग्नेरिति। 'यदग्ने रोहितं रूपं तेजसस्तद्रूपम्' इत्यादिश्रुतिसिद्धमित्यर्थः। शुक्लत्वसाधकेति। तेजस्त्वं शुक्लवृत्ति; रूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातित्वात्, जलत्ववत् इत्यन्वयरूपस्य वा, तेजः शुक्लम् रूपवत्त्वे सति पृथिवीभिन्नत्वात् जलवत् इत्यभावरूपस्य वा, हेतोर्बाधितत्वादित्यर्थः। यद्वा तेजआदिविषये शुक्लिम्न आधिक्यमुपपद्यते;

मिहानुसन्धेयम्। अत्र सत्त्वप्रतीत्यसाधारण्यवयवान् उत्सृजतीत्यर्थः। स्पष्टञ्चेदं श्रीमद्गुणप्रकाशिकायाम्। ननु प्रभाया विशीर्णावयवरूपत्वानभ्युपगमे मूलाग्रयोर्घनविरलभावादयः कथमित्याशङ्क्याह अस्याश्चेति। घनविरलभावादय इति आदिपदेनौष्ण्यतदभावौ गृह्येते-दृश्यते हि प्रभायाः मूले औष्ण्यम् अग्रे तदभावश्च यथादर्शनमिति। विशीर्णावयवरूपत्वाभावेऽपि दर्शनानुरोधेन प्रभायां तथाभ्युपगमे न किञ्चिद्बाधकमिति भावः। ननु प्रभाया मूलाग्रावयवभेदाभ्युपगमे निरवयवत्वप्रतिपादकवरदविष्णुमिश्रोक्तविरोध इत्याशङ्क्याह यत्त्विति। एषा=प्रभा स्वतन्त्रा=अपृथक्सिद्धसंबन्धेनेश्वरातिरिक्तद्रव्यानाश्रिता। प्रभाप्रभावद्रूपेण द्वेधा विभक्ते तेजसि प्रथममुक्त्वा द्वितीयमाह तद्विशिष्टमिति। अपृथक्सिद्धसंबन्धेन प्रभाविशिष्टमित्यर्थः। एकदीपप्रभासंयुक्तदीपान्तरप्रभावारणायापृथक्सिद्धेति। ईश्वरवारणाय तेज इति। स्वभावभेदात्—स्वासाधारणधर्मभेदात्। असाधारणधर्मश्च सौरालोकत्वादिकं शक्तिविशेषो वेत्यन्यत्। शोकहर्षेति। सौरस्य तेजसः शोकशोषहेतुत्वम्, चान्द्रस्य तु हर्षजलवृद्ध्यादिहेतुत्वम्, अग्निरूपस्य तु पाकादिहेतुत्वमित्यादिकं तत् तत्तारतम्यादिकञ्चेति भावः। तत एवेति। सामग्रीविशेषाधीनस्वभावभेदादेवेत्यर्थः। अदृष्टादेवेति। ईश्वरसङ्कल्परूपादित्यादिः। यदग्नेरोहितमित्यादीति। "यदग्ने रोहितं रूपं तेजसस्तद्रूपम्" इत्यादिश्रुतिसिद्धमित्यर्थः। शुक्लत्वसाधकान्वयव्यतिरेकाविति। तेजस्त्वं

अन्यथासिद्धौ च । मध्याह्नमार्तण्डमण्डलश्वैत्योपलम्भस्यापि मण्डलोपष्टम्भकानुद्भूतस्पर्शोद्भूतरूपसलिलांशनिबन्धनत्वोपपत्तेः । उद्भवानुद्भवयोश्च गुणानामन्यत्रापि अनियमाभ्युपगमात् ॥

तेजसो रसतन्मात्रम् । तस्मात् आपः । शीतस्पर्शवत्त्वम्, निर्गन्धत्वे सति विशिष्टरसवत्त्वम् इत्यादि तल्लक्षणम् । तासां शुक्लमधुरशीतैकस्वभावानामाश्रयादिसंसर्गभेदात् रूपरसस्पर्शवैचित्र्यारोपः । अद्रव्यनिरूपणे तु तेजोऽबन्नगुणव्यवस्था समर्थयिष्यते । स्वाभाविकमासां द्रवत्वम् । आप्येष्वपि करकादिषु उपष्टम्भवशात् काठिन्यम् ॥ प्राणरसनाप्यायनादिनोपकुर्वते । शरीरत्वमासामप्रचुरेषु वरुणलोकशरीरेषु स्पष्टम् । विषयत्वं सरित्समुद्रेषु ॥

अद्भ्यो गन्धतन्मात्रम् । ततः पृथिवी । विशिष्टगन्धवत्त्वम्, रसवत्त्वे सति विशिष्टस्पर्श-

---

तद्व्यतिरेके तद्व्यतिरेकश्चेत्येवंरूपयोरन्वयव्यतिरेकयोरसाधकत्वादित्यर्थः । अथवा अन्वयव्यतिरेकशब्दौ तद्व्याप्तिपरौ । ततश्च अन्वयव्यतिरेकव्याप्तिमतो रूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातित्वहेतोरसाधकत्वादित्यर्थः । ननु मण्डलावष्टम्भकजलरूपस्योद्भूतत्वे तद्गतशीतस्पर्शस्यापि तथात्वं प्रसज्येत । अतस्तद्रूपस्यानुद्भूतत्वमेव वक्तव्यम्; ततश्च उपलभ्यमानं श्वेतरूपं नोपष्टम्भकगतम्, अपितु तेजोगतमेवेत्याशङ्क्याह उद्भवानुद्भवयोश्चेति । प्रभादौ रूपोद्भवस्य स्पर्शानुद्भवस्य च दर्शनादिति भावः ॥ ननु बाधकाभावे आरोपरूपत्वमयुक्तमित्यत आह अद्रव्यनिरूपणे त्विति । करकादिष्विति । वर्षोपलहिमादिष्वित्यर्थः । प्राणरसनेति । "आपोमयः प्राणः" इति श्रुतेः, दन्तान्तर्गततोयादौ रसनेन्द्रियाप्यायकत्वदृष्टेश्चेति भावः ॥

रसवत्त्वे सतीति । वाय्वतिव्याप्तिवारणार्थं सत्यन्तम् । अप्स्वतिव्याप्तिवारणार्थं विशिष्टस्पर्श-

---

शुक्लवृत्ति रूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातित्वात् जलत्ववत् । तेजः शुक्लरूपवत् रूपवत्त्वे सति पृथिवीभिन्नत्वात् जलवदिति भावाभावरूपहेतू इत्यर्थः । अथवा अन्वयव्यतिरेकौ अन्वयव्यतिरेकव्याप्ती । अन्वयव्यतिरेकव्याप्तिमत्त्वावुक्तहेतू इति यावत् । श्रुतिबाधिताविति । "यदग्नेः" इति श्रुत्या शुक्लरूपविरुद्धलोहितरूपबोधनादिति भावः । अन्यथासिद्धाविति । अप्रयोजकावित्यर्थः । विपक्षे बाधकाभावादिति भावः । ननु मण्डलावष्टम्भकजलरूपस्योद्भूतत्वे तद्गतशीतस्पर्शस्याप्युद्भूतत्वम् आवश्यकम्; उद्भूतरूपवत उद्भूतस्पर्शवत्त्वनियमात् । अत उपलभ्यमानं श्वेतरूपं मण्डलगतमेवेत्याऽऽश्रयणीयमित्यत आह उद्भवानुद्भवयोश्चेति । अनियमादिति । प्रभायामुद्भूतरूपवत्त्वेऽपि उद्भूतस्पर्शवत्त्वविरहादिति भावः ॥

विशिष्टरसवत्त्वमिति । आदिना निर्गन्धत्वे सति गुरुत्ववत्त्वमित्यादेः परिग्रहः । बाधकविरहात् कथमारोपरूपत्वमित्यत आह अद्रव्यनिरूपणेत्विति । करकादिष्विति । वर्षोपलः करकः । आदिना हिमादिपरिग्रहः । प्राणाप्यायक-रसनाप्यायक-शरीर-विषयभेदात् अपां चतुर्धा विभागमभिप्रेत्याह प्राणेत्यादिना । "आपोमयः प्राणः", "आप्यायन्ते च ते नित्यम्" इत्यादिकमिह बोद्धव्यम् ॥

रसवत्त्वे सतीत्यादि । विशिष्टस्पर्शवत्त्वं उद्भूतानुष्णाशीतस्पर्शवत्त्वम् । वायुवारणाय सत्यन्तम् । जलवारणाय विशेष्यम् । विशिष्टस्पर्शवत्त्वमित्यादीति । आदिना शीतस्पर्शशून्यत्वे सति गुरुत्ववत्त्वमित्यादि-

वत्वम् इत्यादि तल्लक्षणम् । सा प्रथमं सुरभिमधुरकृष्णानुष्णाशीतस्पर्शा जाता । ततोऽनुष्णाशीतत्वं सर्वदा अनुवृत्तम् । तेजस्सलिलस्पर्शोपाध्यन्वयव्यतिरेकात्(रेकवशात्?) तदुपाधिक एव औष्ण्य-शैत्योपलम्भः । कार्ष्ण्यं स्वतःसिद्धमिति श्रुतिसिद्धम् । पाकभेदात्तु विचित्रवर्णता जायते । सुरभिस्वभावत्वमपि औत्सर्गिकन्यायसिद्धम् । कारणस्य पयसो माधुर्यानुविधानञ्च बाधकाभावे ग्राह्यम् । तस्याः काठिन्येऽपि सलिलातपादियोगात् क्वचित् द्रवत्वोपलम्भः । मनोघ्राणाप्याय-यनादिना च तस्या उपकारः । शरीरत्वमस्या मनुष्यतिर्यक्स्थावरादिषु व्यक्तम् । विषयत्वं मृत्पाषाणौ(णाश्मौ)षधितिमिरादिषु । यद्यपि विषयादिरूपेण निर्दिष्टानां सर्वेषामपि ईश्वरापेक्षया तत्तद्विशिष्टजीवापेक्षयाऽपि शरीरत्वं वक्ष्यते; तथापि लोकव्यवहारोपकारतारतम्यालोकनेन विभज्य

---

वत्त्वमित्युक्तम् । अनुष्णाशीतस्पर्शवत्त्वमित्यर्थः । तदुपाधिक एवेति । गन्धरूपरसानुष्णाशीतस्पर्शावान्तरविशेषाणां पृथिव्यां पाकादुत्पत्तिवत् उष्णशीतस्पर्शयोरपि पृथिव्यां नोत्पत्तिः । अपितु प्रतिभास-मात्रमित्यर्थः । श्रुतिसिद्धमिति । "यत्कृष्णं तदन्नस्य" इति श्रुतिसिद्धमित्यर्थः । औत्सर्गिकेति । महापृथिव्यां प्रायशः सौरभ्यस्य उपलम्भेन औत्सर्गिकतया तस्यैव स्वाभाविकत्वम्, इतरस्य अनौत्सर्गिकतया अस्वाभाविकत्वञ्च वक्तव्यमित्यर्थः । पृथिव्यां माधुर्यस्य स्वाभाविकत्वे युक्तिमाह कारणस्य पयस इति । पृथिवीप्रकृतिभूतानामपां मधुरस्वभावत्वात् असति बाधके तद्गुणानुविधानस्यैवोचितत्वात्, पृथिव्या अपि माधुर्यमेव स्वाभाविकम्; रसान्तरं तु पाकजमिति भावः । इदमुपलक्षणम्; महापृथिव्याः प्रायेण मधुरत्वेन औत्सर्गिकत्वादपि तस्यैव स्वाभाविकत्वमिति द्रष्टव्यम् । क्वचित् द्रवत्वोपलम्भ इति । लवणनवनीतादाविति भावः । मनोघ्राणेति । "अन्नमयं हि सोम्य मनः" इति श्रुतेः पृथिव्या मनआप्यायकत्वम् । रूपादिषु पञ्चसु मध्ये यदिन्द्रियं यद्गुणग्राहकम्, तत् तद्गुणाश्रयाप्यायितम् इति नियमात्, "आप्याय्यन्ते च ते नित्यं धातवस्तैस्तु पञ्चभिः" इति वचनाच्च पृथिव्याः घ्राणाप्याय-कत्वमस्तीति भावः । ननु शरीरविषयात्मनोपकरोतीति पृथङ्निर्देशोऽनुपपन्नः; विषयतयोपात्तानां

---

सङ्ग्रहः । तदुपाधिक एवेति । गन्धरूपरसानुष्णाशीतस्पर्शावान्तरविशेषाणां पृथिव्यां पाकादुत्पत्तिवत् उष्णशीतस्पर्शयोरपि पृथिव्यां नोत्पत्तिः । अपित्वारोप एवेत्यर्थः । श्रुतिसिद्धमिति । "यत् कृष्णं तदन्नस्य" इति आदिः । औत्सर्गिकेति । महापृथिव्यां प्रायशः सौरभ्योपलम्भेन औत्सर्गिकतया तस्यैव स्वाभाविकत्वं इतरस्यानौत्सर्गिकत्वं च वक्तव्यमित्यर्थः । पृथिव्यां माधुर्यस्य स्वाभाविकत्वे युक्तिमाह कारणस्य पयस इति । उपादानस्य जलस्येत्यर्थः । बाधकाभावे ग्राह्यमिति । कारणगुणानुविधानस्य औत्सर्गिकत्वादिति भावः । तथाच रसान्तरं पाकजमित्युक्तं भवति । इदमुपलक्षणम्—महापृथिव्याः प्रायेण मधुरतया औत्सर्गिकत्वादपि तस्यैव स्वाभाविकत्वं द्रष्टव्यम् । क्वचिदिति । लवणनवनीतादा-वित्यर्थः । मनोघ्राणाप्यायकशरीरविषयभेदाच्चतुर्धा विभागमभिप्रेत्याह मनोघ्राणेत्यादिना । "अन्नमयं हि सोम्य मनः", "आप्याय्यन्ते च ते नित्यम्" इत्यादिकमिह भाव्यम् । ननु विषयतयोपात्तानां मृत्पाषाणादीनामपि शरीरतया आप्यायकशरीरातिरिक्तत्वरूपविषयत्वं न संभवतीति शङ्कते यद्यपीति । आप्यायकशरीरातिरिक्तत्वमित्यत्र शरीरत्वं चेष्टावत्त्वं, इन्द्रियाश्रयत्वं, भोगावच्छेदकत्वं वा विवक्षितमिति

व्यवहारः। शरीरतया अभ्युपगतमपि विषयतया वैशेषिकैरप्युक्तम्, "विषयो मृत्पाषाणस्थावरलक्षणः" इति। स्थावरस्य हि शरीरत्वं तैरेव प्रपञ्चितम् ॥

## (तमसः पार्थिवत्वनिरूपणम्)

तमो द्रव्यं पार्थिवञ्च; अबाधितनीलादिप्रत्ययविषयत्वात् [घटवत्] [1]आलोकाभावे चाक्षुषं(षत्वं)

मृत्पाषाणादीनामपि शरीरत्वादित्याशङ्क्य परिहरति यद्यपीत्यादिना। लोकव्यवहारेति। लौकिकानां सरित्समुद्रादिषु शरीरत्वाव्यवहारात्, मनुष्यादिशरीरवत् सरित्समुद्रादीनां जीवोपकारकत्वाविषयाभावाच्च विषयशरीररूपेण विभज्य निर्देश इत्यर्थः। इयञ्च रीतिस्तन्त्रान्तरस्थैरप्याश्रितेत्याह शरीरतयेति। वैशेषिकवाक्यमुपादत्ते विषयो मृत्पाषाणेति। ननु अस्मिन् विषयपरिगणनवाक्ये शरीरस्य निर्देशो न दृश्यते इत्यत्राह स्थावरस्य हीति ॥

ननु पार्थिवविषयेषु तिमिरपरिगणनमयुक्तम्; तस्य तेजस्संसर्गाभावरूपत्वेन द्रव्यत्वस्यैवाभावेन पार्थिवत्वस्य ततस्तरामभावादित्याशङ्क्याह तमो द्रव्यं पार्थिवञ्चेति। आलोकाभाव इति। अविद्यमान आलोक उत्पद्यमानायाः प्रतीतेरबाधितत्वं न सम्भवति त्वदुक्तप्रमाहेत्वालोकाभावादित्यर्थः।

---

न मृत्पाषाणादीनां विषयत्वानुपपत्तिरिति समाधत्ते तथापीति। लोकव्यवहारेति। लोके चेष्टाश्रय एव शरीरव्यवहारात् मृत्पाषाणादौ तद्व्यवहारादिति भावः। उपकारतारतम्येति। यथाकथंचित् सुखादिहेतुत्वस्य मृत्पाषाणादिसाधारण्येऽपि अवच्छेदकतया तद्धेतुत्वस्य न साधारण्यमिति भावः। विभज्यव्यवहार इति। तथाव्यवहारस्य उत्कर्षवैलक्षण्यद्योतनमेव फलमिति भावः। इयं रीतिस्तन्त्रान्तरेऽप्याश्रितेत्याह शरीरतयेत्यादि ॥

ननु पार्थिवविषयेषु तिमिरपरिगणनमयुक्तम्; तस्य तेजोऽभावरूपतया द्रव्यत्वस्यैवाभावेन पार्थिवत्वस्य दूरनिरस्तत्वादित्याशङ्क्याह तमो द्रव्यं पार्थिवञ्चेति। अबाधितनीलादिप्रत्ययविषयत्वादिति। नीलादिप्रकारतानिरूपितभ्रमभिन्नज्ञानीयविशेष्यताश्रयत्वादित्यर्थः। तेन नीलो घट इत्यादिप्रतीतिविषयत्वस्य नीलरूपादौ सत्त्वेऽपि न क्षतिः। नीलादीति। आदिना द्रव्यत्वसाधकचलनादिसंग्रहः। नीलघटादिर्दृष्टान्तो बोध्यः। क्वचित् घटवदित्यपि पाठो दृश्यते। तत्र घटशब्दो नीलघटपरः। यत्र यत्राऽऽलोकाभावः तत्र चाक्षुषप्रमाविषयत्वाभाव इति वा, यत्र यत्रालोकभाववद्विषयकज्ञानत्वम्, तत्र तत्र चाक्षुषप्रमात्वाभाव इति वा व्याप्तिसत्त्वात् नीलं तम इति प्रत्ययस्य प्रमात्वासंभवात् स्वरूपासिद्धिरित्यभिप्रायेण शङ्कते आलोकाभावे चाक्षुषत्वं नास्तीति। बाधकमिति। आलोकाभावे चाक्षुषप्रमाविषयत्वाभाव इति नियमः स्वरूपासिद्धिसंपादकतया उक्तानुमानविरोधीत्यर्थः। समाधत्ते नेति।

---

1 रूपस्येवाऽऽलोकस्यापि चाक्षुषप्रत्यक्षे कारणतया तदभावात् तमसो न चाक्षुषप्रत्यक्षम्। अतो नायं हेतुः पक्षे इत्यर्थः। व्यभिचारादिति। आलोकान्वयेऽप्यालोके चाक्षुषोत्पत्तेरिति भावः।

नास्तीति बाधकमिति चेन्न; तेजसि व्यभिचारात्। तद्व्यतिरिक्तत्वे सतीति चेत्; तथापि भवदभिमते [2]तमसि एतदभावेऽपि चाक्षुषत्वात् ॥ इतरसामग्रीसाकल्यलक्षणयोग्यतासिद्ध्यर्थमविरोधार्थं च

---

तेजसि व्यभिचारादिति। आलोकविषयकज्ञाने विषयसंयोग्यालोकमन्तरेण जायमाने बाधितत्वाभावेन व्यभिचारादित्यर्थः। तद्व्यतिरिक्तत्वे सतीति। तेजोविषयकज्ञानव्यतिरिक्तत्वे सति आलोकाभावदशायां जायमानत्वं बाधितत्वव्याप्तमिति चेदित्यर्थः। भवदभिमते तमसीति। आलोकाभावज्ञानस्याबाधितत्वस्वीकारादिति भावः। इतरेति। योग्यता हि द्विविधा स्वरूपयोग्यता सहकारियोग्यता चेति। स्वरूपयोग्यता कारणतावच्छेदकावच्छिन्नत्वम्। सहकारियोग्यता नाम इतरसामग्रीसाकल्यम्। ततश्च आलोकाभावरूपस्य तमसो योग्यतासिद्ध्यर्थमितरसामग्रीसाकल्यं वक्तव्यम्। ततश्च यदि तत्प्रत्यक्षे आलोकोऽपि सामग्रीनिवेशितः स्यात्; तदा आलोकाभावस्य कदापि तत्समवधानासम्भवात् चाक्षुषत्वयोग्यता हीयेत। प्रत्युत विरोधात् विषयस्यैवाभावः स्यात्। अतस्तदुभयं मा प्रसाङ्क्षीदिति आलोकस्य अन्धकारविषयकचाक्षुषज्ञाने न हेतुत्वमभ्युपगमनीयमिति भावः। प्रतीयमानेति। नीलत्वचलत्वद्रव्यत्वभावत्वाद्याकारेणैवोपलभ्यमानत्वात् योग्यतासिद्ध्यर्थं अविरोधार्थंश्च भाव-

---

उक्तनियमो नास्तीत्यर्थः। कुत इत्यत्राह तेजसीत्यादि। आलोकात्मके तेजसि आलोकान्तरासंयुक्ते आलोकत्वावच्छिन्नसंयोगसंबन्धावच्छिन्नप्रतियोगिताकाभावसत्त्वेन तत्र चाक्षुषप्रमाविषयत्वस्यैव सत्त्वेन व्यभिचारादित्यर्थः। विशेषणनिवेशेन व्यभिचारवारणं शङ्कते तद्व्यतिरिक्तत्वे सतीति। आलोकाभावे चाक्षुषत्वं नास्तीत्यनुषङ्गः। तथाच यत्रयत्र तेजोभिन्नत्वे सति आलोकाभावः, तत्रतत्र चाक्षुषप्रमाविषयत्वाभाव इति नियमोऽस्त्येवेत्युक्तं भवति। दूषयति तथापीति। भवदभिमते तेजोभावरूपतया भवदभ्युपगते। एतदभावेऽपीति। तेजोव्यतिरिक्तत्ववैशिष्ट्यरूपविशेषणसहिते आलोकाभावेऽपीत्यर्थः। चाक्षुषत्वादिति। चाक्षुषप्रमाविषयत्वसत्त्वादित्यर्थः। नीलं तम इत्यादिप्रत्ययस्यापि तेजोभाव[त्वांश]रूपतमस्त्वांशे नीलरूपत्वांशे च प्रमात्वस्य भवद्भिरप्यङ्गीकारादिति भावः। अत्र तमस्त्वांशे प्रमात्वप्रदर्शनायैव भवदभिमत इत्युक्तम्। अथवा रूपप्रतीत्यभावस्तम इति पक्षे तस्य चाक्षुषत्वासंभवात् भवदभिमत इत्युक्तम्। न च यत्रयत्र तेजोव्यतिरिक्तत्वे सति आलोकाभावः, तत्रतत्र भ्रमभिन्नचाक्षुषविषयत्वाभाव इति नियमो निर्विवाद एव; नीलं तम इत्यादिप्रत्ययस्य नीलरूपांशे भ्रमत्वस्यैवाङ्गीकारात् व्यभिचाराप्रसक्तेरिति वाच्यम्; तथापि इदं तम इति चाक्षुषविषये तस्मिन् व्यभिचारस्य दुर्वारत्वात्। तादृशप्रत्ययस्य रूपाविषयकत्वेन भ्रमत्वविरहात्। यदि च—रूपाविषयकचाक्षुषमेव क्वचिदपि नाङ्गीक्रियते अनुभवविरोधात्; इदं तम इति प्रत्ययेऽपि रूपभानमस्त्येव; उल्लेखकशब्दप्रयोगः परं नास्ति; तस्यैच्छिकत्वात्। अत एव सिद्धान्ते सर्वत्र ज्ञातृज्ञानभानेऽपि अयं घट इति ज्ञानमित्यादौ ज्ञात्राद्युल्लेखकपदप्रयोगाभावः—इत्युच्यते—तदापि उक्तनियमो न संभवत्येव; नीलं तम इति प्रत्ययस्य भ्रमत्वसंदेहेन

---

[1] आलोकव्यतिरिक्तविषयकचाक्षुष एवालोकः कारणमिति शङ्कते तद्व्यतीति। [2] तमस्त्वेन भवदभिमते आलोकाभावाख्ये सर्वसंमते पदार्थे आलोकसंयोगरूपकारणाभावेऽपि चाक्षुषं कथमिति प्रश्नः।

[1]तथाऽ(थात्वा)ङ्गीकार इति चेत् ,–अत्रापि प्रतीयमानाकारभङ्गपरिहाराय बुध्यस्व। न हि यत् क्वचि-
यदपेक्षम्; तत् सर्वत्र तदपेक्षमिति नियमः। स्वेदादिशैत्यग्रहे वायुसापेक्षस्य स्पर्शनस्य
औष्ण्यग्रहे तदभावसापेक्षत्वात्॥ आलोकाभाव-प्रत्ययविशेषाभाव-नैल्यमात्रप्रतीतिपक्षाः विधिरूपेण

---

रूपान्धकारग्रहणे न तदपेक्षेति भावः। **तदभावसापेक्षत्वादिति**। तत्सापेक्षत्वाभावादित्यर्थः।
निमीलितचक्षुषोऽपि अन्धकारप्रतीतेः रूपप्रतीत्यभावस्तम इति पक्षमुपन्यस्यति **प्रत्ययविशेषाभावे**ति।
रूपप्रतीत्यभाव इत्यर्थः। वियद्व्यापपार्थिवपरमाणुगतनैल्यप्रतीतिरेव अन्धकारप्रतीतिरिति पक्षमुपन्यस्यति
**नैल्यमात्रे**ति। आश्रयविषयकत्वं **मात्र**पदेन व्यवच्छिद्यते। पक्षत्रयमपि क्रमेण प्रतिक्षिपति **विधिरूपेणे**-

---

व्यभिचारसंशयस्यैव सत्त्वात्। ईदृशस्यापि व्यभिचारसंशयस्यानुकूलतर्कविरहे बाधकत्वस्य भवद्भिरभ्युपगम
मात्। यदि चोक्तरीत्या नीलं तम इति प्रत्ययस्य भ्रमत्वसंदेहात् सन्दिग्धासिद्धिरिति विभाव्यते; तदा
भ्रमभिन्नत्वस्थाने दोषानधीनत्वमेव निवेश्यम्। दोषसद्भावे प्रमाणाभावात् तदङ्गीकारे गौरवाच्च दोषानधीन
त्वमाश्रयणीयम्। ननु तमसो न द्रव्यरूपत्वसंभवः–तथासति इतरसामग्रीसाकल्यलक्षणयोग्यताया असंभवेन
चाक्षुषानुपपत्तिप्रसङ्गात्। योग्यता हि द्विविधा; स्वरूपयोग्यता सहकारियोग्यता चेति। तत्र चाक्षुषे स्वरूप
योग्यता गुरुत्वाद्यतिरिक्तत्वम्। सहकारियोग्यता इतरसामग्रीसाकल्यम्। अत्र चान्धकारस्थघटादिचाक्षुष-
वारणाय द्रव्यवृत्तिविषयतासंबन्धेन चाक्षुषत्वावच्छिन्नं प्रति संयोगेनालोकस्य कारणत्वमवश्याश्रयणीयम्।
ततश्च तमसो द्रव्यत्वे आलोकादिघटितसामग्रीसाकल्यमेव तस्य घटादेरिव चाक्षुषयोग्यतेति वक्तव्यम्।
तच्च न संभवति इति तमसो द्रव्यत्वस्वीकारो न युज्यते; एवं तमस आलोकाभावरूपत्व एव अविरोधाय
आलोकनिरपेक्षचाक्षुषत्वस्वीकारो युज्यत इति तमस आलोकाभावरूपत्वमेव स्वीकरणीयमिति शङ्कते
**इतरेति**। **तथाङ्गीकारः**=आलोकाभावरूपतयाऽङ्गीकारः। अत्र द्रव्यवृत्तिविषयतासंबन्धेन चाक्षुषं प्रति
आलोकस्य प्रागुक्तरीत्या कारणत्वासंभवान्नोक्तदोष इत्यभिप्रायेण समाधत्ते **अत्रापीति**। **प्रतीयमाना-
कारभङ्गपरिहारायेति**। नीलं तमश्चलतीत्यादिप्रतीतिसिद्धनीलत्वचलत्वाद्याकारभङ्गप्रसङ्गपरिहारायेत्यर्थः।
अभावरूपत्वे तदसंभवादिति भावः। **बुद्ध्यस्वेति**। अत्र **तथात्वाङ्गीकार** इतीत्यनुषज्य, 'प्रतीय-
मानाकारभङ्गपरिहाराय तथात्वाङ्गीकारः' इति बुद्ध्यस्वेत्यन्वयो बोद्धव्यः। इह **तथात्वाङ्गीकार** इत्यस्य
द्रव्यत्वपार्थिवत्वाङ्गीकार इत्यर्थः। शब्दमात्रानुषङ्गीकारेणार्थभेदस्यादोषत्वात् ननु द्रव्यचाक्षुषे आलोकस्य
कारणत्वविरहेऽपि प्रतिबन्धकीभूततमोनिवर्तकतया प्रयोजकत्वमस्त्येव। ततश्च चक्षुरिन्द्रियस्य घटादिद्रव्य
चाक्षुषे आलोकसापेक्षतया सर्वत्र तदपेक्षत्वसिद्धौ आलोकप्रयोज्यचाक्षुषविषयत्वस्य द्रव्यत्वव्यापकत्वसिद्ध्या
तादृशव्यापकाभावेन तमसि व्याप्यभूतद्रव्यत्वाभाव आवश्यक इति पार्थिवत्वं दूरनिरस्तमिति शङ्कां निरस्यति
**न हीति**। **तदभावसापेक्षत्वादिति**। तत्सापेक्षत्वाभावादित्यर्थः। तमसो द्रव्यत्वपार्थिवत्वे व्यवस्थाप्य
आलोकाभावादिरूपत्वं निरस्यति **आलोकाभावेति** **प्रत्ययविशेषाभावेति**। रूपप्रतीत्यभावेत्यर्थः। निमीलित
चक्षुषोऽपि तमःप्रतीतिसद्भावात् रूपप्रतीत्यभाव एव तम इति भावः–**नैल्यमात्रे**ति। वियद्व्यापपार्थि-

---

1 आलोकाभावविषयकचाक्षुषानुभवात् तत्र सामग्रीसाकल्योपपादनाय, आलोकसत्त्वे आलोक
भावभंगभिया चालोकस्य तत्राकारणत्वांगीकार इति चेदित्यर्थः। अत्रापि = अतिरिक्ततमोद्रव्येऽपि।

प्रत्ययात्, लोकप्रतीतिविरोधप्रसंगात्, नीलमिति धर्मितया स्फुरणाच्च निरस्ताः। प्रलयविनाशावसानादयस्तु विधिरूपेण वर्तमाना अपि स्फुटवस्त्वन्तरानुपलम्भात् कस्यचिदित्येव

---

त्यादिना। भावतयैव प्रतीतेरित्यर्थः। लोकेति। नीलं तम इति नैल्यप्रतीतेः सर्वानुभवसिद्धत्वेन रूपप्रतीत्यभावस्य लोकविरुद्धत्वादिति भावः। इदमुपलक्षणम्; विधिरूपेण प्रत्ययादित्यपि द्रष्टव्यम्। धर्मितयेति। नैल्यमित्येव तमोविषयकधीः स्यादिति भावः। ननु विधिरूपेण प्रतीयमानत्वं न भावत्वसाधकम्। प्रलयादिशब्दानुविद्धप्रतीतेर्भावत्वासाधकत्वादित्याशङ्क्याह प्रलयेति। स्फुटवस्त्वन्तरेति। नैल्यचलनादिगुणक्रियाश्रयस्य इतरविविक्तस्य वस्तुनः स्फुटोपलम्भवत् भूतले घटप्रलय इत्यादौ विविक्ततया उपलम्भाभावादित्यर्थः। कस्यचिदित्येवेति। घटस्य प्रलयो घटस्य विनाश इत्येवं सप्रतियोगिकतयैव प्रतीतेः, तमसश्च निष्प्रतियोगिकतया स्फुरणादिति भावः। ननु अन्धकारस्य रूपवत्त्वे स्पर्शोप-

---

परमाणुगतनैल्यमात्रेत्यर्थः। मात्रपदेनाश्रयव्युदासः। पक्षत्रयमपि क्रमेण निरस्यति विधिरूपेणेत्यादिना। विधिरूपेण=नञुल्लेखरहितत्वेन प्रतियोगितासंबन्धावच्छिन्नप्रकारत्वानिरूपकत्वेनेति यावत् प्रत्ययान्वयि-वैशिष्ट्यं तृतीयार्थः। तथाच प्रतियोगितासंबन्धावच्छिन्नप्रकारत्वानिरूपकप्रत्ययः विशेष्यतासंबन्धेन हेतुरिति फलितम्। अत्र च तमःपदवाच्यत्वं पक्षतावच्छेदकम्। आलोकाभावभेदः साध्यः। घटादिर्दृष्टान्त इति बोद्धव्यम्। न चात्र प्रमेयत्वादिना आलोकाभावविषयकप्रत्ययमादाय तत्र व्यभिचार इति वाच्यम्; नञुल्लिखितप्रतीत्यविषयत्वस्य प्रतियोगितासंबन्धावच्छिन्नप्रकारतानिरूपकप्रतीतिविशेष्यत्वाभावपर्यवसितस्य विवक्षितत्वात्। इहाऽऽलोको नेति प्रतीतिविषयत्वस्यैवालोकाभावे सत्त्वेन व्यभिचाराप्रसक्तेः। न चैवंसति इह तमोभावो नेति प्रतीतिविषयतया एव तमसि सत्त्वेन स्वरूपासिद्धिरिति वाच्यम्; प्रकारतायां भाववृत्तित्वस्य निवेशनीयत्वात्। लोकप्रतीतिविरोधप्रसङ्गादिति। नीलं तम इति नैल्यप्रतीतेस्सर्वानुभवसिद्धत्वेन रूपप्रतीत्यभावस्य प्रत्यक्षविरुद्धत्वादिति भावः। न च—रूपप्रमाभावोपाधिका नैल्यभ्रान्तिरेव नीलं तम इति प्रतीतिः; ततश्च रूपप्रमाभाव एव तमः–इति वाच्यम्; इदं तम इति चाक्षुषप्रतीतिविरोधात्, पिशाचस्येव प्रमाया अचाक्षुषत्वेन पिशाचाभावस्येव प्रमाभावस्यापि चाक्षुषत्वासंभवात्; अबाधितनैल्यप्रतीतेः भ्रान्तित्वासंभवाच्च। इदमुपलक्षणम्–विधिरूपेण प्रत्ययादपि रूपप्रतीत्यभावस्य तमस्त्वं न संभवतीति बोद्धव्यम्। नीलमितिधर्मितयेति। नैल्याश्रयतयेत्यर्थः, अन्यथा नैल्यमित्येव तमःप्रतीतिः स्यादिति भावः। ननु विधिरूपेण प्रतीयमाणत्वस्य भावत्वसाधकत्वे प्रळयविनाशावसानादिपदोल्लिखितप्रतीतिविषयस्य प्रध्वंसाभावस्याभावत्वानुपपत्तिरित्याशङ्क्याह प्रळयेत्यादिना। स्फुटवस्त्वन्तरेति। नैल्यचलनादिगुणक्रियाप्रत्ययस्य इतरविविक्तस्य वस्तुनः स्फुटोपलंभवत्, भूतले घटप्रळय इत्यादौ विविक्ततयोपलंभाभावादित्यर्थः। कस्यचिदित्येवेति। घटस्य प्रळयः घटस्य विनाश इत्येवं सप्रतियोगिकतयैव प्रतीतेः तमसश्च निष्प्रतियोगिकतया स्फुरणादिति भावः। न चैवमपि आलोकनाशे व्यभिचारः; नञुल्लिखितप्रतीत्यविषयत्वसत्त्वादिति वाच्यम्—प्राचीनमते ध्वंसादेरपि सामान्यधर्मावच्छिन्न-

सर्वसंवित्सिद्धेश्च अभावपक्षे निक्षेपे सहन्ते । स्पर्शानुपलम्भादिचोद्यं तु इन्द्रनीलालोकादिष्विव निर्वाह्यम् । आगमसिद्धश्च तमसो द्रव्यत्वादिकम् । "तमः ससर्ज भगवान्" इति तत्त्वान्तरवत् सृष्टिश्रवणात् । "नासीत् तमो ज्योतिरभून्न चान्यत्" इति कार्यान्तरैर्ज्योतिषा च सह लयाभिधानात् । आलोकाभावपक्षे तमोज्योतिषोर्द्वयोरपि लयाभिधानविरोधात् । अन्तर्यामिब्राह्मणे च, "यस्य तमः शरीरम्" इति तेजसा सह तमसः शरीरत्वेनाभिधानात् । अत्र च भाष्यम्, "एवममून्यन्तरिक्षवाय्वादित्यदिक्चन्द्रतारकाकाशतमस्तेजस्सु" इत्यादि । यत्तु षडर्थसंक्षेपे, भावरूपाज्ञानानुमानदूषणे प्रोक्तम्, "निमीलनेऽपि भातीति न तमो द्रव्यम् । अन्धस्तु नाक्षिस्थग्रहेऽलम् । व्याहरति च" इति—तत् श्रुतिस्मृतिभाष्यादिविरोधात् मतान्तरेण एकदेशिमतेन वोक्तम् । निमीलनेऽपि भानस्य पित्तोपहतचक्षुषः किञ्चित्पित्तोपलम्भेऽप्यनुवर्तनात् । जात्यन्धस्य

---

लम्भप्रसङ्ग इत्याशङ्क्याह **स्पर्शानुपलम्भादीति** । **ज्योतिषा च सहेति** । तमस इति शेषः । ततः किमित्यत आह **आलोकाभावपक्ष इति** । लयाभिधानविरोधादिति भावः । भावरूपत्वपक्षे तु न विरोधः; उष्णत्वशीतत्वयोः परस्परविरुद्धयोरपि अभावसमुच्चयस्य पृथिव्यादिषु दर्शनात्, शीतत्वतदभावयोश्च अभावसमुच्चयस्य काप्यदर्शनादिति भावः । **अत्र च भाष्यमिति** । अन्तर्याम्यधिकरणे अन्तर्यामिब्राह्मणार्थकथन इति शेषः । **निमीलनेऽपीति** । तमसो बाह्यद्रव्यत्वे निमीलनदशायामिन्द्रियसंप्रयोगाभावात् न भायात् । अतो रूपप्रतीत्यभाव एव तम इति भावः । ननु निमीलनदशायां गोळकान्तर्वृत्ति तमो गृह्यतामित्याशङ्क्याह **अन्धस्त्विति** । ननु अन्धस्य तदुपलम्भ एव नास्तीत्याशङ्क्याह **व्याहरतीति** । **पित्तोपलम्भेऽपीति** । तत्र आन्तरपित्तोपलम्भवत् आन्तरसन्तमसोपलम्भोऽप्यनुवृत्तेरिति भावः । ननु पित्तवदन्तरक्षिस्थतमोऽग्रहणे अन्धस्य तमोव्यवहारो न स्यादित्याशङ्क्य किं जात्यन्धस्य व्यवहाराभाव आपाद्यते, उत अजात्यन्धस्य इति विकल्प्य दूषयति **जात्यन्धस्येति** । ननु तमो न द्रव्यम् इत्यनुमानं कि

---

प्रतियोगिताकत्वस्वीकारेण इहाऽऽलोको नेति प्रतीतिविषयत्वसत्त्वात् । ननूद्भूतरूपवत्पार्थिवस्योद्भूतस्पर्शवत्त्वनियमात् तमसः पार्थिवत्वे तत्र स्पर्शोपलम्भप्रसङ्ग इत्याशङ्क्याऽऽह **स्पर्शेति** । **इन्द्रनीलालोकादिष्विति** । तथा चेन्द्रनीलालोकादीनां नीलरूपवत्तया पार्थिवत्वावश्यम्भावात् तत्र व्यभिचारेणोद्भूतरूपवत्पार्थिवत्वेत्यादिनियमस्यैवासंभवात् न स्पर्शोपलम्भप्रसङ्ग इति भावः । **ज्योतिषा च सहेति** । तमस इति शेषः । ततः किमित्यत्राह **आलोकाभावपक्ष** इति । **लयाभिधानविरोधादिति** । भावरूपत्वपक्षे तु न विरोधः; उष्णत्वशीतत्वयोः परस्परविरुद्धयोरप्यभावसमुच्चयस्य पृथिव्यादिषु दर्शनात् शीतत्वतदभावयोश्चाभावसमुच्चयस्य काप्यदर्शनादिति भावः । **अत्र च भाष्यमिति** । अन्तर्याम्यधिकरण इति शेषः । **निमीलनेऽपि भातीति** । तमसो बाह्यद्रव्यत्वे निमीलनदशायामिन्द्रियसंप्रयोगासंभवेन तद्भानासंभवात् रूपप्रतीत्यभाव एव तम इत्याश्रयणीयमित्यभिप्रायः । ननु निमीलनदशायां गोळकान्तर्वर्तितमोग्रहणमस्त्वित्याशङ्क्याह **अन्धस्त्विति** । नन्वन्धस्य तदुपलम्भसत्त्वे किं मानम्; अत आह **व्याहरतीति** । **पित्तोपलम्भेति** । तत्रान्तरपित्तोपलम्भवदान्तरसंतमसोपलम्भोपपत्तेरिति भावः । नन्वन्धस्याक्षिस्थग्रहणस्याप्यसंभवात् कथं तमोव्यवहार इत्याशङ्क्य किं जात्यन्धस्य तथाव्यवहाराभाव आपाद्यते, उताजात्यन्धस्येति विकल्प्य आद्ये इष्टापत्तिमाह **जात्यन्धस्येति** ।

अतः कल्प्यो हेतुः प्रमितिरपि शाब्दी विजयते निरालोकं चक्षुः प्रथयति हि तद्दर्शनवशात्॥" इति।

नन्वेवमस्तु तमसो द्रव्यत्वं सिद्धान्तः। पार्थिवत्वं तु भाष्यकारादिवचनात् न सिद्धमिति चेन्न; प्राकृतत्वनीलत्ववचनाभ्यां परिशेषात् सिद्धेः। न हि वाय्वाकाशतेजस्सु प्राकृतेषु रूपगुणोऽस्ति। न वा तोयतेजसोः कृष्णरूपमस्ति। तथा च श्रुतिः, 'यदग्ने रोहितम्" इत्यादिका।

ननु तत्त्वमुक्ताकलापे मूलप्रकृतिरेवेदं तम इत्युक्तम्। तथा हि, "बध्नाति यदभिद्रोहात् यत्प्रपत्त्या च मुञ्चति। जन्तूंस्तं प्रणिपत्य हरिं तमः प्रविविच्यते॥ अतो न काकदन्तपरीक्षावदस्य परीक्षणमुपेक्ष्यम्। बन्धकत्वस्य ज्ञाने हानप्रयोजनात्॥ तत्स्वरूपे तु दुर्वृत्तिष्वहकादिषु मुग्धाः। विवदन्ते; ततो जातः सन्देहः; चिन्त्यतेऽधुना॥ अत्र आलोकाभावस्तम इति काश्यपीयाः। नारूपेषु तत्त्वेषु नील[मा]त्र-

---

अभावरूपत्वमेव युक्तमित्याशङ्क्याह अतः कल्प्यो हेतुरिति। दीपादिसमुत्पन्नसौधोदरव्यापिप्रभामण्डलवदिति भावः। शाब्दीति। "तमः ससर्ज" इत्यादिशब्दजन्येत्यर्थः। निरालोकमिति। आलोकाभावस्यैव तमसोऽप्यालोकनिरपेक्षचक्षुर्ग्राह्यत्वं दर्शनवशात् युज्यते इत्यर्थः। प्राकृतत्वनीलत्ववचनाभ्यामिति। न च मेचकबलमित्येवमादिरूपस्य पूर्वाचार्यवाक्ये नीलत्ववचनस्य सद्भावेऽपि प्राकृतत्ववचनमुदाहृतं न दृश्यत इति वाच्यम्; 'नासीत्तमो ज्योतिरभून्न तदानीं श्रोत्रादिबुद्ध्यानुपलभ्यमेकं प्राधानिकं ब्रह्म पुमांस्तदाऽऽसीत्॥" इति तमोज्योतिरादिव्यतिरेकदशायां प्रधानमात्रपरिशेषप्रदर्शनमुखेन तदुपादानत्वप्रतिपादकभगवत्पराशरवचनस्यैव प्राकृतत्ववचनत्वादिति भावात्। जन्तूनिति। परमात्माभिद्रोहतत्प्रपत्तिहेतुकयोर्जन्तुकर्मकबन्धनमोचनयोः कर्तृभूतं तं परमात्मानं नत्वा तमो निरूप्यते इत्यर्थः। हानप्रयोजनादिति। बन्धकत्वस्य ज्ञाने तद्धानार्थं प्रवृत्तिसम्भवेन हानप्रयोजनसिद्धेरित्यर्थः। चिन्त्यते इति। तन्निवृत्त्यर्थमिति शेषः। काश्यपीया इति। वैशेषिकादय इत्यर्थः। नीलमात्ररूपेति। नीलेषु भावेषु वस्तुषु विद्यमानं रूपम्। तत् नीलमात्ररूपम्, यद्वा नीलमात्रो

---

दुर्वचतया अभावरूपत्वमेव तमसो युक्तमित्यत आह अतः कल्प्यो हेतुरिति। दीपारोपणसमय एव सौधोदरव्यापिप्रभामण्डलवदिति भावः। शाब्दीति। "तमस्ससर्ज" इत्यादिशब्दजन्येत्यर्थः। निरालोकमिति। आलोकाभावस्यैव तमसोऽप्यालोकनिरपेक्षचक्षुर्ग्राह्यत्वं दर्शनबलात् युज्यत इत्यर्थः। प्राकृतत्वनीलत्ववचनाभ्यामिति। ननु, "मेचकबलम्" इत्यादेर्नीलत्वविषयपूर्वाचार्यवचनस्य सत्त्वेऽपि तादृशं प्राकृतत्ववचनं न दृश्यत इति चेन्न; "नासीत्तमो ज्योतिरभूत्तदानीम् श्रोत्रादिबुद्ध्यानुपलभ्यमेकं प्राधानिकं ब्रह्म पुमांस्तदाऽऽसीत्" इति तमोज्योतिरादिव्यतिरेकदशायां प्रधानमात्रपरिशेषप्रदर्शनमुखेन तदुपादानत्वप्रतिपादकभगवत्पराशररूपपूर्वाचार्यवचनसद्भावात्[1]। बध्नातीत्यादि। यदभिद्रोहात् परमात्मनिग्रहात् [2]यत्तमः जन्तून् बध्नाति, यत्प्रपत्त्या जन्तून् मुञ्चति, तं हरिं प्रणम्य तत्तमो निरूप्यत इत्यर्थः। हानप्रयोजनादिति। हानरूपप्रयोजनसत्त्वादित्यर्थः। बन्धकत्वज्ञानमन्तरा तद्धानार्थप्रवृत्त्यसम्भवादिति भावः। काश्यपीया वैशेषिकाः। नीलमात्ररूपेति।

---

1 किञ्च प्राकृतत्वमिति विकृतिद्रव्यत्वविवक्षा। बहलत्वनीलत्वादिबोधकप्रकृतवाक्यवचनत एव तत् सिद्धमिति नेदं तमः प्रकृतिद्रव्यमिति। 2 यदिति स्वयमध्याहृतम्।

स्मृतिप्रमोष एव तमोव्यवहारहेतुरिति प्राभाकराः। द्रव्यान्तरमेवेदं कल्प्यमिति कौमारिलाः। प्रधानतत्त्वमेव तमः इति तत्त्वविदः". इत्युमक्रम्य प्राथमिकमतयुगलमथनपूर्वकं तृतीयमुपन्यस्य, "अत्र तत्त्वविदः प्राहुः स्थूलसूक्ष्मात्मना स्थिता। दैवी गुणत्रयी माया बाह्यान्तरतमो मता॥" इत्युक्तम्। अतो न पार्थिवत्वपरिशेषो युक्त इति॥

तत्र। तत्र मूलप्रकृतित्वं तावत् न सम्भवति; विकारैः सह सृष्टिसंहारवचनात्। अन्तर्यामिब्राह्मणे च कथं सर्गानुप्रवेशेन प्राथमिकतमोव्यतिरिक्तस्य तेजोविरोधितमसः पृथक्शरीरत्वाभिधानात्। प्रधानतमसश्च प्रत्यक्षग्राह्यत्वासिद्धेः। "नाहो न रात्रिर्न नभो न भूमिर्नासीत् तमो ज्योतिरभून्न चान्यत्। श्रोत्रादिबुद्ध्यानुपलभ्यमेकं प्राधानिकं ब्रह्म पुमाँस्तदाऽऽसीत्॥" इति श्लोकस्मृतेः॥ अवस्थान्तराश्रयणेन सर्वमिदमुपपद्यते इति चेत्; सत्यम्। तदेवास्माभिरुच्यते॥ पृथिव्यवस्थातिरिक्तमवस्थान्तरमिति चेन्न; पूर्वोक्तपरिशेषात्॥ पृथिवीतः पृथगेव सृष्ट्यादिवचनं कथमुपपद्यते इति चेन्—स्वर्गान्तरिक्षादिसृष्टिवदिति भाव्यम्॥ तमश्शब्दप्रयोगानुवृत्तिः कथमिति

---

नैरपम; तदात्मकं रूपम; नीलभावरूपं तद्विषय. स्मृतिप्रमोष इत्यर्थः। स्मृतिप्रमोषो नाम आश्रयतत्तदनुल्लेखिस्मरणम्। तत् नीलरूपमात्रविषयकस्मरणमिति निर्गलितार्थः। नीलरूपस्मृतीति पाठस्तु सुगम एव। पृथक्शरीरत्वाभिधानादिति। "यस्याव्यक्तं शरीरं यस्याक्षरं शरीरं यस्य तमः शरीरम्" इति मूलप्रकृतेः शरीरत्वनिर्देशे सत्येव तदतिरेकेण, "यस्य तेजः शरीरं यस्य तमः शरीरम्" इति विकारवर्गेऽपि पृथक् पृथक् शरीरत्वाभिधानादिति भावः। प्रत्यक्षग्राह्यत्वासिद्धेरिति। मूलप्रकृतेः रूपस्पर्शादिहीनायाः प्रत्यक्षत्वासम्भवादित्यर्थः। प्रत्यक्षाग्राह्यत्वे स्मृतिमपि प्रमाणयति नाहो न रात्रिरित्यादिना। श्लोकस्मृतेरिति। प्रधानप्रतिपादकश्लोके श्रोत्राद्यग्राह्यत्वप्रतिपादनादिति भावः। प्राधानिकम् प्रधानमित्यर्थः। प्रधानञ्च ब्रह्म च पुमांश्च परिशिष्टमासीदिति तदर्थः। शङ्कते अवस्थान्तरेति। सर्वमिदमिति। प्रत्यक्षग्राह्यत्वपृथक्शरीरत्वनिर्देशादिकमित्यर्थः। सिद्धं नः समीहितमित्याह सत्यमिति। पृथिवीतः पृथगेवेति। "तमः ससर्ज भगवान्" इत्यादिकमित्यर्थः। स्वर्गान्तरिक्षादीति।

---

नीलभावः=नैरूप्यम्; तदात्मकरूपविषयकस्मृतिप्रमोष इत्यर्थः। स्मृतिप्रमोषो नाम आश्रयतत्तदनुल्लेखिस्मरणम्। नीलरूपमात्रविषयकस्मरणमिति फलितम्। नीलरूपस्मृतीति पाठस्तु सुगम एव। प्राथमिकतमोव्यतिरिक्तस्येति। "यस्याव्यक्तं शरीरं यस्याक्षरं शरीरं यस्य तमश्शरीरम्" इत्युक्तमूलप्रकृतिरूपतमोव्यतिरिक्तस्येत्यर्थः। तेजोविरोधितमसः पृथक्शरीरत्वाभिधानादिति। "यस्य तेजः शरीरं यस्य तमश्शरीरम्" इति विकारवर्गानुप्रवेशेन निर्दिष्टस्य मूलप्रकृतिरूपत्वासंभवादिति भावः॥

प्रत्यक्षग्राह्यत्वासिद्धेरिति। रूपस्पर्शादिहीनत्वादिति भावः। प्रत्यक्षाग्राह्यत्वे स्मृतिरप्यस्तीत्याह नाहो न रात्रिरिति। श्लोकस्मृतेरिति। प्रधानप्रतिपादकश्लोके श्रोत्राद्यग्राह्यत्वप्रतिपादनादित्यर्थः। प्राधानिकमिति। प्रधानमित्यर्थः। ब्रह्म=परं ब्रह्म, पुमान्=जीवश्च, तदा=प्रलयकाले, आसीत्=परिशिष्टमासीदित्यर्थः। शङ्कते अवस्थान्तरेति। सर्वमिति। पृथक्शरीरत्वनिर्देशप्रत्यक्षग्राह्यत्वादिकमित्यर्थः।

पृथिवीतः पृथगेवेति। "तमः ससर्ज भगवान्" इत्यादिकमित्यर्थः। स्वर्गेत्यादि। "नाभ्या आसीदन्त

चेत्—अनेकार्थत्वेनानुवृत्त्यन्यथासिद्धेः। ज्ञानालोकयोः प्रकाशशब्दवत्। यद्वा उद्भूततमोगुणमेवालस्य द्वयोरपि व्यवहारोपपत्तिः। कथं तर्हि तत्त्वरत्नाकरोक्तिः? वस्तुतस्तु वयमपि संशेमहि। न हि तत्र प्रतिज्ञानिर्वाहपर्यन्तं ग्रन्थो निबद्धः; येनाभिप्रायमध्यवस्येम। स हि प्रबन्धः, "अत्र तत्त्वविदः प्राहुः" इति श्लोकमात्र एव विच्छिन्नः। निबद्धमात्रञ्चास्मदुक्ताविरुद्धम्। पार्थिवत्वेऽपि प्रधानतत्त्वानतिरेकात्। न हि वयमसत्कार्यवादिनः। समस्तप्रकृतिप्राकृतपरीक्षोपक्रमविवक्षया च, "बध्नाति यदभिद्रोहात्" इत्यादेरुपपत्तिः। "अत्र तत्त्वविदः" इति

---

"नाभ्या आसीदन्तरिक्षम्। शीर्ष्णो द्यौः समवर्तत" इत्येवं भूतान्तर्गतस्वर्गान्तरिक्षादेः पृथक्सृष्टिवर्णनेऽपि न यथा भूतादर्थान्तरत्वम्, तथेत्यर्थः। **तमश्शब्दप्रयोगे**ति। प्रकृत्यन्धकारयोर्भिन्नत्वे भिन्नजातीयत्वे चेति शेषः। **प्रकाशशब्दव**दिति। न हि तयोरैक्यमेकजातीयत्वं वाऽस्तीति भावः। अनेकार्थत्वकल्पने गौरवमित्यस्वरसात् तमश्शब्दस्य तमोगुण एव मुख्यत्वम्, प्रकृत्यन्धकारयोस्तु तत्सम्बन्धात् लक्षणेत्यभिप्रयन् पक्षान्तरमाह **यद्वे**ति। अविरुद्धत्वमेवोपपादयति **पार्थिवत्वेऽपि प्रधानतत्त्वानतिरेका**दिति। अनतिरिक्तत्वमेवोपपादयति **न हि वय**मिति। ननु अन्धकारस्य बन्धकत्वमोचकत्वाद्यसम्भवात् **बध्नाति यदभिद्रोहात्** इत्यादेः कथमुपपत्तिरित्याशङ्क्याह **समस्ते**ति। अयं भावः—**बध्नाति यदभिद्रोहात्** इत्यारभ्य **सन्देहश्छिन्त्यतेऽधुना** इत्यन्तो ग्रन्थसन्दर्भः समस्तप्रकृतिप्राकृतपदार्थतत्त्वपरीक्षाप्रतिज्ञापरः, **अत्रालोकाभावस्तमः** इत्यारभ्य तु अन्धकारपरः। **अत्रे**त्यस्य चायमर्थः—अत्र बन्धकत्वेनाभिमतानां प्रकृतिप्राकृततत्त्वानां मध्ये इति। न च प्रकृतिप्राकृततत्त्वानां सर्वेषां विविचारयिषितत्त्वे प्रथमतोऽन्धकारनिरूपणे को हेतुरिति शङ्क्यम्; तस्य बहुविधवादिविप्रतिपत्तिकवलितत्वात्, तमश्शब्दसाम्येनोपस्थितत्वाच्च प्रथमतो निरूपणोपपत्तेरिति। **एवमेव तात्पर्य**मिति।

---

रिक्षम्। शीर्ष्णो द्यौस्समवर्तत" इत्येवम्भूतान्तर्गतस्वर्गान्तरिक्षादेः पृथक्सृष्टिवर्णनेऽपि यथा न भूतादर्थान्तरत्वम्, तथेत्यर्थः। **तमश्शब्दप्रयोगानुवृत्तिः कथ**मिति। एकजातीयत्वविरहेण प्रवृत्तिनिमित्तैक्यासंभवादिति भावः। हर्यादिशब्दवत् नानार्थत्वेऽप्यनुवृत्तिदर्शनात् शब्दानुवृत्तेर्नार्थैक्यसाधकत्वमित्यभिप्रायेणाह **अनेकार्थत्वेने**ति। **प्रकाशशब्दव**दिति। न हि तत्र वस्त्वैक्यम्, न वा एकजातीयत्वमिति भावः। अन्यायश्चानेकार्थत्वमिति न्यायेनानेकार्थत्वकल्पने गौरवात् तमश्शब्दस्य तमोगुण एव मुख्यत्वम्, प्रकृत्यन्धकारयोस्तु तत्संबन्धनिबन्धना निरूढलक्षणैवेत्यभिप्रायेण पक्षान्तरमाह [2]**यद्वे**ति। ननु कथमविरुद्धत्वमित्यत आह **पार्थिवत्वेऽपी**ति। अनतिरेकमेवोपपादयति **नही**ति। नन्वन्धकारस्य बन्धकत्वमोचकत्वाद्यसंभवात्, "बध्नाति यदभिद्रोहात्" इत्यादेः कथमुपपत्तिरित्याशङ्क्याह **समस्ते**ति। अयं भावः—"बध्नाति यदभिद्रोहात्" इत्यारभ्य, "सन्देहश्छिन्त्यतेऽधुना" इत्यन्तो ग्रन्थसन्दर्भः समस्तप्राकृतपदार्थतत्त्वपरीक्षाप्रतिज्ञापरः, "अत्रालोकाभावस्तमः" इत्यारभ्य त्वन्धकारपरः। अत्रेत्यस्य चायमर्थः—अत्र=अन्धकारत्वेनाभिमतानां प्रकृतिप्राकृततत्त्वानां मध्ये इति। न च प्रकृतिप्राकृतसर्वतत्त्वविचारस्य

---

2 रजश्शब्दस्य धूलौ प्रसिद्धस्य चलनादितो गौण्या चेत् रजोगुणे प्रयोगः, तमश्शब्दस्यापि लोकप्रसिद्ध एव शक्तिरस्तु; अज्ञानहेतुत्वादिनाऽन्यत्रोपचार इत्यादिकमपि भाव्यम्।

श्लोकेऽपि, "स्थूलसूक्ष्मात्मना स्थिता" इति विभागात् एवमेव तात्पर्यमिति विभावयामः। अस्तु वा किञ्चिदभिनवघनघनावलीमलीमसमनाघ्रातस्पर्शरसगन्धमन्धकाराभिधानमवस्थान्तरं प्रकृतेः। तथापि न पृथग्द्रव्यत्वसिद्धिः ॥

तदेवं चतुर्विंशति[:]तत्त्वानि विविक्तानि। "आत्मन आकाशः सम्भूतः", "तत्तेजोऽसृजत" इत्यादिन्यूनसृष्टिव्यपदेशा न तत्त्वान्तरसृष्टिप्रतिक्षेपपराः; प्रामाणिकत्वाविशेषेण तत्परित्यागायोगात्। वदन्ति च, "क्षीरादिदं तत इदञ्च ततो दधीति क्षीराद्दधीति वदतां किल को विशेषः?" इति।

अत एव षट्त्रिंशत्तत्त्ववादोऽपि निराकृतः। ते हि एवमाहुः—"शैवागमेषु मुख्यं पतिपशुपाशा

---

स्थूलसूक्ष्मात्मनेति। स्थूलशब्देन प्रकृतिकार्यत्वाविष्करणात् नान्धकारस्य मूलप्रकृतित्वम्; अपितु अस्मदभिमतं प्राकृतत्वमेव तेषामपि तात्पर्यगोचर इत्युन्नीयते इति भावः। अवस्थान्तरमिति। अव्यक्ताक्षरतमोवस्थादिवत् प्रकृतेरेव अनतिभिन्नमवस्थान्तरमिति भावः। इदञ्च प्रौढिवादेनोक्तम्। अतः प्रकृतेरनतिभिन्नत्वे कथं रूपवत्त्वादिकमिति शङ्का परास्ता ॥

ननु कथं चतुर्विंशतितत्त्वानीत्युच्यते? तैत्तिरीयके, "आत्मन आकाशः सम्भूतः" इत्याकाशपूर्वकसृष्टेरेवोक्त्या तत्पूर्वमहदादिसृष्ट्यनुक्तेः; छान्दोग्ये, "तत्तेजोऽसृजत" इति तेजःप्रभृतिसृष्टेरेवोक्त्या तत्पूर्वाकाशवाय्वोरनुक्तेरित्याशङ्क्याह आत्मन आकाश इत्यादि। क्षीरादिदमिति। क्षीरदध्नोर्मध्ये कलिलत्वाद्यनेकावस्थासम्भवमभिप्रेत्य इदमिदमित्यसकृन्निर्देशः। षट्त्रिंशदिति। माया पुरुष इति द्वे तत्त्वे। शिवतत्त्वशक्तितत्त्वसदाशिवतत्त्वेश्वरतत्त्वविद्यातत्त्वानि शुद्धतत्त्वानि पञ्च। कालनियतिकलाविद्यारागतत्त्वानि पञ्च। प्रकृतिमहदहङ्कारादीनि चतुर्विंशतितत्त्वानीति षट्त्रिंशत्प्रकाराः। शैवागमेषु

---

प्रतिज्ञायां प्रथमतोऽन्धकारनिरूपणं कुत इत्यत्र शङ्क्यम्; तस्य बहुविधवादिविप्रतिपन्नत्वात्तत्र तमश्शब्दसाम्येनोपस्थितत्वेन च प्रथमतो निरूपणोपपत्तेरिति। स्थूलसूक्ष्मात्मना स्थितेतिविभागादिति। स्थूलशब्देन प्रकृतिकार्यत्वाविष्कारणान्नान्धकारस्य मूलप्रकृतित्वम्, अपित्वस्मदभिमतं प्राकृतत्वमेव तेषामप्यभिमतमित्युन्नीयत इति भावः। तुष्यतु न्यायेनाह अस्तुवेति। न पृथग्द्रव्यत्वसिद्धिरिति। न चतुर्विंशतितत्त्वातिरेकसिद्धिरित्यर्थः। प्रकृतेरेवाव्यक्ताक्षरतमोवस्थावदनतिभिन्नमवस्थान्तरमिति भावः। प्रकृतिरूपत्वाद्यसंभवाशङ्का निर्भर इति बोध्यम् ॥

ननु कथं चतुर्विंशतितत्त्वानीत्युच्यते; तैत्तिरीयके, "आत्मन आकाशः संभूतः" इति आकाशस्यैव प्राथम्यश्रवणेन महदहङ्काराद्यभावप्रतीतेरित्याशङ्क्याह आत्मन आकाश इति। "तत्तेजोऽसृजत" इति छान्दोग्योपादानं दृष्टान्तार्थम्। यथा आकाशवाय्वोः तैत्तिरीयकश्रुतिसिद्धत्वेन प्रामाणिकत्वात्, "तत्तेजोऽसृजत" इत्यादेर्न तत्प्रतिक्षेपकत्वसंभवः, तथा आत्मन आकाश इत्यादेरपि न श्रुत्यन्तरसिद्धप्रामाणिकमहदादिप्रतिक्षेपकत्वसंभव इति भावः। क्षीरादित्यादि। क्षीरदध्नोर्मध्ये कललाद्यनेकावस्थासंभवमभिप्रेत्य इदमित्यसकृन्निर्देशः। अनेन षट्त्रिंशत्तत्त्ववादिशैवमतमपि निरस्तमित्याह अत एवेति। षट्त्रिंशत्तत्त्ववाद इति। माया पुरुष इति द्वे तत्त्वे; शिवतत्त्वशक्तितत्त्वसदाशिवतत्त्वेश्वरतत्त्वविद्यातत्त्वानि शुद्धतत्त्वानि पञ्च; कालनियतिकलाविद्यारागतत्त्वानि पञ्च; प्रकृतिमहदहङ्कारादीनि चतुर्विंशतितत्त्वानीत्येवं

इति क्रमात् त्रितयम्। तत्र पतिः शिव उक्तः पशवो ह्यणवोऽर्थपञ्चकं पाशः इति तत्त्वसंग्रहः। मलं कर्म च माया च मायोत्थमखिलं जगत्। तिरोधानकरी शक्तिरर्थपञ्चकमिष्यते ॥ इति पाशविभागः। माया पुरुषः शिव इत्येतत्त्रितयं महार्थसंहारे। अवशिष्यते, पुनस्तत् प्रवर्तते पूर्ववत् सृष्टौ इति सृष्टिप्रलयद्वयनित्यतत्त्वनिष्कर्षः। शुद्धानि पञ्च तत्त्वान्याद्यन्तेषु स्मरन्ति शिवतत्त्वम्।

---

मुख्यामिति। शैवागमेषु प्रथमप्रतिपाद्यमित्यर्थः। पशवो ह्यणव इति। अणु क्षेत्रज्ञादिपदवेदनीया जीवाः पशुशब्दवाच्या इत्यर्थः। न तु अणुस्वरूपा जीवाः पशव इत्यर्थ इति मन्तव्यम्। × "आत्मनो विभुनित्यता" इति तदुक्तेरिति ध्येयम्। अर्थपञ्चकमाह मलमिति। स्वाभाविकी अशुद्धिर्मलम्। तदुक्तम्, "एको ह्यनेकशक्तिर्दृक्क्रिययोश्छादको मल पुंसः। तुषतण्डुलवज्ज्ञेयः ताम्राश्रितकालिकावद्वा" इति। कर्म धर्माधर्मात्मकम्। तच्च बीजाङ्कुरवत् प्रवाहरूपेणानादि। यथोक्तं किरणे, "यथानादिर्मलस्तस्य कर्माप्येवमनादिकम्।" इति। मायेति। अस्यां शक्त्यात्मना सर्वं जगत् प्रळये मातीति, सृष्टौ च व्यक्तिमायातीति माया। तदुक्तं सौरभेये, "शक्तिरूपेण कार्याणि तल्लीनानि महाक्षये। विकृतौ व्यक्तिमायाति सा कार्येण कलादिना ॥" इति। मायोत्थमिति। महदादीनि प्राकृतानीत्यर्थः। तिरोधानकरीति। दृक्छक्त्याद्याच्छादनकरी शैवी शक्तिरित्यर्थः। अस्याश्च शिवशक्तेः पाशाधिष्ठानेन पुरुषतिरोधायकत्वात् उपचारेण पाशत्वव्यपदेशः। तदुक्तम्, "तासां माहेश्वरी शक्तिः सर्वानुग्राहिका शिवा। धर्मानुवर्तनादेव पाश इत्युपचर्यते ॥" इति। येभ्यः सर्वा सृष्टिः प्रवर्तते, येषु च प्रळये सर्वं प्रलीयते, तानि त्रीणि तत्त्वानि निष्कृष्य दर्शयति माया पुरुष इत्यादिना। महार्थसंहारे महाप्रलये इत्यर्थः। आद्यन्तेष्विति। सृष्टिलययोरित्यर्थः। तान्येव शुद्धानि पञ्च तत्त्वानि

---

षट्त्रिंशत्तत्त्वप्रतिपादनमित्यर्थः। मुख्यामिति। प्रधानप्रतिपाद्यामित्यर्थः। पशवो ह्यणव इति। अणुक्षेत्रज्ञादिपदवेदनीया जीवाः पशुशब्दवाच्या इत्यर्थः। ×अणुस्वरूपा जीवाः पशव इति तु नार्थः; "आत्मनो विभुनित्यता" इति तदुक्तेरिति बोद्धव्यम्। अर्थपञ्चकमाह मलमिति। स्वाभाविकाशुद्धिर्मलम्। तदुक्तम्, "एको ह्यनेकशक्तिर्दृक्क्रिययोश्छादको मलः पुंसः। तुषतण्डुलवत् ज्ञेयस्ताम्राश्रितकाळिकावद्वा" इति। कर्म धर्माधर्मात्मकम्। तच्च बीजाङ्कुरवत् प्रवाहरूपेणानादि। यथोक्तं किरणे, "यथाऽनादिर्मलस्तस्य कर्माप्येवमनादिकम्" इति। मायेति। अस्यां शक्त्यात्मना सर्वं जगत् संप्रळये मातीति, सृष्टौ च व्यक्तिमायातीति माया। तदुक्तं सौरभेये, "शक्तिरूपेण कार्याणि तल्लीनानि महाक्षये। विकृतौ व्यक्तिमायाति सा कार्येण कलादिना" इत्यादि। मायोत्थमिति। महदादीनि प्राकृतानीत्यर्थः। तिरोधानकरीति। दृक्क्रियाच्छादनकरी शैवी शक्तिरित्यर्थः। अस्याश्च शिवशक्तेः पाशाधिष्ठानेन पुरुषतिरोधायकत्वादुपचारेण पाशत्वव्यपदेशः। तदुक्तम्, "तासां माहेश्वरी शक्तिः सर्वानुग्राहिका शिवा। धर्मानुवर्तनादेव पाश इत्युपचर्यते" इति। येभ्यः सर्वास्सृष्टयः प्रवर्तन्ते, येषु च प्रळये सर्वं प्रलीयते, तानि त्रीणि तत्त्वानि निष्कृष्य दर्शयति माया पुरुष इत्यादिना। महार्थसंहारे=

---

× परमतभङ्गे बन्धमोक्षभेदेनाणुत्वविभुत्वे अपि जीवे तन्मते दर्शिते।

शक्तिसदाशिवतत्त्वे ईश्वरविद्याख्यतत्त्वे च ॥ पुंसो भवर्तृतार्थं मायातस्तत्त्वपञ्चकं भवति। कालो नियतिश्च तथा कला च विद्या च रागश्च ॥ अव्यक्तं मायातो गुणतत्त्वं तदनु बुद्ध्यहङ्कारौ। चेतोधीकर्मेन्द्रियतन्मात्राणीति तत्त्वानि—इति तत्त्वगणना।"

तत्र चिदचिदीश्वरविभागतन्नित्यत्वादौ न विवादः। ईश्वरस्तु प्रसिद्धशिवात् विलक्षणः शाश्वतशिवादिशब्देन निर्दिष्टो नारायणः। स च चिदचितोः सर्वावस्थावस्थितयोः शरीरी इत्येवमादिरौपनिषदानां विशेष ईश्वरे समर्थयिष्यते। तत्त्वगणनायां तु शुद्धतत्त्वपञ्चकस्य परमार्थत एकतत्त्वात्मकतया तैरेवोक्तत्वात् तत्र नातीव विवादः। तथा हि तैरे(तेनै?)वोक्तम्, "पञ्चानामप्येषां न हि क्रमोऽस्तीह कालरहितत्वात्। व्यापारवशादेषां विहिता खलु कल्पना शास्त्रे ॥ तत्त्वं

---

गणयति शिवतत्त्वमित्यादिना। शिवतत्त्वं शक्तितत्त्वं सदाशिवतत्त्वम् ईश्वरतत्त्व विद्याख्यतत्त्वमिति पञ्च तत्त्वानि। पुंस इति। कालनियतिकलाविद्यारागरूपाणि पञ्चापि तत्त्वानि जीवस्य दृक्क्रियाशक्त्यर्थं मायातः प्रादुर्भवन्तीत्यर्थः। कालः प्रसिद्धः। नियतिरिति। नियमनरूपा शक्तिरित्यर्थः। वक्ष्यति च नियतिर्नियमनरूपा इत्यादि। कलेति। कर्तृशक्तिव्यञ्जिका मायावस्था कला। वक्ष्यति च व्यञ्जयति कर्तृशक्ति कलेति तेनेह कथिता इति। विद्येति। उद्बुद्धकर्तृशक्तेः पुंसो विषयप्रदर्शननिमित्तं प्रकाशरूपं विद्यातत्त्वम्। रागः अभिष्वङ्गः। गुणतत्त्वमिति। त्रिगुणात्मकम् अव्यक्तमुत्पद्यते इत्यर्थः। बुद्धीति। महत्तत्त्वेत्यर्थः। चेतोधीकर्मेन्द्रियेति। मनोज्ञानकर्मेन्द्रियेत्यर्थः। माया पुरुषः शिव इत्यमुमंशमङ्गीकरोति चिदचिदीश्वरेत्यादिना। शाश्वतशिवशब्देनेति। 'शाश्वतं शिवमच्युतम्'' इति नारायणानुवाके निर्दिष्ट इत्यर्थः। औपनिषदानां विशेष इति। औपनिषदाभ्युपगतो विशेष इत्यर्थः। ईश्वरे इति। ईश्वरपरिच्छेदे इत्यर्थः। तेनैवेति। शैवेनैवेत्यर्थः। कालरहितत्वादिति। कालस्य पश्चादुत्पत्स्यमानतया शुद्धपञ्चतत्त्वोत्पत्तिसमये कालाभावेन पूर्वापरकालभावित्व-

---

महाप्रळये। आद्यन्तेष्विति। सृष्टिप्रळययोरित्यर्थः। तान्येव शुद्धानि पञ्च तत्त्वानि गणयति शिवतत्त्वमित्यादिना। शिवतत्त्वं शक्तितत्त्वं सदाशिवतत्त्वम् ईश्वरतत्त्वं विद्याख्यतत्त्वमिति पञ्च तत्त्वानि। पुंस इति। कालनियतिकलाविद्यारागरूपाणि पञ्चापि तत्त्वानि जीवस्य दृक्क्रियाशक्त्यर्थं मायातः प्रादुर्भवन्तीत्यर्थः। कालः प्रसिद्धः। नियतिरिति। नियमनरूपा शक्तिरित्यर्थः। वक्ष्यति च, "नियतिर्नियमनरूपा" इत्यादि। कलेति। कर्तृशक्तिव्यञ्जिका मायावस्था कला। वक्ष्यति च, "व्यञ्जयति कर्तृशक्तिं कलेति तेनेह कथितेयम्" इति। विद्येति। उद्बुद्धकर्तृशक्तेः पुंसो विषयप्रदर्शननिमित्तं प्रकाशरूपं विद्यातत्त्वम्। रागः=अभिष्वङ्गः। गुणतत्त्वमिति। त्रिगुणात्मकमव्यक्तमुत्पद्यत इत्यर्थः। बुद्धिर्महत् तत्त्वम्। चेतोधीकर्मेन्द्रियेति। मनोज्ञानकर्मेन्द्रियेत्यर्थः। माया पुरुषः शिव इत्यमुमंशमङ्गीकरोति चिदचिदीश्वरेत्यादिना। निर्दिष्ट इति। नारायणानुवाक इत्यादिः। तत्र, "शाश्वतं शिवमच्युतम्" इति दर्शनादिति भावः। औपनिषदानां विशेष इति। औपनिषदाभ्युपगतो विशेष इत्यर्थः। ईश्वर इति। ईश्वरपरिच्छेद इत्यर्थः। तेनैव शैवेनैव। कालरहितत्वादिति। कालस्य पश्चादुत्पत्स्यमानतया शुद्धपञ्चतत्त्वोत्पत्तिसमये कालाभावेन पूर्वापरकालभावित्वरूपक्रमाभाव इत्यर्थः।

वस्तुत एकं शिवसंज्ञं चित्रशक्तिखचितं तत्। शक्तिव्यापृतिभेदात् तस्यैते कल्पिता भेदाः" इति।
'रागोऽभिष्वङ्गात्मा' इति तैर्लक्षितस्य रागस्य पुरुषगुणभूतस्य न प्राकृततत्त्वान्तरत्वम्। प्रकृतिसंसर्गवशात् पुरुषस्य रागो जायते इत्येतावदिष्यते॥ रागाख्यकार्येण तत्कारणभूततत्त्वान्तरकल्पनमिति चेन्न; सुखहेतुत्वज्ञानादिभिरेव तदुत्पत्त्युपपत्तेः। अन्यथा द्वेषादिकार्येष्वपि तत्त्वान्तरकल्पनाप्रसङ्गात्।

विद्याऽपि, "उद्बुद्धकर्तृशक्तेः पुंसो विषयप्रदर्शननिमित्तम्। विद्यातत्त्वं सूते प्रकाशरूपञ्च करणवैशिष्ट्यात्॥" इत्यभिहिता। तत्रापि पुनः मनःप्रभृतिप्रमितिकरणग्राम एव विषयप्रदर्शने पर्याप्त इति न करणान्तरमनुमन्यामहे।

"मायातस्तदनु कला मलं नृणामेकतस्तिरस्कृत्य। व्यञ्जयति कर्तृशक्तिं कलेति तेनेह कथितेयम्॥
कालेन नियत्या चाप्युपसर्जनतामुपेतया सततम्। विदधाति व्यापारं निजमेषा ह्यवनिपर्यन्तम्॥"

---

लक्षणक्रमाभावादित्यर्थः। ननु क्रमाभावमात्रात् न वस्तुभेदाभावसिद्धिः; क्रमाभावेऽपि प्रकृतिजीवेश्वरभेदवदुपपत्तेरिति चेन्न—तद्वत् स्वरूपभेदस्याभावात् महदहङ्कारादिवत् क्रमिकावस्थाभेदमादायैव भेदस्य वक्तव्यतया तादृशक्रमाभावेनाभेदसिद्धिरिति। **कालो नियतिश्च** इति श्लोकोक्तं कालादिपञ्चकम्; तत् क्रमवैपरीत्येन दूषयति **रागोऽभिष्वङ्ग**त्यादिना। **न प्राकृततत्त्वान्तरत्वमिति**। चतुर्विंशतितत्त्वसङ्ख्या प्राकृततत्त्वानामेवोच्यते; न तु सर्वेषां चतुर्विंशतावन्तर्भावं वर्णयाम इति भावः। ननु रागस्यापि प्रकृतिसंसर्गनिमित्तत्वेन प्राकृतत्वात् चतुर्विंशतौ चानन्तर्भावात् तत्त्वान्तरत्वमास्थेयमित्याशङ्क्य प्रकृतिसंसर्गनिमित्तत्वेऽपि प्रकृतिपरिणामत्वाभावात् न प्राकृततत्त्वकोटौ निवेशः; तादृशानामेवेह चतुर्विंशत्यन्तर्भावस्य विवक्षितत्वादित्यभिप्रयन्नाह **प्रकृतिसंसर्गवशा**दिति। **तत्त्वान्तरेति**। रागरूपकार्येण तत्कारणप्राकृततत्त्वान्तरमनुमीयते इत्यर्थः। रागतत्त्वं दूषयित्वा विद्यातत्त्वं दूषयति **विद्यापीत्यादिना**। **उद्बुद्धकर्तृशक्तेरिति**। एषैव (एकैव?) कला कर्तृशक्तिमुद्बोध्य विषयप्रदर्शननिमित्तं विद्यातत्त्वमपि जनयतीत्यर्थः। कलातत्त्वं दूषयति **मायात इत्यादिना**। **तदनु कलेति**। उत्पद्यते इति शेषः। **कलाशब्दप्रवृत्ती** निमित्तं दर्शयति **मलमित्यादिना**। दृक्क्रियाशक्त्याच्छादकं मलमेकत्र तिरस्कृत्य शक्तिं व्यञ्जयतीति कलाशब्देनाभिधीयते इत्यर्थः। **कालेनेति**। सहकारिभूतया नियत्या कालेन च सहिता कला पृथिवीपर्यन्तं प्राकृततत्त्वं प्रसूते इत्यर्थः। ननु कर्तृशक्तिव्यञ्जकत्वाभावेऽपि कर्तृशक्तिव्यञ्जकज्ञानेच्छादि-

---

ननु क्रमाभावमात्रान्न वस्तुभेदाभावसिद्धिः; क्रमविरहेऽपि प्रकृतिजीवेश्वराणां भेदसत्त्वादिति चेन्न—तत्र स्वत एव रूपभेदसत्त्वात्। इह तथा स्वरूपभेदाभावेन महदहङ्कारादिवत् क्रमिकावस्थाभेदमादायैव भेदस्य वाच्यतया तादृक्क्रमाभावेनाभेदसिद्धिरिति।

**कालो नियतिश्चे**ति श्लोकोक्तं कालादिपञ्चकम्; तत् क्रमवैपरीत्येन दूषयति **रागोऽभिष्वङ्गेत्यादिना। न प्राकृततत्त्वान्तरत्वमि**ति। तथाच तन्मध्ये तत्परिगणनमनुचितमिति भावः। रागतत्त्वं दूषयित्वा विद्यातत्त्वं दूषयति **विद्यापीत्यादिना उद्बुद्धकर्तृशक्तेरिति**। (?) एषैव कला कर्तृशक्तिमुद्बोध्य विषयप्रदर्शननिमित्तं विद्यातत्त्वमपि जनयतीत्यर्थः। कलातत्त्वं दूषयति **मायात इत्यादिना। तदनु कलेति**। उत्पद्यत इति शेषः। कलाशब्दप्रवृत्तिनिमित्तं दर्शयति **मलमित्यादिना। कालेनेति**। सहकारिभूतया

इति च कलाऽभिहिता । तथापि अव्यक्तत्वस्य कारणभूताक्षरशब्दाभिलप्यप्रकृत्यन्तरत्वस्य मिच्छामः । तत्र कलाशब्दः शब्दान्तरं वा प्रयुज्यताम् । कर्तृशक्तित्वञ्जकत्वं तु तस्या नेष्यते । ज्ञानेच्छापुण्यपापादिभिरेव तदभिव्यक्तेः । ज्ञानादेश्च इन्द्रियाद्यधीनत्वात् ।

नियतिर्नियमनरूपा मायातः साप्यनन्तरं भवति, नियमयति येन निखिलं तेनेयं नियतिरित्युक्तेति परिभाषिता । तत्र नियमनशब्देन नियन्तृशक्तिविवक्षायामीश्वरेच्छाव्यतिरिक्तनियतिर्नास्ति । प्रतिनियतफलावश्यम्भावित्वादिविवक्षायां तु पुण्यपापादिरूपैव नियतिः । तत्तत्स्वकार्यकरणादिविवक्षायां प्रतिनियततत्तद्वस्तुशक्तिरेव नियतिरिति न प्राकृततत्त्वान्तरमस्ति । यदि पुनः प्रमाणभूतेषु पञ्चरात्रादिषु कचिन्नियत्यादिसृष्टिरुच्यते, तदपि तत्र तत्र तात्पर्यमेदेन संकलितपुण्यविशेषतच्छक्त्यधीनत्वमेव पृथग्गणनमिति मन्तव्यम् । युक्तिश्च निर्बन्धतो दूष्यते; न त्वागमः ॥

कालस्य मायासृज्यत्वादिकम्, "अनादिर्भगवान् कालो नान्तोऽस्य द्विज विद्यते" इत्यादिभिः बाधितम् । तर्कश्च—यत कुतश्चित् कालांशात् परतः पूर्वतोऽपि वा ।

काला न चेत्; त्वदुक्तिस्थं पौर्वापर्यं न सिध्यति ॥ १२ ॥

कालाधीनभवद्भव्यभूतादिव्यवहारवान् ।

देशोऽन्योऽपि; ततः सोऽपि तदभावे न सिध्यति ॥ १३ ॥

नित्यविभूत्वपि कालस्याहेतुत्वमात्रम्; न त्वभावः । "कालं स पचते तत्र न कालस्तत्र वै प्रभुः", "कला मुहूर्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुः ।" इत्यादिवचनात् । अन्यथा—

---

हेतुत्वमस्त्वित्याशङ्क्याह ज्ञानादेश्चेति । नियतिं दूषयति नियतिर्नियमनरूपेत्यादिना । ननु नियतिशब्देन नियन्तृशक्तिः विवक्ष्यते, उत कारणे सति कार्येण अवश्यं भवितव्यमिति फलावश्यम्भावलक्षणनैयत्यहेतुभूता शक्तिः, किं वा इदं कारणमिदमेव कार्यं जनयति नान्यदित्येवंरूपा तत्तत्कार्यमात्रनियमनानुकूला शक्तिर्विवक्षिता इति विकल्प्य दूषयति तत्र नियमनशब्देनेत्यादिना । स्वकार्यकरणेति । करणं=निष्पादनम् । निर्बन्धत इति । नियमेनेत्यर्थः ।

तर्कश्चेति । बाधक इति शेषः । यतः कुतश्चिदिति । प्रपञ्चसर्गकालात् पूर्वं तत्प्रलयकालात् पश्चाच्च कालो नास्तीति वदन् किं तत्र पूर्वशब्दस्य पश्चाच्छब्दस्य च सार्थकत्वं मन्यते, उत निरर्थकत्वम्? उत्तरत्र निरर्थकनिग्रहस्थानापत्तिः । पूर्वत्र कालस्यैव तदर्थत्वात् तत्र कालनिषेधे स्ववचनविरोध इत्यर्थः । ननु भूते भाविनि वा काले न कालो निषिध्यते; किं तु भूते भाविनि वा देशे इत्याशङ्क्य देशादिभूतत्वादेर्भूतकालादिसम्बन्धरूपत्वातिरिक्तस्याभावात् अवश्यं कालोऽभ्युपेय इत्याह कालाधीनेति । तत इति । तस्मादित्यर्थः । सोऽपीति । भूतादिदेश इत्यर्थः । यद्विभूतेरिति ।

---

नियत्या कालेन च संहता कला पृथिवीपर्यन्तं प्रकृतितत्त्वं प्रसूत इत्यर्थः । ननु कर्तृशक्तिव्यञ्जकत्वाभावेऽपि कर्तृशक्तिव्यञ्जकज्ञानेच्छादिहेतुत्वमस्त्वित्याशङ्क्याह ज्ञानादेश्चेति । नियतिं दूषयति नियतिर्नियमनरूपेत्यादिना । ननु भूते भाविनि वा काले न कालो निषिध्यते; किन्तु भूते भाविनि वा देश इत्याशङ्क्य देशादिभूतत्वादेः भूतकालादिसंबन्धित्वातिरिक्तस्याभावात् अवश्यं कालोऽभ्युपगन्तव्य इत्याह कालाधीनेति । ततः=तस्मात् । सोऽपीति । भूतादिदेशोऽपीत्यर्थः । यद्विभूतेरिति । यस्य विभूतेरित्यर्थः । अन्वय-

"सदा पश्यन्ति" इत्यादिभिर्विरोधात्। अस्य च अन्वयव्यतिरेकाभ्यामागमाच्च यथायोगं तत्तत्कार्यनिमित्तत्वसिद्धिः। तच्च उपाध्यवच्छेदात्। सविकारत्वपक्षे स्वविकारान् प्रति कालस्योपादानत्वमेव, निमित्तभूताकारान्तराभावात् ॥

यस्मा विभूतेरित्यर्थः। अन्वयव्यतिरेकाभ्यामागमाच्चेति। वसन्तकाल एव चूतपल्लवकुसुमफलादीनामुपलम्भात् अन्यदा अनुपलम्भात्, "अनादिर्भगवान् कालो नान्तोऽस्य द्विज विद्यते। अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमाः ॥" इत्यागमाच्चेति भावः। ननु कालस्य नित्यत्वेन सर्वदा सत्त्वात् कथमन्वयव्यतिरेकावित्याशङ्क्याह तच्चोपाध्यवच्छेदादिति। अखण्डकालस्यान्वयव्यतिरेकाद्यभावेऽपि खण्डकालस्य तदस्तीति भावः। सविकारत्वपक्षे इति। क्षणलवमुहूर्तकाष्ठाहोरात्राद्यात्मना काल एव परिणामीति सिद्धान्तपक्षे कार्यं प्रति कालस्य निमित्तत्वमात्रसत्त्वेऽपि क्षणलवादिस्वविकारं प्रति उपादानत्वमेव; न निमित्तत्वम्; निमित्तत्वप्रयोजकस्योपादानत्वातिरिक्तापेक्षाकारस्याभावात्। न च घटादिष्विव आधारतया निमित्तत्वमस्तीति वाच्यम्; स्वस्य स्वाधारत्वे प्रमाणाभावात्। न च कालस्य सर्वनिमित्तत्वात् विशेषः; उपादानत्वेन वा निमित्तत्वेन वा यथाकथञ्चित् सर्वकारणत्वेन तद्धेतुत्वोपपत्तेः ॥

व्यतिरेकाभ्यामागमाच्चेति। वसन्तकाल एव चूतपल्लवकुसुमफलादीनामुपलम्भात्, अन्यदाऽनुपलम्भात्, "अनादिर्भगवान् कालो नान्तोऽस्य द्विज विद्यते। अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमाः" इत्यागमाच्चेति भावः। ननु कालस्य नित्यत्वेन सर्वदा सत्त्वात् कथमन्वयव्यतिरेकौ सम्भवत इत्याशङ्क्याह तच्चेति। तत्तत्कार्यनिमित्तत्वं चेत्यर्थः। उपाध्यवच्छेदादिति। तत्तदुपाध्यवच्छिन्नकालस्यैव तत्तत्कार्यनिमित्तत्वात् तत्रान्वयव्यतिरेकसम्भव इति भावः। उपाधयश्च पूर्वोक्तास्सूर्यादिक्रियाः, जन्यमात्रमेव वा। सविकारत्वपक्ष इति। कालस्यैव शक्तिविशेषरूपक्षणलवाद्यवस्थस्वविकारपक्ष इत्यर्थः। स्वविकारान् प्रतीति। तादृशशक्तिविशेषान् प्रतीत्यर्थः। उपादानत्वमेवेति। अपृथक्सिद्धिसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणत्वमेवेत्यर्थः। एवकारेण कालिकसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणतारूपनिमित्तकारणत्वव्यवच्छेदः। अत्र च वसन्तादिकालानां चूतपल्लवादिकं प्रतीव विशेषकारणतैव व्यवच्छिद्यते; न तु कार्यत्वावच्छिन्नकालिकसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणतारूपा सामान्यकारणता। तदनुपगमे कार्याणां कालिकविशेषणतया कालादन्यत्राप्युत्पत्तिप्रसङ्गात्[1]। ननु चूतपल्लवादिकं प्रतीव क्षणलवाद्यवस्थाविशेषं प्रत्यपि कुतो न निमित्तकारणतेत्याशङ्क्याह निमित्तभूतेति। निमित्तकारणतावच्छेदकेत्यर्थः। निमित्ते भूतमिति व्युत्पत्त्या तादृशार्थसिद्धेः। यद्वा निमित्तशब्देनैवावच्छेदकमभिधीयते; कारणतानिमित्तं शक्यतानिमित्तमित्यादौ तथा दर्शनात्। आकारान्तराभावादिति। चूतपल्लवादिकारणतावच्छेदकीभूतवसन्तत्वाद्याकारवत् क्षणलवादिकारणतावच्छेदकत्वार्हान्तराकाराभावादित्यर्थः। तादृशाकारविशेषस्य कस्यचिदङ्गीकारे तं प्रत्यपि निमित्तकारणतावच्छेदकाकारान्तरस्यान्वेषणीयतयाऽनवस्थाप्रसङ्गादिति भावः।

1 तत्तद्विशेषकार्यकारणभावेनैवैतत्प्रसङ्गपरिहारः ईदृशकारणत्वमेव प्रसिद्धञ्च।

**एकेनैव क्षणेनास्य विश्वस्यापि विशेषणात् । कालवत् तत्क्षणानाञ्च व्यापित्वमवगम्यते ॥ १४**

**अस्य विकारित्वम्–'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि। कला मुहूर्ताः काष्ठाश्चाहोरात्राश्च सर्वशः' इत्यादिश्रुतिः,(तेः।) 'कालं स पचते', "कलामुहूर्तादिमयः" इत्यादिस्मृतिश्चाऽऽह । अत्र स्वारसिकार्थे बाधकाभावात् अधिदेवतोपाध्याद्युत्पत्त्या निर्वाहो न शङ्क्यः ॥ विभोर्विकारित्वानुपपत्तिर्बाधिकेति**

---

विद्युतः पुरुषादधीति । विद्युद्वर्णात् पुरुषात् सर्वे निमेषा अधिजज्ञिरे इत्यर्थः । ननु "सर्वे निमेषा जज्ञिरे" इत्यस्याः श्रुतेः क्षणाभिमानिदेवतोत्पत्त्या वा क्षणोपाध्युत्पत्त्या वा अन्यथासिद्धिः सम्भवतीत्याशङ्क्य स्वारस्यबाधकाभावात् न तथाऽभ्युपगन्तव्यमित्याह अत्र स्वारसिकेति । असिद्धिप्रसङ्गमेवोप

---

इदमुपलक्षणम्—क्षणत्वादीनां सर्वदा उत्पत्त्या तत्र कालविशेषत्वेन कारणत्वासंभवादित्यपि बोद्धव्यम् । अत्र च पूर्वपूर्वक्षणत्वाद्यवस्थाविशिष्टस्य कालस्य उत्तरोत्तरक्षणत्वाद्यवस्थाविशिष्टं प्रति पिण्डत्वाद्यवस्थाविशिष्टस्य मृद्द्रव्यस्य घटत्वाद्यवस्थाविशिष्टं प्रतीव भाव्यवस्थावतः प्रागवस्थाश्रयत्वलक्षणं तादात्म्यसंबन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणत्वपर्यवसितमुपादानत्वम् । क्षणत्वाद्यवस्थाविशेषं प्रति तु रूपादिकं प्रति घटादेरिवापृथक्सिद्धिसंबन्धावच्छिन्नकारणत्वलक्षणमुपादानत्वम् । ब्रह्मणस्तु क्षणत्वाद्यवस्थाविशिष्टं प्रति ईदृशमुपादानत्वम्; ब्रह्मणि क्षणत्वाद्यवस्थाविशिष्टस्यापृथक्सिद्धिसंबन्धेनोत्पत्तेः । उत्तरोत्तरक्षणविशिष्टब्रह्म प्रति तु पूर्वपूर्वक्षणविशिष्टस्य तस्य भाव्यवस्थेत्याद्युपादानत्वमिति बोद्धव्यम् । क्षणत्वाद्यवस्थानां काले देशिकाव्याप्यवृत्तितया तद्विशिष्टवेषेणापि कालस्य सर्वव्यापित्वमित्याह एकेनैवेति । एकक्षणत्वावस्थाविशिष्टवेषेणैवेत्यर्थः । देशिकाव्याप्यवृत्तिनानावस्थाव्यावृत्तये एकेति । अस्य विश्वस्यापि विशेषणादिति । इदं विश्वमिदानीमिति प्रतीतेरिति भावः । तत्क्षणानाञ्चेति । कालरूपक्षणत्वादिविशिष्टानामपीत्यर्थः । अथवा तत्तत्क्षणानाञ्चेत्यर्थः । कालत्वेनेव तत्तत्क्षणत्वादिविशिष्टवेषेणापीति यावत् । व्यापित्वमिति । सर्वसंबन्धित्वमित्यर्थः । संबन्धश्च यथायोगं संयोगस्वाश्रयसंयोगादिरूपः । तत्र द्रव्याणां संयोगः, द्रव्याश्रितानां स्वाश्रयसंयोगः, द्रव्याश्रिताश्रितानां स्वाश्रयाश्रयसंयोगः । अयमेव च कालिकसंबन्धः । यद्यपि अतीतानागतवस्तुसंबन्धितावच्छेदकत्वं तत्तत्क्षणत्वस्य न संभवति — तथापि स्वावच्छिन्नाधिकरणतानिरूपकध्वंसप्रागभावप्रतियोगिसर्ववस्तुसंबन्धितावच्छेदकत्वं तत्तत्क्षणत्वानामव्याहतमेवेति बोद्धव्यम् । कालस्य विकारित्वे प्रमाणमाह अस्येति । विकारित्वमिति । नामान्तरभजनार्हजन्यधर्मवत्त्वमित्यर्थः । इदं च द्वितीयान्तं श्रुतिः स्मृतिश्चाहेत्यनेनान्वेति । श्रुतेरिति पाठे तु प्रथमान्तमेव । स्मृतिश्चाहेत्यत्र तु द्वितीयान्ततया विपरिणामेनानुषङ्गः । विद्युत इति । विद्युद्वर्णादित्यर्थः । पचत इति । परिणमयतीत्यर्थः । कलामुहूर्तादिमय इति । अत्र मयट् विकारार्थ इति भावः । उक्तश्रुतेः क्षणाद्यभिमानिदेवतोत्पत्तिपरतया वा क्षणाद्युपाध्युत्पत्तिपरतया वाऽन्यथासिद्धिः स्यादित्याशङ्कां निरस्यति अत्रेति । स्वारसिकेत्यादि । निमेषादिशब्दानां कालपरताया एव स्वारसिकतया तत्र बाधकविरहात् अस्वारसिकमुपाधिदेवताद्युत्पत्तिपरत्वमुक्तश्रुत्यादेर्न स्वीकर्तुं युक्तमिति भावः । ननु विभुत्वस्य विकारित्वाभावव्याप्यतया विभुत्वग्राहकप्रमाणविरोधात् न प्रकृते स्वारसिकार्थस्वीकारसंभव इति शङ्कते विभोरिति ।

चेन्न ; अवयवोच्छूनतादिलक्षणस्य विकारस्यानभ्युपगमात् । अवस्थान्तरापत्तिमात्रस्याविरोधात् । अन्यथा विभोरेवासिद्धिप्रसङ्गात् । सर्वमूर्तसंयोगित्वं हि विभुत्वम् । तस्मादन्ततः संयोगलक्षणमङ्गीकार्यम् । अथ विकारित्वानुपपत्त्या विभुत्वमेव कस्यचिन्नास्तीति मतम्, तथापि कालस्य विकारित्वात् विभुत्वमेव भज्येत । न पुनर्विभुत्वाद्विकारित्वम् ॥

कथञ्च विकारित्वं विभुत्वस्य बाधकम्? ॥ कारणत्वे प्रमाणाभावादिति चेत् ;

---

पादयति सर्वमूर्तेति । कस्यचिदिति । कस्यापीत्यर्थः । ततश्च ईश्वरस्यापि न विभुत्वमिति भावः । तथापि कालस्येति । विभुत्वमस्तु वा, मा वा; तथापि अस्मदभिलषितं विकारित्वं सिद्धमेवेति भावः । ननु विभुत्वस्यापि भवदभिमतत्वात् कथं तद्धानिः सोढव्येत्याशङ्कय, विकारित्वस्य विभुत्वप्रतिक्षेपकत्वमपि नास्तीत्याह कथञ्च विकारित्वमिति । शङ्कते कारणत्व इति । प्रमाणाभावादिति । विभोः कारणत्वे प्रमाणाभावादेव उपादानकारणत्वरूपविकारित्वं दूरतो निरस्तम् । अतो विभुत्वविकारित्वोभयसमावेशः परित्याज्य इति भावः । ननु विभोः कारणत्वमपलपतां कोऽभिप्रायः? किं सर्ववस्तुष्वपि

---

विभुत्वस्य सर्वमूर्तद्रव्यसंयोगित्वरूपतया तस्य जन्यधर्मरूपावस्थासामान्याभावव्याप्यत्वं न संभवति ; परन्तु परिमाणद्वयात्मकसंकोचविकासाभावव्याप्यत्वमेव । क्षणत्वादिविकारस्य तदनात्मकत्वात् न दोष इत्यभिप्रायेण समाधत्ते नेति । अवयवोच्छूनता=विकासः । आदिना संकोचपरिग्रहः । अविरोधादिति । विभुत्वाविरुद्धत्वादित्यर्थः । अन्यथेति । जन्यधर्मनात्रस्य विभुत्वविरुद्धत्व इत्यर्थः । ननु सर्वमूर्तद्रव्यसंयोगित्वं न विभुत्वम् ; येन संयोगात्मकजन्मधर्माभ्युपगम आवश्यकस्स्यात् ; किन्तु परममहत्परिमाणवत्त्वमेव तत् । तस्य च विकारित्वसामान्याभावव्याप्यत्वं संभवत्येव । इत्थंच दर्शितबाधकबलात् विकारित्वग्राहकोक्तप्रमाणे स्वारसिकार्थपरित्यागो युक्त एवेति शङ्कते अथेति । कस्यचिदिति । कस्यापीत्यर्थः । विकारिण इति शेषः । नास्तीति । न संभवतीत्यर्थः । तथा च विभुत्वासंभवप्रसङ्गात् विकारित्वं न स्वीकर्तुं युक्तमिति विकारित्वग्राहकप्रमाणान्यथानयनमावश्यकमिति भावः । मतम्=अभिमतम् । विभुत्वस्य विकारित्वविरुद्धत्वाभ्युपगमे विकारित्वग्राहकोक्तप्रमाणबलेन विभुत्वमेव बाध्यं स्यात्, न पुनर्विकारित्वमिति प्रकृतं विकारित्वं निष्प्रत्यूहमेवेत्याह तथापीति ।(?) संग्रहातिशयलोभात् ग्रन्थोऽयमित्थमस्माभिर्व्याख्यातः। श्रीमद्रंगरामानुजमुनिभिस्तु द्रव्येषु सर्वत्र विकारित्वस्य प्रमाणसिद्धतया तदनुपपत्त्या विभुद्रव्यमेव न स्वीक्रियत इति मतेऽपि, कालस्य विभुत्वाभावेऽपि विकारित्वं निष्प्रत्यूहमित्यभिप्रायकतया व्याख्यातः। वस्तुतो विभुत्वविकारित्वयोरविरोधात् उभयमपि कालस्य निर्बाधमिति स्थापयितुमविरोधमुपपादयति कथञ्चेति । विभुत्वस्य बाधकम्=विभुत्वाभावव्याप्यम्, विभुत्वासमानाधिकरणं वा । ननु विभोः कारणत्वे प्रमाणाभावेन कारणत्वासंभवादुपादानकारणत्वस्य सुतरामसंभवेन तत्र धर्मोत्पत्त्यसंभवात् जन्यधर्मवत्त्वरूपविकारित्वं न संभवत्येवेति शङ्कते कारणत्व इति । प्रमाणाभावादिति । अन्वयव्यतिरेकयोरेव कारणताग्राहकतया नित्यविभौ देशकालव्यतिरेकासंभवादिति भावः । ननु विभुषु कारणत्वं नास्तीति वदतः कोऽभिप्रायः? क्वचिदपि किञ्चित् प्रति कारणत्वं नास्तीति वा, विभुमात्रे

न तावदियं सामान्यतः। तथा हि—

न हेतुकार्यतेत्येतद् बोधाय फणितं न वा।
द्विधाऽपि भङ्गः स्वोक्त्यादेः फलवत्त्वाफलत्वयोः॥ १५॥
सावधेरवधियोंऽसौ पूर्वो हेतुः परो रिपुः।
कार्यं नित्यमसद्वा स्यात् अवधेरनपेक्षणात्॥ १६॥

अन्वये सत्यपि नित्यविभोर्देशकालव्यतिरेकाभावेन कारणत्वं दुर्ग्रहमिति चेन्न;

---

कारणत्वे प्रमाणाभावात् विभावपि कारणत्वं नास्तीति, किं वा विभुत्वस्य ते कारणताग्राहकप्रमाणाभावादिति विकल्प्य आद्यं दूषयति न तावदित्यादिना। फलवत्त्वाफलत्वयोरिति। लोके क्वचिदपि कार्यकारणभावो नास्तीति शब्दप्रयोगस्य ज्ञानजनकत्वे कार्यकारणभावाभ्युपगमेन विरोधः; अनभ्युपगमे च तदर्थं शब्दप्रयोगस्तत्र न स्यात्; व्यर्थत्वात्। अतस्त्वदुक्तेरेव उभयथापि व्याहतिरित्यर्थः। दूषणान्तरमप्याह सावधेरिति। किं घटपटादिकार्यं सावधिकम्, उत निरवधिकम्? आद्ये कुत आरभ्य कियत्पर्यन्तमवस्थितिरिति प्रश्ने कारणसन्निधानमारभ्य विनाशकसन्निधानपर्यन्तमवस्थितिरिति वक्तव्यम्; ततश्च कारणाभ्युपगमः। द्वितीये आत्मादिवन्नित्यत्वं वा शशशृङ्गादिवदसत्त्वं वा स्यादित्यर्थः। रिपुरिति। विनाशक इत्यर्थः। नित्यविभोरिति। नित्यत्वात् कालव्यतिरेकाभावो विभुत्वाद्देशव्यतिरेकाभावः

---

कारणत्वं नास्तीति वेति विकल्प्याऽऽद्ये दूषणमाह न तावदिति। फलत्ववाफलत्वयोरिति। लोके क्वचिदपि किञ्चित्प्रति कारणत्वं नास्तीति वाक्यप्रयोगस्य ज्ञानजनकत्वस्वीकारे कार्यकारणभावाभ्युपगमः। तदस्वीकारे तादृशशब्दप्रयोगस्यैव वैयर्थ्यमिति, स्ववचनव्याघात इत्यर्थः। दूषणान्तरमप्याह सावधेरिति। स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्व-स्वाव्यवहितोत्तरक्षणोत्पत्तिकनाशप्रतियोगित्वान्यतरसंबन्धेन किञ्चिद्विशिष्टस्येत्यर्थः। अवधिरिति। उत्पत्त्यव्यवहितपूर्वक्षणवृत्तित्व-नाशाव्यवहितपूर्वक्षणवृत्तित्वान्यतरवानित्यर्थः। पूर्वः-उत्पत्त्यव्यवहितपूर्वक्षणवृत्तिः। परः-नाशाव्यवहितपूर्वक्षणवृत्तिः। रिपुरिति। नाशक इत्यर्थः। अवधेरनपेक्षणादिति। अवधिरहितत्वादित्यर्थः। स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्व-स्वाव्यवहितोत्तरक्षणोत्पत्तिकनाशप्रतियोगित्वान्यतरसंबन्धेन किञ्चिद्विशिष्टान्यत्वादिति यावत्॥ अयं भावः—घटपटादिकार्यं सावधिकम्, अवधिरहितं वा, आद्ये, यत्समवधानानन्तरक्षणे घटादिकार्यस्योत्पत्तिः, तादृशदण्डादेः कारणत्वानुपगमे घटादिकार्यस्याऽऽकस्मिकत्वापत्त्या दण्डादिसमवधानात् पूर्वमप्युत्पत्त्यापत्तिः। एवं यत्समवधानानन्तरक्षणे घटादेर्नाशः तादृशमुद्गरपातादेः नाशकारणत्वानुपगमे, नाशस्याऽऽकस्मिकत्वापत्त्या पूर्वमपि तदापत्तिः। अतो मुद्गरपातादेः नाशकारणत्वाभ्युपगमं आवश्यक इति कार्यकारणभावः सिद्धः। द्वितीये-कार्यस्याऽऽत्मादिवत् नित्यत्वं शशशृङ्गादिवदसत्त्वं वा स्यात्। तत्र नित्यत्वे घटपटादिकार्यस्य सर्वदोपलब्धिप्रसङ्गः; असत्त्वे तु कदाचिदप्युपलब्धिर्न स्यादिति। ननु उक्तरीत्या सामान्यतः कार्यकारणभावस्याऽऽवश्यकत्वेऽपि विभोः किञ्चित्प्रति कारणत्वं न संभवत्येवेति शङ्कते अन्वये इति। नित्यविभोरित्यादि। नित्यत्वात् कुत्रचित् काले तदभावासंभवः; विभुत्वात्

तावन्तरेणापि धर्मिग्राहकेणैव तत्सिद्धेः । सामान्यतश्च अन्वयव्यतिरेकयोरपि सुग्रहत्वात् । सामान्यतः सिद्धस्य पारिशेष्यादिभिर्विभुत्वादिसिद्धेः ॥ विकारित्वमविभुत्वेन व्याप्तमिति चेन्न; ईश्वरतज्ज्ञा-

---

रेकाभाव इति भावः । तावन्तरेणेति । अन्वयव्यतिरेकावन्तरेणापीत्यर्थः । धर्मिग्राहकेणेति । शब्दादिः किञ्चिदाश्रितो गुणत्वात् रूपादिवदित्यनुमानात् तदनुसार्यागमरूपाद्वा धर्मिग्राहकप्रमाणात् नित्यविभुकारणत्वस्य सिद्धिः । न तु [1] अन्वयव्यतिरेकावेव कारणत्वम् । न[च?] तावेव कारणत्वनिश्चयहेतुरिति भावः । ननु वस्तुतः कार्यानुकृतान्वयव्यतिरेकशून्यस्य न कारणत्वं सुवचमित्याशङ्क्य रूपादिगुणानां तदाश्रयद्रव्याणाञ्चान्वयव्यतिरेकदर्शनात् तज्जातीयत्वात् कारणत्वं तदनुमानञ्चोपपद्यते इत्यभिप्रयन्नाह सामान्यतश्चेति । ननु गुणस्य स्वसमानाधिकरणद्रव्या(न्वा?)न्वयव्यतिरेकदर्शनात् शब्दादिगुणेन तदाश्रयद्रव्यानुमाने तस्य पृथिव्यादिरूपत्वेनाप्युपपत्तौ पृथिव्यादिविलक्षणस्य नित्यविभुद्रव्यस्य सिद्धिर्न स्यादित्याशङ्क्य, शब्दः क्वचिदाश्रितः गुणत्वात् रूपादिवदिति सामान्यत आश्रयसिद्धौ सर्वत्र सदा कार्योपलम्भलिङ्गात् विलक्षणनित्यविभुद्रव्यसिद्धिरस्तीत्यभिप्रयन् आह सामान्यतः सिद्धस्येति । अनैकान्त्यपरिहारं शङ्कते निर्विकार इति । ईश्वर

---

कुत्रचिद्देशे तत्सम्भव इति यत्सत्त्वे यत्सत्त्वम्, यदभावे यदभाव इत्यन्वयव्यतिरेकग्रहासंभवात् कारणताग्रहो न संभवतीत्यर्थः । दूषयति नेति । तावन्तरेण=अन्वयव्यतिरेकावन्तरेण । धर्मिग्राहकेणेति । शब्दः किञ्चिद्द्रव्यजन्यः जन्यगुणत्वात् रूपवदित्यनुमानादिरूपेति भावः । तत्सिद्धेरिति । कारणत्वसिद्धेरित्यर्थः । कारणताप्रत्यक्षे अन्वयव्यतिरेकग्रहापेक्षायामपि अनुमित्यादौ तदनपेक्षणादिति भावः । ननु उक्तानुमानप्रवृत्तेः जन्यगुणत्वद्रव्यत्वाभ्यां कार्यकारणभावनिश्चयाधीनतया तन्निश्चयस्य च अन्वयव्यतिरेकनिश्चयाधीनतया कथमन्वयव्यतिरेकग्रहमन्तरेण विभौ कारणतानिश्चय इत्यत आह सामान्यत इति । जन्यगुणत्वद्रव्यत्वरूपसामान्यधर्मपुरस्कारेणेत्यर्थः । अयं भावः—अपृथक्सिद्धिसंबन्धेन जन्यगुणत्वावच्छिन्नं प्रति तादात्म्यसंबन्धेनैव द्रव्यत्वेन कारणत्वमिति तादृशकारणताग्रहोपयोगिनः, द्रव्यतादात्म्यसत्त्वे जन्यगुणोत्पत्तिः तदभावे तु नेत्येवंरूपस्य वा, द्रव्य एव जन्यगुणोत्पत्तिः नान्यत्रेत्येवंरूपस्य वा अन्वयव्यतिरेकग्रहस्य न काचित् क्षतिरिति । ननु शब्दो द्रव्यजन्यः जन्यगुणत्वादिति, शब्दो द्रव्याश्रितः गुणत्वादिति वाऽनुमानेन सामान्यतः शब्दाश्रयद्रव्यसिद्धावपि पृथिव्यादिविलक्षणनित्यविभुद्रव्यासिद्धिरित्याशङ्क्याह सामान्यत इति । द्रव्यत्वात्मकसामान्यरूपेणेत्यर्थः । पारिशेष्यादिभिरिति । पृथिव्याद्यनाश्रितत्वे सति द्रव्याश्रितत्वहेतुकानुमानादिभिरित्यर्थः । आदिना नित्यत्वविभुत्वसाधकस्य सर्वत्रसर्वदाकार्योपलम्भलिङ्गस्य सङ्ग्रहः । विभुत्वादीति आदिना पृथिव्यादिविलक्षणत्वनित्यत्वयोः सङ्ग्रहः । शङ्कते विकारित्वमिति । अविभुत्वेन व्याप्तमिति । विभुत्वाभावव्याप्यमित्यर्थः । घटादौ तथा दर्शनादिति भावः । तथाच विभुत्वेन कालस्य विकारित्वाभावः साधनीय इत्यत्र तात्पर्यम् । परिहरति नेति । ईश्वरतज्ज्ञानाभ्यामिति । विभ्वोस्तयोः विकारित्व-

---

1 अयमंशो न्यायकुसुमाञ्जलौ नित्यविभुविचारे (1) उदयनोपन्यस्तः ।

नाश्यामनैकान्त्यात्। तयोरपि पक्षीकरणे श्रुतिबाधादिप्रसङ्गात्॥ निर्विकार एवेश्वर इति न दोष इति चेन्न, संयोगसिसृक्षादिलक्षणविकारस्यावश्यम्भावितया अभ्युपगन्तव्यत्वात्। तत्र कृत्स्नैकदेशविकल्पाद्यनुपपत्तयस्तु विभुद्रव्य इव अविभुद्रव्येष्वपि तुल्यत्वात् शून्यवादं प्रसञ्जयेयुः। ताश्च सूत्रकारैरेव ईश्वरे प्रसज्य परिहृताः, "कृत्स्नप्रसक्तिः...श्रुतेस्तु शब्दमूलत्वात्" इत्यादिभिः। उक्तञ्च कलादीनां विकारस्वरूपत्वं वेदार्थसंग्रहे, "निमेषकाष्ठाकलामुहूर्तादिपरार्धपर्यन्तापरिमितव्यवच्छेदस्वरूप - सर्वोत्पत्तिस्थितिविनाशादिसर्वपरिणामनिमित्तभूतकालकृतपरिणामास्पृष्टानन्तमहाविभूतिः" इति। उक्तञ्च नीतिमालायां नारायणार्यैः, "कालोऽनाद्यनन्तः अजस्रक्षणपरिणामिमुहूर्ताहोरात्रादिविभागवान् परिणामपरिस्पन्दहेतुः" इति।

---

इत्युपलक्षणम्; तज्ज्ञानमित्यपि द्रष्टव्यम्। **कृत्स्नैकदेशेति**। विकारः किं कृत्स्नदेशवृत्तिः, उत एकदेशवृत्तिरिति विकल्पानुपपत्तेरित्यर्थः। **अविभुद्रव्येष्वपीति**। विभुद्रव्यव्यतिरिक्तजाति-संयोग-ज्ञान-शब्द-परमाण्वादिष्वित्यर्थः। **निमेषेति**। निमेष-काष्ठा-कला-मुहूर्ताद्याः परार्धपर्यन्ता अपरिमिता **व्यवच्छेदाः**= कालविभागाः **स्वरूपम्** असाधारणधर्मो यस्य कालस्य तथोक्तः, तादृश एव सन् महदादिसर्वोत्पत्तिविनाशादिसर्वपरिणामनिमित्तभूतो यः कालः, तत्कृतपरिणामास्पृष्टानन्तमहाविभूतियुक्तं ब्रह्मेत्यर्थः॥

---

सत्त्वादिति भावः। **तयोरपि पक्षीकार इति**। ईश्वरतद्ज्ञानयोरपि पक्षत्वाङ्गीकार इत्यर्थः। तथाच तत्र साध्याभावनिश्चयविरहात् न तत्र व्यभिचारावकाशः। साध्याभावनिश्चयवति हेतुसत्त्वस्यैव तथात्वादित्याशयः। **श्रुतिबाधादिप्रसङ्गादिति**। ईश्वरतद्ज्ञानयोर्जन्यधर्मरूपविकारसामान्याभावसाधने संयोगसिसृक्षादिग्राहकश्रुत्या बाधादिप्रसङ्ग इत्यर्थः। आदिना हेतुमति तत्र श्रुत्या साध्याभावनिश्चयात् व्यभिचारपरिग्रहः। नन्वीश्वरस्य निर्विकारत्वबोधकश्रुतिबलात् संयोगसिसृक्षादिबोधकश्रुतेरन्यान्यपरत्वमेवाश्रयणीयमिति न तत्र व्यभिचारावकाश इत्यभिप्रायेण शङ्कते **निर्विकार एवेति**। **ईश्वर** इत्युपलक्षणम्; तद्ज्ञानमित्यपि बोद्धव्यम्। **संयोगेत्यादि**। विभुत्वस्य सर्वमूर्तद्रव्यसंयोगित्वरूपतया, "सर्वगतम्" इत्यादौ श्रूयमाणतया च संयोगलक्षणविकारस्यावश्यम्भावितया, "सोऽकामयत", "तदैक्षत बहु स्यां प्रजायेयेति" इत्यादिषु सिसृक्षालक्षणविकारस्य श्रूयमाणतया तस्याप्यवश्यम्भावितया सिद्धान्ते स्वीकृतत्वादित्यर्थः। निर्विकारत्वश्रुतेरुत्सर्गापवादन्याय-सामान्यविशेषन्यायाभ्यां कर्मकृतविकाराभावपरतया सङ्कोचविकासाभावपरतया वोपपत्त्या न तद्बलेनानन्यथासिद्धसंयोग-सिसृक्षादिग्राहकश्रुतेरन्यपरत्वसंभव इति भावः। **कृत्स्नैकदेशविकल्पेति**। विकारः किं कृत्स्नदेशवृत्तिः उत एकदेशवृत्तिरिति विकल्पेत्यर्थः। **अविभुद्रव्येष्वपीति**। विभुद्रव्यव्यतिरिक्तजाति-संयोग-ज्ञान-शब्द-परमाण्वादिष्वित्यर्थः; कालस्य विकारत्वपक्ष एव सिद्धान्त इति दर्शयितुमाह **उक्तं चेति**। **कलादीनामिति**। **आदिना** निमेषकाष्ठामुहूर्तादिपरिग्रहः। "कला मुहूर्ताः काष्ठाश्च", "कलामुहूर्तादिमयश्च" इत्यादिश्रुतिस्मृतिकटाक्षेण **कलादीनामि**त्यनुगृहीतम्। **निमेषेत्यादि**। निमेषकाष्ठाकलामुहूर्तादयः परार्द्धपर्यन्ता अपरिमिता **व्यवच्छेदाः** विभाजकावस्थाः **स्वरूपम्**=असाधारणधर्मः, यस्य तथोक्तः। तादृश एव सन् महदादिसर्वोत्पत्तिस्थितिविनाशादिसर्वपरिणामनिमित्तभूतः यः कालः, तत्कृतपरिणामास्पृष्टानन्तमहाविभूतियुक्तं ब्रह्मेत्यर्थः॥

प्रत्यक्षप्रामाण्यम् । तथाहि—

वर्तमानतयाऽध्यक्षे वस्तु सर्वं प्रकाशते । न सा स्वरूपं धीभेदात् नोपाधिरनवस्थितेः ॥ १७

तत्र स्वपरनिर्वाहे पूर्वत्रैव तथा न किम्? ।

तथा चास्त्विति धीरान् प्रत्यनन्तस्त्वागमो बलम् ॥ १८ ॥

---

**वर्तमानतयेति**। प्रत्यक्षे सर्वमपि वस्तु वर्तमानतया प्रकाशत इत्यर्थः। **धीभेदादिति**। स्वरूपवर्तमानत्वयोर्विशेषणविशेष्यभावेन पृथग्भानादित्यर्थः। ननु वर्तमानकालोपाधिभूततपनपवनपरिस्पन्दादिलक्षणक्रियासम्बन्धादेव वर्तमानताप्रत्ययोऽस्तु इत्याशङ्क्य तस्यामपि क्रियायां वर्तमानताप्रतीतिनिर्वाहार्थमुपाध्यन्तरसम्बन्धस्य वक्तव्यतया तत्राप्युपाधौ तथेत्यनवस्थेत्याह **नोपाधिरिति**। ननु उपाधेः स्वपरनिर्वाहकत्वात् नानवस्थेत्याशङ्क्य, तथा सति घटादीनामेव स्वपरनिर्वाहकत्वोपपत्तौ न कालोपाधीनामपि वर्तमानप्रत्ययगोचरत्वं कल्पनीयमित्याह **तत्र स्वपरेति**। **पूर्वत्रैवेति**। घटादिस्वरूपस्यैव वर्तमानत्वप्रतीत्यालम्बनत्वोपपत्तौ उपाधेर्वर्तमानत्वप्रत्ययविषयत्वकल्पनस्यापि व्यर्थत्वादित्यर्थः। **तथा चास्त्विति**। कालपदार्थो न स्वीकर्तव्य इति वादिनः प्रतीत्यर्थः। ननु आगमेनैव तत्सिद्धौ त्वया किं साध्यते?

---

**वर्तमानतयेत्यादि**। प्रत्यक्षे सर्वमपि वस्तु वर्तमानतया भासत इत्यर्थः। ननु वर्तमानतायाः घटादिस्वरूपतया प्रत्यक्षे तद्भानमात्रान्न कालस्य प्रत्यक्षत्वसिद्धिरित्यत आह **न सेति**। **सा** वर्तमानता। घटादिविशेषणतया पृथग्भानादित्यर्थः। तथाच तत्तद्ज्ञानाधिकरणत्वोपलक्षितक्षणसंबन्ध एव वर्तमानत्वम्; क्षणश्च स्वजन्यविभागप्रागभावावच्छिन्नकर्मावच्छिन्नः अवस्थाविशेषावच्छिन्नो वा काल इति कालस्य प्रत्यक्षत्वसिद्धिरिति भावः। ननु स्वजन्यविभागप्रागभावावच्छिन्नकर्मरूपोपाध्यवच्छिन्नकालस्य क्षणत्वपक्षे तादृशोपाधेरेव क्षणरूपत्वसंभवात् न कालस्य प्रत्यक्षत्वसिद्धिरित्यत आह **नोपाधिरिति**। प्रागुक्तोपाधिसंबन्धो वर्तमानतारूप इत्यर्थः। **अनवस्थितेरिति**। तपनपरिस्पन्दादिरूपतादृशोपाधावपि वर्तमानत्वप्रतीतिसत्त्वात् तदनुरोधेन तत्रोपाध्यन्तरमन्वेषणीयम्, तत्रापि तथेत्यनवस्थाप्रसङ्गादित्यर्थः। ननु उपाधौ वर्तमानत्वप्रत्यये नोपाध्यन्तरसंबन्धो विषयः; किन्तु स्वसंबन्ध एव; तस्य स्वपरनिर्वाहकतया स्वस्मिन् स्ववृत्तित्वाभ्युपगमादित्यत आह **तत्र स्वपरनिर्वाह इति**। **पूर्वत्रैव तथा न किमिति**। घटादावेव स्वपरनिर्वाहकता कुतो नेत्यर्थः। तथाच घटादौ वर्तमानताप्रत्ययेऽपि स्वसंबन्ध एव विषय इति वक्तुं शक्यतया तत्रोपाधिसंबन्धस्य वर्तमानतारूपत्वाभ्युपगमो निरर्थक इति भावः। यद्यपि घटादेश्चिरकालस्थायिनो न क्षणरूपत्वसंभवः; तथापि स्वजन्यविभागप्रागभावावच्छिन्नकर्मावच्छिन्नघटादेः क्षणरूपत्वं संभवत्येवेति बोध्यम्। ननु तादृशकर्मसंबन्धस्यैव वर्तमानतारूपत्वे लाघवात् सर्वत्र तादृशकर्मरूपोपाधिसंबन्ध एव वर्तमानत्वमित्यभ्युपगमो युक्तः घटादिसंबन्धस्यैवोक्तरीत्या वर्तमानतारूपत्वेऽपि नास्माकं क्षतिः; अतिरिक्तकालपदार्थस्यैवास्माकमनिष्टत्वादित्यत आह **तथाचास्त्वित्यादि**। कालपदार्थो न स्वीकर्तव्य इति वादिनः प्रतीत्यर्थः। **आगमो बलम्**। श्रुतिस्मृत्यादिः कालसाधक इत्यर्थः।

तदिमदस्योपलम्भेन प्रत्यक्षत्वं प्रसाध्यते। लाघवात् तद्विषयता वर्तमानक्षणोऽथवा ॥ १९ ॥
न चैषा लैङ्गिकी बुद्धिर्लिङ्गादेरविमर्शनात्। विमर्शेऽप्यन्यथासिद्धेस्तत्रानुग्रहवर्जनात् ॥ २० ॥

इत्याशङ्क्याह तादृगिदन्त्वस्येति। ननु कथं उपलम्भेन कालस्य प्रत्यक्षत्वं साध्यते? वर्तमानतापतीतस्तद्वस्तु गतविनाशप्रागभावविषयतयाऽप्युपपत्तेरित्याशङ्क्याह लाघवादिति। विनाशप्रागभावस्य अनेकपदार्थ घटितस्वरूपत्वाद् गमसिद्धवर्तमानात्मककालपरिणामविषयत्वकल्पनस्य लघुत्वादेवेति भावः। कालस्य प्रत्यक्षत्वानुपगमे पामराणां कालव्यवहारो न स्यात्; तेषामागमानभिज्ञतया तन्मूलकत्वानुपपत्तेः। तद्व्याप्य-लिङ्गाभावेन अनुमानस्यापि दुर्वचत्वात् कालस्य प्रत्यक्षत्वमवश्याभ्युपगमनीयमित्याह नचैषेति। ननु परत्वापरत्वादिलिङ्गविमर्शानन्तरमेव सा प्रतीतिरित्याशङ्क्याह विमर्शेऽपीति। ननु अनियतदिगवस्थितयोः युवस्थविरपिण्डयोरयमस्मादल्पकालसम्बद्धः, अयमस्मात् प्रचुरकालसम्बद्ध इत्यपेक्षाबुद्धिसहकृतेन काल पिण्डसम्बन्धेन यूनि अपरत्वं स्थविरे च परत्वमुत्पद्यते। तत्र च भूयोल्पकालसम्बन्धो नाम भूयोल्प तपनस्पन्दक्रियासम्बन्ध एव; कालाल्पभूयस्त्वयोस्तदुपाधिकत्वमूयस्त्वरूपत्वात्। ततश्च तपनस्पन्दक्रिया। युवस्थविरपिण्डयोर्न साक्षात्सम्बन्धः सम्भवति; आश्रयीयक्रियया अन्यस्य साक्षात्सम्बन्धासम्भवात्। नापि संयुक्तसमवायः; विप्रकृष्टत्वेन पिण्डस्य संयोगस्याप्यभावात्। अतस्तत्संयुक्तद्रव्यसंयुक्तत्वमेव

---

तन्वागमनेः कालसिद्धौ किं मानः कृत्यमत्याह तादृगिदन्त्वस्येति। ननु उपलम्भेन कथं कालस्य प्रत्यक्षत्वसिद्धिः। वर्तमानताप्रत्यये तद्वस्तुगतविनाशप्रागभावस्यैव विषयत्वसंभवात्। यदि च — नित्यवस्तुषु तादृशवर्तमानत्वासंभवात् न तस्य तादृशप्रतीतिविषयत्वसंभवः; किञ्च सोऽयं घट इति प्रत्यभिज्ञया पूर्वानुभूतकालस्य अयमित्यनुभूयमानवर्तमानकालापेक्षया भेदप्रतीतेः तत्तत्क्षणसंबन्धरूप-वर्तमानत्वमेव तादृशप्रतीतिगोचर इत्याश्रयणीयम्, तथा च कालस्य प्रत्यक्षविषयत्वमावश्यकमित्युच्यते— तदा कालस्याप्यखण्डरूपस्य न तद्विषयत्वसंभव। यदि तु—स्वजन्यविभागप्रागभावावच्छिन्नकर्मावच्छिन्न-कालक्षणसंबन्धस्य तथात्वमुपपद्यत एव; तत्तत्कर्मरूपविशेषणभेदात् विशिष्टकालभेदोपपत्तेरिति विभाव्यते—तदा लाघवात् तादृशतत्तत्कर्मसंबन्ध एव वर्तमानत्वमित्यभ्युपगमो युक्त इति न कालस्य प्रत्यक्षत्वसिद्धिरित्यत आह लाघवादिति। अयं भावः— स्वजन्यविभागप्रागभावावच्छिन्नकर्मणो न क्षणरूपत्वसंभवः; विभुषु कदापि तत्संबन्धविरहात्, मूर्तेष्वपि कदाचिदेव तत्संबन्धसत्त्वात्। यदि च वस्त्वन्तरवृत्तिकर्मणा सह वस्त्वन्तरस्य कालिकसंबन्धाभिधानसंबन्धविशेषपरिकल्पनान्न दोष इत्युच्यते, तदा तादृशसंबन्धपरिकल्पनया भवन्मत एव गौरवम्। तदपेक्षया आगमबलात् सर्वाधारतया सिद्धस्य कालस्योक्तकर्मविशिष्टतया क्षणरूपत्वमङ्गीकृत्य तादृशप्रतीतिविषयत्वाश्रयणे लाघवात् युक्तम्, क्षणत्वस्य कालपरिणामविशेषत्वाभ्युपगमपक्षे तु सुतरां लाघवमिति। अनुमानेनागमेन वा पामराणां कालप्रतीत्यसंभवात् तद्व्यवहारमूलभूतकालज्ञानं प्रत्यक्षरूपमेवेत्यकामेनापि स्वीकार्यमित्याह न चैषेत्यादिना। लैङ्गिकी=अनुमितिरूपा। लिङ्गादेरिति। लिङ्गत्वादेरित्यर्थः। लिङ्गत्वम्=व्याप्तिः।

मिथःकरम्बितैरेव मूर्तैर्वा विश्ववर्तिभिः । तद्युक्तैर्गगनाद्यैर्वा पक्षद्वितयसम्मतैः ॥ २१ ॥

पिण्डाभ्यां संयुक्तत्वम् । तत्र च तपनपिण्डाभ्यां संयुक्तमेकं द्रव्यं सम्बन्धघटकतया अभ्युपेयम् । न च पृथिव्यादिकं तादृशम् ; तदुभयसंयुक्तत्वाभावात् । न च दिगेवोभयसंबन्धघटकेति वाच्यम् ; तस्यास्तपन(?)संयोगमात्रोपनायकत्वेनैव सिद्धत्वात् । नापि आकाशात्मानौ ; तयोः सम्बन्धघटकत्वेऽति-प्रसङ्गात् । अत एव लीलावत्यामुक्तम्, "यदि च गगनमात्मा वा अन्यतरेण अन्यमवच्छिन्द्यात् ; तदा कश्मीरेष्वपि कुङ्कुमरागेण कर्णाटकचक्रवर्तिकरकमलमप्यवच्छिन्द्यात्" इति । न च कालेऽप्येष दोष इति वाच्यम् ; तस्य तपनमात्रोपनायकत्वेनैव सिद्ध्या धर्मान्तरोपनायकत्वापत्तेः । न च आतप एव तपनपिण्डाभ्यां संयुक्त उभयसम्बन्धघटक इति वाच्यम् ; पर्वतगुहान्तर्वर्तिपदार्थे पातालान्तर्वर्तिनि वा तस्याप्यभावात् । अतस्तपनपरिस्पन्दघटकत्वेन तदुपनायकः पदार्थः कालोऽभ्युपेय इति हि वैशेषिका वदन्ति । अतः कथमन्यथा सिद्धिरित्याशङ्क्याह **मिथःकरम्बितैरेवेति** । तपनसंयुक्तातप-संयुक्तभूमिसंयुक्तपर्वतादिसंयुक्तत्वादिपरम्परया पातालगुहावर्तिष्वपि उपनायकत्वसम्भवादित्यर्थः । तपन-पिण्डाभ्यां संयुक्त एक एव पदार्थो वक्तव्य इति चेत् ; तर्हि आकाशादेरस्त्वित्याह **तद्युक्तैरिति** । **पक्षद्वितयसम्मतैरिति** । उभयवादिसम्मतैरित्यर्थः । **अन्यथा गौरवेति** । धर्मान्तरकल्पने गौरवादित्यर्थः । ननु आकाशस्योपनायकत्वे सर्वस्य सर्वधर्मोपनायकत्वप्रसङ्गेन जगतः सर्वस्य सर्वमिश्रत्वप्रसङ्ग इति दूषणस्य

---

आदिना पक्षधर्मतापरिग्रहः । तथाच कालप्रतीतिरनुमितिरूपा ; व्याप्त्यादिज्ञानाजन्यत्वात्, घटादिप्रत्यक्षवदित्युक्तं भवति । ननु कालप्रतीतेर्लिङ्गपरामर्शजन्यतयाऽनुमितिरूपत्वमेव । तथा हि; स्थविरे युवापेक्षयाऽधिकतरसूर्यपरिस्पन्दवत्ताज्ञानरूपापेक्षाबुद्ध्या परत्वं जायते । तत्र सूर्यपरिस्पन्दस्थविरयोश्च (स्पन्दस्य युवस्थविरयोश्च?) साक्षात्सम्बन्धासंभवात् स्वाश्रयसंयुक्तद्रव्यसंयोग एव वाच्य इति संबन्धघटकतया कालसिद्धिः तथाचोक्तापेक्षाबुद्धौ विशिष्टबुद्धित्वेन हेतुना किञ्चित्संसर्गविषयकत्वसिद्धौ उक्तसंबन्धातिरिक्त-संबन्धबाधात् तदविषयकत्वासिद्धौ च उक्तसंबन्धातिरिक्तसंबन्धाविषयकत्वे सति किञ्चित्संबन्धविषयकत्वेन हेतुना उक्तसंबन्धविषयकत्वसिद्धिरिति कालप्रतीतेरानुमानिकत्वमेवेत्यत आह **विमर्शेऽपीति** । उक्तसंबन्धा-तिरिक्तसंबन्धाविषयकत्वसहितकिञ्चित्संबन्धविषयकत्वरूपलिङ्गपरामर्शे सत्यपीत्यर्थः । **अन्यथासिद्धेरिति** । अन्यविषयकत्वेनोपपत्तेरित्यर्थः । **अनुमितेरित्यादिः** । उक्तलिङ्गपरामर्शेन स्वाश्रयसंयुक्तद्रव्यसंयोग-विषयकत्वसिद्धावपि स्वाश्रयसंयुक्तद्रव्यमाकाशादिरूपमेव भवितुमर्हति ; क्लृप्तत्वात् । न तदतिरिक्तम् ; गौरवादिति भावः । **तर्कानुग्रहवर्जनादिति** । स्वाश्रयसंयुक्तद्रव्यसंयोगरूपसंबन्धघटकद्रव्यस्याकाशाद्यन्यत्व-सिद्ध्यनुकूलतर्कविरहादित्यर्थः । तस्याकाशादिरूपत्वे बाधकतर्को हि सः । स च न दृश्यत इति भावः । अन्यथासिद्धिमुपपादयति **मिथ इत्यादिना** । मिथःकरम्बितैः=परस्परसंयुक्तैः । **विश्ववर्तिभिरिति** । तथाच मूर्तद्रव्यमादायैव सर्वत्र स्वाश्रयसंयुक्तद्रव्यसंयोगोपपादनं सुशकमिति भावः । **तद्युक्तैरिति** । स्वाश्रयसंयुक्तैरित्यर्थः । **पक्षद्वितयसंमतैरिति** । अनेनातिरिक्तद्रव्यकल्पननिबन्धनलाघवं सूचितम् ।

---

(१) तपनसंयोगेत्यशुद्धम् ; दैशिकपरत्वादिनियामकतानियतानेकमूर्तसंयोगेति युक्तम् ।

रविस्पन्दादिभूयस्त्वफल्गुत्वाद्युपनायकैः । परापरत्वादिसिद्धेरन्यथा गौरवोदयात् ॥ २२ ॥
तावन्मात्रोपनेतृत्वे सिद्धस्यार्थस्य कल्पिते । जगतो मिश्ररूपत्वं न भवेदधिके यथा ॥ २३ ॥
कालसम्बन्धरूपोऽयं परत्वादिरिति स्थिते । लिङ्गसिद्ध्यैव कालस्य प्रत्यक्षत्वमुपागतम् ॥ २४

---

परिहारमाह **तावन्मात्रेति** । **सिद्धस्यार्थस्येति** । उभयवादिसिद्धस्याऽऽकाशादेरित्यर्थः । **अधिके यथेति**। यथा अतिरिक्तकालस्य तपनपरिस्पन्दमात्रोपनायकत्वस्वभावत्वम्, तथैव आकाशादेरपि तावन्मात्रोपनायकत्वमेवेति नातिप्रसङ्ग इति भावः । **कालसंबन्धेति** । किञ्च परत्वाद्यनुमेयत्वं कालस्येत्ययुक्तम् ;

---

**फल्गुत्वम्**=अल्पत्वम् । **उपनायकैः** संबन्धसंपादकैः । **अन्यथेति** । अतिरिक्तद्रव्याभ्युपगम इत्यर्थः । नन्वाकाशस्य संबन्धसंपादकत्वस्वीकारे सर्वत्र सर्वसंबन्धापत्त्या । घटादौ पटत्वादिविशिष्टबुद्धिप्रसंगः । अतिरिक्तकालस्वीकारे तु तस्य धर्मिग्राहकप्रमाणेन सूर्यपरिस्पन्दमात्रसंबन्धसंपादकत्वसिद्ध्या नान्यधर्मसंबन्धसंपादकत्वमिति नोक्तापत्तिरित्यत आह **तावन्मात्रेति** । सूर्यपरिस्पन्दादिमात्रेत्यर्थः । **उपनेतृत्वे** संबन्धसंपादकत्वे । **सिद्धस्यार्थस्य कल्पित** इति । अनेन तावन्मात्रोपनेतृत्वविशिष्टधर्म्यन्तरकल्पनापेक्षया क्लृप्तस्य धर्मिणस्तावन्मात्रोपनेतृत्वरूपधर्मकल्पनमेव युक्तम् । धर्मिकल्पनातो वरं धर्मकल्पनमिति न्यायादिति सूचितम् । **जगतो मिश्ररूपत्वम्** घटादेः पटत्वादिवैशिष्ट्यम् । **अधिके यथेति** । अतिरिक्तकालाभ्युपगम इवेत्यर्थः । अयं भावः—अतिरिक्तकालाभ्युपगमेऽपि स्वाश्रयसंयुक्तकालसंयोगस्य सूर्यपरिस्पन्दादिकं प्रत्येव संबन्धत्वमङ्गीक्रियते; न तु घटत्वादिकं प्रतीति यथा विधीयते, तथा अतिरिक्तकालानुपगमेऽपि स्वाश्रयसंयुक्तगगनादिसंयोगस्य सूर्यपरिस्पन्दादिकं प्रत्येव संबन्धत्वम् ; न तु घटत्वादिकं प्रतीति वक्तुं शक्यत्वात् न जगतो मिश्ररूपत्वप्रसङ्ग इति । न च क्लृप्ते धर्मिणि उक्तसूर्यपरिस्पन्दादिविशिष्टबुद्धिनिरूपितसांसर्गिकविषयतास्वीकारे क्लृप्तत्वाविशेषात् विनिगमनाविरहेण अनन्तविभुपदार्थेषु ईश्वर-तद्ज्ञानादिरूपेषु तत्स्वीकारापत्त्या महागौरवमिति तादृशसांसर्गिकविषयताश्रयातिरिक्तद्रव्यकल्पनमेव लघ्विति वाच्यम्; तादृशविशिष्टबुद्धेः प्रागुपस्थितस्य कस्यचिदेव तत्र संसर्गतया भानोपपत्तेः । उपस्थितेरेव विनिगमकत्वसंभवात् । यद्यपि विशिष्टबुद्धौ संसर्गोपस्थितिरनपेक्षिता, तथाप्यतिरिक्तधर्मिकल्पनापेक्षया तादृशविशिष्टबुद्धिविशेषे संसर्गघटकपदार्थविशेषोपस्थितेर्हेतुत्वकल्पनमेव युक्तम् । लाघवात् । अन्यत्राक्लृप्तत्वेऽपि उक्तविशिष्टबुद्धौ अन्यत्रादृष्टस्य उक्तपरम्परायाः संबन्धत्वस्य स्वीकारवत् संसर्गघटकपदार्थविशेषोपस्थितेर्हेतुत्वस्यापि स्वीकारसंभवात् । संसर्गघटकपदार्थोपस्थितिविलम्बादुक्तविशिष्टबुद्धिविलम्बो न दृष्ट इत्येतत्तु शपथनिर्णेयम् । वस्तुतस्तु स्वाश्रयसंयुक्तद्रव्यजन्यत्वं स्वाश्रयसंयुक्तद्रव्यापृथक्सिद्धत्वमेव वोक्तविशिष्टबुद्धौ संसर्गतया भासत इति स्वीक्रियते । ततश्च ईश्वरज्ञानस्यैव संबन्धघटकत्वम् ; न द्रव्यान्तरस्येति न सङ्कटं किञ्चित् । किञ्च परत्वादेः प्रत्यक्षत्वं भवद्भिः स्वीक्रियते कालसंबन्धातिरिक्तपरत्वादौ प्रमाणाभावात् कालसंबन्ध एव परत्वादिरिति स्थिते कालस्य प्रत्यक्षत्वं दुर्निवारमित्याह **कालसंबन्धरूप** इति । अधिकतरसूर्यपरिस्पन्दाश्रयसंयुक्तकालसंयोगरूप इत्यर्थः ; अधिकतरसूर्यपरिस्पन्दविशिष्टकालसंयोगरूप इति वा । **लिङ्गसिद्ध्यैवेति** ।

अतोऽनुमानमात्रेण कालोऽन्यो नैव सिध्यति। केवलागमसिद्धे च न लोकव्यवहार्यता ॥ २५

तदेवं केवलैस्तर्कैः कालस्य दुरुपपादतामालम्ब्य हि न्यायतत्त्वे संयोगाधिकरणे, "संयोगविभागसङ्ख्या कालः" इत्यादि चोक्तम्। प्रमातृपादे च प्रसङ्गात् कालमपलप्य, "तस्मादेकाश्रयक्रियासङ्ख्या कालः" इति सूक्त(स्वोक्त ?)मुपसंहृतम्। प्रपञ्चितश्चास्य प्रत्यक्षत्वं तत्रैव। यथा, "सर्वे प्रत्ययाः कालोपश्लिष्टा एव हि दृश्यन्ते। तदिति देशकालविशिष्टतयैव स्मृतिरपि जायमाना प्रागपि कालानुभवं साधयति" इति। जैननिराकरणे भाष्यञ्च, "कालस्य पदार्थविशेषणतयैव प्रतीतेस्तस्य पृथगस्तित्वनास्तित्ववादयो न वक्तव्याः, न च परिहर्तव्याः। कालोऽस्ति नास्तीति व्यवहारो व्यवहर्तॄणां जात्याद्यस्तित्वनास्तित्वव्यवहारतुल्यः" इति। अत एव च कालस्य पृथग्गणनाभावः ॥

तदेवमव्यक्तोपक्रममहदहङ्कारेन्द्रियतन्मात्रभूतसृष्टिप्रकरणेषु जीवपरौ पञ्चविंशकषड्विंशकौ। × अक्षरतमसोरन्यतरोपक्रमे कालस्य पृथग्गणने च षड्विंशकसप्तविंशकाष्टाविंशकत्वादिकं यथा-

---

भूगोलपकालसम्बन्धव्यतिरिक्तपरत्वापरत्वाभावात्। ततश्च परत्वापरत्वयोः प्रत्यक्षत्वं वदता कालस्यापि प्रत्यक्षत्वमभ्युपेतमेवेति सिद्धं कालस्य प्रत्यक्षत्वमिति भावः। **न लोकव्यवहार्यतेति**। पामरव्यवहारानुपपत्त्या कालस्य प्रत्यक्षत्वमेष्टव्यमिति भावः। ननु **न्यायतत्त्वे**, "पक्ष्मसंयोगविभागादिलक्षणनिमेषादिक्रियागतसङ्ख्यैव कालः" इत्यसकृदभिधानाद्विरोध इत्याशङ्क्याह **तदेवं केवलैस्तर्कैरिति**। **एकाश्रयेति**। तपनादिनिष्ठक्रियागतसङ्ख्या काल इत्यर्थः। ततश्च तर्कात् सिद्धौ क्रियासङ्ख्ययैव अन्यथासिद्धिः स्यादिति भावः। **जैननिराकरण इति**। जीवधर्माधर्मपुद्गलकालाकाशाख्यानि षड् द्रव्याणि अस्तित्वनास्तित्वादिसप्तभङ्गीभाञ्जि भवन्तीत्यर्थस्य प्रत्याख्यानप्रकरणे कालस्य द्रव्यविशेषणतया अस्तित्वेनैव प्रतिपन्नतया नास्तित्वशङ्कानवकाशेन पृथगस्तित्वनास्तित्वाभावात् न सप्तभङ्गीप्रसक्तिरित्युक्तमिति भावः। **अत एव कालस्येति**। प्रकृतिपुरुषेश्वरादीत्यादिषु (रत्वेरेत्यादिषु?) पृथग्गणनाभाव इति भावः ॥ ननु सृष्टेस्तमोक्षरान्यतरोपक्रमत्वेन जीवेश्वरयोः षड्विंशत्वसप्तविंशत्वकथनस्यैवोचिततया कथं तयोः पञ्चविंशत्वषड्विंशत्वोक्तिरित्याशङ्क्याह **तदेवमव्यक्तोपक्रमेति**।

---

**परत्वादिप्रत्यक्षत्वाभ्युपगमेनैवेत्यर्थः**। परत्वादिकं सासमवायिकारणकं भावकार्यत्वात्, घटवदित्यनुमानेन **असमवायिकारणसंयोगाश्रयतया** कालसिद्धिरिति परैः स्वीकारात् अनुमितिजनकज्ञानविषयत्वात् **परत्वादिकं लिङ्गमित्युच्यते**। **न लोकव्यवहार्यतेति**; तथा च पामरव्यवहारान्यथानुपपत्त्या **कालस्य प्रत्यक्षत्वमवश्यं स्वीकरणीयमित्युक्तं भवति**। ननु **न्यायतत्त्वे** पक्ष्मसंयोगविभागादिलक्षणनिमेषादिक्रियासंख्यैव **काल इत्यभिधानात् तद्विरोध इत्याशङ्क्याह तदेवमिति**। **एकाश्रयेति**। एकद्रव्याश्रितेत्यर्थः। क्रियासंख्यामात्रस्य तथात्वे भिन्नाश्रयक्रियासंख्यामादाय क्षणादेर्दिनादिरूपतापत्तिः स्यादिति भावः। **तथा च केवलतर्कावलंबिनामेकाश्रयक्रियासंख्ययैवान्यथासिद्ध्या न कालः** सिद्ध्येदित्यभिप्रेत्य तथाभिधान-**मिति न तद्विरोध इति** भावः। **पदार्थविशेषणतयैव प्रतीतेरिति**; अनेन इतरपदार्थप्रत्यक्षे कालस्यापि **विषयत्वमुक्तं भवतीति** भावः। **पृथग्गणनाभाव** इति। प्रकृतिपुरुषेश्वरेत्यादिष्विति आदिः ॥

**ननु कालस्य** पृथग्गणनाभावेऽपि सृष्टेस्तमोक्षरान्यतरोपक्रमत्वेन जीवेश्वरयोः षड्विंशत्वसप्तविंशत्व-

---

× अक्षरतमसोः पृथग्गणने, अन्यतरोपक्रमे कालस्य पृथग्गणने चेत्यभिप्रायः।

सम्भवं भाव्यम्। श्रुतिश्च, "तं षड्विंशकमित्याहुः सप्तविंशमथापरे" इति। सत्त्वरजस्तमसां पृथग्गणनया अधिकसङ्ख्यां निर्वहन्तस्त्वेषां द्रव्यत्वदूषणेन वक्ष्यमाणेन निरस्ताः। पञ्चविंशातिरिक्तनिषेधपराणां निर्वाहस्तु भगवता व्यासेन मोक्षधर्मेऽभिहितः,

"अन्यश्च राजन् स परस्तथाऽन्यः पञ्चविंशकः। तत्स्थत्वादनुपश्यन्ति ह्येक एवेति साधवः" इति।

सूत्रितञ्च, "अवस्थितेरिति काशकृत्स्नः" इति। प्रपञ्चितश्चायमर्थो भाष्यादिषु सामानाधिकरण्यनिर्वाहे॥ नन्वेवमपि तत्तद्भूतेषु सवितृकान्तहिमकरकवैद्युतवैश्वानराद्युत्तरोत्तरावस्थादर्शनात् तत्त्वसङ्ख्यानियमोऽनुपपन्नः॥ मैवम्; समष्ट्यवस्थापेक्षया तन्नियमात्। पञ्चीकरणपश्चाद्भाविव्यष्ट्यवस्थाविशेषाणां तु आनन्त्यादपरिसङ्ख्यानम्॥ एतेषु च तत्त्वेषु भागत एवोत्तरोत्तरसृष्टिः। पूर्वपूर्वैरुत्तरोत्तरावरणस्य तत्तदाकारेण च कार्यवृत्तेः श्रुतत्वात्। अन्यथा पृथिव्येकशेषप्रसङ्गात्।

---

**पञ्चविंशातिरिक्तेति।** "आत्मा वा अरे द्रष्टव्यः", "तत्त्वमसि", "अयमात्मा ब्रह्म" इत्यादिनिषेधादित्यर्थः। **तत्स्थत्वादिति।** अन्तर्यामिरूपेण जीवस्थत्वादित्यर्थः। **अवस्थितेरिति काशकृत्स्न इति।** स्वशरीरभूते जीवात्मनि आत्मतया **अवस्थितेः** शरीरवाचिशब्दानाञ्च शरीरिपर्यन्तत्वात् जीववाचिना शब्देन परमात्मनोऽभिधानमुपपद्यते इति **काशकृत्स्न** आचार्यो मन्यते इत्यर्थः। **सवितृकान्तेति।** सवितृकान्तादिः पार्थिवविकारः, हिमकरकादिर्जलविकारः, वैद्युतवैश्वानरादिस्तेजोविकार इति विभागो द्रष्टव्यः। **तन्नियमादिति।** तत्त्वसङ्ख्यानियमादित्यर्थः।

**भागत इति।** एकदेशत इत्यर्थः। **उत्तरोत्तरावरणस्येति।** "प्रधानतत्त्वमुद्भूतं महान्तं तत् समावृणोत्। यथा प्रधानेन महान् महता स तथावृतः॥ आकाशं शब्दमात्रं तु स्पर्शमात्रं समाविशत्॥" इत्यादिप्रमाणेषु आवरणस्य प्रवेशस्य च श्रुतत्वादित्यर्थः। **तत्तदाकारेण चेति।** प्रकृतित्वमहत्त्वाद्यवस्थापरित्यागमन्तरेणैव भूतादिलक्षणकार्येषु वृत्तेः श्रुतत्वादित्यर्थः। **अन्यथेति।** कृत्स्नायाः प्रकृतेर्महदाकारेण परिणामः,

---

कथनस्यैवोचितत्वात्। कथं तयोः पञ्चविंशत्वषड्विंशत्वोक्तिरित्यत आह **तदेवमिति।** ननु, 'तत्त्वमसि", "अयमात्मा ब्रह्म" इत्यादिभिर्जीवपरयोरैक्यप्रतीत्या जीवातिरिक्तेश्वरविरहात् कथं तयोर्भेदमवलम्ब्य पञ्चविंशषड्विंशत्वाभिधानमित्याशङ्क्याह **पञ्चविंशातिरिक्तेति। निषेधपराणाम्**=ऐक्योक्त्या आर्थिकनिषेधबोधकानाम्। **तत्स्थत्वादिति।** जीवस्य परमात्मापृथक्सिद्धविशेषणत्वादित्यर्थः। अपृथक्सिद्धविशेषणवाचिशब्दानां तद्विशिष्टबोधकत्वस्य व्युत्पन्नत्वादिति भावः। **अवस्थितेरित्यादि।** स्वशरीरभूते जीवात्मनि आत्मतयाऽवस्थितेः शरीरवाचिशब्दानाञ्च शरीरिपर्यन्तत्वात् जीववाचिना शब्देन परमात्मनोऽभिधानमुपपद्यत इति **काशकृत्स्न** आचार्यो मन्यत इत्यर्थः। **सवितृकान्तेत्यादि।** अत्र सवितृकान्तादिः पार्थिवविकारः, हिमकरकादिर्जलविकारः, वैद्युतवैश्वानरादिस्तेजोविकारः इति विभागो द्रष्टव्यः। **समष्टीति।** पञ्चीकरणप्राग्भावीत्यर्थः। **पञ्चीकरणपश्चाद्भावीति।** इदं **व्यष्टी**त्यस्य विवरणम्।

**भागत इति।** एकदेशत इत्यर्थः। **उत्तरोत्तरावरणस्येति।** "प्रधानतत्त्वमुद्भूतं महान्तं तत् समावृणोत्। यथा प्रधानेन महान् महता स तथावृतः॥ आकाशं शब्दमात्रं तु स्पर्शमात्रं समाविशत्" इत्यादिप्रमाणेषु आवरणस्य प्रवेशस्य च श्रुतत्वादित्यर्थः। **तत्तदाकारेणेति।** प्रकृतित्वमहत्त्वाद्यवस्थापरित्यागमन्तरेणैव भूतादिलक्षणकार्येषु वृत्तेः श्रुतत्वादित्यर्थः। **अन्यथेति।** प्रकृत्यादीनां कार्त्स्न्येन महदादिरूपेण

पूर्वपूर्वभूतानामुपलम्भादिसिद्धत्वाच्च । तन्मात्राणां तु आवारकत्वाद्यनाश्रयणात् निश्शेषपरिणाम इत्येके । शरीरादेश्चतुर्विंशतितत्त्वमयत्ववचनात् तेषामप्येकदेशतः परिणाम इत्यपरे । पूर्वस्मिन् पक्षे तन्मात्रकार्यभूतगुणपञ्चकेन सह शरीरादेश्चतुर्विंशतितत्त्वमयत्वोक्तिरिति वा सर्वाचित्तत्त्वमयत्वमात्रप्रतिपादनपरतया वा निर्वाहः । अपरस्मिन् पक्षे क्वचित् केषाञ्चित् सृष्ट्यनुक्तिवदविवक्षया आवरणाद्यनुक्तिरिति गतिः ॥

**एतानि तत्त्वानि प्रथममीश्वरः स्वसङ्कल्पादेव तत्तदव्यवहितपूर्वपूर्वतत्त्वशरीरकः सृष्ट्वा व्यष्टिनामरूपव्याकरणं सङ्कल्प्य तेषां तत्त्वानां पृथग्भूतानां व्यष्टिसृष्ट्यशक्तेः परस्परसंमिश्रणञ्च संकल्प्य, 'व्योम्नोऽ-**

कुरस्य महतोऽहङ्काररूपेण परिणाम इत्यभ्युपगमे इत्यर्थः । इष्टापत्तिमाशङ्क्याह **पूर्वपूर्वभूतानामिति** । जलतेजःप्रभृतीनामद्यापि उपलभ्यमानत्वादिति भावः । **निःशेषपरिणाम इति** । तन्मात्राणां पञ्चानां परिशेषाभावः, इतरेषां तु अंशतः परिणाम इत्यर्थः । **चतुर्विंशतितत्त्वमयत्ववचनादिति** । पञ्चानामपि तन्मात्राणां निःशेषपरिणामे एकोनविंशतितत्त्वमयत्वमेव स्यादिति भावः । **पूर्वस्मिन् पक्ष इति** । तन्मात्राणां निःशेषपरिणामपक्ष इत्यर्थः । गुणानां तत्त्वकोटिगणनाभावेन तावन्मात्रेण चतुर्विंशतितत्त्वमयत्वकथनासम्भव इत्यस्वरसादाह **सर्वाचित्तत्त्वेति**, "अष्टौ प्रकृतयः षोडश विकाराः शरीरे तस्य देहिनः" इत्यस्य न सङ्ख्यायां तात्पर्यम्, किंतु सम्भाविताशेषाचित्तत्त्वमयत्वे तात्पर्यमिति भावः । **क्वचिदिति** । छान्दोग्यादावाकाशमहदादिसृष्ट्यनुक्तिवत्, तैत्तिरीये महदादिसृष्ट्यनुक्तिवच्चेत्यर्थः । **अविवक्षयेति** । न तु तदभावविवक्षयेति भावः ।

"तदैक्षत बहु स्यां प्रजायेयेति । तत्तेजोऽसृजत । तत्तेज ऐक्षत । बहु स्यां प्रजायेयेति । तदपोऽसृजत । ता आप ऐक्षन्त । बह्व्यः स्याम प्रजायेमहीति । ता अन्नमसृजन्त", "तदभिध्यानादेव तु तल्लिङ्गात् सः" इत्यादिश्रुतिसूत्राण्यभिप्रयन् आह **एतानि तत्त्वानीत्यादि** । "हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मना अनुप्रविश्य नामरूपे व्याकरवाणि" इति श्रुतिमभिप्रयन् आह **व्यष्टिनाम-**

परिणाम इत्यर्थः । इष्टापत्तिं परिहरति **पूर्वेति** । जलतेजःप्रभृतीनामपि प्रत्यक्षसिद्धत्वादित्यर्थः । **निश्शेषपरिणाम इति** । कार्त्स्न्येनैव तत्तन्मात्रत्वावस्थानाशपूर्वकं तत्तद्भूतत्वावस्थाप्राप्तिरित्यर्थः । **चतुर्विंशतितत्त्वमयत्ववचनादिति** । तन्मात्राणां निश्शेषपरिणामे एकोनविंशतितत्त्वमयत्वमेव स्यादिति भावः । गुणानां तत्त्वकोटिगणनाभावेन चतुर्विंशतितत्त्वमयत्ववचनासाङ्गत्यमालोच्याऽऽह **सर्वाचिदिति** । "अष्टौ प्रकृतयष्षोडशविकाराश्शरीरे तस्य देहिनः" इत्यस्य न संख्यायां तात्पर्यम्; किन्तु संभाविताशेषाचित्तत्त्वमयत्व एवेति भावः । **क्वचिदिति** । छान्दोग्यादावाकाशमहदादिसृष्ट्यनुक्तिवत् तैत्तिरीये महदादिसृष्ट्यनुक्तिवच्चेत्यर्थः । **अविवक्षयेति** । न तु तदभावविवक्षयेति भावः ॥

**एतानि तत्त्वानीत्यादि** । अत्र, "तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत । तत्तेज ऐक्षत बहु स्यां प्रजायेयेति; तदपोऽसृजत । ता आप ऐक्षन्त बह्व्यस्स्याम प्रजायेमहीति; ता अन्नमसृजन्त", "तदभिध्यानादेव तु तल्लिङ्गात् सः" इत्यादिश्रुतिसूत्राण्यभिप्रेत्य"ानि । "हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति श्रुतिमभिप्रेत्याह **व्यष्टीति**। "तासां त्रिवृतं त्रिवृतमेकैकां

र्धभागश्चत्वारो वायुतेजःपयोभुवाम्" इत्यादिक्रमेण एकैकभूतेषु भूतान्तराणामष्टमांशचतुष्कैः पञ्चीकरणं कृत्वा तेषु स्वानुप्रविष्टजीववर्गमनुप्रवेश्य तैरेव तत्त्वैर्दशगुणितोत्तरसप्तावरणवेष्टितं हेमाख्यपरिणामगतभूतमयं ब्रह्माण्डमारभ्य तदन्तरे च स्वनाभिपङ्कजप्रभृति[षु]सप्त[सु]स्थानेषु अन्यतमेन सकलतदण्डान्तर्वर्तिचेतनभरितविग्रहं चतुर्मुखं प्रसादात् सृजति; क्रोधाच्च रुद्रम्। अत्र श्रुतिः,

---

रूपव्याकरणं सङ्कल्प्येति। 'तासां त्रिवृतं त्रिवृतमेकैकां करवाणि" इति श्रुतिं, "नानावीर्याः" इत्यादिवक्ष्यमाणञ्च हृदि निधायाह तेषां तत्त्वानामिति। व्योम्न इति वायुतेजःपयोभूमीनां चत्वारोऽशा मिलित्वा व्योम्नोऽर्धभाग इत्यर्थः। ततश्च व्योम्नि व्योमभागोऽर्धमितरे चत्वारोंऽशा मिलित्वा इतरदर्धम्। "एवञ्जातेषु भूतानि प्रत्येकं स्युर्द्विधा ततः। चतुर्धा भिन्नमेकैकमर्धमर्धं तथा स्थितम्॥" इति हि पूर्वश्लोकः। एवं पृथिव्यामपि पृथिवीभागोऽर्धमितरभागचतुष्टयमपि मिलित्वार्धम्। ततश्च सर्वेष्वपि भूतेषु भूतान्तरस्याष्टमांशोऽस्ति। ततश्च भूतान्तराष्टमांशचतुष्केण मिलित्वेतरदर्धं पञ्चीकृतमभवदित्यर्थः। "वारिवह्न्यनिलाकाशैस्ततो भूतादिना बहिः। वृतं दशगुणैरण्डं भूतादिर्महता ततः॥ अव्यक्तेनाऽऽवृतो ब्रह्मन् तैः सर्वैः सहितो महान्। एभिरावरणैरण्डं सप्तभिः प्राकृतैर्वृतम्॥" इत्यादिप्रमाणमभिप्रयन् आह दशगुणितोत्तरेति। हेमाख्यपरिणामगतभूतमयमिति। हेमाकारपरिणामभूतमयमित्यर्थः। सप्तस्थानेष्विति। "अहं प्रसादजस्तुभ्यं लोकधाम्ने स्वयम्भुवे। त्वत्तो मे मानसं जन्म प्रथमं द्विजपूजितम्॥ चाक्षुषं वै द्वितीयं मे आसीत् जन्म पुरातनम्। त्वत्प्रसादाच्च मे जन्म तृतीयं वाचिकं महत्॥ त्वत्तो मे श्रावणञ्चापि चतुर्थं जन्म मे विभो। नासिक्यं चैव मे जन्म त्वत्तः पञ्चममुच्यते॥ अण्डजञ्चापि मे जन्म त्वत्तः षष्ठं विनिर्मितम्। इदञ्च सप्तमं जन्म पद्मजं मेऽमितप्रभ॥" इति हयशिरउपाख्यानोक्तस्थानेषु अन्यतमेनेत्यर्थः। चेतनभरितविग्रहमिति। बद्धात्मसमष्टिभूतमित्यर्थः। समष्टित्वं कर्मवश्यजीवानां

---

करवाणि" इति श्रुतं, "नानावीर्याः" इति वक्ष्यमाणञ्चाभिप्रेत्याह तेषां तत्त्वानामिति। व्योम्न इति वायुतेजःपयोभुवां चत्वारोंशाः व्योम्नोऽर्धभाग इत्यर्थः। एवं च व्योम्नि व्योमभागोऽर्धम् इतरे चत्वारोंशा मिळित्वा इतरदर्धम्, "एवं जातेषु भूतानि प्रत्येकं स्युर्द्विधा तत। चतुर्धा भिन्नमेकैकमर्धमर्धं तथा स्थितम्" इति हि पूर्वश्लोकः। एवं पृथिव्यामपि पृथिवीभागोऽर्धं इतरभागचतुष्टयमपि मिळित्वार्धम्। ततश्च सर्वेष्वपि भूतेषु भूतान्तरस्याष्टमांशोऽस्ति। तथाच भूतान्तराणामष्टमांशचतुष्टयेन एकभूतार्धस्य मिश्रणमेव पञ्चीकरणमित्युक्तं भवति। "वारिवह्न्यनिलाकाशैस्ततो भूतादिना बहिः। वृतं दशगुणैरण्डं भूतादिर्महता तथा॥ अव्यक्तेनावृतो ब्रह्मन् तैस्सर्वैस्सहितो महन्। एभिरावरणैरण्डं सप्तभिः प्राकृतैर्वृतम्" इत्यादिप्रमाणमभिप्रेत्याह दशगुणितोत्तरेति। हेमाख्यपरिणामगतेति। हेमाख्यपरिणामं प्राप्तैरित्यर्थः। हेमाकारपरिणामभूतमयमित्युक्तं भवति। सप्तसु स्थानेष्विति। "अहं प्रसादजस्तुभ्यं लोकधाम्ने स्वयंभुवे। त्वत्तो मे मानसं जन्म प्रथमं द्विजपूजितम्॥ चाक्षुषं वै द्वितीयं मे आसीज्जन्म पुरातनम्। त्वत्प्रसादाच्च मे जन्म तृतीयं वाचिकं महत्॥ त्वत्तो मे श्रावणञ्चापि चतुर्थं जन्म मे विभो। नासिक्यं चैव मे जन्म त्वत्तः पञ्चममुच्यते॥ अण्डजं चापि मे जन्म त्वत्तष्षष्ठं विनिर्मितम्। इदं च सप्तमं जन्म पद्मजं मेऽमितप्रभ" इति हयशिरउपाख्यानोक्तस्थानेष्वित्यर्थः। चेतनभरित-

"एको ह वै नारायण आसीत् न ब्रह्मा नेशानः" इत्यारभ्य, "तत्र ब्रह्मा चतुर्मुखोऽजायत । त्र्यक्षः शूलपाणिः पुरुषोऽजायत"इत्यादिका। "नारायणाद् ब्रह्मा जायते। नारायणाद् रुद्रो जायते" इत्यादयश्च। उक्तञ्च महाभारते, "ब्रह्माणं शितिकण्ठञ्च याश्चान्या देवताः स्मृताः। प्रतिबुद्धा न सेवन्ते यस्मात् परिमितं फलम् ॥", "एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ। तदादर्शितपन्थानौ सृष्टिसंहारकारकौ ॥" इति ॥ स च भगवान् अनन्तरं स्वविहितब्रह्मान्तर्यामिरूपेणावस्थितः स्वप्रहितवेदोपज्ञविज्ञानेन स्वार्पिताभ्यां विचित्रसृष्टिविषयबुद्धिशक्तिभ्यामुपबृंहितेन स्वनिर्धूतमधुकैटभादिविविधापदा ब्रह्मणा ब्रह्माण्डान्तश्चतुर्दशभुवनसंस्थानतदधिकरणकदेवतिर्यङ्मनुष्यस्थावरादि-दिग्वि-

---

तच्छरीरानुप्रविष्टत्वम् । ब्रह्मरुद्रयोः सृज्यत्वे श्रुतिमाह **एको ह वै नारायण** इत्यादि । ब्रह्मरुद्रयोः प्रसादकोपजत्वे प्रमाणभूतमुपबृंहणवचनं तदनुपास्यत्वप्रतिपादकपूर्ववचनेन सहोपन्यस्यति **ब्रह्माणं शितिकण्ठश्चे**त्यादि । **स्वविहितब्रह्मान्तर्यामिरूपेणे**ति । स्वसृष्टस्य ब्रह्मणोऽन्तर्यामिरूपेणेत्यर्थः । "यो वै वेदांश्च प्रहिणोति तस्मै", "नाम रूपञ्च भूतानां कृत्यानाञ्च प्रपञ्चनम् । वेदशब्देभ्य एवासौ देवादीनां चकार सः ॥" "शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम्" इत्यादिश्रुतिस्मृतिसूत्राण्यभिप्रयन् आह **स्वप्रहिते**ति । वेदाधीनाद्यविज्ञानेनेत्यर्थः । **स्वनिर्धूते**ति । "ततो विप्रहिणस्तांस्तु दृष्ट्वा तावसुरोत्तमौ । वेदाञ्जगृहतू राजन् ! ब्रह्मणः पश्यतस्तदा ॥ अथ तौ दानवश्रेष्ठौ गृहीत्वा तान् सनातनान्। रसे विविशतुस्तूर्णमुदपूर्णे(मुदक्पूर्वे?)महोदधौ ॥ एतस्मिन्नन्तरे राजन् देवो हयशिरोधरः। जग्राह वेदान् अखिलान् रसातलगतान् हरिः॥ प्रादाच्च ब्रह्मणे राजन् ततः स्वां प्रकृतिं ययौ । ततस्तयोर्वधेनाऽऽशु वेदापहरणेन च ॥ शोकापनयनं चक्रे ब्रह्मणः पुरुषोत्तमः ॥" इत्यादिप्रमाणं द्रष्टव्यम् । **दिग्विशेषादी**ति ।

---

**विग्रहमि**ति । अनेन चतुर्मुखस्य बद्धात्मसमष्टिभूतत्वमुच्यते । **समष्टिभावो** नाम स्वशरीरानुप्रविष्टतदण्डापेक्षितसकलकर्मवश्यजीवकत्वमेव । ब्रह्मरुद्रयोः सृज्यत्वे श्रुतिमाह **एको ह वै नारायण** इत्यादि । ब्रह्मरुद्रयोः प्रसादकोपजत्वे प्रमाणमाह **ब्रह्माणमि**ति । [1]एतद्वचनोपादानञ्च ब्रह्मरुद्रयोरनुपास्यत्वोपयोगिपरिमितफलप्रदत्वोपपादनाय उत्तरवचने कार्यत्वं तयोरभिधीयत इत्येतत्सूचनाय । तयोः कार्यत्वे हि तत्साध्यत्वरूपं फलं परिच्छिन्नमेव स्यादिति । **स्वविहिते**ति । स्वसृष्टेत्यर्थः । इदञ्च ब्रह्मविशेषणम् । "यो ब्रह्माणं विदधाति" इति श्रुतिप्रत्यभिज्ञानाय **विहिते**त्युक्तम् । "यो वै वेदांश्च प्रहिणोति तस्मै", "नामरूपञ्च भूतानां कृत्यानां च प्रपञ्चनम् । वेदशब्देभ्य एवाऽऽदौ देवादीनां चकार सः", "शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम्" इति श्रुतिस्मृतिसूत्राण्यभिप्रेत्याह **स्वप्रहिते**ति । **वेदोपज्ञविज्ञानेन**=वेदाधीनाद्यविज्ञानेन । **स्वनिर्धूते**ति । "ततो विप्रहिणस्तांस्तु दृष्ट्वा तावसुरोत्तमौ । वेदाञ्जगृहतू राजन् ब्रह्मणः पश्यतस्तथा ॥ अथ तौ दानवश्रेष्ठौ गृहीत्वा तान् सनातनान् । रसे विविशतुस्तूर्णमुदपूर्णे(मुदक्पूर्वे?)महोदधौ ॥ एतस्मिन्नन्तरे राजन् देवो हयशिरोधरः । जग्राह वेदान् अखिलान् रसातलगतान् हरिः ॥ प्रादाच्च ब्रह्मणे राजन् ततः स्वां प्रकृतिं ययौ । ततस्तयोर्वधेनाऽऽशु वेदापहरणेन च ॥

---

1 एतद्वचनग्रहणं उपरि एतौ द्वावित्युक्तौ कौ इति जिज्ञासाशान्त्यर्थम् ॥

शेषादिविविधविचित्रव्यष्टिसंज्ञामूर्त्तिसृष्टिं कारयति, करोति च तच्छरीरकः। तथा च सूत्रम्, "संज्ञामूर्त्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्" इति। संहारयति, संहरति च हरशरीरकः॥

ननु नित्यविभोर्दिशः कार्यत्वं कथम्? न; नित्यविभुदिग्द्रव्यस्यासिद्धेः। प्राक्प्रत्यग्दूरासन्नादि-

---

उत्तरत्र दिग्विचारसङ्गतिप्रदर्शनार्थमत्रोपक्षेपः। **संज्ञामूर्त्तिसृष्टिमिति**। नामरूपसृष्टिमित्यर्थः। **तच्छरीरक** इति। हिरण्यगर्भशरीरक इत्यर्थः। **संज्ञामूर्तिक्लृप्तिस्त्विति**। नामरूपसृष्टिः परमात्मकर्तृकैव। कुतः? "नामरूपे व्याकरवाणि", "तासां त्रिवृतं त्रिवृतमेकैकां करवाणि" इति समानकर्तृकत्वावगमेन **त्रिवृत्कुर्वत एव** नामरूपव्याकरणोपदेशात्। त्रिवृत्करणे त्रिवृत्करणोत्तरभाव्यण्डोत्पन्नस्य चतुर्मुखस्य कर्तृत्वासंभवेन परमात्मन एव कर्तृत्वम्। नामरूपव्याकरणमपि हिरण्यगर्भशरीरकपरमात्मधर्म इति सूत्रार्थः॥

ननु पूर्वापरादिप्रत्ययविषयसंयोगोपनायकतया दिगिति तत्त्वान्तरमभ्युपगन्तव्यम्। तथाहि— उदयाचलस्य उदयाचलसन्निहितपदार्थस्य च मध्ये यावन्तो देशा वर्तन्ते, ते अस्ताचलसन्निहितपदार्थ-मध्यवर्तिदेशापेक्षया स्वल्पा एव। तैश्च स्वल्पैः सर्वैश्च संयोगः सूर्यस्यापि (स्यास्ति?); नोदयाचलस्य, न वा तस्य देशस्य। ततश्च मध्यवर्तिदेशसंयोगाल्पीयस्त्वमेव सूर्यसमवेतं सन्निधानमित्युच्यते। तच्च सूर्यसमवेतमपि उपनायकसामर्थ्यात् घटादावपि भासते। तत्र सूर्यवर्तिसंयोगानां घटादौ उपनायकत्वं दिश एव। नन्वेवं काल एवोपनायकः किं न स्यादिति चेन्न; तस्य तपनपरिस्पन्दक्रियोपनायकत्वेनैव सिद्धतया संयोगोपनायकत्वाभावात्[1]। अतस्तपनगतमध्यदेशसंयोगाल्पीयस्त्वलक्षणोदयाचलसन्निधानादिपर्यायपूर्वत्वा-द्युपनायकतया दिक्तत्त्वमवश्याभ्युपगन्तव्यमित्यत आह **प्राक्प्रत्यग्दूरासन्नादीति**। परमते यावत्त्व

---

शोकापनयनं चक्रे ब्रह्मणः पुरुषोत्तमः" इत्यादि प्रमाणमिह द्रष्टव्यम्। **दिग्विशेषादीति**। इदं च करिष्यमाणदिग्विचारसङ्गत्यर्थम्। **संज्ञामूर्तिसृष्टिः**=नामरूपसृष्टिः, **तच्छरीरकः**=हिरण्यगर्भशरीरकः। **संज्ञामूर्तिक्लृप्तिस्त्विति**। नामरूपसृष्टिः परमात्मकर्तृकैव। कुतः? 'नामरूपे व्याकरवाणि, तासां त्रिवृतं त्रिवृतमेकैकां करवाणि" इति समानकर्तृकत्वावगमेन त्रिवृत्कुर्वत एव नामरूपव्याकरणोपदेशात्। त्रिवृत्करणोत्तरभाव्यण्डोत्पन्नस्य चतुर्मुखस्य कर्तृत्वासंभवेन परमात्मन एव कर्तृत्वात् नामरूपव्याकरणमपि हिरण्यगर्भशरीरकपरमात्मधर्म इति सूत्रार्थः॥

ननु पूर्वापरादिप्रत्ययविषयसूर्यगतसंयोगसमुदायवैशिष्ट्यघटकतया दिगिति तत्त्वान्तरमवश्यं स्वीकरणीयम्। तथा हि— वस्तुनः पूर्वत्वम् उदयाचलसन्निहितत्वम्, अपरत्वं च अस्ताचलसन्निहितत्वम्। स्वापेक्षया उदयाचलसन्निहितत्वञ्च स्वस्य चोदयाचलस्य च मध्यवर्तिपदार्थैर्यस्य यत्संयोगसमुदायः तद-पेक्षया यस्य उदयाचलस्य च मध्यवर्तिपदार्थसंयोगसमुदायः अल्पतरः, तत्त्वम्। अल्पतरत्वं न्यून-संख्याकसंयोगघटितत्वम्। तथाच सूर्यनिष्ठतादृशसंयोगसमुदायस्य घटादिषु वैशिष्ट्यं स्वाश्रयसंयुक्तदिक्

---

1 एतद्ग्रन्थोपपादितरीत्या पूर्वं कालनिरूपणावसरे व्याख्यायां तपनसंयोगेति पाठः साधुरेवेति तत्र तदशुद्धत्वप्रदर्शि टिप्पणमयुक्तमिति भाव्येन-अथापि पूर्वापरयोरपि उत्तरदक्षिणादि-दिगाद्यनुरोधेन सूर्यघटनेनैव संयोगसमुदायोपनायकत्वं तार्किकेष्टमिति संयोगपदमात्रमलमिति तत्साधुत्वं भाव्यम्। न च सूर्यः साक्षात् सर्वदेशसंयुक्तः। अस्तु वा तपनेत्युपलक्षणम्।

व्यपदेशानां तु उभयसम्मतैस्तत्तदुपाध्युपहितैस्तैस्तैराकाशादिद्रव्यैरेव, मूर्तान्तरसंयुक्तसंयोगपरम्परास्यूतैस्तत्तत्प्राक्त्वादिभेदनिर्वाहकत्वाभिमतोपाधिविशेषैरेव वा यथायोगं निर्वाहात्। सम्प्रतिपन्नाकाशादिपरित्यागेन सर्वत्र सर्वगुणघटनरूपातिप्रसङ्गपरिहाराय अधिकदिग्धर्मिकल्पनं पापक्षयवत् पुण्यपरिक्षयोऽपि भवतीति भयात् मन्दाकिनीमपहाय मरीचिकानुधावनम्।

**तावन्मात्रोपनेतृत्वस्वभावान्यप्रकल्पनात् ।**
**सिद्धस्य धर्मिणः कल्प्या तावन्मात्रोपनेतृता ॥ २६ ॥**

---

सन्निहितत्वाद्युपाधिभूतानां तपनगताल्पदेशसंयोगलक्षणोपाधीनां संयुक्ताल्पसंयोगादिलक्षणपरम्परासम्बन्धेन तत्तद्वस्तुवृत्तित्वसम्भवाद्वा, सम्प्रतिपन्नानामाकाशादीनां तदभिमतदिग्वदेव तत्तद्वस्तुनि तपननिष्ठसंयोगमात्रोपनायकत्वस्वभावकल्पनेन वा पूर्वादिप्रतीत्युपपत्तावतिरिक्तदिक्तत्त्वकल्पनाया अयुक्तत्वादिति वाक्यार्थः। **तत्तदुपाध्युपहितैरिति।** तपनगतभूयोऽल्पदेशसंयोगलक्षणोपाध्युपनायकत्वस्वभाववद्भिरित्यर्थः। **संयुक्तसंयोगपरम्परास्यूतैरिति।** विभुद्रव्यमद्वारीकृत्यैव मूर्तसंयुक्तसंयोगादिपरम्परासम्बन्धेन परत्वापरत्वाद्याश्रयवस्तुसम्बद्धैरित्यर्थः। इदमुपलक्षणम्—घटस्य प्राक्त्वं नाम प्रमातृपिण्डावधिकत्वापेक्षया उदयाचलसन्निहितत्वमेव। तत्सन्निहितत्वञ्च उदयाचलसंयुक्तसंयोगपरम्पराल्पीयस्त्वं देशकृतमेव। विप्रकृष्टत्वञ्च उदयाचलसंयुक्तदेशसंयोगभूयस्त्वं देशगतमेव; न तु तपनगतसंयोगाल्पीयस्त्वभूयस्त्वे। ततश्च दिशः आकाशादेर्वा अपेक्षा नास्तीति द्रष्टव्यम्। ननु आकाशादेरुपनायकत्वकल्पने अन्यनिष्ठगुणान्तरस्यापि अन्यत्रोपनयप्रसङ्गात् धर्म्यन्तरं कल्पनीयमित्याशंक्याह **सम्प्रतिपन्नेति।** **पुण्यपरिक्षयोऽपीति।** आत्मसमवेतादृष्टत्वाविशेषादिति कुतर्कवशात् मन्दाकिन्यां पापक्षयमात्रहेतुत्वप्रतिपादकशास्त्रहृदयानभिज्ञस्येदृशोत्प्रेक्षासम्भवादिति भावः। **तावन्मात्रोपनेतृत्वेति।** धर्म्यन्तरकल्पनापेक्षया क्लृप्त एव धर्मिणि

---

संयोगरूपमिति दिक्तत्त्वमावश्यकमित्यत आह **प्राक्प्रत्यगिति।** **तत्तदुपाध्युपहितैरिति।** प्रागादिव्यवहारनियामकोक्तसंयोगसमुदायात्मकोपाध्युपनायकैरित्यर्थः। उपनायकत्वं=संबन्धसंपादकत्वम्। **मूर्तान्तरसंयुक्तसंयोगपरम्परास्यूतैरित्यादि।** स्वाश्रयसंयुक्तमूर्तान्तरसंयोगघटितपरम्परासंबन्धेन विभुद्रव्याघटितेनैव, तत्तद्वस्तुवृत्तिभिरुक्तसंयोगसमुदायरूपोपाधिभिर्वेत्यर्थः। इदमुपलक्षणम्। प्राक्त्वं प्रमातृपिण्डापेक्षया उदयाचलसन्निहितत्वमेव। तच्च प्रमातृपिण्डनिष्ठोदयाचलसंयुक्तसंयोगपरम्पराघटकसंयोगपर्याप्तसंख्यान्यूनसंख्यापर्याप्त्यधिकरणसंयोगघटितोदयाचलसंयुक्तसंयोगपरम्परावत्त्वम् ततश्च दिशः आकाशादेर्वा नैवापेक्षेति द्रष्टव्यम्। नन्वाकाशादेः संबन्धघटकत्वे घटादौ पटत्वादिविशिष्टधीप्रसङ्गः। अतिरिक्तदिक्तत्त्वस्वीकारे तु नायं दोषः; तस्य उक्तसंयोगसमुदायमात्रसंबन्धघटकतयैव सिद्ध्या वस्त्वन्तरसंबन्धघटकत्वानुपगमात् इत्यत आह **संप्रतिपन्नेति।** **पुण्यपरिक्षयोऽपीति।** आत्मगतादृष्टत्वाविशेषादिति कुतर्कवशात् मन्दाकिन्याः पापक्षयमात्रहेतुत्वप्रतिपादकशास्त्रहृदयानभिज्ञस्य ईदृशोत्प्रेक्षासंभवादिति भावः। **तावन्मात्रोपनेतृत्वेति।** तावन्मात्रसंबन्धसंपादकतेत्यर्थः। धर्म्यन्तरकल्पनस्य लघुत्वादिति भावः। विनिगमनाविरहेणानन्तविभुपदार्थानां संबन्धघटकताप्रसङ्गस्तु कालनिरूपणोक्तदिशा परिहर्तव्यः। नन्वनुमानेनातिरिक्त-

अस्तु तर्हि आकाशातिरिक्तं दिक्तत्त्वम्, "पद्भ्यां भूमिर्दिशः श्रोत्रात्", "दिशः श्रोत्रम्" इत्यादिपृथक्सृष्टिप्रलयश्रवणादिति चेन्न ; अभिमानिदेवतोपाधिसृष्ट्या निर्वाहात् । तत्तदेकप्रकरणस्थान्तरिक्षस्वर्गलोकाद्यवच्छेदसृष्ट्यादिवत् । अन्यथा तत्रापि तत्त्वान्तरस्वीकारप्रसङ्गात् । सूत्रकारादिभिश्च, "न वायुक्रिये पृथगुपदेशात्" इत्यधिकरणे पृथक्सृष्ट्याद्युपदेशवतोऽपि प्राणस्य वायुविशेषत्वमेवोक्तम् । तत् दिगादीनामपि प्रदर्शनार्थं मन्तव्यम् । यदि च कार्यं किमपि दिक्तत्त्वम्, तदा तत्सृष्टेः पूर्वं संहारात् परतश्च प्रकृतिमहदादितत्त्वानामावरणत्वावार्यत्वदूरासन्नत्वव्यवस्था न स्यात् । व्यष्टिदशायां हि दिक्सृष्टिः श्रूयते । प्रकृतिकार्यतया प्रादेशिकत्वे वा शुद्धसत्त्वत्रिगुणादेरूर्ध्वाधःप्रभृतिव्यवस्था न स्यात् । यदि तत्रोपाधिभिरुपहितैर्वा तैस्तैर्निर्वाहः, तदत्रापि सममिति सिद्धं न दिक् तत्त्वान्तरमिति । यत्तु प्रमेयसंग्रहे प्रोक्तम्, "गगनस्य दिशाश्च त्रिवृत्करणेन रूपवत्त्वम्, अतश्चाक्षुषं सर्वं सविशेषमेव गृह्यते" इति—तेनापि पञ्चीकृतभूतारब्धत्वमात्रं प्रतीयते ; न पुनः स्थिरपरिगणितचतुर्विंशत्यतिरिक्ततत्त्वान्तरत्वम् । वरदविष्णुमिश्रैस्तु, "द्रव्यञ्च षड्विंशतिविधं सत्त्वरजस्तमांसि" इत्यादिना दिग्द्रव्यं पृथगेव सङ्ख्यातम् । "आकाशकालदिशश्चक्षुरि-

---

धर्मान्तरकल्पनस्य लघुत्वादिति भावः । तर्कगर्वं परित्यज्य श्रुतिमवलम्ब्य शङ्कते **अस्तु तर्हीति** । **अभिमानिदेवतोपाधीति** । अभिमानिदेवताया वा उपाधेर्वेत्यर्थः । **तत्तदेकेति** । "नाभ्या आसीदन्तरिक्षम् । शीर्ष्णो द्यौः समवर्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात् । तथा लोकाँ अकल्पयन्" इत्यादिष्विवेत्यर्थः । **तत्त्वान्तरस्वीकारेति** । महदादीनामिव तत्त्वान्तरतया परिगणनं स्यादिति भावः । **पृथक्सृष्ट्यादीति** । "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च", "खं वायुर्ज्योतिरापः" इति वाक्यापेक्षया प्राणानां पृथक्सृष्ट्युपदेशादित्यर्थः । **आवरणत्वावार्यत्वेति** । प्रकृत्यादिप्रदेशविशेषाणामुपादानानां सर्वदिग्व्यापकत्वरूपम् **आवरणत्वम्**, महदादीनामुपादेयानां सर्वदिग्व्याप्यत्वरूपम् **आवार्यत्वम्**, प्रकृत्यादीनां **महदहङ्कारादिविकारापेक्षया दिक्कृतं दूरत्वम्**, महदादीनां दिक्कृतमासन्नत्वमित्यादि न स्यात् ; दिशां व्यष्टिदेशोत्पन्नप्रादेशिकभूतविकाररूपत्वादिति भावः। **गगनस्य दिशाश्च त्रिवृत्करणेनेति** । पञ्चीकरणेनेत्यर्थः । गगने रूपवत्त्वस्य पञ्चीकरणेनैवोपपाद्यत्वादिति ध्येयम् । **चाक्षुषं सर्वं सविशेषमेव गृह्यते इति** । चक्षुषा गृह्यमाणं सर्वं स्वव्यवस्थापकगुणपुरस्कारेण गृह्यते इत्यर्थः ।

---

दिगसिद्धावपि आगमेन तत्सिद्धिः स्यादिति शङ्कते **अस्तु तर्हीति**। **अभिमानिदेवतोपाधिसृष्ट्येति** । अभिमानिदेवताया उपाधेर्वा सृष्ट्येत्यर्थः । **तत्तदेकेति** । "नाभ्या आसीदन्तरिक्षम् शीर्ष्णो द्यौः समवर्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात्" इत्यादिष्विवेत्यर्थः । **तत्त्वान्तरेति** । आकाशातिरिक्तान्तरिक्षादितत्त्वस्वीकारप्रसङ्गादित्यर्थः । **पृथक्सृष्ट्यादीति** । "एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथ्वी" इति वाक्यापेक्षया प्राणानां पृथक्सृष्ट्युपदेशादित्यर्थः । **आवरणत्वावार्यत्वेति** । प्रकृत्यादिप्रदेशविशेषाणामुपादानानां सर्वदिग्व्यापकत्वरूपमावरणत्वम्, उपादेयानां सर्वदिग्व्याप्यत्वरूपमावार्यत्वम्, प्रकृत्यादीनां महदहङ्कारादिविकारापेक्षया दिक्कृतं दूरत्वम्, महदादीनां दिक्कृतमासन्नत्वमित्यादि न स्यात् । दिशां व्यष्टिदेशोत्पन्नप्रादेशिकभूतविकाररूपत्वादिति भावः **चाक्षुषं सर्वं सविशेषमेव गृह्यत इति**। चक्षुषा गृह्यमाणं सर्वं तत्तदसाधारणगुणविशिष्टतयैव गृह्यत इत्यर्थः ।

न्द्रियेण" इति तस्य चाक्षुषत्वमप्युक्तम्। "दिक्कालौ चाक्षुषौ प्रत्यक्षपरत्वापरत्वकारणसंयोगाश्रयत्वात् घटवदित्यनुमानेनावगम्यते" इति च तत् साधितञ्च। अत्र पृथक्त्वं भाष्यविरुद्धसत्त्वादिद्रव्यपरिगणनवत् अन्यपरतया निर्वाह्यमिति ॥

तदेतत् ब्रह्माण्डप्रभृति स्तम्बपर्यन्तं सर्वमपि पञ्चभूतात्मकम्; पञ्चीकरणादिवचनात्। "तासां त्रिवृतं त्रिवृतमेकैकां करवाणि" इत्युपलक्षणम्; समानप्रकरणैरुपबृंहणैश्च तथा अध्यवसायात्। भूयसा तु लौकिकपरीक्षकागमव्यवहाराः। तथा च सूत्रम्, "वैशेष्यात्तु तद्वादस्तद्वादः" इति, "त्र्यात्मकत्वात्तु भूयस्त्वात्" इति च। एवं पञ्चीकरणमपि उपलक्षणमेव ॥ "नानावीर्याः पृथग्भूताः ततस्ते संहतिं विना। नाशक्नुवन् प्रजाः स्रष्टुं असमागम्य कृत्स्नशः॥ समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः। एकसङ्घातलक्षास्तु संप्राप्यैक्यमशेषतः। महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते।"

---

प्रत्यक्षेति। प्रत्यक्षे ये परत्वापरत्वे तदसमवायिकारणभूतो यः संयोगः दिग्घटसंयोगः कालघटसंयोगश्च तदाश्रयत्वं पक्षदृष्टान्तयोरस्तीति भावः। तत् साधितञ्चेति। न प्रतिज्ञामात्रं कृतमिति भावः। सत्त्वादिपरिगणनवदिति। तत्सहपठितमपीति शेषः।

समानप्रकरणैरिति। समानप्रकरणे तैत्तिरीयके आकाशादीनां पञ्चानामप्युत्पत्तिश्रवणात् पञ्चीकरणमप्युक्तप्रायमिति भावः। ननु पञ्चीकरणेन सर्वस्य सर्वात्मकत्वात् व्यवहाराव्यवस्था स्यादित्याशङ्क्याह भूयसा त्विति। वैशेष्यादिति। पृथिव्याद्यंशानामाधिक्यात् पृथिवीत्वाद्युक्तिरिति सूत्रार्थः। द्विरुक्तिरध्यायपरिसमाप्तिद्योतनार्था। त्र्यात्मकत्वादिति। "आपः पुरुषवचसो भवन्ति" इत्यप्शब्देन भूतान्तरसंसृष्टानामपामभिधानम्। त्र्यात्मकानां देहारम्भकत्वासम्भवात्, सर्वस्यापि वस्तुनस्त्र्यात्मकत्वात्, देहे च लोहितादिभूयस्त्वेन तदारम्भकेऽपि जलांशस्य भूयस्त्वात् अप्शब्देन भूतान्तरसंसृष्टानामपामुक्तौ न विरोध इति सूत्रार्थः। उपलक्षणमेवेति। महदादिसप्तीकरणाष्टीकरणादेरिति शेषः। नानावीर्या इति। वीर्यं द्रवत्वकठिनत्वादिकम्। संहतिं विना मेलनं विनेत्यर्थः। असमागम्य ऐक्यमप्राप्येत्यर्थः। एकसङ्घातलक्षाः। एकसङ्घातः=अण्डं लक्षं साध्यं येषां ते तथोक्ताः।

---

प्रत्यक्षेति। प्रत्यक्षे ये परत्वापरत्वे, तदसमवायिकारणभूतो यः संयोगः घटकालसंयोगः घटदिक्संयोगश्च, तदाश्रयत्वं पक्षदृष्टान्तसाधारणम्। अत्र संयोगाश्रयत्वमात्रस्य परत्वापरत्वासमवायिकारणसंयोगाश्रयत्वमात्रस्य वा हेतूकरणे द्व्यणुकादिगतपरत्वापरत्वासमवायिकारणसंयोगाश्रयद्व्यणुकादौ व्यभिचारः स्यादिति प्रत्यक्षत्वं परत्वापरत्वविशेषणम्। द्व्यणुकादिगतपरत्वापरत्वयोरप्रत्यक्षत्वान्नोक्तदोषः ॥

समानप्रकरणैरिति। समानप्रकरणे तैत्तिरीयके आकाशादीनां पञ्चानामपि भूतानामुत्पत्तिश्रवणात् पञ्चीकरणमप्युक्तप्रायमिति भावः। ननु पञ्चीकरणेन सर्वस्य पञ्चभूतात्मकत्वात् पृथिव्यादिव्यवहारव्यवस्थानुपपत्तिरित्यत आह भूयसा त्विति। लौकिकेति। शिलाशकलमिश्रधान्यराशौ धान्यमिश्रशिलाशकलराशौ च भूयस्त्वमादाय तत्तद्राशित्वव्यवहारादिरिति भावः ॥ उपलक्षणमेवेति। महदादिसप्तीकरणाष्टीकरणादेरिति शेषः। नानावीर्या इति। वीर्यं द्रवत्वकठिनत्वादिकम्; संहतिं विना=मेळनं विना, असमागम्य=समागममप्राप्य, समागमः=पृथगगत्यनर्हतापादको विलक्षणसंयोगः। एकसङ्घात-

इति भगवत्पराशरवचनात्। तथा श्रीमद्गीताभाष्ये, "महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव चेति क्षेत्रारम्भकद्रव्याणि" इत्यादिकमुक्त्वा प्रकृत्यादिपृथिव्यन्तद्रव्यारब्धमिन्द्रियाश्रयभूतमिच्छाद्वेषसुखदुःखविकारिभूतसङ्घातरूपं चेतनसुखदुःखोपभोगाधारत्वप्रयोजनं क्षेत्रमित्युक्तं भवति" इत्युक्तम्। तदेवमष्टद्रव्योपादानानि शरीराणि। इन्द्रियाणि तु शरीराश्रितानि द्रव्यान्तराणि। "इन्द्रियाणि दशैकञ्च पञ्च चेन्द्रियगोचराः इति क्षेत्राश्रितानि तत्त्वानि" इति विभजनात्, "इन्द्रियाश्रयभूतम्" इत्युपसंहाराच्च। एतेन तन्मात्राणां पूर्वोक्तो निश्शेषपरिणामपक्षः परिगृहीत इव सूच्यते॥

नन्वेकस्यानेकद्रव्योपादानकत्वे जातिसङ्करः स्यात्॥ न स्यात्। अवयविनोऽस्माभिरनभ्युपगमात्।

---

**श्रीमद्गीताभाष्ये इति।** त्रयोदशाध्याये, "इच्छा द्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः। एतत्क्षेत्रं समासेन सविकारमुदाहृतम्॥" इति देहयाथात्म्यप्रकरणे इति शेषः। **अष्टद्रव्योपादानानीति।** प्रकृतिमहदहङ्कारपञ्चभूतात्मकाष्टद्रव्योपादानानीत्यर्थः। शरीरैकदेशा एव इन्द्रियाणीति पक्षं प्रतिक्षेप्तुमाह **इन्द्रियाणि त्विति।** **उपसंहारादिति।** गीताभाष्ये इति शेषः। **एतेन तन्मात्राणामिति।** "महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव चेति क्षेत्रारम्भकद्रव्याणि" इति गीताभाष्ये अष्टानामेव क्षेत्रारम्भकत्वकथनात् तन्मात्राणां निश्शेषपरिणामोऽभिमत इति गम्यते। अन्यथा तेषामपि क्षेत्रारम्भककोटौ परिगणनापातादिति भावः।

**जातिसङ्करः स्यादिति।** पृथिवीत्वाप्त्वादीनामुपादानोपादेयानुवृत्तजातितया तत्पृथिव्याद्यारब्धे

---

**लक्षा इति।** **एकसङ्घातः**=अण्डम्, **लक्ष्यम्**=उद्देश्यम्, साध्यमिति यावत्। तथाच बहुव्रीहिवशादेकसङ्घातसाध्यका इत्यर्थः। **ऐक्यं** पूर्वोक्तो विलक्षणसंयोगः। **अष्टद्रव्योपादानानीति।** प्रकृतिमहदहङ्कारपञ्चभूतात्मकाष्टद्रव्योपादानानीत्यर्थः। इन्द्रियाणां भूतवत् शरीरारम्भकत्वपक्षंप्रतिक्षेप्तुमाह **इन्द्रियाणि त्विति।** **एतेनेति।** अष्टानामेव शरीरारम्भकत्वाभिधानेनेत्यर्थः। **निश्शेषपरिणामपक्ष इति।** अन्यथा तेषामपि क्षेत्रारम्भकत्वमभिधीयतेति भावः॥

**जातिसङ्करस्स्यादिति।** स्वसामानाधिकरण्य-स्वाभावसामानाधिकरण्य-स्वसमानाधिकरणाभावप्रतियोगित्व-एतत्त्रितयसंबन्धेन जातिविशिष्टजातित्वं स्यादित्यर्थः। पृथिव्याद्यारब्धानां पृथिवीत्वादिजातिमत्त्वनियमदर्शनात् नानाभूतारब्धत्वस्वीकारे तत्र तत्तज्जात्यवश्यम्भावादिति भावः। **अत्र च यत्रयत्र** जातित्वम्, तत्र तत्र एतत्त्रितयसंबन्धेन जातिविशिष्टत्वाभाव इति व्याप्तिर्धर्मशास्त्रादवगम्यते। **तत्र हि** ब्राह्मण्यां क्षत्रियाद्युत्पन्नस्य, क्षत्रियायां वैश्यायां शूद्रायां वा ब्राह्मणोत्पन्नस्य च न ब्राह्मणत्वादिजातिद्वयम्। किन्त्वन्यैव सूतत्वादिजातिरित्युक्तम्। उक्तव्याप्तिविरहे हि तत्रतत्र जातिद्वयमेवाङ्गीक्रियेत; न त्वतिरिक्ता जातिः। तथाच नानिष्टापत्तिसंभवः। अत्रचाऽऽपाद्यव्यतिरेकनिश्चयस्ये। आपाद्यतावच्छेदकाभावप्रकारकआपाद्यविशेष्यकनिश्चयात्मकापाद्याप्रसिद्धिनिश्चयस्यापीष्टापत्तिविघटकतया आपत्तिहेतुत्वात् आपाद्यव्यतिरेकाप्रसिद्धावपि तद्बलादापत्तिसंभवान्नापाद्याप्रसिद्धिर्दोषः। व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्वीकारे तु जातिविशिष्टत्वेन जात्यभावरूपापाद्यव्यतिरेकोऽपि प्रसिध्यति। यद्वा पृथिवीत्वादिजातिर्यदि पृथिवीजलादिनानोपादानकवृत्तिः स्यात्, तदा उक्तत्रितयसंबन्धेन जलत्वादिजातिविशिष्टा स्यादित्यापत्तौ तात्पर्यात् नापाद्याप्रसिद्धिः। **अवयविनोऽस्माभिरनभ्युपगमादिति।** अवयवातिरिक्त

**बुद्धि-शब्द-सङ्ख्या-परिमाण-देश-काल-कार्यादिभेदस्य अवयव्यारम्भकतया भवदभिमतावस्थान्तर-**

---

अवयविनि जातीनां साङ्कर्यप्रसङ्ग इत्यर्थः। ननु कारणात् कार्यस्यानन्यत्वं न सम्भवति; विलक्षणबुद्धिबोध्यत्वात्; न खलु तन्तुपटमृत्पिण्डादिषु कार्यकारणविषया बुद्धिरेकरूपा। शब्दभेदाच्च; न हि तन्तवः पट इत्युच्यन्ते, पटो वा तन्तव इति। कार्यभेदाच्च; न हि मृत्पिण्डेनोदकमाह्रियते, घटेन वा कुड्यं निर्मीयते। कालभेदाच्च; पूर्वकालश्च कारणम्, अपरकालश्च कार्यम्। आकारभेदाच्च; पिण्डाकारं कारणम्, कार्यञ्च पृथुबुध्नोदराकारम्। तथा सत्यामेव मृदि घटो नष्ट इति व्यवह्रियते। सङ्ख्याभेदश्च दृश्यते, बहवस्तन्तवः, एको घट इति। परिमाणभेदश्च दृश्यते। कारकव्यापारवैयर्थ्यञ्च—कारणमेव चेत् कार्यम्, किं कारकव्यापारसाध्यं स्यात्? यद्यपि कार्ये कार्योपयोगितया कारकव्यापारेण भवितव्यञ्चेत्—कारकव्यापारेण नोपरन्तव्यम्। तस्मादवयवि अङ्गीकार्यमित्याशङ्क्याह **बुद्धिशब्देत्यादि**। **भवदभिमतावस्थान्तरेति**। असमवायिकारणत्वाभिमतसंयोगविशेषविशिष्टैस्तन्तुभिरेव सर्वव्यवहारोपपत्तौ

---

तदारब्धावयविनः कस्यचिदभ्युपगम एव तत्र जातिद्वयप्रसक्तिः—अवस्थाविशेषविशिष्टतन्त्वादीनामेव पटादिरूपत्वे नैकत्र जातिद्वयप्रसक्तिरिति भावः। ननु कथमवयव्यनभ्युपगमः। बुद्धिशब्दान्तरादिभिस्तत्सिद्धेः तथा हि—तन्तुमृत्पिण्डादिविषयबुद्ध्यपेक्षया पटघटादिविषयकबुद्धेराकारवैलक्षण्यमानुभाविकं न हि तन्तुषु पट इति बुद्धिः, पटे वा तन्तव इति बुद्धिर्जायते। तच्च वैलक्षण्यं तन्त्वादीनामेव पटादिरूपत्वे नोपपद्यते। तथाच उक्ततर्कसहकृतेन पटादयस्तन्त्वादिभिन्नाः तन्त्वाद्यविषयकप्रतीतिविषयत्वात् घटादिवदित्यनुमानेन पटादिषु तन्त्वादिभेदसिद्धिः। एवं पटादिशब्दात् तन्त्वादिप्रतीत्यनुत्पत्त्या पटादिशब्दानां तत्वाद्यवाचकत्वे सिद्धे तन्त्वाद्यवाचकशब्दवाच्यत्वेन हेतुना घटादिदृष्टान्तेन पटादिषु तन्त्वादिभेदसिद्धिः। एवं बहवस्तन्तवः एकः पट इत्यादिप्रतीत्या संख्याभेदसिद्धौ अवयवापर्याप्तसंख्यापर्याप्त्यधिकरणतया अवयविन्यवयवभेदसिद्धिः। एवं अवयवावयविनोः परिमाणभेददर्शनात् अवयवावृत्तिपरिमाणवत्तयाऽवयविनो भेदसिद्धिः। एवं देशभेदादपि भेदसिद्धिः; कार्पासे तन्तवः, तन्तुषु पट इति तत्प्रतीतेः। एवं कालभेदादपि। तन्तुषु सत्स्वेव पटो भविष्यतीत्यादिप्रतीतिव्यवहारबलात् घटादिषु तन्त्वादिसमानकालिकप्रागभावप्रतियोगित्वसिद्ध्या भेदसिद्धिः। एवं कार्यभेदश्च दृश्यते। न हि मृत्पिण्डेनोदकमाह्रियते; घटेन वा कुड्यं निर्मीयते। तथाचावयवजन्यकार्यविशेषाजनकतया अवयवाजन्यकार्यजनकतया वा अवयविन्यवयवभेदसिद्धिः। एवमाकारभेदादपि। पिण्डाद्याकारो ह्यवयवः, पृथुबुध्नोदराद्याकारश्चावयवी। तथाचावयवाकृतिविलक्षणाकृतिमत्त्वादवयविनि अवयवभेदसिद्धिः। तथाचावयव्यभ्युपगम आवश्यक एवेत्यत आह **बुद्धीति**। **अवयव्यारम्भकतया भवदभिमतेति**। अवयव्यसमवायिकारणतया भवदङ्गीकृतेत्यर्थः। तथाच नास्माकमतिरिक्तकल्पनागौरवम्; भवन्मते तु तत् दुर्वारमिति भावः। **अवस्थान्तरमात्रेण निर्वाहादिति**।

अयं भावः—बुद्धिशब्दान्तरादीनां न धर्मिभेदसाधकता। तथा हि—यदुक्तं तन्त्वाद्यविषयप्रतीति

**मात्रेण निर्वाहात् । अन्यथा राश्यादिष्वपि द्रव्यान्तरकल्पनाप्रसङ्गात् ।**

---

अतिरिक्तावयविकल्पनस्याप्रामाणिकत्वादिति भावः । **राश्यादिष्वपीति ।** **आदिपदेन** वनसेना-पत्रताटङ्कादिकं गृह्यते । न च पत्रताटङ्कादावपि कार्यान्तरोत्पत्तिः शक्यशङ्का ; **अवयवद्वयसंयोगस्यै-**

---

विषयत्वेन पटादिषु तन्त्वादिभेदासिद्धिरिति, तन्न ; संयोगविशेषविशिष्टतन्तूनामेव पटत्वमित्यङ्गीकर्तृ-सिद्धान्तिमते पटविषयकप्रतीतेस्तन्त्वविषयकत्वासिद्ध्याऽन्यतरासिद्धेः । यदि च—तन्तुत्वावच्छिन्ना-विषयकप्रतीतिविषयत्वम्, स्वावच्छिन्नाविषयकप्रतीतिविषयतन्तुकधर्मवत्त्वं वा हेतुः । स च धर्मः पटत्वम् । तच्च जातिविशेषरूपं संयोगविशेषरूपं वेत्यन्यत् । सर्वथा तादृशसंयोगविशेषशून्यतादशायां तन्तुषु तदवच्छिन्नाविषयकप्रतीतिविषयत्वमस्त्येव । एवं तादृशसंयोगदशायामपि तदवच्छिन्ना-विषयकतन्त्वादिपदजन्यप्रतीतिविषयत्वं सुलभम्—इत्युच्यते—तदा तन्तुत्वाद्यवच्छिन्नाविषयक-प्रमेयत्व-भावत्व-द्रव्यत्वाद्यवच्छिन्नविषयकप्रतीतिविषयत्वम्, स्वावच्छिन्नाविषयकप्रतीतिविषय-तन्तुकप्रमेयत्वभावत्वद्रव्यत्वादिकमादाय तन्तुषु व्यभिचारः । एवं तन्तुवाचकशब्दवाच्यत्वमपि पटे नोभयवादिसंप्रतिपन्नम्, पटादिशब्दानां सिद्धान्तिभिः संयोगविशेषविशिष्टतन्त्वादिवाचकताया एवाङ्गीकारात् । तन्तुत्वाद्यवच्छिन्नावाचकशब्दवाच्यत्वं तु तादृशप्रमेयादिशब्दवाच्येषु तन्तुषु व्यभिचरितम् । बुद्धिव्यवहारवैलक्षण्यं तु प्रमेयत्वाद्यवच्छिन्नप्रतीतिव्यवहारवत् । एवं बहवस्तन्तवः एकः पट इति प्रतीतिव्यवहारयोरपि, बहूनि धान्यानि एको धान्यराशिरिति प्रतीति-व्यवहारयोरिवोपपत्तिः । तत्र यथा एकत्वं बुद्धिविशेषविषयत्वात्मकसमुदायत्वगतमेव विषयः, तथाऽत्राप्यवस्थाविशेषरूप-पटत्वगतमेव विषय इति सिद्धान्तिभिरङ्गीकारात् । पटत्वविशिष्टे तन्त्वपर्याप्तसंख्यापर्याप्त्यधि-करणत्वं नोभयसंप्रतिपन्नम् । पत्रताटङ्कयोः कालभेदेन परिमाणभेदस्य ऐक्येऽपि दर्शनात् परिमाणभेदोऽप्य-प्रयोजकः । तन्त्ववृत्तिपरिमाणवत्त्वं तु पटे असिद्धमेव ; सिद्धान्तिमते पटपरिमाणे तन्त्ववृत्तित्वासिद्धेः । एवं तन्तुषु पट इति कार्पासे तन्तव इति च प्रतीती असिद्धे एव । अतो देशभेदहेतुरसिद्ध एव । एवं तन्तुषु विद्यमानेषु पटत्वावस्थायामिव तद्विशिष्टेऽपि भविष्यत्त्वप्रतीतिव्यवहारयोः, पत्रे विद्यमाने ताटङ्कत्व-विशिष्टे भविष्यत्त्वप्रतीतिव्यवहारवदुपपत्त्या कालभेदोऽप्यप्रयोजकः ; तन्त्वधिकरणकाल एव भविष्यद्रूप-विशिष्टतन्तुप्रतियोगिकप्रागभावसंभवात् । एवमवस्थाविशेषविशिष्टावयवानामेवावयवित्वमिति मते अवयविजन्यकार्येष्ववयवाजन्यताया वा, अवयवाजन्यकार्येष्ववयविजन्यताया वा न संप्रतिपत्तिः । कार्यभेदश्च एकस्मिन्नेव कालभेदेनावस्थाविशेषासद्भावसद्भावाभ्यामुपपद्यत एव । एवमाकारभेदोऽपीति ।

ननु बहवस्तन्तवः एकः पट इति प्रतीत्या साक्षात् पटगतैकत्वस्यैव विषयीकरणान्न तादृशप्रतीतेः पटत्व-गतैकत्वविषयकत्वसंभवः, तथा च संख्याभेदादवयवातिरिक्तावयव्यभ्युपगम आवश्यक इत्यत आह **अन्यथेति** । उक्तरीत्याऽवयविनोऽतिरिक्तत्वकल्पन इत्यर्थः । **राश्यादीति ।** **आदिना** वनसेनाताटङ्कादयो गृह्यन्ते । **द्रव्यान्तरकल्पनाप्रसङ्गादिति ।** धान्यराशि-वन-सेना-ताटङ्कादिष्वप्युक्तबुद्धिशब्दादि-भेदात् धान्य-वृक्ष-पदाति-पत्रातिरिक्तत्वकल्पनाप्रसङ्गादित्यर्थः । न हि पत्रात् ताटङ्कस्य द्रव्यान्तरत्वं

गुरुत्वादिकार्यदर्शनादिनिर्वाहपरिक्लेशात्। पृथग्दशापतनदर्शनेन अवयवगुरुत्वस्याप्रतिबन्धात्। अवयविगुरुत्वप्रतिबन्धे तु द्व्यणुकप्रभृतेः सर्वस्यापतनप्रसङ्गात्। परमाणुगुरुत्वैरेव सर्वेषां पतने घटादेः साक्षात् परमाण्वारब्धत्वाभावेन तत्पतने तद्गुरुत्वस्य असमवायित्वायोगात्।

वासमवायिकारणतया तत्र तदभावेन अवयव्यारम्भासम्भवात्। इतरथा पटाकुञ्चनप्रसारणादावपि द्रव्यान्तरोत्पत्तिप्रसङ्गादिति भावः। किञ्च अवयवातिरिक्तावयव्यभ्युपगमे अनेकावयवारब्धकनक-शृङ्खलायां कारणगुणप्रक्रमेण तत्तदवयवगतगुरुत्वातिरेकेण अवयवगुरुत्वैरवयविन्यपि गुरुत्वोत्पत्त्यव-श्यम्भावात् तोलने अत्यन्ताधिकगुरुत्वोपलम्भप्रसङ्गः, अनुपलम्भनहेतुकल्पनक्लेशो वा स्यादित्याह गुरुत्वादीति। ननु अन्यतरगुरुत्वप्रतिबन्धात् नाधिकगुरुत्वोलम्भ इति न गुरुत्वादिकार्यादर्शनपरिक्लेश इत्याशङ्क्य किमवयवगुरुत्वस्य प्रतिबन्धः, उत अवयविगुरुत्वस्य? न तावत् अवयवगुरुत्वस्य; निश्चले अवयविनि शाखाफलादीनां पतनाद्यभावप्रसङ्गात्। नाप्यवयविगुरुत्वस्य; तथा सति, अवयविनि क्वापि गुरुत्वा-नुपलम्भप्रसङ्गादित्याह पृथग्दशेति। दशा [1]अत्रावयवः। असमवायित्वायोगादिति। समवायिकारण-रूपघटतदवयवान्यतरप्रत्यासन्नत्वाभावादिति भावः। तन्तुद्वयसंयोगलक्षणासमवायिकारणाभावात् दीर्घैक-

संभवति; अवयवद्वयसंयोगस्यैव भवद्भिरसमवायिकारणतया स्वीकारात्, तत्र तदभावात्। अन्यथा पटाकुञ्चनप्रसारणादावपि द्रव्यान्तरोत्पत्तिप्रसङ्गादिति भावः। अतिरिक्तावयविनि साधकाभावमुक्त्वा बाधकमप्याह गुरुत्वादीति। अवयवातिरिक्तावयविन्यपि गुरुत्वोत्पत्त्यवश्यम्भावादवयवितोलने पृथग्भूतयावदवयवतोलनदशोपलभ्यमानगुरुत्वादधिकगुरुत्वोपलंभप्रसङ्गः, तदनुपलम्भनिर्वाहाय कस्यचित् प्रतिबन्धकत्वस्वीकारे गौरवमित्यर्थः। किञ्चावयवगुरुत्वस्यावयविगुरुत्वस्य वा प्रतिबन्धो न संभवति। तथाहि—अवयव्यारम्भकासमवायिकारणसंयोगोत्पत्तेः प्राक् अवयवेषु पतनादिगुरुत्वकार्यदर्शनात् नावयव-गुरुत्वस्य प्रतिबन्धसंभवः; एवं निश्चले वृक्षादौ शाखाफलादीनां पतनदर्शनाच्च नावयवगुरुत्वप्रतिबन्धसंभवः। अवयविगुरुत्वस्य प्रतिबन्धे तु घटादिपतने गुरुत्वस्यासमवायिकारणतानुपपत्तिः। परमाणुगुरुत्वस्य घटे तदवयवे वा समवेतत्वविरहात्, तदन्यगुरुत्वस्य च प्रतिबद्धत्वादित्याह पृथग्दशेत्यादि। पृथग्दशा[1]पतनदर्शनेनेति। आरम्भकासमवायिकारणसंयोगकाले पतनदर्शनेनेत्यर्थः। न चारम्भकसंयोग-स्यैवावयवगुरुत्वकार्यप्रतिबन्धकत्वाङ्गीकारात् तत्सद्भावदशायां नाधिकगुरुत्वकार्योपलम्भप्रसङ्गः; तद्विरह-दशायां तु अवयविन एवाभावात् न तत्प्रसङ्ग इति वाच्यम्—अवयविपतनदशायामवयवेष्वपि पतनदर्शनात् अवयवगुरुत्वकार्यप्रतिबन्धाङ्गीकारासंभवात्। अन्यथा अवयवपतने असमवायिकारणविरह-प्रसङ्गात्। ननु घटादिपतने [2]कपालादिपतनमेवासमवायिकारणमस्तु, परमाणुमात्र एव गुरुत्वासमवायि कारणकं पतनमस्तु, द्व्यणुकादिषु सर्वत्रावयवपतनादेव पतनसंभवात्, तद्गुरुत्वप्रतिबन्धाङ्गीकारे न

1 सदशं पटं धारयेत्, न निर्दशमित्यादिव्यवहारात् दशाशब्दः पटप्रान्तान्यरूपावयववाची; दशायाः पृथक्पतनदर्शनेनेत्यर्थः इत्यभिप्रायेण दशाशब्दस्यावयवसामान्योपलक्षणत्वस्वीकारेण, प्रथमव्या-ख्याने, 'दशा अत्रावयवः' इत्युक्तम्। 2 इदं "कर्म कर्मसाध्यं न विद्यते" इति वैशेषिकसूत्रविरुद्धम्।

**संयोगाभावाच्च दीर्घैकतन्तुसंवर्तनजनितेषु तन्त्वतिरिक्तव्यवहारभङ्गप्रसङ्गात् । द्वितीयतन्तुप्रभृत्युपान्त्यतन्तुपर्यन्तपटधियो विभज्यमानतन्तुव्यतिरिक्ततन्तुगतपटधियश्चाविशेषात् । आरभ्यारम्भवादेऽपि प्रथमद्वितीयतन्त्वपगमे द्वितन्तुकादिद्रव्यावस्थानभ्यु(स्थानु)पगमात् ।**

---

तन्त्वारब्धे पटे त्वन्मते पटप्रतीतिर्न स्यादिति दूषणान्तरमाह **संयोगाभावाच्चेति** । किञ्च पृथुतरपटनिर्माणप्रक्रमे द्वितीयतन्तुसंयोगमारभ्य प्रतितन्तुसंयोगं द्वितन्तुकादिपटपङ्क्तिरुत्पद्यते, न वा ? आद्ये अनेकसहस्रपटोपलम्भप्रसङ्गः । न च त्रितन्तुकपटोत्पत्तिदशायां द्वितन्तुकपटस्य नाश इति वाच्यम् ; नाशकाभावात् अहेतुकविनाशस्यायुक्तत्वात् । ततश्च पटपङ्क्तिः समीक्ष्येत । द्वितीये अन्त्यतन्तुसंयोगात् प्रागुत्पन्नपटप्रतीतीनां भ्रमत्वप्रसङ्गात् । न च इष्टापत्तिः ; एकद्वित्र्यादितन्त्वपगमे जायमानाया अपि पटप्रतीतेर्भ्रमत्वप्रसङ्गः(ङ्गात्) । न च तत्रापीष्टापत्तिः ; अवयव्यारम्भवादिभिरपि तन्त्वपगमस्थले खण्डपटोत्पत्तेरभ्युपगततया तत्प्रतीतेः प्रमात्वस्याभ्युपेतत्वादित्याह **द्वितीयतन्त्वित्यादिना** । **आरभ्यारम्भवादेऽपीति** । तन्तुपटादीनामारभ्यारम्भकत्ववादिनैयायिकमतेऽपीत्यर्थः । पटादावारम्भकतन्त्वादिभागभेदोपलम्भवत् बम्भ्रम्यमाणचक्रान्तवर्तिश्लक्ष्णैकमृत्पिण्डारब्धे घटे आरम्भकभागभेदानुपलम्भात् एकस्य चानारम्भकत्वात् तत्र घटारम्भो न स्यात् । न च श्लक्ष्णतया भागभेदानुपलम्भेऽपि वस्तुतो भागभेदाः सन्त्येव ; ततः परस्परसंयुक्तैः कपालादिभागैरवयव्यारम्भोऽस्त्विति वाच्यम् ; तर्हि एते घटारम्भकाः, एते च घटारम्भकारम्भकाः इति

---

किमपि बाधकमित्यतोऽवयविनि बाधकान्तरमाह **संयोगाभावादिति** । तन्तुद्वयसंयोगरूपासमवायिकारणाभावादित्यर्थः । **तन्त्वतिरिक्तद्रव्यव्यवहारेति** । पटव्यवहारेत्यर्थः । **भङ्गप्रसङ्गादिति** । तत्रासमवायिकारणविरहेण पटरूपावयव्युत्पत्त्यसंभवादिति भावः । बाधकान्तरमाह **द्वितीयेत्यादि** । अयमर्थः— महापटनिर्माणारम्भे द्वितीयतन्तुसंयोगमारभ्य प्रतितन्तुसंयोगं द्वितन्तुकादिपट उत्पद्यते न वा ; आद्ये त्रितन्तुकादिपटारम्भासंभवः ; आरब्धकार्यैस्तदानीमवयव्यन्तरानारम्भात् । यदि च द्वितन्तुकादिस्तन्त्वन्तरसहितस्त्रितन्तुकाद्यारम्भक इत्युच्यते, तदा 'इह तन्तुषु पटः' इति स्वाभिमतव्यवहारविरोधप्रसङ्गः । एवमनेकसहस्रपटोपलम्भप्रसङ्गः । न च त्रितन्तुकपटोत्पत्तिदशायां द्वितन्तुकपटस्य नाश इति वाच्यम् ; नाशकाभावात् अहेतुकविनाशासंभवात् । द्वितीये अन्त्यतन्तुसंयोगात् प्राक् उत्पन्नपटप्रतीतीनां भ्रमत्वप्रसङ्गः । न चेष्टापत्तिः, तथासति एकद्वित्र्यादितन्त्वपगमे जायमानपटप्रतीतेरपि भ्रमत्वप्रसङ्गात् । तत्रापीष्टापत्तौ अपसिद्धान्तः ; अत्र खण्डपटोत्पत्तेरेव तीर्थकरैरभ्युपगतत्वादिति । ननु तन्त्वन्तरसहितैर्द्वितन्तुकादिपटैस्त्रितन्तुकाद्यारम्भ इत्यारभ्यारम्भवादे कतिपयतन्त्वपगमे तत्तत्तन्त्वारब्धपटनाशेऽपि तदनारब्धपटान्तरसद्भावो निष्प्रत्यूह इति न तत्र पटधियो भ्रमत्वप्रसङ्ग इत्यत आह **आरभ्यारम्भवादेऽपीति** । **प्रथमद्वितीयतन्त्वपगम इति** । अयं भावः—प्रथमद्वितीयतन्त्वपगमे प्रथमोत्पन्नद्वितन्तुकपटनाशावश्यंभावात् तन्नाशे तदारब्धपटान्तरस्य नाशावश्यंभावात् तन्नाशे तदारब्धस्येत्येवं यावत्पटनाशे तत्र पटधियो भ्रमत्वमेव स्यात् । तत्प्रमात्वसंपत्तये खंडपटोत्पत्तिस्वीकारे अनन्तपटतन्नाशादिकल्पनागौरवम् । व्यतिषङ्गविशेषविशिष्टतन्तूनामेव पटरूपत्वे तु नायं दोष इति । **द्वितन्तुकादिद्रव्यावस्थानुपगमादिति** ।

**घटादिषु च आरम्भकभागानुपलम्भेन यथेष्टभागानर्हत्वात्; उपलम्भश्रुतिभ्यां बाधितत्वाच्च। अतोऽवयव्यनभ्युपगमात् न जातिसङ्करः। अभ्युपगच्छतामपि प्रतिनियतकनकरजताद्यंशनिर्मितबिम्बादिवत् हेरम्बादिवच्च निर्वोढुं शक्यत्वात्। अस्मन्मते तु सङ्घातविशेषरूपेषु तत्तद्भूतांशानां प्रतिनियतत्वात्। अवयविवादिनामपि यथास्वं निमित्ततया उपादानतया च अनेकभूतानामेक-**

---

विवेक्तुमशक्यतया भवदभिमतभागव्यूहासिद्धेरणुपर्यन्तानामपि घटारम्भकत्वमेव स्यादिति दूषणान्तरमाह **घटादिषु चेति। उपलम्भश्रुतिभ्यामिति।** य एव पूर्वाह्णे मृत्पिण्ड आसीत्, स एवेदानीं घटशरावादिरूपेण भवतीत्युपलम्भेन, "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्।" इत्यादिश्रुत्या च बाधितत्वादित्यर्थः। **प्रतिनियतेति।** रजतेन पदयोः, कनकेन हस्तयोः, अन्यत्र ताम्रादिना चाऽऽरब्धप्रतिमायां तत्तज्जातीनां तत्तदवयवमात्रनिष्ठत्वेन अवयविनि तत्तज्जातेरभावात् यथा न जातिसङ्करः, यथा आकण्ठं पुरुषे गजमुखे न जातिसङ्करः—तथा अनेकद्रव्यारब्धेऽपि शरीरादौ न जातिसङ्कर इत्यर्थः। **निर्वोढुं शक्यत्वादिति।** जातिसङ्करमन्तरेणेति शेषः। **प्रतिनियतत्वादिति।** पृथिवीत्वादीनां तत्तद्भूतांशमात्रनिष्ठत्वे अवयविनश्चान्यस्याभावेन सङ्करप्रसक्तेरिति भावः। ननु विजातीयानां पृथिव्यप्तेजःप्रभृतीनामेककार्यारम्भकैकसङ्घातानुप्रवेश एव न सम्भवति; तथात्वे तदनुप्रविष्टद्रव्याणां मिथस्तादात्म्यम्, जातिसङ्करो वा स्यादित्याशङ्क्य परैरप्येतदङ्गीकर्तव्यमित्याह **अवयविवादिनामपीति।** अतिरिक्तावयविवादिभिर्विजातीयोपादानद्रव्यारब्धत्वे

---

द्वितन्तुकादपटसद्भावानुपगमादित्यर्थः। यद्यपि दीर्घीकृततन्तुभ्रमणविरचितपटस्थले तन्तुद्वयसंयोगविरहेऽपि तन्तुभागद्वयसंयोगसंभवात् न पटोत्पत्त्यनुपपत्तिरिति शक्यते वक्तुम्, तथापि बम्भ्रम्यमाणचक्रान्तर्वर्तिश्लक्ष्णैकमृत्पिण्डारब्धे आरम्भकभागभेदानुपलम्भात् एकस्य चानारम्भकत्वात् तत्र घटारम्भो न स्यादित्याह **घटादिषु चेति। उपलम्भश्रुतिभ्यामिति।** पूर्वाह्णे दृष्टो मृत्पिण्ड एवेदानीं घटशरावादिरूपोऽभूदित्युपलम्भेन, "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति श्रुत्या च बाधितत्वादित्यर्थः। **प्रतिनियतेति।** ताम्रेण पादयोः, कनकेन मुखे, अन्यत्र रजतेनाऽऽरब्धे प्रतिमाविशेषे तत्तज्जातीनां तत्तदवयवमात्रनिष्ठत्वमेवेति स्वीकारात् यथा न जातिसङ्करः, यथा चाऽऽकण्ठं पुरुषे गजमुखे न जातिसङ्करः—तथा अनेकद्रव्यारब्धे शरीरेऽपि जातिसंकरमन्तरेण निर्वोढुं शक्यत्वादित्यर्थः। नन्वस्माभिर्नानालोहारब्धप्रतिमाविशेषे हेरम्बादिशरीरे च जात्यन्तरमेव स्वीक्रियते। न चैवं भवन्मते संभवति; अवयवातिरिक्तावयविविरहेण तादृशजातेरवयवेष्वप्यङ्गीकरणीयतया जातिसङ्करप्रसङ्गस्य दुर्वारत्वात्—प्रतिमाद्यनारम्भकसुवर्णादिषु तादृशजात्यन्तरपरिहारेण सुवर्णत्वादिसद्भावादित्यत आह **अस्मन्मते त्विति। सङ्घातविशेषरूपेष्विति।** द्रव्यान्तरानात्मकेष्वित्यर्थः। तथाच यथा ब्राह्मणशूद्रसमुदाये न जात्यन्तरम्, तथा उक्तप्रतिमाविशेष-हेरम्बादिष्वपि जात्यन्तरानुपगमान्नोक्तदोष इत्युक्तं भवति। **प्रतिनियतत्वादिति।** तत्तज्जातिमात्राश्रयत्वादित्यर्थः। **न जातिसङ्कर** इति पूर्वेण संबन्धः। नन्वनेकभूतांशानामेकसङ्घातानुप्रवेशाङ्गीकारात् भवन्मते गौरवम्; किञ्चानेकभूतानामेकसङ्घातानुप्रवेशे परस्परतादात्म्यप्रसङ्गात् जातिसङ्करप्रसङ्गः। अस्मन्मते तु अवयविन एकभूतात्मकत्वान्न दोष इत्यत आह **अवयवीति।**

सङ्घातानुप्रवेशोऽवर्जनीयः । न च तत्र मिथो जातिसङ्करः तादात्म्यं वा जायते इति नास्माकं कश्चित् विशेषः ॥ न च जातिसङ्करो दोषः। उपाधिसङ्करवत्। न हि, 'मिथोधर्मिपरिहारेण वर्तमानयोरुपाध्योः कार्यत्वमूर्तत्वादिरूपयोरेकत्र समावेशो नातिप्रसङ्गावहः, जात्योस्तु तथा' इति नियामकमस्त्यन्यत्राभिमानात् (मानः कः(?))॥ परापरभावरहितयोर्जात्योरसमावेशनियमोपलम्भो नियामक इति चेन्न; उपाध्योरपि नीलत्वपीतत्वादिरूपयोस्तत्सम्भवात्। केषुचित् दर्शनस्य जातावपि समत्वात्। कनकत्व-

---

साङ्कर्यपरिहारार्थं शरीरसुवर्णकरकाद्यारम्भकैक(कारम्यैक?)सङ्घातानुप्रविष्टेऽपि केषाञ्चिदारम्भकत्वं केषाञ्चिदुपष्टम्भकत्वमित्युच्यते, अस्माभिस्तु न तथाऽभ्युपगम्यते; जातिसाङ्कर्याप्रसक्तेः । अत इयानेव विशेष इति भावः ।

ननु पूर्वतन्त्रे नवमे, "अग्निधर्मः प्रतीष्टकं सङ्घातात्" इत्यधिकरणे—"हिरण्यशकलैरग्निं प्रोक्षति", मण्डूकेनाग्निं विकर्षति" इत्यत्र किं प्रोक्षणं विकर्षणञ्च अवयवातिरिक्तावयव्यभावात् प्रतीष्टकं कर्तव्यम्, उत अतिरिक्तावयविसम्भवात् सकृदेववेति विचार्य, यत्रैकदेशाकर्षणे कृत्स्नोऽप्यवयव्याकृष्यते, सन्धिश्च न दृश्यते, तत्रावयव्यन्तरमस्ति । प्रकृते च तदभावात् नावयवसमुदायातिरिक्तोऽवयव्यस्ति । गोमयलिप्तेऽप्यानुमानिकं सन्धिदर्शनमस्ति । तस्मात् समुदाय एवाग्निशब्देनोच्यते । समुदायस्य चामूर्तत्वेन प्रोक्षणासम्भवात् तल्लक्षितानां प्रोक्षणं विधीयते इति पूर्वपक्षं कृत्वा—एकोऽवयवीति प्रत्यक्षशब्दादेरुपलम्भात् एकदेशाकर्षणेऽपि वृक्षे कृत्स्नाकर्षणाभावात् सन्धिदर्शनस्य पटादावनैकान्तत्वात् अस्त्येवावयवी । ननु इष्टकातिरिक्तोऽवयवी स्फुटं नोपलभ्यते इति चेन्न; तर्हि इष्टकानामपि अवयवातिरेकेणाभावप्रसङ्गेन, तथा तस्याप्यपलापप्रसङ्गेन परमाणुपुञ्जवादप्रसङ्गात् । तस्मात् अवयव्यर्थं प्रोक्षणम्, नेष्टकार्थम्; इष्टकानामपि प्रोक्षणवत् अन्यार्थत्वेन, "गुणानाञ्च परार्थत्वात्" इति न्यायात् । यद्यप्यग्निशब्दो ज्वलनवाची, तथापि, 'हिरण्यशकलैरग्निम्" इत्यादिवाक्ये अग्निशब्दो ज्वलनाधारस्थण्डिललक्षकः । तस्मात् सकृदेव प्रोक्षणमिति सिद्धान्तितम् । अतः कथमतिरिक्तावयवी प्रत्याख्यायते इति चेन्न; इध्मव्रीह्यादिषु अतिरिक्तावयव्यभावेऽपि प्रतिव्यक्त्यप्रोक्षणवदुपपत्तेः । किञ्च पूर्वोत्तरपक्षयोरेकत्वावस्थानारम्भारम्भपरत्वेनापि उपपत्तौ एकत्वाश्रयातिरिक्तावयव्यारम्भानारम्भपरत्वे प्रमाणाभावात् । अतोऽतिरिक्तावयवी नास्तीति सिद्धमिति भावः ॥

**मिथोधर्मिपरिहारेणे**ति । परस्पराश्रयपरिहारेणेत्यर्थः । **कार्यत्वमूर्तत्वयो**रिति । कार्यत्वं विहाय मूर्तत्वं मनसि वर्तते, मूर्तत्वं विहाय कार्यत्वं रूपादौ वर्तते इति भावः । **परापरभावरहितयो**रिति ।

---

**अवर्जनीय** इति । तथाचातिरिक्तावयव्यभ्युपगमात् भवन्मत एव गौरवमिति भावः । **जातिसङ्करस्तादात्म्यं** वेति । फलफलिभावेनेति भावः । **नास्माकं कश्चिद्विशेष** इति । एकसङ्घातानुप्रवेशमात्रेण परस्परतादात्म्यासंभव उभयोस्तुल्य एवेति भावः ॥

**मिथोधर्मिपरिहारेणे**ति । परस्पराश्रयपरिहारेणेत्यर्थः। परस्परं विहायेति भावः । **कार्यत्वमूर्तत्वयो**रिति । कार्यत्वं विहाय मनसि वर्तमानस्य मूर्तत्वस्य, मूर्तत्वं विहाय रूपादौ वर्तमानस्य कार्यत्वस्य च एकत्र घटादौ समावेश इत्यर्थः । **अन्यत्राभिमानादि**ति । अभिमानातिरिक्तं नियामकं पक्षान्तरे न किञ्चिदस्तीत्यर्थः । **अन्यत्रा(इत्यत्रा?)भिमानः क** इति क्वाचित्कः पाठः । कः=किंनिबन्धन इत्यर्थः। परापर-

कुण्डलत्वयोः काञ्चनकटक-कलधौतकुण्डलादिषु पृथगेव वर्तमानयोः काञ्चनकुण्डले समावेशदर्शनात्; गत्वतीव्रत्वादीनाञ्च तीव्रगकारादौ। तेषाञ्च जातित्वाभ्युपगमात्। तत्रान्यतरजातिभङ्गो वा, सदृशसंस्थानाभिव्यङ्ग्यजातिद्वयकल्पना वा इत्यादि तु स्वसिद्धान्तस्तनन्धयविषयवात्सल्यम्। तच्च स्वापत्यं मार्जारादिवत् जिघत्सति; अत्यन्तसजातीयेष्वपि एकजातीयत्वेन अबाधितप्रत्यभिज्ञाने जातेरेव भङ्गप्रसङ्गात्। तदेवं सिद्धमनेकतत्त्वात्मकं ब्रह्माण्डादिव्यष्टिविश्वमिति। एवंविधब्रह्माण्डानन्त्य-तदन्तर्वर्तिलोकविशेषसंस्थान-तत्परिमाण-लोकपालनिवासादिभेद-तत्तदवस्थानकालादयो ज्यौतिषपुराणादिषु प्रपञ्चिता द्रष्टव्याः। क्वचित्क्वचिद्विरोधिनोऽपि तात्पर्यभेदादिनिर्वाह्याः। एषा च प्रतिनियतदेशकालस्वरूपफलभोगतारतम्यनिम्नोन्नतब्रह्मादिस्तम्बपर्यन्ता विषमसृष्टिः स्वरूपानादे-

व्य.प्यव्यापकभावानापन्नयोरित्यर्थः। **तत्सम्भवादिति**। असमावेशनियमोपलम्भासम्भवादित्यर्थः। समत्वमेवोपपादयति **कनकत्वकुण्डलत्वयोरिति**। **तीव्रगकारादाविति**। गत्वं विहाय तीव्रत्वं तारघकारे वर्तते, तीव्रत्वं विहाय गत्वं मन्द्रगकारे वर्तते, उभयोरपि समावेशस्तीव्रगकारे वर्तते इति भावः। ननु काञ्चनत्वकुण्डलत्वयोरन्यतरस्य जातित्वं वा परित्यज्यते, अथवा काञ्चनकुण्डलगतकुण्डलत्वजात्यपेक्षया राजतकुण्डलगतकुण्डलत्वजातिर्भिन्नैव। न च अनुगतैकजात्यभावे कथमनुवृत्तकुण्डलशब्दप्रयोग इति शङ्क्यम्; जातिद्वयस्यापि सदृशसंस्थानाभिव्यङ्ग्यत्वेन उभयोरेकशब्दप्रयोगरूषितत्वोपपत्तेरित्याशङ्क्याह **तत्रान्यतरजातिभङ्गो वेति**। **तच्चेति**। ईदृक्कल्पनरूपं वात्सल्यमित्यर्थः। **जिघत्सतीति**। जात्यस्तित्वसिद्धान्तमेव जिघत्सतीति भावः। **अत्यन्तेति**। घटादावप्यनुगतव्यवहारस्य संस्थानसादृश्यादेवोपपत्तौ जात्यसिद्धिरेव स्यादिति, वृद्धिमिच्छतो मूलहानिः स्यादिति भावः। **प्रतिनियतेति**। **प्रतिनियतानां देशकालफलभोगानां तारतम्येन निम्नोन्नतं**

---

**भावरहितयोरिति**। व्याप्यव्यापकभावरहितयोरित्यर्थः। **असमावेशनियमोपलम्भ इति**। परस्परसामानाधिकरण्याभावनियमोपलम्भ इत्यर्थः। स्वाभावसामानाधिकरण्य-स्वसमानाधिकरणाभावप्रतियोगित्वोभयसंबन्धेन तज्जातिविशिष्टजातित्वव्यापकत्वस्य तज्जातिसामानाधिकरण्याभावे उपलम्भ इति यावत्। **तत्संभवात्**=असमावेशनियमोपलम्भसंभवात्। ननु कथं साम्यमित्यतस्तदुपपादयति **कनकत्वकुण्डलत्वयोरिति**। **गत्वतीव्रत्वादीनामित्यादि**। गत्वं विहाय तीव्रत्वं तीव्रघकारे; तीव्रत्वं विहाय गत्वं मन्द्रगकारे; उभयोरपि समावेशस्तीव्रगकार इति भावः। ननु काञ्चनत्वस्य कुण्डलत्वस्य वा जातित्वानुपगमात् नोक्तदोषावकाशः। अथवा काञ्चनत्वादिव्याप्या नानैव कुण्डलत्वजातिरित्यङ्गीक्रियते। न चानुगतैककुण्डलत्वजात्यभावे कथमनुवृत्तकुण्डलशब्दप्रयोग इति शङ्क्यम्; जातिद्वयस्यापि सदृशसंस्थानाभिव्यङ्ग्यत्वेनानुवृत्तशब्दप्रयोगहेतुत्वोपपत्तेरित्याशङ्क्याह **तत्रान्यतरेत्यादि**। **तच्चेति**। उक्तकल्पनरूपं वात्सल्यमित्यर्थः। **जिघत्सतीति**। जात्यस्तित्वसिद्धान्तमेव भक्षयितुमिच्छतीत्यर्थः। **अत्यन्तेति**। घटादावप्यनुगतव्यवहारस्य संस्थानसाम्यादेवोपपत्त्या जात्यसिद्धिरेव स्यादिति, वृद्धिमिच्छतो मूलहानिः स्यादिति भावः। **प्रतिनियतेति**। प्रतिनियतानां देशकालस्वरूपफलभोगानां तारतम्येन निम्नोन्नतं ब्रह्मादिस्तम्बपर्यन्तं यस्याः सा तथोक्ता॥

जीववर्गस्य प्रवाहानादिकर्मतारतम्यनिबन्धनेति नाकृताभ्यागम-कृतप्रणाश-वैषम्य-नैर्घृण्यादिप्रसङ्गः। जीवानामाप्रलयावस्थायित्वादिपक्षे तु एते दोषाः स्फुटाः। तदेवं पुण्यपापतारतम्यात् केचित् द्युप्रभृतिलोकेषु उत्कृष्टशरीरेन्द्रियज्ञानशक्त्यादिमन्तः; केचिच्च नरकादिषु घोरदुःखकारणात् निकृष्टशरीरादिमन्तः; केचिच्च मिश्रकर्माणः पृथिव्यादिषु मिश्रमध्यमसुखादिमन्तः ॥

इह प्रसङ्गात् सामान्यतः शरीरलक्षणमुच्यते— "यस्य चेतनस्य यद्द्रव्यं सर्वात्मना स्वार्थे नियन्तुं धारयितुञ्च शक्यं तच्छेषतैकस्वरूपञ्च तत् तस्य शरीरम्" इति भाष्यम्। गोघटादिशब्दवत् संस्थानादिभिरनियतवृत्तेः शरीरशब्दस्य क्वचिद्विशेषे नियामकाभावात् सर्वप्रयोगानुगुणमिदमेव श्रुतिसिद्धं व्यापकं लक्षणमिति भाष्यकाराभिप्रायः। एतच्च एकलक्षणमिति केचित् व्याचख्युः। लक्षणत्रयमित्यपरे। एकत्वपक्षे व्यवच्छेद्यपरिक्लेशः। अन्ये तु एकलक्षणत्वेऽपि जन्मादित्रयस्य ब्रह्मलक्षणत्व

---

ब्रह्मादिस्तम्बपर्यन्तं यस्याः सा तथोक्ता ॥

**सामान्यत इति।** तच्छब्दघटितत्वात् सामान्यत्वमिति भावः। **इति भाष्यमिति।** "न तु दृष्टान्तभावात्" इति सूत्र इति शेषः। "लोके च शरीरशब्दो घटादिशब्दवदेकाकारद्रव्यवृत्तिरनासादितः क्रिमिकीटपतङ्गसर्पनरपशुप्रभृतिषु अत्यन्तविलक्षणाकारेषु द्रव्येषु अगौणः प्रयुज्यमानो दृश्यते। तेन तस्य प्रवृत्तिनिमित्तव्यवस्थापनं सर्वप्रयोगानुगुण्येनैव कार्यम्" इति भाष्यं हृदि निधायाह **गोघटादिशब्दवदिति।** संस्थानविशेषैर्नियमनायोग्यप्रवृत्तिकत्व इत्यर्थः। **क्वचिद्विशेष इति।** शिरःपाण्यादिमत्येव शरीरे मुख्यत्वम्, अन्यत्र गौणत्वमित्यत्र नियामकाभावादित्यर्थः। **श्रुतिसिद्धमिति।** "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरम्" इत्यादिश्रुतिसिद्धमित्यर्थः। **लक्षणत्रयमिति।**

---

**सामान्यत इति।** प्रतिसंबन्धिविशेषाघटितत्वादिति भावः। **इति भाष्यमिति।** "न तु दृष्टान्तभावात्" इति सूत्र इति शेषः। ननु गोघटादिशब्दवत् आकृतिविशेषादिप्रवृत्तिनिमित्तकत्वमेव किं न स्यादित्याशङ्क्याह **गोघटादीति।** **आदिना** भूतमूर्तादिपरिग्रहः। **संस्थानादीति** **आदिना** गुणक्रियापरिग्रहः। भूतशब्दस्य हि शब्दवत्त्वं प्रवृत्तिनिमित्तम्; मूर्तशब्दस्य च क्रियावत्त्वम्। **अनियतवृत्तेरिति।** आकृतिविशेषादिप्रवृत्तिनिमित्तकत्वानर्हत्वेत्यर्थः। अनुगतानतिप्रसक्ताकृतिविशेषाद्यनुपलब्धेरिति भावः। **क्वचिद्विशेष इत्यादि।** शिरःपाण्यादिमत्येव मुख्यत्वम्, अन्यत्र गौणत्वमित्यत्र नियामकाभावादित्यर्थः। **श्रुतिसिद्धम्।** "यस्य पृथिवी शरीरम्.... यस्यात्मशरीरम्" इत्यादिश्रुतिप्रयोगावगतम्। **व्यापकम्** शरीरशब्दप्रयोगविषयसर्वानुगतम्, **लक्षणं** = शरीरशब्दप्रवृत्तिनिमित्तम्। **भाष्यकाराभिप्राय इति।** "लोके च शरीरशब्दो घटादिशब्दवदेकाकारद्रव्यवृत्तिरनासादितः क्रिमिकीटपतङ्गसर्पनरपशुप्रभृतिष्वत्यन्तविलक्षणाकारेषु द्रव्येष्वगौणः प्रयुज्यमानो दृश्यते। तेन तस्य प्रवृत्तिनिमित्तव्यवस्थापनं सर्वप्रयोगानुगुण्येनैव कार्यम्" इति भाषितत्वादिति भावः। **एकलक्षणमिति।** आधेयत्वविधेयत्वशेषत्वरूपधर्मत्रयं त्रित्वेन शरीरशब्दप्रवृत्तिनिमित्तमित्यर्थः। **लक्षणत्रयमिति।** आधेयत्वविधेयत्वशेषत्वानि त्रीण्यपि प्रातिस्विकरूपेण शरीरशब्दप्रवृत्तिनिमित्तानीत्यर्थः। **व्यवच्छेद्यपरिक्लेशः**=

इव अत्रापि न व्यवच्छेद्यं सिद्धमस्ति; शङ्कितं तु समम्इत्याहुः। यौक्तिकग्रन्थेषु तथानिर्वाहस्य अनुचितत्वात् त्रित्वपक्ष एव मुख्यः। भट्टपराशरपादैरपि अध्यात्मखण्डद्वयविवरणे स एव पक्षः सूचितः; "चेतनाचेतनयोरविशिष्टं तं प्रति शरीरत्वम्; स्वेच्छया भगवता व्याप्यत्वाविशेषात्। इदमेव भौतिकस्य शरीरस्यापि शरीरत्वम्" इत्येकस्य [1]लक्षणतयोपपादनात्।

---

मिलितस्य लक्षणत्वे व्यावर्त्याभावादित्यर्थः । **सिद्धमस्तीति** । निश्चितमस्तीत्यर्थः । **शङ्कितंत्विति** । यथा जन्मादिषु प्रत्येकहेतुत्वस्यानतिप्रसक्ततया लक्षणत्वसम्भवेऽपि जन्महेतुत्वमात्रे लक्षणतयोक्ते राज्यस्थेम्नि राजवत् उत्पादकातिरिक्तं स्थितिहेत्वन्तरमिति शङ्का स्यादित्याशङ्काव्युदासार्थं जन्मादित्रयं लक्षणतयोपन्यस्यते, तथा इहापि आधेयत्वमात्रे कथिते आधारादन्यन्नियन्त्रन्तरं शेष्यन्तरं वा अस्त्विति शङ्का स्यादिति तद्व्युदासाय मिलितस्य लक्षणत्वमिति भावः । **एकस्य लक्षणतयेति । नियच्छता व्याप्यत्वाविशेषात्** इति नियाम्यत्वस्यैवोपपादनादिति भावः ।

---

व्यावर्त्यालाभः । **सिद्धम्**—निश्चितम् ॥ **शङ्कितमिति** । यथा जन्मादिप्रत्येककारणत्वस्यानतिप्रसक्ततया ब्रह्मलक्षणत्वसंभवेऽपि जन्मकारणत्वमात्रे लक्षणतयाऽभिहिते स्थितिलयहेतुवस्त्वन्तरसद्भावशङ्का स्यादिति तद्व्युदासाय त्रितयं लक्षणमुच्यते—तथा प्रकृतेऽपि आधेयत्वमात्रे लक्षणतया कथिते नियाम्यत्वशेषत्वे अन्यं प्रत्येवेति शङ्का स्यादिति तद्व्युदासाय त्रितयं लक्षणतया वक्तव्यमिति भावः। **अनुचितत्वादिति** । सर्वोत्कृष्टत्वप्रतिपत्तेरेव ब्रह्मलक्षणपरमप्रयोजनतया तदुपयोगिन्याः शङ्कितव्यावृत्तेस्तत्र प्रयोजनत्वसंभवेऽपि प्रकृते प्रवृत्तिनिमित्तकोटौ तस्याः प्रयोजनत्वासंभवादिति भावः ।

यत्तु प्रत्येकस्य शक्यतावच्छेदकत्वेऽतिप्रसक्तिविरहेऽपि समुदायस्य तथात्वस्वीकारः शरीरपदात् आधेयत्वविधेयत्व-शेषत्वानां बोधानुभवादेव । न हि एतज्जीवस्य इदं शरीरमिति वाक्यजन्यबोधानन्तरं इदम्पदार्थविशेष्यक जीवाधेयत्वादिसंशयः कस्यापि जायते । अत आधेयत्वादित्रयस्य शरीरपदजन्यबोधविषयत्वावश्यकतया समुदायस्य शक्यतावच्छेदकत्वमावश्यकम् । यथा पद्मत्वस्यानतिप्रसक्तत्वेऽपि पङ्कजनिकर्तृत्वस्य बोधानुरोधेन पङ्कजादिपदशक्यतावच्छेदकत्वस्वीकारः। नन्वेतज्जीवस्य इदं शरीरमिति वाक्यात् आधेयत्वादित्रितयस्य बोधेऽपि न त्रितयस्य शक्यतावच्छेदकत्वावश्यकता ; तत्राधेयत्वमात्रस्य शक्यतावच्छेदकत्वेऽपि विधेयत्वशेषत्वयोरर्थापत्तिवशेन भानसंभवात् ; शरीरत्वं विधेयत्वशेषत्वाभ्यां विनाऽनुपपन्नमित्यर्थापत्तेः संभवादिति चेन्न, "आक्षेपतः प्राप्तादाभिधानिकस्यैव ग्राह्यत्वात्" इति भाष्यानुरोधेनार्थापत्तिविषयस्य शाब्दबोधे भानस्य शक्त्यसंभवस्थल एव स्वीकारादिति—तन्न; क्लृप्तशक्त्या अभिमतार्थभानसंभवस्थलेऽर्थापत्त्या तद्भानाभ्युपगमानौचित्यस्यैव तद्ग्रन्थेऽभिधानात् शक्तिकल्पनविषये तदनुपयोगात्। "अनन्यलभ्यः शब्दार्थः" इति न्यायविरोधाच्च । अतो गौरवात् मानाभावाच्च न समुदायस्य शक्यतावच्छेदकत्वसंभव इति । **एकस्य लक्षणतयोपपादनादिति** । "नियच्छता भगवता व्याप्यत्वाविशेषात्" इति नियाम्यत्वमात्रस्यैव हेतुतयाऽभिधानादिति भावः । शरीरलक्षणपरभाष्ये यत्पदं यद्धर्मावच्छिन्नपरमित्यभिप्रायेणाह

---

श्रुतिश्च, 'अन्तः प्रविष्टश्शास्ता जनानाँ सर्वात्मा' इत्येतदेकमात्र प्रदर्शिनी ।

तत्रैवं लक्षणत्रयनिष्कर्षः—यस्य चेतनस्य यदवस्थं द्रव्यं यावत्सत्तमसम्बन्धानर्हं स्वशक्ये नियन्तव्यस्वभावम्, तदवस्थं तस्य शरीरम् इत्येकं लक्षणम्। चेतनस्य = चैतन्यविशिष्टस्येत्यर्थः। तेन चैतन्यस्य तत्तदाश्रयं प्रति शरीरत्वव्यवच्छेदः। यदवस्थमित्यव्याप्तिपरिहारः; तस्यैव द्रव्यस्यावस्थान्तरे वियोगात्। द्रव्यमिति क्रियादिव्यवच्छेदः। यावत्सत्तमित्यादिना जीवं प्रति परकायप्राणेन्द्रिय-

---

यद्द्रव्यम् इति भाष्यस्थं यद्द्रव्यमिति पदं व्याचष्टे यदवस्थमिति· सर्वात्मनेति पदं व्याचष्टे यावत्सत्तमसम्बन्धानर्हमिति। स्वार्थे इति पदं व्याचष्टे स्वशक्ये इति। नियन्तुं शक्यम् इत्येतत् व्याचष्टे नियन्तव्यस्वभावमिति। तत्तदाश्रयं प्रतीति। स्वस्य स्वविशिष्टनियाम्यत्वे विशिष्टान्वयिनो विशेषणान्वयित्वनियमेन स्वस्य स्वनियाम्यत्वप्रसङ्गात् स्वधर्मभूतज्ञानं स्वाश्रयं प्रति न शरीरम्, ईश्वरं प्रति तु शरीरं भवत्येव। ईश्वरज्ञानं तु न कस्यापि शरीरमिति भावः। अवस्थान्तरे वियोगादिति। तस्यैव

---

यदवस्थमिति। सर्वात्मनेत्येतद्विवरणं यावत्सत्तमसंबन्धानर्हमिति। अपृथक्सिद्धशेषणमित्यर्थः। स्वविषयार्थक स्वार्थशब्दविवरणं स्वशक्य इति। नियन्तुं शक्यमित्येतद्विवरणं नियन्तव्यस्वभावमिति। अधीनव्यापारकत्वस्वरूपयोग्यमित्यर्थः। तदवस्थं=तद्धर्मावच्छिन्नम्, जन्यधर्मत्वरूपावस्थात्वनिवेशे प्रयोजन विरहात्, जीवत्वादेरथात्वेन तदवच्छिन्नस्य शरीरत्वानुपपत्तेश्च धर्मत्वेनैव निवेशः। व्यवच्छेद इति। चैतन्यविशिष्टस्याधीनव्यापाररूपनियच्छत्यर्थैकदेशेऽधीनत्वे निरूपितत्वसंबन्धेनान्वये चैतन्यस्यापि धर्मिपारतन्त्र्येण तेन संबन्धेन तत्रान्वयात् चैतन्याधीनव्यापारवत्त्वलाभात्, चैतन्ये तदसंभवादिति भावः। तथाच तदपृथक्सिद्धविशेषणत्वे सति तन्निष्ठचैतन्यप्रयोज्यव्यापारवत्त्वस्वरूपयोग्यद्रव्यत्वं तच्छरीरत्वमिति फलितम्। व्यापारवत्त्वस्वरूपयोग्यत्वं च तत्प्रयोजकधर्मवत्त्वम्। ततश्च तस्येदं शरीरमित्यत्र अनुयोगित्व-माधेयत्वं च षष्ठ्यर्थः। अनुयोगित्वस्य अपृथक्सिद्धिसंबन्धप्रतियोगित्वविशिष्टचैतन्यप्रयोज्यव्यापारवत्त्व-स्वरूपयोग्यद्रव्यत्वरूपशरीरपदार्थतावच्छेदकैकदेशे अपृथक्सिद्धिसंबन्धे निरूपकतासंबन्धेनान्वयः, आधेयत्वस्य च चैतन्ये आश्रयतयेति बोद्धव्यम्। यद्यपि चैतन्यनिष्ठव्यापारस्यापि चैतन्यजन्यतया तत्राति-प्रसङ्गः, तथापि चैतन्यनिष्ठतादात्म्यसंबन्धानवच्छिन्नजनकतानिरूपितजन्यताया एव चैतन्यप्रयोज्येत्यनेन विवक्षिततया नानुपपत्तिः; चैतन्यनिष्ठव्यापारे तस्य तादात्म्येनैव हेतुत्वात्। अवस्थान्तरे वियोगादिति। तस्यैव शरीरस्य विशरणभस्माद्यवस्थायामसंबन्धानर्हत्वविरहादित्यर्थः। अवस्थाविशेषविशिष्टस्य तु तथात्वमक्षतमिति भावः। भाषितं हि, "न तु दृष्टान्तभावात्" इत्यत्र, "मृतशरीरञ्च चेतनवियोगसमय एव विशरितुमारब्धं क्षणान्तरे विशीर्यते। पूर्वं शरीरतया परिवलप्तसंघातैकदेशत्वेन च तत्र शरीरत्व-व्यवहारः" इति। द्रव्यमिति क्रियादिव्यवच्छेद इति। आदिना संयोगपरिग्रहः। "यस्य वेदाः शरीरं", "यस्य यज्ञाः शरीरम्" इत्यादौ वेदयज्ञशब्दयोस्तदभिमानिदेवतापरतायाः श्रुतप्रकाशिकायां स्पष्टतया वेदयज्ञयोरुक्तशरीरलक्षणस्यासत्त्वेऽपि न क्षतिरिति भावः। नन्वत्र कथं क्रियादावतिव्याप्तिः; तत्र क्रियारूपव्यापारासंभवेन चैतन्यप्रयोज्यव्यापारवत्त्वासंभवादिति चेत्–उच्यते; न ह्यत्र चैतन्यप्रयोज्य-क्रियावत्त्वं लक्षणमिति शक्यं वक्तुम्; तथा सति कालादेर्विभुद्रव्यस्य क्रियावत्त्वासंभवेन ईश्वरं प्रति

कुठारादिव्यवच्छेदः ; प्राणादीनां हि पृथगेव सृष्टानां शरीरनिर्माणात् पूर्वं भावात्; तथा मोक्षात्पश्चादपि तेषामाप्रलयावस्थानात् । स्वशक्ये इति असम्भवपरिहारः । न हि विहङ्गमशरीरसाध्यं विहायोगमनं मानुषमृगसरीसृपादिशरीरस्य शक्यम् । न च तावता तेषामशरीरत्वमिति भावः । स्वशक्यञ्च अन्वयव्यतिरेकादिसमधिगतं यथासम्भवं भाव्यम् । अतः शिलाकाष्ठघटपटादिषु जीवशरीरेष्वपि तदधीनत्वाभावेन अव्याप्तिचोद्यं परिहृतं भवति ; स्थावरादिवत् अतिसूक्ष्मस्य नियमनविशेषस्यास्मदादिभिर्दुर्ग्रहत्वात् । यद्यपि कत्रचित् स्थावरेषु उन्मेषनिमेषादिकं दृश्यते, तथापि न तत् सार्वत्रिकम् । स्मरन्ति च शिलाकाष्ठादिष्वपि स्वल्पतरं चैतन्यम् । "अप्राणिमत्सु स्वल्पा सा स्थावरेषु ततोऽधिका" इत्यादि । वक्ष्यमाणचतुर्थलक्षणपक्षे तु नास्य चोद्यस्यावकाशोऽपि । न च अत्र शक्ये सर्वत्र नियमनं विवक्षितम् ; अनिच्छादिवशेन तस्यापि क्वचिदसम्भवात्,

---

शरीरस्य भस्मत्वाद्यवस्थायामसम्बन्धस्त्वेन यद्द्रव्यं यावत्सत्तमसम्बन्धानर्हम् इत्यस्याभावादव्याप्तिरित्यर्थः । शरीरनिर्माणात् पूर्वं भावादिति । व्यष्टिसृष्टेः प्रागिति भावः । तेषामिति । मुक्तपरित्यक्तप्राणेन्द्रियाणामित्यर्थः । असम्भवपरिहार इति । यद्यपि सर्वत्र नियमनस्याविवक्षितत्वात् तथा वक्ष्यमाणत्व च नासम्भवः, तथापि स्वरूपकथनमिति ध्येयम् । ननु घटपटादीनां न स्थावरसाम्यम् ; स्थावरेषु उन्मेषनिमेषादेर्दर्शनादित्याशङ्क्याह यद्यपीति । ननु घटादेः शरीरत्वस्य प्रामाणिकत्वे स्यादेवम्, तदेव नास्तीत्यत आह स्मरन्ति चेति । वक्ष्यमाणेति । अपृथक्सिद्धविशेषणद्रव्यत्वमिति वक्ष्यमाणलक्षणे तु नाव्याप्तिरिति भावः । तस्यापि क्वचिदसम्भवादिति । शक्येऽपि क्वचिन्नियमनस्य

---

शरीरत्वाभावप्रसङ्गात् । किन्तु चैतन्यप्रयोज्यधर्मवत्त्वमेव तथा वाच्यम् । तथाच जीवगतोत्क्रान्त्यादिकालिकक्रियादावपि तादृशोत्पत्त्यादिधर्मवत्त्वसंभवादतिव्याप्तिरिति । शरीरनिर्माणात्पूर्वं भावादिति । तामसाहङ्कारादाकाशोत्पत्तिवेळायामेव सात्त्विकाहङ्कारादिन्द्रियोत्पत्तेः, भूतपञ्चकसृष्ट्युत्तरभाविपञ्चीकरणानन्तरमेव शरीरनिर्माणात्, प्राणस्य वायुविशेषरूपस्य भूतसृष्ट्यनन्तरमेवोत्पत्तावपि, 'शरीरनिर्माणात्पूर्वमेव तन्निर्माणस्याविगीतत्वाच्च' इति भावः । असंभवपरिहार इति । नियन्तुं शक्यमित्यनेनाविशेषात् सर्वत्र नियन्तुं शक्यमित्यर्थप्रतीत्या विहायोगमनादिविषये नियन्तुं शक्यत्वविरहादसंभवशङ्कायां तादृशार्थस्याविवक्षितत्वप्रदर्शनद्वारा स्वशक्ययत्किञ्चिद्व्यापारमादाय लक्षणं संगमनीयमित्यावेदयितुं स्वशक्यार्थकस्वार्थशब्द इति भावः । नियमनविशेषस्येति । चैतन्यप्रयोज्यधर्मविशेषस्येत्यर्थः । उन्मेषनिमेषादिकं दृश्यत इति । तथाच घटादीनां स्थावरसाम्योक्तिरयुक्तेति भावः । न तत्सार्वत्रिकमिति । तथाचोन्मेषनिमेषादिरहितस्थावरसाम्यं घटादेरुपपद्यत एवेति भावः । घटादेश्शरीरत्व एव प्रमाणाभावमाशङ्क्याऽऽह स्मरन्तिचेति । नास्य चोद्यस्येत्यादि । चेतनापृथक्सिद्धद्रव्यत्वरूपलक्षणे घटादिषु चैतन्यप्रयोज्यव्यापाराभावनिबन्धनाव्याप्तिचोद्यस्य प्रसक्तिरेव न ; तादृशव्यापारस्य तत्राप्रवेशादिति भावः । ननु स्वार्थे नियन्तुं शक्यमित्यनेनाविशेषात् स्वार्थे सर्वत्र नियमनप्रतीतेः निमेषोन्मेषादिरहितस्थावरशरीरेष्वव्याप्तिः ; तत्र स्वशक्यनिमेषादिविषयनियमनासंभवादित्याशङ्क्य परिहरति न चात्रेति । विवक्षितमिति । तथाप्रतीतावपि प्रकृतलक्षणे तद्विवक्षायां प्रयोजनाभावादिति

सहकार्यन्तरागमनमात्रेण कार्यानुत्पत्तिसिद्धेः । न हि अङ्कुरमनुत्पाद्य विनष्टस्य बीजान्तरस्य अङ्कुरोत्पादनसामर्थ्यं नास्तीति शक्यते वक्तुम् । नियन्तव्येति अनियन्तव्यव्याध्यादिव्यवच्छेदः । व्याध्यादीनां द्रव्यात्मकत्वाभावात् तदीयत्वात् स्वशक्ये प्रवर्तमानत्वाच्च । एवं पुत्रशरीरादीनामपि । स्वभावशब्देन अव्याप्तिपरिहारः । व्याध्यादिदशायां स्वशक्येऽप्यशक्यनियमनानां मानुषशरीरादीनामपि शरीरत्वात् तदानीमेतस्य शक्यनियमनत्वस्य औपाधिकत्वादिति ध्येयम् ॥

यस्य चेतनस्य यद्वशस्थं द्रव्यं यावत्सत्तं धार्यम्, तदवश्यं तस्य शरीरमिति द्वितीयं लक्षणम् ।

---

असम्भवात् सर्वत्वेति विवक्षायामव्याप्तिः स्यादिति भावः । ननु आनच्छस्थले कार्यानुत्पत्त्या शक्तिरेव नास्तीत्याशङ्क्याह **सहकारीति** । **प्रवर्तमानत्वाच्चेति** । नियन्तव्येत्यनुक्तौ स्वशक्ये प्रवर्तमानमिति फलिष्यतीति भावः । **पुत्रशरीरादीनामपीति** । पुत्रशरीरे पितापुत्रभावलक्षणसम्बन्धस्य यावत्सत्तं वर्तमानतया यावत्सत्तसम्बन्धार्हत्वमस्ति, स्वशक्ये प्रवर्तमानत्वञ्चास्ति, नियन्तव्यस्वभावत्वं तु नास्तीति भावः । अव्याप्तिं तत्परिहारञ्चोपपादयति **व्याध्यादिदशायामित्यादिना** । **औपाधिकत्वादिति** । तथा च नियन्तव्यस्वभावत्वस्य च न हानिरिति भावः ।

---

भावः । तथा विवक्षायां न केवलं प्रयोजनाभाव एव; मनुष्यादिशरीरे क्वचिदव्याप्तिरपि स्यादित्याह **अनिच्छादीति** । **तस्यापि**=स्ववशसर्वविषयनियमनस्यापि । **क्वचित्**=मनुष्यादिशरीरे । स्वरसवाहिप्रतीत्यनुरोधेन एव सर्वविषयनियमनविवक्षायामपि तथाविधयावद्यात्स्वरूपयोग्यताया एव लक्षणे निविष्टतया निमेषादिरहितस्य शरीरेष्वपि स्वरूपयोग्यतासद्भावान्नाव्याप्तिरित्यभिप्रायेण कदाचिदपि कार्यानुत्पत्तावपि स्वरूपयोग्यतासंभवमुपपादयति **सहकारीति** । **कार्यानुत्पत्तिसिद्धेरिति** । अदृष्टविशेषादिरूपसहकार्यभावेन तत्र निमेषोन्मेषाद्यनुत्पत्तावपि स्ववशस्वरूपतत्प्रयोजककर्मवत्त्वेन स्वरूपयोग्यताऽस्त्येवेति भावः । तदेव दृष्टान्तमुखेनोपपादयति **न हीति** । **प्रवर्तमानत्वाच्चेति** । नियन्तव्येत्यनुक्तौ स्वशक्ये प्रवर्तमानमिति फलिष्यतीति भावः । **पुत्रशरीरादीनामपीति** । पुत्रशरीरे पितापुत्रभावलक्षणसंबन्धस्य यावत्सत्तं वर्तमानतया यावत्सत्तसंबन्धार्हत्वमस्ति, स्वशक्ये प्रवर्तमानत्वञ्चास्ति; नियन्तव्यस्वभावत्वं तु नास्तीति भावः । अव्याप्तिं तत्परिहारञ्चोपपादयति **व्याध्यादिदशायामित्यादिना** । **औपाधिकत्वादिति** । तथा च नियन्तव्यस्वभावत्वस्य च न हानिरिति भावः ।

यत्तु यस्य चेतनस्य यद्द्रव्यं सर्वात्मना स्वार्थे नियन्तुं शक्यं तत्तस्य शरीरमिति प्रथमलक्षणस्य राजनियाम्यो भृत्य इत्यादौ राजकृतिप्रयुक्तचेष्टाश्रयत्वस्य भृत्यादौ बोधात् कृतिप्रयुक्तस्वीयचेष्टासामान्यकत्वरूपनियाम्यत्वं शरीरपदप्रवृत्तिनिमित्तमित्यर्थ इति — तन्न; जीवत्परकायप्रवेशस्थले प्रविष्टपुरुषकृतिमात्रजन्यचेष्टासंभवेन तत्राव्याप्तेः । पृथिव्यादिषु प्राणशरीरसंयोगहेतुकक्रियारूपचेष्टाविरहेण तत्तदीश्वरशरीरत्वानुपपत्तिप्रसङ्गाच्च । चेष्टाशब्देन क्रियामात्रविवक्षायामपि कालादिविभुद्रव्यस्य तदनुपपत्तिर्दुर्वारा; अस्मदादिशरीरे संग्रहश्च; चेतनान्तरव्यापार–प्रवाहवेगादिमात्रजन्याया अपि क्रियायास्तत्र संभवात् ॥

यावत्सत्तं धार्यमिति । स्वाश्रययावत्कालावच्छिन्नाधेयत्ववदित्यर्थः । एवं चैव शरीरत्वमुपपादनीयं तत् । आधाराधेयभावश्च इहेदं बुद्धिहेतुः प्रतीतिसिद्धसंबन्धविशेषः । स च यत्संबन्धाधीना सत्ता

पुत्रशरीरादिकं न यावत्सत्त्वं धार्यमिति तदवच्छिद्यते । शेषं प्राग्वत् । तथा यस्य चेतनस्य यद् द्रव्यं

इ. पे–यत्संबन्धाधीन: पतनाभावो वा यस्य, तदुभयनिष्ठः । यथा घटभूतलयोः , यथा वा भूतलघटयोः ।
तत्र च चेतनसंबन्धाधीनसत्त्वे शरीरे चेतनाधेयत्वस्त्वात् तस्य च शरीराश्रयत्वावच्छिन्नत्वाच्च
लक्षणसङ्गतिः । पित्रादिना धृते पुत्रादिशरीरे पित्रादिसंबन्धयोग्यपतनाभावसत्त्वेऽतिप्रसङ्गवारणाय स्वाश्रय-
यावत्कालावच्छिन्नत्वनिवेशनम् ; तदाह पुत्रेत्यादिना । धर्मभूतज्ञानेऽतिव्याप्तिनिरासाय इष्टमिति ।
चेतनः इदंत्वैतन्यविशिष्टत्व इति भावः । तथाच चैतन्यावच्छिन्ननिरूपकताकाधेयत्वस्य धर्मभूतज्ञानेऽभावा-
न्नातिप्रसङ्गः । यदवस्थमित्यस्य यद्द्रव्यावच्छिन्नमित्यर्थः । तेन जीवत्वादेरस्य रूपत्वाभावेऽपि न क्षतिः ।
ततश्च स्वाश्रययावत्कालावच्छिन्ना या चैतन्यावच्छिन्ननिरूपकताकाधेयता, तदनवच्छेदकधर्मवत्त्वं शरीरपद-
प्रवृत्तिनिमित्तमिति फलितम् । स्वं धर्मः । अस्येदं शरीरमित्यत्र षष्ठ्यर्थं आधेयत्वं निरूपकतायामन्वेति ।
न च यादृक् पूर्वविशेषः कस्यचिच्छिरस्येवोत्पन्नस्तत्रैव विनष्टः, तत्रातिप्रसङ्ग इति वाच्यम् ;
यावत्सत्त्वमित्यनेनापृथक्सिद्धिसंबन्धावच्छिन्नत्वस्य विवक्षितत्वात् । पृथक्सिद्धियोग्ययूकादेरपृथक्सिद्धि-
संबन्धविरहेण तदवच्छिन्नाधेयताया अभावान्नातिप्रसङ्गः । यद्वा संबन्धान्तरेण सत्तात्वमेवाधेयत्वम् ।
यावत्सत्त्वमित्यनेन संबन्धस्यापृथक्सिद्धिरूपत्वं फलितम् । तेन न प्रागुक्तयूकाविशेषेऽतिप्रसङ्गः । तथाच
ज्ञानावच्छिन्नानुयोगिताकापृथक्सिद्धिसंबन्धयोग्यसत्त्वरूपद्रव्यत्वं शरीरत्वमिति द्वितीयलक्षणनिष्कर्षः । अस्येदं
शरीरमित्यादौ षष्ठ्यर्थाधेयत्वस्यानुयोगितायामन्वयः । द्रव्यत्वनिवेशप्रयोजनं प्राग्वत् ॥

यत्तु—यस्य चेतनस्य यद्द्रव्यं सर्वात्मना धारयितुं शक्यमित्यस्य कृतिप्रयुक्तस्वप्रतियोगिकपतनप्रति-
बन्धकसंयोगसामान्यकत्वं शरीरपदप्रवृत्तिनिमित्तमित्यर्थः । एतज्जीवस्येदं शरीरमित्यादौ षष्ठ्यर्थाधेयत्वस्य
कृतावन्वयात् एतज्जीवनिष्ठकृतिप्रयुक्तस्वप्रतियोगिकपतनप्रतिबन्धकसंयोगसामान्यकमिदमिति बोधः । अत्र
सामान्यपदोपादानात् न पुत्रः पितुश्शरीरमिति व्यवहारापत्तिः ; पुत्रप्रतियोगिकपतनप्रतिबन्धकसंयोग-
विशेषस्य पितृकृतिप्रयुक्तत्वेऽपि तत्सामान्यस्य तत्प्रयुक्तत्वाभावात् । स्वप्रतियोगिकत्वानिवेशे चैतस्येदं
शरीरमित्याद्यनुपपत्तिः ; शरीरक्रियां विनापि जाते शरीरानुयोगिकघटादिप्रतियोगिकसंयोगे चैत्रकृति-
प्रयुक्तत्वाभावात् । अतस्तन्निवेश इति—तन्न ; अस्मदादिशरीरस्य सुषुप्त्यादिदशायामितरेतरन्यत्र
निक्षेपादिसंभवेन तादृशपतनप्रतिबन्धकसंयोगस्यास्मदादिकृतिप्रयुक्तत्वविरहेण, जीवत्परकायप्रवेशस्थले
परकीयकृतिमात्रजन्यधारणस्य संभवेन चाव्याप्त्यापत्तेः । एवं कालादिविभुद्रव्यस्य पतनसंभावनाविरहेण
तदीयसंयोगस्य पतनप्रतिबन्धकत्वविरहेण तत्रेश्वरशरीरत्वानुपपत्तिः । न चेश्वरस्य जगदाधारत्वबोधक-
श्रुतिबलात् विभुद्रव्यप्रतियोगिकेश्वरानुयोगिकसंयोगस्यापि पतनप्रतिबन्धकत्वमभ्युपगम्यते ; आधारतायाः
पतनप्रतिबन्धकसंयोगानुयोगित्वरूपत्वादिति वाच्यम्—आधारताया उक्तरूपतायां प्रमाणाभावात् ।
घटादेः रूपाद्याधारत्वासंभवप्रसङ्गाच्च । घटसंयुक्तं भूतलमितिवत् भूतलसंयुक्तो घट इत्यपि व्यवहारसत्त्वेन
घटादावपि भूतलसंयोगानुयोगित्वस्याङ्गीकरणीयतया आधारताया उक्तरूपत्वे घटादेः स्वधारताप्रसङ्गः ।
न च संयोगजनकक्रियाश्रयस्य प्रतियोगित्वमेव, नानुयोगित्वमिति घटादेरनुयोगित्वविरहात् न

द्रव्यं यावत्सत्त्वमशेषतानर्हं तदवस्थं तस्य शरीरमिति तृतीयं लक्षणम्। अशेषतानर्हमिति पूर्ववदेव पुत्रादिव्यवच्छेदः। दानादिना तेषां स्वशेषत्वनिवर्तनस्य शक्यत्वात्। शरीरस्य तु दासत्वाद्यापा-

र. पे-स्वाधारत्वप्रसङ्ग इति वाच्यम्, तथासति उभयकर्मजन्यसंयोगेन हस्तादेर्यत्र घटादिधारकत्वम्, तत्र हस्तादेर्घटाद्याधारत्वानुपपत्तिप्रसङ्गात्। एवमन्येन धृते घटादौ अधस्तादन्यहस्तक्रियया संयोगः पूर्वसंयोगनिवृत्तिश्च [यत्र?]—तत्र हस्तादेर्घटाद्याधारत्वानुपपत्तिः, घटस्य हस्ताधारत्वप्रसङ्गश्चेत्यलम्॥

यावत्सत्त्वमशेषतानर्हमिति शेषत्वनिवृत्तिप्रतिबन्धकसंबन्धवदित्यर्थः। यद्वतः शेषत्वनिवृत्तिः कर्तुं न शक्यते, यच्छून्यस्य च कर्तुं शक्यते, स एव शेषत्वनिवृत्तिप्रतिबन्धकः। स चापृथक्सिद्धिरूपः। पुत्रादिस्तु न तथा; तद्वतो दानादिना शेषत्वनिवर्तनस्य शक्यत्वात्। अत्र चैतन्यविशिष्टार्थकेन चेतनशब्देन तादृशसंबन्धे चैतन्यावच्छिन्नानुयोगिताकत्वलाभात् धर्मभूतज्ञानव्यावृत्तिः। यद्वा यावत्सत्त्वमशेषतानर्हमित्यनेन पृथक्सिद्धिसंबन्धावच्छिन्ना उपकारजनकता विवक्षिता। तत्र चेतनशब्देन संबन्धे चैतन्यावच्छिन्नानुयोगिताकत्वलाभात् धर्मभूतज्ञानव्यावृत्तिः। शरीरिगतोपकारं प्रति शरीरस्यापृथक्सिद्धिसंबन्धेन हेतुत्वात् लक्षणसमन्वयः। पित्रादिगतोपकारजनके पुत्रादावतिप्रसक्तिवारणायापृथक्सिद्धिसंबन्धावच्छिन्नत्वनिवेशः। "पतिं विश्वस्य" इत्यादिना कृत्स्नस्यापि भगवच्छेषत्वसिद्ध्या तस्य च, "नाकिञ्चित्कुर्वतश्शेषत्वम्" इति न्यायेन उपकारजनकताव्याप्यतया कृत्स्नस्यापि चेतनाचेतनप्रपञ्चस्य भगवद्गतोपकारजनकत्वावश्यम्भावात् प्रपञ्चस्य च ब्रह्मण्यपृथक्सिद्धिसंबन्धेन संबद्धत्वेनोपकारजनकत्वसंभवात् तस्यापृथक्सिद्धिसंबन्धावच्छिन्नत्वसिद्ध्या कृत्स्नस्यापि प्रपञ्चस्य ब्रह्मशरीरत्वोपपत्तिः। जीवगतसंयोगादिजनकक्रियावारणाय द्रव्यत्वनिवेशः।

यत्तु—यस्य चेतनस्य यद्द्रव्यं सर्वात्मना शेषतैकस्वरूपं तत्तस्य शरीरमिति तच्छेषत्वं तन्निष्ठातिशयाधायकत्वम्। प्रकृते च तन्निष्ठातिशयः कार्यत्वकारणत्वान्यतररूपः ज्ञानावच्छिन्नप्रतियोगिताकापृथक्सिद्धिसंबन्धावच्छिन्नकार्यत्वकारणत्वान्यतरावच्छेदकत्वं शरीरपदप्रवृत्तिनिमित्तमित्यर्थः। सूक्ष्मचिदचिद्विशिष्टब्रह्मणः कारणत्वात् स्थूलचिदचिद्विशिष्टस्य च तस्य कार्यत्वात् ब्रह्मनिष्ठकार्यत्वकारणत्वान्यतरावच्छेदकत्वस्य प्रपञ्चसामान्ये सत्त्वात् प्रपञ्चस्य ब्रह्मशरीरत्वोपपत्तिरिति, "यस्यात्मा शरीरम्", "यस्य पृथिवी शरीरम्", "जगत् सर्वं शरीरं ते" इत्यादिव्यवहारोपपत्तिः। तत्र षष्ठ्यर्थाधेयत्वस्य कार्यत्वकारणत्वान्यतरस्मिन्नन्वयात् ब्रह्मनिष्ठकारणत्वकार्यत्वान्यतरावच्छेदिका पृथिवीत्यादिरीत्या बोधः। जीवस्यापि शरीरविशिष्टस्यैव सुखदुःखादिकार्यकारित्वात् तच्छरीरस्य तन्निष्ठकारणतावच्छेदकत्वात् एतज्जीवस्येदं शरीरमित्यादिव्यवहारनिर्वाहः। यद्यपि जीवस्य सुखादिकार्यं प्रति न शरीरविशिष्टत्वेन कारणत्वम्; शरीरविशिष्टात्मत्वेन आत्मविशिष्टशरीरत्वेन वा कारणतेत्यत्र विनिगमनाविरहेण गुरुतरकार्यकारणभावद्वयापत्तेः। किन्तु दण्डचक्रादिन्यायेन शरीरस्यात्मनश्च प्रत्येकमेव कारणताद्वयमिति एतज्जीवस्येदं शरीरमित्यादिकं नोपपद्यते—तथापि उक्तलक्षणे कारणतायाः प्रयोजकतासाधारणरूपेणैव निवेशेन शरीरात्मनोः प्रत्येकं कारणत्वेऽपि एकविशिष्टापरत्वरूपसामग्रीत्वेन कार्योत्पत्ति-

दनेन परशेषत्वेऽपि स्वशेषत्वस्य सांसिद्धिकस्य निवर्तयितुमशक्यत्वादिति ॥ अत्रेदं चतुर्थमपि लक्षणत्रयफलितं श्रीभाष्यकाराभिप्रेतं लक्षणमुच्यते — यस्य चेतनस्य यद्द्रव्यमपृथक्सिद्धविशेषणं द्रव्यम्, तत् तस्य शरीरमिति। यावत्सत्त्वमसम्बन्धानर्हत्वमपृथक्सिद्धत्वम्। आधेयत्वविधेयत्वशेषत्वानि अपृथक्सिद्धेरवान्तरभेदा इह विवक्षिताः। व्यवच्छेद्यं तु स्पष्टमेव। एतेन एतदपि परिहृतम्,

अवान्तरभेदा इति। व्याप्या इत्यर्थः स्पष्टमेवेति। पृथक्सिद्धस्य व्यवच्छेद्यत्वादिति भावः।

---

प्रयोजकत्वाक्षतेः, जीवनिष्ठप्रयोजकतावच्छेदकत्वमादायैव उक्तव्यवहारोपपत्तिः। उक्तावच्छेदकतायाम् अपृथक्सिद्धिसंबन्धावच्छिन्नत्वनिवेशाच्च भृत्यविशिष्टराजादेः कार्यकारित्वेऽपि न, भृत्यो राजशरीरमिति व्यवहारापत्तिः, राजनिष्ठकार्योत्पादकतायां भृत्यस्य स्वस्वामिभावसंबन्धेनावच्छेदकत्वेऽपि अपृथक्सिद्धिसंबन्धावच्छिन्नावच्छेदकत्वविरहात्। ज्ञानमेतस्य शरीरमिति व्यवहारवारणाय च ज्ञानावच्छिन्नानुयोगिताकत्वनिवेशः। एतेन विनिगमनाविरहेण जीवविशिष्टस्य शरीरस्यापि कार्योत्पत्तिप्रयोजकत्वेन जीवः शरीरस्य शरीरमिति व्यवहारापत्तिः; शरीरनिष्ठकार्योत्पादकतायामपृथक्सिद्धिसंबन्धेन जीवस्यावच्छेदकत्वादिति निरस्तम्। शरीरनिष्ठकार्योत्पादकतायां स्वानुयोगिकापृथक्सिद्धिसंबन्धप्रतियोगित्वरूपाधेयत्वसंबन्धेन जीवस्यावच्छेदकत्वेऽपि ज्ञानावच्छिन्नानुयोगिताकत्वसंबन्धेनातथात्वात् मुक्तादेरपि शरीरविशिष्टत्वेनैव विहारादिकार्यजनकत्वात् न तच्छरीरादावव्याप्तिरिति — तन्न; नित्यविभूतिनित्यसूर्यादिविशिष्टतया ब्रह्मणः कारणत्वस्य कार्यत्वस्य वा विरहेण तत्र ब्रह्मशरीरत्वानुपपत्तेः।

शरीरपदप्रवृत्तिनिमित्ततया भाष्यकाराभिप्रेतं निष्कृष्टं लघुलक्षणमाह अत्रेदमिति। चेतनस्येति। चैतन्यविशिष्टस्येत्यर्थः। तथाच चैतन्यावच्छिन्नानुयोगिताकापृथक्सिद्धिसंबन्धप्रतियोगित्वविशिष्टद्रव्यत्वं शरीरशब्दप्रवृत्तिनिमित्तमिति फलितम्। अस्येदं शरीरमित्यत्र षष्ठ्यर्थाधेयत्वस्य शरीरपदार्थैकदेशानुयोगितायामन्वयात् एतन्निष्ठचैतन्यावच्छिन्नानुयोगिताकापृथक्सिद्धिसंबन्धप्रतियोगिद्रव्याभिन्नमिदमिति बोधः। तदीयधर्मभूतज्ञाने तच्छरीरत्वव्यवहारवारणाय चैतन्यावच्छिन्नेति। तद्गतक्रियादिषु तद्वारणाय द्रव्यत्वनिवेशः। यावत्सत्त्वमसंबन्धानर्हत्वमिति। प्रतियोग्यनुयोग्युभयसत्तादशायां निवर्तयितुमशक्यः संबन्धविशेष इत्यर्थः। स च संयोगार्हयोः संयोगरूप एव; तदनर्हयोस्तु स्वरूपात्मक इति विवेकः। नन्वाधेयत्वविधेयत्वशेषत्वैः कथमपृथक्सिद्धेः फलितत्वम्; तेषामपृथक्सिद्धिशून्येऽपि सत्त्वादित्यत आह आधेयत्वेति। अवान्तरभेदाः व्याप्याः। इह विवक्षिता इति। तथाचाधेयत्वादिसामान्यस्य अपृथक्सिद्धिव्याप्यत्वविरहेऽपि इह विवक्षितानामाधेयत्वादीनां प्रागव्याख्यातस्वरूपाणामपृथक्सिद्धिव्याप्यत्वाक्षतेः तस्याः फलितत्वसंभव इति भावः। व्यवच्छेद्यमिति। चैतन्यावच्छिन्नत्वादिनिवेशव्यावर्तनीयमित्यर्थः। स्पष्टमिति। प्रागुपदर्शितरीत्येति भावः।

उक्तरूपस्यैव शरीरपदप्रवृत्तिनिमित्तत्वे नियामकं दर्शयति एतेनेति। उक्तलघुभूतप्रवृत्तिनिमित्तप्रदर्शनेनेत्यर्थः। एतदपि वक्ष्यमाणदूषणमपि। परिहृतमिति। भाष्योक्तरूपाणां त्रयाणामपि दर्शितलघुभूतप्रवृत्तिनिमित्तोपलक्षकत्व एव तात्पर्यात्; प्रवृत्तिनिमित्तत्वे तात्पर्याभावादिति भावः।

यदुत, शरीरशब्दस्य अन्यतमं वा, त्रीण्यपि वा, त्रिकं वा प्रवृत्तिनिमित्तम्? न प्रथमः; "आधेयत्व-विधेयत्वशेषत्वानि शरीरशब्दप्रवृत्तिनिमित्तानि" इति भाष्यविरोधात्। न द्वितीयः; गौरवात्, अनेकार्थत्वप्रसङ्गाच्च। न तृतीयः; गौरवात्। भिन्नलक्षणपक्षे चास्वारस्यादिति॥

त्रिभिरुपलक्षितस्यैव चेतनापृथक्सिद्धत्वस्य प्रवृत्तिनिमित्तत्वात् न कश्चित् दोषः।

ईश्वरतज्ज्ञानव्यतिरिक्तं द्रव्यं शरीरमिति वा तटस्थलक्षणम्। भाष्ये शरीरत्वस्य पितृत्वादिवत्

---

ननु एषां त्रयाणां मध्ये किमेकस्यैव प्रवृत्तिनिमित्तत्वम्, उत पर्यायेण त्रयाणामपि प्रवृत्तिनिमित्तत्वम्, उत सर्वस्मिन्नपि प्रयोगे त्रयाणां मिलितानामेव प्रवृत्तिनिमित्तत्वम् इति विकल्प्य क्रमेण दूषयति यदुतेत्यादिना। भाष्यविरोधादिति। "विवक्षितगुणोपपत्तेश्च" इति सूत्रभाष्यविरोधादित्यर्थः। गौरवादिति। नानाशक्तिकल्पनागौरवादिति भावः। अनेकार्थत्वप्रसङ्गाच्चेति। एतच्छब्दकरणकाभिधानक्रियायामिदमेव कर्म, नान्यदिति प्राग्गृहीतस्य नियमस्य भङ्गप्रसङ्गादिति भावः। सिंहावलोकनेन दूषणान्तरमाह भिन्नलक्षणपक्षे चेति। अस्वारस्यादिति। वाशब्दाद्यभावादिति भावः। तटस्थलक्षणमिति।

---

दूषणं विशदयति यदुतेत्यादिना। अन्यतमंवेत्यादि। त्रिष्वेकमेव प्रवृत्तिनिमित्तम्, इतरन्न तथेति प्रथमकल्पः। त्रीण्यपि प्रातिस्विकरूपेण प्रवृत्तिनिमित्तानीति द्वितीयः। धर्मत्रयं त्रित्वेन प्रवृत्तिनिमित्तमिति तृतीयः। भाष्यविरोधादिति। विवक्षितगुणोपपत्तेश्चेति सूत्रस्थेनोपदर्शितभाष्येण त्रयाणां प्रवृत्तिनिमित्तत्वकण्ठोक्तेरिति भावः। इदमुपलक्षणम्; कस्य प्रवृत्तिनिमित्तत्वम्, कस्य नेत्यत्र नियामकाभाव इति बोध्यम्। गौरवादिति। नानाशक्तिकल्पनयेति भावः। अनेकार्थत्वप्रसंगादिति। प्रयोगभेदेन नानाधर्मबोधप्रसंगादित्यर्थः। एकधर्मबोधस्यैवानुभाविकत्वादिदमनुपपन्नमिति भावः। गौरवादिति। अत्यन्तगौरवादित्यर्थः। एकैकस्य प्रवृत्तिनिमित्तत्वेऽपि चेतनापृथक्सिद्धद्रव्यत्वापेक्षया प्रवृत्तिनिमित्तशरीरगौरवमस्त्येव। मिलितत्रयस्य त्रित्वेन प्रवृत्तिनिमित्तत्वे सुतरां गौरवमिति बोध्यम्। सिंहावलोकनेन प्रथमद्वितीयकल्पयोर्दूषणान्तरमाह भिन्नेति। अस्वारस्यादिति। वाकाराद्यभावादिति भावः। एकस्य प्रवृत्तिनिमित्तत्वम्, इतरयोर्नेति पक्षे हि वाकार आवश्यकः। त्रयाणां प्रातिस्विकरूपेण तथात्वे चकार आवश्यकः। तदुभयविरहादस्वारस्यमिति। त्रिभिरुपलक्षितस्यैवेति। तथा च, "आधेयत्वविधेयत्वशेषत्वानि शरीरशब्दप्रवृत्तिनिमित्तानि' इति भाष्ये प्रवृत्तिनिमित्तशब्दस्तदुपलक्षणपर इति भावः। उपलक्षणत्वं ज्ञापकत्वम्। उपदर्शिताधेयत्वविधेयत्वशेषत्वानां चेतनापृथक्सिद्धद्रव्यत्वरूपप्रवृत्तिनिमित्तव्याप्यतया तज्ज्ञापकत्वमक्षतम्। यद्यप्येवंसति विवक्षितगुणोपपत्तेश्चेति सूत्रे, "प्राणो यस्य शरीरम् = आधेयं विधेयं शेषभूतञ्च स प्राणशरीरः" इति भाष्यासंगतिः। शरीरशब्देनाऽऽधेयत्वादेरलाभात्। न हि चेतनापृथक्सिद्धद्रव्यत्वरूपशरीरशब्दप्रवृत्तिनिमित्तेनाऽऽधेयत्वाद्याक्षेपः संभवति; आधेयत्वादीनां व्याप्यत्वस्यैवोक्तत्वात्; व्यापकेन व्याप्यानामाक्षेपायोगात्। न हि वह्निना धूमाक्षेपः संभवति—तथापि चेतनापृथक्सिद्धद्रव्यत्वरूपशरीरशब्दप्रवृत्तिनिमित्तस्य प्रागुपदर्शिताधेयत्वादिव्यापकत्वस्येव तद्व्याप्यत्वस्यापि सत्त्वान्नानुपपत्तिः; तेन तदाक्षेपसंभवात्। तटस्थलक्षणमिति। शरीरशब्द-

सप्रतियोगिकत्वसूचनाय, देवत्वमनुष्यत्वद्विपात्त्वाद्यवान्तरभेदानामप्रयोजकत्वसूचनाय च, "यस्य चेतनस्य यद्द्रव्यम्" इत्यादिनिर्देशः। प्रतियोगिनिर्देशरहिते लक्षणे यथाप्रमाणं प्रतियोगिविशेषव्यवस्था। यथा वैशेषिकादीनां लक्षणेषु सप्रतिसम्बन्धिकगुण-सामान्य-विशेष-समवायाभावादीनां प्रतिसम्बन्धिनिर्देशरहितेषु च लक्षणेषु, 'कर्मान्यत्वे सति जातिमात्राश्रयो गुणः', 'नित्यमेकमनेक-

---

प्रतियोगिशून्यसाधारणलक्षणमित्यर्थः। **अप्रयोजकत्वसूचनायेति**। शरीरत्वाप्रयोजकत्वसूचनायेति भावः। ननु प्रतियोगिनिर्देशरहितस्येश्वरधर्मभूतज्ञानव्यतिरिक्तद्रव्यत्वस्य शरीरलक्षणत्वे तस्य प्रतियोगिघटितमूर्तिकत्वाभावेन सर्वं सर्वशरीरं स्यात्, न हि गोः कश्चित् प्रति गौः, कश्चित् प्रति अगौः" इत्याशङ्क्याह **प्रतियोगिनिर्देशरहितेऽपीति**।

**जातिमात्राश्रय इति**। जातिमात्रस्य समवायसम्बन्धेनाश्रय इत्यर्थः। अतः प्रमेयत्वसमवायाभावाश्रयत्वमादाय नासम्भवः। अत्र **जात्याश्रय** इत्यनेन सामान्यादीनां व्युदासः। मात्रपदेन

---

प्रवृत्तिनिमित्तत्वशून्यः शरीरव्यवहारविषयताज्ञापकः शरीरासाधारणधर्म इत्यर्थः। गोः सास्नादिमत्त्ववदिति भावः। वाकारः उक्तज्ञापकत्वे लक्षणान्तरेण विकल्पबोधकः। ननु तर्हि भाष्ये अन्यथा शरीरलक्षणप्रणयनं किमर्थमत्यत आह **भाष्ये इति**। **अप्रयोजकत्वसूचनायेति**। शरीरत्वव्यवहारतदभावानियामकत्वसूचनायेत्यर्थः। भाष्यस्य शरीरशब्दप्रवृत्तिनिमित्तलक्षणार्थमेव प्रवृत्तत्वात् उक्ततटस्थकरणं नाभिहितमिति भावः। ननु प्रतियोगिनिर्देशनिरपेक्षस्य उक्तधर्मस्य शरीरलक्षणत्वे, अस्येदं शरीरम्, नेतरस्येत्येवंविधव्यवहारानुपपत्तिरित्यत आह **प्रतियोगिनिर्देशरहितेऽपीति**। प्रतियोगिनिर्देशनिरपेक्षेऽपीत्यर्थः। **यथाप्रमाणमित्यादि**। उक्ततटस्थलक्षणस्य प्रतियोगिनिर्देशनिरपेक्षत्वेऽपि शरीरशब्दप्रवृत्तिनिमित्तभूतस्य ज्ञानावच्छिन्नानुयोगिताकापृथक्सिद्धिसंबन्धप्रतियोगिद्रव्यत्वस्य स्वघटकानुयोगित्वे चेतनविशेषनिष्ठत्वान्वये नियताकांक्षतया तदन्वयाधेयत्वार्थक-अस्येतिनिर्देशस्यावश्यकतया प्रमाणानुरोधेन, अस्येदं शरीरं नेतरस्येत्येवंविधव्यवस्थितव्यवहारः सिध्यतीति भावः। प्रतियोगिनिर्देशनिरपेक्षधर्माणां ससंबन्धिकार्थतटस्थलक्षणत्वस्वीकारेऽपि प्रतियोगिविशेषनियताकांक्षतद्धर्मप्रवृत्तिनिमित्तकशब्दसमभिव्याहारस्थले प्रमाणानुरोधेन प्रतियोगिविशेषनिर्देशघटितव्यवस्थितव्यवहारसिद्धौ दृष्टान्तमाह **यथेति**। **वैशेषिकादीनामिति**। अत्राभिमतत्वमभिहितत्वं वा संबन्धः षष्ठ्यर्थः। **लक्षणेष्विति** निर्धारणे सप्तमी। समुदायघटकत्वं तदर्थः। तदन्वयश्चोत्तरत्र **लक्षणेष्वि**त्यनेन। तथाच वैशेषिकाद्युक्तलक्षणसमुदायान्तर्गतेषु ससंबन्धिकार्थसंबन्धिषु कतिपयलक्षणेषु प्रतियोगिनिर्देशनिरपेक्षेष्वपि प्रतियोगिविशेषनियताकांक्षतद्धर्मप्रवृत्तिनिमित्तकशब्दसमभिव्याहारस्थले यथा प्रमाणानुरोधेन प्रतियोगिविशेषनिर्देशघटितव्यवस्थितव्यवहारसिद्धिः, तद्वदित्युक्तं भवति। **जातिमात्राश्रय इति**। जात्यतिरिक्तनिष्ठसमवायसंबन्धावच्छिन्नाधेयतानिरूपकत्वे सति समवायसंबन्धावच्छिन्नाधेयतानिरूपकत्वं जातिमात्राश्रयत्वम्। तेन प्रमेयत्वाद्याश्रयत्वमादाय नासम्भवः। न वा कालिकविशेषणतया जात्याद्याश्रये ध्वंसेऽतिव्याप्तिः। अत्र कर्मण्यतिव्याप्तिवारणाय **कर्मान्यत्वे सतीति**। सामान्यादौ तद्वारणाय **जातीति**। द्रव्ये तद्वारणाय **मात्रेति**। यद्यपि **जातिमात्राश्रय** इत्यनेन जात्यतिरिक्तनिष्ठसमवायसंबन्धावच्छिन्नाधेयता-

समवायि सामान्यम्', 'अजातिरेकवृत्तिर्विशेषः', 'नित्यसम्बन्धः समवायः' इत्यादिषु ॥

द्रव्यव्युदासः । अजातिरेकवृत्तिरिति । अजातिरिति । जातिमतां द्रव्यगुणकर्मणां व्युदासः । एकवृत्तिरिति सामान्यसमवाययोर्व्युदासः ॥

निरूपकत्वशून्यत्वे सति जातिनिष्ठसमवायसंबन्धावच्छिन्नाधेयतानिरूपकत्वमेव लभ्यते—तथापि जातिनिष्ठत्वनिवेशे प्रयोजनाभावात् तदनिवेशः । अत्रोक्तगुणलक्षणस्य प्रतियोगिनिर्देशनिरपेक्षत्वेऽपि जातिविशेषप्रवृत्तिनिमित्तकगुणशब्दस्य(?) बहुत्र स्वाश्रयाभिधेयत्वांशे नियताकांक्षतया, गन्धः पृथिव्या गुणः; न जलादेः' इत्येवं विधव्यवहारोपपत्तिः । नित्यमित्यादि । संयोगादिष्वतिव्याप्तिवारणाय नित्यमिति । ध्वंसाप्रतियोगित्वं प्रागभावाप्रतियोगित्वं वा तत्त्वम् । न तदुभयम्; प्रयोजनाभावात् । कालादिवारणायानेकानुगते(कसमवायी?)ति । अनेकसमवेतत्वं तदर्थः । तेनाऽऽत्मादेरनेककालवृत्तित्वेऽपि न तद्दोषतादवस्थ्यम् । परमाणुपरिमाणादावतिव्याप्तिवारणायानेकेति । न च अनेकत्वमेकभिन्नत्वम् । तथा चैकत्वावच्छिन्नप्रतियोगिताकभेदवन्निरूपितसमवायसंबन्धावच्छिन्नाधेयत्वं पर्यवसितमिति कथं परमाणुपरिमाणादिवारणम् । उभयं नैकमिति प्रतीतिसिद्ध-एकत्वावच्छिन्नप्रतियोगिताकभेदस्य प्रत्येकं परमाणौ वृत्त्यनपायात्; उभयस्य प्रत्येकानतिरिक्तत्वादिति वाच्यम्—एकत्वावच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदकपर्याप्त्यवच्छेदकताकनिरूपकताकसमवायसंबन्धावच्छिन्नाधेयत्वस्यैव विवक्षिततया दोषविरहात् । उभयत्वावच्छिन्ननिरूपकताकाधेयत्वस्य परमाणुपरिमाणादावसत्त्वात् । एकमिति स्वरूपाख्यानमात्रम्; न तु तदपि लक्षणघटकम्; प्रयोजनाभावात् । अत्रोक्तसामान्यलक्षणस्य प्रतियोगिनिर्देशनिरपेक्षत्वेऽपि, समानानां भावः सामान्यमिति व्युत्पत्तिसिद्धस्यार्थस्य ससंबन्धिकतया प्रमाणानुरोधेन तत्तत्संबन्धिनिर्देशव्यवस्थोपपत्तिः । अजातिरिति । जातिशून्य इत्यर्थः । अनेन द्रव्यगुणकर्मणां व्यावृत्तिः । एकवृत्तिरिति । एकमात्रसमवेत इत्यर्थः । एकमात्रसमवेतत्वञ्च स्वप्रतियोगिसमवेतत्व-स्वाश्रयसमवेतत्वोभयसंबन्धेन भेदविशिष्टान्यत्वे सति समवेतत्वम् । नित्यद्रव्यनिष्ठध्वंसभेदमादायासंभववारणाय स्वप्रतियोगिसमवेतत्वनिवेशः । ध्वंसनिष्ठनित्यद्रव्यभेदमादाय तद्वारणाय स्वाश्रयसमवेतत्वनिवेशः । अत्रोक्तलक्षणस्य प्रतियोगिनिरपेक्षत्वेऽपि व्यावर्तकार्थकविशेषशब्दस्य ससंबन्धिकार्थकतया उक्तव्यवस्थोपपत्तिरिति । नित्येति । संयोगवारणाय नित्यत्वनिवेशः । तच्च ध्वंसाप्रतियोगित्वं प्रागभावाप्रतियोगित्वं वा; न तूभयम्; प्रयोजनाभावात् । आत्मादिवारणाय संबन्धत्वनिवेशः । तच्च सांसर्गिकविषयत्वम् । यद्यप्येवमपि अत्यन्ताभावादिस्वरूपसंबन्धेऽतिव्याप्तिः प्रसज्यते, तथापि संबन्धिभिन्नसंबन्धत्वस्य विवक्षिततया न दोषः । न च रूपसमवायवान् घट इति प्रतीतिविषयस्वरूपसंबन्धमादाय संबन्धित्वसत्त्वादसंभवप्रसङ्ग इति वाच्यम्; संबन्धिभिन्नसंबन्धत्वस्य [1]स्वनिरूपितविशेष्यता-

1 रूपसमवायवान् घट इत्यत्र समवायात्मकस्वरूपस्य समवायात्मकसंबन्धैक्येऽपि रूपवान् घट इत्यत्र संबन्धिभिन्नत्वमस्ति । तत्र निरूपकभेदेन विषयताया भेदात् रूपीयसांसर्गिकविषयताग्रहणे तन्निरूपितप्रकारताविशेष्यताद्रूपघटभिन्नसमवायनिष्ठत्वं तस्या इति समन्वयः । संबन्धिभिन्नत्वमित्येतत्स्थाने स्वभिन्नसंबन्धिकत्वमित्यपि निवेदयेत । तदन्यत् । समन्वयः पूर्ववत् ।

अन्यैस्तु, "चेष्टेन्द्रियार्थाश्रयः शरीरम्" इति सूत्रितम्। तत्र अन्त्यावयवित्वे सति चेष्टाश्रयत्वमेकं लक्षणम्। तद्वि(तथैव वि)शेषिते(ते इ?)न्द्रियाश्रयत्वभोगायतनत्वे द्वे। तत्र चेष्टाशब्देन क्रियामात्रविवक्षायां अतिव्याप्तिर्व्यक्ता। प्रयत्नवदात्मसंयोगासमवायिकारणकक्रियाविवक्षायां प्रयत्नवदीश्वरसंयोगासमवायिकारणकक्रियाश्रयेषु तच्छरीरतया तैरनभ्युपगतेषु भूभूधरादिषु अतिव्याप्तिः। प्रयत्नवज्जीवेतिविशेषणे प्राणादिषु अतिव्याप्तिः। बुद्धिपूर्वकप्रयत्नेति विशेषणेऽपि बुद्धिपूर्वकाकुञ्चनप्रसारणादिदशायां तेष्वेव अतिव्याप्तिः॥ वाय्वादेरन्त्यावयवित्वं नास्तीति चेत्; कस्य तर्ह्यस्ति? घटादेरिति चेन्न; तत्रापि अनेकघटपटादिभिर्भित्तिकन्थादिनिर्माणे तदसिद्धेः॥ तत्र तदारम्भो नास्तीति चेत्, अन्यत्रापि

---

**अन्त्यावयवित्वे सती**ति। सत्यन्तं हस्तादावतिव्याप्तिवारणाय। घटादावतिव्याप्तिवारणाय विशेष्यम्। **तथैव विशेषिते**ति। अन्त्यावयवित्वेन विशेषितेत्यर्थः। **भोगायतनत्वे इ**ति। सूत्रस्थार्थशब्दस्य पुरुषार्थपरतया भोगपरत्वमिति भावः। **अतिव्याप्तिर्व्यक्ते**ति। घटादाविति भावः। **ईश्वरसंयोगासमवायिकारणके**ति। औत्पातिकमहीपर्वतकम्पादौ वायुसंयोगादिरूपकारणान्तराभावेन ईश्वरसंयोगस्यैवासमवायिकारणत्वादिति भावः। **आकुञ्चनप्रसारणादी**ति। प्राणायामदशायां प्राणवायुरेचनपूरणयोर्बुद्धिपूर्वकप्रयत्नवदात्मसंयोगासमवायिकारणकत्वादिति भावः। **वाय्वादे**रिति। वाय्वादेः संसर्गिद्रव्यत्वेन वाय्वन्तरसंसर्गे पुनरप्यवयव्यारम्भसम्भवेन अन्त्यावयवित्वासम्भवादिति भावः। **अनेकघटपटादिभि**रिति। सुधालेपनादृश्यसन्धिबन्धैर्घटैः कुड्यस्य, सूचिसूत्रानुवेधादृश्यसन्धि-

---

बन्धेद-स्वनिरूपितप्रकारतावच्छेदोभयसमानाधिकरणसांसर्गिकविषयतारूपतया दोषविरहात्। 'रूपवान् घट' इत्यादिप्रतीतिनिरूपितसांसर्गिकविषयतामादाय लक्षणगमनसंभवात्। अत्र नित्यत्वविशिष्टसांसर्गिकविषयतावानित्यादिनिर्देशे प्रतियोग्याकांक्षाविरहेऽपि समवायसंबन्धादिशब्दस्वाभाव्यात् तदाकांक्षानैयत्येव प्रतियोगिनिर्देशव्यवस्थोपपत्तिः। इत्यादीति **आदि**शब्देन भावभिन्नोऽभाव इत्यभावलक्षणसंग्रहः। तत्र भावभिन्नत्वस्य ससंबन्धिकत्वविरहेऽप्यनुयोगिताविशेषरूपाभावपदप्रवृत्तिनिमित्तस्य ससंबन्धिकतया संबन्धविशेषनिर्देशव्यवस्थोपपत्तिरिति॥ **अन्त्यावयवित्वे सती**ति। द्रव्यसमवायिकारणभिन्नजन्यद्रव्यत्वमन्त्यावयवित्वम्। हस्तादिवारणाय सत्यन्तम्, घटादिवारणाय विशेष्यम्। **तद्विशेषिते**ति। 'अन्त्यावयवित्वविशेषितेत्यर्थः। **तथैव विशेषिते**ति पाठेऽप्ययमेवार्थः। **भोगायतने**ति। सूत्रस्थार्थशब्दस्य प्रयोजनार्थकस्य पुरुषार्थरूपभोगपरत्वमिति भावः। **अतिव्याप्ति**रिति। घटादावित्यादिः। **ईश्वरसंयोगासमवायिकारणके**ति। औत्पातिकभूपर्वतकम्पादौ कारणान्तरासंभवात् प्रयत्नवदीश्वरसंयोगस्यैवासमवायिकारणत्वमावश्यकमिति। **प्राणादिष्वतिव्याप्ति**रिति। जीवनपूर्वकयत्नवदात्मसंयोगासमवायिकारणकक्रियामादायेति भावः। **आकुञ्चनप्रसारणादी**ति। बुद्धिपूर्वकोच्छ्वासादिदशायामित्यर्थः। इहाकुञ्चनं=अन्तर्देशसंयोगानुकूलक्रियोत्पादनम्, प्रसारणं=बहिर्निःसारणम्। **वाय्वादे**रिति। आदिना तेजसो जलस्य च ग्रहणम्। **अन्त्यावयवित्वं नास्ती**ति। वाय्वन्तरादिसंयोगे अवयव्यन्तरारम्भादिति भावः। **अनेकघटपटादिभि**रिति। सुधालेपनादृश्यसन्धिबन्धैरनेकैर्घटैर्भित्तिनिर्माणे सूचिसूत्रानुवेधादृश्यसन्धिबन्धैरनेकैः पटैः कन्थापटकुटिकादिनिर्माणे चेत्यर्थः। **तदसिद्धे**रिति। अन्त्यावयवित्वासिद्धेरित्यर्थः। **अन्यत्रापी**ति। द्रव्यान्तरेष्व-

तथैव नास्तीत्येव तु सत्यम् (तत्त्वम्?)। अस्तु[1] तर्हि घटादयो मध्यावयविन इति (इतीति?) चेन्न; सर्वत्रापि तथाप्रसङ्गात् अन्त्यावयवित्वमाकाशकोरकायितमिति साधु तद्विशेषितं लक्षणम्॥ इन्द्रियाश्रयत्वम्, तत्समवायित्वम्, तत्संयोगित्वं वा स्यात्। न प्रथमः; अनभ्युपगमात्, इन्द्रियावयवानां तन्मते शरीरत्वप्रसङ्गाच्च। न द्वितीयः; घटादिष्वपि तत्सम्भवात्। यावत्सत्त्वमिन्द्रियसंयोगो विवक्षित इति चेत्; तदपि न। अनिमेषचक्षुषि प्रेक्षमाणे पुरुषे तदाननोत्पन्नविनष्टबुद्बुदप्रभृतिष्वतिव्याप्तेः। नित्यमनःपक्षे आत्मादिषु। तैः शरीरतया मृतशरीरस्याभ्युपगमाच्च। इन्द्रियसंयुक्तकृत्स्नप्रदेशं शरीरमिति चेन्न; मूर्त्तयोः शरीरेन्द्रिययोः सप्रतिघत्वविरोधेन कृत्स्नप्रदेशसंयोगाभावस्य युष्माभिरेव

---

बन्धानेकपटैश्च कन्थापटकुटिकादीनां निर्माणसम्भवादिति भावः। अन्यत्रापीति। प्राणादिष्वपीत्यर्थः। आकाशकोरकायितमिति। गगनकलिकावत् असदित्यर्थः॥ बुद्बुदप्रभृतिष्विति। न च प्रथमक्षणे वस्तुनो निर्गुणतया उत्पद्यमानबुद्बुदस्य निर्निमेषपुरुषचक्षुस्संयोगो नास्तीति वाच्यम्; ईदृशन्यायस्य शरीरेऽपि तुल्यतया असम्भवप्रसङ्गात्। आत्मादिष्विति। अतिव्याप्तेरित्यनुषङ्गः। आत्मादीनां सर्वदा मनोरूपेन्द्रियसंयुक्तत्वादिति भावः। मृतशरीरस्याभ्युपगमाच्चेति। ततश्च यावत्सत्त्वं

---

पीत्यर्थः। आकाशकोरकायितमिति। द्रव्यसमवायिकारणभिन्नजन्यद्रव्यत्वरूपमन्त्यावयवित्वं क्वचिदपि न संभवतीति तत् गगनकोरकवदसदित्यर्थः। ननु मनुष्यादिशरीरैर्द्रव्यान्तरानारम्भात् तेषामन्त्यावयवित्वमस्त्येवेति कथमसत्त्वमिति चेत्–उच्यते; द्रव्यसमवायिकारणभिन्नजन्यद्रव्यत्वं ह्यन्त्यावयवित्वमिति भवद्भिरभिधीयते। तत्र किमिदम् द्रव्यसमवायिकारणत्वम्? समवायसंबन्धावच्छिन्नद्रव्यनिष्ठकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणत्वं वा भाव्यवस्थावतः प्रागवस्थाश्रयत्वं वा। नाद्यः; समवायस्यासत्त्वेन तद्घटितकारणत्वासंभवात्। न द्वितीयः; मनुष्यादिशरीराणामपि युवत्वादिभाव्यवस्थावतां बालत्वादिप्रागवस्थाश्रयत्वसत्त्वेन द्रव्यसमवायिकारणतया तद्भिन्नत्वघटितान्त्यावयवित्वं न संभवतीति। इदमुपलक्षणम्—शिलारूपाहल्यादिशरीरे चेष्टाविरहेणाव्याप्तिः। एवं परकायप्रवेशस्थले प्रविष्टशरीरत्वव्यवहारप्रसङ्गः। अस्येदं शरीरमित्यत्र हि शरीरपदेन प्रयत्नावच्छिन्नजीवनिष्ठाधिकरणतानिरूपकसंयोगासमवायिकारणकक्रियावदन्त्यावयवी बोध्यते। तदेकदेशाधिकरणतायां अस्येतिषष्ठ्यर्थाधेयत्वान्वयः। तथाच परकायप्रवेशस्थले प्रयत्नवत्प्रविष्टात्मसंयोगासमवायिकारणकक्रियाया निर्विवादतया, प्रविष्टस्येदं शरीरमिति व्यवहारप्रसङ्गो दुर्वार इत्यपि बोध्यम्। यावत्सत्त्वमिन्द्रियसंयोग इति। स्वाश्रयकालत्वव्यापकस्वनिष्ठेन्द्रियसंयोगाधिकरणतावच्छेदकताकत्वमित्यर्थः। यद्यपि शरीरस्योत्पत्तिकालावच्छेदेन निर्गुणतया इन्द्रियसंयोगासंभवादसंभवः; तथापि स्वाश्रयसमयध्वंसाधिकरणस्वाश्रयकालत्वव्यापकत्वस्यैव निवेशनीयतया न दोषः—पूर्वोत्पन्नेन्द्रियक्रियया शरीरोत्पत्तिद्वितीयक्षणे तत्रेन्द्रियसंयोगसंभवात्। आत्मादिष्विति। अतिव्याप्तेरित्यनुषज्यते — यावत्सत्त्वं मनोरूपेन्द्रियसंयोगसत्त्वादिति भावः। मृतशरीरस्याभ्युपगमाच्चेति। तत्रेन्द्रियसंयोगाभावादव्याप्तिरिति भावः। इन्द्रियसंयुक्तकृत्स्नप्रदेशमिति। स्वावयत्व-

---

1 अस्त्वत्यस्य पूर्वान्वये स्वारस्याभावे, तत्कर्तृपरम् इतिशब्दान्तरमपेक्षितम्। तर्हीति। घटादितो मिथ्याघारम्भे इत्यर्थः।

अभ्युपगन्तव्यत्वात्, निरिन्द्रियशरीरान्तःप्रदेशविशेषस्य प्रामाणिकत्वाच्च ॥ युगपदनेकेन्द्रियावस्थितिदेशः शरीरमिति चेन्न; अवस्थितिरिति संयोगमात्रविवक्षायामाकाशादीनाम्, ईश्वरस्य च अस्मदादीन् प्रति शरीरत्वप्रसङ्गात्। अपृथक्सिद्धिविवक्षायामसिद्धेः, ईश्वरस्य अस्मत्पक्षेण शरीरत्वप्रसङ्गाच्च। [1]उपष्टम्भकत्वादिविवक्षायां प्राणेऽतिव्याप्तिः। यावत्सत्त्वमिन्द्रियासंयोगायोग्यं

तदिन्द्रियसंयुक्तत्वाभावात् तत्राव्याप्तिरिति भावः। ननु शरीरेन्द्रिययोर्न सप्रतिघत्वविरोधः; मूर्तयोरपि चक्षुस्स्पर्शनेन्द्रिययोरेकावच्छेदेन समावेशदर्शनेन परस्परप्रतिघातकत्वादर्शनात्, जलालोकयोरपि(रिव ?) परस्परप्रतिघातकत्वासम्भवाच्च। इतरथा विषयालोकसंयोगाभावेन जलान्तर्गतसिकताग्रहणाभावप्रसङ्गादित्य स्वरसादाह निरिन्द्रियशरीरेति। अत एव हि औदरजन्तुविशेषस्पर्शानुपलम्भ इति भाव। युगपदनेकेन्द्रियावस्थितिदेश इति। इन्द्रियावयवनिरासाय अनेकेत्युक्तम्। गोलकादिप्रदेशस्यापि चक्षुस्स्पर्शनाद्यनेकेन्द्रियाश्रयत्वात् तद्व्यावृत्त्यर्थं युगपदित्युक्तम्। सर्वेन्द्रियावस्थितिदेशत्वमित्यर्थः। अपृथक्सिद्धिविवक्षायामिति। अपृथक्सिद्धेन्द्रियकत्वविवक्षायामित्यर्थः। असिद्धेरिति। मृतशरीरे इन्द्रियाभावेन अपृथक्सिद्धत्वासिद्धेरित्यर्थः। अस्मत्पक्षेणेति। ईश्वरापृथक्सिद्धत्वात् जगत इति भावः। उपष्टम्भकत्वेति।

व्यापकेन्द्रियसंयोगाधिकरणताकमित्यर्थः। ततश्चोक्तबुद्बुदादिष्वन्तःप्रदेशे इन्द्रियसंयोगविरहान्नातिव्याप्तिः। न वा मृतशरीरेऽव्याप्तिः; तस्यैव मरणात्पूर्वमिन्द्रियसंयुक्तकृत्स्नप्रदेशत्वसत्त्वात्। यावत्सत्त्वं तथात्वस्यानिवेशादिति भावः। सप्रतिघत्वविरोधेनेति। एकमूर्तसंबन्धिनि मूर्तान्तरसंबन्धासंभवेनेत्यर्थः। नन्वेकमूर्तसंयोगिनि तादृशसंयोगावच्छेदकदेशावच्छेदेन मूर्तान्तरसंयोगासंभव एव सप्रतिघत्वविरोधः। अस्तु वा एकमूर्तसमवायिनि मूर्तान्तरसमवायासंभवः; न त्वेकमूर्तसमवायिनि मूर्तान्तरसंयोगासंभवः; प्रत्यक्षविरोधात्, घटद्वयसंयोगादेरसंभवप्रसङ्गाच्च। तथाच नोक्तदोषावकाशः; शरीरसमवायिषु शरीरावयवेषु इन्द्रियसंयोगाविरोधादित्यत आह निरिन्द्रियेति। प्रामाणिकत्वादिति। अन्यथा औदरजन्तुविशेषस्पर्शानुपलम्भानुपपत्तिप्रसङ्ग इति भावः। युगपदित्यादि। एककालावच्छिन्नानेकेन्द्रियसंबन्धवत्त्वं शरीरत्वमित्यर्थः। तथाच नेन्द्रियावयवेषु न वा घटादिष्वतिप्रसङ्गः। युगपदनेकेन्द्रियसंबन्धविरहादिति भावः। न च घटादिषु चक्षुस्त्वगुभयसंभवादतिव्याप्तिरिति वाच्यम्; चक्षुर्मनउभयसंबन्धित्वस्यैव विवक्षिततया दोषविरहात्। शरीरत्वप्रसङ्गादिति। अस्येदं शरीरमित्यत्र षष्ठ्यर्थो ज्ञानजनकत्वं इन्द्रियान्वयि। शरीरपदार्थश्चोक्तोभयसंयोगी। तथाच एतन्निष्ठज्ञानजनकोक्तोभयसंयोगीदमित्यन्वयबोधादुपदर्शितार्थस्याऽऽकाशादिष्वबाधात् आकाशमस्य शरीरम्, ईश्वरोऽस्य शरीरमिति व्यवहारप्रसङ्ग इति भावः। यदि च - युगपदनेकेत्यादिना सर्वेन्द्रियसंयोगित्वमेव विवक्षितमिति नोक्तदोषः; श्रोत्रस्याकाशरूपस्याकाशादिना संयोगविरहादित्युच्यते— तदाप्याहङ्कारिकेन्द्रियपक्षे दोषसत्त्वात्। प्राणेऽतिप्रसङ्गाच्च। अपृथक्सिद्धिविवक्षायामिति इन्द्रियप्रतियोगिकापृथक्सिद्धिसंबन्धवत्त्वं शरीरत्वमिति विवक्षायामित्यर्थः। असिद्धेरिति।(?) भवद्भिः शरीरेन्द्रिययोरयुतसिद्धत्वानुपगमादिति भावः। अस्मत्पक्षेणेति। सर्वस्यापि जगत ईश्वरापृथक्सिद्धविशेषणत्वस्यास्माभिरुपगमादिति भावः। उपष्टम्भकत्वादीति।

1 'यस्यानुग्रहेणानुगृहीतानि उपघाते चोपहतानि—साध्वसाधुषु प्रवर्तन्ते' इति न्यायभाष्योक्तं विमृशति उपष्टम्भकत्वेति।

शरीरमित्यपि दत्तोत्तरम्; ईश्वरादिषु अतिव्याप्तेर्दुष्परिहरत्वात्॥ इन्द्रियव्यतिरिक्तं प्राणव्यापाराधीनप्रवृत्तिनिवृत्त्यादिकं शरीरमिति चेन्न; आत्मनि मलादिषु च प्रसङ्गात्॥ सर्वप्रवृत्तिषु तादधीन्यं

इन्द्रियाणां स्वस्वकार्यजननसामर्थ्यापादकत्वमिन्द्रियोपष्टम्भकत्वमिति भावः। दत्तोत्तरमिति। मृतशरीरे अभावादिति भावः। ईश्वरादिष्विति। तन्मते मनसो नित्यत्वादिति भावः। सर्वप्रवृत्तिष्विति।

कार्योपयोगिसंबन्धवत्त्वमुपष्टम्भकत्वम्। तथाच ज्ञानप्रयोजकेन्द्रियसंबन्धवत्त्वं शरीरत्वमिति फलितम्। यद्यपीदं घटादिष्वतिप्रसक्तम्, तथापि स्वाविषयकज्ञानप्रयोजकत्वस्यैव विवक्षिततया न दोषः, घटाद्यविषयकज्ञाने घटचक्षुस्संयोगादेरहेतुत्वात् शरीराविषयकघटादिज्ञाने शरीरनिष्ठेन्द्रियसंयोगस्य प्रयोजकतया लक्षणसमन्वयः। तच्छरीरसंयुक्तेन्द्रियसंयोगात् तच्छरीरावच्छेदेनैवात्मनि ज्ञानं जायत इत्येवंविधनियमनिर्वाहाय द्रव्यवृत्तिलौकिकविषयतासंबन्धेन तच्छरीरावच्छिन्नचाक्षुषादिकं प्रति तच्छरीरसंयुक्तेन्द्रियसंयोगस्य समवायेन कारणत्वमिति रीत्या कार्यकारणभावस्य स्वीकरणीयतया शरीरेन्द्रियसंयोगस्य कारणतावच्छेदकघटकतया प्रयोजकत्वाक्षतेरिति भावः। अत्र कल्पे अस्येदं शरीरमित्यादौ षष्ठ्यर्थ आधेयत्वम्; तस्य च शरीरपदार्थैकदेशज्ञानेऽन्वय इति बोद्धव्यम्. उपष्टम्भकत्वादीति. आदिना विजातीयसंयोगपरिग्रहः। वैजात्यञ्च घटचक्षुस्संयोगादिव्यावृत्तं शरीरेन्द्रियसंयोगमात्रनिष्ठं जातिविशेषात्मकम्. तथाच इन्द्रियप्रतियोगिकविजातीयसंयोगवत्त्वं शरीरत्वमिति फलितम्। प्राणेऽतिव्याप्तिरिति। प्राणशरीरसंयोगस्य ज्ञानोत्पत्तिहेतुतायामविवादात् प्राणनिष्ठशरीरसंयोगस्य चेन्द्रियाश्रयसंयोगरूपतया इन्द्रियसंबन्धत्वसत्त्वेन ज्ञानप्रयोजकेन्द्रियसंबन्धस्य प्राणे सत्त्वादिति भावः। यदि च ज्ञानप्रयोजकेन्द्रियसंयोगवत्त्वमेव शरीरत्वमिति विवक्षयोक्तदोषो निवार्यते, तदा मनस्यतिव्याप्तिः; इन्द्रियमनस्संयोगस्य ज्ञानोत्पत्तिहेतुत्वात्, 'आत्मा मनसा संयुज्यते मन इन्द्रियेण' इत्यादिना तस्य ज्ञानहेतुत्वाभिधानात्। एवमात्मन्यप्यतिव्याप्तिः; ज्ञानहेतुभूतमनोरूपेन्द्रियसंयोगस्य तत्र सत्त्वात्। इन्द्रियप्रतियोगिकविजातीयसंयोगवत्त्वं शरीरत्वमित्यप्यनुपपन्नम्; तादृशवैजात्यसद्भावे प्रमाणाभावात् इत्याशयः। यावत्सत्त्वमिन्द्रियासंयोगायोग्यमिति। इन्द्रियसंयोगाभाववद्भिन्नमित्यर्थः। भेदस्याव्याप्यवृत्तित्वविरहात् कदाचिदिन्द्रियसंयोगाभावसत्त्वे तद्वद्भेदो न संभवत्येव। यदि पुनर्भेदस्यापि कालिकाव्याप्यवृत्तित्वमङ्गीक्रियते, तदा भेदनिरूपितानवच्छिन्नाधिकरणता वाच्या। दत्तोत्तरमिति। मरणानन्तरं तस्मिन्नेव शरीरे इन्द्रियसंयोगाभावस्य भवद्भिरभ्युपगमादिति भावः। ईश्वरादिष्विति। आदिना कालादिविभुपरिग्रहः। अतिव्याप्तेरिति। मनसो भवद्भिर्नित्यत्वाभ्युपगमेन विभुषु कदाचिदपीन्द्रियसंयोगाभावासंभवादिति भावः। इन्द्रियेत्यादि। इन्द्रियभिन्नत्वे सति प्राणव्यापाराधीनव्यापारवत्त्वं शरीरत्वमित्यर्थः। इन्द्रियवारणाय सत्यन्तम्; घटादिवारणाय विशेष्यम्। आत्मनीत्यादि। आत्माऽस्य शरीरम्, मलमस्य शरीरमिति व्यवहारप्रसङ्ग इत्यर्थः। अस्येति षष्ठ्यर्थोपकरणत्वस्य प्राणेऽन्वयात् तदात्मोपकरणीभूतप्राणव्यापाराधीनव्यापारवत्त्वरूपवाक्यार्थस्य तदात्मनि मले चाबाधादिति भावः। सर्वप्रवृत्तिष्वित्यादि। स्वव्यापारस्वव्यापकप्राणव्यापाराधीनत्वकत्वं विवक्षितमित्यर्थः। जीवन-

विवक्षितमिति चेन्न; असम्भवात्। न हि वायवाद्याकृष्यमाणशरीरादिप्रवृत्तिः प्राणाधीना। भोगायतनत्वमपि यदि भोगस्थानत्वमात्रम्, तदा गृहादिष्वतिव्याप्तिः। यदाश्रित्यैव आत्मा भोगवान् भवति, तत् भोगायतनमिति विवक्षितमिति चेन्न; अस्मन्मतेन लक्षणासम्भवात्। अशरीरस्यापि मुक्तस्य भोगविशेषाभ्युपगमात्॥ दुःखात्मकभोगो विवक्षित इति चेत्; तथापि इन्द्रियेषु अतिव्याप्तिः। ईश्वरमुक्तादिभिरिच्छागृहीतशरीरेषु अव्याप्तिश्च। स्वभ्रमवशेन भोगाश्रय इत्यपि

---

प्राणसञ्चारहेतुजीवनयोनिप्रयत्नस्य प्राणाधीनत्वाभावात् आत्मनि नातिव्याप्तिरिति भावः। **अस्मन्मतेनेति**। नैयायिकमते मुक्तस्य भोगाभावादिति भावः। **भ्रमवशेनेति**। भोगाश्रयत्वभ्रमविषयत्वमित्यर्थः। आत्मत्व-

---

योनिप्रयत्नस्य प्राणव्यापारहेतोः प्राणव्यापाराधीनत्वविरहात् नोक्तदोषावकाश इति भावः। ननु स्वजन्यज्ञानावच्छेदकत्वसंबन्धेनेन्द्रियवत्त्वं विवक्षणान्न घटादिष्वतिव्याप्तिरिति चेन्न; "इच्छागृहीताभिमतोरुदेहः" इत्यादिप्रमाणसिद्धभगवद्विग्रहेष्वव्याप्तेः; भगवद्ज्ञानस्य नित्यत्वात्; व्याप्यवृत्तित्वेन किञ्चिदवच्छिन्नत्वविरहाच्च। एवं शिलादिरूपाहल्यादिशरीरेष्वव्याप्तिर्बोद्धव्या। **भोगस्थानत्वमात्रमिति**। भोगहेतुत्वमात्रमित्यर्थः। **यमाश्रित्यैवेत्यादि**। यदात्मनिष्ठभोगत्वव्यापकं यत्संबन्धजन्यत्वम्, तत्त्वं तद्भोगायतनत्वम्। शरीरसंबन्धजन्यत्वस्य तादृशतया लक्षणसमन्वयः; गृहादिजन्यत्वस्यातथात्वान्नातिव्याप्तिरिति भावः। **अस्मन्मतेनेति**। नैयायिकमते मुक्तस्य भोगानुपगमादिति भावः। **असंभवादिति**। मुक्तभोगे शरीरजन्यत्वविरहेण व्यापकत्वायोगादिति भावः। **इन्द्रियेष्वतिव्याप्तिरिति**। इन्द्रियजन्यत्वस्य दुःखात्मकभोगत्वव्यापकत्वादिति भावः। अत्रेदं बोद्धव्यम्—दुःखात्मकभोगविवक्षायामप्यसंभवतादवस्थ्यम्; जन्मान्तरशरीरावच्छिन्नभोगसाधारणतदात्मवृत्ति भोगत्वव्यापकतया यच्छब्दोपात्तैकशरीरजन्यत्वेऽसंभवात्। न च यद्धर्मावच्छिन्नजन्यत्वत्वेन व्यापकत्वं विवक्षितम्, यद्धर्मपदञ्च शरीरत्वपरमिति वाच्यम्; आत्माश्रयप्रसङ्गात्। शरीरत्वस्यैवेह निर्वचनादिति। ननु भोगावच्छेदकत्वमेव भोगायतनत्वमिति न गृहादिष्वतिव्याप्तिः; शरीरावच्छेदेनैवात्मनि भोगोत्पत्त्या तत्र लक्षणसमन्वयश्च। न च वने सिंहनाद इत्यादौ सिंहकण्ठावच्छेदेन जायमानशब्दं प्रति वनस्येव देहावच्छेदेन जायमानभोगं प्रति गृहादेरप्यवच्छेदकत्वसंभवात् गृहादावतिव्याप्तितादवस्थ्यम्, गृहेऽस्य भोग इति व्यवहारेण गृहादेरप्यवच्छेदकत्वसिद्धेरिति वाच्यम्; भोगनिरूपितसाक्षात्संबन्धावच्छिन्नावच्छेदकताया एव विवक्षितत्वात् देह एव तत्सत्त्वात्, गृहादौ तदभावात्। अवच्छेद्याधिकरणसंबन्धस्यावच्छेदकतायां नियामकत्वात् गृहादेर्देहद्वारकपरम्परासंबन्धेनैवावच्छेदकत्वात्। एतदभिप्रायकमेव, "अपीतौ तद्वत्प्रसङ्गात्" इत्यत्र भाष्यम्, "यत्र वर्तमानस्यैव सुखदुःखोपभोगः तदेव भोगायतनम्" इति। वर्तमानस्यैवेत्यस्य साक्षात्संबद्धस्यैवेत्यर्थादुक्तार्थपरत्वं स्पष्टमिति चेन्न; परकायस्य प्रविष्टशरीरत्वप्रसङ्गात्। प्रविष्टात्मभोगं प्रति परस्य साक्षात्संबन्धेनैवावच्छेदकत्वात्, ईश्वरभोगस्य व्याप्यवृत्तित्वेनानवच्छिन्नतया इच्छागृहीतत्तच्छरीरेष्वव्याप्तेश्च। **भ्रमवशेनेति**। भोगाश्रयत्वभ्रमविषयत्वं आत्मत्वभ्रमविषयत्वं वा शरीरत्वमित्यर्थः। अस्येदं शरीरमित्यत्र षष्ठ्यर्थाधेयत्वस्य भ्रमेऽन्वयः। आत्मन्यतिव्याप्तिवारणाय भ्रमेति।

न ; तत्तद्वादिभिर्देहात्मतया बुध्यमानेषु इन्द्रियमनःप्राणेषु अतिव्याप्तेः । ईश्वरमुक्तादिशरीरेषु अव्याप्तेश्च ॥ शिरःपाणिपादादिमयं शरीरमिति चेत्—शिलापुत्रकादिष्वपि तत्सम्भवात् ॥ प्राणादिमत्त्वे सतीति चेन्न ; मृतशरीराद्यव्याप्तेः ॥ यदाकदाचित् प्राणादिसम्बन्धमात्रं विवक्षितमिति चेत् ; तथापि स्थावरादिशरीरेषु अव्याप्तिः । तेषु प्राणादिसत्त्वेऽपि पाणिपादादिसंस्थानाभावात् । एवं लक्षणान्तराण्यपि दूष्याणि । तत्र श्रुत्याद्यनुरोधेन पूर्वोक्तमेव लक्षणम् ॥

तदेतत् शरीरं द्विविधम्—नित्यम् अनित्यञ्चेति । तत्र नित्यं त्रिगुणद्रव्यकालजीवशुभाश्रयाद्यात्मकमीश्वरशरीरम् ; नित्यानाञ्च स्वाभाविकगरुडभुजगादिरूपम् । अनित्यञ्च द्विविधम्—अकर्मकृतं कर्म-

---

भ्रान्तिविषयत्वमिति यावत् । देह एवात्मभ्रमः ; नान्यत्रेति शङ्कितुरभिमानः । **यदाकदाचिदिति** । यदाकदाचित् प्राणादिमत्त्वे सति पाणिपादादिमत्त्वमित्यर्थः ॥

**शुभाश्रयाद्यात्मकमिति** । **शुभाश्रयः** परवासुदेवविग्रहः । तस्यैव शुभत्वात् , चेतस आश्रयत्वाच्च । **श्रीविष्णुपुराणे**, "समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः। तत् विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ॥ समस्तशक्तिरूपाणि तत् करोति जनेश्वर । देवतिर्यङ्मनुष्याख्याचेष्टावन्ति स्वलीलया ॥" इति प्रस्तुत्य, "शुभाश्रयः

---

यद्यपीदं घटादिसाधारणम् ; तथापि अपरोक्षभ्रमस्यैव निवेशनीयतया न दोषः, घटादिषु तादृशभ्रमविरहात् शरीर एव तादृशभ्रमसत्त्वादित्यभिप्रायः । **अतिव्याप्तेरिति** । इन्द्रियादिष्वपि, अहं काणः, अहं बधिर इत्याद्यपरोक्षभ्रमसत्त्वादिति भावः। **अव्याप्तेरिति**। ईश्वरस्येदं शरीरमित्यादिव्यवहारानुपपत्तेरित्यर्थः। षष्ठ्यर्थाधेयत्वस्य भ्रमे बाधादिति भावः । **यदाकदाचित् प्राणादिसंबन्धमात्रमिति** प्राणादिसंबन्धवद्भेदानधिकरणत्वे सति पाणिपादादिमत्त्वमित्यर्थः । तेन मृतशरीरे तदानीं प्राणसंबन्धविरहात् तद्घटितशरीरत्वाभावेनेदानीमस्य न शरीरत्वमिति व्यवहारप्रसङ्ग इत्यपास्तम् । तदानीं प्राणादिसंबन्धविरहेऽपि संबन्धवद्भेदस्य व्याप्यवृत्तेस्तत्रासत्त्वेन तदनधिकरणत्वस्य तत्र सर्वदा सत्त्वात् । ननु तद्भोगजनकादृष्टविशेषजन्यत्वं तच्छरीरत्वम् , भोगदृष्टविशेषस्य शरीरारम्भद्वारा भोगजनकत्वादित्यत **आह लक्षणान्तराण्यपीति** । **दूष्याणीति** । भोगजनकादृष्टजन्यत्वमात्रमिन्द्रियादिसाधारणम्। शरीरारम्भकादृष्टमात्रे विशेषश्च दुर्निरूपः। शरीरारम्भकत्वमेव विशेष इति चेत्–आत्माश्रयप्रसङ्गः; शरीरत्वशरीरे शरीरत्वप्रवेशात् एकेनैव विलक्षणादृष्टेन शरीरगृहारामक्षेत्राद्यनेकोत्पत्तिसंभवेन गृहादावतिप्रसङ्गश्चेति भावः । ननु चेतनापृथक्सिद्धद्रव्यत्वस्य शरीरलक्षणत्वे जीवानामीश्वरशरीरत्वप्रसङ्ग इति वैशेषिकादिशङ्काम् , "यस्यात्मा शरीरम्" इत्यादिश्रुत्यनुरोधादिष्टापत्त्या परिहरति **तत्रेति** । **शुभाश्रयेति** । शुभाश्रयः । परवासुदेवविग्रहः, तस्य हेयनिवर्तकत्वेन शुभत्वात् , आरुरुक्षुमनोगोचरतया आश्रयत्वाच्च । यद्यपि भगवदसाधारणविग्रहाणां सर्वेषामेव शुभाश्रयत्वमविगीतम् ; तथापि, "समस्ताश्शक्तयश्चैता नृप यत्र प्रतिष्ठिताः । तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् । समस्तशक्तिरूपाणि तत्करोति जनेश्वर देवतिर्यङ्मनुष्याख्याचेष्टावन्ति स्वलीलया ॥ जगतामुपकाराय न सा कर्मनिमित्तजा" इति प्रस्तुत्य, "शुभाश्रयः स चित्तस्य सर्वगस्य चलात्मनः" इति **श्रीविष्णुपुराणे**ऽभिधानात् तादृशप्रमाणप्रसिद्धत्वसूचनाय शुभाश्रयसंबन्धेन परवासुदेवविग्रहाभिधानम् । **महदादीति** । अत्र आदिपदेनावतारविग्रहाणामपि संग्रहः । अत्र केचित्—"सर्वे नित्याश्शाश्वताश्च

कृतञ्चेति । प्रथममीश्वरस्य महदादिरूपम् । तथा अनन्तगरुडादीनां मुक्तानाञ्च इच्छाकृततत्तद्रूपम् । कर्मकृतमपि द्विविधम् । स्वसङ्कल्पसहकृतकर्मकृतं केवलकर्मकृतञ्चेति। पूर्वं महतां सौभरिप्रभृतीनाम्। उत्तरञ्च अन्येषां क्षुद्राणाम् । पुनः शरीरं सामान्यतो द्विधा जङ्गममजङ्गमञ्चेति । काष्ठादीनां शिलादीनाञ्च अजङ्गमत्वमेव । यथा वृक्षगुल्मलतावीरुत्तृणानां तमो-मोह महामोह-तामिस्रान्धतामिस्र-

---

स चित्तस्य सर्वगस्य चलात्मनः" इति तस्यैव शुभाश्रयत्वाविष्करणात् । **महदादिरूपमिति** । अत्र आदिपदेन व्यूहविभवादीनामपि ग्रहणं केचिदाचक्षते ; "एतन्नानावताराणां निदानं बीजमव्ययम् । समस्तशक्तिरूपाणि तत् करोति जनेश्वर ।" इत्यादिस्वारस्यात् परविग्रहस्यैवानादित्वम् इतरेषां सादित्वमिति । अत एव वक्ष्यति **विग्रहे च विभवादयः** इति । केचित्तु, 'सर्वे नित्याः शाश्वताश्च देहास्तस्य महात्मनः ।' इत्यादिप्रमाणानुसारात् सर्वेषामपि भगवद्विग्रहाणामनादित्वमेव, प्रादुर्भावः परं सादिरित्याहुः ॥ ननु, "तमो मोहो महामोहस्तामिस्रो ह्यन्धसंज्ञितः । अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः ॥ पञ्चधाऽवस्थितः सर्गो ध्यायतोऽप्रतिबोधवान् । बहिरन्तश्चाप्रकाशः संवृतात्मा नगाह्वयः ॥" इति **तमोमोहमहामोहतामिस्रान्धतामिस्रसंज्ञितानां वृक्षगुल्मलतावीरुत्तृणानामेव** नगात्मकाजङ्गमसृष्टौ परिगणनात् शिलाकाष्ठादीनां पञ्चस्वनन्तर्भावात् जङ्गमदेवमनुष्यादिकोटावप्यनन्तर्भावात् शिलाकाष्ठादीनां न शरीरत्वम् । तच्छरीरे जीवानामप्यभावाच्च । अतो न द्वैविध्यमिति मन्वानं प्रति वृक्षगुल्मादिवत् तस्याप्यजङ्गमत्वमित्याह **काष्ठादीनामिति** । शिलाकाष्ठादीनामपि जीवशरीरत्वमस्तीत्यस्मिन्नंशे सम्मतिमाह—**तथाच**

---

देहास्तस्य महात्मन" इत्यादिप्रमाणानुरोधात् सर्वेषामपि भगवद्विग्रहाणान्नित्यत्वमेवेत्याह, तच्चिन्त्यम् ; अवतारविग्रहाणामनित्यत्वस्य बहुप्रमाणसिद्धतया तद्विरोधेन उक्तवचनस्य प्रवाहनित्यत्वपरताया एव वाच्यत्वात् । उक्तवचने नित्याश्शाश्वता इत्यनेन तथैव प्रतीतेश्च । शश्वत् भवाः पुनः पुनरुत्पन्नाः अत एव, नित्या इति हि तदर्थः । **महतां सौभरिप्रभृतीनामिति** । तपोजन्यादृष्टविशेषसहितेन स्वसङ्कल्पेनानेकशरीरपरिग्रहादिति भावः । नन्वेकैकतरशरीरेषु चेतनापृथक्सिद्धत्वविरहात् कथं शरीरत्वोपपत्तिरिति चेत्–उच्यते ; यदीयचैतन्यावच्छिन्नत्वचैतन्यनिष्ठत्वान्यतरवदनुयोगिताकापृथक्सिद्धिप्रतियोगि यत् द्रव्यं तत् तस्य शरीरमिति विवक्षणान्न दोषः ; उक्तस्थले [1]एकत्र चैतन्यावच्छिन्नात्मनिष्ठानुयोगिताकापृथक्सिद्धेः, अन्यत्र[1] चैतन्यनिष्ठानुयोगिताकापृथक्सिद्धेश्च सत्त्वेन लक्षणोपपत्तेः । अत्रेदं बोद्धव्यम् —अपृथक्सिद्धिप्रतियोगिद्रव्यत्वमेव शरीरपदप्रवृत्तिनिमित्तम् ; अस्येदं शरीरमित्यत्रानुयोगित्वं षष्ठ्यर्थः । तत्र प्रकृत्यर्थस्य स्वीयचैतन्यावच्छिन्नत्वतादृशचैतन्यनिष्ठत्वान्यतरसंबन्धेनान्वय इति । ननु शिलाकाष्ठादीनां क्वान्तर्भावः ? न तावत् जङ्गमे ; स्वतोऽन्यत्र गमनाभावात् । नाप्यजङ्गमे; इतरैरन्यत्र नयनेन गमनसद्भावात् इत्याशङ्क्य स्वतोगमनाभावादजङ्गमत्वमेवेत्यभिप्रायेणाह **काष्ठादीनामिति** । ननु यथाकथञ्चित् गमनसत्त्वाज्जङ्गमत्वमेवास्तामित्याशङ्क्याह **यथेति** । वृक्षादीनामपि केषाञ्चिदन्यत्रानयनसंभवात्तेषामपि जङ्गमत्वप्रसङ्गात् स्वतोगमनमेव जङ्गमत्वम्, तच्छून्यत्वमेवाजङ्गमत्वमित्याश्रयणीयमिति भावः । **तमोमोहेत्यादि** । इदञ्च

---

1 सौभरिजीवाधिष्ठितशरीरेऽपि आपादचूडं चैतन्यव्याप्त्या चैतन्यनिष्ठानुयोगिताकापृथक्सिद्धेः सुवचतया अन्यदनपेक्षितम् । नयद्युमणिभूमिकायामस्मत्कृतं शरीरलक्षणविवेचनमपि द्रष्टव्यम् ।

संस्थानाम् । शिलादिशरीरिणोऽपि जीवा विद्यन्ते इति अहल्यादिवृत्तान्तश्रवणात् सिद्धम् । तथाच वेदार्थसंग्रहे प्रोक्तम्, "अतो देवो मनुष्यो यक्षो राक्षसः पक्षी वृक्षो लता काष्ठं शिला तृणं घटः पट इत्यादयः सर्वे प्रकृतिप्रत्यययोगेन अभिधायकतया प्रसिद्धाः शब्दा लोके तत्तद्वाच्यतया प्रतीयमानतत्तत्संस्थानवस्तुमुखेन तदभिमानिजीवतदन्तर्यामिपरमात्मपर्यन्तस्यैव वाचकाः" इति । इदञ्च व्यष्टिनामरूपाणां सर्वेषां जीवानुप्रवेशश्रुतिबलावलम्बनेनोक्तम् । उक्तञ्च श्रीमद्गीताभाष्ये, "जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः" इत्यत्र, "तामसास्तु जघन्यगुणवृत्तिस्थाः = उत्तरोत्तरनिकृष्टतमोवृत्तिषु स्थिताः अधो गच्छन्ति = अन्त्यत्वम्, ततस्तिर्यक्त्वम्, ततः क्रिमिकीटादिजन्म, ततः स्थावरत्वम्, ततोऽपि गुल्मलतात्वम्, ततश्च शिलाकाष्ठलोष्ट(ष्टतृण)दित्वं गच्छन्तीत्यर्थः" इति । अत्र स्थावरशब्दो गोबलीवर्दनयात् वृक्षादिस्थावराख्यविशेषविषयो ज्ञेयः। जङ्गमं चतुर्धा—देवमनुष्यतिर्यङ्नारकिसंस्थानभेदात् । असुरयक्षराक्षसादयोऽपि देवयोनयः । भूलोकवर्तिब्रह्मक्षत्रियविट्शूद्रादयो मनुष्ययोनयः । तेषां तु श्रुतिस्मृत्युक्तविधिनिषेधविषयता । देवादीनामपि सा अस्त्येव । प्रायश्चित्ताध्वरतपश्चर्याब्रह्मविद्यादिश्रवणात् । मृगपक्षिसरीसृपादयस्तिर्यग्योनयः । नारकिणस्तु रौरवादिषु दुःखैकाश्रयदुस्त्यजविग्रहाः। जङ्गमं पुनर्द्विविधम्—योनिजमयोनिजञ्चेति । इदं देवादिषु त्रिष्वपि सम्भवति । प्रजापतिमधुकैटभधृष्टद्युम्नैरावतस्वेदजादिदर्शनात् । तत्र योनिजेष्वेव पञ्चमाहुत्यपेक्षा । योनिप्राप्तेः पूर्वमाकाशवायुधूमाभ्रमेघवृष्टिव्रीह्यादिरेतस्सिक्षु अन्यशरीरेषु संसर्गमात्रम् ।

---

वेदार्थसंग्रह इति । भाष्यकारोक्तावपि मूलभूतं प्रमाणमाह **इदञ्च व्यष्टिनामरूपाणामिति** । **जघन्यगुणवृत्तिस्था** इत्येतत् व्याचष्टे **उत्तरोत्तरनिकृष्टे**त्यादिना । **अत्र स्थावरशब्द इति** । ततश्च **स्थावरत्वं ततोऽपि गुल्मलतात्वम्** इति पृथग्गणनस्य न विरोधः शङ्क्य इति भावः । **देवादिषु त्रिष्वपीति** । देवमनुष्यतिर्यक्ष्वित्यर्थः । नारकिणां यातनाशरीरस्य केवलपापारब्धायोनिजत्वादिति भावः । **प्रजापतीति** । प्रजापतेर्नाभीकमलादित उत्पत्तेः, मधुकैटभयोरपि भगवत्सङ्कल्पमात्रसृष्टत्वात्, धृष्टद्युम्नस्याग्नेरुत्पत्तेः, ऐरावतस्य क्षीराब्धेरुत्पत्तेः श्रवणादिति भावः । **पञ्चमाहुत्यपेक्षेति** । पुत्रजन्य

---

यथा कथञ्चिदन्यत्र गमनमात्रेण वृक्षादीनामपि जङ्गमत्वस्वीकारे शास्त्रविरोधसूचनाय । उक्तं हि, "तमोमोहो महामोहस्तामिस्रो ह्यन्धसंज्ञितः । अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः ॥ पञ्चधाऽवस्थितः सर्गो ध्यायतो प्रतिबोधवान् । बहिरन्तश्चाप्रकाशः संवृतात्मा नगाह्वयः" इति । अत्र नगाह्वय इत्युक्त्या तेषामजङ्गमत्वमावश्यकमिति भावः । ननु शिलाकाष्ठादिषु जीवसंबन्धाभावात् तेषां शरीरान्तर्भाववचनमनुपपन्नमित्याशङ्क्याह **शिलादीति** । उक्तविषये संप्रदायमाह **तथाचेति** । उक्तसंप्रदायवाक्याभिप्रेतं मूलप्रमाणमाह **इदञ्चेति** । **व्यष्टिनामरूपाणामिति** । पञ्चीकरणानन्तरभाविदेवादिनामरूपाणामित्यर्थः । **त्रिष्वपीति** । नारकिशरीरस्य योनिजत्वविरहादिति भावः । तत्र देवायोनिजोदाहरणं **प्रजापतिमधुकैटभेति**। प्रजापतेर्भगवन्नाभीकमलादेः, मधुकैटभयोश्च केवलभगवत्सङ्कल्पादुत्पत्तेरिति भावः । मनुष्योदाहरणं **धृष्टद्युम्नेति** । तस्याग्नेरुत्पत्तेरिति भावः । तिर्यगुदाहरणं **ऐरावतेति** । तस्य क्षीराब्धेरुत्पत्तेरिति भावः । ननु शरीरमात्रस्य पञ्चमाहुतिसापेक्षत्वादयोनिजशरीरे तदुपपत्तिः कथमित्यत्र, तादृशनियमो नास्तीत्याह **तत्रे**ति । **एवकारेण** शरीरमात्रे तदपेक्षाव्यवच्छेदः । **पञ्चमाहुत्यपेक्षेति** । योषिद्रूपाग्नौ रेतस्संबन्धरूपा या पञ्चमाहुतिः,

तत्र व्रीह्यादिप्राप्तेः पूर्वं शीघ्रमेव निष्क्रमणम् । ततः परं दुर्निष्प्रप[त]तरम् । द्युपर्जन्यपृथिवीपुरुषानन्तरं पञ्चमे योषिदग्नौ हुतस्य तत्तत्कालप्रतिनियतपरिणामविशेषादय आयुर्वेदयोगादिशास्त्रेषु विशदमवसेयाः । सप्तधातूनां शुक्रशोणितसम्भवत्वप्रकारः, प्रकृतिविकृतिभावनियतवातपित्तकफादिप्रपञ्चः,

---

पृथिवीपुरुषयोषिद्रूपेषु अग्निषु श्रद्धासोमवृष्ट्यन्नरेतोरूपाः पञ्चाहुतयः पञ्चाग्निविद्यायां निर्दिष्टाः । तत्र योषिद्रूपे पञ्चमाग्नौ रेतोरूपा आहुतिः **पञ्चमाहुतिः** । ग्राम्यधर्मापेक्षा नास्तीत्यर्थः । "तस्मिन् यावत्सम्पातमुषित्वा अथैतमेवाध्वानं पुनर्निवर्तन्ते, यथेतमाकाशमाकाशाद्वायुम् । वायुर्भूत्वा धूमो भवति धूमो भूत्वा अभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति । त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते" इति श्रुत्या द्युलोकादवरोहतां जीवानामाकाशवायुधूमादिभावापत्तिरभ्युपगन्तव्येत्याशङ्क्य "तत्स्वाभाव्यापत्तिरुपपत्तेः, अन्याधिष्ठिते पूर्ववदभिलापात्, रेतःसिग्योगोऽथ" इत्यादिसूत्रैर्वैराग्यपादे, चेतनान्तरशरीरेषु आकाशादिषु **संसर्गमात्रमेव;** न तु आकाशादिशरीरकत्वमिति स्थापितमित्यभिप्रयन् आह **योनिप्राप्तेः पूर्व**मित्यादि । **रेतःसिक्त्विति** । **रेतःसिक्** पितेत्यर्थः । "व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते" इति द्युलोकादवरोहतां जीवानां व्रीह्यादिसंश्लेषं प्रस्तुत्य, "अतो वै खलु दुर्निष्प्रपतरम्" इति व्रीह्यादितो निष्क्रमणस्य चिरतरत्वावेदनेन तत्पूर्वमाकाशादितो निष्क्रमणस्य अचिरतरत्वमावेद्यते इति, 'नातिचिरेण विशेषात्" इति सूत्रे प्रतिपादितत्वमभिप्रयन् आह **व्रीह्यादिप्राप्तेः पूर्वमिति** । **तत्तत्कालप्रतिनियतेति** । (?) 'शोणितान्मांसं मांसान्मेदो मेदसोऽस्थीनि अस्थिभ्यो मज्जा मज्जायाः शुक्र(शुक्रम् ; शुक्र?)शोणितसंयोगादावर्तते गर्भः । हृदि व्यवस्थानेऽपि हृदयेभ्योऽन्तराग्निः अग्निस्थाने पित्तं पित्तस्थाने वायुर्वायुस्थाने हृदयं प्राजापत्यात् क्रमात (?) । ऋतुकाले प्रयोगे एकरात्रोषितं कलिलं भवति । सप्तरात्रोषितं बुद्बुदं भवति । अर्धमासाभ्यन्तरेण पिण्डो भवति । मासाभ्यन्तरेण कठिनो भवति । मासद्वयेन शिरः कुरुते । मासत्रयेण पादप्रवेशो भवति । अथ चतुर्थे मासे अङ्गुलिजठरकटिदेशो भवति । पञ्चमे मासे पृष्ठवंशो भवति । षष्ठे मासे नासाक्षिश्रोत्राणि भवन्ति । सप्तमे मासे जीवेन संयुक्तो भवति । अष्टमे मासे सम्पूर्णो भवति ।" इत्याद्युपनिषदायुर्वेदादिषु **तत्तत्कालप्रतिनियतपरिणाम**-

---

तदपेक्षा नास्तीत्यर्थः । अत्रेदं बोद्धव्यम् —द्युपर्जन्यपृथिवीपुरुषयोषिद्रूपेषु पञ्चस्वग्निषु श्रद्धासोमवृष्ट्यन्नरेतस्संबन्धरूपाः पञ्चाहुतय इति । **रेतस्सिक्** पिता । **शीघ्रनिष्क्रमणमिति** । पश्चात् विलम्बोक्त्या पूर्वं शैघ्र्यसिद्धिरिति भावः । **दुर्निष्प्रप[त]तरम्** अत्यन्तकृच्छ्रनिष्क्रमणम्, अत्यन्तविलम्बितनिष्क्रमणमिति यावत् । **तत्तत्कालप्रतिनियतपरिणामादय इति** । ऋतुकाले प्रयोगे एकरात्रोषितं कलिलं भवति । सप्तरात्रोषितं बुद्बुदं भवति । मासाभ्यन्तरेण कठिनो भवति । मासद्वयेन शिरः, मासत्रयेण पादौ चतुर्थे

---

(?)...(?) एवं चिह्नितः शोणितादित्यादिर्वाक्यराशिः सप्तधातूनामित्यादेर्विवरणरूपत्वात् पश्चान्निवेशनमर्हति । द्वितीयव्याख्यायामयमंशो न स्पृष्टः, अशुद्धिचिन्त्यैव । अन्नाम्नरसपरिणामक्रमे सप्तसु धातुषु आदिमं रक्तं शोणितपदविवक्षितम् । मूले तु प्रथमं शिशुगतधातुषु केषांचित् शुक्लसंभवत्वं केषाञ्चिन्मातृशोणितजत्वञ्च मानान्तरसिद्धमुच्यते । अत्र विवरणीयञ्चावशिष्यत इति शुद्धं पाठान्तरं द्रष्टव्यम् ।

नाड्यादिविशेष, तत्परिमाणादयश्च तेष्वेवावसेयाः। एवं जरायुजाण्डजोद्भिज्जस्वेदजभेदोऽपि भाव्यः॥

एषाञ्च व्यष्टिजीवशरीराणामीश्वरं प्रति शरीरत्वं सद्वारकमद्वारकञ्चेति एकः सम्प्रदायः। सद्वारकमेवेति अन्यः। प्रथमस्तु पक्षः प्राचुर्येण भाष्यकारव्यवहारैः सूच्यते। तत्त्वरत्नाकरेऽपि स एवोक्तः, "चेतनाचेतनयोरविशिष्टं तं प्रति शरीरत्वम्" इत्यादिवचनात्। द्वितीयस्तु पक्षो विवरणकाराङ्गीकृतः। षडर्थसङ्क्षेपे हि अचितो जीवेश्वरयोर्देहत्वात् तद्वाचिशब्दजनितधियामुभयत्र पर्यवसानम् उभयोरपि स्वयमेव भानात् द्विर्भानञ्चाशङ्क्योक्तम्, "नाचितो जीवद्वारा ब्रह्मशरीरत्वात्" इति। विवरणेऽपि अयमेवार्थः प्रपञ्चितः। अयञ्च विवादो देवमनुष्यादिव्यष्टिदेहविषयः; दिव्यमङ्गळविग्रहाद्यचित्सु सद्वारकत्वायोगात्। विवरणेऽपि हि तमःप्रभृतीनामपि शरीरत्वनिर्देशविरोधपरिहाराय, "आदिसृष्टौ तु" इत्यादिना समष्टितत्त्वानां साक्षात् परशरीरत्वमुक्तम्। तेजोऽबन्नसृष्टिसमनन्तरभाविदेवमनुष्यादिनामरूपव्याकरणमात्र एव, "अनेन जीवेन" इत्यादिश्रुत्यनुरोधेन

---

विशेषादयोऽनुसन्धेया इति भावः। जरायुजम् जीवजम् पुरुषपश्वादि। अण्डजम् पक्ष्यादि। उद्भिज्जम् उद्भिनत्तीत्युद्भित् स्थावरम्। ततो जातमुद्भिज्जं स्थावररूपम्। स्वेदजम् यूकादि।

भाष्यकारव्यवहारैरिति। "जीवद्वारा परमात्मनि पर्यवस्यन्ति" इति व्यवहारस्य, "चिदचितोः परमात्मशरीरत्वात्" इत्यादिव्यवहारस्य च भाष्यादिषु दर्शनादिति भावः। अचित इति। ननु अचितो जीवेश्वरशरीरत्वे किं शरीरवाचिशब्दैर्द्वयोरपि शरीरिणोर्युगपदभिधानम्? उत क्रमेण? नाद्यः; तथा सति सर्वेषां शरीरवाचिशब्दानां परमात्मनि पर्यवसानम्, न जीवे इति नोपपद्यते। पुष्पवन्तावित्यादिपदोपस्थापितचन्द्रसूर्ययोरिव परस्परविशेषणविशेष्यभावापन्नत्वे विनिगमनाविरहात्। न द्वितीयः; द्विरावृत्तिप्रसङ्गात्। ततश्च विरम्यव्यापारप्रसङ्ग इत्याक्षिप्य परिहृतमित्यर्थः। स्वयमेव भानादिति। परस्परविशेषणविशेष्यभावानापन्नत्वेन स्वातन्त्र्येण भानेन एकत्र पर्यवसानम् अपरत्र नेति नियन्तुमशक्यत्वादिति भावः। विरोधपरिहारायेति। सर्वेषामपि वस्तूनां जीवद्वारैव परमात्मानं प्रति शरीरत्वे जीवशरीरत्वरहितानां तमःप्रभृतीनां परमात्मशरीरत्वाभावात्, "यस्य तमः शरीरं", "यस्याक्षरं शरीरम्"

---

अङ्गुलजठरकटिदेशाः, पञ्चमे पृष्ठवंशः, षष्ठे नासाक्षिश्रोत्राणि, सप्तमे जीवेन संयोगः, अष्टमे संपूर्णता इत्येवंरूपाः परिणामादय इत्यर्थः। एवं जरायुजेत्यादि। जरायु=गर्भवेष्टनचर्म, तज्जं मनुष्यपश्वादिशरीरम्। अण्डजं पक्ष्यादिशरीरम्, उद्भिज्जं स्थावरशरीरम्, स्वेदजं यूकादिशरीरम्॥

भाष्यकारव्यवहारैरिति। "जीवद्वारा परमात्मनि पर्यवस्यन्ति" इति व्यवहारस्य, "चिदचितोस्सर्वावस्थावस्थितयोः परमात्मशरीरत्वात्" इत्यादिव्यवहारस्य च भाष्ये दर्शनादिति भावः। स्वयमेव भानादिति। पुष्पवन्तादिपदात् चन्द्रसूर्ययोरिव स्वातन्त्र्येण भानादित्यर्थः। तथाच जीवेश्वरयोर्विशेषणविशेष्यभावविरहात् सर्वेषां शब्दानां परमात्मनि पर्यवसाननियमभङ्ग इति भावः। द्विर्भानमिति। अचितः साक्षात् परमात्मशरीरत्वे जीवस्यापि तच्छरीरत्वस्य निर्विवादतयाऽचितो जीवशरीरत्वाच्च ईश्वरस्याचिद्विशिष्टत्वेनाचिद्विशिष्टजीवविशिष्टत्वेन च भानावश्यम्भावाद्द्विर्भानप्रसङ्ग इत्यर्थः। जीवद्वारेति। तथाचाचिद्वाचिशब्दजन्यबुद्धेरचिद्विशिष्टजीवविशिष्टपरमात्मविषयकतया नोक्तदोषद्वयावकाश इति भावः। विरोधपरिहारायेति। अचिद्वस्तूनां जीवद्वारैव परमात्मशरीरत्वे जीवशरीरत्वरहितेषु तमःप्रभृतिषु परमात्मशरीरत्व-

सद्वारकत्वम् । तत्रापि अद्वारकं सद्वारकञ्च शरीरत्वे न कश्चित् दोषः । उभयपर्यवसानमपि विशेषमूल-प्रयोगभेदप्रतिनियमात् परिहृतम्[1] । अत एव न द्विर्भानमपि । न च एकस्य युगपदनेकं प्रति शरीरत्वमनुपपन्नम् ; तल्लक्षणयोगेन तदुपपत्तेः, अनेकं प्रति शेषत्वादिवत् । न च स्वतो जीववत् शरीरभूतस्य त्रिगुणद्रव्यस्य जीवानुप्रविष्टसङ्घातविशेषदशामात्रेण ईश्वरं प्रति शरीरत्वमपसरति । न च तदन्यत् द्रव्यम् ; द्रव्याभेदात् । व्याकृतभूतत्वगादीन् प्रति च ईश्वरस्य अन्तर्यामित्वात् । तत एव च तेषां तच्छरीरत्वं श्रूयते । सुषुप्तिमूर्च्छाद्यवस्थासु च स्वाभाविकमीश्वरनियाम्यत्वमेव देहदेहिनोर्दृश्यते । अत इदमद्वारकनियमनं तत्पक्षे न स्यात् । जीवसत्तामात्रञ्च न देहनियमनौपयिकम् ; तदानीं ज्ञानेच्छारहिततया तस्य गगनादिसत्तातुल्यत्वात् । अतः सर्वावस्थानां सर्वद्रव्याणामीश्वरं प्रत्येव स्वतश्शरीरत्वम् । जीवं प्रति तु तत्कर्मकृतमिति समीचीनोऽयं पन्थाः ॥

---

इत्यादिविरोधः स्यादिति तत्परिहारायेत्यर्थः ॥ विशेषमूलेति । अनन्यथासिद्धपरमात्मलिङ्गबलात् यत्र परमात्मनोऽप्युपस्थितिः, तत्र जीवस्य शरीरत्वाविशेषेऽपि न स्वतन्त्रतया भानम्, नापि द्विर्भानम्, अपि तु परविशेषणतयैव ; एतादृशविशेषे च प्रयोगभेद एव मूलम् । तथैव व्यादिव्युत्पत्तेरिति भावः । स्वतो जीववदिति । सङ्घातदशाविशेषानुप्रवेशमात्रेण त्रिगुणद्रव्यस्य स्वतःसिद्धशरीरत्वपरित्यागे जीवस्यापि तत्प्रवेशाविशेषात् शरीरत्वमपि त्याज्यं स्यात् ; ततश्च सद्वारकमपि शरीरत्वं न स्यादिति भावः । व्याकृतभूतेति । "यः सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरो यं सर्वाणि भूतानि न विदुर्यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरो यमयति" इति व्याकृतभूतानाम्, "यस्त्वचि तिष्ठंस्त्वचोऽन्तरः" इत्यादिना इन्द्रियाणाञ्च साक्षात् तदायत्तशरीरत्वावेदनादित्यर्थः । ननु ईश्वरस्यैव नियन्तृत्वमिति कथमुच्यते, देहान्तर्वर्तिनो जीवस्यापि नियन्तृत्वसम्भवादित्यत आह जीवसत्तामात्रञ्चेति । तत्कर्मकृतमिति । परमात्मसङ्कल्पायत्तमित्यर्थः । ततश्च नित्यमुक्तादिशरीरस्य

---

व्यवहारविरोधः स्यादिति तत्परिहारायेत्यर्थः । विशेषमूलेति । तात्पर्यग्राहकविशेषाधीनेत्यर्थः । इदञ्च प्रतिनियमविशेषणम् । अयं भावः—नानार्थस्थल इव तत्तात्पर्यानुरोधेन तथातथा बोधसंभवान्न तात्पर्यविरुद्धं स्वतन्त्रभानं द्विर्भानं वा प्रसज्यत इति । जीववदिति । जीवस्येवेत्यर्थः । अयं भावः—त्रिगुणद्रव्यस्य स्वाभाविकमीश्वरशरीरत्वं यदि जीवानुप्रविष्टसंयोगविशेषदशामात्रेणापगच्छेत्, तथा जीवस्यापि तादृशसङ्घातानुप्रवेशमात्रेण तदपगमप्रसङ्गः । ततश्च जीवद्वाराऽपि शरीरत्वानुपपत्तिरिति । व्याकृतत्वगादीन् प्रतीति । "यस्सर्वेषु भूतेषु तिष्ठन्" इत्यारभ्य, "यस्य सर्वाणि भूतानि शरीरं यस्सर्वाणि भूतान्यन्तरो यमयति" इति व्याकृतभूतानाम्, "यस्त्वचि तिष्ठन्" इत्यारभ्येन्द्रियाणाञ्चेश्वरनियाम्यत्वं तत एव साक्षात् तच्छरीरत्वञ्च श्रूयत इत्यर्थः । स्वतश्शरीरत्वमिति इतरसङ्कल्पानधीनं शरीरत्वमित्यर्थः । कर्मकृतमिति ।

---

1 अत्रेदमपि बोध्यम्—श्रियोऽपि चिदचिच्छरीरकत्वात् अचिद्वाचकानामचिद्विशिष्टजीवविशिष्टश्रीविशिष्टब्रह्मपरत्वञ्चास्त्विति न शंक्यम् ; अनन्यथासिद्धलिंगस्थले तथा विवक्षायामप्यन्यत्र न श्रीग्रहणम् । अस्फुटजीवकघटादिशब्दे मध्ये जीवाग्रहणवत् । क्वचिन्नियमनस्वरूपयोग्यत्वमेव श्रियः ; परस्य तु सर्वत्र फलोपधायकत्वमिति साक्षादपि जीवविशिष्टस्य तस्य पुरस्स्फूर्तेः । संनियोगशिष्टत्वादेव श्रियोऽपि लाभात् तद्विवक्षानपेक्षणाच्चेति ।

एनामात्मतिरस्क्रियायवनिकामिच्छाविहारस्थलीं
निर्व्यापारविभावरीसहचरीं निद्रामनिद्रात्मनः ।
ब्रह्मस्तम्बमहेन्द्रजालरचनापिञ्छावलीं श्रीमतो
विष्णोर्लोहितशुक्लकृष्णशबलां विद्यामविद्यातनुम् ॥ २७ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु श्रीन्यायसिद्धाञ्जने
जडद्रव्यपरिच्छेदः प्रथमः ॥

कर्मकृतत्वाभावात् कथमेतदिति शङ्का प्रत्युक्ता ॥ आत्मतिरस्क्रियेति । यथावस्थितात्मानुभवप्रतिबन्धिकाम् । इच्छाविहारस्थलीम् लीलाभूमिम् । निर्व्यापारविभावरीम्=निर्व्यापारविभावरीरूपे प्रलये परमात्मनः सहायतया अवस्थानात् तस्य सहचरीम् । अनिद्रस्य परमात्मनो योगनिद्रारूपाम् । "अजामेकाम्" इति श्रुतिप्रतिपाद्याम् । अविद्यातनुम्=अविद्याशब्दितां तनुं विद्याम् तत्त्वतो जानीयाम् ॥

इति श्रीमत्तातयार्यचरणारविन्दचञ्चरीकस्य वात्स्यानन्तार्यसेवासमधिगत-
शारीरकमीमांसाभाष्यहृदयस्य परकालमुनिकृपालब्धपारमहंस्यस्य
श्रीरङ्गरामानुजमुनेः कृतिषु
श्रीन्यायसिद्धाञ्जनटीकायां जडद्रव्यपरिच्छेदः प्रथमः ॥

—o—o—

कर्माधीनभगवत्सङ्कल्पप्रयोज्यमित्यर्थः । इदञ्च प्रस्तुतप्राकृतशरीराभिप्रायम् । मुक्तादिशरीरत्वसाधारण्येन तु भगवत्संकल्पप्रयोज्यतया शरीरत्वस्येतरसङ्कल्पानधीनत्वरूपं स्वाभाविकत्वं न संभवतीति बोद्धव्यम् । आत्मतिरस्क्रियायवनिकाम् यथावस्थितात्मानुभवप्रतिबन्धिकां तिरस्करिणीम् । इच्छाविहारस्थलीं स्वैरलीलाप्रदेशरूपाम् । निर्व्यापारविभावरीसहचरीम् । विभावरी=प्राकृतप्रळयकालः, तत्र सहचरीं सदृशपरिणामरचनया विनोदार्थाम् अनिद्रस्य परमात्मनो विषमपरिणामसङ्कल्पराहित्यरूपनिद्रासंपादिकाम् । 'अनेन प्रळयदशोक्ता । सृष्ट्युपकरणतामाह ब्रह्मस्तम्बेति । लोहितशुक्लकृष्णशबळां सत्त्वादिगुणत्रयमयीं, अविद्यातनुं=ज्ञानविरोधितया अविद्याशब्दितां भगवच्छरीरभूतां प्रकृतिं विद्यां=यथावज्जानीयाम् ॥

इति श्रीकृष्णतातयार्यस्य कृतिषु श्रीन्यायसिद्धाञ्जनव्याख्यायां
रत्नपेटिकासमाख्यायां जडद्रव्यपरिच्छेदः ।
श्रीमते श्रीकृष्णतातयार्यमहादेशिकाय नमः ।

* * * * *

श्रीः

## श्रीन्यायसिद्धाञ्जने जीवपरिच्छेदः ॥ २ ॥

अथ जीवः । अल्पपरिमाणत्वे सति ज्ञातृत्वम्, शेषत्वे सति ज्ञातृत्वम् इत्यादि तल्लक्षणम् । स तावन्न देहः; प्रत्येकसमुदायचैतन्यादिविकल्पानुपपत्तेः । शरीरभेद इवाभिप्रायभेदप्रसङ्गात् ।

### श्रीरङ्गरामानुजीयम्

**अथ जीव इति** । निरूप्यते इति शेषः । **अल्पेति** । सत्यन्तेन ईश्वरव्यावृत्तिः । **ज्ञातृत्वमिति** । अनेन घटादिव्यावृत्तिः । **शेषत्वे इति** । ईश्वरतापर्याप्त्यधिकरणापेक्षया शेषत्वस्य विवक्षितत्वात् ईश्वरत्वस्य व्यासज्यवृत्तित्वेन लक्ष्म्या ईश्वरतापर्याप्त्यधिकरणापेक्षया शेषत्वाभावान्नातिव्याप्तिः । लक्ष्म्याजीवान्तर्भावपक्षे तु न दोषः । आदिशब्देन अणुत्वे सति ज्ञातृत्वमित्यादि विवक्षितम् । "देहेन्द्रियमनःप्राणधीभ्योऽन्योऽनन्यसाधनः" इति क्रमं हृदि निधाय प्रथमं देहव्यतिरेकं साधयति **स इति** । चेतनत्वलक्षणो जीव इत्यर्थः । उत्तरत्र **प्रत्येकसमुदायचैतन्यादी**ति ग्रन्थानुगुण्यात् । **प्रत्येकसमुदायेति** । शिरःपाण्याद्यवयवेषु प्रत्येकं चैतन्यम्, उत समुदाये इत्यर्थः । ननु पूर्ववाक्ये देहस्यैव प्रस्तुततया **प्रत्येकसमुदाये**ति वाक्येऽपि देहानां किं प्रत्येकं चैतन्यम्, उत समुदाये इत्येव विकल्पः स्यात्, न तूक्तः प्रकारः इति चेन्न; देहस्य शिरःपाण्यादिलक्षणतया देहस्य प्रस्तुतत्वे शिरःपाण्यादीनामपि प्रस्तुतत्वेनोक्तविकल्पोपपत्तेः । **चैतन्यादीति**–**आदिशब्देन** अवयवातिरिक्तावयविचैतन्यं विवक्षितम् । **विकल्पानुपपत्तेरिति** । विकल्पासहत्वादित्यर्थः । यद्वा विविधकल्पानुपपत्तेरित्यर्थः ।

---

क्रमप्राप्तं जीवनिरूपणं प्रतिजानीते **अथे**ति । निरूप्यत **इति शेषः** । **अल्पपरिमाणत्वे सतीति** । अपकृष्टपरिमाणवत्त्वे सतीत्यर्थः । इदं चेश्वरवारणाय । **ज्ञातृत्वमिति** । अपृथक्सिद्धिसंबन्धेन ज्ञानवत्त्वमित्यर्थः । इदञ्च घटादिवारणाय । अपृथक्सिद्धिसंबन्धेनेत्यनेन विषयतासंबन्धेन ज्ञानवत्त्वमादाय न तद्दोषतादवस्थ्यम् । **शेषत्वे सतीति** । अत्रापि सत्यन्तमीश्वरवारणाय । विशेष्यं घटादिवारणाय । शेषत्वमिह स्वाभाविकं ग्राह्यम् । तेनैच्छिकभगवत्शेषत्ववति भगवति नातिप्रसङ्गः । अनुगृहीतं हि **श्रीमद्रहस्यत्रयसारे,** "स्वेच्छयैव परेशस्य तादधीन्यबलात्तु नः । भगवद्भक्तशेषत्वम्" इति । स्वाभाविकत्वं च स्वसमानाधिकरणेच्छानधीनत्वम् । देवीगतभगवच्छेषत्वस्याप्युभयेच्छाधीनतायाः **चतुश्श्लोक्यधिकारे** सिद्धान्तितत्वान्न तत्रातिप्रसङ्गः। **इत्यादीति** । आदिपदेन अणुत्वे सति ज्ञातृत्वम्, स्वाभाविकाधेयत्वे सति ज्ञातृत्वमित्यादेः सङ्ग्रहः । देवीव्यावृत्तये **स्वाभाविके**ति ।

देहेन्द्रियमनःप्राणधीभ्योऽन्योऽनन्यसाधनः" **इत्याद्यनुसारेण** प्रथमतो देहभेदं साधयति **स इति** । ज्ञातृत्वघटनोक्तलक्षणो जीव **इत्यर्थः** । तथाच ज्ञातृत्वाश्रयो **देहभिन्न** इत्युक्तं भवति । प्रत्येकसमुदायचैतन्यादिविकल्पानुपपत्तेरित्यत्र **आदिशब्देनावयवातिरिक्तावयविचैतन्यपरिग्रहः** । **विकल्पानुपपत्तेरिति** । विकल्पेना(ल्पने?) अनुपपत्तिप्रसरादित्यर्थः। यद्वा प्रत्येकचैतन्यादिरूपाणां विविधपक्षाणामनुपपन्नत्वादित्यर्थः॥ तत्र शिरःपाण्यादिरूपाणामवयवानां रूपादिमत्त्वमिव प्रत्येकमेव चैतन्यमिति प्रथमः पक्षः, द्वित्वादिकमिव

ममेति व्यतिरेकप्रत्ययात्। सङ्घातत्वादिहेतुभिश्च। अवयविनश्च दूषितत्वात्। सिद्धावपि तद्गुणस्य कारण

प्रथमं दूषयति **शरीरभेद इवेति । अभिप्रायभेदप्रसङ्गादिति** । विरुद्धाभिप्रायानेकप्रामण्यधिष्ठित-ग्रामवत् न किमपि कार्यं निर्वर्तेतेति भावः । ननु अविरुद्धाभिप्रायानेकपुरुषाधिष्ठितग्रामवत् अन्योन्याविरोधसम्भव इति चेन्न ; अनादौ संसारे कदाचिद्विरोधस्यापि प्रसङ्गात् । अत एवेन्द्रियात्मवादि-निराकरणे वक्ष्यति **परस्पराविवादनियमाद्यनुपपत्तेरिति । ममेति व्यतिरेकप्रत्ययादिति** । मम वस्त्रम्, मम गेहम् इतिवत, मम शिरः, मम शरीरमिति विस्पष्टभेदप्रतीतेरित्यर्थः । इदञ्च दूषणं प्रत्येकसमुदायादिसर्वपक्षसाधारणं द्रष्टव्यम् । समुदायचैतन्यपक्षं दूषयति **सङ्घातत्वादिहेतुभिश्चेति** । विमतमचेतनम्, सङ्घातत्वात्, रूपवत्त्वात्, बाह्येन्द्रियग्राह्यत्वात् घटवत् । किञ्च समुदायो न शिरःपाण्यादीनामन्योन्यसंयोगः ; तस्य गुणत्वेन चैतन्यासम्भवात, शिरःपाण्यादिरूपसमुदायिनामेव सङ्घातशब्दवाच्यत्वे प्रत्येकपक्षदोषानतिवृत्तेश्चेत्यर्थः । न च प्रत्यक्षमात्रप्रामाण्यवादिनं चार्वाकं प्रति नानुमानमुपन्यासार्हमिति वाच्यम् ; ये तु **लोकायतमित्यत्र आयतशब्दविवक्षितमनुमानमपि** प्रत्यक्षान्त-र्भावेण गृह्णन्ति, तान् प्रति उपन्याससम्भवादिति ध्येयम् । अतिरिक्तावयविपक्षं दूषयति **अवयविन-श्चेति** । अवयविनमभ्युपेत्याह **सिद्धावपीति । कारणगुणपूर्वकत्वप्रसङ्गादिति** । ततश्च

समुदायपर्याप्तमेकमेव चैतन्यमिति द्वितीयः । अवयवारब्धातिरिक्तावयविनिष्ठं चैतन्यमिति तृतीयः । यद्यपि न देह इत्यत्र देहस्यैवोपस्थित्या देहानां प्रत्येकं चैतन्यम्, उत तत्समुदायस्य वेत्येवमर्थः स्यात्, तथापि **शरीरभेद इवे**त्यादिदूषणग्रन्थानुरोधात् **देह** इत्येकवचनानुरोधाच्च शिरःपाण्यादिसमुदायस्यैव देहशब्देन विवक्षितत्वप्रतीतेर्न प्रागुक्तार्थानुपपत्तिः । तत्र प्रथमं प्रत्येकपक्षं दूषयति **शरीरभेद इवेति । अभिप्रायभेदप्रसङ्गादिति** । अनेकप्रामण्यधिष्ठितग्रामादिष्विव कदाचिदभिप्रायभेदप्रसङ्गादित्यर्थः । तथाच तदानीं न किमपि कार्यं निर्वर्तेतेति भावः । **ममेति व्यतिरेकप्रत्ययादिति** । मम वस्त्रं मम गृहमित्यादिवत् मम शिरो मम पाणिर्मम शरीरमिति स्पष्टतरभेदप्रत्ययादित्यर्थः । इदञ्च सर्वपक्षसाधारणं दूषणम् । समुदायपक्षदूषणमाह **सङ्घातत्वादिहेतुभिश्चेति**। विमतमचेतनम्, सङ्घातत्वात्, रूपवत्त्वात्, बाह्येन्द्रियग्राह्यत्वाद्वा घटवदित्यनेन चैतन्याभावसिद्धेरित्यर्थः । यद्यपि प्रत्यक्षमात्रप्रामाण्यवादिचार्वाकं प्रति अनुमानोपन्यासो न युज्यते ; तथापि चार्वाकैकदेशिभिर्लोकायतमित्यत्रायतशब्दविवक्षितमनुमानमपि प्रत्यक्षान्तर्भावेण गृह्यते । अतस्तान् प्रति अनुमानोपन्यासो युज्यते । अथवा यत्र सङ्घातत्वादिकं तत्र चैतन्याभाव इति घटादौ व्याप्तिनिर्णयात् व्यापकाभावे व्याप्याभावप्रसङ्ग इति तर्कपरमेवेदम् । इदमुपलक्षणम्—चैतन्यस्य समुदायपर्याप्तत्वस्वीकारे अङ्गुल्याद्येकदेशनाशेऽपि चैतन्यविलोपप्रसङ्ग इत्यपि बोद्धव्यम्। तृतीयपक्षं दूषयति **अवयविनश्चेति**। **दूषितत्वादिति**। त्वयाऽपीत्यादिः। चार्वाकमतेऽपि हि अवयवी नास्त्येव; त्रसरेणुपुञ्जस्यैव घटादिरूपत्वाभ्युपगमात् । तथापि गत्यभावसूचनाय तदभ्युपगममनूद्य दूषयति **सिद्धावपीति । कारणगुणपूर्वकत्वप्रसंगादिति** । तथाचावयवेषु पाण्यादिषु चैतन्यावश्यम्भावात्

गुणपूर्वकत्वप्रसङ्गात् । पाकजगुणवत् परिणामविशेषाभ्युपगमेऽपि प्रत्यवयवं चैतन्यप्रसङ्गो दुष्परिहरः । अत एव, "तेभ्यश्चैतन्यं किण्वादिभ्यो मदशक्तिवत्" इति प्रलापो निरस्तः । सङ्घातदशायां प्रत्यवयवं मदशक्तेः; रसविशेषादिवत् ॥ अस्तु तर्हि भूतावयवविशेषः शीघ्रसञ्चारी स्थायी

---

शिर.पाण्यादिलक्षणेषु शरीरसमवायिकारणेषु चैतन्याभ्युपगमे विरुद्धाभिप्रायत्वलक्षणपूर्वदोषप्रसङ्ग इति भावः । ननु पीलुपाकप्रक्रियायां कारणगुणपूर्वकत्वनियमेऽपि पिठरपाकप्रक्रियायां पाकेन पिठर एव रूपोत्पत्तिवत् न कारणगुणपूर्वकत्वनियम इत्यत आह पाकजगुणवदिति । परिणामविशेषाभ्युपगमेऽपीति । चैतन्यलक्षणागन्तुकधर्मविशेषाभ्युपगमेऽपीत्यर्थः । दुष्परिहर इति पाकजन्यगुणस्य घटे तदवयवेषु च दर्शनादिति भावः । अत एवेति । प्रत्यवयवं चैतन्यप्रसङ्गादेवेत्यर्थः । किण्वशब्देन मद्यसाधनाङ्कुरविशेष उच्यते । ननु न प्रत्यवयवं चैतन्यप्रसङ्गः; किण्वादिमदशक्तिवत् सङ्घात एव चैतन्योत्पत्तिसम्भवादित्याशङ्क्य दृष्टान्तेऽपि प्रत्यवयवं मदशक्तिरित्याह सङ्घातदशायामिति । अवश्यम्भावादिति शेषः । रसविशेषादिवदिति । संहन्यमानावयवगतरसविशेषादिवदित्यर्थः । [1]किञ्च नानावर्णैस्तन्तुभिरारब्धेऽपि पटे तन्तुगतरूपातिरेकेण रूपान्तरस्य वा, अवयवभेदव्यवस्थितमधुराम्लरसव्यतिरेकेण आम्रादिफले रसान्तरस्य वा, अतिपक्वापक्वभागभेदव्यवस्थितपूतिगन्धसुरभिगन्धातिरेकेण नागवल्लीपर्णे गन्धान्तरस्य वा, भागभेदव्यवस्थितकठिनसुकुमारस्पर्शव्यतिरेकेण कदलीदले स्पर्शान्तरस्य वा, वृक्षादौ मूलमध्यादिभागव्यवस्थितमहदल्पान्तरपरिमाणव्यतिरेकेण परिमाणान्तरस्य वा अनुपलब्धिपराहतत्वेन अवयवगतचैतन्यस्यैव वक्तव्यत्वात्[2] । ननु नानावर्णतन्त्वारब्धे पटे चित्राख्यं रूपान्तरमभ्युपगन्तव्यम्;

---

प्रागुक्ताभिप्रायभेदनिबन्धनदोषानिस्तार इति भावः । पिठरपाकन्यायेन कारणगुणपूर्वकत्वमन्तराऽप्यवयविनि चैतन्यसंभवशङ्कामनूद्य परिहरति पाकजेत्यादिना । परिणामश्चैतन्यरूपागन्तुकधर्मः । प्रत्यवयवमित्यादि । पाकजगुणस्थले तथैव दर्शनादिति भावः । अत एवेति । प्रत्यवयवं चैतन्यप्रसङ्गस्य दुष्परिहरत्वादेवेत्यर्थः । किण्वशब्देन मद्यसाधनाङ्कुरविशेषोऽभिधीयते । प्रत्यवयवं मदशक्तेरिति तथैवोपलभ्यमानत्वादिति भावः । तथाच तद्वदेव दार्ष्टान्तिकेऽपि प्रत्यवयवचैतन्यावश्यम्भाव इति हृदयम् । रसविशेषादिवदिति । किण्वादिमेळनजनितमदशक्तिमद्द्रव्ये रसविशेषादेरप्यपूर्वस्योत्पत्त्या तस्यापि प्रत्यवयवमुपलब्धेरिति भावः । अत्रेदं बोद्धव्यम्—देहातिरिक्तात्मास्वीकारे एकजातीयमातापितृव्यापारजनितदेहवैलक्षण्यं कथमुपपद्यते; न हि तत्र दृष्टं किञ्चिन्नियामकमुपलभ्यते । अतोऽदृष्टस्यैव देहोत्पत्तिहेतुभूतस्य तन्नियामकता वाच्येति तादृशादृष्टजनकव्यापाराश्रयो देहातिरिक्तः कश्चित् देहोत्पत्तेः प्रागेवास्तीत्यवश्यमभ्युपगन्तव्यम् । एवं बालस्योत्पत्तिदशायामेव स्तन्यपाने प्रवृत्तिरिष्टसाधनताज्ञानमन्तरा न संभवति । इष्टसाधनताज्ञानञ्च जन्मान्तरानुभवाहितसंस्कारजन्यस्मृत्यतिरिक्तं तदानीं दुरुपपादमित्यात्मनो देहातिरिक्तत्वमावश्यकमिति । भूतावयवविशेष इति । धातुविशेषरूपः वैद्यागमोक्तरीत्या हृदयस्थपित्तविशेषरूपो वा

---

1 मूले किण्वादिगत एव रसविशेषो दृष्टान्तीकृतः; अन्यानेकदृष्टान्तीकरणेनाप्याह किञ्चेति । 2 वक्तव्यत्वादित्यस्य प्रलापो निरस्त इति मूलेऽन्वयः ।

वा ज्ञातेति चेत्; प्रकारान्तरेणायमभ्युपगतो वैदिकः पक्षः; देहाख्यपिण्डातिरेके सिद्धे अनित्यत्वादिविवादस्य अयत्नवार्यत्वात्। आगमेनैवास्य देहव्यतिरेकसिद्धिरित्येके; यथोक्तमात्मसिद्धौ, "आनुमानिकीमपि आत्मसिद्धिमश्रद्दधानाः श्रौतीमेव तां श्रोत्रियाः सङ्गिरन्ते" इति ॥

---

इतरथा अवयविनो नीरूपत्वेन अचाक्षुषत्वप्रसङ्ग इति चेन्न; "चित्रं चेदेकता न स्यात् एकं चेत् चित्रता कथम्?। एकञ्च तच्च चित्रञ्च तन्तु(न्तुः?)चित्रान्तरं भवेत् ॥" इत्यादिभिर्दूषितत्वात् रूपैकार्थसमवायेन चाक्षुषत्वोपपत्तेः। एतेनाम्लकपूगादिषु विषशक्तिवत् चूर्णहरिद्रासंसर्गजरूपादिवदित्यादिप्रलापोऽपि परास्तः; तत्रापि परस्परसंयोगेन संहन्यमानावयवेषु तदङ्गीकारादिति ध्येयम्। ननु देहस्थधातुविशेष एव नैयायिकाभिमतमनोवत् शीघ्रसञ्चारी वा, "हृदयस्थपित्तविशेषः प्रकाश." इति वैद्यागमरीत्या स्थायी वा ज्ञातेत्याशङ्कने अस्तु तर्हीति। प्रकारान्तरेणेति। वैदिकसंप्रतिपन्नज्ञानानन्दत्वानङ्गीकारेण धातुविशेषत्वेन रूपेण देहातिरिक्तात्मनोऽङ्गीकारात् प्रकारान्तरत्वोक्तिः। ननु एतावताऽपि न तवेष्टसिद्धिः; त्वदभिमतनित्यत्वानन्दत्वादीनामसिद्धेरित्यत आह देहाख्येति। प्रत्यक्षमात्रप्रामाण्याभिमानं परित्यज्य अनुमानागमप्रामाण्यस्यापि स्वीकृततया नित्यत्वादिविवादोऽयत्नवार्य इति भावः। ननु, "न हि दृष्टे अनुपपन्नं नाम" इति न्यायेन स्थूलोऽहमिति अबाधितप्रतीतिसिद्धदेहात्मैक्ये न विमतिः कार्या; मम देह इत्यादिप्रतीतीनां च ममात्मेत्यादिवत् उपपत्तेः। कदापि, 'नाहं स्थूलः, नाहं ब्राह्मणः, मम स्थूलः, मम ब्राह्मणः' इति व्यतिरेकप्रतीत्यभावात् देहात्मैक्यं न शास्त्रमन्तरेण सुनिरसमिति ये मन्यन्ते, तेषां मतमुपन्यस्यति आगमेनैवेति।

---

अन्यो वा यः कश्चिदिति भावः। शीघ्रसञ्चारी स्थायी वेति। सर्वदेहव्याप्तसुखाद्युपलब्धये अल्पपरिमाणत्वे तत्र तत्र सन्निधानाय शीघ्रसञ्चारित्वम्, देहसमपरिमाणत्वे च स्थायित्वमिति भावः। प्रकारान्तरेण ज्ञानानन्दरूपत्वानुपगमेन भूतावयवविशेषरूपत्वेन। वैदिकः पक्षः देहातिरिक्तात्मसद्भावपक्षः। ननु तावता कथं भवदभिमतसिद्धिः; नित्यत्वाद्यनुपगमादित्यत आह अनित्यत्वादीति। अयत्नवार्यत्वात् अल्पयत्ननिवार्यत्वात्। नित्यत्वादिसाधकानुमानागमयोः प्रत्यक्षबाधस्य वक्तुमशक्यतया ताभ्यां नित्यत्वसाधनमत्यन्तसुकरमिति भावः। यद्वा देहाख्यपिण्डव्यतिरिक्ताप्रत्यक्षवस्तुस्वीकारेण प्रत्यक्षमात्रप्रामाण्याभिमानपरित्यागात् अनुमानागमाभ्यां नित्यत्वादिसाधनं सुकरमिति भावः। आगमेनैवेति। एवकारेण प्रत्यक्षानुमानयोर्व्यवच्छेदः। अयं भावः—स्थूलोऽहमित्यबाधितप्रत्यक्षेण देहात्मैक्ये सिद्धे अवयवानामेव चैतन्येऽपि अभिप्रायभेदविरहो दर्शनानुरोधेन वस्तुस्वभावादुपपद्यते; 'न हि दृष्टेऽनुपपन्नं नाम' इति न्यायात्। न हि कदाचिदपि, न स्थूलोऽहम्, न ब्राह्मणोऽहमिति प्रतिसन्धानमस्ति; येन स्थूलोऽहमिति प्रत्ययस्य भ्रान्तित्वमुच्येत। मम देह इत्यादिकं तु ममात्मेतिवन्न भेदसाधकम्; आत्मशब्दवत् देहशब्दस्यापि स्वरूपपरत्वात्। स्वरूपञ्च स्वासाधारणधर्मविशिष्टो धर्मी। असाधारणत्वञ्च भिन्नावृत्तित्वम्। तथा च घटस्य स्वरूपमित्यादौ भिन्नावृत्तिधर्मविशिष्टरूपस्वरूपपदार्थैकदेशे भेदे षष्ठ्यर्थप्रतियोगित्वान्वयात् घटभिन्नावृत्तिधर्मविशिष्टमित्यन्वयबोधः। यद्वा असाधारणत्वमेकमात्रवृत्तित्वम्। तच्च स्वप्रतियोगिवृत्तित्व-

ये पुनः—सत्यपि देहे सुषुप्तिदशायामिन्द्रियेषु उपरतेषु चैतन्यानुपलम्भात् न देहस्य चैतन्यम्; अपि तु इन्द्रियाणामेव। अपि च चक्षुरादन्वयव्यतिरेकानुविधायिरूपादिज्ञानं तन्निष्ठमेवोचितम्। व्यपदिशन्ति च, चक्षुः पश्यतीत्यादि। तथा स्पर्शनसुखो वायुः, श्रवणकटुः शब्दः इति। किञ्च इन्द्रियेषु सकलेषु, विकलेषु वा, अहं सकलः, विकलः इति प्रतियन्ति। अत इन्द्रियाणामेवाऽऽत्मत्वमिति

---

स्वसमानाधिकरण्योभयसंबन्धेन भेदविशिष्टान्यत्वम्। तथाच घटस्य स्वरूपमित्यादौ षष्ठ्यर्थाधेयत्वस्य एकमात्रवृत्तिधर्मेऽन्वयात् घटवृत्त्येकमात्रवृत्तिधर्मविशिष्ट इत्यन्वयबोधः। एतेन प्रमेयभिन्नाप्रसिद्ध्या प्रमेयस्य स्वरूपमित्यादौ वाक्यार्थासिद्धिरित्यपास्तम्। इत्थंच मम देह इति स्वरूपपरदेहशब्दघटितवाक्यो-ल्लिखितेन प्रत्ययेन एकमात्रवृत्तिधर्मे आत्मवृत्ति वावगाहनेऽपि देहे आत्मभेदानवगाहनात् न स्थूलोऽहमिति प्रत्ययस्य प्रत्यक्षबाधः। नाप्यनुमानेन बाधः; प्रत्यक्षविरोधे अनुमानस्यैव वह्न्यनुष्णत्वानुमानवत् काला-त्ययापदिष्टत्वात्। अनन्यथासिद्धागमेन तु स्थूलोऽहमिति प्रत्यक्षबाधात् देहात्मभेदसिद्धिरिति एक इत्यस्वरससूचनाय। तद्बीजं तु—मम देह इति व्यतिरेकप्रत्ययस्य नोक्तरीत्या अन्यथासिद्धिः सुवचा; स्वरूपपरतामन्तरेणापि तत्र देहशब्दप्रयोगदर्शनात्, तदुल्लिखि प्रत्ययस्य देहे आत्मसंबन्धावगाहित्वा-वश्यम्भावात्। षष्ठ्युल्लिखितसंबन्धस्य भेदरूपत्वात्, भेदव्याप्यत्वाद्वा। न च राहोः शिरः, शिलापुत्रकस्य शरीरमित्यादाविवाभेदोऽपि षष्ठ्यर्थः स्यादिति वाच्यम्; अभेदस्य संबन्धत्वेऽपि नीलस्य घट इत्यादिप्रयोगविरहेण तस्य षष्ठ्यर्थत्वायोगात्, राहोः शिर इत्यादेः लाक्षणिकतायाः संप्रतिपन्नत्वात्। प्रबलप्रमाणविरोधेन तत्र तथाऽभ्युपगमेऽपीह तथोपगमायोगात्। न चेहापि स्थूलोऽहमिति प्रत्ययविरोधेन तथाभ्युपगम आवश्यक इति वाच्यम्; तप्तायःपिण्डे वह्न्यभेदभ्रमेण संसर्गविशेषस्याभेदभ्रमहेतुत्वसिद्ध्या स्थूलोऽहमिति प्रत्ययस्यापि संसर्गविशेषमूलकभ्रान्तित्वसंभावनया प्राबल्यासिद्धेः। अन्यथा आगमेनापि तद्बाधायोगात्। न हि यूपादित्यभेदप्रत्यक्षम् आदित्यो यूप इत्यागमेन बाध्यते। अत उक्तरीत्याऽन्यथा-सिद्धस्य स्थूलोऽहमिति प्रत्ययस्य मम देह इति प्रत्यक्षेण बाधो युक्तः। एवमनुमानेनापि उष्णाभेदा-नुमानेन उष्णत्वप्रत्यक्षस्येव बाधः संभवतीति प्रत्यक्षानुमानयोरपि देहात्मभेदसिद्धिं प्रयोजकत्वमेव। यद्यपि नाहं स्थूलः मम स्थूल इत्यादिभेदप्रत्ययो नास्ति; तथापि भेदप्रतीत्या तादृश्यैव भवितव्यमिति निर्बन्धविरहेण प्रकारान्तरेण भेदप्रतीतावप्यभिमतसिद्धेरविरोधः। नाहं स्थूल इत्यादिभेदप्रत्ययाभावस्तु अहन्त्वावच्छिन्ने स्थूलत्वावच्छिन्नाभेदावगाहिप्रत्ययजनितसंस्कारदार्ढ्यवशात्। ईदृशदोषविशेषमहिम्ना भेदज्ञाने सत्यप्यभेदभ्रमः; शङ्खे शुक्लत्वनिर्णयेऽपि पित्तदोषवशात् पीतत्वभ्रमवत्, वंशे उरगभेदनिर्णयेऽपि मण्डूकस्पर्शाज्ञानेन उरगभ्रमवच्चेति॥

केचित्—इन्द्रियाणामेव चैतन्यम्; न देहस्य; अत एव सुषुप्तिदशायामिन्द्रियेषूपरतेषु सत्यपि देहे चैतन्यानुपलम्भः। चक्षुराद्यन्वयव्यतिरेकानुविधायिनो दर्शनादेस्तन्निष्ठत्वमेवोचितम्। अत एव चक्षुः पश्यतीत्यादिव्यवहारः। एवं स्पर्शनसुखो वायुः, श्रवणकटुः शब्द इति। किञ्च इन्द्रियेषु सकलेषु विकलेषु वा अहं सकल, विकल इति प्रतियन्ति। अत इन्द्रियाणामेवाऽऽत्मत्वम्—इति वदन्ति। तन्मतं निरस्यति

श्रवणाच्च। नापि प्राणाः; तेष्वपि देहोक्तयुक्तिसाम्यात् ॥

नापि धीः; ज्ञातृधर्मतया अस्थिरतया च स्फुरणात्, स एवाहमिति प्रतिसन्धानानुपपत्तेः। न चेदं प्रतिसन्धानं भ्रान्तिः; अबाधात्। क्षणभङ्गहेतूनां प्रागेव निरस्तत्वात्। भ्रान्तिरूपं वा

---

वेति। "मनसा ह्येव पश्यति" इति श्रुत्या, सुखादिप्रतीतिः सकरणिका क्रियात्वात् इत्यनुमानेन वा, सिद्धं मनो धर्मिग्राहकमानेन करणत्वेनैव सिध्यतीत्यर्थः। आहङ्कारिकत्वश्रवणाच्चेति। "एकादश मनश्चात्र देवा वैकारिकाः स्मृताः" इति पुराणेषु श्रवणादिति भावः। ये तु देहेन्द्रियादिमनःप्रवृत्तेः प्राणाधीनत्वदर्शनात्, "प्राणोऽस्मि प्रज्ञात्मा" इत्यादौ प्राणात्मशब्दयोः सामानाधिकरण्यदर्शनात् प्राणस्थित्यपगमाभ्यां च जीवस्तिष्ठति, नष्ट इति व्यवहारयोर्दर्शनात् प्राणानामात्मत्वं मन्यन्ते; तन्मतं प्रतिक्षिपति नापि प्राणा इति। तेष्वपीति। तेषामपि शरीरवत् वाय्ववयवसङ्घातरूपत्वेन प्रत्येकसमुदायचैतन्यविकल्पग्रासात्; मम प्राणा इति व्यतिरेकप्रतीतेश्चेति भावः ॥

नन्वस्तु संविदेवात्मा; जडत्वस्य अनात्मत्वव्यापकतया व्यापकजडत्वव्यतिरेकेण व्याप्यस्य अनात्मत्वस्य व्यतिरेकावश्यम्भावात्। किञ्च योऽपि संविदोऽन्यं संवेदितारमभ्युपगच्छति, सोऽपि संविदमभ्युपगच्छत्येव। न हि असत्यां संविदि संवेत्तीत्युपपद्यते। अतः स्वयम्भवत्वादिरूपस्वप्रकाशसंविदेव आत्मेति प्रकटसौगताः। तान् प्रतिवक्ति नापि धीरिति। स एवाहमिति प्रतिसन्धानानुपपत्तेरिति। ज्ञातृत्वेन स्थिरत्वेन च प्रतिसन्धानादेरनुपपत्तेरिति भावः। ननु यत्सत् तत् क्षणिकमित्यादिपरोक्तक्षणभङ्गहेतुरूपबाधकवशात् भ्रान्तित्वमित्याशङ्क्याह क्षणभङ्गहेतूनामिति। भ्रान्तप्रतिसन्धानमिति। सोऽह-

---

साक्षात्कारः सकरणकः साक्षात्कारत्वात् चाक्षुषादिवदित्यनुमानेन वा मनसः करणत्वेन सिद्धेः करण-कर्तृभेदावश्यम्भावादित्यर्थः। वास्यादेः करणस्य कर्तृभेददर्शनादिति भावः। आहङ्कारिकत्वश्रवणाच्चेति। "एकादशं मनश्चात्र देवा वैकारिकाः स्मृताः" इति पुराणेषु सात्त्विकाहङ्कारजन्यत्वश्रवणादित्यर्थः। तथाच मनसो नित्यत्वासंभवात् नात्मस्वरूपत्वमिति भावः।

देहेन्द्रियादिप्रवृत्तेः प्राणाधीनत्वदर्शनात् प्राणस्थित्यपगमाभ्यां जीवस्थितिनाशव्यवहाराच्च प्राणानामेवात्मत्वं केचन मन्यन्ते; तन्मतं प्रतिक्षिपति नापीति। देहोक्तयुक्तिसाम्यादिति। तेषामपि वाय्ववयवसङ्घातरूपत्वेन प्रत्येकं चैतन्यावश्यम्भावेन बहुत्वात् परस्परविवादनियमानुपपत्तेः, मम प्राणा इति व्यतिरेकप्रतीतेश्चेति भावः ॥

नन्वस्तु संविदेवात्मा; संप्रतिपन्नत्वात्, न हि संविदतिरिक्तात्माङ्गीकारपक्षेऽपि संविन्नास्तीत्यभिधीयते। अतस्सैवात्मेति सौगतमतं निरस्यति नापि धीरिति। स एवाहमिति प्रतिसन्धानानुपपत्तेरिति। योऽहं दुःखमन्वभूवं स एवाहमिदानीं सुखमनुभवामीति प्रतिसन्धानानुपपत्तेरित्यर्थः। उक्तप्रतिसन्धानेन ज्ञातृत्वस्थिरत्वयोर्विषयीकरणादिति भावः। अबाधादिति। नाहं स इति बाधकप्रत्ययविरहादित्यर्थः। ननु यत्सत् तत् क्षणिकमिति व्याप्त्या भासमानहेतुना क्षणिकत्वसिद्ध्या यौक्तिको बाधोऽस्त्येवेत्यत आह क्षणेति। भ्रान्तित्वेऽपि सोऽहमिति प्रतिसन्धाने संस्कारसाचिव्यावश्यम्भावादात्मस्थैर्यमावश्यकमित्यभिप्रायेणाह भ्रान्तीति। सोऽयं घट इति विषयप्रत्यभिज्ञानमप्युक्तयुक्त्या स्थैर्य-

आत्मप्रतिसन्धानम्, विषयप्रत्यभिज्ञानम्, स्मृतिमात्रञ्च संस्काराधारं स्थिरमात्मानमन्तरेण कथञ्चिदपि न घटते। ततश्च उपायानुष्ठानतत्फलानुभवादयोऽपि दुरुपपादाः॥

यत्पुनराहुः "यस्मिन्नेव हि सन्ताने आहिता कर्मवासना। फलं तत्रैव बध्नाति कार्पासे रक्तता

---

मिति प्रतिसन्धानमित्यर्थः। विषयप्रतिसन्धान(त्यभिज्ञान?)मिति। यः पूर्वं मया दृष्टः स एवायमिति प्रत्यभिज्ञानमित्यर्थः। ननु तन्मते स्मृतिप्रत्यक्षयोः क्लृप्तकारणाभ्यां स इति, अयं घट इति च ज्ञानद्वयमेव भवति; "स्मृतिः पूर्वानुभूतेऽर्थे दर्शनं वार्तमानिके। तयोरत्यन्तभेदे च केन भेदः प्रतीयताम्?" इति तदुक्तेरित्यत आह स्मृतिमात्रञ्चेति। यद्वा अत्यल्पमिदमुच्यते प्रत्यभिज्ञानं न स्यादिति; स्मृतिमात्रमपि संस्काराधारं स्थिरमात्मानमन्तरेण न घटते इत्याह स्मृतिमात्रञ्चेति। दुरुपपादा इति। ततश्च, "उदासीनानामपि चैवं सिद्धिः" इति न्यायेन कस्यापि कर्मसु प्रवृत्तिर्न स्यात्॥ भाविभोक्त्रैक्यभ्रमात् प्रवृत्तिरिति चेत्; क्षणिकत्वेन निश्चयवतः प्रवृत्त्यनुपपत्तेः। ननु मेऽहमहेऽपि पुत्रपौत्रपरम्परानुभाव्यफलेच्छया कर्मसु प्रवृत्तिदर्शनात्, तद्वदिहापि प्रवृत्तिः॥ तत्र कार्यकारणभावस्य नियामकत्वक्लृप्तेरिति चेत्; तर्हि पितृकृतानां कर्मणां फलं पित्रनुभवादिफलं स्मरणञ्च पुत्रपौत्रपरम्परायामपि भवेत्; कार्यकारणभावस्य स्वकीयज्ञानसन्तान इव तस्यामपि सत्त्वादिति भावः। उक्तञ्चाभियुक्तैः—

"कृतप्रणाशाकृतकर्मभोगभवप्रमोक्षस्मृतिभङ्गदोषान्।

उपेक्ष्य साक्षात् क्षणभङ्गमिच्छन् अहो महासाहसिकः परोऽसौ॥" इति।

ननु पुत्रपौत्रादौ नानुभवफलस्मरणादिप्रसङ्गः; विसजातीयसन्तानत्वात्। न च सन्तानैक्येऽपि व्यक्तिभेदादन्यगतसंस्कारस्मरणादिहेतुत्वमयुक्तमिति वाच्यम्; कार्पासबीजादिकृतदोहलसंस्कारस्य कालान्तरभाविपुष्पफलादिगतवर्णरसविशेषहेतुत्वदर्शनादित्याशङ्कां पराकरोति यत्पुनरित्यादिना। स्थिरावयवा

---

साधकमित्याह विषयेति। किं बहुना? स्मृतिमात्रमेव स्थैर्यसाधने पर्याप्तमित्याह स्मृतीति। कथञ्चिदपीति। अनुभवसंस्कारयोः संस्कारस्मृत्योश्च सामानाधिकरण्येनैव कार्यकारणभावात्। अन्यथाऽन्यानुभूतस्यान्येन स्मरणप्रसङ्गादिति भावः। स्वप्रवृत्तिव्याघातमाह ततश्चेति। आत्मनः स्थैर्यविरहादित्यर्थः। चो भिन्नक्रमः। दुरुपपादाश्चेति प्रागुक्तदूषणसमुच्चयः। उपायानुष्ठानेति। भोजनाद्यर्थपाकानुष्ठानेत्यर्थः। दुरुपपादा इति। आत्मनः स्थिरत्वाभावे फलस्य स्वसम्बन्धत्वाभावनिश्चयेन प्रवृत्त्यसम्भवादिति भावः। न च—पुत्रपौत्राद्यनुभाव्यफलार्थं कर्मसु प्रवृत्तिदर्शनेन नावश्यं स्वगतफलमुद्दिश्यैव प्रवृत्तिरिति नियमः; अतः स्वनये उपसंबन्धिफलोद्देशेनैव सर्वत्र प्रवृत्तिरिति नियमाभ्युपगमान्नानुपपत्तिः; प्रकृतेऽपि फलाश्रयस्य स्वप्रयोज्यत्वानपायात्। उत्तरोत्तरज्ञानात्मनां पूर्वपूर्वज्ञानात्मजन्यत्वात्—इति वाच्यम्; क्षुधार्तस्य भोजनादिप्रवृत्तौ फलस्य स्वसंबन्धित्वेनैवेष्टत्वदर्शनात् आत्मस्थैर्यविरहे तदनुपपत्तेर्दुर्वारत्वात्। स्थैर्यभ्रान्त्या तथेच्छाप्रवृत्ती इति तु दत्तोत्तरम्; बाधाभावेन भ्रान्तित्वायोगादिति। संस्काराधारं स्थिरमात्मानमन्तरेण नोपपद्यत इत्यत्र सौगतोक्तं समाधानमनुभाषते यत्पुनरिति। आहिता कर्मवासनेति। अयं

यथा ॥" इति; तदप्यसत्। तत्र वासनाधारस्थिरान्वयानुवृत्तेः। निरन्वयविनाशिषु जगति सर्वक्षणेषु सन्तानैक्यभेदादयोऽपि दुर्वचाः। नष्टं पूर्वं क्षणं प्रति जायमानस्य सर्वस्यापि क्षणस्य उत्तरत्वाविशेषात्। देशविशेषस्यापि क्षणिकत्वेन तदैक्यासिद्धेः। अत एव चित्तविज्ञानालयविज्ञानसन्तान-

---

नुवृत्तेरिति। दोहलद्रव्याणां यावत्कार्योत्पत्ति सूक्ष्मरूपेणावस्थानस्य वृक्षायुर्वेदादिदोहलशास्त्रप्रसिद्धत्वादिति भावः। अवस्थाप्रहाणादिरूपविनाशव्यावृत्त्यर्थं निरन्वयेत्युक्तम्। सर्वक्षणेष्विति। बौद्धमते वस्तुतः कालस्याभावात्, घटादेरेव उक्ततः स्वरसभङ्गुरतया क्षणकरणानिमित्ततया, क्षण्यते हिंस्यते इति व्युत्पत्त्या च घटादेरेव तन्मते क्षणत्वेन व्यपदेशः। न च घटादिव्यतिरेकेण क्षणाभावे तन्मते सर्वं क्षणिकमिति व्यवहारः कथमिति शङ्कनीयम्; वपुष्मान् शिलापुत्रक इत्यादिवदुपपत्तेरिति भावः। एवमुत्तरत्रापि क्षणशब्दार्थो द्रष्टव्यः। ननु निरन्वयविनाशेऽपि पूर्वक्षण उत्तरक्षणे संस्काराधायक इति नातिप्रसङ्ग इत्याशङ्क्याह नष्टमिति। ननु स्वसमानदेशोत्तरक्षणे पूर्वक्षणः संस्काराधायक इति नातिप्रसङ्ग इत्याशङ्क्याह देशविशेषस्यापीति। अत एवेति। "तत् स्यादालयविज्ञानं यत् भवेदह-

---

भावः — एकसन्तानान्तर्गतपूर्वपूर्वज्ञाननिष्ठाया अनुभववासनायाः सुखदुःखवासनायाश्च तादृशोत्तरोत्तरज्ञाननिष्ठतादृशवासनां प्रति हेतुत्वम्। ततश्च तत्सन्तानान्तर्गतज्ञानान्तरे स्मरणस्य सुखदुःखयोर्वा नानुपपत्तिः। यथा कार्पासबीजादिकृतदोहळसंस्कारस्य कालान्तरभावि पुष्पफलादिगतवर्णरसविशेषहेतुत्वम्, तद्वदिति। कल्पनागौरवमभिसन्धाय दूषयति तदप्यसदिति। दृष्टान्तवैषम्यमाह तत्रेति। स्थिरान्वयानुवृत्तेरिति। तथैव देहळशास्त्रप्रसिद्धत्वात् स्थिरपक्षे तथैवाभ्युपगमेन कार्यगतवासनां प्रति कारणगतवासनाया हेतुत्वस्य संप्रतिपन्नत्वाभावेन दृष्टान्तत्वासंभव इति भावः। एकसन्तानान्तर्गतपूर्वपूर्वज्ञाननिष्ठवासनया तत्सन्तानान्तरगतोत्तरोत्तरज्ञानेषु वासनोत्पत्तिकारणाय एककार्यकारणकोटौ एकसन्तानान्तर्गतत्वनिवेशः कृतः; तत्र सन्तानैक्यभेदयोरेव दुर्वचत्वेनोक्तापत्तिवारणमशक्यमित्यभिप्रायेणाह निरन्वयेति। पूर्वावस्थानाश एव तद्विशिष्टस्यापि नाशः; न तु द्रव्यस्वरूपोच्छेद इति पक्षे द्रव्यस्वरूपैक्यमेवावस्थाविशिष्टसन्तानैक्यमिति सुवचतया तद्व्यावृत्त्यर्थं निरन्वयेत्युक्तम्। निरन्वयविनाशः विशेष्यस्वरूपस्याप्युत्तरक्षणासंबन्धसंपादको विनाशः। तथाच युष्माभिर्द्रव्यस्वरूपस्याप्युच्छेदाभ्युपगमात् विशेष्यैक्यमेव विशिष्टसन्तानैक्यमिति न सुवचमिति भावः। सर्वक्षणेष्विति। सौगतमतेऽतिरिक्तकालानुपगमात् घटादेरेवोक्ततः स्वरसभङ्गुरतया क्षणरूपत्वम्। क्षण्यते=हिंस्यत इति व्युत्पत्त्या च तथा। सर्वं क्षणिकमिति व्यवहारस्तु वपुष्मान् शिलपुत्रक इत्यादिवदिति भावः। सन्तानैक्यभेदादय इति। आदिना वासनासङ्क्रम-तदाभावौ विवक्षितौ। ननु पूर्वापरभावापन्नज्ञानसमुदाय एव सन्तानपदार्थ इति तदैक्यमेव सन्तानैक्यमित्यत आह नष्टमिति। सर्वस्यापीति। सन्तानान्तरान्तर्गतत्वेनाभिमतस्यापीति भावः। उत्तरत्वाविशेषादिति। तथाच तद्घटितसमुदायस्याप्येकसन्तानत्वापत्त्या अतिप्रसङ्गो दुर्वार इति भावः। ननु पूर्वापरभावापन्नैकदेशस्थविज्ञानसमुदाय एवैकसन्तानपदार्थ इति नोक्तदोषावकाशः; सन्तानान्तर्गतस्य भिन्नदेशस्थत्वादित्याशङ्क्याह देशविशेषस्यापीति। क्षणिकत्वेनेति। तथाच पूर्वोक्त-

भेदोऽपि निरस्तः। ज्ञानमात्रात्मवादे च प्रागुक्तप्रतिसन्धानाद्यनुपपत्तिभिः सन्तानैक्यग्रहीतुरभावाच्च न सन्तानसिद्धिः। अतः—यदाहुः, "अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः। ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥" इति, तच्च तेषामेव विपर्यासितदर्शनत्वफलम्।

एतेन बौद्धान्निन्दतां वेदान्तिनामपि सिद्धान्तोऽपाकृतः। केवलज्ञप्तेरहम्प्रत्ययाविषयत्वात् स्थिर-

---

मास्पदम्। तत् स्याद्धि चित्तविज्ञानं यन्नीलादिकमुल्लिखेत्" इति चित्तविज्ञानालयविज्ञानसन्तानभेदमभ्युपेत्य अहं जानामीति यत् धर्मिधर्मभावादिभेदप्रतीतिसमर्थनम्, तदपि अपास्तमित्यर्थः। ज्ञानमात्रात्मवादे चेति। तन्मते उक्तरीत्या प्रत्यभिज्ञातुरसम्भवेन ऐक्यग्राहकाभावात्, ग्राह्यं न सिध्यतीति भावः। योगाचारमतं दूषयति यदाहुरिति। अविभागोऽपीति। निर्भेदमपि ज्ञानं भ्रान्त्या ज्ञातृज्ञानज्ञेयभेदवदिव लक्ष्यते इत्यर्थः॥

उक्तदूषणं मृषावादिमतेऽप्यतिदिशति एतेनेति। प्रकटसौगतनिरासेनेत्यर्थः। वक्ष्यति च आचार्यः—साङ्ख्यसौगतचार्वाकसङ्करात् शङ्करोदयः। दूषणान्यपि तान्यत्र पुनस्तदधिकानि तु॥ इति ननु न तन्न्यायातिदेशो मृषावादिमते युक्तः; मृषावादिमते ज्ञप्तेः स्थिरत्वाभ्युपगमेन स एवाहमिति प्रतिसन्धानानुपपत्तिलक्षणदूषणस्य तन्मत इव मृषावादिमते आपादनासम्भवात् इत्याशङ्क्य स्थिरत्वाभ्युपगमेऽपि विषयाश्रयशून्याया ज्ञप्तेरप्रामाणिकत्वेन अहम्प्रत्ययविषयत्वं न सम्भवतीत्याह केवलज्ञप्तेरिति। स्थिरत्वाभ्युपगमेऽपि केवलज्ञप्तेरहम्प्रत्ययाविषयत्वात् इति योजना। ननु ज्ञप्तेर्नी-

---

ज्ञानयोरेकदेशस्थत्वासंभव इति भावः। न च परस्परकार्यकारणभावापन्नज्ञानसमुदाय एवैकसन्तानपदार्थः भिन्नसन्तानान्तर्गतयोः कार्यकारणभावविरहान्नातिप्रसङ्ग इति वाच्यम्; पौर्वापर्याविशेषे एकसन्तानान्तर्गतयोरेव कार्यकारणभाव इत्यत्र नियामकाभावात्। एकसन्तानान्तर्गतत्वस्यैव नियामकत्वे अन्योन्याश्रयप्रसङ्गात्—एकसन्तानान्तर्गतत्वात् कार्यकारणभावः, कार्यकारणभावाच्चैकसन्तानान्तर्गतत्वमिति। अत एवेति। सन्तानैक्यभेदयोर्दुरुपपादत्वादेवेत्यर्थः। चित्तविज्ञानेत्यादि। "तत् स्यादालयविज्ञानं यत् भवेदहमास्पदम्। तत् स्याद्धि चित्तविज्ञानं यन्नीलादिकमुल्लिखेत्" इत्युक्त इत्यादिः। निरस्त इति। तथाच तदवलम्बेन, अहं जानामीति धर्मधर्मिभावप्रतीतिसमर्थनं दूरापास्तमिति भावः। न सन्तानसिद्धिरिति। पूर्वापरभावापन्नानेकज्ञानघटितैकसमुदायस्यैव सन्तानपदार्थतया ज्ञानमात्रात्मवादे ज्ञातृत्वविरहात् क्षणिकत्वाभ्युपगमेन पूर्वापरभावापन्नानेकज्ञानप्रतिसन्धानासंभवाच्च न सन्तानज्ञानसंभव इति भावः। उक्तदूषणगणेनैव योगाचारमतमपि निरस्तमित्याह अत इति। प्रागुक्तप्रतिसन्धानानुपपत्तेरित्यर्थः। अविभागोऽपीत्यादि। निर्भेदमपि ज्ञानं भ्रान्त्या ज्ञेयज्ञातृज्ञानभेदवदिव लक्ष्यत इत्यर्थः॥

प्रकटबौद्धमतनिरसनेन प्रच्छन्नबौद्धमतमपि निरस्तमित्याह एतेनेति। केवलज्ञप्तेरिति। विषयाश्रयशून्यज्ञप्तेरित्यर्थः। अहम्प्रत्ययाविषयत्वादिति। तादृश्या अप्रामाणिकत्वात् अहंप्रत्ययविषयत्वासंभवादिति भावः। यद्वा अहम्प्रत्ययः अहं जानामीत्याकारको ज्ञानविषयकः प्रत्ययः। विषयाश्रयशून्यज्ञप्तेस्तद्विषयत्वाभावादित्यर्थः। विषयाश्रयविशिष्टतयैव तद्भानादिति भावः। ननु स्थिरत्वाभ्युपगमान्नानुपपत्तिः।

त्वाभ्युपगमेऽपि, अनुभवितृसापेक्षत्वात् भ्रान्तिरूपस्यापि प्रतिसन्धानादेः ज्ञातृत्वस्यापि भ्रान्त्यन्तरसिद्धत्वे अनवस्थानात् । न चासौ कारणानवस्थितिरिति न दोषः । दोषाधिष्ठानयोरपि तथाभूतयोरेव सर्वत्र सम्भवेन अविद्यानादित्वाधिष्ठानसत्यत्वयोरपि परित्यागप्रसङ्गात् । यत्तु त एव

---

अर्थविषयापेक्षानियमः ; भ्रान्तिज्ञाने विषयापेक्षाया अदर्शनादित्याशङ्क्य विषयापेक्षानियमराहित्येऽपि आश्रयापेक्षानियमोऽस्त्येवेत्याह अनुभवितृसापेक्षत्वादिति । यद्वा एतच्छब्दार्थमाह केवलेति । ज्ञातृत्वस्थिरत्वशून्याया ज्ञप्तेः प्रतिसन्धातृत्वासम्भवेन आत्मत्वासम्भवादित्यर्थः । ननु नाशप्रतीतेरन्तःकरणवृत्तिविषयतया आत्मत्वेनाभ्युपगतायाः संविदः स्थिरत्वाभ्युपगमात् प्रतिसन्धातृत्वं सम्भवतीत्याशङ्क्य सोऽहमिति प्रतिसन्धानस्य पूर्वोत्तरकालवृत्त्यनुभवितृकर्तृविषयत्वेन संविदश्चानुभवितृत्वासम्भवात् प्रतिसन्धातृत्वानुपपत्तिस्तदवस्थैवेत्याह स्थिरत्वाभ्युपगमेऽपीति । उक्तञ्च भाष्ये, "अनुभूतेरात्मत्वाभ्युपगमे तस्या नित्यत्वेऽपि प्रतिसन्धानाभावस्तदवस्थः। प्रतिसन्धानं हि पूर्वापरकालस्थायिनमनुभवितारमुपस्थापयति; नानुभूतिमात्रम्" इति । नन्वस्तु प्रतिसन्धानं भ्रमः ; अतो विषयनैरपेक्ष्यवत् आश्रयनैरपेक्ष्यमपि स्यादिति कस्यचिन्मन्दाशङ्कां पराचष्टे भ्रान्तिरूपस्यापीति । नन्वस्तु ज्ञप्तेर्ज्ञात्रपेक्षा ; अथापि नानुपपत्तिः । अस्मन्मतेऽपि भ्रान्तिसिद्धस्य ज्ञातुरभ्युपगमादित्याशङ्क्याह ज्ञातृत्वस्यापीति । अनवस्थानादिति । भ्रान्तेरपि ज्ञातृसापेक्षतया ज्ञातुश्च तत्कल्पितत्वेन भ्रान्तिसिद्धत्वे वक्तव्ये तद्भ्रान्तिसिद्धत्वे अन्योन्याश्रयणप्रसङ्गात् भ्रान्त्यन्तरसिद्धत्वं वाच्यम् ; तथा च अनवस्थेत्यर्थः । बीजाङ्कुरादिवत् अनवस्थाया अदोषत्वमाशङ्क्याह न चासाविति । अविद्यानादित्वेति । अविद्याधिष्ठानयोः सादित्वसत्यत्वाभ्युपगमे तयोरपि अविद्याधिष्ठानान्तरसापेक्षत्वमित्यनवस्थाभिया हि तदनादित्वं सत्यत्वञ्चाभ्युपगम्यते ; उक्तरीत्या च अनवस्थाया अदोषत्वे तदपि न स्यादिति भावः । चेतनत्वे सति कर्तृत्वं हि ज्ञातृत्वम् । तत्र च यत्र कर्तृत्वमन्तः-

---

ततश्च कथं बौद्धमतान्तरानन्तरं मतान्तरनिरसनमित्यत आह स्थिरत्वाभ्युपगमेऽपीति । अनुभवितृसापेक्षत्वादिति । अन्यत्र सिद्धस्यैवान्यत्रारोपणीयतया भ्रान्तिरूपप्रतिसन्धानस्यापि वास्तवानुभवितृत्वाश्रयसापेक्षत्वात् क्वचिदप्यनुभवितृत्वस्य वास्तवस्याभावात् भ्रान्तिरूपमप्यनुभवितृत्वप्रतिसन्धानं न सम्भवतीति भावः । नन्वारोप्यज्ञानजन्यसंस्कारत्वेन आरोप्यविषयकसंस्कारत्वेनैव वा भ्रान्तिहेतुत्वम् ; न त्वारोप्यप्रमाजन्यसंस्कारत्वेन, गौरवात् मानाभावाच्च । ततश्च वास्तवानुभवितृत्वस्य क्वचिदप्यभावेऽपि तद्विषयकभ्रान्त्युपपत्त्या न वास्तवज्ञातृत्वाश्रयः कश्चनापेक्षणीय इत्यत आह ज्ञातृत्वस्येति । अनवस्थानादिति । भ्रान्तिजनकसंस्कारजनकज्ञानस्यापि भ्रान्तित्वे तज्जनकसंस्कारजनकं ज्ञानान्तरमपेक्षितम् ; तस्यापि भ्रान्तित्वे तत्राप्युक्तरीत्या ज्ञानान्तरापेक्षया अनवस्था स्यादित्यर्थः । क्वचिद्ज्ञातृत्वस्य वास्तवस्य सत्त्वे तु नायं दोषः ; तज्ज्ञाने संस्कारस्याहेतुत्वेन ज्ञानान्तरानपेक्षणादिति भावः । अविद्यानादित्वाधिष्ठानसत्यत्वयोरपि परित्यागप्रसङ्गादिति । अयं भावः—अविद्यायाः सादित्वे तत्कारकमविद्यान्तरमपेक्षितम् , तस्यापि सादित्वे तथेत्यनवस्थापत्त्या हि अविद्याया अनादित्वमभ्युपगम्यते, यदीदृशानवस्थायां अदोषत्वं स्वीक्रियते, तदा अविद्याया अनादित्वं नाभ्युपगन्तव्यम् । एवमधिष्ठानासत्यत्वे तदध्यासार्थमधिष्ठानान्तरमन्वेषणीयम् ,

साङ्ख्यैः सम्भूयाऽऽहुः—दर्पणमुखवत्, अयःपिण्डौष्ण्यवत्, करतलरविकरवच्च चिच्छायापत्ति-तत्सम्पर्क-तदभिव्यञ्जकत्वाधीनतदाश्रयत्वभ्रमात् अन्तःकरणस्य ज्ञातृत्वमिति—तत्र यथाश्रुतविवक्षायां कथमचाक्षुषयोर्बिम्बाधिकरणयोश्छायापत्तिः? अध्यासमात्रे तदुपचार इति चेत्; कुत्र कस्य? अन्तःकरणे चैतन्यस्येति चेत्; तर्हि चैतन्यमेव मिथ्या स्यात्; अध्यस्तत्वात् तदनधिकरणचैतन्यस्य खपुष्पपरिमळायमानत्वात्। चैतन्ये अन्तःकरणस्येति चेत्; तर्हि ज्ञानस्य अन्तःकरणाश्रयताभ्रमः

---

करणे, न तत्र चैतन्यम्। यत्र चैतन्यमात्मनि, तत्र न कर्तृत्वम्। अथापि कर्तर्येव अन्तःकरणे चिति बिम्बसङ्क्रान्त्या चैतन्यमारोप्यते मुखबिम्बसङ्क्रान्त्या दर्पणे मुखाश्रयत्वमिव। अथवा, उष्णद्रव्यसम्पर्कात् अयःपिण्डे औष्ण्यवत् अचेतने अन्तःकरणे चैतन्यसम्पर्कात् चैतन्यमारोप्यते। अथवा रविकराभिव्यञ्जके करतले तदभिव्यञ्जकत्वकृततदाश्रयत्वभ्रमवत् चैतन्याभिव्यञ्जके अन्तःकरणे तदभिव्यञ्जकत्वकृततदाश्रयत्वभ्रम इति मतं प्रतिक्षिपति **यत्तु त एवेति**। **यथाश्रुतेति**। **छायापत्तिशब्द**-मुख्यार्थविवक्षायामित्यर्थः। **अध्यासमात्र इति**। चिदध्यास एव छायापत्तिरुपचर्यते इति भावः। **चिच्छायापत्तिरि**त्यत्र षष्ठीतत्पुरुषो वा सप्तमीतत्पुरुषो वेति विकल्पमभिप्रयन् आह **कुत्र कस्येति**। ननु अहमर्थाश्रितचैतन्यस्य अध्यस्तत्वेन मिथ्यात्वेऽपि तदनाश्रितचैतन्यस्य अनध्यस्तत्वेन सत्यत्वे बाधकाभावादित्याशङ्क्याह **तदनधिकरणेति**। सर्वस्यापि ज्ञानस्य अहं जानामीत्यहमर्थाश्रितत्वेनैव प्रतीयमानतया तदनाश्रितचैतन्यस्य अनुपलब्धिपराहतत्वादिति भावः। **तर्हीति**। ज्ञाने अहमर्थस्य

---

तस्याप्यसत्यत्वे तथैवानवस्थापत्त्या ब्रह्मापि अधिष्ठानसत्यत्वमङ्गीक्रियते। यदीदृशानवस्थाया अदोषत्वम्, तदा अधिष्ठानस्यापि सत्यत्वं नाभ्युपगन्तव्यमिति शून्यवादप्रसङ्गः इति॥

उक्तानवस्थामन्तरेणैव ज्ञातृत्वभ्रान्त्युपपादनप्रकारान् अनुभाषते **यत्त्विति**। **साङ्ख्यैस्सम्भूयेति**। कृत्स्नप्रपञ्चमिथ्यात्वविरहेऽपि ज्ञातृत्वमात्रस्य मिथ्यात्वं सूपपादमित्यभिप्रायेण प्रवृत्तिं सूचयते। एतेन वियदादिप्रपञ्चस्येव ज्ञातृत्वस्याप्यविद्याकल्पितस्य सम्भवात् किं चिच्छायापत्त्यादिकुसृष्ट्याश्रयणेनेत्यपास्तम्। **चिच्छायापत्तीत्यादि**। अयं भावः—औपाधिकभ्रान्तिजन्यारोप्यसंस्कारस्य नपेक्षितत्वात्, इहाश्रयाश्रयि-भावमात्रस्यारोप्यतया तस्य चान्यत्र सिद्धत्वाद्वा नोक्तानवस्थाप्रसङ्ग इति। **यथाश्रुतविवक्षायामिति**। मुख्यार्थविवक्षायामित्यर्थः। **कुत्र कस्येति**। समासान्तर्गता विभक्तिः षष्ठी सप्तमी वेति तात्पर्यम्। षष्ठीत्यभिप्रायेण शङ्कते **अन्तःकरण इति**। **अध्यस्तत्वादिति**। अध्यस्तस्य मिथ्यात्वनियमादिति भावः। नन्वन्तःकरणे अध्यस्तस्य चैतन्यस्य मिथ्यात्वेऽपि तदनध्यस्तस्य स्वतन्त्रचैतन्यस्य न मिथ्यात्वमित्यत आह **तदनधिकरणेति**। तदनध्यस्तेत्यर्थः। **खपुष्पपरिमलायमानत्वादिति**। अत्यन्तासिद्धत्वादित्यर्थः। घटमहं जानामीत्यहमर्थरूपात्मधर्मतयैव चैतन्यस्य भानादन्तःकरणाध्यस्तचैतन्यमेवासिद्धम्। स्वतन्त्रचैतन्यं तु सुतरामसिद्धमिति भावः। समासान्तर्गता विभक्तिः सप्तमीत्यभिप्रायेण शङ्कते **चैतन्य इति**। दर्पणे मुखस्येवेति भावः। **ज्ञानस्येति**। अत्र षष्ठ्यर्थो भ्रमान्वयि विशेष्यत्वम्। **अन्तःकरणाश्रयताभ्रमस्स्यादिति**। दर्पणे मुखाश्रयताभ्रम इवेति भावः। इदञ्च संसर्गारोपाभिप्रायेण। तादात्म्यारोपे तु ज्ञाने अन्तःकरण-

स्यात् ; न तु अन्तःकरणस्य ज्ञातृत्वभ्रमः। न च एतादृशः कश्चित् भ्रमो दृश्यते । कथञ्च सम्पर्के सत्यपि द्वयोर्ज्ञातृत्वमौष्ण्यवत् तात्त्विकमनभ्युपगच्छतस्तदध्यासः ? धर्मधर्मिभावस्य लोके दृष्टत्वात् इह तदध्यासात् ज्ञातृत्वभ्रम इति चेत्—कुत्र धर्मत्वाध्यासः, कुत्र वा धर्मित्वाध्यास इति नियामकाभावात् वैपरीत्यमपि स्यात् ॥ क्वचित् धर्मिभेदाग्रहः क्वचित् धर्मभेदाग्रह इति तौ नियामकाविति चेन्न ; चितेः स्वयम्प्रकाशाया: स्वरूपातिरिक्ताগृहीतभेदानभ्युपगमात् । अभ्युपगमे वा स्वधर्मत्वापातात् ।

भेदाग्रहायोगादेव अहङ्काराभिव्यङ्ग्यत्वमपि निरस्तम् । यथाहुर्भगवद्यामुनमुनयः—

"शान्ताङ्गार इवाऽऽदित्यमहङ्कारो जडात्मकः । स्वयञ्ज्योतिषमात्मानं व्यनक्तीति न युक्तिमत् ॥

संसर्गारोपे ज्ञानमन्तःकरणाश्रय इति प्रतीतिः स्यात् । तादात्म्यारोपे च ज्ञानमहमस्येव प्रतीतिः स्यात् । उभयथाऽपि ज्ञानाश्रयोऽहमिति प्रतीतिर्न स्यादेवेति भावः । ननु न वयं ज्ञातृत्वस्य अध्यासं वर्णयामः, येन तस्य औष्ण्यवत् क्वचित् तात्त्विकत्वमभ्युपगन्तव्यं स्यात् । अपितु घटतद्रूपादौ लोकसिद्धो धर्मधर्मिभावो ज्ञानान्तःकरणयोरध्यस्यते[इति?] इति शङ्कते धर्मधर्मिभावस्येति । वैपरीत्यमपीति । अहं जानामीतिवत्, ज्ञानमहमर्थाश्रय इत्यपि प्रतीतिः स्यादिति भावः । ननु अन्तःकरणे धर्मिभेदाग्रहस्यैव सत्त्वात् धर्मित्वाध्यास एव; चैतन्ये च धर्मभेदाग्रहस्यैव सत्त्वात् धर्मत्वाध्यास एव ; धर्मधर्मिभेदाग्रहस्यैव(हयोरेव?) धर्मत्वधर्मित्वनियामकत्वात् । अतो न विनिगमकाभाव इति शङ्कते क्वचिद्धर्मभेदाग्रह इत्यादिना । चैतन्ये धर्मभेदाग्रहं वदता स्वरूपातिरिक्तभेदाग्रह उच्यते, उत स्वरूपानतिरिक्तभेदाग्रहः ? नान्त्यः ; स्वरूपस्य गृहीतत्वात् । तस्याग्रहे वा धर्मिज्ञानाभावेन आरोप एव न स्यादित्यभिप्रेत्य आद्यं दूषयति चितेरिति । भेदाग्रहायोगादिति । स्वयञ्ज्योतिष्ट्वेन गृहीतभेदतया पूर्वमेव व्यक्तत्वादिति भावः । यद्वा अहङ्काराध्यासहेतुभूतभेदाग्रहस्याभावेन अहङ्कारस्यैवाभावात् तदभिव्यञ्जकत्वमपि नास्तीत्यर्थः ।

---

तादात्म्यभ्रमः स्यादिति बोद्धव्यम् । नन्वन्तःकरणस्येति । अत्रापि भ्रमान्वाय विशेष्यत्वं षष्ठ्यर्थः । चित्संपर्कपक्षं दूषयति कथञ्चेति । तात्त्विकमनभ्युपगच्छत इति । तात्त्विकौष्ण्याश्रयसंसर्गस्यैवौष्ण्यभ्रमहेतुताया दृष्टतया तात्त्विकज्ञातृत्वाश्रयसंसर्गस्यैव ज्ञातृत्वभ्रमहेतुताया वाच्यत्वादिति भावः । लोके रूपरूपिप्रभृतौ । दृष्टत्वादिति । अतो न तस्य भ्रान्तिसिद्धत्वनिबन्धनानवस्थेति भावः । वैपरीत्यमपि स्यादिति। चैतन्यविशेष्यकाहमर्थाश्रयत्वप्रकारकभ्रमोऽपि स्यादित्यर्थः। क्वचिद्धर्मिभेदाग्रह इति । अहमर्थनिष्ठो यश्चैतन्यवद्भेदस्तदग्रह इत्यर्थः। क्वचिद्धर्मभेदाग्रह इति । चैतन्यनिष्ठो योऽहमर्थधर्मभेदस्तदग्रह इत्यर्थः। तौ नियामकाविति । अहमर्थस्य विशेष्यतया चैतन्यस्य प्रकारतया च भान इत्यादिः । चितेरित्यादि । अयमर्थः—किं चैतन्यनिष्ठोऽहमर्थधर्मभेदश्चैतन्यस्वरूपः, तदतिरिक्तो वा । आद्ये चैतन्यस्य स्वयंप्रकाशतया तदात्मकोक्तभेदप्रकाशावश्यम्भावात् भ्रमानुपपत्तिः ; द्वितीये स्वधर्मत्वप्रसङ्ग इति ॥

चिदभिव्यञ्जकत्वपक्षं दूषयति भेदेति। स्वरूपात्मकभेदाग्रहस्यायोगो येनेति व्युत्पत्त्या भेदाग्रहायोगशब्देन स्वयम्प्रकाशत्वमेव विवक्षितम् । ततश्च स्वयम्प्रकाशस्येतराभिव्यङ्ग्यत्वासंभवात् चैतन्यस्य स्वयम्प्रकाशतया नाहङ्काराभिव्यङ्ग्यत्वमित्युक्तं भवति । स्वयञ्ज्योतिषम्-स्वयम्प्रकाशम्, आत्मानं चैतन्यरूपम् । न युक्तिमदिति । चैतन्यस्य स्वयम्प्रकाशतया किञ्चिज्जन्यज्ञानविषयत्वरूपव्यङ्ग्यत्वासंभवात् ;

मां नाज्ञासिषमित्यपि स्ववपुगयज्ञानमात्राश्रयात्
स्वापप्राच्य निजक्रिय स्मरणतो ऽस्यात्मनाऽहमर्थ स्थिरः ॥ २८ ॥

आत्मनोऽहम्प्रत्ययगोचरत्वप्रतिक्षेपकाणि आत्मत्वाजडत्वनिर्विकारत्व दृनि प्रत्यक्षागमबाधात् असाधारणानैकान्तिकत्वाच्च निरस्तानि। एवं ज्ञातृत्वकर्तृत्वप्रतिक्षेपकेष्वपि भाव्यम्। एवं

नष्टोऽहमित्येव प्रतीतिः स्यात, सुप्तोऽहमिति प्रतीतिः स्यादिति भावः। ननु सुषुप्तावहमर्थस्य प्रकाशमानत्वे मां नाज्ञासिषमिति कथ प्रतीतिरित्याशङ्क्य तस्य देवत्वमनुष्यत्वादिवर्णाश्रमधर्नाज्ञानविषयतया उपपत्तिरित्याह मां नाज्ञासिषमिति। अज्ञानमात्राश्रयादिति। तदुल्लेखनादित्यर्थः। आश्रयादित्यनन्तरं युज्यते इति शेषः। निज क्रयेति अहमर्थस्य सुषुप्तौ विगमे ह्यन्तनस्मृतिर्न स्यादित्यर्थः।

प्रत्यक्षागमबाधा इति। अयञ्च बाधा, प्रत्यक्षत्वादुपलम्भत इति श्लोकविवरणे स्पष्टः। असाधारणेति। सपक्षे घटादौ तत्रावर्तमानत्वादात्मत्वादिहेतूनामित्यर्थः।

मुमुक्षुविषयम्, "अहं वै त्वमसि, मुमुक्षुर्वै शरणमहं प्रपद्ये" इत्यादि तत्श्च निरस्त वचेष्वपि मुक्तावप्यहं-शब्दप्रयोगादहंशब्दार्थो नाविद्यकः; किन्तु नित्य इति भावः। सुप्तोऽहमित्युक्तत इति सुप्तोऽहमिति व्यवहारादित्यर्थः अहमर्थस्यान्तःकरणरूपत्ववादिमः सुषुप्तदशायां तस्य न शाभ्युपगमात् सुषुप्त्याधारतया तत्कालेऽहमर्थस्य स्फुरणानुपपत्तिरूपत्वान नुपपत्तिरिति भावः। नन्वहमर्थस्याऽऽत्मत्वे आत्मनः स्वप्रकाशत्वम् हकश्रुत्यादिबलेन तस्य स्वयंप्रकाशत्वाभ्युपगमावश्यम्भावात् सुषुप्तिदशायामपि तस्य प्रकाशमानत्वावश्यकत्वे सुप्तोऽस्थितस्य, इयन्तं कालं मामप्यहं न ज्ञासिषमिति प्रतिसन्धानानुपपत्तिरित्यत आह मामिति इत्यपीत्यत्र इतीत्येतत् लुप्तमिति शेषम्। तथ च मां न ज्ञासिषमिति प्रत्ययेनापि वपुराद्यज्ञानमात्रविषयीकरणादिति भावः आश्रयः आश्रयणम्, विषयीकरणमिति यावत् इहगोऽहम्, अत्र सुप्तोऽहमिति मामप्यहं न ज्ञातवानित्यर्थात्र सुषुप्तदशायामहमर्थप्रकाशविरोध इति भावः। स्वापप्राच्येति। सुषुप्त वहमर्थविगमे स्वापप्राक्कालकृत्यपरिस्मरणानुपपत्त्या न तद्विगमः। तत्श्चास्थिरत्वेनाहमर्थस्यात्मत्वमिति शङ्का परास्तेति भावः (?) अत्र स्मरणत इति। [अत्र सर्वे?]पञ्चम्यर्थज्ञाप्यत्वस्य स्थैर्येऽन्वयः॥

नन्वात्मा नाहंप्रत्ययगोचरः; आत्मत्वात्; अजडत्वात, निर्विकारत्वात्, स्वयंप्रकाशत्वाद्वा। यन्नैवं तन्नैवम्; यथा अन्तःकरणमित्यनुमानेन ऽऽत्मनोऽहंप्रत्ययगोचरत्वाभावसिद्ध्या नाहमर्थ आऽऽत्मेत्याशङ्कां निराकरोति आत्मन इत्यादिना। प्रत्यक्षागमबाधादिति। प्रत्यक्षबाधादागमबाधाच्चेत्यर्थः। अत्रार्थः प्रत्यक्त्वादुपलम्भत इति श्लोकविवरणावसरे स्पष्टीकृतः। असाधारणानैकान्तिकत्वाच्चेति। सपक्षेभ्यो घटादिभ्योऽपि व्यावृत्तत्वादिति भावः। ज्ञातृत्वकर्तृत्वप्रतिक्षेपकेष्विति। आत्मनि ज्ञातृत्वाभावकर्तृत्वाभावसाधकतयाभिमतेष्वात्मत्वाजडत्वनिर्विकारत्वहेतुष्वित्यर्थः। भाव्यमिति। उक्तदोषाणां तत्रापि तुल्यत्वादिति भावः। कर्तृत्वज्ञातृत्वादिकमिति आदिना अहम्प्रत्ययगोचरत्वग्रहः। नात्मधर्म इति। आत्मवृत्तित्वाभाववदित्यर्थः; आत्मनिष्ठाभावप्रतियोगीति वा। दृश्यत्वादिकमित्यादिना आगन्तुकत्वसङ्ग्रहः। बाधकबलादिति। अहं करोमि, अहं जानामीत्यादिरूपप्रत्यक्षादिबाधकबलादित्यर्थः।

कर्तृत्वज्ञातृत्वादिकं नात्मधर्मः, धर्मत्वात् दृश्यत्वात् इत्यादिकमपि बाधकबलात्, विपक्षे बाधकाभावाच्च दुःस्थम्। नाहङ्कारधर्म इति प्रयुज्यमाने का गतिर्देवानांप्रियस्य? अविद्येति चेत्; सत्यमविद्यैव; अनाविद्यकर्तृत्वस्य क्वचिदपि अनभ्युपगमात्। आविद्यस्यापि निषेधे तद्विधानविरोधात्॥

का गतिरिति कर्तृत्वादेर्निराश्रयत्वात् असत्त्वप्रसङ्ग इत्यर्थः। अविद्येति चेदिति। आविद्यकमिति चेदित्यर्थः; उत्तरत्र तथा दर्शनात्। आविद्यस्यापि निषेधे इति। आत्मनि कर्तृत्वं हि निषेधता अनाविद्यककर्तृत्वस्य

---

आभाससाम्यमाह नाहङ्कारेति। का गतिर्देवानांप्रियस्येति। भवन्मते प्रतिवचनविषयः क इत्यर्थः। देवानांप्रियो मूर्खः। नाहङ्कारधर्म इति प्रयुज्यमाने विपक्षे बाधकाभावादिनैव तन्निरसनस्य भवद्भिः कार्यतया अस्माभिरपि तेनैव तन्निरसनं क्रियत इति भावः। अनेनाऽऽभाससाम्यमुक्तं भवति। ननु कर्तृत्वज्ञातृत्वादिकं नाहङ्कारधर्म इति प्रयोगस्य नास्माभिर्निरसनं कार्यम्; कर्तृत्वज्ञातृत्वादेस्तन्निष्ठान्तःकरणधर्मत्वस्य च ब्रह्मव्यतिरिक्तत्वेनाविद्याकल्पिततया मिथ्यात्वाभ्युपगमात्; मिथ्यात्वस्य च प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपत्वात् कर्तृत्वादावन्तःकरणवृत्तित्वाभावस्यान्तःकरणे कर्तृत्वाद्यभावस्य च सन्दिष्टत्वात्। येन संबन्धेन यत् यत्र संबद्ध्यते तत्संबन्धावच्छिन्नतन्निष्ठप्रतियोगिताकाभावोऽपि तत्र वर्तत इति ह्यस्माभिरङ्गीक्रियते। अतो न तन्निरसनमस्माभिः कार्यमिति नोक्तरीत्या आभाससाम्यप्रतिपादनसंभव इत्यभिप्रायेण शङ्कते अविद्येति चेदिति। अविद्यैव गतिरित्यनुषङ्गेण योजना। गतिः प्रतिवचनविषयः। अयं भावः—'कर्तृत्वादीनामविद्याकल्पितत्वेन मिथ्यात्वात् उक्तप्रयोगोऽस्माकमनुकूल एव' इत्येव प्रतिवचनमस्माभिः कार्यमिति। उपालभते सत्यमविद्यैवेति। अविद्यैव अज्ञानमेव। "स्वर्गकामो यजेत" इत्यादिकर्तृत्वविधानविरोधाज्ञानमेवोक्तप्रतिवचनेन सिद्ध्यतीतिभावः। तदेवोपपादयति अनाविद्येति। क्वचिदप्यनभ्युपगमादिति। इदञ्च विधानस्यानाविद्यकविषयतया प्रतिषेधस्याविद्यकविषयतया च विषयभेदान्न विरोध इति शङ्कानिरसनाय। तद्विधानविरोधादिति। स्वर्गकामो यजेतेत्यादिश्रुत्या कर्तृत्वविधानविरोधादित्यर्थः। श्रुतिविरुद्धानुमानस्य कालात्ययापदिष्टतया नानुमानेनात्मनः कर्तृत्वनिषेधसंभव इति भावः। यद्वा सत्यमविद्यैवेत्यत्राविद्याशब्देन, 'नाहङ्कारधर्मः' इति प्रयोक्त्राशयापरिज्ञानमेव विवक्षितम्। नाहङ्कारधर्म इत्यनेन हि अहङ्कारवृत्तिभेद एव साध्यतया प्रतिपाद्यते; नाहङ्कारवृत्तित्वाभावः, न वा अहङ्कारनिष्ठाभावप्रतियोगित्वम्। अहङ्कारवृत्तिभेदश्च कर्तृत्वादौ भवद्भिरपि नाभ्युपगम्यते; मिथ्यात्वग्राहकप्रमाणेन तद्वृत्ति तदत्यन्ताभावसिद्धावपि तद्भेदो न सिद्ध्यतीत्यभ्युपगमात्। तथा च धर्मत्वदृश्यत्वादिना कर्तृत्वादावहङ्कारवृत्तिभेदसाधने तस्य भवदनुकूलत्वविरहात् कर्तृत्वादीनामविद्याकल्पितत्वमादाय प्रतिवचनं प्रयोक्त्राशयापरिज्ञाननिबन्धनमेवेति। इत्थञ्चोक्तानुमानस्य विपक्षे बाधकाभावादिना निरसनमपि आवश्यकमिति आभाससाम्यं दुष्परिहरं भवतामिति भावः। नन्वहङ्कारे आविद्यकमपि कर्तृत्वं न स्वीक्रियते; ततश्चोक्तानुमाननिरसनं नास्माकमावश्यकमिति नोक्तरीत्या आभाससाम्यसंभव इत्याशङ्कां निरस्यति अनाविद्येति। आविद्यस्यापि निषेधे अविद्याकल्पितकर्तृत्वस्याप्यन्तःकरणवृत्तिभिन्नत्वाभ्युपगमे। तद्विधानविरोधादिति। स्वर्गकामो यजेतेत्यादेः कर्तृत्वविधायकश्रुतेरित्यर्थः।

ज्ञातृत्वञ्चास्य स्वाभाविकाकार इति, "ज्ञोऽत एव" इत्यधिकरणे श्रुतिभिरुपपादितम्। भोक्तृत्वहेतु-भूतं कर्तृत्वं भोक्तुर्जीवस्यैव", "तच्च सामान्यतः परमपुरुषहेतुकमिति, "कर्ता शास्त्रार्थवत्त्वात्", "परात्तु तच्छ्रुतेः" इत्यधिकरणे(णयोः?) प्रपञ्चितम्। अस्य स्वयम्प्रकाशत्वनित्यत्वनानात्वाणुत्वादीनि

---

काप्यभावेन तन्निषेधानुपपत्त्या आविद्यकस्यैव निषेधो वाच्यः; तस्य च अहङ्कारेऽपि त्वदुक्तरीत्या निषेधसम्भवेन, "स्वर्गकामो यजेत" इत्यादिकर्तृत्वविधायिशास्त्रविरोधप्रसङ्ग इति भावः।

**ज्ञोऽत एव**। अयमर्थः—आत्मा ज्ञ एव=ज्ञातैव; न ज्ञानमात्रम्। **अत एव**। श्रुतेरेवेत्यर्थः। **श्रुतिभिरिति**। "यो वेदेदं जिघ्राणीति स आत्मा, "विज्ञातारमरे केन विजानीयात्", "जानात्येवायं पुरुषः", "एष हि द्रष्टा श्रोता" इत्यादिश्रुतिभिरित्यर्थः। **भोक्तृत्वेति**। भोक्तृत्वस्य जीवगतत्वात् तद्धेतुभूतं कर्तृत्वमपि जीवस्यैव; "शास्त्रफलं प्रयोक्तरि" इति न्यायादिति भावः। **सामान्यत इति**। साधारण्येन इत्यर्थः। तथा च सर्वेषामपि कर्तृत्वं परमपुरुषाधीनमिति भावः। यद्वा **सामान्यत इति**। कालादृष्टादिवत् साधारणतया कारयितृत्वमिति भावः। ततश्च यदि ईश्वर एव साध्वसाधुकर्मकारयिता, तर्हि जीवस्य सालभञ्जिकास्थानीयतया विधिप्रतिषेधशास्त्राणामानर्थक्यमिति शङ्का परास्ता। तस्य कालादृष्टादिवत् साधारणकारणत्वेन उक्तदोषानवकाशात्; विधिनिषेधशास्त्रवैयर्थ्यर्थिमीश्वरगतकारयितृत्वस्य तादृशस्यैव

---

प्रामाण्यप्रसङ्गादित्यर्थः। अयं भावः—स्वर्गकामो यजेतेत्यादेर्ब्रह्मस्वरूपपरवाक्यवत् पारमार्थिकतत्त्वा-वेदकत्वलक्षणमुख्यप्रामाण्यविरहेऽप्यन्तःकरणनिष्ठाविद्यककर्तृत्वप्रतिपादकतया व्यावहारिकतत्त्वावेदकत्व-लक्षणममुख्यं प्रामाण्यमिति भवद्भिरङ्गीक्रियते, आविद्यककर्तृत्वस्याप्यन्तःकरणवृत्तिभिन्नत्वाभ्युपगमे तदपि नोपपद्यत इति वह्निना सिञ्चेदिति वाक्यवदत्यन्ताप्रामाण्यमेव स्यादिति।

नन्वात्मनो ज्ञातृत्वसत्त्वेऽपि तस्यागन्तुकत्वमेव न तु स्वाभाविकत्वमित्यत आह **ज्ञातृत्वञ्चेति**। चस्त्वर्थः वैलक्षण्यद्योतकः सन् उक्तशङ्कानिवर्तकः। **ज्ञोऽत एवेति**। आत्मा ज्ञ एव ज्ञातृस्वरूप एव, न ज्ञानमात्रम्; नापि जडस्वरूपः। **अत एव** श्रुतेरेवेत्यर्थः। **श्रुतिभिरिति**। 'अथ यो वेदेदं जिघ्राणीति स आत्मा', 'विज्ञातारमरे केन विजानीयात्', 'जानात्येवायं पुरुषः', 'एष हि द्रष्टा श्रोता' इत्यादिश्रुतिभि-रित्यर्थः। एवं कर्तृत्वमपि जीवस्यैवेत्यत्र युक्तिमाह **भोक्तृत्वेति**। भोक्तृत्वस्य जीवात्मगतत्वात् तद्धेतुभूतं कर्तृत्वमपि तस्यैव, शास्त्रफलं प्रयोक्तरीति न्यायादिति भावः। **सामान्यत इति**। कालादृष्टादिवत् परमपुरुषस्य जीवगतकर्तृत्वं प्रति साधारणकारणत्वमित्यर्थः। अनेन कर्तृत्वस्य परमपुरुषहेतुकत्वे पापस्य तेनैव कारितत्वापत्त्या तस्य दण्डधरत्वानौचित्यमिति शङ्का परास्ता; कालादृष्टादिवत् साधारणकारणत्वे तदप्रसक्तेः। असाधारणकारणत्व एव लोके तथा व्यवहारादिति। **कर्तेति**। अयमर्थः—भोक्तृभूतो जीव एव कर्ता-तथात्व एव स्वर्गकामो यजेतेत्यादिशास्त्राणां पुरुषप्रवर्तनरूपप्रयोजनवत्त्वसंभवात्। शास्त्रस्य हि प्रवर्तकत्वं बोधजननद्वारेण। नह्यचेतनं प्रधानं बोधयितुं शक्यम्। अतः शास्त्राणामर्थवत्त्वं भोक्तुश्चेतनस्यैव कर्तृत्वे भवेदिति। **परात्तु तच्छ्रुतेरिति**। तुशब्दः शङ्काव्यावर्तकः तत् कर्तृत्वम्, परात् परमपुरुषायत्त-मित्यर्थः। कुत इत्यत्राह **श्रुतेरिति**। "अन्तःप्रविष्टः शास्ता जनानाम्", "य आत्मानमन्तरो यमयति"

श्रुत्युपपत्तिभ्यां सिद्धानि । स्वस्य च अस्य स्वयम्प्रकाशत्वम् । परस्य तु तज्ज्ञानविषयतयैव प्रकाशते । स्वस्यापि प्रमाणान्तरावसेयाणुत्वशेषत्वनियाम्यत्वनित्यत्वादिविशिष्टरूपेण ज्ञानविषयत्वमस्त्येव ।

---

वक्तव्यत्वाच्च । उक्तञ्च श्रुतप्रकाशिकायाम्, "वैयर्थ्यं यावता न स्यात् विधानप्रतिषेधयोः । नियन्तृत्वश्रुतेस्तावान् सङ्कोचो न ततः परः ॥" इति । कर्ता शास्त्रार्थवत्त्वात् । अयमर्थः—भोक्तृभूतो जीव एव कर्ता; तथात्व एव, 'स्वर्गकामो यजेत" इत्यादिशास्त्राणां पुरुषप्रवर्तकतारूपप्रयोजनवत्त्वसम्भवात् अन्यस्य फलभाक्त्वे अन्यस्य तदर्थप्रवृत्त्यसम्भवेन शास्त्रवैयर्थ्यमेव स्यादिति । परात्तु तच्छ्रुतेः । तुशब्दः शङ्काव्यावर्तकः । तत् कर्तृत्वम् । परात् परमपुरुषात् । परमपुरुषायत्तमित्यर्थः । अत्र हेतुमाह—श्रुतेरिति । "अन्तःप्रविष्टः शास्ता जनानाम्", "य आत्मानमन्तरो यमयति" इत्यादिश्रुतेरित्यर्थः । नन्वात्मनां स्वप्रकाशत्वे परात्मनामपि ज्ञानान्तरनिरपेक्षप्रकाशत्वप्रसङ्गः । किञ्च नित्यत्वाणुत्वशेषत्वादि-विशिष्टस्य आत्मनः स्वप्रकाशप्रत्यक्षसिद्धत्वेन नित्यत्वादिबोधकशास्त्रानर्थक्यञ्च स्यादित्यत आह स्वस्मै इति । ज्ञानविषयत्वमस्त्येवेति नतु श्रुतप्रकाशिकायां ज्ञानज्ञातृसम्बन्धप्रतिसन्धानानुपपत्तिपरिहारावसरे आत्मनः स्वतो ज्ञानान्तरेण चावभासद्वयासम्भवमभ्युपेत्यैव शङ्कापरिहारयोर्दर्शनात् कथं तद्विरुद्धमिदं

---

इत्यादिश्रुतेरित्यर्थः. अणुत्वादीति आदिना निरवयवत्वच्छेदनानर्हत्वादिपरिग्रहः श्रुत्युपपत्तिभ्यामिति । श्रुतिः, "अत्रायं पुरुषः स्वयंज्योतिः, नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" इत्यादिरूपा । उपपत्तिः-आत्मा स्वयम्प्रकाश इत्यादिवक्ष्यमाणानुमानाकृताभ्यागमकृतविप्रणाशादि-प्रसङ्गसुखदुःखादिव्यवस्थारूपा । नन्वात्मनां स्वयम्प्रकाशत्वे परेषामपि ज्ञानान्तरनिरपेक्षप्रकाशत्वप्रसङ्ग इत्यत आह स्वस्येति । व्यवहारप्रयोजकत्वं संशयाभावप्रयोजकत्वं वा संबन्धषष्ठ्यर्थः प्रकाशान्वयी । स्वस्मै इति पाठेऽप्ययमेव चतुर्थ्यर्थः। परस्येति । षष्ठ्यर्थोऽप्ययमेव । तज्ज्ञानविषयतयैव परकीयज्ञान विषयतयैव । एवकारेण स्वयम्प्रकाशत्वव्यवच्छेदः । तृतीयार्थः प्रयोज्यत्वं प्रकाशेऽन्वेति । प्रकाशश्चेह व्यवहारविषयता संशयादिविषयत्वाभावो वा । नन्वात्मनः स्वस्मै स्वयंप्रकाशत्वे अणुत्वशेषत्वनियाम्यत्वादि विशिष्टवेषेणापि स्वयम्प्रकाशत्वसंभवात् तत्संशयानुपपत्तिरित्यत आह स्वस्यापीति । अस्त्येवेति । एव-कारो भिन्नक्रमः, ज्ञानविषयत्वमेवास्ति । न तु स्वयम्प्रकाशत्वमित्यर्थः। अनुभवानुरोधादिति भावः । तर्हि केनाकारेण स्वयम्प्रकाशतेत्यत्राह अहमितीति। तुशब्दः प्रत्यक्त्वादेरनुभवसिद्धमणुत्वादिवैलक्षण्यं द्योतयति। अत्र प्रत्यक्त्वादयः स्वयम्प्रकाशा एवेति केचिदाचार्याः । अपरे पुनः—'धर्मिभास्या एव ते । न च एवं सति धर्मिणः स्वभिन्नप्रकाशकत्वरूपविषयित्वापत्त्या तस्य धर्मभूतज्ञानासाधारण्यानुपपत्तिरिति वाच्यम्; स्वापृथक्सिद्धधर्मव्यतिरिक्तप्रकाशकत्वस्यैव विषयित्वरूपतया तस्य धर्मभूतज्ञानासाधारण्याक्षतेः' इत्याचक्षते। तत्र प्रत्यक्त्वादीनां स्वयम्प्रकाशत्वपक्षे, 'प्रत्यक्त्वादिविशिष्टतया स्वयम्प्रकाशता' इत्यत्र विशिष्टता संबन्धः, सांसर्गिकविषयतानिरूपितत्वरूपमवच्छिन्नत्वं तृतीयार्थः । प्रत्यक्त्वादिनिष्ठा प्रकारता, प्रत्यक्-त्वादिस्वरूपापृथक्सिद्धिसंबन्धनिष्ठा सांसर्गिकविषयता च प्रत्यक्त्वादिनिरूपिता । धर्मिनिष्ठा विशेष्यता

अहमिति प्रत्यक्त्वैकत्वविशिष्टतया तु स्वप्रकाशता सर्वदा। योगदशायां तु यथावस्थितापूर्वाकार-(स्थितपूर्वाकार)(स्थितसर्वाकार)विशिष्टतया यौगिकप्रत्यक्षेण साक्षात्क्रियते। तदिदमुक्तमात्मसिद्धौ-

सङ्गच्छतामिति चेत्-घटं जानामीति चक्षुरादिजन्यं ज्ञानं नात्मविषयमित्यत्र तात्पर्यात्। प्रत्यक्त्वैकत्वेति। नन्विदं प्रत्यक्त्वं न तावत् आत्मस्वरूपम्; तथात्वे प्रत्यक्त्वात्मनोर्विशेषणविशेष्यभावधर्मधर्मिभावा-द्यसम्भवापातात्। अभेदेऽपि विशेषणविशेष्यभावादिसत्त्वे "भेदव्यपदेशाच्चान्यः, उभयेऽपि हि भेदेनैन-मधीयते" इत्यादौ, "य आदित्ये तिष्ठन्", "य आत्मनि तिष्ठन्" इत्यादेराश्रयाश्रयिभावप्रतिपादकस्य भेदप्रतिपादकत्वेनोपन्यासोऽसङ्गतः स्यात्; एकत्वस्य सङ्ख्यारूपतया तस्या आत्मस्वरूपाद्भेदस्य आवश्यकत्वाच्च नापि ततो भिन्नं तद्धर्मरूपम्; आत्मनः स्वप्रकाशतया स्वमात्रसाक्षित्वेऽपि अतिरिक्त-धर्मभासकत्वासम्भवात्। इतरथा धर्मभूतज्ञानवत् विषयित्वप्रसङ्ग इति चेत्—उच्यते। प्रत्यक्त्वैक-त्वादिकं स्वरूपातिरिक्तधर्मान्तरमेव। न च तद्विषयकत्वे विषयित्वप्रसङ्ग इति वाच्यम्; स्वापृथक्सिद्ध-धर्मव्यतिरिक्तविषयकत्वं नास्तीत्यत्र [1]तात्पर्यात् विषयित्वाभावप्रवादस्य। वक्ष्यति च आत्मस्वरूपज्ञानस्य प्रमाणत्वम्। अतो न काचिदनुपपत्तिः। **अपूर्वाकारविशिष्टतयेति।** पूर्वाप्रतिपन्नतीव्रानुकूल्याणुत्वादि-विशिष्टतयेत्यर्थः। ननु आनुकूल्यस्य सदा भासमानस्य कथं योगजप्रत्यक्षमात्रग्राह्यत्वमिति चेन्न; **विरोधपरिहाराख्यग्रन्थे, "धर्मिज्ञानेन सर्वदा प्रकाशमानमानुकूल्यम्। तीव्रानुकूल्यं तु**

धर्मिनिरूपिता[2]। आसाञ्च विषयतानां परस्परं निरूप्यनिरूपकभावः; प्राभाकरमत इव सिद्धान्तेऽपि भिन्नज्ञानीयविषयतयोर्निरूप्यनिरूपकभावाभ्युपगमात्। स्पष्टमिदं श्रुतप्रकाशिकायां ज्ञानज्ञातृसम्बन्ध-प्रतिसन्धानानुपपत्तिपरिहारावसरे **स्वयम्प्रकाशता** स्वनिरूपितविषयता। **स्वयं**=स्वनिरूपिता **प्रकाशः**=विषयता यस्येति व्युत्पत्त्या स्वयम्प्रकाशशब्देन स्वनिरूपितविषयतावतो बोधनात्। तथाच आत्मनिष्ठा स्वनिरूपिता या विशेष्यतारूपा विषयता, सा प्रत्यक्त्वादिसंबन्धनिष्ठसांसर्गिकविषयतानिरूपितेत्युक्तं भवति। प्रत्यक्त्वादीनां धर्मिभास्यत्वपक्षे तु प्रत्यक्त्वादिनिष्ठप्रकारत्वापृथक्सिद्धिसंबन्धनिष्ठसांसर्गिक-विषयतयोरपि धर्मिनिरूपितत्वमेवेति बोद्धव्यम्। **सर्वदेति** सुषुप्तिदशायामपीति भावः। **अपूर्वाकार-विशिष्टतयेति।** पूर्वाप्रतिपन्नतीव्रानुकूल्याणुत्वाद्याकारविशिष्टतयेत्यर्थः। **पूर्वाकारेति** पाठेऽपि पूर्वं स्वरूपसद्भिरमानाकारेत्यार्थादुक्तार्थ एव पर्यवसानम्। **सर्वाकारविशिष्टतयेति** पाठस्त्वत्यन्तस्वरसः। नन्वानुकूल्यस्य सर्वदा भासमानस्य कथं योगजप्रत्यक्षमात्रग्राह्यत्वमिति चेत्, अत्राहुः — **विरोधपरि-**

1 सिद्धान्ते विषयत्वं नाम संयुक्तत्वं संयुक्ताश्रितत्वं वा। तत् ज्ञानं प्रति घटादेरस्ति। आत्मानं प्रति अपृथक्सिद्धधर्मे कथम्। अतः प्रत्यक्त्वादेः प्रकाशः=व्यवहारो धर्म्यधीन इत्येतावता कथं विषयित्वमात्मनः स्यादित्याकूतम्।

2 निरूपितेति। विषयतानां ज्ञाननिरूपितत्वं तार्किकेष्टम्; ज्ञानस्य विषयप्रकाशकत्वात्। ज्ञानान्तरं विना तस्यतस्यैव प्रकाशकत्वमिति स्वपक्षे च तस्यतस्य ज्ञानस्थानापन्नतया विषयतानां धर्मधर्म्यादिनिष्ठानामपि तत्तन्निरूपितत्वमप्यस्तीतीष्यत इति भावः। वस्तुत इह विषयता इमाः किमतिरिक्तपदार्थाः उतान्यथेति चिन्त्यम्। व्यवहारानुगुण्यातिरिक्ता हि सा संयोगादिः कथमत्र।

**भगवत्सङ्कल्पतिरोहिततया योगनिष्पत्तिकैवल्यदशासु धर्मभूतज्ञानमात्रभास्यम्''** इत्यानुकूल्यद्वित्वस्य आचार्यैरेव समर्थितत्वात् । ननु आत्मस्वरूपज्ञाने भासमानं मन्दानुकूल्यं किं स्वाभाविकम् उतौपाधिकम् ? नाद्यः ; सर्ववस्तूनां मन्दानुकूल्यप्रातिकूल्योदासीनत्वानां कर्मकृतत्वस्य **रहस्यत्रयसारे** तत्त्वत्रयाधिकारे प्रतिपादितत्वात् । न च मोक्षदशायामपि कस्तूरीचम्पककुङ्कुमाद्यपेक्षया दुर्गन्धलशुनादौ मन्दानुकूल्यं भासते इत्यकामेनापि स्वीकर्तव्यमिति वाच्यम् ; तस्यासम्प्रतिपत्तेः । मुक्तान् ईश्वरं प्रति च सर्वेषामत्यन्तानुकूलतयैवोपलब्धेः । किञ्च मोक्षे स्वरूपभूतज्ञानेन मन्दानुकूल्यभानस्य धर्मभूतज्ञानेन

---

**हाराख्यग्रन्थे,** 'धर्मिज्ञानेन सर्वदा प्रकाशमानमानुकूल्यम् । तीव्रानुकूल्यं तु भगवत्सङ्कल्पतिरोहिततया योगनिष्पत्तिकैवल्यदशासु धर्मभूतज्ञानमात्रभास्यमित्यानुकूल्यद्वित्वस्याचार्यैरेव समर्थितत्वात् तीव्रानुकूल्यस्य धर्मभूतज्ञानमात्रभास्यत्वमुपपद्यते । नन्वात्मस्वरूपज्ञाने भासमानं मन्दानुकूल्यं किं स्वाभाविकम्, उतौपाधिकम् ? नाद्यः ; सर्ववस्तूनां मन्दानुकूल्यप्रातिकूल्योदासीनत्वानां कर्मकृतत्वस्य **श्रीमद्रहस्यत्रयसारे तत्त्वत्रयचिन्तनाधिकारे** प्रतिपादितत्वात् । न च मोक्षदशायामपि कस्तूरीचम्पककुङ्कुमाद्यपेक्षया दुर्गन्धलशुनादौ मन्दानुकूल्यं भासत इत्यकामेनापि स्वीकर्तव्यमिति वाच्यम् ; तस्यासंप्रतिपत्तेः । मुक्तान् ईश्वरं प्रति च सर्वेषामत्यन्तानुकूलतयैवोपलब्धेः । किञ्च मोक्षे स्वरूपभूतज्ञानेन मन्दानुकूल्यभानं धर्मभूतज्ञानेन तीव्रानुकूल्यभानञ्च विरुद्धम् । न ह्येकमेव वस्तु उत्कृष्टानुकूलतया भासमानं मन्दानुकूलतयाऽपि भासमानं दृष्टम् । न चैकमेव वस्तु दर्शनस्पर्शनाभ्यामानुकूल्यतारतम्यवत्तयोपलब्धमिति वाच्यम् ; तत्र दर्शनस्पर्शनाभ्यां गृह्यमाणयोः रूपस्पर्शयोरेव आनुकूल्यतारतम्योपलम्भात् । इतरथा सप्तभङ्ग्या किमपराद्धम् । न द्वितीयः ; कर्मकृतमन्दानुकूल्यस्य मोक्षदशाव्यावृत्तस्य स्वरूपज्ञानभास्यत्वासंभवादिति चेत्—उच्यते ; स्वस्यैव सुषुप्तिदशायां मन्दानुकूल्यभानं तावत् दुरपह्नवम् । न च तत् स्वाभाविकमिति शक्यते वक्तुम् ; आत्मनो मन्दानुकूल्यस्वभावत्वानभ्युपगमात् । न च तत् धर्मभूतज्ञानवेद्यम् ; तस्येन्द्रियाधीनप्रसरणत्वेन सुषुप्तिदशायामसंभवात् । अतः कर्माधीनमन्दानुकूल्यमात्मस्वरूपाद्भिन्नमपि स्वरूपज्ञानेन भास्यत इति अकामेनापि स्वीकर्तव्यम् । मुक्तौ च स्वरूपज्ञानस्य नित्यस्य सत्त्वेऽपि वेद्यस्य मन्दानुकूल्यस्याभावान्न तदुल्लेखः । यथा नित्यस्यापीश्वरज्ञानस्य तत्तद्वस्तुवर्तमानत्वविषयकस्य न तदतीतदशायां तदुल्लेख इत्यलमतिप्रसङ्गेनेति । अत्रेदं बोद्धव्यम्—धर्मिज्ञानस्य संसारदशायामानुकूल्यभासकत्वम्, मुक्तिदशायां तदभाव इत्यभ्युपगमे धर्मिज्ञानस्य संसारदशायां विकासः मुक्तिदशायां सङ्कोच इत्यापद्येत । ततश्च तस्यैकरूपत्वसिद्धान्तविरोधः, न हि ज्ञानस्य तत्तद्वस्तुप्रकाशकत्वाभावातिरिक्तः सङ्कोचो नाम कश्चिदस्ति । न चैवंसतीश्वरज्ञानस्य तत्तद्वस्तुवर्तमानत्वविषयकस्य तदतीतत्वदशायां तद्वर्तमानत्वविषयकत्वे भ्रान्तित्वप्रसङ्गेन तदविषयकत्वावश्यम्भावात् सङ्कोचप्रसङ्ग इति वाच्यम् ; यत ईश्वरज्ञानस्य सर्वविषयकतया तत्तद्वस्तुनि विद्यमानाः सर्वेऽपि धर्मास्तद्विषया इत्यविवादम् । तत्र वर्तमानत्वं शब्दप्रयोगाधिकरणकालवृत्तित्वम् । अतीतत्वं शब्दप्रयोगाधिकरणकालवृत्तिध्वंसप्रतियोगित्वम् । भविष्यत्त्वं शब्दप्रयोगाधिकरणकालवृत्तिप्रागभावप्रति-

"एवमात्मा स्वतःसिध्यन् आगमेनानुमानतः। योगाभ्यासभुवा स्पष्टं प्रत्यक्षेण प्रकाश्य(श)ते॥" इति। तदेवं ज्ञातृत्वादिरूपभेदात् मातृमेयमानरूपोऽयमात्मा। उक्तं प्रज्ञापरित्राणे वरदनारायणभट्टारकैः, "प्रमाता च प्रमेयश्च प्रमाणञ्च भवेत् पुमान्। प्रमा मेया च धीरेव मेया एव घटादयः॥" इति।

---

तीव्रानुकूल्यभानस्य च विरुद्धत्वात्। न हि एकमेव वस्तु उत्कृष्टानुकूलतया भासमानं मन्दानुकूलतयाऽपि भासमानं दृष्टम्। न च एकमेव वस्तु दर्शनस्पर्शनाभ्यामानुकूल्यतारतम्यवत्तयोपलब्धमिति वाच्यम्; तत्र दर्शनस्पर्शनाभ्यां गृह्यमाणयोः रूपस्पर्शयोरेव आनुकूल्यतारतम्योपलम्भात्। इतरथा सप्तभङ्ग्या किमपराद्धम्? न द्वितीयः; कर्मकृतमन्दानुकूल्यस्य मोक्षदशायामावृत्तस्य स्वरूपज्ञानभास्यत्वासम्भवादिति चेत्—उच्यते। स्वस्यैव सुषुप्तिदशायां मन्दानुकूल्यं भासते इति न चैतदपह्नोतुं शक्यम्। न च तत् स्वाभाविकमित्यपि वक्तुं शक्यते; आत्मनो मन्दानुकूल्यस्वभावत्वेनानभ्युपगमात्। न च तत् धर्मभूतज्ञानवेद्यम्; तस्य इन्द्रियाधीनप्रसरणत्वेन सुषुप्तिदशायामसम्भवात्। अतः कर्माधीनमन्दानुकूल्यमात्मस्वरूपात् भिन्नमपि स्वरूपज्ञानेन भास्यते इत्यकामेनापि स्वीकर्तव्यम्। मुक्तौ च स्वरूपज्ञानस्य नित्यस्य सत्त्वेऽपि वेद्यस्य मन्दानुकूल्यस्याभावात् न तदुल्लेखः। यथा नित्यस्यापि ईश्वरज्ञानस्य तत्तद्वस्तुवर्तमानत्वविषयकस्य न तदतीतत्वादशायां तदुल्लेख इत्यलमतिप्रसङ्गेन। प्रमाता चेति। प्रमाणम् प्रमेत्यर्थः। प्रमा मेया चेति। अत्र एवकारो व्युत्क्रमेण मेया चेत्यनेन सम्बध्यते। ततश्च धीः

---

योगित्वम्। तत्तच्चैकवस्तुनिष्ठतत्तत्कालवृत्तित्वं तत्तत्कालवृत्तिध्वंसप्रतियोगित्वं तत्तत्कालवृत्तिप्रागभावप्रतियोगित्वञ्च ईश्वरज्ञाने सर्वदा विषयः। न हि यद्वस्तुनि यादृशकालवृत्तित्वरूपं वर्तमानत्वं तद्वस्तुनि तादृशकालवृत्तित्वमीश्वरज्ञानं कदाचिन्न विषयीकरोति। यदा तद्वस्तुनोऽतीतत्वम्, तत्कालवृत्तित्वं तद्वस्तुनः कदाचिदपि नास्तीति तद्वस्तुनि तत्प्रकारकत्वमीश्वरज्ञानस्य कदाऽपि नास्त्येव। अतो यद्विषयकत्वमीश्वरज्ञानेऽस्ति, तद्विषयकत्वं तत्र सर्वदाऽस्त्येवेति न काचिदनुपपत्तिरिति। किञ्च मुक्तिदशायां मन्दानुकूल्यभानविरहे, 'मन्दमान आनुकूल्यं निर्विकारस्वरूपप्रकाशकाले एतोदुं तीव्रं तीव्रमान अनुकूलं वमनादिकर्ममूलभगवत्सङ्कल्पविशेषकाले तिरोहितमाय्" इति विरोधपरिहारश्रीसूक्तिविरोधः; मुक्तिदशायामपि तद्भानस्य तच्छ्रीसूक्त्या लाभात्। अत इत्थं वाच्यम्—आत्मस्वरूपस्य वैषयिकसुखापेक्षयोत्कृष्टसुखरूपत्वं स्वाभाविकाकार इति हि सिद्धान्तसंप्रतिपन्नोऽर्थः। अनेन च सुखत्वं वैषयिकसुखापेक्षयोत्कर्षश्चेत्याकारद्वयं स्वाभाविकमित्युक्तं भवति। तत्र सुखत्वमात्रं धर्मिस्वरूपेण वा स्वयंप्रकाशतया वा सर्वदा भासते। वैषयिकसुखापेक्षयोत्कर्षस्त्वनादिकर्ममूलभगवत्सङ्कल्पविशेषेण तिरोहितस्सन् योगादिदशायां धर्मभूतज्ञानेनानुभूयते। तत्र विरोधपरिहारश्रीसूक्तौ मन्दमान आनुकूल्यमित्यनेन उत्कर्षाविशेषितं सुखत्वं विवक्षितम्। निर्विकारस्वरूपप्रकाशकाले इत्यस्य तादृशसुखत्वस्य धर्मिभास्यत्वपक्षे धर्मिस्वरूपप्रकाशेनेत्यर्थः; स्वयम्प्रकाशत्वपक्षे तु स्वात्मप्रकाशेनेत्यर्थः। तीव्रमान अनुकूलत्वमित्यनेन अनुकूलत्वशब्दितसुखत्वसमानाधिकरणतीव्रत्वशब्दित उत्कर्ष एव विवक्षित इति न कोऽपि विरोध इति।

प्रमाणञ्च भवेदिति। अत्र प्रमाणशब्देन भावल्युडन्तेन प्रमैवोच्यते। प्रमात्वं हि तद्वृत्ति

स्वयंप्रकाशत्वादौ श्रुतिः सुप्रसिद्धा । यद्यपि "सत्यं ज्ञानम्" इत्यत्र अन्तोदात्तत्वबलात् ज्ञानकर्तृत्वार्थकत्वमङ्गीकार्यम्, यद्यपि "विज्ञानघनः" इत्यत्र रसघनदृष्टान्तस्वारस्यात् ज्ञानव्याप्तत्वं विवक्षितम्, यद्यपि "विज्ञानं यज्ञं तनुते" इत्यादिषु तद्गुणसारत्वात्तु 'तद्व्यपदेशः प्राज्ञवत्'–तथापि "एष हि द्रष्टा श्रोता रसयिता घ्राता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः" इत्यत्र विज्ञानात्मशब्दस्वारस्यात्, विशेषतस्सामान्यतश्च प्रपञ्चितस्य ज्ञातृत्वस्य पुनर्वचने प्रयोजनाभावाच्च ज्ञानस्वरूपत्वं

---

प्रमा मेयैव; न तु प्रमात्रीत्यर्थः । सुप्रसिद्धेति । इदञ्चोत्तरत्र स्पष्टम् । अन्तोदात्तत्वबलादिति । ज्ञधातोः ज्ञानशब्दात् तदस्यास्तीत्यस्मिन्नर्थे अर्शआद्यच्प्रत्यये, "चितः" इत्यन्तोदात्तत्वं भवति । इतरथा ज्ञानशब्दात्, "अमि पूर्वः" इत्येकादेशस्य अनुदात्तैकादेशतया, "....अनुदात्तस्य स्वरितः" इति स्वरिते, स्वरितान्तत्वमेव स्यादित्यर्थः । तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवदिति सूत्रस्यायमर्थः—तुशब्दश्चोद्यव्यावर्तकः । आत्मनो विज्ञानगुणसारत्वात्=विज्ञानगुणप्रधानत्वात् विज्ञानमिति व्यपदेशः; यथा आनन्दस्य परमात्मनः, "आकाश आनन्दो न स्यात्" इत्यादौ आनन्दशब्देन व्यपदेशः, तद्वदित्यर्थः (दिति ?) विशेषतस्सामान्यतश्चेति । "द्रष्टा श्रोता" इति विशेषतः, "बोद्धा" इति सामान्यतश्च ज्ञातृत्वस्य प्रपञ्चितत्वादित्यर्थः पुनर्वचने इति । विज्ञानात्मा इति पुनर्वचने इत्यर्थः ।

---

तत्प्रकारकज्ञानत्वम् । तत्र प्रत्यक्त्वादीनां धर्मिभेदपक्षे धर्मिणः प्रत्यक्त्वादिमति प्रत्यक्त्वादिप्रकारकत्वात् प्रमात्वोपपत्तिः । तेषां स्वयंप्रकाशत्वपक्षे तु तद्वति तत्प्रकारकत्वशब्दित–तद्वन्निष्ठविशेष्यता निरूपिततन्निष्ठप्रकारतानिरूपकत्वस्येव तन्निष्ठप्रकारतानिरूपिततद्वन्निष्ठविशेष्यतानिरूपकत्वस्यापि विनिगमनाविरहेण प्रमात्वरूपतया दुर्वारतया प्रागुक्तरीत्या भिन्नज्ञानीयविषयतयोर्निरूप्यनिरूपकभावेन प्रत्यक्त्वादिनिष्ठप्रकारतानिरूपितधर्मिनिष्ठविशेष्यतानिरूपकत्वस्य धर्मिण्यक्षततया तदुपपत्तिः । प्रमा मेया च धीरेवेति अत्र एवकारो भिन्नक्रमः । चकारोऽर्थे । तेन धर्मिवैलक्षण्यं द्योत्यते धीस्तु प्रमा मेयैव; न तु प्रमात्रीत्यर्थः मेया एवेति । न तु प्रमारूपाः, न वा प्रमातार इत्यर्थः । सुप्रसिद्धेति । इदञ्चानुपदमेव स्पष्टीभविष्यति अन्तोदात्तत्वबलादिति । अज्ञधातोः ज्ञानशब्दात् अर्शआद्यच्प्रत्यये, "चितः" इत्यन्तोदात्तत्वं भवति । अन्यथा ज्ञानशब्दात्, "अमि पूर्वः" इत्येकादेशस्यानुदात्तैकदेशतया अनुदात्तस्य, "उदात्तादनुदात्तस्य स्वरितः" इति स्वरिते स्वरितान्तत्वमेव स्यादिति भावः । ज्ञानकर्तृत्वार्थकत्वमिति । ज्ञानाश्रयत्वार्थकत्वमित्यर्थः । न तु ज्ञानरूपत्वार्थकत्वमिति भावः । रसघनदृष्टान्तस्वारस्यात् ज्ञानव्याप्तत्वं विवक्षितमिति न तु ज्ञानत्वमिति भावः । तद्गुणसारत्वादित्यादि । सूत्रस्यायमर्थः—तुशब्दश्चोद्यव्यावर्तकः, —आत्मनो विज्ञानगुणसारत्वात्=विज्ञानगुणप्रधानत्वात् विज्ञानमिति व्यपदेशः, यथा आनन्दगुणसारत्वात् परमात्मनः, "यदेष आकाश आनन्दो न स्यात्" इत्यत्रानन्दशब्देन व्यपदेशः, तद्वदिति । विशेषतस्सामान्यतश्चेति, "द्रष्टा श्रोता" इत्यादिना विशेषरूपेण, "बोद्धा" इति सामान्यरूपेण चेत्यर्थः । पुनर्वचन इति विज्ञानात्मशब्देन विज्ञानम् आत्मा धर्मो यस्येति

सिद्धम् । तथा च, "अत्रायं पुरुषः स्वयञ्ज्योतिर्भवति", "कतम आत्मा? योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः" इत्यादिभिश्च स्वयम्प्रकाशत्वं स्वरससिद्धं क्रीकर्थम् ।

"अनुमितिस्तु आत्मा स्वयम्प्रकाशः ; ज्ञानत्वात् धर्मभूतज्ञानवत्" इति श्रीविष्णुचित्तैरुक्तम् । अधीकर्मतया प्रकाशमानत्वज्ञानात्मसम्बन्धप्रतिसम्बन्धित्वादीनि न परं भवितव्यानि विष्णुमिश्रोक्तानि॥

स्वस्यैव भासको दीपः स्वात्मनोऽन्यस्य च प्रभा ।
एवं भेदोऽस्ति साम्येऽपि ज्ञानयोर्धर्मधर्मिणोः ॥ २९ ॥

---

स्वरसेति । ज्योतिश्शब्दस्य प्रकाशे स्वरसत्वादिति भावः । अनुमितिस्त्विति । "अत्रायं पुरुषः स्वयञ्ज्योतिः" इत्यादिश्रुत्यनुग्राहकप्रमाणमनुमितिरित्युक्तमित्यर्थः । तनश्च उक्तमित्यस्य अनुमति रित्यनेन अनन्वय इति शङ्का परास्ता । अधीकर्मतया प्रकाशमानत्वेति ज्ञानान्तरानन्तरेण प्रकाशमानत्वेत्यर्थः । ज्ञानात्मेति । ज्ञानात्मनोर्यः सम्बन्धः तन्निरूपकत्वमित्यर्थः इदञ्च ज्ञानात्मनोरभयमात्रनिष्ठम् । ततश्च न कापि व्यभिचारः । ज्ञानस्य तु सम्बन्धस्य सिध्यति । आदिपदेन ज्ञानात्मान्तरादीनि विवक्षितानि । न च ज्ञानघटसम्बन्धप्रतिसम्बन्धित्वेन घटस्यापि स्वप्रकाशत्वं सुसाधमिति शङ्क्यम् ; अनुकूलतर्काभावादिति भावः । ननु धर्मभूतज्ञानस्येव धर्मिभूतस्यापि स्वप्रकाशत्वेन तद्वदेव परप्रकाशत्वमपि स्यादित्यत्राह स्वस्यैवेति ।

प्रत्यक्त्वानुकूलत्वैकत्वविशिष्टस्याऽऽत्मनः स्वयम्प्रकाशत्वे सिद्धे सुखमहमस्वाप्समिति परामर्शानुगुण्यमप्यस्ति । अयं हि सुषुप्तिकालेऽ(ला)नुभूतात्मगोचरः परामर्शः ; न त्वनुमितिः ; परामर्शत्वस्यैव स्वरसतः प्रतीतेः । अस्वप्रकाशत्ववादिमते तादृशस्याऽऽत्मनः प्रागननुभूतत्वेन परामर्शत्वानुपपत्तेः । न चैवं अतीतकालसम्बन्ध-स्वापांशयोरपि परामर्शत्वापत्तिः ; तत्र गमनस्वापपूर्वकालानुभूतेन लिङ्गेन स्वापकालसम्बन्धस्य, योग्यानुपलब्ध्या लिङ्गेन ज्ञानाभावरूपस्वापस्य चानुमेयत्वेऽपि स्वात्मांशस्य परामर्शत्वपरित्यागे कारणाभावात् । उक्तञ्च श्रुतप्रकाशिकायाम्, "तत्र स्वापदशायां योऽर्थो नानुभवितु शक्यः,तद्विषयप्रतिपत्तिस्वारस्यं भज्यते । यस्तु तदानीमनुभवयोग्य, तद्विषयप्रतिपत्तिस्वारस्यं स्थितमेव । स्वापस्य बाह्यान्तः(न्तः?)करणजन्यसमस्तज्ञानाभावरूपत्वात् स्वापस्तदाऽनुसन्धातुं न शक्यते । अनुसन्धानमस्ति चेत्, स्वाप

---

स्युत्पत्त्या पुनरभिधानं इत्यर्थः. स्वरससिद्धमिति ज्योतिश्शब्दस्य प्रकाशे स्वरसत्वादिति भावः । अनुमितिस्त्विति । अत्रानुमितिशब्द उक्तश्रुत्यनुग्राहकतर्कपरः तुशब्दः इत्यर्थकः. तथा चायमन्वयः— आत्मा स्वयंप्रकाशः ज्ञानत्वात् धर्मभूतज्ञानवदित्येतदुक्तश्रुत्यनुग्राहकतर्क इति श्रीविष्णुचित्तैरुक्तमिति । एतेन उक्तमिति नपुंसकत्वं कथमिति शङ्का परास्ता · अधीकर्मतया प्रकाशमानत्वेन ज्ञानान्तरानधीनप्रकाशवत्त्वं स्वेतरज्ञानानिरूपितविषयतावत्त्वपर्यवसितं तदर्थः । अनेन स्वाधीनप्रकाशवत्त्वं स्वनिरूपित विषयतावत्त्वपर्यवसितं स्वयंप्रकाशत्वं साध्यत इति न साध्याविशेषः । ज्ञानात्मसंबन्धप्रतिसंबन्धित्वेति । ज्ञानप्रतियोगिकात्मनिष्ठसंबन्धवत्त्वेत्यर्थः । संबन्धवत्त्वञ्च प्रतियोगित्वानुयोगित्वान्यतरसंबन्धेन । आदिना ज्ञानशब्दवाच्यत्वं विवक्षितम् । ननु धर्मिणो ज्ञानत्वाङ्गीकारे धर्मभूतज्ञानवत् परप्रकाशकत्वमपि स्यादित्यत्राह स्वस्यैवेति । दीपस्य तेजोरूपत्वे सत्यपि स्वमात्रभासकत्ववत् धर्मिणो

**प्रत्यक्स्वयम्प्रभसुखे नित्यं पुंसि व्यवस्थिते। अस्वाप्सं सुखमित्यादौ कालाद्यंशेऽनुमास्थितिः॥**
**अगायं मधुरम्, मन्दमगामित्येवमादिषु। माधुर्यादिवदत्रापि सुखं भाति तदातनम् ॥३१॥**

---

एव न स्यात्; ऐन्द्रियिकसमस्तज्ञाननिवृत्त्यभावात्। न चैवं सुखादेः प्रतिपत्त्यनुपपत्तिः" इति। तदेतत् सर्वमभिप्रयन् आह **प्रत्यक्स्वयम्प्रभेति**। ननु यथेदानीं **सुखं** भवति, तथाऽस्वाप्समित्येव प्रतीयते; न तु स्वापकालिकं सुखं प्रतिसन्धीयते इत्याशङ्क्य यथा **मन्दमगच्छम्, मधुरमगायम्** इत्यादौ मान्द्यमाधुर्ययोर्गमनगानसमकालत्वम्, तद्वत् सुखस्यापि स्वापसमानकालत्वमेव प्रतीतिस्वारस्यसिद्धमित्यभिप्रयन् आह **अगायमिति**।

ननु आत्मस्वरूपानुभवस्य नित्यतया संस्कारानाधायकत्वेन सुखाद्यंशे वा कथं प्रतिसन्धानम्? संस्कारस्य अनुभवसूक्ष्मावस्थारूपत्वेन नित्यात्मस्वरूपस्य सूक्ष्मावस्थाऽभावात्। किञ्च अनवरतोपचीयमानसंस्कारतया मुक्तिदशायामपि संस्कारापत्तिः। किञ्च पटीयसा सविकल्पकेन स्मृतेर्बीजमाधीयते। अविशदश्च स्वापादौ स्वानुभवः; निर्विकल्पकश्च। तेन कथं संस्काराधानम्? किञ्च अनुभवसंस्कारस्मृतीनां सामानाधिकरण्यस्य वक्तव्यतया, कथमात्मस्वरूपानुभवो धर्मभूतज्ञाननिष्ठस्मृतिहेतुसंस्कारमादध्यात्? उक्तञ्च **तत्त्वमुक्ताकलापे**,

**"बुद्धेरर्थेषु पूर्वप्रसरणजनितस्तेषु भूयोऽवगाहे**
**संस्कारः कारणं तन्मतिगत उचितः सोऽत्र धीद्रव्यपक्षे।**
**आत्माधारस्तु तद्वीप्रसरजनकताक्लृप्तिगौचित्यहीना**
**धीनिष्ठैव तेन ह्युचितमविकृतेरात्मनः कुण्ठतादेः॥" इति।**

अस्यार्थः—द्रव्यं हि बुद्धिः स्वार्थेषु प्रसरतीत्यस्मत्सिद्धान्तः। तेन बुद्धेः **पूर्वप्रसरणजनित**स्तस्य वस्तुनो ज्ञानत्वे सत्यप स्वभासकत्वमनुभवानुरोधादुपपन्नमिति भावः। प्रत्यक्त्वादनुकूलत्वैकत्वादिविशिष्टतया आत्मनः स्वयंप्रकाशत्वाभ्युपगम एव सुखमहमस्वाप्समिति परामर्शस्वारस्योपपत्तिरित्यभिप्रायेणाह **प्रत्यगिति**। **कालाद्यंशे**-कालाद्यंश एव; न तु सुखत्वविशिष्टात्मांश इत्यर्थः। **कालादीति**-आदिना स्वापपरिग्रहः।

अयं भावः; सुखमहमस्वाप्समित्यस्य कालस्वापांशयोरनुभूतार्थप्रत्यवमर्शरूपत्वं न संभवति—तयोस्तत्कालेऽनुभवितुमशक्यत्वात्। स्वापस्यैन्द्रियकसमस्तज्ञाननिवृत्तिरूपत्वात्। अतः स्वापपूर्वकालानुभूतार्थप्रत्यभिज्ञारूपलिङ्गेन स्वापकालसंबन्धस्य, योग्यानुपलब्धिलिंगेन च ज्ञानाभावरूपस्वापस्य चानुमेयत्वेऽपि सुखत्वविशिष्टस्य स्वयम्प्रकाशतया तदानीं भानसंभवात् तदंशे स्वरससिद्धं प्रत्यवमर्शरूपत्वं न बाधितव्यमिति। अनुगृहीतं हि **श्रुतप्रकाशिकायाम्**, "तत्र स्वापदशायां योऽर्थो न नुभवितुं शक्यः, तद्विषयप्रतिपत्तिस्वारस्यं भज्यते। यस्तु तदानीमनुभवयोग्यः, तद्विषयप्रतिपत्तिस्वारस्यं हि द्रष्टव्यमेव। स्वापस्य बाह्यान्त(न्तर?):करणजन्यसमस्तज्ञानाभावरूपत्वात् स्वापस्तदाऽनुसंधातुं न शक्यते। अनुसन्धानमस्ति चेत्, स्वाप एव न स्यात्; ऐन्द्रियकसमस्तज्ञाननिवृत्त्यभावात्। न चैवं सुखादेः प्रतिपत्त्यनुपपत्तिः" इति। ननु यथेदानीं सुखं भवति तथाऽस्वाप्समित्येव प्रतीयते। न तु स्वापकालिकं सुखं प्रतिसन्धीयत इत्याशङ्क्य मन्दमगच्छं मधुरमगायमित्यादौ मान्द्यमाधुर्ययोर्गमनगानकालिकयोरेव यथा प्रतिसन्धानम्, तद्वत् सुखस्यापि स्वापकालिकस्यैव प्रतिसन्धानं प्रतीतिस्वारस्यसिद्धमित्यभिप्रयन् आह **अगायमिति**। **सुखं भाति तदातनमिति**। तत्काल-

भूयोग्रहणे कारणं संस्कार इति सिद्धम् । तथाच तस्य बुद्धिनिष्ठत्वमेव समुचितम् । न च आत्माधारस्यैव संस्कारस्य स्मृतिरूपधीविकासहेतुत्वमुचितम् ; व्यधिकरणत्वात् । अतो धीनिष्ठेनैव संस्कारेण आत्मनः कुण्ठत्वमकुण्ठत्वञ्च वक्तुमुचितम् ; अविकारत्वादात्मनः। अतो धर्मभूतज्ञानगता एव सर्वे विकाराः ज्ञानद्वारा ज्ञानाश्रयात्मपर्यन्तं व्यवह्रियन्ते इति । ततश्च स्वरूपभूतज्ञानस्य न स्वव्यधिकरणधर्मभूतज्ञानवृत्तिसंस्काराधायकत्वमिति चेत्—

उच्यते । संस्कारस्य पूर्वानुभवसूक्ष्मरूपत्वे प्रमाणाभावात् । अनित्यज्ञानस्यैव संस्काराधायकत्वमित्यस्य श्रद्धामात्रविजृम्भितत्वात् । मोक्षे संस्कारकार्यानुपलम्भेन तत्कल्पनायां प्रमाणाभावात् । अनित्यज्ञानस्यैव संस्काराधायकत्वमिति नियमाभ्युपगमेऽपि जाग्रदादिभोगप्रदकर्मोपरतिरूपागन्तुकधर्मावच्छिन्नात्मस्वरूपानुभवस्यानित्यतया संस्काराधायकत्वसम्भवाच्च । आत्मनो निर्विकारत्वेन तत्र तस्य संस्कारानाधायकत्वेऽपि कार्यानुरोधेन धर्मभूतज्ञाने संस्कारोत्पत्तिसम्भवादित्यलमतिपल्लवेन ।

ननु देवदत्तस्य घटज्ञानम्, यज्ञदत्तस्य पटज्ञानमित्यादौ कर्मकर्तृसम्बन्धिन्येव ज्ञानपदप्रयोगात् कर्मकर्तृसम्बन्धित्वमेव ज्ञानपदप्रवृत्तिनिमित्तम् ; तद्रहिते च स्वरूपज्ञाने ज्ञानशब्द औपचारिकः स्यादित्या-

---

वच्छिन्नं सुखत्वं भातीत्यर्थः । इदमत्र बोद्धव्यम्—अतीतकालावच्छिन्नः सुखरूपो यः स्वापः, तदाश्रयोऽहमिति प्रतिसन्धानार्थः । तत्राऽऽत्मगतमेव सुखत्वं स्वाश्रयवृत्तित्वरूपपरम्परासंबन्धेन स्वापे भासते । तथाच सुखशब्देन सुखवृत्तित्वमेव विवक्षितमित्यात्मन्येव सुखत्वमानं फलितम् । तत्रातीतकालावच्छिन्नस्वापाश्रयत्वम् अहमतीतकालावच्छिन्नस्वापाश्रयः तत्कालावच्छिन्नज्ञानोपलब्ध्यभावात्, तत्कालावच्छिन्नज्ञानसामग्र्यभावाद्वा इत्यनुमानेन भासते, सुखत्वं परं संस्कारेण भासत इति तदंशे प्रत्यभिज्ञाप्रत्यक्षरूपं स्वापांशेऽनुमितिरूपमिदं ज्ञानम् । उपाधिसाङ्कर्यस्येव जातिसाङ्कर्यस्यापि दोषत्वाभावेन जातेरांशिकत्वे बाधकविरहेण च एकज्ञानस्यांशभेदेन प्रत्यक्षानुमितिरूपत्वोपपत्तेः । परन्तु, 'सुखत्वानुभवस्य धर्मिरूपस्य स्वस्वरूपस्य वा नित्यस्य संस्कारजनकत्वाभ्युपगमे प्रतिक्षणं संस्कारोत्पत्तिप्रसङ्गः ; किञ्चानित्यस्यानुभवस्यातीतस्य प्रत्यभिज्ञानादिकालेऽनवस्थानात् संस्कारमन्तरा कारणत्वानिर्वाहात् संस्कारजनकत्वाभ्युपगमावश्यम्भावेऽपि नित्यस्यानुभवस्य तदभ्युपगमो निष्फलः' इति इति शङ्काऽवशिष्यते । सा चैवं परिहरणीया— क्वचित् संस्कारस्य क्वचिदनुभवस्य च प्रत्यभिज्ञादिहेतुत्वाभ्युपगमे कार्यकारणभावद्वयापत्त्या सर्वत्र संस्कारत्वेनैकहेतुतासिद्धये नित्यानुभवस्यापि संस्कारजनकत्वं स्वीक्रियते । न चैवं प्रतिक्षणं संस्कारोत्पत्तिप्रसङ्ग इति वाच्यम् ; नित्यानुभवेन संस्कारे जननीये स्वापकालस्य सहकारित्वाभ्युपगमात् । स्वापकाले प्रतिक्षणं संस्कारोत्पत्तेरनिष्टत्वे तत्रैकस्य संस्कारस्य संस्कारान्तरप्रतिबन्धकता वाच्येति ।

ननु देवदत्तस्य घटज्ञानं यज्ञदत्तस्य पटज्ञानमित्यादिषु कर्मकर्तृसंबन्धिन्येव ज्ञानपदप्रयोगात् कर्मकर्तृसंबन्धिज्ञानमेव ज्ञानपदवाच्यं स्यात् ; न त्वतथाभूतं धर्मिज्ञानमित्यत आह

**ज्ञानस्य सम्बन्धिशब्दतया व्युत्पत्तिमात्रम् । प्रवृत्तिनिमित्तं तु कस्यचित् व्यवहारानुगुण्यै**

---

शङ्कयाह **ज्ञानस्येति**। यथा अयःपञ्जरस्थः सिंह इति व्युत्पत्तिग्रहोपायभूतपञ्जरस्य न प्रवृत्तिनिमित्तत्वम्; अपितु व्युत्पत्त्युपायत्वमेव, तथेत्यर्थः। यद्वा, यथा "इन्द्रियमिन्द्रलिङ्गमिन्द्रजुष्टमिन्द्रसृष्टमिन्द्रदत्तम्" इत्यादौ इन्द्रलिङ्गत्वादेरिन्द्रियशब्दव्युत्पत्तिमात्रनिमित्तत्वम्, एवं धात्वर्थरूपक्रियापरपर्यायभाववाचित्वं(भावत्वं?) ज्ञानमित्यत्र ल्युटो व्युत्पत्तिमात्रनिमित्तम्; न तु ज्ञानपदस्य क्रियात्वं प्रवृत्तिनिमित्तमिति। ननु **श्रुतप्रकाशिकायाम्**, "कर्मकर्तृसम्बन्धित्वं व्युत्पत्तिनिमित्तमस्तु न प्रवृत्तिनिमित्तम्। तत्तु ज्ञप्तिमात्रम्" इत्याशङ्क्य, "प्रयोगाधीनं हि प्रवृत्तिनिमित्तान्तरकल्पनम्। प्रयोगश्च सम्बन्धिन्येवार्थे इति नार्थान्तरकल्पना स्यात्। स्वरूपभूतज्ञानवाचिशब्दानां सम्बन्धिशब्दत्वं त्वन्मतेऽप्यनुपपन्नमिति चेन्न—स्वरूपगोचराणां स्वयम्प्रकाशत्वे रूढानां ज्ञानादिशब्दानां अनुभूत्यादिशब्देभ्यः शब्दान्तरत्वात्" इत्युक्तत्वात् तद्विरोध इति चेन्न–[1]मार्गान्तरस्य मार्गान्तरादूषकत्वात्। नन्वेवमपि भाष्ये, "संविदनुभूतिज्ञानादिशब्दाः

---

ज्ञानस्येति। ज्ञानशब्दस्येत्यर्थः। **संबन्धिशब्दतया**=कर्मकर्तृसंबन्धिज्ञानवाचकतया। **व्युत्पत्तिमात्रं** व्यवहाराधीनप्राथमिकशक्तिग्रहमात्रम्; न तु कर्मकर्तृसंबन्धिज्ञानत्वस्य ज्ञानपदप्रवृत्तिनिमित्तत्वग्रह इत्यर्थः। अयं भावः—इह सहकारतरौ मधुरं पिको रौतीत्यादौ सिद्धपदसान्निध्यात् पिकशब्दशक्तिग्रहे सहकारतरुवैयधिकरणकत्वादेरपि शक्ये प्रकारतया भानेऽपि तस्य शक्त्योपलक्षणत्वमेव; न तु तस्य प्रवृत्तिनिमित्तत्वम्; तद्वदिति भावः। तर्हि प्रवृत्तिनिमित्तं किमित्याकांक्षायां धर्मिणोऽपि ज्ञानस्वरूपत्वग्राहकश्रुत्यनुरोधेन तत्साधारणरूपमेवेत्याह **प्रवृत्तिनिमित्तं त्विति**। **कस्यचिदिति**। स्वस्य परस्य वेति भावः।

**व्यवहारानुगुण्येत्यादि**। व्यवहारानुगुण्यनिरूपितं साक्षाद्धेतुत्वं ज्ञानत्वमित्यर्थः। ज्ञानद्वारा

---

[1] मार्गान्तरस्येति। अयं भावः—ज्ञादिधातोः सविषयकार्थवाचित्वात् ततो निष्पन्नानां ज्ञानादिशब्दानां न धर्मिवाचित्वम्। धर्मधर्म्युभयसाधारणस्वप्रकाशत्वविशिष्टार्थे रूढास्तु ज्ञानादिशब्दाः अश्वकर्णादिशब्दवत् अव्युत्पन्ना अन्ये इत्येकः पक्षः। प्रथमतः सविषयकमात्रे व्युत्पत्तावपि आत्मन्यपि ज्ञानादिशब्दप्रयोगानुसारेण ज्ञाधातोरुभयसाधारणं किञ्चित्प्रकाशकत्वमेव प्रवृत्तिनिमित्तमिति द्वितीयः पक्षः। ज्योतिरादिशब्दानामिव ज्ञानादिशब्दानामपि गङ्गापदस्य तीर इव किञ्चित्प्रकाशकत्वरूपार्थमादाय लक्षणयैव निर्वाहसंभवात् यथालोकं सविषयकमात्र एव ज्ञाधातुप्रभृतेः शक्तिः; शब्दान्तरत्वञ्च न स्वरसमिति तृतीयः। अत्र पक्षे प्रत्यक्त्वैकत्वादेः स्वप्रकाशत्वमते तत्र ज्ञानशब्दप्रयोगापत्तिरिति दोषोऽपि वार्यते। औपचारिकप्रयोगाणामन्यथाऽऽपादनासंभवात्। प्रयुक्तमात्रनिर्वाहार्थमेवोपचारस्वीकारात्। प्रत्यक्त्वादेर्धर्मिभास्यत्वमेवास्त्विति चेत्—धर्मभूतज्ञानस्यापि धर्मिभास्यत्वमेवास्तु, स्वप्रकाशत्वं मा भूत्। 'स्वसंबन्धितया ह्यस्याः सत्ता विज्ञतितादि च' इत्युक्तेः। धर्मभूतज्ञानस्य परप्रकाशत्वात् स्वप्रकाशकत्वमपि धर्म्यधीनं स्वीकार्यमिति चेत्—न; अप्रयोजकत्वात्। ननु धर्मिभास्यत्वे अतीतानागतधर्मभूतज्ञानानामपि धर्मिसत्त्वात् भानं स्यादिति चेत्—तर्हि प्रकाशमानवस्तुसत्ताऽपि प्रकाशकारणमित्यायातम्। एवञ्चैकत्वप्रत्यक्त्वादिकमपि वर्तमानत्वात् स्वप्रकाशे कारणं स्यात्; धर्म्यपि। तथापि स्वप्रकाशत्वमादाय प्रत्यक्त्वादौ ज्ञानादिशब्दप्रयोगापादनं तु न भवति, औपचारिकप्रयोगे अतिप्रसक्तेर्दुर्वचत्वात्। अथवा सविषयके रूढस्य ज्ञानादिपदस्य आत्मनि प्रयोगः

निरपेक्षहेतुत्वम् । तदेवं स्वस्येति निरूपितं स्वयंप्रकाशत्वमिति न साध्याविशेषोऽपि । विषयाश्रयवैशिष्ट्यनिर्बन्धो धर्मभूतज्ञाने । धर्मिज्ञानस्यापि विशिष्टत्वात् परमतादतिरेकः ।

---

सम्बन्धशब्दा इति च शब्दार्थविदः । न हि ज्ञानादेरकर्मकस्याकर्तृकस्य च प्रयोगो दृष्टः" इति स्पष्टमुक्तत्वात् दुर्निरोधोऽयं विरोध इति चेत्–मैवम् । तस्यापि भाष्यस्य विषयप्रकाशकत्वाभिमतज्ञानविषयकत्वेनादोषात् । व्यवहारानुगुण्य इति । न च व्यवहारनिरपेक्षहेतुत्वमित्येवास्त्विति वाच्यम् ; तस्य व्यवजिहीर्षादिसापेक्षत्वेन असम्भवापत्तेः । व्यवहारानुगुण्यं तु तदभावेऽपि सम्भवतीति भावः । तदेवेति । व्यवहारानुगुण्यनिरपेक्षहेतुत्वेन स्वव्यवहारानुगुण्यनिरपेक्षहेतुत्वं साध्यते इति ज्ञानत्वात् स्वयम्प्रकाशत्वमिति पूर्वोक्तहेतौ न साध्याविशेष इत्यर्थः. ननु विषयाश्रयशून्यज्ञानाभ्युपगमे परमताविशेष इत्याशङ्क्य विषयादिविरहेऽपि परैरिव न सर्वात्मना निर्विशेषत्वमङ्गीक्रियते; विशेषान्तरस्वीकारादित्यभिप्रयन्नाह धर्मि-

---

व्यवहारानुगुण्यहेतोरिन्द्रियस्य वारणाय साक्षात्त्वनिवेशः । व्यवहारानुगुण्यञ्च व्यवहारानर्हतानिवृत्तिः । व्यवहारानर्हता च व्यवहारविशेषकारणसामान्याभावः । व्यवहारविशेषकारणानि च व्यवहर्तव्यज्ञानं व्यवजिहीर्षा व्यवहारानुकूलप्रयत्नश्च । सामान्यकारणकालादेः सर्वदा सत्त्वात् तदभावासंभवात् विशेषकारणेत्युक्तम् । इदञ्च व्यवहारानुगुण्यं घटादेर्विषयस्य धर्मभूतज्ञानस्य धर्मिणश्च साधारणम् । व्यवहर्तव्यता-संबन्धेन बुबोधयिषापूर्वकव्यवहारं प्रति विषयत्व–तादात्म्यान्यतरसंबन्धेन ज्ञानस्य हेतुतया व्यवहर्तव्यज्ञानरूपव्यवहारविशेषकारणसमवधाने, विषये धर्मधर्मिणोश्च व्यवहारविशेषकारणसामान्याभावरूपायाः व्यवहारानर्हताया निवृत्तेः । तद्धेतुत्वञ्च तत्प्रयोजकत्वमिति ज्ञानस्य तदक्षतम् । यद्वा व्यवहारानुगुण्यं व्यवहारप्रयोजकविषयता तद्धेतुत्वं तन्निरूपकत्वम् । शक्तेरपि सिद्धान्ते सविषयकत्वाभ्युपगमात् तद्व्यावृत्तये व्यवहारप्रयोजकेति ।

ननु ज्ञानत्वस्योक्तरूपत्वे तेन स्वयम्प्रकाशत्वसाधनं न संभवति ; साध्याविशेषादित्यत आह तदेवेति । स्वस्येति निरूपितम्=व्यवहारानुगुण्ये स्ववृत्तित्वविशेषणघटितम् । तथाच स्ववृत्तिव्यवहारानुगुण्यहेतुत्वरूपस्वयम्प्रकाशत्वासिद्धिदशायामपि व्यवहारानुगुण्यहेतुत्वमात्रस्य ज्ञानत्वग्राहकप्रमाणेन सिद्ध्या तेन तत्साधनमुपपद्यत एवेति भावः । ननु विषयाश्रयवैशिष्ट्यस्य ज्ञानत्वव्यापकतया तदभावान्न धर्मिणो ज्ञानत्वसंभव इत्याशङ्क्याह विषयेति । विषयाश्रयवैशिष्ट्यं धर्मभूतज्ञानत्वस्यैव व्यापकम् ; न तु ज्ञानत्वमात्रस्येति नोक्तदोषावकाश इति भावः । ननु धर्मिणो विषयाश्रयवैशिष्ट्यानुपगमे निर्विशेषत्वापत्त्या परमताविशेष इत्यत आह धर्मीति । विशिष्टत्वात्=ज्ञानत्व–ज्ञान–द्रव्यत्व–नित्यत्वादिविशिष्टत्वात् ।

---

स्वान्ययत्किञ्चित्प्रकाशकत्वरूपसाधर्म्यादित्युच्यताम्–धर्मिणोऽपि स्वान्यप्रत्यक्त्वादिप्रकाशे हेतुत्वात् तत्र ज्ञानपदप्रयोगः । प्रत्यक्त्वादेर्न परप्रकाशकत्वमिति । स्वविषयकज्ञाननिरपेक्षप्रकाशत्वं सर्वसाधारणम् । प्रकाशश्चायं व्यवहारानुगुण्यमेव ; न विषयविषयिभावः । अतोऽत्र, स्वप्रकाशत्वं नाम स्वस्य स्वविषयकत्वम् ; परप्रकाशत्वे धर्मिणः प्रत्यक्त्वविषयकत्वम् । उभयस्यापि कथं स्वीकार इति न शंक्यम् । एतत्पक्षे कस्यचित् प्रकाशकत्वं प्रवृत्तिनिमित्तमिति सर्वदेशिकग्रन्थनिर्वाहः लक्ष्यतावच्छेदकपारिभाषिकप्रवृत्तिनिमित्ताभिप्रायेणेति सर्वभाष्यस्वारस्यदर्शितोऽयं पन्था: ।

अस्य तु अविनाशित्वे युक्तयः, "अविनाशि तु तद्विद्धि येन सर्वमिदं ततम्" इत्यादिना भगवद्गीतायामुक्ताः। व्यञ्जिताश्च तद्भाष्ये। अनित्यत्वेऽस्य अकृताभ्यागमकृतविप्रणाशादिप्रसङ्गश्च॥

अणुश्चासौ, श्रुतेः। स्वयम्प्रकाशस्य हृत्प्रदेशावच्छिन्नोपलम्भस्वारस्याच्च।

---

ज्ञानस्यापीति। अस्य त्विति। "अविनाशि तु तद्विद्धि येन सर्वमिदं ततम्। विनाशमव्ययस्यास्य न कश्चित् कर्तुमर्हति॥ अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः। अनाशिनोऽप्रमेयस्य तस्माद् युध्यस्व भारत॥ य एवं वेत्ति हन्तारं यश्चैनं मन्यते हतम्। उभौ तौ न विजानीतो नायं हन्ति न हन्यते॥ न जायते म्रियते वा कदाचित् नायं भूत्वा भविता वा न भूयः" इत्यादि। व्यञ्जिताश्च तद्भाष्य इति। "तत् आत्मतत्त्वमविनाशीति विद्धि। येन आत्मतत्त्वेन इदमचेतनतत्त्वं सर्वं ततं व्याप्तम्। व्यापकत्वेन निरतिशयसूक्ष्मत्वादात्मनस्तद्व्यतिरिक्तो न कश्चिदपि पदार्थो विनाशं कर्तुमर्हति" इति व्यञ्जनादिति भावः। कृतविप्रणाशादिप्रसङ्गश्चेति। अत्र चशब्देन, "न जायते म्रियते वा", "नित्यो नित्यानाम्", "अविनाशी वा अरे अयमात्मा" इत्यादिश्रुतिव्याकोपो विवक्षितः॥

श्रुतेरिति। "एषोऽणुरात्मा चेतसा वेदितव्यः", "आराग्रमात्रो ह्यवरोऽपि दृष्टः", "वालाग्रशतभागस्य", इत्यादिश्रुतेरित्यर्थः। स्वयम्प्रकाशस्येति। स्वयम्प्रकाशस्याऽऽत्मनो विभुत्वे सर्वत्र आत्मोपलम्भप्रसङ्गः। न चैवमुपलभ्यते; किं तु हृत्प्रदेशावच्छेदेनैव। तस्मात् न विभुत्वम्। ननु शिरःप्रदेशावच्छेदेन आत्मोपलम्भात् कथं हृत्प्रदेशावच्छेदेनोपलम्भ इत्युच्यते इति चेत्–नैवम्। सर्वत्र उपलम्भाभावात् न विभुत्वमित्यत्र तात्पर्यम्(र्यात् ?)। ननु अदृष्टं स्वाश्रयसंयुक्त एव आश्रयान्तरे क्रियां जनयति; अन्योन्याभावविरोधि(?)क्रियाहेतुगुणत्वात् इत्यनुमानात् सर्वलोकव्यापिक्रियाहेत्वदृष्टाश्रयस्य

---

अकृताभ्यागमेति। अकृतेनैवाभ्यागमः अकृताभ्यागमः। हेतुभूतसुकृतादिकमन्तरेणैव सुखाद्यागम इत्यर्थः। परिदृश्यमानस्य सुखादिवैषम्यस्य निर्हेतुकत्वप्रसङ्ग इति यावत्। आत्मन उत्पत्तिमत्त्वे जन्मान्तरकृतसुकृतादिहेतुकत्वाभावादिति भावः। कृतेनाभ्यागमः; तस्याभावः अकृताभ्यागम इति वा। अर्थस्तु स एव। कृतविप्रणाशः कृतस्य जन्मान्तरानुभाव्यफलार्थमनुष्ठितस्य यागादेः विप्रणाशः निष्फलत्वम्। आत्मनो विनाशित्वे अयं दोषः। आदिना, "न जायते म्रियते वा विपश्चित्", "नित्यो नित्यानाम्", "अविनाशी वा अरे अयमात्मा" इत्यादिश्रुतिविरोधो विवक्षितः। प्रसङ्गश्चेति। चशब्देन गीतोक्तयुक्तयः पूर्वोक्ताः समुच्चीयन्ते॥

श्रुतेरिति। 'एषोऽणुरात्मा चेतसा वेदितव्यः', 'आराग्रमात्रो ह्यवरोपि दृष्टः', 'वालाग्रशतभागस्य' इत्यादिश्रुतेरित्यर्थः। आरा चर्मसूची। स्वयम्प्रकाशश्चेति। विभुत्वे स्वयम्प्रकाशतया प्रकाशान्तरापेक्षाविरहेण स्वत एव सर्वत्रोपलब्धिप्रसङ्गः, तथाऽनुपलम्भादणुत्वमेवावश्यकमिति भावः। ननु तत्पुरुषीयसुखहेतुकार्योत्पत्तौ तत्पुरुषीयादृष्टस्य हेतुत्वमिति निर्विवादम्—हेतुता च स्वाश्रयसंयोगसंबन्धेनैव वाच्या।

---

(?) अन्योन्याभावविरोधीति न स्यात्। यद्वा अन्योन्याभाववतीति स्यात्। तदा स्वाश्रयभिन्ने क्रियाहेत्वित्यर्थः। नोदनादौ गुणे व्यभिचारवारणाय सप्तम्यन्तम्। तत्त्वमुक्ताकलापे (2-19) अन्यत्रतत्कृद्गुणत्वादित्यास्यद्व्याख्या द्रष्टव्या। अत्रानुमाने गुरुत्वं दृष्टान्तः।

युगपदखिलभुवनेषु अदृष्टद्वारा तत्कार्यसिद्धये विभुत्वकल्पनमयुक्तम्; ईश्वरप्रीतिकोपयोरेव अदृष्टत्वात् तदाधारस्य चेश्वरस्य विभुत्वात् जीवस्याविभुत्वे बाधकाभावात्। विभुत्वे च उपलम्भाद्यस्वारस्याच्च। इन्द्रियवत् शरीरप्रत्युप्तात्मगमनेनैव तत्रतत्र ज्ञानसुखाद्युपपत्तेः। आत्मगमनं तु उपलम्भश्रुत्याद्यनुकूलम्, विभुत्वकल्पनं तु न तथेति लाघवमिच्छतां तदेव फलितम्। उक्तञ्चाऽऽत्मसिद्धौ प्राणात्मवादनिराकरणे, "अविभोरात्मनः स्पर्शविरहिणोऽपि प्रयत्नादृष्टप्रेरणानुगुण्येन मनस इव उत्क्रान्तिगत्यागतयो युज्यन्ते" इति। तथा तत्रैव चैतन्यप्रसरणचोद्यपरिहारयोरपि, "गुणिनमपहाय" इत्यादिना अणुत्वं व्यक्तम्। श्रुतिस्मृत्यादिषु सर्वगतत्वादिव्यपदेशास्तु समुदायापेक्षया, धर्मभूत-

---

विभुत्वमभ्युपगन्तव्यमित्याशङ्क्याह युगपदिति। उपलम्भाद्यस्वारस्यादिति। अहमिहैवास्मि सदने जानान इति हि उपलम्भ इति भावः। ननु आत्मनोऽणुत्वे शरीरस्य प्रदेशान्तरगमनेऽपि ज्ञानसुखाद्युत्पत्तिदर्शनात् तन्निर्वाहाय आत्मनो गमनागमनादिकल्पने गौरवात् विभुत्वमेव कल्प्यमित्याशङ्क्य गमनागमनादिकल्पनस्य, अहं गच्छामि, अहमागच्छामि, "चन्द्रमसमेव ते सर्वे गच्छन्ति" इत्युपलम्भश्रुत्यानुगुण्यात् गमनागमनादिकल्पनमेवोचितमित्याह इन्द्रियवदित्यादिना। तदेव फलितमिति। लाघवमेव फलितमित्यर्थः। प्रयत्नादृष्टेति। स्वप्रयत्नवशाद्वा, 'ईश्वरप्रेरितो गच्छेत्' इति न्यायेन अदृष्टप्रेरणानुगुण्येन वेत्यर्थः। तत्रैवेति। आत्मसिद्धावेवेत्यर्थः। चोद्यपरिहारयोरिति। तत्प्रकरण इत्यर्थः। सर्वगतत्वादिव्यपदेशास्त्विति। "नित्यः सर्वगतः स्थाणुः", "तद्वज्जीवो नभोऽपि च", "यथा क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा" इत्यादिव्यपदेशा इत्यर्थः। समुदायापेक्षयेति। "अर्थेर्थैको

---

ततश्च देशान्तरेऽपि तत्तत्पुरुषसुखहेतुकार्योत्पत्तये तस्य विभुत्वमावश्यकमित्यत आह युगपदिति। ईश्वरप्रीतीत्यादि। तथाच तत्पुरुषीयत्वं विषयतया तत्पुरुषसंबन्धित्वमिति भावः। उपलम्भाद्यस्वारस्यादिति। अहमिहैवास्मि सदने जानान इत्युपलम्भादिति भावः। ननु शरीरस्य देशान्तरगमनेऽपि तत्र सुखदुःखाद्युत्पत्त्या आत्मनो विभुत्वमावश्यकमित्याशङ्क्याह इन्द्रियवदिति। शरीरप्रत्युप्तात्मगमनेनैवेति। तथाच शरीरमात्रस्य गमनम्; किन्त्वात्मनोऽपीति नोक्तदोष इति भावः। नन्वात्मनो गमनाभ्युपगमे गौरवम्; अतो लाघवात् विभुत्वमेवावश्यकम्। तथासति शरीरगमनमात्रेणैव सर्वत्र सुखदुःखाद्युपलब्ध्युपपत्तेरित्यत आह आत्मगमनं त्विति। उपलम्भश्रुत्याद्यनुकूलमिति। अहं गच्छामि, अहमागच्छामीत्याद्युपलम्भस्य, "चन्द्रमसमेव ते सर्वे गच्छन्ति" इत्यादिश्रुतेश्चानुगुणमित्यर्थः। तदेवेति। लाघवमेवेत्यर्थः। उपलम्भश्रुत्यादिविरुद्धविभुत्वकल्पनया तत्कृतनिकर्षादिति भावः। अविभोरिति। तथाच न क्रियोपपत्त्यनुपपत्तिरिति भावः। नन्वात्मा क्रियाशून्यः स्पर्शरहितत्वात् कालादिवदित्यनुमानेनाऽऽत्मनः क्रियाशून्यत्वसिद्ध्या कथं तस्योत्क्रान्त्यादिसंभव इत्याशङ्क्याह स्पर्शविरहिणोऽपीति। मनसि व्यभिचारात् नोक्तहेतोः क्रियाशून्यत्वसाधकतेति भावः। इदञ्च मनस इवेत्यनेन स्पष्टीकृतम्। प्रयत्नादृष्टेति। स्वप्रयत्नवशेन अदृष्टशब्दितेश्वरसङ्कल्पवशेन वेत्यर्थः। तत्रैवेति। आत्मसिद्धावेवेत्यर्थः। चोद्यपरिहारयोरिति। चोद्यपरिहारप्रकरण इत्यर्थः। श्रुतिस्मृत्यादिष्विति। 'नित्यस्सर्वगतः स्थाणुः', 'तद्वज्जीवो नभोऽपि च', 'यथा क्षेत्रज्ञशक्तिस्सा वेष्टिता नृप सर्वगा' इत्यादिरूपास्विति भावः। समुदायापेक्षयेति। जीवजातीयस्य

ज्ञानद्वारा सूक्ष्मानुप्रवेशक्षमतया वा तत्र तत्र यथोचितं निर्वाह्याः । "नित्यो व्यापी" इत्यात्मसिद्धिवचने व्यापिपदमपि, "अतिसूक्ष्मतया सर्वाचेतनान्तःप्रवेशस्वभावः" इति भाष्ये व्याख्यातम् । "उत्क्रान्तिगत्यागतीनाम्" इत्यादिभिश्च सूत्रकारैरेवाणुत्वं समर्थितम् । हृत्प्रदेशस्थितस्यैव जीवस्य ज्ञानद्वारा नानाधिष्ठानोपपत्तिः । एवमेव योगिप्रभृतीनां नानादेहाधिष्ठानं घटते । न ततो विभुत्व-

---

भुवनं प्रविष्टः", "वायुः सर्वगतो महान्" इत्यादिवज्जीवात्मनः सर्वत्रानुप्रवेशात् उपपद्यते इति भावः । भाष्य एवेति । अहमर्थस्य स्वरूपेणेति भावः उत्क्रान्तिगत्यागतीनामित्यादिभिरिति । आदिपदेन, "स्वात्मना चोत्तरयोः, नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्, स्वशब्दोन्मानाभ्यां च, अविरोधश्चन्दनवत्, अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि, गुणाद्वाऽऽलोकवत्" इतीमानि सूत्राणि विवक्षितानि । उत्क्रान्तिगत्यागतीनाम् । नायमात्मा सर्वगतः; अपितु अणुरेव कुतः ? उत्क्रान्तिगत्यागतीनां श्रुतेः । उत्क्रान्तिस्तावत् श्रूयते-"तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः" इति । गतिः-"ये वै के चास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति" इति । आगतिरपि, "तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मणे" इति । विभुत्वे तु एता उत्क्रान्त्यादयो नोपपद्येरन् । इतरेषां च सूत्राणामर्थो भाष्ये द्रष्टव्यः । विस्तरभयात् नेह वितन्यते । योगिप्रभृतीनामिति । ननु रहस्यत्रयसारे शरीरसत्ताप्रयोजकधारणं धर्मिस्वरूपाधीनम्, जाग्रदाद्यवस्थासु पुरुषार्थतदुपायानुष्ठानोपयुक्तशरीरधारणं धर्मभूतज्ञानाधीनमिति व्यवस्थाकरणात् कथमात्मस्वरूपविरहिणां धर्मभूतज्ञानाधिष्ठितानामपि सत्ताप्रयोजकधारणमुपदिश्यते? कथं वा तच्छरीरावच्छिन्नानां सौषुप्तिकसुखानुभवार्थं प्रवृत्तिः ? आत्मस्वरूपस्य तत्राभावेन तद्रूपसुखानु-

---

सर्वत्र सत्त्वाभिप्रायेणेत्यर्थः । 'अग्निर्यथैको भुवनं प्रविष्टः', 'वायुस्सर्वगतो महान्' इत्यादिवदिति भावः । उत्क्रान्तिगत्यागतीनामिति आदिना, "स्वात्मना चोत्तरयोः, नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्" इत्यादीनि संगृह्यन्ते एवमेव योगिप्रभृतीनामिति । ननु श्रीमद्रहस्यत्रयसारे तत्त्वत्रयचिन्तनाधिकारे शरीरसत्ताप्रयोजकधारणं धर्मिस्वरूपाधीनम् । जाग्रदाद्यवस्थासु पुरुषार्थ—तदुपायानुष्ठानोपयुक्तशरीरधारणं धर्मभूतज्ञानाधीनमिति व्यवस्थाकरणात् कथमात्मस्वरूपविरहिणां धर्मभूतज्ञानाधिष्ठितानामपि सत्ताप्रयोजकधारणमुपदिश्यत इति चेत्-उच्यते-शरीरधारणं द्विविधम्; सत्ताप्रयोजकतया, पतनप्रतिबन्धेन चेति तत्राऽऽद्यं धर्मिसंबन्धाधीनं यावच्छरीरसत्तम् । द्वितीयं धर्मभूतज्ञानाधीनं जाग्रदाद्यवस्थासु । स्पष्टमिदं श्रीमद्रहस्यत्रयसार एव प्रधानप्रतितन्त्राधिकारे । तत्राणुरूपधर्मिसंबन्धश्च-, 'पादे मे वेदना शिरसि मे सुखम्' इत्यादिप्रत्ययनिर्वाहकः, "अस्य सोम्य महतो वृक्षस्य यदेकां शाखां जीवो जहाति, अथ सा शुष्यति" इत्यादिश्रुत्यभिप्रेतो यावच्छरीरभावी सुषुप्त्यादावपि विद्यमानः इन्द्रियव्यापाराद्यनधीनः केवलकर्माद्यधीनो यो धर्मभूतज्ञानविकासविशेषः, तत्संयोग एव । तदधीनैव च शरीरसत्ता । जाग्रदादिदशासु पतनप्रतिबन्धस्तु न तदधीनः; किन्तु प्रयत्नाख्यधर्मभूतज्ञानाधीनः । प्रयत्नावस्था च बद्धानां मनोव्यापाराधीनेति न सुषुप्त्यादौ संभवति । अतो धर्मिसंबन्ध एव प्रागुक्तरूपः शरीरसत्ता-

क्लृप्तिः। तदेतदखिलमभिप्रेत्य सूत्रितम्, "गुणाद्वाऽऽलोकवत्" इति। मुक्तनिरूपणे च, "प्रदीपवत्

---

भवासम्भवात्  धर्मभूतज्ञानस्य सुखानुभवरूपस्य सुषुप्तावसंभवाच्च । न च सौषुप्तिकात्मस्वरूपसुखानुभवार्थं न कस्यापि प्रवृत्तिः; तस्य सदातनत्वेन यत्नानपेक्षणात् । अपितु जाग्रदवस्थाकलीनशरीरायासजनितदुःखोपशान्त्यर्थमेव । तच्च निरात्मकानामपि योगशरीराणां सम्भवतीति वाच्यम्—"स्वापे सुखत्वाभिज्ञानात् तद्विच्छेदे च रोषतः । तदर्थमन्यत्यागाच्च भुञ्जिस्मृतिशक्तैरपि" इति सौषुप्तिकसुखस्य प्रयोजनत्वोक्तिविरोधात् । अतः सौषुप्तिकसुखानुभवेच्छयैव प्रवृत्तेर्वक्तव्यतया निरात्मके उपरतेन्द्रिये शरीरे स्वरूपरूपसुखानुभवस्य धर्मज्ञानरूपसुखानुभवस्य वाऽभावात् सौषुप्तिकानुभवार्थं अप्रवृत्तिस्तदवस्थेति चेत्; अत्र ब्रूमः—"अस्य सोम्य महतो वृक्षस्य यदेकां शाखां जीवो जहाति, अथ सा शुष्यति । द्वितीयां जहाति, अथ सा शुष्यति" इति धर्मभूतज्ञानसङ्कोचविकासयोरेव शरीरशोषणाशोषणप्रयोजकत्वावगमात् धर्मिस्वरूपस्य शरीरधारकत्ववादस्यापि तदभिप्रायकत्वात् । न च निरात्मकशरीरेषु सुषुप्त्यर्थप्रवृत्त्यनुपपत्तिः; शरीरायासजनितदुःखापनोदनार्थं प्रवृत्त्युपपत्तेः । 'स्वापे सुखत्वाभिज्ञानात्' इत्यादेश्च सात्मकशरीरविषयत्वादिति न कोऽपि दोषः । गुणाद्वाऽऽलोकवत् इति सूत्रस्यायमर्थः—वाशब्दो मतान्तरव्यावृत्त्यर्थः । आत्मा स्वगुणेन सकलदेहं व्याप्य स्थितः; आलोकवत्, यथा मणिप्रभृतीनामेकदेशवर्तिनामालोकोऽनेकदेशव्यापी दृश्यते, तद्वत् हृदयस्थस्याऽऽत्मनो ज्ञानं व्याप्य वर्तते । ज्ञातुः प्रभास्थानीयस्य ज्ञानस्य स्वाश्रयादन्यत्र वृत्तिर्मणिप्रभावदुपपद्यते इति प्रथमसूत्रे व्याख्यातम् प्रदीपवदावेशस्तथा हि

---

प्रयोजकः । स च धर्मिस्वरूपावगाहिनां धर्मभूतज्ञानाधिष्ठितानामक्षत इति तत्त्वतः धर्म्यधीनत्वमभ्या-हृतम् । कथमन्यथा तेषां शरीरलक्षणभूतधेयत्वोपपत्तिरिति । ननु तथापि तादृशशरीरावच्छेदेन सौषुप्तिकसुखानुभवार्थप्रवृत्तिः कथं संघटते; आत्मस्वरूपस्य तत्राभावेन न स्वरूपात्मकसुखानुभवासंभवात् । धर्मभूतज्ञानस्य सुखानुभवरूपस्य सुषुप्तावसंभवाच्च । न च सौषुप्तिकात्मस्वरूपानुभवार्थं न कस्यापि प्रवृत्तिः; तस्य सदातनत्वेन यत्नानपेक्षणात्; अपि तु जाग्रदवस्थाकलीनशरीरपरिश्रमायासजनितदुःखोपशमनार्थमेव । ततश्चात्मस्वरूपसंयोगरहितानामपि धर्मभूतज्ञानमात्राधिष्ठितानां शरीराणां प्रेरणायासेन शरीरविशेषसंयुक्तात्मनो दुःखसंभवात् तदुपशमार्थं तादृशशरीरावच्छेदेनापि सुषुप्त्यर्थप्रवृत्तिरुपपद्यत एव इति वाच्यम्—"स्वापे सुखत्वाभिज्ञानात् तद्विच्छेदे च रोषतः । तदर्थमन्यत्यागाच्च भुञ्जिस्मृतिशक्तैरपि" इति सौषुप्तिकसुखस्य प्रयोजनत्वोक्तिविरोधादिति चेन्न; निरात्मकशरीरेषु दुःखोपशमार्थमेव सुषुप्तिप्रवृत्त्युपपत्तेः । "स्वापे सुखत्वाभिज्ञानात्" इत्यादेः सात्मकशरीरविषयत्वात् । यद्यप्यात्मस्वरूपसुखानुभवः सदातन एव, तथापि जाग्रदादिदशासु दुःखानुभवाद्यभिभूततया न स्पष्टं तदनुभव इति सुषुप्तावेव स्पष्टानुभव इत्यभिप्रायः । गुणाद्वाऽऽलोकवदितीति । अयमत्र सूत्रार्थः— वाशब्दो मतान्तरव्यावृत्त्यर्थः । आत्मा स्वगुणेन सकलदेहं व्याप्य स्थितः आलोकवत्, यथा मणिद्युमणिप्रभृतीनामेकदेशवर्तिनामालोकोऽनेकदेशव्यापी दृश्यते, तद्वत् हृदयस्थस्यात्मनो ज्ञानं व्याप्य वर्तते । ज्ञातुः प्रभास्थानीयस्य ज्ञानस्य स्वाश्रयादन्यत्र वृत्तिर्मणिप्रभावदुपपद्यत इति । प्रदीपवदित्यादि । अस्यायमर्थः—यथा प्रदीपस्यैकस्मिन् देशे

आवेशस्तथा हि दर्शयति" इति। एतेन देहात्माभिमानमनुसरतामार्हतानां देहानुरूपविविधपरिमाणत्वकल्पनमपि भग्नम्। "एवञ्चात्माकार्त्स्न्यम्", "न च पर्यायादप्यविरोधो विकारादिभ्यः", "अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः" इति सूत्रैश्च तत् निरस्तम्। वरदविष्णुमिश्रैस्तु, "संसार-

---

वद्दर्शयति। यथा प्रदीपस्य एकस्मिन् देशे वर्तमानस्य स्वप्रभया देशान्तरावेशः, तथा आत्मनोऽपि एकदेशस्थस्यैव स्वप्रभारूपेण चैतन्येन सर्वशरीरावेशो नानुपपन्नः। यथा च एकस्मिन्नपि देहे हृदयाद्येकदेशवर्तिनोऽपि चैतन्यप्राप्त्या सर्वस्मिन्नपि देहे आत्माभिमानः, तद्वत्। तथा हि दर्शयति बालाग्रशतभागस्येति। देहात्माभिमानमिति। स्थूलोऽहम्, कृशोऽहमिति देहात्माभिमानमात्मपरिमाणे प्रमाणं मन्यमानानामित्यर्थः। अनेन च यदि स्थूलोऽहं कृशोऽहमिति प्रतीत्यनुसारेण परिमाणभेदः स्वीक्रियते, तदा गौरोऽहं नीलोऽहमिति प्रतीत्या रूपादिकमपि कल्पनीयं स्यादिति दूषणं सूच्यते। एवञ्चात्माकार्त्स्न्यम्। एवं देहानुरूपपरिमाणतया अभ्युपगमे सति आत्मनोऽकार्त्स्न्यं प्रसज्येत। हस्त्यादिशरीरेऽवस्थितस्याऽऽत्मनः ततो न्यूनपरिमाणे पिपीलिकाशरीरे मानासम्भवेन अकार्त्स्न्यं प्रसज्येत। ननु मातङ्गशरीरानुप्रविष्टस्य सङ्कुचितस्य पिपीलिकाशरीरानुप्रवेशः सम्भवतीत्याशङ्क्याह न च पर्यायादप्यविरोधो विकारादिभ्यः। न च पर्यायेण सङ्कोचविकासरूपावस्थान्तरापत्त्या विरोधः परिहर्तुं शक्यते; तथा हि सति विकारप्रयुक्तानित्यत्वादिदोषप्रसक्तेर्घटादितुल्यत्वप्रसङ्गात्। अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः। जीवस्य यत् अन्त्यपरिमाणं मोक्षावस्थागतम्; तस्य पश्चाद्देहान्तरपरिग्रहाभावादवस्थितत्वात् आत्मनश्च मोक्षावस्थितस्य तत्परिमाणस्य च उभयोर्नित्यत्वात् तदेव आत्मनः स्वाभाविकं परिमाणमिति पूर्वमपि तस्याविशेषः स्यात्। अतो देहपरिमाणत्वमात्मनो न स्यादित्यसङ्गतमेव आर्हतोमतम्। वरदविष्णुमिश्रैस्त्वित्यस्य, इत्यादिना जीवस्यापि सङ्कोच-

---

मानस्य स्वप्रभया देशान्तरावेशः, तथाऽऽत्मनोऽप्येकदेशस्थस्यैव स्वप्रभारूपेण चैतन्येन सर्वशरीरावेशो नानुपपन्नः। यथा च एकस्मिन्नपि देहे हृदयाद्येकदेशवर्तिनोऽपि चैतन्यव्याप्त्या सर्वस्मिन् देहे आत्माभिमानः, तद्वत्। तथा हि दर्शयति, "बालाग्रशतभागस्य" इति। एतेनेति। अणुत्वस्थापनेनेत्यर्थः। देहात्माभिमानमनुसरतामिति। स्थूलोऽहं कृशोऽहमिति देहात्माभिमानमात्मपरिमाणे प्रमाणं मन्यमानानामित्यर्थः। अनेन स्थूलोऽहमित्यादिप्रतीत्या स्थूलत्वाद्यभ्युपगमे गौरोऽहमित्यादिप्रतीत्या गौरत्वादेरप्यभ्युपगमप्रसङ्ग इति सूच्यते। एवंचेत्यादि। अयमर्थः—एवं=देहानुरूपपरिमाणतयाऽभ्युपगमे सति, आत्मनः अकार्त्स्न्यं प्रसज्येत=हस्त्यादिशरीरेऽवस्थितस्यात्मनस्ततो न्यूनपरिमाणे पिपीलिकादिशरीरे मानासंभवेन अकार्त्स्न्यं प्रसज्येत। ननु मातङ्गशरीरानुप्रविष्टस्य संकुचितस्य पिपीलिकादिशरीरानुप्रवेशः संभवतीत्याशङ्क्याह न च पर्यायादप्यविरोधो विकारादिभ्य इति। न च पर्यायेण=सङ्कोचविकासरूपावस्थान्तरापत्त्या विरोधः परिहर्तुं शक्यते; तथा हि सति विकारप्रयुक्तानित्यत्वादिदोषप्रसक्तेर्घटादितुल्यत्वप्रसङ्गात्। अन्त्यावस्थितेरित्यादि। जीवस्य यत् अन्त्यपरिमाणं मोक्षावस्थागतम्, तस्य पश्चाद्देहान्तरपरिग्रहाभावादवस्थितत्वात् आत्मनश्च मोक्षावस्थितस्य तत्परिमाणस्य चोभयोर्नित्यत्वात् तदेवात्मनः स्वाभाविकं

दशायां स्वरूपज्ञानयोः सङ्कोचादणुपरिमाणमात्मस्वरूपम्। मोक्षदशायां तु सर्वगतं सर्वव्यापि, ज्ञानञ्च विस्तीर्णतया प्रकाशते। अयमर्थः, "बालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते॥" इति श्रुत्या अवगम्यते। तदाह भगवान् पराशरः, 'विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथा परा' इति" इत्यादिना जीवस्यापि सङ्कोचविकासयोगित्वमुक्तम्। अयमेवार्थः, "नित्यो व्यापी" इत्यात्मसिद्धिवचनमुपादाय मानयाथात्म्यनिर्णये प्रपञ्चितः। तदेतत् सूत्रादिविरोधात् वैभववचनम्।

यत्तु श्रीमद्गीताभाष्ये, "अनादिमत्परं ब्रह्म" इति व्याख्याने, "ब्रह्म बृहत्त्वगुणयोगि शरीरादर्थान्तरभूतं स्वतः शरीरादिभिः परिच्छेदरहितं क्षेत्रज्ञतत्त्वमित्यर्थः, "स चाऽऽनन्त्याय कल्पते" इति श्रुतेः। शरीरपरिच्छिन्नत्वञ्चास्य कर्मकृतम्। कर्मबन्धान्मुक्तस्यानन्त्यम्" इत्युक्तम्, यच्च, "लोके सर्वमावृत्य तिष्ठति" इत्यत्र, 'लोके यद्वस्तु जातम्, तत् सर्वमावृत्य = व्याप्य तिष्ठति' परिशुद्धस्वरूपं देहादिपरिच्छेदरहिततया सर्वगमित्यर्थः" इत्युक्तम्, यच्च, "अचरञ्चरमेव च" इत्यत्र, "स्वभावतोऽचरम्, चरञ्च देहित्वे" इत्युक्तम्, एवं प्रकरणान्तरेष्वपि, "अनवच्छिन्नज्ञानैकाकारम्" इत्युक्तम्—तदखिलं ज्ञानव्याप्त्यादितत्परमेवेति मन्तव्यम्। सारभाष्यादिषु, "स चानन्त्याय कल्पते" इत्यादेस्तथैव व्याख्यानात्। दीपे तु, "प्रदीपवदावेशस्तथा हि दर्शयति" इति सूत्रे बालाग्रश्रुतिमुपादाय, "प्रत्यगात्मनोऽणुत्वमेव स्वरूपमिति सूत्रकारमतम्, 'नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्" [इति [1]परस्यैव महत्त्ववचनात्"?] इति साभिसन्धिकमुक्तत्वाच्च। अतः सदा अणुरेव जीव इति सूत्रभाष्यकारादीनां सिद्धान्तः॥

स चायमात्मा सौभर्यादिक्षेत्रज्ञव्यतिरिक्तेषु प्रतिक्षेत्रं भिन्नः; स्मृत्यनुभवसुखदुःखकरणप्रयत्नादिप्रतिनियमात्। उक्तं हि न्याय(वैशेषिक?)सूत्रे, "नानाऽऽत्मानो व्यवस्थातः" इति। साङ्ख्यैरप्युक्तम्—

विकासयोगित्वमुक्तमित्यनेनान्वयः। सर्वव्यापीति। आत्मनः स्वरूपमित्यनेनान्वयः। ज्ञानञ्चेति। ततश्च धर्मधर्मिणोर्द्वयोरपि मुक्तिदशायां विभुत्वमिति भावः। वैभववचनमिति। औपचारिकमित्यर्थः। अनादिमदिति। त्रयोदशाध्याये, "अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते। सर्वतःपाणिपादं तत् सर्वतोऽक्षिशिरोमुखम्॥सर्वत श्रुतिमल्लोके सर्वमावृत्य तिष्ठति। सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम्॥ असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च। बहिरन्तश्च भूतानामचरं चरमेव च॥" इत्यादिव्याख्यानावसर इत्यर्थः। नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्। "योऽयं विज्ञानमयः प्राणेषु" इति जीवं प्रस्तुत्य, "स वा एष महानज आत्मा" इति महत्त्वश्रुतेर्नाणुर्जीव इति चेन्न; इतराधिकारात्। जीवादितरस्य प्राज्ञस्य तत्राधिकारात्। यद्यपि उपक्रमे जीवः प्रस्तुतः, तथापि, "यस्यानुवित्तः प्रतिबुद्ध आत्मा" इति मध्ये परमः प्रतिपाद्यते इति तत्सम्बन्धीदं महत्त्वम्, न जीवस्य॥

करणप्रयत्नादीति। करणानि इन्द्रियाणि। एकस्मिन् अन्धे बधिरे वा तदन्यस्यापि तद्भा

परिमाणमिति पूर्वमपि तस्मादविशेषस्स्यात्। अतो देहपरिमाणत्वमात्मनो न स्यादिति। वरदविष्णुमिश्रोऽस्त्वति। अस्य च सङ्कोचविकासयोगित्वमुक्तमित्यनेनान्वयः। वैभववचनमिति। औपचारिकमित्यर्थः॥

करणप्रयत्नादीति। करणानि=इन्द्रियाणि। एकस्मिन्नन्धे बधिरे वा अन्यस्य तथात्वविरहदर्शनादित्यर्थः।

1 इदं कुण्डलितं स्थितभ्रष्टमित्यालोच्यते। अन्यथा असन्वयात्; दीपानुसाराच्च।

"जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च । पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव ॥" इति ।

जीवाद्वैतवचनानि तु प्रकारैक्यविषयाणि । प्रकारैक्येऽपि हि एकादिशब्दाः प्रयुज्यन्ते; यथा अयमयञ्चैको व्रीहिरिति । "रामसुग्रीवयोरैक्यम्" इत्यादि च भाव्यम् । ततश्चायं संग्रहः—

**अविरोधान्तरङ्गत्वजातिभोगाद्यभेदतः । एकोक्तिरपृथक्सिद्धेर्देशकालदशादिभिः ॥**

---

वादिति भावः । **जननमरणकरणानामिति** साङ्ख्यश्लोकस्यायमर्थः । कार्यविशिष्टाभिरपूर्वाभिर्देहेन्द्रिय-मनोबुद्धिवेदनाभिः पुरुषस्याभिसम्बन्धो **जन्म** । न तु पुरुषस्य परिणामः ; तस्यापरिणामित्वात् । देहादिपरित्यागो **मरणम्** । न तु विनाशः ; तस्य अविनाशित्वात् । एकादशेन्द्रियाणि बुद्धिरहङ्कारश्चेति त्रयोदशप्रकारं **करणम्** । तेषां **प्रतिनियमो** व्यवस्था । सा खल्वियं सर्वशरीरेषु पुरुषैक्ये नोपपद्यते; अभेदात् । तदा खल्वेकस्मिन् जायमाने सर्वे जायेरन्, म्रियमाणे च म्रियेरन् । अन्धादौ चैकस्मिन् सर्वे एवान्धादयः, विचित्ते चैकस्मिन् सर्वे एव विचित्ताः स्युरिति, व्यवस्था न स्यात् । **अयुगपत्प्रवृत्तेश्च** । एकत्र शरीरे पुरुषे प्रयतमाने सर्वशरीरेष्वयमेक इति, सर्वत्र प्रयतेत । ततश्च सर्वाणि शरीराणि युगपत् चालयेत्, नानात्वे तु नायं दोषः । इतश्च पुरुषभेद इत्याह **त्रैगुण्यविपर्ययाच्चेति** । **एवकारो** भिन्नक्रमः **सिद्धमित्यस्यानन्तरं** द्रष्टव्यः । **सिद्धमेव** । नासिद्धमित्यर्थः । त्रयो गुणाः **त्रैगुण्यम्** । स्वार्थे ष्यञ् । तस्य **विपर्ययः** अन्यथाभावः । केचित् खलु सत्त्वबहुलाः ; यथा ऊर्ध्वस्रोतसः, केचित् रजोबहुलाः; यथा मनुष्याः । केचित् तमोबहुलाः; यथा तिर्यग्योनयः । सोऽयं **विपर्ययः** पुरुषैक्ये न स्यादिति भावः । **जीवाद्वैतवचनानि त्विति** । "यदन्योऽस्ति परः कोऽपि", "तस्यात्मपरदेहेषु सतोऽप्येकमयं हि यत्" इत्यादीनि **वचनानी**त्यर्थः । **प्रकारैक्यविषयाणीति** । सर्वेषामपि ज्ञानैकाकारत्व-भगवच्छरीरत्वरूप**प्रकारैक्यविषयाणी**त्यर्थः । **अविरोधान्तरङ्गत्वेति** । राज्ञोर्विरोधशमनमात्रेण तयोरैक्यमिति व्यवहारात्, **अन्तरङ्गत्व**मात्रेण रामसुग्रीवयोरैक्यव्यवहारात्, जात्यैक्यमात्रेण एको व्रीहिरिति व्यवहारदर्शनादविरोधादीनामैक्योक्तिनियामकत्वं द्रष्टव्यम् । **देशकालदशादिभिरिति** । देशैक्यकालैक्यावस्थैक्यादिभिरित्यर्थः । यद्वा सर्वदेशसर्वकालसर्वावस्थासु **अपृथक्सिद्धेरि**त्यर्थः ।

---

**जननमरणे**त्यादिसांख्यश्लोकस्यायमर्थः—जननस्य, मरणस्य, करणानां च चक्षुरादिरूपाणाम्, **प्रतिनियमः**=व्यवस्था ; तत इत्यर्थः । न ह्येकस्मिन् जायमाने सर्वोऽपि जायते, म्रियमाणे वा सर्वोऽपि तथा भवति । एवमेकस्मिन्नन्धे बधिरे वा सर्वोऽपि[न?] तथा भवतीति भावः । **अयुगपत्प्रवृत्तेरिति** । न ह्येकस्मिन् प्रवर्तमाने सर्वोऽपि प्रवर्तत इति भावः । **त्रैगुण्यविपर्ययादिति** । त्रयो गुणास्त्रैगुण्यम् । स्वार्थे ष्यञ् । तस्य **विपर्ययः**=अन्यथाभावः । केचित् खलु सत्त्वबहुळाः, यथोर्ध्वस्रोतसः। केचित् रजोबहुळाः यथा मनुष्याः। केचित् तमोबहुळाः ; यथा तिर्यग्योनयः। सोऽयं विपर्ययः पुरुषैक्ये न स्यादिति भावः । **एवकारो भिन्नक्रमः**; सिद्धमेवेत्यन्वयः । **जीवाद्वैतवचनानीति** । "यदन्योऽस्ति परः कोपि', 'तस्याऽऽत्मपरदेहेषु सतोऽप्येकमयं हि यत्" इत्यादीनि वचनानीत्यर्थः । **प्रकारैक्यविषयाणीति** । ज्ञानैकाकारत्व-भगवच्छरीरत्वरूपप्रकारैक्य-

साम्यञ्च सर्वजीवानां स्वरूपतः, मुक्त्यवस्थायां गुणतोऽपि चेति श्रुतिस्मृत्यादिसिद्धम् । तत्र जीवभेदनिषेधवचनान्यपि प्रामाणिकस्वरूपभेदव्यतिरिक्तदेहात्माभिमाननिबन्धनदेवत्वादिभेदनिषेधपराणि । कण्ठोक्तेन च देवत्वादिनिषेधेन तेषामेकार्थ्यमुचितम् ।

किञ्च निर्विशेषात्मैक्यवादिनोऽपि बन्धमोक्षयोरविशेषः प्रसज्यते । तत्त्वत इदानीमपि

---

**मुक्त्यवस्थायां गुणतोऽपि चेति** । "निरञ्जनः परमं साम्यमुपैति", "मम साधर्म्यमागताः" इत्यादिश्रुतिस्मृतिसिद्धमित्यर्थः । **कण्ठोक्तेने**ति । "चतुर्विधोऽपि भेदोऽयं मिथ्याज्ञाननिबन्धनः । देवादिभेदेऽपध्वस्ते नास्त्येवावरणो हि सः॥" इत्यादिनेत्यर्थः। वस्तुतोऽविद्याभावो मोक्षः, उत अविद्याव्यवहाराभावो वा? नाद्यः; तत्त्वतोऽविद्याभावस्य बन्धदशायामपि सत्त्वात् । नान्त्यः; मुक्तेष्वपि केषाञ्चित् साविद्यत्वव्यवहारसम्भवात् । दृश्यन्ते हि मुक्तानपि शुकादीन् साविद्यान् व्यवहरन्त इत्याह **किञ्च निर्विशेष**

---

विषयाणीत्यर्थः। **देशकालदशादी**ति आदिना अभिप्रायपरिग्रहः। **श्रुतिस्मृत्यादिसिद्धमि**ति । "स चानन्त्याय कल्पते", "निरञ्जनः परमं साम्यमुपैति", "मम साधर्म्यमागताः"इत्यादिश्रुतिस्मृत्यादिसिद्धमित्यर्थः। **आदिना** वैषम्यनियामककर्मोच्छेदात् साम्यावश्यम्भावरूपयुक्तिपरिग्रहः । **कण्ठोक्तेने**ति । "चतुर्विधोऽपि भेदोऽयं मिथ्याज्ञाननिबन्धनः । देवादिभेदेऽपध्वस्ते नास्त्येवावरणो हि सः ॥ नायं देवो न मर्त्यो वा न तिर्यक् स्थावरोऽपि वा" इत्यादिरूपेणेति भावः । **बन्धमोक्षयोरविशेषः प्रसज्यत** इति । तथाच तन्मते मोक्षस्वरूपमेव दुर्निरूपमिति भावः । तदेवोपपादयति **तत्त्वत** इत्यादिना । अयं भावः—अविद्याविरहस्य मोक्षरूपत्वे शुकादिष्वपि केषांचित् अविद्याव्यवहारसत्त्वेन तेषां तन्मूलभूतभ्रान्त्यवश्यंभावेन भ्रान्तेश्च तन्मतेऽनिर्वचनीयख्यातिरूपतया तद्विषयभूतानिर्वचनीयाविद्याभ्युपगमस्यावश्यकतया अविद्याविरहासंभवान्मोक्षानुपपत्तिः । यदि च पारमार्थिकत्वावच्छिन्नाविद्यानिष्ठप्रतियोगिताकाभाव एव मोक्षः ; एवंचानिर्वचनीयाया अविद्याया अपरमार्थतया तत्सत्त्वेऽपि पारमार्थिकत्वावच्छिन्नतन्निष्ठप्रतियोगिताकाभावस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावरूपस्याक्षततया नोक्तदोष इत्युच्यते—तदा बन्धनदशायामपि तस्याक्षततया मोक्षप्रसङ्ग इति । यद्वा अविद्यायाः शुक्तिरजतादिवत् मिथ्यात्वेन तद्वत्यपि तदत्यन्ताभावस्य सत्त्वादविद्याविरहस्य मोक्षरूपत्वे बद्धेऽपि तत्प्रसङ्गः । अविद्यावच्छेदस्य मोक्षरूपत्वे मुक्तेऽपि तदनुपपत्तिः ; उक्तरीत्या तत्र प्रातिभासिकाविद्यासत्त्वेन तदुच्छेदायोगादित्यभिप्रायः । न च व्यावहारिकाविद्योच्छेद एव मोक्ष इति वाच्यम् ; मुक्ते केषाञ्चित् व्यावहारिकत्वविशिष्टाविद्यावत्ताभ्रमस्यापि संभवेन तद्विषयीभूतायाः प्रातिभासिकेन व्यावहारिकत्वेन विशेषिताया अविद्यायास्तत्र सत्त्वेन व्यावहारिकत्वविशिष्टाविद्योच्छेदस्यापि तत्रासंभवेनोक्तदोषानिस्तारादिति । यद्वा **बन्धमोक्षयोरविशेषः प्रसज्यत** इति । बद्धेऽपि मोक्षः मुक्तेऽपि बन्धः प्रसज्यत इत्यर्थः। तदेवोपपादयति **तत्त्वत** इति । परमार्थत इत्यर्थः। **निरस्ताविद्यत्वात्** = अविद्यात्यन्ताभाववत्त्वात् । अविद्यायाः शुक्तिरजतादिवन्मिथ्यात्वेन प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वस्यैव मिथ्यात्वरूपत्वेनाविद्याविरहस्य सर्वदा सत्त्वात् तस्यैव मोक्षरूपत्वादिति भावः । अविद्यावत्यपि तदत्यन्ताभावस्य पारमार्थिकस्य सत्त्वमुपपद्यते; अविद्याया व्यावहारिकत्वेन भिन्नसत्ताकत्वात् ;

निरस्ताविद्यत्वात्, अतत्त्वतस्तदानीमपि तद्व्यवहारोपपत्तेः। व्यपदिश्यते हि शुकादिषु मुक्तेष्वपि हि जगति संसारः। किञ्च—

**भ्रान्त्या सर्वभ्रमोच्छेदे नोच्छेदस्तत्त्वतो भवेत्। प्रमया त्वपसिद्धान्ताद्वैतभङ्गादिसम्भवः ॥**

---

इति। **किञ्च भ्रान्त्येति।** **सर्वभ्रमोच्छेदो** मोक्ष इति वदता स किं भ्रान्तिसिद्धोऽभ्युपगम्यते, उत प्रमासिद्धः? भ्रान्तिसिद्धेऽभ्युपगम्यमाने **उच्छेदो** नास्तीत्येवायातम्। प्रमासिद्धत्वे ब्रह्मव्यतिरिक्तस्य उच्छेदलक्षणस्य वस्त्वन्तरस्याभ्युपगमात् **अद्वितीयत्वभङ्गादिः**। तस्य ब्रह्मरूपत्वे ब्रह्मस्वरूपस्य बद्धदशायामपि सत्त्वेन **बन्धमोक्षयोरविशेषप्रसङ्ग** इत्यर्थः। यद्वा **सर्वभ्रमोच्छेदलक्षणमोक्षहेतुभूतं** ज्ञानं किं भ्रान्तिरूपम्, उत प्रमारूपम्? भ्रान्तेः सर्वभ्रमनिवर्तकत्वे तस्या अपि भ्रान्तेर्भ्रान्त्यन्तर-

---

समानसत्ताकयोरेव भावाभावयोर्विरोधादित्यभिप्रायेण **तत्त्वत** इत्युक्तम्। अनेन बद्धे मोक्षप्रसङ्ग उपपादितः; मुक्ते बन्धप्रसङ्गमुपपादयति **अतत्त्वत** इति। अपरमार्थत इत्यर्थः। **तदानीमपी**त्यपिना बन्धदशासङ्ग्रहो दृष्टान्तार्थः। न हि परमार्थभूताविद्यासंबन्धो बन्धः; किन्त्वपरमार्थभूततत्संबन्ध एव। स च मुक्तेऽप्यक्षत इति भावः। **व्यवहारोपपत्तेरि**ति। ततश्च तद्धेतुभूतभ्रान्त्यवश्यम्भावात् भ्रान्तेश्चानिर्वचनीयख्यातिरूपतया तद्विषयानिर्वचनीयाविद्यासद्भावावश्यम्भावादिति भावः। न च व्यावहारिकाविद्यावत्त्वमेव बन्ध इति नोक्तदोष इति वाच्यम्; प्रागुक्तरीत्या प्रातिभासिकस्य व्यावहारिकत्वस्यापि तत्र संभवात्। यत्तु प्रातिभासिकत्वावच्छिन्नप्रतियोगिताको यो व्यावहारिको भेदः, तद्व्यक्तिविशिष्टत्वमेव व्यावहारिकत्वमविद्याविशेषणम्। तच्च प्रातिभासिकाविद्यायां न कथञ्चिदपि संभवतीति—तन्न; तद्व्यक्तेः प्रातिभासिकाविद्यायामपि संसर्गाध्याससंभवेन तद्व्यक्तिवैशिष्ट्योपपत्तेः; संबन्धेऽपि तद्व्यक्तिवैशिष्ट्यनिवेशे संबन्धे तद्व्यक्तेस्संसर्गाध्यासमादाय दोषो बोद्धव्यः। एवमुक्तभेदनिष्ठतद्व्यक्तित्वस्य प्रातिभासिकाविद्यानिष्ठज्ञेयत्वादौ संसर्गाध्याससंभवेन प्रातिभासिकाविद्याया अपि तद्व्यक्तिविशिष्टत्वोपपत्तिः तद्व्यक्तित्ववत्त्वेन ज्ञेयत्वादेर्ग्रहणात्। तद्व्यक्तित्वसंबन्धेऽपि व्यावहारिकत्वरूपतद्व्यक्तिवैशिष्ट्यनिवेशे तद्व्यक्तित्वसंबन्धेऽपि तद्व्यक्तेस्संसर्गाध्यासमादाय दोषो द्रष्टव्यः। इयं च रीतिः परिच्छिन्नत्वहेतूपपत्तौ **ब्रह्मानन्दीय** एव स्पष्टा। तत्र हि, "अध्यस्तद्रव्यत्ववति=अध्यस्तेन संबन्धेन द्रव्यत्ववति; धर्मन्यूनसत्ताकसंबन्धेन द्रव्यत्ववति। यथाश्रुते कर्मधारयात् मतुपोऽसाधुत्वम्; द्रव्यनिष्ठद्रव्यत्वस्य गुणादौ संसर्गाध्यासेऽपि तादृशगुणचाक्षुषे रूपानपेक्षणादसङ्गतिश्च" इत्युक्तम्। अत्र स्वसमानसत्ताकसंबन्धेन तद्व्यक्तिविशिष्टत्वस्य तद्व्यक्तित्वविशिष्टत्वस्य वाऽभिधाने प्रातिभासिकं स्वसमानसत्ताकत्वं स्वसमानसत्ताकत्वस्य संसर्गाध्यासं वाऽऽदाय दोषो बोद्धव्यः। एतेन व्यावहारिकी या अविद्याव्यक्तिः, तद्व्यक्तिवैशिष्ट्यं बन्ध इत्यपि प्रत्युक्तम्; मुक्तेऽपि तस्य संसर्गाध्याससंभवेनातिप्रसङ्गात्; नानाविद्यापक्षे अननुगमाच्चेति। एवं सर्वभ्रान्त्युच्छेदः सर्वदृश्योच्छेदो वा मोक्ष इति हि स्वीक्रियते। तत्रोच्छेदस्य ब्रह्मस्वरूपत्वे बन्धदशायामपि ब्रह्मसद्भावात् मोक्षप्रसङ्ग इत्यभिप्रेत्य ब्रह्मभिन्नत्वे स किं भ्रान्तिसिद्धः प्रमितिसिद्धो वेति विकल्पे आद्ये दूषणमाह भ्रान्त्येति। सर्वोच्छेदस्य भ्रान्तिसिद्धत्व इत्यर्थः। **नोच्छेदस्तत्त्वतो**

विस्तरेण च परस्तात् दूषयिष्यामः ।

भास्करमते तु नित्यसर्वज्ञस्य उपाधियोग एव परिहार्यः । उपाधिभिश्छेदनाद्ययोगेन ब्रह्मण एव संसारित्वानपायः । उपाधिसञ्चारे प्रतिक्षणं बन्धमोक्षप्रसङ्गः । [1]सौभर्यादिवत् उपाधिभेदेऽपि प्रतिसन्धानस्य दुस्त्यजत्वात् । छेदाभ्युपगमे च अच्छेद्यत्वादविरोधः । एवं सकलपदार्थभिन्नाभिन्नसच्चिद्ब्रह्मवादोऽपि दूष्यः। बद्धस्यापि प्रलये मुक्ताविशे(षं?)षसदापत्त्यभिधानात् । मुक्तस्यापि सर्वज्ञस्य

---

निवर्त्यत्वेन भ्रान्तिपरम्परानुवृत्त्यवश्यम्भावेन निश्शेषभ्रमोच्छेदः कदापि न स्यात् । न द्वितीयः ; प्रमाया निवर्तकत्वे, निष्प्रकारिकायास्तस्याः स्वरूपभूतज्ञानादनधिकविषयत्वेनानिवर्तकतया सप्रकारिका वाच्या । तथाच ब्रह्मणि धर्मान्तरवैशिष्ट्यविषयीकरणात् अद्वितीयत्वभङ्गप्रसङ्ग इत्यर्थः । **उपाधियोग एवेति** । किञ्चिज्ज्ञत्वापादकोपाधियोग एवेत्यर्थः । **उपाधिभिश्छेदनाद्ययोगेनेति** । न हि ब्रह्मणि निरवयवे अच्छेद्ये सम्बध्यमाना उपाधयश्छित्त्वा भित्त्वा वा सम्बध्यन्ते ; अपितु ब्रह्मस्वरूपे सम्बध्य तस्मिन्नेव कार्याणि कुर्युरित्यर्थः । **उपाधिसञ्चार इति** । अन्तःकरणप्रभृतावुपाधौ गच्छति उपाधिना(?) स्वसंयुक्तब्रह्मप्रदेशभेदात् क्षणे क्षणे बन्धमोक्षौ स्याताम् । आकर्षणे च अच्छिन्नत्वात् कृत्स्नस्यापि ब्रह्मण आकर्षणं स्यादिति भावः । **दुस्त्यजत्वादिति** । अन्यानुभूतस्यापि अन्येन स्मरणापत्तिः ; तन्मते सर्वेषामात्मनामभेदात् । न च उपाधिभेदात् न स्मरणमिति वाच्यम् ; उपाधिभेदे विद्यमानेऽपि सौभर्यादिवत् स्मरणसम्भवेन उपाधिभेदस्याप्रयोजकत्वादित्यर्थः । स्वाभाविकभेदाभेदवादियादवमतं दूषयति **एवं सकलेति** । **मुक्ताविशेषेति** । मुक्तस्य यादृशी सदापत्तिः, तादृश्याः सदापत्तेः, "सदेव सोम्येदमग्र आसीत्" इति सृष्टिप्राक्कालरूपप्रलये बद्धस्याप्यभिधानात् बद्धधर्मभूतभेद[2](हेय॰)तादात्म्यानुसन्धानस्य मुक्तेऽप्यवश्यम्भावाच्च बद्धमुक्तयोरविशेषप्रसङ्ग इत्यर्थः । न च मुक्तौ सर्वात्मना भेदप्रहाणात् कथं **मुक्ताविशेषसदापत्तिरिति** वाच्यम् ; "शुकः सर्वगतो भूत्वा सर्वात्मा सर्वतोमुखः । प्रत्यभाषत धर्मात्मा भोश(भोश्श)ब्देनानुनादयन्" इति सर्वात्मभूतस्यापि शुकस्य सम्भाषणादिदर्शनेन भेदवादाविरोधाय भेदस्याभ्युपगन्तव्यत्वात् । न च तदा

---

**भवेदिति** । भ्रान्त्यादिसत्त्वादशायामपि भ्रान्तिसिद्धतदुच्छेदसंभवात् मोक्षप्रसङ्ग इत्यर्थः । यद्वा उच्छेद-भ्रान्तेस्तद्विषयीभूतोच्छेदरूपदृश्यस्य चोच्छेददशायामप्यावश्यकतया सर्वभ्रमोच्छेदस्सर्वदृश्योच्छेदो वा कदापि न भवेदित्यर्थः । द्वितीये ब्रह्मव्यतिरिक्तसत्यस्वीकारादपसिद्धान्त इत्याह **प्रमयेति** । **उपाधियोग एवेति** । अज्ञत्वापादकोपाधियोग एवेत्यर्थः । **छेदनाद्ययोगेनेति** । ब्रह्मणो निरवयवत्वादिति भावः । **ब्रह्मण एवेति** । ब्रह्म[णोऽ?]खण्डस्येति भावः । **प्रतिक्षणं बन्धमोक्षप्रसङ्ग इति** । उपाध्यवच्छिन्नप्रदेशभेदादिति भावः । **दुस्त्यजत्वादिति** । तथाचान्यानुभूतस्याप्यन्येन प्रतिसन्धानापत्तिः, सौभर्यादाविवोपाधिभेदस्याप्रयोजकत्वादिति भावः । यादवमतं दूषयति **सर्वेति** । दूषणप्रकारमेवाह **बद्धस्यापीति** ।

---

1 सौभर्यादिवदिति वाक्ये पञ्चम्यन्तस्याधस्तादनन्वयात् व्याख्ययोरध्याहारोऽभिमतः । अनपाय इति पूर्ववाक्यसमनन्तरमिदं पञ्चम्यन्तवाक्यं चेत्, तत्रान्वयः स्यात् । 2 मूले हेयेति पदम् ; अत्र तु भेदेति । नानाबद्धगतस्य नानाविधहेयतादात्म्यानुसंधानस्येत्यर्थः ।

सृष्टौ सर्वहेयतादात्म्यानुसन्धानेन अनन्तसंसारयोगात्। (?) [1]अतो बन्धमोक्षाविशेष एव। [2]अस्माकमविद्यानिवृत्तिर्नाम भावान्तरं भविष्यत्येव। तच्च ×धीविशेषविकासादिरूपम्। प्रीयमाण-परमपुरुषपरिग्रहविशेषादिश्च। परेषां तु निखिलमिदमाविलमिति।

[3]"ब्रह्म वेद ब्रह्मैव भवति" इत्यादिकमित्थमेव ब्रह्मतादात्म्यापरोक्ष्यकृतम्। मुक्तब्रह्मणोस्तादात्म्यं शरीरशरीरिभावात्। तदापरोक्ष्यञ्च शाश्वतमेव; तदपरोक्षधियो यावदात्मभावित्वात्। न्यायसुदर्शने तु उक्तम्, "एवशब्दः साम्यवाची; साम्ये चैव क्वचिच्छब्दः, इति निघण्टूक्तेः (तथैव नैघण्टुकसिद्धेः)।

---

विभागशक्तिमात्रमेव; न तु तद्व्यतिरिक्तो भेद इति वाच्यम्; प्रलयेऽपि तथा वक्तुं शक्यत्वेन **बन्धमोक्षाविशेषतादवस्थ्यादिति** भावः। **सृष्टौ सर्वहेयतादात्म्येति**। [4]सर्वज्ञेन सृज्यमानहेय**तादात्म्यस्य** स्वगतस्यानुसन्धानावश्यम्भावादिति भावः। **परिग्रहविशेषादिश्चेति**। दिव्याप्सरःप्रेषण–ब्रह्मालङ्कारालङ्करणादिः कौषीतकाद्युपनिषत्प्रसिद्धो द्रष्टव्यः। **इत्थमेवेति**। काऽत्र कथन्तेति भावः। ननु **शरीरशरीरिभाव-लक्षणतादात्म्यस्य** नित्यसिद्धत्वेन ब्रह्मज्ञानाफलत्वेन(?), ब्रह्मज्ञानफलत्वं न सम्भवतीत्याशङ्क्याह **तदापरोक्ष्यमिति**। तथा च, "**ब्रह्मैव भवति**" इत्यस्य नित्यसाक्षात्कृतब्रह्मशरीरभावो भवतीत्यर्थ इति भावः। ननु **शरीरशरीरिभावलक्षणतादात्म्ये** सत्यपि आकृत्यधिकरणन्यायेन शरीरवाचिशब्दानां शरीरिपर्यन्तत्वमेवोचितम्; न तु शरीरिवाचिनां शरीरपर्यन्तत्वम्। तत् कथम्, "**ब्रह्मैव भवति**" इत्यत्र ब्रह्मशब्दस्य तच्छरीरभूतजीवपर्यन्तत्वम्? किञ्च **नित्यसाक्षात्कृते**त्यर्थकल्पनमपि क्लिष्टम्—इत्यस्वरसात् मतान्तरमाह **न्यायेति**। **नैघण्टुकसिद्धेरिति**। "साम्ये वद्वैवमेवेव" इति **नानार्थवैजयन्त्याम**व्ययपर्यायसंग्रहाध्याये वति-

---

**परिग्रहविशेषादिश्चेति**। परिग्रहविशेषः=सर्वविधकैङ्कर्ययोग्यतासङ्कल्पः। **आदिना** तद्धेतुभूतप्रीतिविशेषो ग्राह्यः। [5]**ब्रह्मतादात्म्यापरोक्ष्यकृतमिति**। [श्रुतौ?] ब्रह्मशब्दो ब्रह्मसदृशपरः। सादृश्यं च ब्रह्मतादात्म्यापरोक्ष्यवत्त्वेनेति भावः। ब्रह्मशब्दस्य ब्रह्मसदृशपरत्वे गौणत्वं स्यादित्यस्वरसात् मतान्तरमाह **न्यायसुदर्शने त्विति**। **निघण्टूक्तेरिति**। "साम्ये वद्वैवमेवेव" इति **वैजयन्त्य**प्यत्र बोद्धव्या॥

---

1 बद्धस्यापीत्यारभ्य एवेत्यन्तमेकं वाक्यमिति व्याख्यानतः प्रतीत्या तद्रीतौ मध्ये अत इति पदं न स्यात्। 2 सर्वसाधारणं दूषणं वक्तुमाह अस्माकमिति। भावान्तरमिति। न तु ब्रह्मतापत्तिरित्यर्थः। अविद्या अज्ञानं=ज्ञानसंकोच इति पक्षे आह धीति। अविद्या कर्म, निग्रहसंकल्प इति पक्षे आह प्रीयमाणेति। 3 जीवाद्वैतवचनार्थ उक्तः; जीवब्रह्माद्वैतवचनार्थमाह ब्रह्मेति। इत्थमेवेति। जीवाद्वैतवचनवदेव भेदाविरोधेनेत्यर्थः। 4 मुक्तस्य सर्वज्ञत्वात् सृष्टिकालिकसर्वहेयतादात्म्यानुसंधानं स्यादिति मूलार्थः। 5 तादात्म्यं शरीरात्मभावः। तदापरोक्ष्यायोगशंकायां तत्परिहारः क्रियते ब्रह्मैव भवतीत्यनेन। अविभागेन दृष्टत्वादित्यधिकरणे सारावलौ शंका दर्शिता ग्राह्या। सा च समानभोक्तृतया परमसाम्यापन्ने शरीरात्मभावो न दृश्य इति। परिहारस्तु—ब्रह्म वेद यथा, तथा ब्रह्मैव भवति; तत्क्रतुनयात्। आधेयत्वविधेयत्वशेषत्वानां न परमसाम्यविरोधित्वमिति। वस्तुतस्तु उदाहरिष्यमाणभाष्यसमानार्थकत्वमत्र वक्तव्यम्। अतस्तादात्म्यं तत्समानगुणयोगः। इदञ्चाभेदविलक्षणं तादात्म्यमित्याह मुक्तेति। शरीरशरीरिभावादिति। ल्यब्लोपे पञ्चमी। शरीरशरीरिभावं प्राप्येत्यर्थः। शरीरात्मभावसमानाधिकरणम्; तदविरोधीति यावत्। तच्च तादात्म्यं तद्वृत्तिरूपवत्त्वं गुणाष्टकवत्त्वरूपम्। तदाविर्भावो नाम तदापरोक्ष्यमेवेत्याशयः। ×विशेषेण पूर्णतया धीविकासेत्यर्थः।

'वैष्णवं वामनमालभेत स्पर्धमानो विष्णुरेव भूत्वेमान् लोकानभिजयति' इति साम्ये श्रौतप्रयोगदर्शनाच्च। विष्णुरेव = विष्णुरिवेत्यर्थः। न हि अत्र विष्णुरेव भवतीति विवक्षितम्। स्पर्धमानस्य पशुयागेन तदयोगात्। ऐहिकफलं हि शत्रुजयादि" इत्यादि। भाष्यञ्च गौणतामेवाह, "प्रकारैक्ये च तत्त्वव्यवहारो मुख्य एव; यथा सेयं गौः" इति। मुख्य एव = मुख्यप्राय इत्यर्थः। सेयं गौरिति तु व्यक्तिद्वयैकरूप्यव्यपदेशः। अतः सिद्धं ईश्वरात् परस्परञ्च भिन्ना जीवा इति॥

स्वतस्सुखी चायमात्मा उपाधिवशात् संसरति। स द्विधा। संसारी असंसारी चेति।

पुण्यपापादिमान् पूर्वः। तच्छून्य इतरः। पूर्वोऽपि द्विधा। नित्यसंसारी भाविसंसारविरहश्चेति। तत्र इतःपूर्वमनन्तकल्पेष्विव परस्तादपि हेत्वनागमनात् संसाराविच्छेदसम्भवात् पूर्वः।

---

प्रत्ययवाशब्द-एवंशब्द-एवशब्द-इवशब्दानां साम्यशब्दपर्यायत्वेन पाठादिति भावः। ननु विष्णुरेव इत्यत्रापि, "ब्रह्मैव भवति" इत्यत्रेव विष्णुत्वप्राप्तिलक्षणमोक्ष एव विवक्षितः। ततश्च एव कारस्य नेवार्थत्वमित्याशङ्क्याह न ह्यत्रेति। स्पर्धमानस्येति। वैष्णववामनालम्भस्य स्पर्धमानाधिकारित्वेन शान्ताधिकारिकमोक्षोपायरूपत्वाभावादित्यर्थः। पशुयागेनेति। कर्मरूपस्य तस्य ज्ञानसाध्यमोक्षोपायत्वासम्भवादित्यर्थः। शत्रुजय इति। "इमान् लोकान् जयति" इत्यस्य तत्तल्लोकगतान् शत्रून् जयतीति ह्यर्थ इति भावः। भाष्यमेव दर्शयति प्रकारैक्ये चेति। ननु तत्त्वव्यवहारो मुख्य एवेति भाष्ये विद्यमाने कथं भाष्यं तु गौणतामेवाहेत्युच्यते इत्याशङ्क्याह मुख्यप्राय इत्यर्थ इति। अत एव श्रुतप्रकाशिकायामपि, (पुराणघट्टे) "गङ्गायां घोष इत्यत्र गङ्गापदवत् कार्त्स्न्येन प्रवृत्तिनिमित्तप्रहाणाभावात् परमात्मनीव प्रवृत्तिनिमित्तपौष्कल्याभावाच्च प्रवृत्तिनिमित्तैकदेशान्वयिनि मुक्तात्मनि मुख्यकोटिरित्यभिप्रायेण मुख्य एवेत्युक्तम्। लाक्षणिकगङ्गापदवत् नात्यन्तामुख्यः" इत्युक्तमिति द्रष्टव्यम्। मुख्य एवेत्यस्य मुख्यप्राय इत्यर्थकथने बीजमाह सेयं गौरिति॥

सर्वस्यापि जन्तोरनादौ कालचक्रे कदाचित् मोक्षहेतुपतिपाताश्यम्भावेन नित्यसंसारिणोऽसम्भव इत्याशङ्क्याह इतः पूर्वमिति। लीलाविभूतिनित्यत्वोक्तिरिति। "निश्शेषात्मापवर्गे विरतविहरणो विश्वकर्ता तदा स्यात्"। ततश्च, "अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमाः" इत्यादिप्रमाणविरोधः

---

उपाधिवशादिति। उपाधिः कर्माविद्यादिः। पुण्यवत्त्वं पापवत्त्वं आदिपदग्राह्यज्ञानसङ्कोचवत्त्वं वा संसारिलक्षणम्। आमोक्षं कर्माधीनसुखदुःखयोरवर्जनीयतया तद्धेतुपुण्यपापयोरुभयोरप्यावश्यकतया सर्वत्र लक्षणगमनसंभवः। ज्ञानसंकोचवत्त्वं च सङ्कुचितज्ञानवत्त्वम्। सङ्कुचितत्वञ्च द्रव्यवृत्त्यत्यन्ताभावनिरूपितसंयोगसंबन्धावच्छिन्नैकमात्रवृत्तिधर्मावच्छिन्नप्रतियोगित्वम्। यत्तु पुण्यपापान्यतरवत्त्वं संसारिलक्षणमिति, तन्न; पुण्यमात्राश्रयस्य पापमात्राश्रयस्य वा संसारिणोऽप्रसिद्धया अन्यतरत्त्वेन निवेशे प्रयोजनविरहात्। आमोक्षं मोक्षप्रयोजकसुकृतवत्त्वं ज्ञानसङ्कोचहेतुभूतदुष्कृतवत्त्वं च ह्यावश्यकम्। नित्यसंसारित्वेऽपि तस्याप्यैश्वर्याद्यर्थसुकृतवत्त्वमावश्यकमिति न दोषः। तच्छून्य इति। पुण्याभाववज्जीवत्वं पापाभाववज्जीवत्वं सङ्कुचितज्ञानाभाववज्जीवत्वं वा इहासंसारित्वमिति भावः। नित्यसंसारीति। उक्तसंसाराभाववद्भिन्न इत्यर्थः। भाविसंसारविरह इति। स्वसामानाधिकरण्यस्वपूर्वत्वोभयसंबन्धेन संसाराभावविशिष्टसंसारवान्

मानं तु लीलाविभूतिनित्यत्वोक्तिः। "क्षिपाम्यजस्रम्", "न क्षमामि कदाचन" इत्यादिकमपि तदुत्तम्भकम्। केचित्तु, "विलम्बातिरेकपराणि तानि ; न तु कस्यचिदपि नित्यः संसारः। अविरुद्धयोरसंसर्गस्य कालविप्रकर्षनियमेन व्याप्तेः। अन्यथा मोक्षसाधने, 'स किमहम्' इति सन्देहात् अप्रवृत्तिप्रसङ्गात्" इति वर्णयन्ति। इतःपूर्वमनागतैतच्छरीराद्युपनिपातवत् तद्धेतूपनि-

---

स्यादिति भावः। अविरुद्धयोरसंसर्गस्येति। अविरुद्धयोर्यत्र असंसर्गनियमः ; स कालविप्रकर्षेण व्याप्तः ; यथा पटकुङ्कुमरागयोः। कालविप्रकर्षो भिन्नकालत्वम्। प्रकृते च भिन्नकालभूतत्वाभावात् जीवमुक्तिकारणयोः संसर्गोऽवश्यम्भावीत्यर्थः। [1]अयं भावः—न तावत् जीवमुक्तिहेत्वोर्भावाभावयोरिव स्वभावविरोधः ; येन तयोरसन्निधाननियमः स्यात्। नापि हिमवद्विन्ध्ययोरिव भिन्नदेशत्वनियमः। ततश्च अविरुद्धयोर्जीवमुक्तिहेत्वोरसन्निधानस्य कालविप्रकर्षव्याप्तत्वात् नित्ये च जीवे कालविप्रकर्षाभावात् नासन्निधाननियम इति। ननु जीवविशेषो मोक्षहेतुविरुद्धोऽस्त्वित्याशङ्क्याह अन्यथेति। अप्रवृत्तीति। किमहं मोक्षस्वरूपयोग्यो वा, नित्यसंसारी वेति शङ्कायां मोक्षोपायानुष्ठानादौ प्रवृत्तिर्न स्यादित्यर्थः। ननु इतःपूर्वमनन्तेष्वपि कल्पेषु अजाता मोक्षोपायसिद्धिरितःपरं कथमुत्पद्यताम्? ततश्च कस्यापि मुमुक्षा नोत्पत्तुमर्हतीत्याशङ्क्य कर्माविद्यादिचक्रे प्रतिपुरुषमिहानादिचित्रप्रवाहे तत्तत्काले विपक्तिर्भवति हि विविधा सर्वसिद्धान्तसिद्धा इति श्लोकार्थमभिप्रयन् आह इतः

---

इत्यर्थ। लीलाविभूतिनित्यत्वोक्तिरिति। "अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमाः" इत्यादिरूपेति भावः। अविरुद्धयोरिति। परस्परसंबन्धप्रतिबन्धकरहितयोरित्यर्थः। असंसर्गस्य=परस्परसंबन्धाभावस्य, कालविप्रकर्षः भिन्नकालत्वम्। अयमर्थः—तत्संबन्धप्रतिबन्धकरहितत्वे सति तत्संबन्धाभाववत्त्वं यत्र, तत्र तदधिकरणकालावृत्तित्वमिति व्याप्तिः। यथा भाविकुङ्कुमरागसंबन्धप्रतिबन्धकरहिते तत्संबन्धाभाववति अतीतपटे तदधिकरणकालावृत्तित्वम्। ततश्च नित्ये जीवे मोक्षोपायसंबन्धाधिकरणकालावृत्तित्वरूपव्यापकाभावेन व्याप्यभूतस्य मोक्षोपायसंबन्धप्रतिबन्धकरहितत्वविशिष्टस्य मोक्षोपायसंबन्धाभावस्याभावावश्यकत्वेन विशेषणवति विशिष्टाभावस्य विशेष्याभावरूपतया मोक्षोपायसंबन्धप्रतिबन्धकरहितत्वरूपविशेषणवति जीवे तादृशप्रतिबन्धकरहितत्वविशिष्टमोक्षोपायसंबन्धाभावरूपस्य विशिष्टाभावस्य मोक्षोपायसंबन्धाभावरूपं यद्विशेष्यं तदभावरूपे मोक्षोपायसंबन्ध एव पर्यवसानमिति सर्वेष्वपि जीवेषु मोक्षोपायसंबन्ध आवश्यकः। न हि कस्मिंश्चिदपि जीवे मोक्षोपायसंबन्धप्रतिबन्धकमस्तीत्यत्र किञ्चित् प्रमाणं दृश्यते। ननु जीवविशेषस्य मोक्षोपायसंबन्धप्रतिबन्धकभगवत्संकल्पविषयत्वरूपं मोक्षहेतुविरुद्धत्वमेवास्त्वित्याशङ्क्याह अन्यथेति। जीवविशेषस्य मोक्षहेतुविरुद्धतया नित्यसंसाराभ्युपगम इत्यर्थः। मोक्षसाधने=मोक्षोपाये। अस्य चाप्रवृत्तिप्रसङ्गादित्यनेनान्वयः। स किमहमिति। नित्यसंसारी किमहमित्यर्थः। नन्वितःपूर्वमनन्तेषु कल्पेषु अजातो मोक्षः कथमितःपरं भवेत्। ततश्च कस्यचिदपि मुमुक्षाया एवासंभवात् कथं मोक्षोपायानुष्ठानसंभव इत्याशङ्क्याह इतःपूर्वमिति। अनागतैतच्छरीराद्युपनिपातवदिति। इतःपूर्वमनन्तेषु कल्पेष्वजात एतच्छरीरसंबन्धः कथमिदानीं जात इत्यनुयोगे अनादिकर्म-

---

1 न्यायकुसुमाञ्जल्युक्तरीति मनुसृत्योपपादयति अयं भाव इति।

पातात् भाविसंसारविरहोपपत्तिः। प्रमाणञ्च ब्रह्मविदो मोक्षवचनानि। एते च संसारिणः कर्मपाश-प्रग्रथिताः(संदिताः) ब्रह्माण्डकुहरपरिवर्तमानकालघटीयन्त्रकुण्डिकायमानाः तस्मिन् क्षीयमाणाः पूर्यमाणाश्च सन्तः परिभ्रमन्ति। तत्र पुण्यकृतो धूमरात्र्यपरपक्ष-दक्षिणायन-षण्मास-पितृलोकाकाश-चन्द्रक्रमेण स्वर्गलोकमधिरोहन्ति। अवरोहन्ति च चन्द्रमसस्स्थानात् आकाशवायुधूमाभ्रमेघादि-क्रमेण। तत्र श्रद्धासोमवर्षान्नरेतोमयीनामाहुतीनां विद्युत्पर्जन्यपृथिवीपुरुषयोषितः स्थानानि। प्रायिकी च पञ्चमाहुत्यपेक्षा; द्रौपदीधृष्टद्युम्नप्रभृतिषु अदर्शनात्। एवमपुण्यकृतामपि। स्वेदजादि-

---

**पूर्वमिति**। **मोक्षवचनानीति**। इतरथा, 'ब्रह्मविदाप्नोति परम्'' इत्यादीनामनुष्ठापकत्वाभावेन जरद्गवादिवाक्यतुल्यत्वं स्यादिति भावः। **सन्दिता इति**। बद्धा इत्यर्थः। ''बन्धने सन्दितम्'' इति नैघण्टुकोक्तेः। **क्षीयमाणा इति**। ''प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम्। तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मणे॥'' इत्युक्तया फलोपभोगक्षीणपुण्या द्युलोकादवरोहन्तो **घटीयन्त्रकुण्डिका**न्यायेन इह लोके कर्मभिः पूर्यन्ते इत्यर्थः। **तत्र पुण्यकृतेति**। ''अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते, ते धूममभिसम्भवन्ति धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षात् यान् षड्दक्षिणैति मासांस्तान् मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसम्। एष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति। तस्मिन् यावत्संपातमुषित्वा अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुम्। वायुर्भूत्वा धूमो भवति धूमो भूत्वा अभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति'' इति श्रुतिरत्रानुसन्धेया। **श्रद्धेति**। **श्रद्धा**-शब्देन भूतसूक्ष्माण्युच्यन्ते। ततश्च अस्माल्लोकात्प्रेत्य भूतसूक्ष्मपरिष्वक्तो द्युलोकं प्राप्य **सोम**शब्दितदिव्यदेहयुक्तः सन् तत्र भोगमनुभूय भोगावसाने मृतसोमदेहः पर्जन्यं प्राप्य वर्षरूपेण **पृथिवीं** प्राप्य अन्नरूपेण **पुरुषं** प्राप्य **रेतो**रूपेण **योषितं** प्राप्य पुरुषशब्दाभिलपनीयो भवति। अयमर्थः 'तदन्तरप्रतिपत्तौ'' इत्यधिकरणे **भाष्ये** स्पष्टः। ''स्मर्यतेऽपि च लोके'' इति सूत्रमभिप्रयन् आह **प्रायिकी च पञ्चमाहुत्यपेक्षेति**। देहारम्भायेति शेषः। ''दर्शनाच्च'' इति सूत्रं हृदि निधायाह **स्वेदजादिशरीरेष्विति**। तेषां ग्राम्यधर्ममन्तरेणैवोत्पत्तेरिति भावः। ''विद्याकर्मणोरिति तु प्रकृतत्वात्''

---

प्रवाहवैचित्र्यस्य सर्वसंप्रतिपन्नतया इदानीमेवैतच्छरीरसंबन्धदर्शनात् तद्धेतुभूतकर्मपरिपाक इदानीमेव जात इति स्वीकार्यमिति यथोच्यते, तथा मोक्षरुचि-तदुपायप्रवृत्तिहेतुभूतसुकृतपरिपाकस्यापि कालविशेष एव संभवात् इतःपूर्वमनुत्पन्नस्यापि मोक्षरुचितदुपायप्रवृत्त्यादेः कालविशेषे संभव उपपद्यत इति भावः। नन्विदानीमेतच्छरीरसंबन्धस्य प्रत्यक्षसिद्धतया तद्धेतुभूतसुकृतपरिपाक इदानीमेव जात इत्यङ्गीकारेऽपि मोक्षतदुपाययोस्तथाप्रमाणसिद्धत्वाभावात् कथं तथाभ्युपगम इत्यतस्तत्र प्रमाणमाह **प्रमाणमिति**। **ब्रह्मविदो मोक्षवचनानीति**। ब्रह्मज्ञानस्य मोक्षोपायत्वप्रतिपादनपराणि, ''ब्रह्मविदाप्नोति परम्'' इत्यादीनि वचनानीत्यर्थः। कदाचिदपि मोक्षतदुपाययोरसंभवे उक्तवचनानामप्रामाण्यमेव हि स्यादिति भावः। **प्रग्रथिता इति**। **सन्दिता इति** क्वचित् पाठः। तस्यापि बद्धा इत्येवार्थः। ''बन्धने सन्दितम्'' इति नैघण्टुकोक्तेः। **क्षीयमाणाः**=फलोपयोगेन क्षीणपुण्याः, **पूर्यमाणाः** द्युलोकादवतरन्त

शरीरेषु पञ्चमाहुत्यभावात् चन्द्रप्राप्त्यभावाच्च । तेषामतिघोरा निरयसरणिः, निरयदुःखानुभूतिश्च पुराणादिषु प्रपञ्चिता स्मर्यमाणाऽपि कलेबरं कदम्बगोलाययति ।

द्वितीयोऽपि द्विधा । संसारात्यन्ताभाववान् प्रध्वस्तसंसारश्चेति । तत्र कदाचिदपि संसारहेत्वभावात् पूर्वस्य ईश्वरवत् नित्यसूरेस्तदत्यन्ताभावः। उत्तरस्तु उपपादितो मुक्त एव । अनादावपि काले प्रतिदिवसं सहस्रपुरुषमोक्षेऽपि न संसारात्यन्तविलयः; अस्यानन्तस्य एवंस्वभावत्वात्। उक्तञ्च वेदार्थसंग्रहे, "ब्रह्माज्ञानपक्षादपि पापीयान् अयं भेदाभेदपक्षः। अपरिमितदुःखस्य पारमार्थिकत्वात् संसारिणामनन्तत्वेन दुस्तरत्वाच्च" इति । अनन्तपयोनिधौ पयोबिन्दुसन्निपातवत् संसारिवर्गे पूर्वमुक्तेषु पश्चान्मुक्तानामनुप्रवेशः। अनन्तेष्वपि संसार्यसंसारिषु एकपादत्वत्रिपादत्व[1]तारतम्यमापेक्षिकम्। तथा च मुहूर्तयामाहोरात्रकल्पादिषु द्रव्यपार्थिवघटादिषु च दृष्टमेव। अत एव नित्यानां समस्तबद्धमुक्तापेक्षयाऽपि अनन्तत्वमुपपन्नम्। केचित्तु नित्यसूरिवर्गं नेच्छन्ति;

---

इति सूत्रमभिप्रयन् आह चन्द्रप्राप्त्यभावाच्चेति । प्राप्त्यभावाच्च प्रायिकी इत्यन्वयः । "संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात्, स्मरन्ति च, अपि सप्त" इति सूत्रा[णाम?]र्थमभिप्रयन् आह तेषामतिघोरेति "तस्माज्जुगुप्सेत" इति तत्रत्यश्रुतिवाक्यार्थमभिप्रयन् आह स्मर्यमाणापीति. तत्र कदाचिदपीति ईश्वरवत् पूर्वस्य नित्यसूरेः संसारहेत्वभावात् संसारात्यन्ताभाव इत्यर्थः। अत्र च पूर्वस्य नित्यसूरेरिति सिद्धवत्कृत्य निर्देशात् पूर्वो नित्यसूरिरित्येतदर्थादुपपादितं भवति । उपपादित इति । इतःपूर्वमनागतैतच्छरीराद्युपनिपातवत् इत्यादिना उपपादित इत्यर्थः । एवंस्वभावत्वादिति । अत्यन्तविलयशून्यस्वभावत्वादित्यर्थः । संसारानन्त्यांशे संमतिं दर्शयति उक्तञ्च वेदार्थेति । अनन्तपयोनिधाविति । भगवच्छास्त्रे तथाप्रतिपादनादिति भावः । संसार्यसंसारिवर्गयोरित्यर्थः । संसार्यसंसारिणोर्द्वयोरप्यानन्त्याविशेषे, "पादोऽस्य विश्वा भूतानि । त्रिपादस्यामृतं दिवि" इति संसारितारतम्योक्तिः कथमित्याशङ्क्य मुहूर्तयामाहोरात्रकल्पादीनामानन्त्ये अविशिष्टेऽपि यथा कल्पानन्त्यापेक्षया अहोरात्रानन्त्याधिक्यम्, तदपेक्षया यामानन्त्याधिक्यम्, तदपेक्षया मुहूर्तानन्त्याधिक्यम्, यथा वा

---

इह लोके कर्मभिः पूर्यमाणाः । संसारात्यन्ताभाववानिति । इदञ्च ध्वंसाधिकरणेऽत्यन्ताभावो नास्तीत्यभिप्रायेण । तेन मुक्तेषु नातिप्रसङ्गः । यदि च ध्वंसाधिकरणेऽप्यत्यन्ताभावः स्वीक्रियते ; तदा संसारवद्भेदवत्त्वमनवच्छिन्नविशेषणतासंबन्धेन संसारसामान्याभाववत्त्वं वा नित्यलक्षणं बोद्धव्यम् । प्रध्वस्तसंसार इति । संसारत्वावच्छिन्नप्रतियोगिताकध्वंसवत्त्वं संसारासमानाधिकरणसंसारध्वंसवत्त्वं वा मुक्तलक्षणमिति भावः । तेन यत्किञ्चित्पुण्यपापादिरूपसंसारध्वंसस्य बद्धेऽपि सत्त्वेऽपि न क्षतिः । ननु संसार्यसंसारिवर्गयोरुभयोरप्यानन्त्याविशेषात् कथमेकपादत्वत्रिपादत्वव्यपदेश इत्यत आह अनन्तेष्वपीति। एकपादत्वत्रिपादत्वतारतम्यमिति । एकपादत्वत्रिपादत्वरूपन्यूनाधिकभाव इत्यर्थः । आपेक्षिकमिति । संसारिसंख्यापेक्षया असंसारिसंख्याया आधिक्यनिबन्धनमित्यर्थः । नन्वानन्त्याविशेषे कथं संख्याधिक्यसंभव इत्यतस्तत्संभवं दृष्टान्तेनोपपादयति तथाचेति । आनन्त्याविशेषेऽपीत्यर्थः । मुहूर्तेत्यादि । आनन्त्याविशेषेऽपि कल्पापेक्षया अहोरात्राणामहोरात्रापेक्षया यामानां च यथा संख्याधिक्यमुपपद्यते, यथा

---

1 वेदार्थसंग्रहे भोक्तृभोग्य भोगोपकरणनिर्देशेऽपि अमृतशब्दवाच्यनित्यत्रिपात्त्वमेवाभिमतमिति ।

तन्न । "सदा पश्यन्ति सूरयः" इत्यादिभिः सदापश्यदनेकद्रष्टृविशिष्टस्थानविधानात् । अत एव न मुक्तप्रवाहेण वा ईश्वरेण वा अन्यथासिद्धिः। सर्वेषां जीवानां संसारात्यन्तायोगव्यवच्छेदसाधनानि जीवत्वादिलिङ्गानि यथासम्भवं सिद्धसाधनबाधादिभिर्दूष्याणि। एतेषां नित्यसूरीणामानन्त्यावान्तरभेदादिकं श्रीपाञ्चरात्रसंहितासु विशदमनुसन्धेयम् ।

**अनन्तविष्वक्सेनाद्यैर्नियताधिकृतैरपि । ज्ञानानन्दादिभिर्मुक्ता नित्यैरानन्दसोदराः ॥**

---

घटसदृशानन्त्यापेक्षया तद्विसदृशानन्त्याधिक्यम्,. यथा वा सतां द्रव्याणाञ्चाऽऽनन्त्येऽपि द्रव्यानन्त्यापेक्षया सदानन्त्याधिक्यम्, तद्वदुपपद्यते इत्यभिप्रयन् आह **अनन्तेष्वपीति** । **अत एव न मुक्तप्रवाहेणेति** । मुक्तप्रवाहकर्तृकदर्शनस्य पूर्वावधिमत्त्वेन सार्वकालिकत्वाभावात्, ईश्वरस्यैकत्वाच्चेत्यर्थः । **अनन्तविष्वक्सेनाद्यैरिति** । नियताधिकारैरपि **विष्वक्सेनाद्यैर्ज्ञानानन्दादिभिर्नित्यमुक्ता आन-**

---

वा घटापेक्षया पार्थिवानां पार्थिवापेक्षया द्रव्याणां द्रव्यापेक्षया सताञ्च संख्याधिक्यमुपपद्यते—तथेत्यर्थः । अत्रेदं बोद्धव्यम्—"पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि" इति श्रुत्या असंसारित्वे संसारित्वव्याप्यसंख्याधिकसंख्याव्यापकत्वं प्रतीयते । तच्च नोपपद्यते ; संसार्यसंसारिवर्गयोरुभयोरप्यनन्तत्वेन स्वीकृततया आनन्त्याविशेषे संख्यातारतम्यासंभवात्, अनुपपन्नार्थे श्रुतेस्तात्पर्यासंभवात् । उपपत्तिरपि हि तात्पर्यलिङ्गमित्याशंक्य, आनन्त्याविशेषेऽपि संख्यातारतम्यस्य दर्शनात् न तस्यानुपपन्नत्वमिति तत्र श्रुतेस्तात्पर्यसंभवात् श्रुत्या तत्प्रतिपादनसंभव इत्युक्तमिति । **दृष्टमेवेति** । अनुमानेन निश्चितमित्यर्थः । अयमत्रानुमानप्रकारः—मुहूर्तत्वं यामत्वव्याप्यसंख्याधिकसंख्याव्यापकं यामत्वव्यापकत्वे सति यामत्वाभाववद्वृत्तित्वात् । यत्र यद्व्यापकत्वे सति यदभाववद्वृत्तित्वम्, तत्र तद्व्याप्यसंख्याधिकसंख्याव्यापकत्वम् । यथा घटत्रयान्यतमत्वव्याप्यत्रित्वाधिकचतुष्टव्यापके घटचतुष्टयान्यतमत्वे । एवं द्रव्यत्वं पार्थिवत्वव्याप्यसंख्याधिकसंख्याव्यापकं पार्थिवत्वव्यापकत्वे सति पार्थिवत्वाभाववद्वृत्तित्वात् उक्तान्यतमत्ववत् । अत्र घटचतुष्टयान्यतमत्वव्यापके तादृशान्यतमविषयकज्ञानविषयत्वादौ तद्व्याप्यचतुष्टसंख्याधिकसंख्याव्यापकत्वाभाववति व्यभिचारवारणाय तदभाववद्वृत्तित्वनिवेशः । तावन्मात्रनिवेशे पटद्वयान्यतरत्वादौ व्यभिचारः । अतो व्यापकत्वम् । सामानाधिकरण्यमात्रनिवेशेऽपि एकघटपटद्वयान्यतमत्वे व्यभिचारः, अतो व्यापकत्वनिवेश इति। तथा चोक्तानुमानप्रमाणप्रतिपन्नं यथा अनन्तेष्वपि संख्यातारतम्यं सर्वैः स्वीक्रियते, तथा प्रमाणतमश्रुतिप्रपन्नसंख्यातारतम्यं स्वीकार्यमेवेति सिद्धम्। **मुक्तेत्यादि** । मुक्तानां दर्शनस्य पूर्वावधिमत्तया सदातनत्वाभावादीश्वरस्य चानेकत्वाभावादिति भावः । **संसारात्यन्तायोगव्यवच्छेदेति** । संसारात्यन्तायोगः=अवच्छिन्नविशेषणतासंबन्धेन संसारसामान्याभाववत्त्वम्, तद्व्यवच्छेदः=तदत्यन्ताभावस्तद्भेदो वा । जीवत्वादीति आदिना ईश्वरातिरिक्तात्मत्वपरिग्रहः। **सिद्धसाधनबाधादिभिरिति** । आदिना अप्रयोजकत्वपरिग्रहः । अयं भावः—जीवत्वसामानाधिकरण्येन संसारात्यन्तायोगव्यवच्छेदसाधने बद्धेषु सिद्धसाधनम् । अवच्छेदकावच्छेदेन तत्साधने शास्त्रसिद्धनित्यसूरिषु तद्बाधः । पक्षद्वयेऽप्यप्रयोजकतेति । **अनन्तेत्यादि** । नित्यै ज्ञानानन्दादिभिरुपलक्षिताः

एवं सदादर्शनादिबलादेव नित्यमुक्तेश्वराणां प्रतिसर्गावस्थायां सुषुप्तकल्पतयाऽवस्थानं वदन्तः प्रत्युक्ताः। सङ्कोचककर्माद्यभावाच्च साऽवस्था दुरुपपादा॥

अथ को मोक्षहेतुः? भक्तिरूपापन्नोपासनवेदनध्यानादिशब्दवाच्योऽसकृदावृत्त आप्रयाणात् अन्वहमनुवर्तमानो ज्ञानविशेषः। तथा च सूत्रम्—"आवृत्तिरसकृदुपदेशात्" इति, "आप्रयाणात् तत्रापि हि दृष्टम्" इति च। न पुनः केवलं तत्त्वज्ञानम्; तस्य अध्ययनविधिसिद्धसाङ्गसशिरस्काध्ययनगृहीताक्षरराशिविशेषापातप्रतीतनिरतिशयपुरुषार्थसाधनार्थनिर्णयरागप्राप्तश्रवणमात्रेण निष्पन्नस्याविधेयत्वात्; तावति सिद्धेऽपि मोक्षादर्शनाच्च। तदुक्तं भगवता आपस्तम्बेन, "बुद्धे क्षेमप्रापणं तच्छास्त्रैर्विप्रतिषिद्धम्। बुद्धे चेत् क्षेमप्रापणमिहैव न दुःखमुपलभेत" इति। नापि श्रवणमननोपासननिर्धूतभेदवासनस्य वाक्यमात्रजन्यः साक्षात्कार इति वाच्यम्; तस्य अन्योन्याश्रयविरोधादिदुष्टत्वात्। अविद्यास्वरूप-सम्बन्ध-निवर्तकज्ञान-तज्ज्ञातृ-तदैक्योपदेशादीनां विकल्पा-

---

न्दांशे सदृशा इत्यर्थः। **प्रतिसर्गावस्थायामिति**। प्रलयावस्थायामित्यर्थः। **सुषुप्तकल्पतयेति**। प्रलयस्य कार्यानाधारकालत्वात्, तदानीं नित्यमुक्तेश्वराणामपि ज्ञानरूपं कार्यं नास्तीति पूर्वपक्षोत्थितिबीजम्॥

**आवृत्तिरसकृदुपदेशात्**। असकृदावृत्तमेव वेदनं मोक्षसाधनम्। कुतः? **उपदेशात्**। मोक्षसाधनभूतस्य ध्यानोपासनादिशब्दैरुपदिश्यमानत्वात्। आवृत्तस्यैव ज्ञानस्य ध्यानादिशब्दवाच्यत्वादित्यर्थः। **आप्रयाणात् तत्रापि हि दृष्टम्**। आवृत्तञ्च वेदनमाप्रयाणमनुष्ठेयम्। "प्रायणान्तमोङ्कारमभिध्यायीत", "स खल्वेवं वर्तयन् यावदायुषम्" इति शास्त्रे दृष्टत्वात्। **बुद्ध इति**। वाक्यार्थज्ञानमात्रात् मोक्षप्राप्तिः शास्त्र-प्रत्यक्षविरुद्धेत्यर्थः। **अन्योन्याश्रयविरोधादीति**। वाक्यजन्यसाक्षात्कारे सति तदधीनो मननोपासनाभ्यां भेदवासनानिरासः, तस्मिंश्च सति साक्षात्कार इत्यन्योन्याश्रयः। न च प्रथमं वाक्यजन्यज्ञानं परोक्षरूपमेवेति वाच्यम्; अपरोक्षार्थविषयत्वेनापरोक्षत्वस्य तैरेवाङ्गीकृतत्वात्। किञ्च परोक्षज्ञानजनकैकस्वभावस्य शब्दस्य साक्षात्कारजनकत्वे विरोधः। **आदिपदेन** चिरतरानुवृत्तवासनायाः अल्पकालानुवृत्तमनननिदिध्यासननिरास्यत्वासम्भवो विवक्षितः। **अविद्यास्वरूपसम्बन्धेति**।

---

नियताधिक्रियाश्च ये अनन्तविष्वक्सेनादयः, तैर्मुक्ता **आनन्दसोपराः**=आनन्दांशेऽत्यन्तसदृशा इत्यर्थः। अयं भावः—अनन्तविष्वक्सेनादीनामधिकारनैयत्येन मुक्तानां तदसंभवेऽपि स्वयं तदनुष्ठाने यादृशी परमशेषिप्रीतिर्जायते, तादृश्या एव तस्या अनन्तविष्वक्सेनाद्यनुष्ठितकैङ्कर्येण जायमानतया नानन्दवैषम्यसंभवः, मुक्तानां परमशेषिप्रीत्यैकप्रयोजनत्वादिति। **प्रतिसर्गावस्थायां** प्रलयावस्थायाम्।

**अन्योन्याश्रयेत्यादि**। अयं भावः–किं तत्त्वमस्यादिवाक्येन ज्ञानमात्रे जननीये निदिध्यासनस्यापेक्षिततया तद्विधिसापत्यमुच्यते, उत साक्षात्कारे जननीये तस्यापेक्षिततयेति विकल्पे, आद्ये अन्योन्याश्रयः; निदिध्यासनस्य शाब्दज्ञानसापेक्षत्वात्। न ह्यनुभवरूपब्रह्मज्ञानमन्तरा तत्स्मृतिसंततिरूपनिदिध्यासनसंभवः, अनुभवरूपं ब्रह्मज्ञानं च न प्रमाणान्तरेण संभवति। द्वितीये विरोधः, शब्दस्य साक्षात्कारजनकत्वासंभवादिति। विरोधादीत्यादिना ज्योतिष्टोमादिवाक्यानामपि साक्षात्कारजनकताप्रसङ्गस्सङ्गृह्यते। **अविद्यास्वरूपेत्यादि**। विकल्पासहत्वमिति अविद्या किं परमार्था, उता-

सहत्वं भाष्यादिषु ग्राह्यम्। असत्यात् सत्यप्रतिपत्तिश्च सर्वथा अनुपपन्ना। तथा हि—

---

अविद्यास्वरूपं पारमार्थिकम्, अपारमार्थिकं वा? पारमार्थिकत्वे अद्वैतभङ्गः; अपारमार्थिकत्वे तस्यापि कल्पितत्वेन कल्पकान्तरापेक्षया अनवस्था स्यात्। तथा अविद्याश्रयस्वरूपः अविद्यासम्बन्धः कल्पितस्य, तात्त्विकस्य वा? नाद्यः; तत्कल्पितस्य तदाश्रयत्वासम्भवात्। न द्वितीयः; पारमार्थिकस्य ब्रह्मस्वरूपज्ञानस्य अविद्याप्रतिभटस्य तदाश्रयत्वासम्भवात्। तथा निवर्तकज्ञानं ब्रह्ममात्रविषयकम्, अतिरिक्तविषयकं वा? नाद्यः; तन्मात्रविषयकज्ञानस्य स्वरूपभूतज्ञानादनतिरिक्तविषयकत्वेनानिवर्तकत्वात्। अन्यथा स्वरूपज्ञानस्यापि निवर्तकत्वापातात्। न द्वितीयः; अतिरिक्तविषयकं ज्ञानं प्रमारूपं वा, भ्रमरूपं वा? नाद्यः; अद्वितीयत्वभङ्गात्। नान्त्यः; भ्रमस्यानिवर्तकत्वात्। तथा निवर्तकज्ञानज्ञाता च दुर्निरूपः। तथा हि—ज्ञानाश्रयः किं जीवः, उत ब्रह्म? नाद्यः; निवर्तकज्ञानबाध्यस्य जीवस्य तज्ज्ञानोत्पत्त्यर्थं प्रवृत्त्ययोगात्। नापि ब्रह्म; तत्र ज्ञातृत्वस्य पारमार्थिकत्वे अद्वैतभङ्गप्रसङ्गेन आविद्यकत्वस्य च वाच्यतया ब्रह्मणि अविद्यासम्बन्धप्रसङ्गात्। तथा अविद्यानिवृत्त्यर्थं ब्रह्मात्मैक्यमुपदिशन् आचार्यः किं शिष्यं प्रतीत्योपदिशति, उत अप्रतीत्य? अप्रतीतौ उपदेशासम्भवात् प्रतीत्यैवेति वाच्यम्। तत्रापि कल्पितत्वेन शिष्यं न प्रतीत्येति चेत्, गुरोः तत्त्ववित्त्वं न स्यात्। तत्त्वेन जानाति चेत्; नोपदिशेत्। न हि कल्पितत्वेन ज्ञातस्य दर्पणप्रतिबिम्बस्य कश्चित् किमप्युपदिशति। तथा अविद्यानिवृत्तिः सती, असती वा, सदसद्विलक्षणा वा? आद्ये अद्वैतहानिः। द्वितीये नास्तीत्येवायातम्। तृतीये तत्कल्पकाविद्याया अपि सत्त्वं मोक्षेऽभ्युपेयं स्यात्—इत्यादिकमित्यर्थः। असत्यादिति। असत्यात् तत्त्वमस्यादिवाक्यात् सत्य-

---

परमार्था(र्थः?); आद्ये अद्वैतहानिः; द्वितीये तस्या अपि कल्पितत्वेन कल्पकान्तरापेक्षया अनवस्था। एवं अविद्याश्रयस्वरूपोऽविद्यासंबन्धः किं कल्पितस्य, उत तात्त्विकस्य वा। नाद्यः; तत्कल्पितस्य तदाश्रयत्वासंभवात्। तात्त्विकस्य ब्रह्मरूपज्ञानस्य विद्याविरोधितया तदाश्रयत्वासंभवात्। एवं निवर्तकज्ञानं ब्रह्ममात्रविषयकमतिरिक्तविषयकं वा। नाद्यः; तन्मात्रविषयकज्ञानस्य स्वरूपभूतज्ञानादनतिरिक्तविषयकत्वेनानिवर्तकत्वात्। अन्यथा स्वरूपज्ञानस्यापि निवर्तकत्वापातात्। द्वितीये तद्ज्ञानं प्रमारूपं भ्रमरूपं वा। नाद्यः; ब्रह्मव्यतिरिक्तसत्यत्वप्रसङ्गात्। न द्वितीयः; भ्रमस्याविद्यानिवर्तकत्वासंभवात्। एवं निवर्तकज्ञानस्य आश्रयोऽपि दुर्निरूपः। तथाहि–किं निवर्तकज्ञानाश्रयो जीवः, उत ब्रह्म? नाद्यः; निवर्तकज्ञानबाध्यस्य तद्ज्ञानार्थं यत्नासंभवेन तत्र तदुत्पत्त्ययोगात्। न द्वितीयः; ब्रह्मणि ज्ञातृत्वस्य पारमार्थिकत्वे द्वैतहानेः, अपारमार्थिकत्वे ब्रह्मणि तत्कल्पकाविद्यासंबन्धप्रसङ्गाच्च। एवमविद्यानिवृत्त्यर्थं ब्रह्मात्मैक्यमुपदिशन् आचार्यः किं शिष्यं प्रतीत्योपदिशति, उताप्रतीत्यैव। नान्त्यः; अप्रतीतावुपदेशायोगात्। आद्ये च कल्पितत्वेन प्रतीतावुपदेशायोगः। न हि कल्पितत्वेनावगतं प्रतिबिम्बादिकं प्रति अनुन्मत्त उपदिशति। अकल्पितत्वेन प्रतीतौ तत्त्ववित्त्वासंभवादाचार्यकानुपपत्तिः। तथा अविद्यानिवृत्तिः किं परमार्था(र्थः?), उतापरमार्था(र्थः?)? आद्ये तस्या ब्रह्मभिन्नत्वे अद्वैतहानिः। ब्रह्मस्वरूपत्वे तत्त्वज्ञानसाध्यत्वानुपपत्तिः, संसारदशायामपि सद्भावापत्तिश्च। द्वितीये तत्कल्पकाविद्यान्तरावश्यम्भावादनिर्मोक्षप्रसङ्ग इत्यादिरूपेणेति भावः॥ असत्यादिति। असत्यात्

सत्यधीर्मम सत्येन तवासत्यादसत्यधीः। सत्यादसत्यधीर्वेति नासत्यात् सत्यधीर्भवेत्॥

कर्मापि न केवलम्, ज्ञानसमुच्चितं वा मुक्तिहेतुः; वेदनमेव विधाय उपायान्तरनिषेधात्। तदङ्गतया कर्मानुप्रवेशे तु न विरोधः; तथा सति तस्योपायान्तरत्वाभावात्। परमात्मसाक्षात्कारोदयविरोधिरजस्तमोमूलभूतसांसारिकपुण्यपापरूपप्राचीनकर्मनिर्मथनकृतचित्तशुद्धिद्वारेण हि तदा तदुपयोगः। एतेन विशिष्टदेशवास-व्रतविशेष-वैष्णवसंश्रयादेर्ज्ञानयोगकर्मयोगयोश्च परम्परया

---

ब्रह्मणः सिद्धिरित्यर्थः। ननु असत्यादपि दर्पणप्रतिबिम्बादेः सत्यस्य बिम्बस्य प्रतिपत्तिर्दृष्टेत्याशङ्क्याह सत्यधीर्ममेति। असन्मते प्रतिबिम्बज्ञानादेर्बिम्बज्ञानादिहेतुत्वम्; ज्ञानञ्च सत्यमेवेति सत्यादेव सत्यसिद्धिः। तत्र च केवलज्ञानमात्रस्य बिम्बज्ञानाद्यहेतुत्वेन प्रतिबिम्बादिविशेषितस्येति वक्तव्ये प्रतिबिम्बस्य असत्यस्यापि हेतुत्वं सिध्यतीति वदतस्तव मते बिम्बप्रतिबिम्बयोर्द्वयोरपि असत्यत्वाविशेषात् असत्यादेवासत्यसिद्धिः। अथवा सत्येन साक्षिणा अविद्यादेः सिद्धिमभ्युपगच्छतस्तव मते सत्यादसत्यसिद्धिर्वा अभ्युपगता स्यात्। न तु क्वापि असत्यात् सत्यसिद्धिर्दृष्टचरीत्यर्थः॥

उपायान्तरनिषेधादिति। "तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था अयनाय विद्यते" इति श्रुतेरित्यर्थः। चित्तशुद्धिद्वारेण हीति। "कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते", "अविद्यया मृत्युं तीर्त्वा" इत्यादिप्रमाणादिति भावः। ननु भक्तेरेवोपायत्वे विशिष्टदेशवासादीनां मोक्षसाधनत्वोक्तिर्विरुध्येतेत्यत्राह एतेनेति। ज्ञानयोगेति। ज्ञानयोगो नाम कर्मयोगविजितान्तःकरणस्य निरन्तरप्रकृत्यादिविलक्षणपरशेषैकरसस्वात्मानुभवचिन्तनम्। कर्मयोगो नाम फलसङ्गादिरहितनित्यनैमित्ति-

---

तत्त्वमस्यादिवाक्यात् सत्यब्रह्मप्रतिपत्तिरित्यर्थः। नन्वसत्यादपि प्रतिबिम्बात् सत्यबिम्बप्रतिपत्तिर्दृष्टेत्याशङ्क्याह सत्यधीरिति। मम सत्येनेति। प्रतिबिम्बज्ञानस्यैव बिम्बप्रतिपत्तिहेतुतया तस्य सत्यत्वादिति भावः। न च प्रतिबिम्बविशिष्टज्ञानस्यैव बिम्बप्रतिपत्तिहेतुत्वमङ्गीकार्यम्; न तु ज्ञानमात्रस्य; अतिप्रसङ्गात्। तथाचासत्यप्रतिबिम्बस्यापि सत्यबिम्बज्ञानहेतुत्वमायातमिति वाच्यम्; प्रतिबिम्बोपलक्षितज्ञानस्यैव हेतुतास्वीकारेण प्रतिबिम्बस्य हेतुत्वासिद्धेः। तवासत्यादसत्यधीरिति। प्रतिबिम्बविशिष्टज्ञानस्य हेतुत्वमभ्युपगच्छतस्तव मते असद्भूतप्रतिबिम्बस्य हेतुत्वेऽपि बिम्बस्याप्यसत्यत्वाभ्युपगमादसत्यादेवासत्यधीरित्यर्थः। सत्यादसत्यधीर्वेति। सत्यात् साक्षिज्ञानादसत्याविद्यादेस्सिद्ध्यभ्युपगमादिति भावः। नासत्यात्सत्यधीरिति। क्वचिदप्यदर्शनादिति भावः॥

उपायान्तरनिषेधादिति। "नान्यः पन्थाः" इत्यनेनेति भावः। साक्षात्कारोदयेति। दर्शनसमानाकारोपासनोदयेत्यर्थः। चित्तशुद्धिद्वारेण हि तदा तदुपयोग इति। "नान्यः पन्थाः" इत्यनेन वेदनातिरिक्तव्यापारे मोक्षजनकसङ्कल्पाव्यवहितहेतुत्वाभावस्यैव बोधनात् कर्मादीनां वेदनतुल्यहेतुत्वाभ्युपगम एव विरोधप्रसङ्ग इति भावः। विशिष्टदेशवासेति। भगवत्क्षेत्रवासेत्यर्थः। "व्रतविशेषेति। चातुर्मास्यकपाञ्चकालिकधर्मानुष्ठानात्मकव्रतेत्यर्थः। वैष्णवसंश्रयः=भागवतशुश्रूषादिकरणम्। आदिना भागवतविषये यावच्छक्तिद्रव्यप्रदानादिकं विवक्षितम्। परम्परयेति। भक्तियोगाधिकारसंपादकत्वमात्र-

मोक्षहेतुत्वमित्यपि सिद्धम्; [1]वैष्णवसंश्रयादेरुपासनशेषतया उपादानात् [।] यजमानेन सह पश्वादीनां स्वर्गादिगमनवद्वा मोक्षसिद्धिः। "यजमानेन सहिताः स्वर्गं यान्ति नराधिप" इति हि महा-

कादियुक्तदेवतार्चनतपस्तीर्थशास्त्रादिः। उपासनशेषतयेति। उपासननिर्वृत्त्यर्थत्वेन परिगृहीतत्वादित्यर्थः। पश्वादीनामिति। अत्र यागोपकरणभूतानां पश्वादीनां तदानीमेव नष्टानां न तुल्यकालगमनं सम्भवति। नाप्येकस्वर्गशाकृत्वम्। बहुवित्तव्ययायाससाध्ययागानुष्ठातृयजमानेन यागौपयिकस्थावरतिर्यङ्मनुष्याणां तुल्यस्वर्गत्वासम्भवेन तद्वाक्यस्य प्राशस्त्यमात्रपरत्वात्। "तमेव विदित्वाऽति मृत्युमेति", 'ध्यात्वा देवं मुच्यते सर्वपाशैः", "निचाय्य तं मृत्युमुखात् प्रमुच्यते" इत्यादिषु क्त्वाप्रत्ययेन ज्ञानमोक्षयोः समानकर्तृकत्वप्रतीत्या अन्यस्य ज्ञानात् अन्यस्याविद्यानिवृत्तिरित्यस्यासम्भवात्, लघुन उपासकसमाश्रयणस्य गुरुणा उपासनेन तुल्यफलत्वासम्भवाच्च विशिष्टदेशवासादिवत् वैष्णवसंश्रयणस्यापि परम्परया मोक्षहेतुत्वपक्ष एव ज्यायानिति प्रतिभाति। ननु ज्ञानयोगान्तरितस्य कर्मयोगस्य कथं मोक्ष-

लोकनसाधनयोगसंपादकतयेत्यर्थः। वैष्णवसंश्रयादेः प्रकारान्तरेणापि क्वचिन्मोक्षोपयोगित्वमस्तीत्याह वैष्णवेति। उपासनशेषतया=साक्षादुपासननिष्पादकतया उपादानात्=अनुष्ठानात्। अयं भावः—संश्रयणप्रसन्नवैष्णवानुग्रहविशेषेणोपासननिष्पत्तिसंभवात् तदर्थमपि वैष्णवसंश्रयः क्वचिदनुष्ठीयेतेति। प्रकारान्तरेणापि[1] मोक्षोपयोगितामाह यजमानेनेति। अयं भावः—वैष्णवसंश्रयणस्य तत्कर्तृकात्मात्मीयभरन्यासविषयतासंपादकतया मोक्षोपयोगिता; न चान्यकर्तृकप्रपदने कथमन्यस्य मोक्षसंभव इति शङ्क्यम्; "पुत्रः प्रेष्यस्तथा शिष्य इत्येवं च निवेदयेत्" इत्यादिप्रमाणबलेन तदुपपत्तेः। यजमानकर्तृकयागात् पश्वादीनां स्वर्गादिसिद्धिवत्। विस्तरेण चैतदन्यत्रोपपादितमिति। न च यागोपकरणभूतानां पश्वादीनां तदानीमेव नष्टानां न तुल्यकालगमनं संभवतीति वाच्यम्; तदानीं पश्वादिदेहविगमेऽपि शरीरान्तरपरिग्रहेण तावत्कालप्रतीक्षयैव गमनोपपत्तेः। न च तथापि बहुवित्तव्ययायाससाध्ययागकर्तृयजमानेन यागौपयिकस्थावरतिर्यङ्मनुष्याणां तुल्यस्वर्गत्वासंभवेन तद्वाक्यस्य प्राशस्त्यमात्रपरत्वमेवेति वाच्यम्; "यजमानेन सहिताः स्वर्गं यान्ति" इत्यनेन स्वर्गगमनमात्रप्रतीतेः ज्योतिष्टोमादिसाध्यस्वर्गापेक्षया अग्निहोत्रादिसाध्यस्वर्गस्येव यजमानानुगाम्यस्वर्गसुखापेक्षयाऽल्पत्वाभ्युपगमोपपत्तेः विरोधाभावेन प्राशस्त्यपरत्वायोगात्। न च तथापि, "तमेव विदित्वाऽति मृत्युमेति", 'ध्यात्वा देवं मुच्यते सर्वपाशैः', 'निचाय्य तं मृत्युमुखात् प्रमुच्यते' इत्यादिषु क्त्वाप्रत्ययेन ज्ञानमोक्षयोः समानकर्तृकत्वप्रतीत्या अन्यस्य

1 ननु वैष्णवसंश्रयस्य क्षेत्रवासादितुल्यत्वमयुक्तम्; 'तेनैव ते प्रयास्यन्ति' इति एतत्कर्तव्यकार्यान्तरनिषेधादित्यत्र, क्वचित् तस्योपासनशेषतया निर्देशस्यापि सत्त्वात् तद्विषये एवमुक्तम्। अन्यत्र परकर्तृकप्रपदनशेषतयोपयोग इति विभजति वैष्णवेति। उपासनशेषत्वाभावे सम्यञ्चं निर्वाहमाह यजमानेनसहेति-इत्यपि व्याख्यायेत। उपासकभूतवैष्णवकर्मकसंश्रयोऽन्यकर्तृको मूलोक्तः। उपासककर्तृकवैष्णवान्तरसंश्रयो द्वितीयव्याख्ययोच्यते। यथा संकल्पसूर्योदयेऽन्ते। प्रथमव्याख्यापक्षे वैष्णवेत्यारभ्य सिद्धिरित्यन्तमेकं वाक्यम्; नात्र प्रपदनमभिमतम्। अत एवात्रैतत्पक्षानादरो दर्शितः।

भारतोक्तिः। ज्ञानकर्मयोगयोश्च वक्तव्यमखिलं श्रीमद्गीताभाष्ये व्यक्तमुक्तम्। तत्र हि कर्मयोगप्रसङ्गेषु, (3.32.33) "कर्मयोगस्य सुशकत्वात् अप्रमादत्वात् अन्तर्गतात्मज्ञानतया निरपेक्षत्वात्" इत्यादिप्रकारेण कर्मयोगमात्रेण आत्मावलोकनसिद्धिरुपपादिता। तथा, "निराशीर्यतचित्तात्मा" इति श्लोके, "ज्ञाननिष्ठाव्यवधानरहितकेवलकर्मयोगेन एवंरूपेण आत्मानं पश्यतीत्यर्थः" इत्युक्तम्। तथा, "ब्रह्मार्पणम्" इति श्लोकेऽपि, "मुमुक्षुणा क्रियमाणं कर्म परब्रह्मात्मकमेवेत्यनुसन्धानयुक्ततया ज्ञानाकारं साक्षादवलोकनसाधनम्। न ज्ञाननिष्ठाव्यवधानेन" इत्युक्तम्। तथा पञ्चमाध्याये, "संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ। तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते॥

---

हेतुषु ज्ञानयोगेन सह परिगणनमित्य शङ्क्याह ज्ञानकर्मयोगयोश्चेति। कर्मयोगस्य सुशकत्वादिति। "न कर्मणामनारम्भात् नैष्कर्म्यं पुरुषोऽश्नुते। न च संन्यसनादेव सिद्धिं समधिगच्छति" इत्युक्तेः। अस्यार्थः—न शास्त्रीयकर्मणामनारम्भादेव पुरुषो नैष्कर्म्यं ज्ञाननिष्ठां प्राप्नोति। सर्वेन्द्रियव्यापाररूपकर्मोपरतिपूर्विकां ज्ञाननिष्ठां न प्राप्नोतीत्यर्थः। न च आरब्धस्य शास्त्रीयस्य त्यागात्। अतोऽनभिसंहितफलपरमपुरुषाराधनवेषात् कर्मण एव सिद्धिर्वक्तव्या। अतस्तेन विना तां नाप्नोति। अनभिसंहितफलेन कर्मणा अनाराधितगोविन्दैरविनष्टानादिकालप्रवृत्तानन्तपापसञ्चयैरव्याकुलेन्द्रियतापूर्विका ज्ञाननिष्ठा दुस्सम्पादेति। "कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन्। इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते" इति श्लोकमभिप्रयन् आह अप्रमादत्वादिति। अस्यार्थः—अविनष्टपापतया अजितबाह्यान्तःकरणः आत्मज्ञानाय प्रवृत्तो विषयप्रवणतया आत्मनि विमुखीकृतमनाः विषयानेव स्मरन् य आस्ते, अन्यथासङ्कल्प्य अन्यथा आचरतीति मिथ्याचारः स उच्यते। आत्मज्ञानायोद्युक्तो विपरीतो विनष्टो भवतीत्यर्थः। अन्तर्गतात्मज्ञानतयेति। कर्तृत्वादिरहितात्मज्ञानगर्भत्वादित्यर्थः। ज्ञानयोगाधिकारिणोऽपि अकर्तृत्वानुसन्धानपूर्वककर्मयोग एव ज्यायान्; "कर्म ज्यायो ह्यकर्मणः" इति प्रतिपादनादिति भावः। "निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः। शारीरं केवलं कर्म कुर्वन् नाप्नोति किल्बिषम्॥" निराशीः निर्गतफलाभिसन्धिः यतचित्तात्मा यतचित्तमनाः त्यक्तसर्वपरिग्रहः आत्मैकप्रयोजनतया प्रकृतिप्राकृतवस्तुनि ममतारहितः यावज्जीवं केवलं शारीरमेव कर्म कुर्वन् किल्बिषं=संसारं नाप्नोति। ज्ञाननिष्ठाव्यवधानरहितकेवलकर्मयोगेन एवंरूपेण आत्मानं पश्यतीत्यर्थः। "ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम्। ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना॥" ब्रह्मार्पणमिति हविर्विशेष्यते। अर्प्यतेऽनेनेत्यर्पणं स्रुगादि। तत् ब्रह्मकार्यत्वात् ब्रह्म। ब्रह्म यस्य हविषोऽर्पणं तत् ब्रह्मार्पणम्। ब्रह्म हविः=ब्रह्मार्पणं हविः स्वयञ्च ब्रह्मभूतम्। ब्रह्माग्नौ ब्रह्मभूते अग्नौ ब्रह्मणा कर्त्रा ब्रह्म हुतमिति सर्वं कर्म ब्रह्मात्मतया ब्रह्ममयमिति यः समाधत्ते स ब्रह्मकर्मसमाधिः। तेन ब्रह्मकर्मसमाधिना ब्रह्मैव गन्तव्यम् ब्रह्मात्मकतया ब्रह्मभूतात्मस्वरूपं गन्तव्यम्, मुमुक्षुणा क्रियमाणं कर्म परब्रह्मात्मकमेवेत्यनुसन्धानयुक्ततया ज्ञानाकारं साक्षादात्मावलोकनसाधनम्; न ज्ञाननिष्ठाव्यवधानेनेत्यर्थः॥ संन्यासः

---

ज्ञानादन्यस्याविद्यानिवृत्तिर्न संभवतीति वाच्यम्; उक्तवाक्यानामुपासनविषयत्वेन प्रपदने तदप्रवृत्तेः, प्रागुक्तप्रमाणबलाच्च। न हि सिद्धान्ते परमत इवाविद्यानिवृत्तिः साक्षादेव ज्ञानसाध्या, येनान्यज्ञानेनान्यस्याविद्या-

एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम्। यत् साङ्ख्यैःप्राप्यते स्थानं तद्योगैरपि गम्यते॥" इत्येतैर्व्यक्तमेव नैरपेक्ष्यमुक्तम्। 'सन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः। योगयुक्तो मुनिर्ब्रह्म नचिरेणाधिगच्छति॥' इति ज्ञानयोगादपि कर्मयोगस्य शीघ्रकारित्वं कर्मयोगात् ऋते ज्ञानयोगस्य दुष्प्रापत्वञ्च प्रतिपादितम्। द्वयोरपि च भक्त्यङ्गत्वं बहुषु प्रदेशेषु अभिहितम्। तथा हि, "अथैतदप्यशक्तोऽसि" इत्यस्य व्याख्याने, "ततोऽक्षरयोगमात्मस्वभावानुसन्धानरूपं परभक्तिजननं पूर्वषट्कोदितमाश्रित्य तदुपायतया सर्वकर्मफलत्यागं कुरु" इत्युक्तम्। तथा "श्रेयो हि ज्ञानमभ्यासात्" इत्यत्र, "शान्तमनस्यात्मध्यानं सम्पत्स्यते ; आत्मध्यानाच्च तदापरोक्ष्यम् ; तदापरोक्ष्यात् परा भक्तिरिति भक्तियोगाभ्यासाशक्तस्य आत्मनिष्ठैव श्रेयसी । आत्मनिष्ठस्यापि अशान्तमनसो निष्ठावाप्तये अन्तर्गतात्मज्ञानानभिसंहितफलकर्मनिष्ठैव श्रेयसीत्यर्थः" इत्युक्तम् । तथा तृतीयषट्कारम्भे, "पूर्वस्मिन् षट्के परमप्राप्यस्य ब्रह्मणो भगवतो वासुदेवस्य प्राप्त्युपायभूतभक्तिरूपभगवदुपासनाङ्गभूतं प्रत्यगात्मनो

---

**संन्यासः कर्मयोगश्च निश्रेयसकरावुभौ । तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते ॥** संन्यासः ज्ञानयोगः **कर्मयोगश्चोभौ** निरपेक्षौ **निश्श्रेयसकरौ । तयोस्तु कर्मसन्यासात्** ज्ञानयोगात् **कर्मयोग एव विशिष्यते॥ 'एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम्।'** अयमर्थः—ज्ञानयोगकर्मयोगयोर्मध्ये **एकमप्यास्थित उभयोरपि** फलं **विन्दते** । द्वयोरपि आत्मावलोकनैकफलत्वात् । एतदेव विवृणोति, **यत् साङ्ख्यैः प्राप्यते स्थानं तद् योगैरपि गम्यते। साङ्ख्यैः**=ज्ञानयोगनिष्ठैः **यत्** आत्मावलोकनरूपं फलं **प्राप्यते,** तदेव कर्मयोगनिष्ठैरपि गम्यते इत्यर्थः। **"संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः । योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ॥", "सन्यासः**=ज्ञानयोगस्तु, **अयोगतः**=कर्मयोगात् ऋते **प्राप्तुम**शक्यः । **योगयुक्तः** कर्मयोगयुक्तः स्वयमेव **मुनिः** आत्ममननशीलः । सुखेन कर्मयोगं साधयित्वा **नचिरेण**=अल्पेनैव कालेन **ब्रह्माधिगच्छति**=आत्मानं प्राप्नोतीत्यर्थः । **तथाहीति । "अथैतदप्यशक्तोऽसि** कर्तुं मद्योगमाश्रितः । सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥", "अथ मद्योगमाश्रित्य एतदपि कर्तुं न शक्नोषि=मद्गुणानुसन्धानकृतमदेकप्रियत्वाकारं भक्तियोगमाश्रित्य मद्योगाङ्कुररूपमेतत्कर्मापि कर्तुं न शक्नोषि–**ततोऽक्षरयोगमात्मस्वभावानुसन्धानरूपं परभक्तिजननं पूर्वषट्कोदितमाश्रित्य तदुपायतया सर्वकर्मफलत्यागं कुरु ।** मत्प्रियत्वेन मदेकप्राप्यतया बुद्धिर्हि क्षीणाशेषपापस्यैव जायते। **यतात्मवान्** यतमनस्कः । ततोऽनभिसंहितफलेन मदाराधनरूपेण अनुष्ठितेन कर्मणा सिद्धेन आत्मज्ञानेन निवृत्ताविद्यादिसर्वतिरोधाने मच्छेषतैकस्वरूपे प्रत्यगात्मनि साक्षात्कृते सति मयि परा भक्तिः स्वयमेवोत्पद्यते' इति भाष्येण कर्मयोगस्य भक्त्यङ्गत्वमुक्तमित्यर्थः । **श्रेयो हि ज्ञानमभ्यासात्** ज्ञानात् ध्यानं विशिष्यते । ध्यानात् कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम्'' । अत्यर्थप्रीतिविरहितात् कर्कशरूपात् स्मृत्यभ्यासात् अक्षरयाथात्म्यानुसन्धानपूर्वकं तदापरोक्ष्यज्ञानमेव आत्महितत्वे विशिष्यते । आत्मापरोक्ष्यज्ञानादपि अनिष्पन्नरूपात् तदुपायभूत-

---

निवृत्तिरत्यन्तासंभाविता स्यात् । किन्तु भगवत्प्रसादद्वारैवेति न काचिदनुपपत्तिः । ननु कर्मयोगस्य ज्ञानयोग द्वारैव मोक्षप्रयोजकतया तयोस्तुल्यत्वप्रतिपादनमसङ्गतमित्याशङ्क्याह **कर्मयोगेति ।**

याथात्म्यदर्शनं ज्ञानयोगकर्मयोगलक्षणनिष्ठाद्वयसाध्यमुक्तम्" इत्युक्तम्। "उभयपरिकर्मितस्वान्तस्य ऐकान्तिकात्यन्तिकभक्तियोगलभ्यः" इति। अत्रेदं तत्त्वम्—भक्तियोगः परमात्मप्राप्त्युपायभूतः। तदशक्तस्य तद्भक्तियोगसिद्ध्यर्थं आत्मावलोकनमपेक्षितम्। तस्य च ज्ञानयोगकर्मयोगौ द्वौ पृथगुपायौ। तत्र ज्ञानयोगः स्वात्मावलोकनेऽन्तरङ्गः। तथापि प्रथमं स दुष्करः। तदनधिकारिणस्तुल्यफलः कर्मयोग एव कार्यः। तदधिकारिणोऽपि व्यपदेश्यस्य लोकसंग्रहार्थं कर्मयोग एव कार्यः। अशक्तस्य ज्ञानयोगशक्तिं कर्मयोग एवोत्पादयति। तदा कर्मयोगं परित्यज्य ज्ञानयोगमनुतिष्ठतोऽपि न दोषः। इमौ च योगौ कामनाभेदेन कस्यचित् कैवल्यमात्रसाधकौ; यथा भगवदुपासनमेव कस्यचित् ऐश्वर्यादिकं साधयति। प्रवाहानादिपुण्यपापरूपकर्मतारतम्येन शक्त्यशक्तिकामनादिता-

मानसध्यानमेव आत्महितत्वे विशिष्यते। ध्यानादपि अनिष्पन्नरूपात् तदुपायभूतं फलत्यागेनानुष्ठितं कर्मैव विशिष्यते। अनभिसंहितफलतया अनुष्ठानात् कर्मणोऽनन्तरमेव निरस्तपापतया मनसः शान्तिर्भविष्यति शान्ते मनस्यात्मध्यानं सम्पत्स्यते, ध्यानाच्च तदापरोक्ष्यज्ञानम्, तदापरोक्ष्यज्ञानात् परा भक्तिरिति भक्तियोगाभ्यासाशक्तस्य आत्मनिष्ठैव श्रेयसी। आत्मनिष्ठस्याप्यशान्तमनसो निष्ठावाप्तये अन्तर्गतज्ञानानभिसंहितफलकर्मनिष्ठैव श्रेयसी इत्यर्थः। भक्तियोगलभ्य इतीति। एतद्वाक्यानन्तरं भगवद्यामुनमुनिभिरप्युक्तमिति शेषः। ननु कर्मयोगज्ञानयोगयोः स्वात्मावलोकने तुल्योपायत्वेऽपि मोक्षसाधनीभूतभगवद्भक्तौ न तुल्योपायत्वं कथितं स्यात्। किञ्च भक्त्युपायत्वेऽभ्युपगम्यमाने कैवल्यसाधकत्वं न स्यात्। किञ्च उक्तरीत्या सर्वस्यापि कर्मयोगानुष्ठान एव प्रवृत्त्यापत्त्या ज्ञानयोगानुष्ठानमेव न स्यादित्यादिशङ्कां पराचष्टे अत्रेदं तत्त्वमिति। स्वात्मावलोकनेऽन्तरङ्ग इति। मानसात्मावलोकने मानसव्यापाररूपत्वादन्तरङ्गत्वादिति भावः। तुल्यफल इति। ननु तयोस्तुल्यफलत्वे 'तद्धेतोरेवास्तु तद्धेतुत्वम्, किं तेन?' इति न्यायेन गुरूपाये ज्ञानयोगे कोऽपि न प्रवर्तेतेति चेत्, परम्परासाधनकर्मयोगापेक्षया साक्षात्साधनस्य कर्मयोगस्य चिरकालानुवृत्तेरपेक्षितत्वेन उपाययोर्लाघवगौरवाभावात्, सत्युपायतारतम्ये षोडशिग्रहणाग्रहणादिष्विव स्वात्मावलोकनवैशद्यरूपफलतारतम्यस्य सम्भवाच्च

ऐकान्तिकात्यन्तिकभक्तियोगलभ्य इतीति। भगवद्यामुनमुनिभिरप्युक्तमिति शेषः। ननु कर्मयोगज्ञानयोगयोरात्मावलोकनं प्रति तुल्यवद्धेतुत्वाभिधानेऽपि न मोक्षं प्रति भक्तिद्वारा तुल्यवत्प्रयोजकत्वसिद्धिः, एवं कर्मयोगज्ञानयोगयोर्भक्तिहेतुत्वाभ्युपगमे तयोः कैवल्यहेतुत्वानुपपत्तिः एकस्य फलद्वयहेतुत्वायोगात्, एवं सुशककर्मयोगेनैवात्मावलोकनसिद्धौ दुश्शकज्ञानयोगे प्रवृत्त्यसंभवेन तद्विधानानर्थक्यं स्यादित्यादिशङ्कां निरस्यति अत्रेदं तत्त्वमिति। अन्तरङ्ग इति। मानसव्यापाररूपत्वादिति भावः। प्रथममिति। कर्मयोगानुष्ठानात्पूर्वमित्यर्थः। दुष्कर इति। अतो ज्ञानयोगस्यान्तरङ्गत्वेऽपि न प्रथममनुष्ठानमिति भावः। तदनधिकारिणः=ज्ञानयोगानधिकारिणः। इदञ्च हेतुगर्भविशेषणम्; ज्ञानयोगेऽधिकारविरहात् कर्मयोग एव कार्य इत्यर्थः। तदधिकारिणोऽपीति। ज्ञानयोगाधिकारिणोऽपीत्यर्थः। सुकृतविशेषवशेन कस्यचित् कर्मयोगानुष्ठानमन्तरेणैव ज्ञानयोगानुष्ठानशक्तिः संभवतीति भावः। व्यपदेश्यस्येति। शिष्टतया व्यपदेश्यस्येत्यर्थः। अव्यपदेश्यस्य तु ज्ञानयोगानुष्ठानमेव युक्तम्; अन्तरङ्गतया शीघ्रफलसिद्धिहेतुत्वादिति भावः।

रतत्क्यमिति न कश्चित् दोष इति । तत् सिद्धं भक्तिरेव मोक्षोपाय इति ।

महनीयविषये प्रीतिर्भक्तिः । सैवावस्थाभेदात् परभक्त्यादिभेदं भजते । स्तुतिनमस्कारादिषु तत्सम्बन्धात् भक्तिशब्द उपचारतः । सा च भक्तिः सदक्षर.मधु.दहर.भूम.वैश्वानरादिविद्याभेदात् बहुधा गुणोपसंहारपादे निपुणमनुसन्धेया । एवं चातुरात्म्योपासनरूपा अपि भक्तयः सद्विद्यादिभेदवत् अङ्गीकार्याः । प्रमाणसिद्धत्व.नैरपेक्ष्याद्यविशेषात् । एताः सर्वास्तत्तच्छास्त्रप्रतिपादिततत्तद्वर्णाश्रमधर्मनिष्ठत्रैवर्णिकमनुष्यदेवासुरादिसाध्याः । [1]स्त्रीविधुराणामपि जपोपवासाद्यङ्गाधिकृतानां ब्रह्मविद्याधिकारोऽस्त्येव । अनाश्रमित्वात् आश्रमित्वमेव ज्याय इति विशेषः । नैष्ठिकादि-

---

न दोषः । तदा कर्मयोगं परित्यज्येति । ज्ञानयोगाशक्त्या कर्मयोगमनुतिष्ठतोऽन्तःकरणशुद्धिवशात् मध्ये ज्ञानयोगशक्तिप्रादुर्भावे सति अभ्यपदिष्टस्य कर्मयोगं परित्यज्य ज्ञानयोगमनुतिष्ठतोऽपि न दोष इत्यर्थः । तत्सिद्धमिति । तस्मात् सिद्धमित्यर्थः ।

परभक्त्यादीति । आदिशब्देन परज्ञानपरमभक्ती गृह्येते । परभक्तिर्नाम प्रीतिरूपापन्नो दर्शनसमानाकारो मोक्षहेतुज्ञानविशेषः। परज्ञानं नाम "योगेश्वर ! ततो मे त्वं दर्शयाऽऽत्मानमव्ययम्" इत्येवंरूपोत्कटदिदृक्षापर्यवसायिध्यानविशेषप्रसादितभगवद्विषयकपरिपूर्णसाक्षात्कारः । तादृशनिरतिशयभोग्यभगवत्स्वरूपसाक्षात्काराधीनभगवत्प्राप्तित्वराहेतुभूतप्रीतिविशेषः परमभक्तिः। नमस्कारादिष्विति। "श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् । अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥" इत्यादिषु भक्तिशब्दप्रयोगस्तद्धेतु[क]त्वनिबन्धन इत्यर्थः । चातुरात्म्येति । वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धात्मकचातुरात्म्योपासनरूपाः, "कर्मेण(?)स्त्वेन वै यत्र चातुरात्म्यमुपास्यते" इत्यादिभगवच्छास्त्रसिद्धा अपीत्यर्थः । "सहकारित्वेन च" इति सूत्रार्थमभिप्रयन् आह वर्णाश्रमधर्मनिष्ठेति । न च संवर्तादीनां महायोगिनां सर्वाश्रमबहिःष्ठनग्नचर्यास्मरणात्, "अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच" इति श्रुतेश्च आश्रमधर्माणामनङ्गत्वमिति वाच्यम्; तेषामुन्मत्तचर्यायाः, "जनेनावमतो योगी योगसिद्धिं च विन्दति" इति जनावमानजनितयोगसिद्धये स्वप्रकर्षच्छादनार्थत्वात्, "अत्याश्रमिभ्यः" इत्यस्य अतिशयिताश्रमिभ्य इत्यर्थत्वेन आश्रमराहित्यपरत्वाभावादिति भावः । अपशूद्राधिकरणमभिप्रयन् आह त्रैवर्णिकेति । "तदुपर्यपि बादरायणः सम्भवात्" इति सूत्रार्थमभिप्रयन् आह देवासुरादीति। "अन्तरा चापि तु तद्दृष्टेः" इत्यधिकरणार्थमभिप्रयन् आह स्त्रीविधुराणामिति । मैत्रेयीरैक्वादिषु ब्रह्मविद्यादर्शनादिति भावः ।

---

कर्मयोगं परित्यज्येति । कर्मयोगेनैवात्मलोकनसाधने अधिकविळम्बप्रसङ्गेन शीघ्रफलसिद्धिकामनया तत्परित्याग इति भावः । एतेन ज्ञानयोगविधिवैयर्थ्यं परिहृतं भवति ॥

परभक्त्यादीति। आदिना परमभक्तिपरिग्रहः। स्तुतिनमस्कारादिष्विति। "श्रवणं कीर्तनं विष्णोः

---

1 स्त्रीणामधिकारो ब्रह्मसूत्रे न विशिष्य विचारितः। उपनिषद्भाष्यादौ तद्विचारः। विधुरपदं रहितमात्रार्थेऽपि प्रयुज्यते। स्त्रीरहितानामित्यर्थः। संवर्तादीनां भाष्यार्थदर्पणोक्तरीत्या मृतदारत्वाभावात् तत्क्रोडीकारायैषमुक्तिः स्यात्। विधुरेति वचनं आश्रमधर्मविकलस्वैग्राहीति शांकरेऽपीष्टम्।

परिभ्रष्टानां तु अनधिकार एव ; तथा स्मृतेः, शिष्टबहिष्कारादेश्च । कृतप्रायश्चित्तानामपि तेषां ब्रह्मविद्याधिकारो नास्त्येवेति, "बहिस्तूभयथापि स्मृतेराचाराच्च" इति सूत्रेऽभिहितम् ।

ननु गोपिकादेरपि मोक्षः श्रूयते, तत् कथं त्रैवर्णिकत्वनियमः? इत्थम्। न हि तेषां तत्तच्छरीरेष्वेव उपायानुष्ठानम्, किंतु प्राचीनेष्वेव ब्राह्मणादिजन्मसु । प्रागेव प्राप्तोपायानामपि तेषां प्रारब्धकर्मविशेषादिना निकृष्टशरीरप्रवेशः। अन्तिमशरीरं तु यत्किमपीति न दोषः ; प्रारब्धावधिकत्वात् बन्धस्य। एवं विदुरादयश्च भवान्तरीयसंस्कारोद्बोधजनितज्ञानेनेति नापशूद्राधिकरणविरोधः। स्मरन्ति च—"धर्मव्याधादयोऽप्यन्ये पूर्वाभ्यासाज्जुगुप्सिते । वर्णावरत्वे संप्राप्ताः संसिद्धिं श्रमणी यथा ॥" इत्यादि ।

---

"अन्तरा चापि तु तद्दृष्टेः" ... "अतस्त्वितरज्ज्यायो लिङ्गाच्च" इति सूत्रार्थमभिप्रयन् आह अनाश्रमित्वादिति । "अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विजः" इति स्मृतेरनाश्रमित्वमापद्विषयमिति भावः । "तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात् तद्रूपाभावेभ्यः" इत्यधिकरणार्थमाह—नैष्ठिकादीति। तथा स्मृतेरिति । "आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते नरः । प्रायश्चित्तं न पश्यामि येन शुध्येत् स आत्महा ॥" इति स्मृतेरिति भावः । बहिस्तूभयथापि स्मृतेराचाराच्च । तुशब्दो मतान्तरव्यावृत्त्यर्थः । नैष्ठिकाश्रमभ्रष्टानां उभयथापि उपपातकित्वे महापातकित्वे वा सर्वथा ब्रह्मविद्यायामनधिकार एव । 'आरूढो नैष्ठिकं धर्मम्' इति स्मृतेः शिष्टाचाराच्च । "यो ब्रह्मचार्यवकिरेत् स नैर्ऋतं गर्दभमालभेत" इति विहितप्रायश्चित्तानुष्ठानेन तत्पापस्य नरकानार्जकत्वेऽपि वैदिककर्मानुष्ठानयोग्यतापादिका शुद्धिर्नास्तीत्यर्थः । प्रारब्धावधिकत्वादिति । ब्रह्मविदः शूद्रशरीर एव प्रारब्धनाशे, 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इति तदुत्तरकाल एव ब्रह्मसम्पत्त्यवश्यम्भावेन शरीरान्तराप्रसक्तेरिति भावः । ननु शूद्रस्य ब्रह्मविद्यानधिकारे—ब्रह्मविद्याशुश्रूषया समागतं जानश्रुतिम्, "आजहारेमाः शूद्र" इत्यामन्त्र्य रैक: संवर्गविद्यामुपदिदेशेति हि छान्दोग्योपनिषदि श्रूयते—तत् कथं युज्यतामित्यत्राह शुश्रूषोरिति । "शुगस्य तदनादरश्रवणात्" इति सूत्रे एवेत्यर्थः । अस्यार्थः—शुश्रूषोर्जानश्रुतेः पौत्रायणस्य ब्रह्मज्ञानवैकल्येन हंसोक्तानादरवाक्यश्रवणात् तदैव ब्रह्मविदो रैकस्य सकाशं प्रति आद्रवणात् शुगस्य सञ्जातेति हि सूच्यते। अतः स शूद्रेत्यामन्त्र्यते ; न चतुर्थवर्णत्वेन। शोचतीति हि शूद्रः। "शुचेर्दश्च" इति रक्प्रत्यये धातोश्च दीर्घे चकारस्य दकारे शूद्र इति । अतः शोचितृत्वमेवास्य शूद्रशब्दप्रयोगेण सूच्यते ; न जातियोगः । एवं हि उपाख्यायते, जानश्रुतिः किल पौत्रायणः श्रद्धया बहुधनान्नप्रदः सर्वासु दिक्षु ग्रामनगरमार्गा-

---

स्मरणं पादसेवनम्। अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्" इत्यादिषु भक्तिशब्दप्रयोगो भक्तिकार्यत्वनिबन्धन इत्यर्थः । चातुरात्म्येति । भगवच्छास्त्रोक्ता वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धरूपचातुरात्म्योपासनरूपा अपि भक्तय इत्यर्थः । स्त्रीविधुराणामपीति । स्त्रीणां मृतदाराणामपीत्यर्थः । मैत्रेयीरैक्वादिषु ब्रह्मविद्यादर्शनादिति भावः । आश्रमित्वमेव ज्याय इति । अनाश्रमित्वमापद्विषयमिति भावः । ब्रह्मविद्याधिकारो नास्त्येवेतीत्यादि । प्रायश्चित्तं तु नरकनिवृत्तिमात्रफलकमिति भावः ॥

शुश्रुषोर्जानश्रुतेः शूद्रेत्यामन्त्रणं शोचनादिति सूत्र एव व्यक्तम् ।

अध्यवसायादिविशेषविशिष्टा न्यासविद्या । तस्या अपि बुद्धिविशेषत्वात्, "नान्यः पन्थाः"

---

रथ्यातीर्थादिषु पान्थादीनामनाथानाञ्च शीतवातवर्षातपनिवारकान्नोदकशयनाच्छादनादिभोग्यजातबहुपूर्णान् आवसथान् निर्मापयाञ्चक्रे। एवं कर्मपरसिकं विद्यापदानजानानं कर्मभिः क्षीणदुरितं तं विद्यापथे प्रवर्तयितुकामाः केचन महर्षयः सारासारे विद्याकर्मणी नीरक्षीरे इव स्वयं विवेक्तुं कुशला इति व्यञ्जयितुं हंसरूपमास्थाय निशायां हर्म्ये शयानस्य तस्योपरि पङ्क्तिमाबध्य आजग्मुः। तेषामग्रेसरं हंसं संबोध्य पृष्ठतः पतन् एकतमो हंसः साद्भुतमुवाच, "भोभो! भल्लाक्ष भल्लाक्ष! जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततं तन्मा प्रसाङ्क्षीस्तत् त्वा मा प्रधाक्षीत्" इति। एवं भल्लाक्षेत्यनेन विपरीतलक्षणया मन्दलोचनेति सम्भ्रमेण द्विवारं सम्बोध्य, 'जानश्रुतेरन्नदानादिसमावर्जितज्योतिः द्युलोकपर्यन्तं व्याप्तं वर्तते, तत्र त्वं लग्नो मा भूः, तेन तव दग्धता मा भूत्' इत्युक्ते, तमग्रगामी हंसः प्रत्युवाच-, "कम्वर एनमेतत्सन्तं सयुग्वानमिव रैक्वमात्थ" इति। कं सन्तमेन जानश्रुतिं सयुग्वानं रैक्वं ब्रह्मज्ञमिव गुणश्रेष्ठमेवमात्थेति। एतदाकर्ण्य तेन पृष्ठगामिना हंसेन कोऽसौ रैक्वः इति पुनःपृष्टः स एव प्रत्युवाच, [1]"लोके यत्किञ्चित् साध्वनुष्ठितं कर्म यच्च सर्वचेतनगतं ज्ञानं तदुभयं यदीयज्ञानकर्मान्तर्भूतं स रैक्वः" इति। तदेतत् हंसवाक्यम्, 'तथाभूतस्य रैक्वस्य हि कर्मज्ञानजनितं ज्योतिरसह्यम्, न तु अन्यस्य' इति स्वनिन्दागर्भमाकर्ण्य जानश्रुतिः कथमपि निशामतिवाह्य स्वं स्तुवन्तं क्षत्तारमाहूय सचिह्नं रैक्वमुक्त्वा तदन्वेषणाय प्रेष्य, क्वचिद्विविक्ते देशे शकटस्याधस्तात् पामानं कण्डूयमानं रैक्वमुपलभ्य प्रत्यागते तस्मिन्, स्वयं रैक्वमुपसद्य गवां षट् शतानि हारमश्वतरीयुक्तरथञ्चोपहृत्य, 'एतदुपास्स्वां देवतामनुशाधि' इति रैक्वं प्रार्थयामास स रैक्वः स्वयोगमहिमाविदितसकलवृत्तान्तो जानश्रुतेर्विद्याविधुरतानिमित्तानादरगर्भहंसवाक्यश्रवणजनितां शुचं तदनन्तरमेव विद्यार्थं स्वोपसर्पणञ्च ज्ञात्वा, 'चिरकालसेवां विना द्रव्यप्रदानेन सन्तोषयितुकामस्यास्य यावच्छक्ति प्रदानं विना विद्या प्रतिष्ठिता न भवेत्' इति मत्वा तदनुजिघृक्षया आह, 'अह हारेत्वा शूद्र! तवैव सह गोभिरस्तु" इति। अहेति निपातः। हारस्य हारेत्वा इत्वा रथः गोभिः सह तवैवास्तु; किमनेनाल्पधनेन मम सन्तोषः! कलत्रहीनस्य ममैतद्धनरक्षणे वा का शक्तिः? तव वा मत्प्रयोजनापर्याप्ताल्पधनदानेन कथं ब्रह्मविद्या प्रतिष्ठिता भवेत् इति भावः। पुनर्जानश्रुतौ सहस्रं गाः पूर्वनीतं हारादिकं रैक्वस्य परिणयनार्थं स्वकन्यकां तदर्थं ग्रामञ्चोपहृत्य प्रार्थयमाने विद्याप्रदानार्थमुपहारस्य पर्याप्तत्वमनुजानन्, पुनरपि तमेव शूद्रेत्यामन्त्र्य पूर्वोक्तानुकम्पानाशकत्वेन आवर्तयन् आह, "आजहारेमाः शूद्रानेनैव मुखेनालापयिष्यथाः" इति। इमा दक्षिणा आजहर्थ अनेनैव मुखेन=विद्याग्रहणोपायेन मां वाचयसीत्यर्थ इति।

अध्यवसायेति। रक्षकत्वाध्यवसायेत्यर्थः। न्यासविद्या प्रपत्तिः।

---

अध्यवसायादीति। महाविश्वासादीत्यर्थः। आदिना आनुकूल्यसङ्कल्पादिपरिग्रहः। [2]बुद्धिविशेष-

---

[1] लोके इत्यादिकं श्रुतिनिष्कृष्टार्थदर्शि भाष्यम्; न तु श्रुतिवाक्यम्।

[2] बुद्धिविशेषत्वादिति। तमेवं विद्वानमृत इह भवतीति वाक्ये एवंशब्दः न पुरुषसूक्तोक्ताऽऽ-

इत्यादिभिर्न विरोधः ; भक्तिविशेषत्वाच्च, "भक्त्या त्वनन्यया" इत्यादिभिः । यथाऽऽहुः,
"साधनं भगवत्प्राप्तौ स एवेति स्थिरा मतिः । साध्यभक्तिस्तथा सैव प्रपत्तिरिति गीयते ॥
उपायो भक्तिरेवेति तत्प्राप्तौ या तु सा मतिः । उपायभक्तिरेतस्याः पूर्वोक्तैव गरीयसी ॥

---

**अनन्ययेत्यादिभिरिति।** न **विरोध** इति पूर्वेणान्वयः। **स एवेति**। भगवानेवेत्यर्थः। **भगवत्प्राप्तौ** भगवानेवोपाय इति **या मतिः, सैव साध्यभक्तिः प्रपत्तिरिति** च **गीयते** इत्यर्थः। **उपाय इति** । भगवत्प्राप्तौ भगवद्भक्तिरेवोपाय **इति या मतिः, सा उपायभक्तिरित्यर्थः** । ननु भगवद्भक्तिरुपाय इति मतेरेवोपायत्वे एतादृशमतिमतां दर्शनसमानाकारभगवद्भक्तिशून्यानामपि भगवत्प्राप्तिप्रसङ्ग इति चेन्न ; भक्ति

---

त्वादिति । "नान्यः पन्था" इत्यनेन वेदनातिरिक्तस्यैव मोक्षोपायत्वनिषेधादिति भावः । **भक्त्या त्वनन्ययेत्यादिभिरिति** । न विरोध इत्यनुषङ्गेणान्वयः । **स एवेति** । भगवानेवेत्यर्थः । भगवत्प्राप्तौ भगवद्भक्तिरेवोपाय इति या मतिः, सा उपायभक्तिरित्यर्थः। यद्यपि भगवद्भक्तिर्मोक्षोपाय इति ज्ञानमात्रात् मोक्षासंभवान्न तस्योपायभक्तित्वसंभवः ; प्रीतिरूपतापन्नदर्शनसमानाकारध्रुवानुस्मृतेरेव मोक्षोपाय भक्तिरूपतया भाष्यादौ व्यवस्थापितत्वात्—तथापि भक्तिरेव भगवत्प्राप्त्युपाय इति बुद्ध्याऽनुष्ठीयमानोक्त-

---

कारमात्रपरः । किंतु ईदृशमिति प्रकारवाची सन्, प्रकृतसूक्तोक्तप्रकारविद्यान्तरविहितब्रह्म-प्रकारसर्वाकारपरः। तथाच प्रपत्तिप्रकारोऽपि गृह्यते। धनवान् सुखी भवतीत्यत्रेव, एवं विद्वानमृतो भवतीत्यत्रोद्देश्यतावच्छेदकधर्मप्रयोज्यत्वस्य विधेये लाभात् वेदनविशेषाणाममृतत्वस्य च साध्य-साधनभावावगमात्, 'नान्यः पन्थाः' इत्यनेन पूर्वार्धोक्तवेदनान्यस्योपायत्वनिषेधो घटते । साध्यभक्तिरिति । रहस्यत्रयसारग्रन्थव्याख्यासु साध्या भक्तिर्यस्याः सेति बहुव्रीहिरिष्टः । तदाऽन्यपदार्थस्य प्रपत्तेर्भक्तित्वाभावात्, भक्त्येति पदेन, भक्तिविशेषत्वादिति च कथं प्रपत्ति-ग्रहणम् । अतः एतद्ग्रन्थबलात् कर्मधारय एव युक्तः । उपायभक्तिरित्येतदैकरूप्याच्च । कथं भरन्यासरूपायाः प्रपत्तेर्भक्तित्वमिति चेत्—कथं ध्यानरूपपरभक्तेः महनीयविषये प्रीतिर्भक्ति-रित्युक्तभक्तित्वम् । 'प्रीतिपूर्वमनुध्यानं भक्तिरित्यभिधीयते' इति प्रीतिपूर्वकशास्त्रविहितध्यानविशेषे भक्तिशब्दपरिभाषेति चेत्—साध्यभक्तिरित्यादिवचनबलात् प्रपत्तावपि तत्परिभाषाऽस्तु । लक्ष्यार्थे वाच्यार्थप्रीतिसंबन्धः ईदृश इति ज्ञापनाय साध्या प्रीतिर्यस्या इति बहुव्रीहिर्दर्शितः । अतो भक्तिपदेनैव प्रपत्तिग्रहणम् । ध्यानरूपभक्तिव्यावृत्तये साध्यपदम् । प्रीतेः प्रपत्तिसाध्यत्वञ्च प्रपन्नपारिजाते फलोदयपद्धतौ, 'प्रपत्तिफलानि च त्रीणि ; भगवतः प्रीतिविशेषः, अपेक्षितपुण्य-पापाश्लेषविनाशौ, परमपदप्राप्तिश्च' इत्युक्तम् । इयञ्च प्रीतिः परमपुरुषनिष्ठा । त्वरया मोक्षलिप्सया प्रपत्त्यनुष्ठानात् कर्तुरपि प्रीतिविशेषः सिद्धः । भक्तिपदेन तद्ग्रहणे च तत्र प्रपत्तिसाध्यत्वं नेष्टम् । तदा च साध्यशब्दस्य फलेत्यर्थः। फलरूपभक्तियुक्तेत्यर्थः। श्रवणमननध्यानादीनां प्रीतिरूपापन्नत्वमिव प्रपत्तेरपि प्रीतिरूपापन्नत्वमस्ति ; विषयस्यात्यर्थप्रियत्वात् । प्रीतिरूपापन्नस्मृतिसंततेरेवोपायत्वेन विधानात्, नायमात्मेति श्रुत्या केवलस्योपायत्वनिषेधाच्च प्रीतेरप्युपायकोटिप्रवेशस्तत्र । प्रपत्ते-स्तूक्ताधिकनिरपेक्षत्वात् सहजसिद्धा तथोपायान्तर्गता प्रीतिः केवलं फलरूपा, न तूपाय इति फल-पदेन ज्ञाप्यते। अतः केवलभक्तिपदं ध्यान इव प्रपत्तावपि पारिभाषिकम् । साध्यभक्तिपदमपि बहुव्रीह्य-भावे तथा परिभाष्यताम्। कथमेकेन भक्त्यात्वनन्ययेत्यत्र भक्तिपदेनोभयविधार्थग्रहणमिति चेत्-ज्ञातुं द्रष्टुञ्च तत्त्वेन प्रवेष्टुञ्चेति ज्ञानदर्शनप्राप्तिहेतूनां भक्तीनां भिन्नरूपाणामेकेन भक्तिपदेन कथं

उपायभक्तिः प्रारब्धव्यतिरिक्ताघनाशिनी । साध्यभक्तिस्तु सा हन्त्री प्रारब्धस्यापि [1]भूयसी ॥" इति। तस्या अपि हि शब्दान्तरादिभिः सद्विद्यादिभेदवत् भेदे सिद्धे सर्ववेदान्तप्रत्ययन्यायात् सर्वप्रपत्तिप्रकरणपठितगुणोपसंहारेण पौष्कल्ये च सिद्धे, "विकल्पोऽविशिष्टफलत्वात्" इति न्यायेन विद्यान्तरसमुच्चयप्रसङ्गाभावः । त्याज्यसमुच्चये विरोधाच्च । [2]भक्त्यङ्गभूता सा चान्यैव; अभिसन्धि-

रेव उपाय इति मतिपूर्वकमनुष्ठीयमाना भक्तिरुपाय इत्यत्र तात्पर्यात् । भूयसीति । प्रायेण हन्त्रीत्यर्थः । सद्विद्यादिभेदवदिति । यथा सद्विद्याया दहरशाण्डिल्यादितः शब्दान्तरादिभिर्भेदः ; तथा न्यासविद्याया अपि, "नाना शब्दादिभेदात्" इति न्यायेन विद्यान्तरतो भेदः सिध्यतीत्यर्थः । सर्ववेदान्तप्रत्ययन्यायादिति । यथा एकस्या वैश्वानरविद्याया नानाशाखास्वाम्नातायाः फलसंयोग-रूप-चोदना-संज्ञाद्यविशेषेण सर्वत्र एकस्या एव प्रत्यभिज्ञायमानतया ऐक्यावगमात् नानाशाखागताङ्गोपसंहारेणैव तद्विद्यानुष्ठानम् ; तथा एकस्या एव न्यासविद्याया नानाप्रदेशाम्नाताया अपि फलसंयोग-रूप-चोदना-संज्ञाऽविशेषात् ऐक्ये तत्तत्प्रकरणपठितानुकूल्यसङ्कल्पादिगुणोपसंहारेणैवानुष्ठानं कर्तव्यमित्यर्थः । विकल्पोऽविशिष्टफलत्वादिति । अविशिष्टफलत्वात् तुल्यफलत्वात् एककार्यकारणयोर्विकल्पस्य अवश्यम्भावादिति भावः । त्याज्यसमुच्चय इति । "सर्वधर्मान् परित्यज्य" इति प्रपित्सोः साधना-

रूपा भक्तिरेवोपायभक्तिरित्यत्र तात्पर्यान्न दोषः । अथवा ; इतित्यस्य इतिबुद्ध्येत्यर्थः । तथा च भक्तिधर्मिकोपायताज्ञानाधीना योक्तरूपा मतिः, सा उपायभक्तिरित्युक्तं भवति । भूयसीहन्त्री= बहुशोहन्त्रीत्यर्थः । अधिकारिण आर्तिमान्द्ये कचित् प्रारब्धावसाने मोक्षापेक्षया प्रपत्त्यानुष्ठाने प्रारब्धनिवर्तकत्वाभावेऽपि प्रायशस्तन्निवर्तकत्वमस्त्येवेति भावः । 'भूयसीहन्त्री = अधिकशक्तिमती सती हन्त्रीत्यर्थः । प्रपत्तेः प्रारब्धनिवर्तनमीषत्करमिति भावः' इत्यपि व्याचक्षते । भेदे सिद्ध इति । सद्विद्यादिरूपोपासनापेक्षया भेदे सिद्ध इत्यर्थः । अपर्यायधातुरूपशब्दान्तरस्य न्यासविद्यायामेव मुख्यत्वात् ; सद्विद्यादिषु मुख्यशब्दान्तरविरहादिति भावः । गुणोपसंहारेण आनुकूल्यसङ्कल्पाद्यङ्गोपसंहारेण । पौष्कल्ये सकलाङ्गवैशिष्ट्ये । अयं भावः—"ओमित्यात्मानं युञ्जीत" इत्यनेन प्रपत्तिमात्रविधानेऽपि सर्ववेदान्तप्रत्ययन्यायेनान्यत्रविहितप्रपत्त्यैकये सिद्धे तदङ्गतया तत्र विहितानुकूल्यसङ्कल्पाद्यङ्गोपसंहारेण यावदङ्गवैशिष्ट्यसिद्धिरिति । त्याज्यसमुच्चये विरोधाच्चेति । "सर्वधर्मान् परित्यज्य" इत्यत्र ब्रह्मास्त्रन्यायसूचनायोपायान्तरविधिरित्यङ्गीकारादुपायान्तरसमुच्चये ब्रह्मास्त्रन्यायेन विरोधप्रसङ्ग इति भावः । ननु तदङ्गप्रपत्त्यनन्तरमपि भक्त्यनुष्ठानासंभवप्रसङ्ग इत्यत आह भक्त्यङ्गेति ।

ग्रहणम् । अन्यथाऽर्थस्य दुर्वचत्वात् विवक्षाभेदादेवमिति चेत्—तुल्यम्, नानार्थकपदप्रयोग इव वक्तुरिच्छाया एव गमकत्वात् । एवं प्रीतेः फलत्वम् । परभक्तिपरज्ञानपरमभक्तियुक्तं मां कुरुष्वेति प्रार्थनायां तु प्रपत्तिसाध्यत्वमपि भक्तेरस्ति। अंगप्रपत्तेर्भक्तियोगसाधकत्वात् प्रपत्तिपदेन भक्तिरिव भक्त्यंगप्रपत्तिजातीयतया भक्तिशब्देन स्वतन्त्रप्रपत्तिरपि लक्ष्यत इति च ब्रूयुः ।

1 भूयसीति । गरीयसीत्यर्थः। तथा पूर्वोक्तेः। तत्साधकहेतुगर्भविशेषणं प्रारब्धस्यापि हन्त्रीति ।

2 ननु वैकल्पिकत्वे भक्तेः परं कथं प्रपत्त्या समुच्चय इत्यत्राह भक्त्यङ्गेति । अभिसंधिभेदः अंगस्वतन्त्रप्रपत्तिविषयभरार्पणाकारभेदात् । अतः स्वरूपभेदोऽस्त्येव ।

भेदात् । यथा ऐश्वर्याभिलाषिका भक्तिरपवर्गोपायभक्तिभ्यो भिद्यते, यथा च कर्मस्वरूपाविशेषेऽपि नित्यकाम्यज्योतिष्टोमभेदः ॥ भक्तिविशेषभूतायास्तस्याः पृथगुपायत्वपरिगणनं कथमिति चेत्— सकृत्कर्तव्यनिरपेक्षसापेक्षत्वादिभेदमाश्रित्येति मन्वीथाः॥ फलवैषम्याभावे लघूपाये सति गुरूपायविधानमनर्थकमिति चेन्न ; तादृशाध्यवसायादेर्दुष्करत्वेन गौरवाविशेषात् । तथोक्तं प्रपत्तिप्रकरणे, "उपायः सुकरः सोऽयं (स्वयं) दुष्करश्च मतो मम" इति। यथा च कश्चित् महता प्रयासेन महीपतेरर्थं मासादयति, स्खलने च यथोचितं दण्ड्यते। अपरस्तु अन्तरङ्गसेवाक्षमः क्षोदीयसैवाऽऽयासेन तावन्तं तदधिकञ्चार्थं मासादयति, क्षुद्रेषु स्खलितेषु सह्यते, महत्स्वपि अल्पदण्डो भवति॥ तत्रापि अन्तरङ्गसेवा मन्दभाग्यानां दुर्लभेति चेत्— अत्रापि तथैव । यथा उपायभक्तित्वेन तत्तदवस्थाभेदेन वर्णाश्रमभेदेन च अङ्गभूतानां कर्मणां गुरुलघुभावत्वेऽपि फलमविशिष्टम्, तथेहापि । कथं तर्हि, "अत एव चाग्नीन्धनाद्यनपेक्षा" "अत स्त्वितरज्ज्यायो लिङ्गाच्च" इति सूत्रे, "भूयोधर्मकाल्पधर्मकयोस्तुल्यकार्यत्वात्" इति भाष्यम्?

न्तरस्य परित्यज्यतया त्याजनेन समुच्चयासम्भवादिति भावः । ननु भक्तिप्रपत्त्योर्विरोधेऽङ्गाङ्गिभावो न स्यादित्याशङ्क्याह भक्त्यङ्गभूतेति । अभिसन्धीति । अङ्गत्वस्वातन्त्र्याभिसन्धिभेदादित्यर्थः । भक्तिभ्यो भिद्यते इति । प्रयोगभेद इत्यर्थः । शब्दान्तरादिभेदकाभावेन भक्तिभेदाभावादिति द्रष्टव्यम् । ज्योतिष्टोमभेद इति । यथा नित्यज्योतिष्टोमप्रयोगात् काम्यज्योतिष्टोमप्रयोगो भिद्यते इत्यर्थः; पूर्वतन्त्रे भेदलक्षणे "यावज्जीविकोऽभ्यासः" इत्यधिकरणे नित्यकाम्यप्रयोगभेदस्य कर्मैक्येऽपि समर्थितत्वात्, "सर्वथापि त एवोभयलिङ्गात्" इति सूत्रभाष्ये नित्यकाम्यकर्मैक्यस्य स्पष्टत्वाच्चेति द्रष्टव्यम् । यद्वा गुरुणा विवरणे नियोज्यभेदेन उन्नीयमानानुबन्धभेदाभ्युपगमात् तदभिप्रायेण नित्यकाम्यभेदोक्तिरिति द्रष्टव्यम् । निरपेक्षसापेक्षत्वेति । भक्तिः प्रपत्तिसापेक्षा । प्रपत्तिस्तु न तत्सापेक्षेत्यर्थः । अतस्त्वितरज्ज्यायो लिङ्गाच्च, "तुशब्दोऽवधारणे । अतः अनाश्रमित्वात्

अन्यथैवेति । इहान्यत्वं न कर्मस्वरूपभेदः शब्दान्तराद्यभावात्, किन्तु प्रयोगभेद एव । तथा चाङ्गप्रपत्तेः भक्तिनिष्पत्तिरेव साक्षात्फलमिति तदनन्तरं भक्त्यनुष्ठानस्यावश्यकत्वात् अङ्गप्रपत्तिप्रयोगे नोक्तविरोध इति भावः । प्रयोगभेदहेतुमाह अभिसन्धिभेदादिति । फलकामनाभेदादित्यर्थः, फलभेदादिति यावत् । अङ्गप्रपत्तौ हि यथावस्थितभक्तिनिष्पत्तिपूर्वकमोक्षः फलम्, स्वतन्त्रप्रपत्तौ तु केवलमोक्षः । फलभेदात् प्रयोगभेदे दृष्टान्तद्वयमाह यथेत्यादिना । भिद्यत इति । अत्रापि भेदः प्रयोगभेद एव । न कर्मस्वरूपभेदः ; उक्तयुक्तेः । इदञ्च कर्मस्वरूपाविशेषेऽपीत्यनेन स्पष्टीकृतम् । अविशेष ऐक्यम् । ज्योतिष्टोमभेदः=ज्योतिष्टोमप्रयोगभेदः । ननु कर्मस्वरूपभेदाभावे प्रागुक्तविरोधतदभावयोः कथमेकत्र समावेश इति चेत्-उच्यते; कपिसंयोगतदभावयोरेकस्मिन् वृक्षेऽवच्छेदकभेदेन सत्त्ववत् एकस्मिन् कर्मण्युक्तविरोधतदभावयोस्तत्तत्प्रयोगरूपावच्छेदकभेदेन सत्त्वमुपपद्यते [किन्तु भेदःच?] । अत ऐश्वर्यार्थिभक्तावैश्वर्यकामना न विरोधिनी, प्रत्युतानुकूलैव ; मोक्षार्थभक्तौ तु सा विरोधिनीत्येतत् प्रयोगभेदे उपपद्यते। एवं नित्यज्योतिष्टोमे यथाशक्त्यङ्गोपसंहारसंभवात् सकलाङ्गोपसंहारनिर्बन्धाभावः प्रतिनिध्युपादानञ्च । काम्ये तु तस्मिन् सकलाङ्गोपसंहारनिर्बन्धः प्रतिनिध्युपादानासंभवश्च इत्येतत् प्रयोगभेदेनैवोपपद्यत इति । तथेहापीति। गुरुलघुभावेन तारतम्येऽपि शक्ताशक्तभेदेन व्यवस्थिततया गुरूपायविधिवैयर्थ्यमिति भावः।

इत्थम्; एकाधिकारिगोचरमुख्यगौणविषयं हि तत्। [1]अन्यथा अधिकधर्मकाश्रमान्तरसत्रान्तरादिष्वपि फलवैषम्यप्रसङ्गेन तदनुप्रवेशस्य ज्यायस्त्वप्रसङ्गात्। उपायभक्तौ नित्यनैमित्तिककर्मणां फलाभिसन्धिरहितकाम्यकर्मणाश्चाङ्गत्वेनानुष्ठानम्; न पुनः स्वातन्त्र्येण। निषिद्धवर्जनं द्वयोरपि भक्त्योः समम्। साध्यभक्तौ तु काम्यानां स्वरूपतोऽपि त्यागः; न तु नित्यानाम्॥ अङ्गिनः प्रहाणात् तेषामपि तदङ्गानां परित्याग एवेति चेन्न; स्वतन्त्राधिकारानपायात्। तदेतदखिलम्, "उपायापाय-

इति तु आश्रमित्वमेव ज्यायः। अनाश्रमित्वमापद्विषयम्। शक्तस्य तु आश्रमित्वमेवोपादेयमित्यर्थः। भूयोधर्मकाल्पधर्मकयोरेकफलकार्यत्वात्। लिङ्गाच्च स्मृतेरेवेत्यर्थः। स्मर्यते च शक्तं प्रति आश्रमस्योपादेयत्वम्, "अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विजः" इति" इति भाष्योक्तिरिति भावः। तदनुप्रवेशस्येति। अनेकधर्मप्रवेशस्याल्पधर्माङ्गकविद्यापेक्षया बहुलफलप्रदत्वेन ज्यायस्त्वप्रसङ्गादित्यर्थः। फलाभिसन्धिरहितकाम्यकर्मणाश्चेति। ननु, "यज्ञेन दानेन" इति श्रुत्या नित्यानामेव कर्मणां विनियोगः, न काम्यानाम्; नित्यफलतया सम्प्रतिपन्नस्य पापक्षयस्य विद्यापेक्षितत्वात्, काम्यफलानां स्वर्गादीनां तदनपेक्षितत्वात्। काम्यानामपि यज्ञादीनां तद्धेतुकत्वे क्लृप्तस्वर्गाद्यतिरिक्तोपकारान्तरकल्पनागौरवप्रसङ्गात्। ततश्च यथा प्रकृतौ क्लृप्तोपकाराणामङ्गानामतिदेशे सति न प्रकृत्युपकारातिरिक्तोपकारकल्पनम्, एवं ज्ञाने विनियुक्तानां यज्ञानां क्लृप्तनित्यफलपापक्षयातिरेकेण न नित्यकाम्यसाधारणविद्योपयोग्युपकारकल्पनमिति चेन्न—यज्ञादिशब्दाविशेषात् काम्यानामपि[हि?] विनियोगो युज्यते। प्रकृतौ क्लृप्तोपकाराणां पदार्थानां क्लृप्तप्रकृत्युपकारातिदेशमुखेनैव विकृतिष्वतिदेशेन सम्बन्धः, न तु पदार्थानामतिदेशानन्तरमुपकारकल्पनेति न प्राकृतोपकारातिरिक्तोपकारकल्पनाप्रसक्तिः। इह तु प्रत्यक्षश्रुत्या प्रथममेव विनियुक्तानां यज्ञादीनामङ्गोपदेश इव पश्चात्कल्पनीय उपकारः प्रथमावगतविनियोगनिर्वाहकतया, [अ?]क्लृप्तोऽपि सामान्यशब्दोपात्तसकलनित्यकाम्यसाधारणः कथं न कल्प्यः? अध्वरमीमांसकैरपि हि, "उपकारकमुखेन पदार्थान्वय एव क्लृप्तोपकारनियमः। पदार्थानामन्वयानन्तरमुपकारकल्पने तु अक्लृप्तोऽपि विनियुक्तपदार्थानुगुण एवोपकारः कल्पनीयः' इति संप्रतिपत्त्यैव बाधलक्षणारम्भसिद्ध्यर्थमुपकारमुखो विकृतिषु प्राकृतान्वयो दशमाद्ये समर्थितः। किञ्च क्लृप्तोपकारलाभात् नित्यानामेवायं विनियोग इत्यभ्युपगमे नित्येभ्यो दुरितक्षयस्य तस्माच्च ज्ञानोत्पत्तेरन्यतस्सिद्धेर्व्यर्थोऽयं विनियोगः। अन्यतस्तत्सिद्धौ(तदसिद्धौ?) ज्ञानापेक्षितोपकारजनकत्वं नित्येषु न क्लृप्तमित्यविशेषात् नित्यकाम्यसाधारणो विनियोगो दुर्वारः। अङ्गिनः प्रहाणादिति। भक्तिरूपाङ्गिनः प्रहाणादित्यर्थः। स्वतन्त्राधिकारानपायादिति। "विहितत्वाच्चाश्रमकर्मापि" इति न्यायेन विद्यार्थतया अनुष्ठानाभावेऽपि आश्रमधर्मतयाऽनुष्ठानावश्यम्भावादिति भावः। उपायोपेयेति। काम्यनिषिद्धरहित इत्यर्थः।

काम्यकर्मणाश्चेति। यज्ञादिश्रुत्या काम्यानामप्यविशेषेण विनियोगादिति भावः। अङ्गिनः प्रहाणादिति। उपासनरूपाङ्गिनस्त्यागादित्यर्थः। स्वतन्त्राधिकारानपायादिति। "विहितत्वाच्चाश्रमकर्मापि" इति न्यायेन

1 न हि चतुरवत्तपञ्चावत्तयोर्व्यवस्थितयोः फले तारतम्यम्; तथा मन्त्राकारध्येयाकारादितारतम्येऽपि।

सन्न्यासी मध्यमां वृत्तिमास्थितः'' इत्यादिभिर्विशदमवगन्तव्यम् ।

यत्तु—केचित् परित्यक्तसकलवर्णाश्रमधर्माः संवर्त-भरत-विदुरादयो ब्रह्मविदः सञ्चरन्तीति यथेष्टकरणकौतुकिनां प्रलपितम्; तदसत् । तत्तत्प्रकरणेष्वेव जडवदाचरणज्ञानाभिसन्धेरादिमात्र-प्रतिपादनपरत्वनिर्णयात्, "बाल्येन तिष्ठासेत्", "जडवल्लोकमाचरेत्", "सतां मार्गमदूषयन्" इत्यादीनां पर्यालोचनात् । बाल्यञ्च शक्तिविद्याभिजनाद्युत्कर्षाणां सतामनाविष्करणमेव; न तु कामचार-वादभक्षत्वादि । तथा च सूत्राणि, "अनाविष्कुर्वन् अन्वयात्, सर्वान्नानुमतिश्च प्राणात्यये तद्दर्श-नात्, शब्दश्चातोऽकामकारे" इत्यादीनि । अन्यथा, "स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभि-सम्पद्यते", "नाविरतो दुश्चरितात्", "वर्णाश्रमाचारवता" इत्यादिश्रुतिस्मृतिशतप्रकोपप्रसङ्गः ।

---

**तत्तत्प्रकरणेष्वेवेति** । तत्तद्ब्रह्मविद्वृत्तान्तप्रतिपादकप्रकरणेष्वेव विद्यमानानां, "संमानना परां हानिं योगर्द्धेः कुरुते यतः । जनेनावमतो योगी योगसिद्धिं च विन्दति ॥ तस्माच्चरेत वै योगी सतां वर्त्मान्यदूषयन् । जना यथाऽवमन्येरन् गच्छेयुर्नैव सङ्गतिम् ॥ हिरण्यगर्भवचनं विचिन्त्येत्थं महामतिः । आत्मानं दर्शयामास जडोन्मत्ताकृतिं जने", '**बाल्येन तिष्ठासेत्**', 'जडवल्लोकमाचरेत्'....**इत्यादीनां** वाक्यानां **पर्यालोचनात् जडवदाचरणे ज्ञानं** सिध्यतीति **अभिसन्धिना संवर्तादयो** ब्रह्मविदस्तथा-तथाऽकुर्वन्नित्यस्यार्थस्य स्पष्टं प्रतीतेरित्यर्थः । **सतामनाविष्करणमिति** । विद्यमानानामप्यना-विष्करणमित्यर्थः । **अनाविष्कुर्वन्नन्वयात्** स्वमाहात्म्यमनाविष्कुर्वन्नेव विद्वान् वर्तेत । कुतः ? **अन्वयात्**="**बाल्येन तिष्ठासेत्**" इत्यस्मिन् विधौ स्वमाहात्म्यानाविष्करणस्यैव हि बाल्यशब्दार्थतया अन्वयसम्भवः; **न तु कामचारवादभक्षत्वस्य** । "नाविरतो दुश्चरितात्" इति शास्त्रान्तरविरुद्ध-त्वात् तस्येति । **सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्** । विदुषः **सर्वान्नानुमतिश्च प्राणात्यय एव**= प्राणात्ययापत्तावेव । कुतः ? **तद्दर्शनात्** । दृश्यते हि ब्रह्मविदग्रेसरस्यापि उषस्तेः प्राणात्ययापत्तावेव अभक्ष्यभक्षणप्रवृत्तिः । उषस्तिः किल आपद्गत इभ्येन सामिखादितान् कुल्माषाँश्चखाद । अनुपानं तु तदीयमुच्छिष्टदोषात् प्रत्याचचक्षे । कारणञ्चाहोवाच, "न वा अजीविष्यमिमान् अखादन्; कामो म उदपानम्" इति । **शब्दश्चातोऽकामकारे** । यत एव विदुषामपि सर्वान्नीनत्व-

---

श्रमधर्मतयाऽनुष्ठानावश्यभावादिति भावः। **उपायापायसन्न्यासीति** । काम्यनिषिद्धानुष्ठानरहित इत्यर्थः ।

**तत्तत्प्रकरणेष्विति** । तत्तद्ब्रह्मविद्वृत्तान्तप्रतिपादकप्रकरणेष्वित्यर्थः । **जडवदाचरणज्ञानाभि-सन्धीति** । जडवदाचरणाधीनज्ञानसिद्ध्यभिसन्धीत्यर्थः । **आदिना** जनसङ्गत्यभावाभिसन्धिर्गृह्यते । **मात्रशब्देन** वर्णाश्रमधर्मत्यागार्थताभिसन्धिर्व्यावर्त्यते । **प्रतिपादनपरत्वनिर्णयादिति** । "सम्मानना परां हानिं योगर्द्धेः कुरुते यतः । जनेनावमतो योगी योगसिद्धिं च विन्दति । तस्माच्चरेत वै योगी सतां मार्गमदूषयन् । जना यथाऽवमन्येरन् गच्छेयुर्नैव सङ्गतिम् । हिरण्यगर्भवचनं विचिन्त्येत्थं महामतिः । आत्मानं दर्शयामास जडोन्मत्ताकृतिं जने ।", "जडवल्लोकमाचरेत्" इत्यादिभिस्तथैव सिद्धेरिति भावः । **सतामनाविष्करणमिति** । विद्यमानानामनाविष्करणमित्यर्थः । **न तु कामचारवादभक्षत्वादीति** ।

कथं तर्हि [1]उत्तरपूर्वाघयोरश्लेषविनाशौ वाच्यौ? इत्थम्—समधिगतविद्यानां भुक्तफलकृतप्रायश्चित्त-प्रारब्धकर्मव्यतिरिक्तं प्राचीनं कर्म उपायप्रभावादेव अग्निप्रोतेषीकतूलवत् प्रदूयते। उत्तरञ्च अबुद्धिपूर्वकं पुष्करपलाश आप इव न श्लिष्यति। पुण्येऽपि विद्यानुकूलव्यतिरिक्तांशस्य सुखहेतुत्वेऽपि मोक्षविरोधित्वाविशेषात् अनिष्टफलतया पापशब्दाभिलप्यस्याश्लेषविनाशावेव। "नाभुक्तं क्षीयते कर्म" इत्यादिकं तु विद्याभिन्न[2](विद्याविहीन)विषयम्। प्रारब्धं तु भोगेनैव क्षपणीयम्। सूत्रञ्च, "भोगेन त्वितरे क्षपयित्वाऽथ सम्पद्यते" इति। प्रारब्धकर्मणाञ्च न तद्देहपातावधिकत्वनियमः; कर्मणां विचित्रफलत्वात्। एतद्देहावसान एवेति न्यस्तभरस्य तु तस्य तद्देहपातावधिकत्वमेव; "यावन्न विमोक्ष्येऽथ संपत्स्ये" इत्यस्यापि प्रारब्धतत्तत्कर्मफलपर्यवसानविषयत्वात्। "अस्माच्छरीरात्

---

मापद्विषयम्, अत एव कामकारे प्रतिषेधकः शब्दो वर्तते, "तस्माद्ब्राह्मणः सुरां न पिबेत्" इति। तथा आदिशब्देन, "अबाधाच्च" इति सूत्रं विवक्षितम्।

कथं तर्हीति। उक्तरीत्या ब्रह्मविदोऽपि पापासक्तावित्यर्थः। भुक्तफलकृतप्रायश्चित्तेति। भुक्तफलकृतप्रायश्चित्तयोः स्वयमेव नष्टत्वात् प्रारब्धस्य नाशयितुमशक्यत्वादिति भावः। "तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेत, एवं हास्य सर्वे पाप्मानः प्रदूयन्ते" इति श्रुतिमभिप्रयन् आह अग्निप्रोतेति। "तद्यथा पुष्करपलाश आपो न श्लिष्यन्ते, एवमेवंविदि पापं कर्म न श्लिष्यते" इति श्रुतिमभिप्रयन् आह पुष्करपलाश इति। "इतरस्याप्येवमसंश्लेषः" इति सूत्रार्थमभिप्रयन् आह—पुण्येऽपीति। भोगेन त्वितरे क्षपयित्वाऽथ सम्पद्यते। अयमर्थः—इतरे आरब्धकार्ये पुण्यपापे स्वारब्धफलभोगेन क्षपयित्वा तत्फलभोगसमनन्तरं ब्रह्म सम्पद्यते। ते च पुण्यपापे एकशरीरोपभोग्ये चेत्, तच्छरीरावसाने सम्पद्यते। अनेकशरीरभोग्यफले चेत्, तदवसाने सम्पद्यते। विचित्रफलत्वादिति। एकस्यैव कर्मणोऽनेकशरीरारम्भकत्वसम्भवादित्यर्थः। यावन्न विमोक्ष्य इत्यस्यापीति। विद्यायोनिशरीरारम्भककर्मभिर्यावन्न विमोक्ष्यते, तावानेव ब्रह्मसम्पत्तौ अन्तराय इत्यर्थः। ननु, "अस्माच्छरीरात्समुत्थाय परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इति विद्यायोनिशरीरसमुत्थानानन्तरमेव परज्योतिरुपसंपत्तिः श्रूयते इत्याशङ्क्याह—अस्माच्छरीरात्समुत्थायेति। अत एवेति। अत एव विद्यायोनिशरीरानन्तरमेव न ब्रह्मप्राप्तिः, अत

---

यथेष्टाचरणयथेष्टवचनयथेष्टभक्षणादीत्यर्थ। तर्हीत। ब्रह्मविदोऽपि पापासक्तावित्यर्थः। भुक्तफलेति। भुक्तफलकृतप्रायश्चित्तयोर्भोगप्रायश्चित्ताभ्यां नष्टत्वात् प्रारब्धस्योपासनेन नाशासंभवाच्चेति भावः। अग्निप्रोतेति। "तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेत एवं हास्य सर्वे पाप्मानः प्रदूयन्ते" इति श्रुतिरिहाभिप्रेता। पुष्करपलाशेति। "तद्यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते इति श्रुतिरत्राभिप्रेता। विचित्रफलत्वादिति। एकस्यैव कर्मणोऽनेकशरीरारम्भकत्वसंभवादिति भावः। यावन्नविमोक्ष्य इत्यस्यापीति। विद्यायोनिशरीरारम्भककर्मभिर्यावन्नविमोक्ष्यते तावानेव

---

1 अश्लेषश्रुतेरन्यथाकरणे विनाशश्रुतेरपि तदिति भावः।

2 विद्याभिन्नेति। विद्याभिन्नोपायनाश्यत्वाभावपरमित्यर्थः। वादावलिकारकृते विधिसुधाकरे तु विद्याविहीनविषयमिति प्रकृतग्रन्थपाठः। तदधिगमसूत्रभाष्यार्थदर्पणो द्रष्टव्यः।

समुत्थाय" इत्यादेरपि अन्तिमशरीरविषयत्वात्। अत एव, "यावदधिकारमवस्थितिराधिकारिकाणाम्" इति सूत्रम्। एतेन अन्तिमशरीरनिवृत्तौ देशकालनियमाभावोऽपि सिद्धः। सूत्राणि, "निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च", 'अतश्चायनेऽपि दक्षिणे" इत्यादीनि। एवं बुद्धिपूर्वमुत्तरमपि भोगेन प्रायश्चित्तेन वा क्षपणीयम्। न चैष प्रायशो विद्याननुकूलं पुण्यं पापञ्च बुद्धिपूर्वकं करोति; फलाभिसन्धियुक्तपुण्यस्य च विद्याविरोधित्वात्; फलान्तरेषु च विरक्तत्वात्; पापे च ईश्वराज्ञातिलङ्घनभयात्। यदि च कदाचित् बुद्धिपूर्वकं करोति, तदा भीतः स्वयमेव तत्तदुचितं प्रायश्चित्तं करोति। अथ प्रमादात् तदपि न करोति; तदापि प्रारब्धकर्मपर्यवसानात् प्रागेव तत्तत्कर्म यथाकथञ्चित् फलति; न तु स्वयमेव [1]जन्मादिप्रयोजकं भवति। अथ च जन्मादिहेतुरेव कर्मविशेषः शापादिर्वा उपनिपतितः; तदा तेन तत् प्रसज्यत [2]एव। तथापि निष्पन्नस्य उपायस्य न शैथिल्यम्। स तु प्रारब्धकर्मण इव एतस्यापि पर्यवसाने संसारं निवर्तयति। न च पुनरुत्तरोत्तरकर्मकरणात् संसाराविच्छेद इति वाच्यम्; शास्त्रविरोधात्, निष्पन्नस्योपासनस्य

---

एवेत्यर्थः। **यावदधिकारमवस्थितिराधिकारिकाणाम्।** **आधिकारिकाणां**—वसिष्ठादीनां न विद्यायोनिशरीरपातानन्तरमेव ब्रह्मप्राप्तिः प्रारब्धाधिकारस्यापरिसमाप्तत्वात्। **अतो यावदधिकारमवतिष्ठन्त** एवेति। **निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च**—निशि मृतस्य ब्रह्मप्राप्तिर्न सम्भवति, "दिवा च शुक्लपक्षश्च उत्तरायणमेव च। मुमूर्षतां प्रशस्तानि विपरीतं तु गर्हितम्॥" इति निशामरणस्य निन्दितत्वात् **इति चेन्न; सम्बन्धस्य यावद्देहभावित्वात्** विदुषः कर्मसंबन्धस्य चरमदेहावधिकत्वात्, स्वनिष्पाद्ययावद्देहसम्बन्धापगमे स्वस्यापि नाशात्, "तस्य तावदेव चिरम्" इति श्रुतेर्दर्शनाच्चेत्यर्थः। अमुमेव न्यायं दक्षिणायनमृतेऽप्यतिदिशति—**अतश्चायनेऽपि दक्षिण इति**। स्पष्टार्थमेतत्। **फलतीति**। "खञ्जा भवन्ति काणा भवन्ति अविधेयपुत्रभार्या भवन्ति" इत्यादिकमुत्पादयतीत्यर्थः। **तत्प्रसज्यत एवेति**। जन्मादि **प्रसज्यत एवे**त्यर्थः। **इदञ्च**, 'एतद्देहावसाने मां त्वत्पादं प्रापय प्रभो' इत्येवं यः प्रपन्नः, तद्व्यतिरिक्तविषयं द्रष्टव्यम्। **सत्विति**। उपाय इत्यर्थः। **एतस्यापीति**। शापादेरपीत्यर्थः। **न च पुनरुत्तरोत्तरेति**। शरीरिणोऽपराधावश्यम्भावादित्यर्थः। **शास्त्रविरोधादिति**। ब्रह्मविद्याया मोक्षहेतुत्वप्रतिपादकशास्त्रविरोधादित्यर्थः।

ब्रह्मसंपत्तौ विळम्ब इत्यर्थः। **अत एवेति**। विद्यायोनिशरीरावसान एव मोक्ष इति नियमाभावादेवेत्यर्थः। **एतेनेति**। प्रारब्धावसाने मोक्षस्य नियतत्वेनेत्यर्थः। **फलतीति**। 'खञ्जा भवन्ति" इत्याद्यैहिकोक्तक्लेशं जनयतीत्यर्थः। **तत् प्रसज्यत एवेति**। जन्मादि प्रसज्यत एवेत्यर्थः। **इदञ्च एतद्देहावसान एवेति** न्यस्तभरव्यतिरिक्तविषयम्; तद्विषये जन्मान्तरारम्भकप्रारब्धांशस्यापि निश्शेषक्षीणत्वात् जन्मान्तरारम्भकशापादिहेतुभूतप्रारब्धांशस्यापि परम्परया जन्मान्तरारम्भकत्वेन तदंशस्यापि नाशावश्यंभावेन तथाविध शापादेरेव तत्रासंभवादिति बोद्धव्यम्। **स इति**। उपाय इत्यर्थः। **एतस्यापि**=शापादेरपि। **शास्त्रविरोधादिति**। उपासनस्य मोक्षहेतुत्वप्रतिपादकशास्त्रविरोधादित्यर्थः।

1 जन्मेति। भोक्तव्यप्राचीनप्रारब्धकर्मनिष्पाद्यजन्माधिकजन्मेत्यर्थः। 2 प्रसज्यत एवेति। इदमुपासकविषयम्; उपरि उपासनप्रस्तावात्। अनिर्दिष्टकालप्रपन्नविषयमप्यस्तु।

निष्फलत्वप्रसङ्गात्। सूत्राभिप्रेतञ्चैतत्, "एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः" इति। इदञ्च सूत्रं विद्याङ्गकर्मविषयमपि विद्यायां तुल्यन्यायतया अनुसन्धेयम्।

नन्वेवं समस्तकर्मप्रलये साधुपापकृत्ययोर्हानं सुहृद्द्विषदुपायनञ्च कथं घटते? तथा हि—न तावत् पूर्वकृतयोः; तत्र केषाञ्चित् कर्मणां दत्तफलत्वात्। केषाञ्चित् प्रायश्चित्तविद्याभ्यां विनष्टत्वात्; फलवत् तयोरपि कर्मस्वरूपनिवर्तकत्वात्। केषाञ्चित् प्रारब्धफलानां भोगेनैव क्षपितत्वात्। एवमुत्तरकृतानामबुद्धिपूर्वकाणामाश्लिष्टत्वात्। विद्यानुकूलानाञ्च विद्ययैव फलभूतया निवृत्तत्वात्, तत्र च साधुकृत्यांशाभावात्। न च सुहृदादिकृतस्यैव कर्मणोऽनेन हानादिकमुपपद्यते; स्वकीयत्वाभावात्। दायसमोपायननिर्देशानुपपत्तेः। उपायनवाचोयुक्तिस्तत्सौहार्दशात्रवाभ्यां जनितत्वा-

---

सूत्राभिप्रेतञ्चैतदिति। प्रतिबन्धकसत्त्वासत्त्वयोर्विलम्बाविलम्बसत्त्वमित्यर्थः. एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः। यथा अभ्युदयसाधनभूतविद्यानां तस्मिन्नेव जन्मनि उत्पत्तिनियमो नास्ति, एवं मुक्तिफलकानामपि विद्यानां विद्याङ्गकर्मसु अनुष्ठितेष्वपि न तस्मिन्नेव जन्मनि उत्पत्तिनियमः। प्रतिबन्धकाभावस्यापेक्षितत्वादित्येवमिदं सूत्रं विद्याविषयम्, न मुक्तिविषयमित्याशङ्कयाह इदञ्च सूत्रमिति।

सुहृद्द्विषदिति। "तत् सुकृतदुष्कृते धूनुते तस्य प्रिया ज्ञातयः सुकृतमुपयन्ति अप्रिया दुष्कृतम्", तथा, "तस्य पुत्रा दायमुपयन्ति, सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्" इति प्रतिपन्नं हानोपायनं कथं घटत इत्यर्थः। पूर्वकृतयोरिति विद्यानिष्पत्त्यपेक्षया पूर्वकृतयोरित्यर्थः। ननु प्रायश्चित्तविद्ययोः फलजननानुकूलशक्तिप्रतिबन्धकत्वमेव, न तु कर्मस्वरूपनिवर्तकत्वमित्याशङ्क्याह फलवदिति केषाञ्चिदिति। अवशिष्टानामित्यर्थः। साधुकृत्यांशाभावादिति। हानोपायनयोग्यसाधुकृत्यांशाभावादित्यर्थः। स्वकीयत्वाभावादिति। अन्यदीयस्य अन्येन हानासम्भवादित्यर्थ। दायसमोपायनेति। "तस्य पुत्रा

---

एतदिति। सति प्रतिबन्धके मोक्षस्यापि विलम्बितत्वमित्यर्थः।

सुहृद्द्विषदिति। "तत्सुकृतदुष्कृते धूनुते तस्य प्रिया ज्ञातयस्सुकृतमुपयन्ति अप्रिया दुष्कृतम्", "तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्" इति हानोपायनयोः प्रतिपन्नत्वादिति भावः। पूर्वकृतयोरिति। विद्याप्राप्तेः पूर्वकृतयोरित्यर्थः। फलवदिति। फलस्येवेत्यर्थः। तयोरपीति। प्रायश्चित्तविद्ययोरपीत्यर्थः। कर्मस्वरूपनिवर्तकत्वात्-कर्मस्वरूपनाशकत्वात्, "प्रायश्चित्तेन नश्यन्ति पापानि सुमहान्त्यपि", "तद्यथैषीकातूलमग्नौ प्रोतं प्रदूयेत एवं हास्य सर्वे पाप्मानः प्रदूयन्ते" इत्यादिभिस्तथावगमादिति भावः। केषाञ्चिदिति। अवशिष्टानामिति भावः। स्वकीयत्वाभावादिति। अन्यदीयस्यान्येन हानासंभवादिति भावः। विदुषः प्रयोजनान्तरार्थं तत्सुहृदनुष्ठितसुकृतफलासंबन्ध एवेह हानमित्युच्यते, एवं द्विषत्कृताभिचारादिफलसंबन्धश्च; अतो न दोष इत्यत आह दायसमोपायनेति। दायसङ्क्रमकाले दर्शितसुकृतदुष्कृतसङ्क्रमणव्यपदेशासंभवादित्यर्थः। "तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्याम्, द्विषन्तः पापकृत्याम्" इति श्रवणादिति भाव। वाचोयुक्तिः-वाग्योगः—व्यवहार इत्यर्थः। सौहार्दशात्रवाभ्यां जनितत्वादिति। सौहार्दशात्रवरूपतत्संबन्धाधीनोत्पत्तिकतयौपचारिकः तत आगतत्व-

दौपचारिकीति चेन्न; "हानौ तूपायनशब्दशेषत्वात्" इत्यादिसूत्रभाष्यादिविरोधात्; अचिन्तनीयत्व-प्रसङ्गाच्च प्रयोगे सौहार्दादिकृतस्य दायनमकालत्वाभिधानविरोधाच्चेति। अत्रोच्यते—दत्तफलम्, अदत्तफलञ्चेति पूर्वाघं द्विविधम्। अदत्तफलमपि प्रायश्चित्तविनष्टम्, अविनष्टञ्चेति। अविनष्टमपि प्रारब्धफलम्, अप्रारब्धफलञ्चेति। तत्रान्तिमं विद्यया विनाश्यम्। एवमुत्तरमपि विद्यानुकूलम्, अननुकूलञ्चेति द्विविधम्। अननुकूलमपि बुद्धिपूर्वम्, अबुद्धिपूर्वञ्चेति। तत्र अबुद्धिपूर्वस्य विद्याबलादश्लेषः। एवं ययोः कर्मराश्योः प्रबलकर्मान्तरप्रतिरोधाददत्तफलयोरश्लेषविनाशौ, तयोर्हानं सुहृदाद्युपायनञ्चोच्यते। तथा च, "सुहृदः साधुकृत्याम्" इत्यस्य विषयविभागपरे, "अतोऽन्यापि ह्येकेषामुभयोः" इति सूत्रे भाष्यम्, 'विद्यया अश्लेषविनाशश्रुतिश्च तद्विषया" इति। अश्लेषविनाशौ च कर्मशक्तिप्रतिबन्धनन्नाशावेव। सा च शक्तिर्भगवत्कोपप्रीतिविशेषा-

द्यमुपयन्ति सुहृदः साधुकृत्याम्" इति पुत्राणां पितृदायप्राप्तिसमय एव तत्समतया साधुकृत्योपायनादि-श्रवणादित्यर्थः। तत्सौहार्दशात्रवाभ्यामिति। ब्रह्मविदत्सौहार्दशात्रवाभ्यामुत्पादितं सुहृद्द्विषद्गतं सुकृतं दुष्कृतञ्च ब्रह्मविदः प्रहीणं सुहृद्द्विषदुपेतमित्युच्यते इत्यर्थः। हानौ तूपायनशब्दशेषत्वादिति। "यत्र सुकृतदुष्कृतयोर्हानमुपायनं वा अन्यतरच्छ्रूयते, तत्र अन्यदपि समुच्चेतव्यम्। विदुषा त्यक्तयोः पुण्यपापयोः प्रवेशस्थानवाचित्वादुपायनशब्दस्य" इति भाष्यविरुद्धत्वादित्यर्थः। अचिन्तनीयत्वप्रसङ्गाच्चेति। हानोपायनयोरौपचारिकत्वे तयोर्भाविफलत्वाभावेन ब्रह्मोपासनदशायामर्चिरादिना सहाचिन्तनीयत्व प्रसङ्गादित्यर्थः। एवं ययोः कर्मराश्योरिति। ययोः पूर्वोत्तरयोः पुण्यपापात्मककर्मराश्योर्विद्यामहिम्ना अश्लेषविनाशौ, एतद्विषयं हानमुपायनञ्चेति निर्गलितार्थः। प्रबलकर्मान्तरप्रतिरोधाददत्तफलयो-रित्येतत् स्वरूपकीर्तनम्। उत्तराघे फलप्रदानप्रतिबन्धकं प्रबलकर्मान्तरञ्च भगवत्सङ्कल्परूपमेव। तद्विषयेतीति। हानोपायनविषयेत्यर्थः। तस्य अप्रस्तुतत्वादिति द्रष्टव्यम्। ननु विद्यारम्भदशायामेव अश्लिष्टविनष्टानामेषां कथं देहवियोगकाले उपायनादिकमित्याशङ्क्याह अश्लेषविनाशौ चेति। अयं

रूपोपायनव्यपदेश इति भावः। हानौ त्विति। "उपायनशब्दस्य हानिवाक्यशेषत्वात् उपायनवाक्यस्य हि हानिवाक्यशेषत्वमेवोचितम् — विदुषा त्यक्तयोः पुण्यपापयोः प्रवेशस्थानवाचित्वादुपायनशब्दस्य" इति भाष्यादिविरोधादित्यर्थः। आदिना दीपसारयोस्सङ्ग्रहः। अचिन्तनीयत्वप्रसङ्गाच्चेति। हानोपायनयो-रौपचारिकत्वे तयोर्भाविफलत्वाभावेन ब्रह्मोपासनदशायामर्चिरादिना सह चिन्तनीयत्वाभावप्रसङ्गादित्यर्थः। एवं ययोः कर्मराश्योरिति। ययोः पूर्वोत्तरयोः पुण्यपापात्मककर्मराश्योर्विद्यामहिम्नाऽश्लेषविनाशौ एत-द्विषयं हानमुपायनञ्चेति निष्कर्षः। 'प्रबलकर्मान्तरप्रतिरोधाददत्तफलयोः' इत्येतदौचित्यसूचकं विशेषणम्; अभुक्तफलानामकृतप्रायश्चित्तानाञ्च कर्मणां फलप्रदानावश्यम्भावात् विदुषि फलप्रदानस्य प्रतिबद्धतया अन्यत्र तत्प्रदानमिति। उत्तराघे फलप्रदानप्रतिबन्धकप्रबलकर्मान्तरञ्च भगवत्सङ्कल्परूपमेव। तद्विषयेति। हानोपायनविषयेत्यर्थः। ननु कर्मणामाशुतरविनाशिनां स्वत एव विनष्टतया कथं विद्यया तन्नाशाभिधानम्। एवमुत्पन्नस्योत्तराघस्य संबन्धावश्यम्भावात् कथमसंबन्धरूपाश्लेषाभिधानमित्यत आह अश्लेषेति। ननु विद्यया पूर्वमश्लिष्टविनष्टयोरेव हानोपायनप्रतिपादनाद्विद्यानुगुणदृष्टफलार्थं सुकृतानां प्रबलकर्मान्तर-

त्मिका । तादृशौ च प्रीतिकोपौ सुहृद्द्विषद्गोचरौ भवत इति तावतैव उपायनवाचोयुक्तिः । "पाते तु" इति सूत्रांशे, "शरीरपातादूर्ध्वं तु विद्यानुगुणदृष्टफलानि सुकृतानि नश्यन्तीत्यर्थः" इति भाष्यम् । विद्यानुगुणानामदत्तफलानां कर्मणां शरीरपातादूर्ध्वं विनाश उपायनञ्च । इतरेषां तु विद्याधिगमदशायामेवाश्लेषविनाशौ, उत्क्रमणदशायाञ्च हानमुपायनञ्चेति विभाग इति ।

---

भावः विद्याधिगमदशायां प्राचीनकर्मणां विनाशो नाम भगवतः पूर्वोत्पन्नकर्मफलदित्सानिवृत्तिः अश्लेषश्च उत्तरकर्मफलदित्साप्रतिबन्धः । तौ च यद्यर्थोपहितौ । यद्ययं प्रक्रान्तमुपासनं समापयेत्, तदा पूर्वोत्तरयोः कर्मणोः फलं न स्यादिति सङ्कल्परूपौ हि तौ । देहवियोगकाले, फलं नैव स्यादिति सङ्कल्पो हानविधूननशब्दार्थः। पुरुषान्तरे विद्याविनष्टाश्लिष्टदृष्टसजातीयादृष्टजननमुपायनशब्दार्थः इति । ननु हानोपायनयोरश्लिष्टविनष्टविषयत्वे, अदत्तफलानां विद्यानुगुणसुकृतानामश्लेषविनाशविषयाणां हानोपायने न स्याताम् इत्याशङ्क्य विद्याधिगमदशायामनष्टानामपि तेषां शरीरपातदशायां विनाशस्य, "पाते तु" इति सूत्रखण्डे तद्भाष्ये च प्रतिपादनादुपायनं सम्भवत्येव । इयांस्तु विशेषः-इतरेषामश्लिष्टविनष्टाना-मश्लेषविनाशौ हानमुपायनञ्चे यस्यात्रयम्, विद्यानुगुणानां तु विनाशो हानमुपायनञ्चेति नावस्थात्रयम्, किंतु अवस्थाद्वयमेव पातस्यैव विनाशरूपत्वादित्यभिप्रयन् आह पातेतित्विति । "इतरस्याप्येवं संश्लेषः पाते तु" इति सूत्रम् । अस्यार्थः-इतरस्यापि सुकृतस्यापि विद्यामाहात्म्यात् पापवदश्लेष एव ; पुण्यस्यापि मुमुक्षोरनिष्टसाधनत्वाविशेषेण पापत्वात् । ननु विदुषोऽपि उपासननिर्वृत्तये वृष्ट्यन्नादि-फलानि इष्टान्येवेति कथं तेषामश्लेषो विनाशो वा स्यादित्यत्राह पातेत्विति । शरीरपातदशायां विद्यानुगुणायुरारोग्यादिफलकसुकृतानि नश्यन्तीत्यर्थः इति ।

---

प्रतिबद्धफलानां हानोपायने न संभवतः । ततश्च भुक्तफलानामकृतप्रायश्चित्तानां तादृशकर्मणां क्वचिदपि फलजननासम्भवप्रसङ्ग इत्यत आह पातेतित्विति । विनाशउपायनञ्चेति। हानरूपो विनाश उपायनञ्च-न तु कर्मान्तरवद्विद्याधिगमसमनन्तरभावो हानानात्मकोऽपि कश्चन विनाशस्तेषामस्ति । ततश्च विद्यानुगुणा-दत्तफलकर्मणां हानमुपायनञ्चेत्यवस्थाद्वयमेव । इतरेषां तु अश्लेषविनाशान्यतरहानोपायनानीत्यवस्थात्रयमिति भावः । तदेवाह इतरेषांत्विति । अश्लेषविनाशौ उत्क्रमणदशायाञ्च हानमुपायनञ्चेति । अत्रेदं बोद्धव्यम्—पूर्वाघविनाशः भगवतः पूर्वोत्पन्नकर्मफलदित्सानिवृत्तिः, उत्तराघाश्लेषश्चोत्तरकर्मफलदित्सा प्रतिबन्धः । तौ च यद्यर्थोपहितौ, यद्ययं प्रक्रान्तमुपासनं समापयेत्, पूर्वोत्तरयोः कर्मणोः फलं नदा-स्यामीति सङ्कल्परूपौ हि तौ । समाप्ते तु, कर्मफलं नैव दास्यामीति सङ्कल्पो विधूननशब्दाभिप्रेतः । अतो न विनाशविधूननयोरभेदः । उपायनञ्च विद्याविनष्टाश्लिष्टदृष्टसजातीयादृष्टस्य पुरुषान्तरे उत्पत्तिरिति । नन्वत्र पूर्वोत्पन्नकर्मफलदित्सास्वरूपसत्त्वे तन्नाशव्यवहारानुपपत्तिः, तदसत्त्वे उत्तरत्र तत्प्रहाणव्यवहारानुपपत्तिः ; न ह्यविद्यमानस्य प्रहाणमित्युपपद्यत इति चेत्-उच्यते ; पूर्वकर्मफलदित्सासत्त्वेऽपि उक्त, तद्यद्यर्थोपहितफलप्रदाना-भावसङ्कल्परूपप्रतिबन्धकाभावविशिष्टाया एव फलदित्सायाः कार्यकारित्वेन कर्मशक्तिरूपता वाच्येति तादृश-कर्मशक्तिरूपविशिष्टे विशेषणांशनिवृत्त्या विशिष्टशक्त्यभावात् पूर्वाघनाशव्यवहारः ; उत्तरत्र च विशेष्यांशस्यैव

न्यासविद्या तु प्रारब्धमपि निश्शेषं विनाशयितुं शक्ता, तथापि रागविषयमंशं तदनुबन्धि दुःखञ्च स्थापयति । निश्शेषवैराग्ये तु निश्शेषं निवर्तयति । अत एवाऽऽर्तदृप्तभेदः । रागविषयश्चांशो इसे नैतावदिति परिच्छेत्तुं शक्यः ; विचित्रत्वात् पुंसामभिप्रायपद्धतेः । अस्याश्च विद्यायामन्तिमप्रत्ययापेक्षापि न विद्यते ॥

**इयं केवल[1]लक्ष्मीशोपायत्वप्रत्ययात्मिका । स्वहेतुत्वधियं रुन्धे किं पुनः सहकारिणाम् ॥ ३६**

**निश्शेषवैराग्य इति** । देहानुवृत्तितदनुबन्धिष्वपि वैराग्य इत्यर्थः । **किं पुनः सहकारिणा**

निवृत्त्या प्रहाणव्यपदेश इति । ननु तथापि अश्लिष्टकर्मविषये कथं प्रहाणव्यवहारः-कर्मशक्तेरेव फलदित्सारूपायास्तत्रानुत्पत्त्या कर्मणाञ्चाशुतरविनाशिनां पूर्वमेव निवृत्त्या तदानीमभावेन च हातव्यस्य कस्याप्यभावादिति चेन्न; यतः ग्रामादिकोत्तराघविश्ये, यथयं प्रकारमुपासनं न समापयेत् ; तदा फलं दास्यामीत्येवं यथर्थोपहिता फलदित्सा जायते, कर्मान्तरवद्यथर्थानुपहितफलदित्सानुवृत्त्या अश्लेषव्यवहारः, उक्त-यथर्थोपहितफलदित्सानिवृत्त्या प्रहाणव्यवहार इति न काचिदनुपपत्तिः । अयमर्थः— तदधिगमाधिकरणश्रुतप्रकाशिकायामस्य लब्धः । न च तथापि कथमश्लेषस्योक्तयथर्थोपहितसङ्कल्परूपत्वं फलदित्सानुत्पादस्यैव तत्त्वादिति वाच्यम् ; फलदित्सोत्पत्त्यभावरूपफलदित्सानुत्पादस्य घटादिसाधारणस्याश्लेषरूपत्वासंभवेन फलदित्साप्रतिबन्धकोक्तसङ्कल्पस्यैव तद्रूपताया वाच्यत्वात, भावान्तरस्यैवाभावतया उक्तसङ्कल्पस्य फलदित्सोत्पत्त्यभावरूपत्वोपपत्तेश्च । तद्विरोधि धर्म एव हि सिद्धान्ते तदभावः । तदेवं विद्याप्राप्तिसमनन्तरभाविन एकस्यैव यथयं प्रकारमुपासनं समापयेत्, पूर्वोत्तरयो कर्मणोः फलं न दास्यामीति सङ्कल्पस्य पूर्वोघविनाशरूपत्वमुत्तराघाश्लेषरूपत्वञ्चोपपन्न एवेति ।

**निश्शेषवैराग्य इति** । देहानुवृत्तितदनुबन्धिसुखादिष्वपि वैराग्य इत्यर्थः । **अत एवेति** । निश्शेषवैराग्यतदभावाभ्यामेवेत्यर्थः । **अन्तिमप्रत्ययापेक्षापि न विद्यत इति** । अपिना कर्माद्यपेक्षाराहित्यं बोद्धयन् दृष्टान्तार्थम् ; "प्रपत्तेः क्वचिदप्येवं परापेक्षा न विद्यते" इत्यादिभिस्तथावगमादिति भावः । प्रपत्तित्वभावादपि नैरपेक्ष्यमुपपादयति **इयमिति** । **केवललक्ष्मीशोपायत्वप्रत्ययात्मकेति** । लक्ष्मीशेतरवृत्त्युपायत्वप्रकारकलक्ष्मीशविशेष्यकनिर्णयात्मिकेत्यर्थः । **स्वहेतुत्वधियं रुन्ध इति** । 'मामेकं शरणं व्रज', "आत्मानं मयि निक्षिपेत्" इत्यादिभिः कर्तव्यतया चोदिते, "भक्त्या परमया वापि प्रपत्त्या वा महामते । प्राप्योऽहं नान्यथा प्राप्यो मम कैङ्कर्यलिप्सुभिः" इत्यादिभिरुपायतया चाभिहितेऽपि स्वस्मिन् उपायताज्ञानं प्रतिबध्नातीत्यर्थः । **किं पुनस्सहकारिणामिति** सहकारित्वेन प्रसक्तस्यान्तिमप्रत्ययस्य कर्मादेश्च

1 केवलेति । निरपेक्षेत्यर्थः । उपायत्वे तदन्वयः । भक्तविषये भक्तिमपेक्ष्य भगवान् प्रसीदति । प्रपन्नविषये प्रपत्तेर्भगवतो भक्तिस्थाननिवेशकत्वात् स्वयं भक्तिस्थानोत्पन्नत्वाभावात् केवलं भगवान् उपायः। एवञ्च भक्तेरपेक्षितं सहकारि कथं प्रपत्तेरपेक्षितं स्यात् । सांगभक्तियोगस्थाने च भगवान् निक्षिप्त इति भक्तियोगवत् अंगानामप्यनपेक्षैव । न च भक्तिरिव भगवान् अजः कर्मभिरुत्पाद्यः । नापि तिष्ठत्सहचरी प्रपत्तिस्तैरुत्पाद्या । तथाच स्वयं भक्तिवत् अनुपायभूता प्रपत्तिः सहकारिणां सहकारित्वं कथं न रुन्धे । अन्यथा कर्मयोगादिकमपि प्रपन्नकार्यं स्यादित्यर्थः । एवमन्तिमप्रत्ययोऽपि नापेक्ष्यः । न च योगिवत् प्रयत्नसाध्यः शक्यापेक्षः । नाप्यप्रयत्नसाध्यस्यानपेक्षाऽत्रोपदेश्या ।

**प्रारब्धकर्मावधिको मोक्ष इत्यमुपासितुः । इतरस्य देहावधिक आर्तस्याऽऽत्यंय इति मतः ॥ ३७ ।**

उत्क्रमिषतः सर्वस्य पूर्वं वागिन्द्रियं तदनु च शेषाणि नवेन्द्रियाणि मनसा सह अविभागं गच्छन्ति । तच्च सर्वेन्द्रियसंयुक्तं मनः प्राणेन । स च एकादशेन्द्रियसंयुक्तो जीवेन । स च इन्द्रियप्राणसंयुक्तः पञ्चभूतैः । तानि च इन्द्रियप्राणजीवसंयुक्तानि परमात्मना । एतावच्च विद्वदविदुषो

---

मिति । ब्रह्मास्त्रनीत्या सहकार्यन्तराणां हेतुतामपि न सहत इत्यर्थः ।

"अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्" 'तस्मादुपशान्ततेज पुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानैः', 'एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति' "वाङ्मनसि दर्शनाच्छब्दाच्च, अत एव सर्वाण्यनु, तन्मनः प्राण उत्तरात्, समाना चासृत्युपक्रमात्...." इत्यादीनि श्रुतिसूत्राण्यभिप्रयन्नाह **उत्क्रमिषत** इत्यादि । उत्चिक्रमिषत इति कचित्कोशेषु पाठो दृश्यते; स तु लेखकस्खलनकृतः । 'स्नुक्रमोरनात्मनेपदनिमित्ते" इत्यात्मनेपद एव इट्प्रतिषेधात् । "शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका । तयोर्ध्वमायन् अमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति", "तेऽर्चिषमभिसम्भवन्ति, अर्चिषोऽहरह्न आपूर्यमाणपक्षम्, आपूर्यमाणपक्षात् यान् षडुदङ्ङेति मासाँस्तान्, मासेभ्यः संवत्सरम्, संवत्सरादादित्यम्, आदित्याच्चन्द्रमसम्, चन्द्रमसो विद्युतम्। तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति" तथा, "स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं वरुणलोकं [स आदित्यलोकं] स इन्द्रलोकं स प्रजापतिलोकम्", 'अर्चिरादिना तत्प्रथितेः', वायुमब्दादविशे

---

हेतुताज्ञानं प्रतिबध्नातीति किन्तु वक्तव्यमित्यर्थः । विद्यान्तरन्यायेनैव तस्य प्रवृत्तेरिति भावः । अत्र बोद्धव्यम्—प्रपत्त्या उपायत्वावच्छेदेन भगवदितरावृत्तित्वं विषयीक्रियते, "त्वमेवोपायभूतो मे भवेति प्रार्थना मतिः शरणागतिरित्युक्ता", "तदेकोपायतायाचना प्रपत्तिश्शरणागतिः" इत्यादिभिस्तथावगमात् तत्र ह्युपायत्वावच्छेदेनैवेतरावृत्तित्वं एवकारेण बोद्ध्यते; तथैव व्युत्पत्तेः। अत एव हि पृथिव्येव रूपवतीत्यादयो न प्रयोगाः । तत्र हि पार्थिवरूपे पृथिवीतरावृत्तित्वमस्त्येव । ततश्च भगवदितरस्मिन्–स्वस्मिन् तादृशेऽन्तिमप्रत्यये, कर्मादौ चोपायत्वावगाहिज्ञानं प्रति उपायत्वावच्छेदेन भगवदितरावृत्तित्वावगाहिनी प्रपत्तिः प्रतिबन्धिका । ह्रदे वह्न्यवगाहिज्ञानं प्रति ह्रदावृत्तिर्वह्निरिति निर्णयवत् । यद्यपि समानप्रकारकस्यैव विरोधिनिर्णयस्य प्रतिबन्धकतया प्रपत्तिरुपाय इति ज्ञाने प्रपत्त्यवृत्ति उपायत्वमिति निर्णयस्य कथञ्चित् प्रतिबन्धकत्वेऽपि भगवदितरावृत्ति उपायत्वमिति निर्णयस्य कथमपि न प्रतिबन्धकत्वसंभवः — तथा प्राचीननैयायिकरीत्या असमानप्रकारकस्यापि विरोधिनिर्णयस्य प्रतिबन्धकत्वमभ्युपगम्येदम् । अथ भगवदितरत्वेन प्रपत्त्यवगाह्युपायत्वज्ञानप्रतिबन्धकतामभिप्रेत्येदम् । वस्तुतस्तु ह्रदे जलवत्ताज्ञानसहितवह्निमदवृत्ति जलमिति ज्ञानस्येव तादृशस्य जलवदवृत्तिर्वह्निरिति ज्ञानस्यापि प्रतिबन्धकत्वमौचित्यावर्जितमनुभवसिद्धञ्चेत्यभिप्रायेणेदम् । तथासति हि भगवदितरा प्रपत्तिरिति ज्ञानसहितस्य भगवदितरावृत्ति उपायत्वमिति ज्ञानस्य, प्रपत्तिरुपाय इति ज्ञानप्रतिबन्धकत्वं निष्प्रत्यूहमिति । अधिकमन्यत्र प्रपञ्चितम् ।

**अविभागम्**—विलक्षणसंयोगम् ।

साधारणम् । अविदुषस्तु विशेषः प्रागेवोक्तः । विद्वांस्तु सर्वोऽपि मूर्धन्यया ब्रह्मनाड्या सुखेन शरीरात् निष्क्रामन् अर्चिरहर्शुक्लपक्षोदगयनाब्दमरुदर्केन्दुवैद्युतवरुणेन्द्रप्रजापतिसंज्ञैरातिवाहिकैः पुरुषैः क्रमात् यथास्वं देशमतिवाह्यमानो वैद्युतेनामानवनाम्ना तेनैव[1] क्रमात् वरुणादिसमीपं नीतस्तेन ब्रह्मसमीपमुपनीयते । एषैवार्चिरादिगतिः[2] कर्मणामन्यसंक्रान्तिश्च "सम्भूतिश्च विनाशश्च यस्तद्वेदोभयं सह । विनाशेन मृत्युं तीर्त्वा सम्भूत्याऽमृतमश्नुते ॥" इति सम्भूतिविनाशशब्दाभ्यामुच्यते । कर्मणां विनाशेन हि संसारतरणम् । अर्चिरादिसम्भूत्या च ब्रह्मप्राप्तिः । "सम्भूतिमुपासते" इत्यत्रोपासनं चिन्तनमात्रमेव । सम्भूतिशब्दश्च प्राप्तौ बहुशः प्रयुक्तः, "तेऽर्चिषमभिसम्भवन्ति, एतमितः प्रेत्याभिसम्भवितास्मि, ब्रह्मलोकमभिसम्भवामि' इत्यादिषु । नारायणार्यैस्तु सम्भूतिविनाशशब्दौ फलद्वारा लक्षणया विद्याकर्मविषयावुक्तौ, "विदुषो विद्यासाध्यस्यापवर्गस्य सम्यगभिवृद्धिरूपत्वात्" इत्यादिना । एवञ्च, "विद्यां चाविद्यां च यस्तद्वेदोभयं सह" इत्यादिश्रुत्यैकार्थ्यं[3] स्यात् ।

उत्क्रम्य गच्छतश्चास्य सर्वकर्मक्षयेऽपि च विद्यामाहात्म्यादेव सूक्ष्मशरीरशब्दाभिलप्यं किञ्चित् त्रिगुणद्रव्यमुपष्टम्भकमनुवर्तते । उक्तञ्च सारे, "शरीरादुत्क्रान्तस्यापि सूक्ष्मशरीरमनुवर्तते" इत्यादि । अत एव च प्राथमिकसाक्षात्कारः[4] प्रत्यूहकलुष इति गतिसाफल्यम् ।

---

विशेषाभावाच्च, तटितोऽधि वरुणः सम्बन्धात्, आतिवाहिकास्तल्लिङ्गात्, वैद्युतेनैव ततस्तच्छ्रुतेः" इति श्रुतिसूत्राण्यभिप्रयन् आह विद्वांस्त्वित्यादिना । अस्या अर्चिरादिगतेश्चिन्तनीयत्वे, "सम्भूतिश्च" इत्यादिश्रुतिं प्रमाणयन् सम्भूतिविनाशशब्दयोः प्रपञ्चोद्भवनाशावस्थब्रह्मपरत्ववादियादवादिमतं निरस्यति एषैवेति । एषैवार्चिरादिगतिः कर्मणामन्यसङ्क्रान्तिश्चोच्यते इत्यन्वयः । नन्वर्चिरादिगतेः संभूतिशब्दार्थत्वे कथं तस्याः, "सम्भूतिमुपासते" इति वाक्यप्रतिपाद्यमुपास्यत्वमित्याशङ्क्याह सम्भूतिमुपासते इत्यत्रेति । सम्यगभिवृद्धिरूपत्वादिति । ततश्च संभूतिशब्दस्य मोक्षवाचित्वसम्भवेन तद्द्वारा विद्यालक्षकत्वमुपपद्यते इति भावः । अत एवेति । यत एव प्रनष्टकर्मणोऽपि स्वरूपाविर्भावप्रतिबन्धकसूक्ष्मशरीरानुवृत्तिः, अत एव निश्शेषप्रतिबन्धकनिवर्तकतया देशविशेषविशिष्टब्रह्मविषयक-

---

अर्चिरादिगतेश्चिन्तनीयत्वे, "संभूतिश्च" इत्यादिश्रुतिं प्रमाणयितुं संभूतिविनाशशब्दयोरर्थं दर्शयति एषैवेति । अस्य उच्यत इत्यनेनान्वयः । ननु कथं संभूतिशब्देनार्चिरादिगत्यभिधानमित्यत्राह संभूतिशब्दश्चेति । प्राप्ताविति । तथाच प्राप्तिवाचिनः संभूतिशब्दस्य विनाशसाहचर्यादर्चिरादिप्राप्तिबोधकत्वं युक्तम् । तस्याविनाशशब्दाभिहितकर्मप्रहाणसमकालिकत्वादिति भावः । सम्यगभिवृद्धिरूपत्वादिति । सम्यगभिवृद्धिवाचकसंभूतिशब्देन मोक्षाभिधानद्वारा तत्साधनीभूता विद्या लक्ष्यत इति भावः । नन्त्क्रान्तस्य तदानीमेव स्वाभाविकसाक्षात्कारप्रतिबन्धककर्मक्षयात् तादृशसाक्षात्काररूपमोक्षावश्यम्भावादर्चिरादिगतिवैफल्यम्; अत आह अत एवेति । सूक्ष्मशरीरानुवृत्तेरेवेत्यर्थः । प्राथमिकसाक्षात्कार इति । अर्चिरादिगतेः पूर्वभावी

---

1 तेन = पूर्वोक्तेन । 2 इदं गतिपदं यथाप्रसिद्धि मार्गपरम्, यद्वा अतिवाह्यमान इति पदार्थान्तर्गतगमनक्रियापरमेव । 3 ऐकार्थ्यमिति । ऐकार्थ्यं ग्राह्यं भवेत् समानप्रकरणस्थत्वे । अत्र तु एकस्यैववाक्यद्वयसत्त्वादैकार्थ्यं पौनरुक्त्यदोषापादकमेव स्यादिति हृदयम् । 4 प्राथमिकेति । परज्ञानरूपोऽपि ।

निश्शेषाविद्याविनाशश्च विशिष्टदेशगतिसापेक्ष इति गतिशास्त्रादेवाध्यवसीयते । तथा च, "परं जैमिनिर्मुख्यत्वात्" इति सूत्रे भाष्यम्, "यथा हि विद्योत्पत्तेर्वर्णाश्रमकर्मशौचाचारदेशकालाद्यपेक्षा, "तमेतं वेदानुवचनेन" इत्यादिशास्त्रादवगम्यते, तथा निश्शेषाविद्यानिवर्तनरूपविद्यानिष्पत्तिरपि[1] विशिष्टदेशगतिसापेक्षेति गतिशास्त्रादवगम्यते" इति । उत्क्रमणप्रभृति च उत्तरोत्तरमतिशयितज्ञानानन्दशाली जायते । प्राणेन्द्रियादिमत्त्वाच्च मध्ये भोगविहारसंवादाद्युपपत्तिः । [2]अमानवकरस्पर्शादारभ्य चासौ मुक्तः । ततः पूर्वः सर्वोऽप्युपाय-

---

प्राथमिकसाक्षात्कारोऽपेक्षित[2] इति तदर्थं गतिसाफल्यमित्यर्थः । यद्वा दर्शनसमानाकारोपासनादेव, "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इति निवृत्तसर्वप्रतिबन्धकस्यात्रैव स्वरूपाविर्भावावश्यम्भावात् गतिर्मुधेत्याशङ्क्य, यथा प्रत्यूषो न सर्वान्धतमसनिवर्तकः, तत्तुल्यः साक्षात्कार इति गतिसाफल्यमित्याह अत एवेति । परं जैमिनिर्मुख्यत्वात् । अर्चिरादिको गणः परमेव ब्रह्मोपासीनान् परं ब्रह्म नयतीति जैमिनिराचार्यो मन्यते । कुतः ? मुख्यत्वात्, "तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति" इति ब्रह्मशब्दस्य परस्मिन्नेव ब्रह्मणि मुख्यत्वात् । न च परस्य ब्रह्मणो विभुत्वेन न तत्प्राप्त्यर्थं गत्यपेक्षेति वाच्यम् ; शास्त्रबलात् देशविशेषविशिष्टब्रह्मप्राप्तेरेव स्वरूपाविर्भावहेतुत्वात्। संवादाद्युपपत्तिरिति। "तमागतं पृच्छति कोऽसीति तं प्रतिब्रूयात्" इति चन्द्रमस्संवादाद्युपपत्तिरित्यर्थः । अमानवकरस्पर्शादिति । ""ततोऽमानवमासाद्य" इत्यादिप्रमाणसिद्धवैद्युतव्यतिरिक्तविरजातीरवृत्त्यमानवकरस्पर्शादारभ्य प्रकृतिसम्बन्ध-

---

साक्षात्कार इत्यर्थः । प्रत्यूषकल्प इति । निश्शेषकर्मक्षयेऽपि सूक्ष्माचित्संसर्गरूपप्रतिबन्धकशेषसद्भावान्न विशदतमः साक्षात्कारः । किन्तु प्रत्यूषकालिकसाक्षात्कारवदविशद एवेत्यर्थः । इति गतिसाफल्यमिति । "सर्वं ह पश्यः पश्यति", "सकृद्विभा" इत्याद्युक्तविशदतमसाक्षात्कारसिद्ध्यर्थं गत्यावश्यकतेत्यर्थः । तदेवोपपादयति निश्शेषेति । अविद्याविनाशः = उक्तविशदतमसाक्षात्कारविरोधिसङ्कल्पनिवृत्तिः । विशिष्टदेशगतिसापेक्ष इति । देशविशेषप्राप्त्यनन्तरभाव्यमानवकरस्पर्शजन्य इत्यर्थः । संवादाद्युपपत्तिरिति । "तमागतं पृच्छति कोऽसीति, तं प्रतिब्रूयात्" इति चन्द्रमस्संवादाद्युपपत्तिरिति भावः । अमानवकरस्पर्शादारभ्य चासौ मुक्त इति । अमानवकरस्पर्शानन्तरक्षणप्रभृति यावत्कालावच्छेदेन निश्शेषाविद्यानिवृत्तिमानित्यर्थः । ततः पूर्वं इति । उक्ताविद्यानिवृत्तेः पूर्वं इत्यर्थः । सर्वोऽपीति । ब्रह्मनाडीप्रवेशप्रभृत्यमानवकरस्पर्शपर्यन्तः सर्वोऽपीत्यर्थः । उपायव्यापार इति । भक्तिप्रपत्तिभ्यामुपायाभ्यामुक्ताविद्यानिवृत्त्यादिरूपे फले जननीयेऽवान्तरव्यापार इत्यर्थः । उपायजन्यत्वात् फलजनकत्वाच्चेति भावः । फलमिति । इष्टप्राप्तिरूपं प्रधानफलमित्यर्थः । अविद्यानिवृत्तेः फलत्वेऽप्यनिष्ट-

---

1 विद्यानिष्पत्तिः = विद्याकार्यम् । 2 एतदारभ्य व्याख्याद्वयमवधेयम् । प्रथमव्याख्यायां साक्षात्कारपदं मुख्यम् ; प्राथमिकसाक्षात्कारो गत्यनन्तरभावी । अतः अपेक्षित इत्यध्याहारः । दर्शनसमानाकारज्ञानपरत्वे तु गत्यपेक्षया पूर्वभावित्वम् । द्वितीयव्याख्यायां गतेः पूर्वभावी सूक्ष्माचित्संसर्गकालिकसाक्षात्कारः प्रत्यूषकल्प उक्तः ; स कः । परज्ञानं तु स्थूलशरीरे सत्येव भवति । परमभक्तिरपि हि स्थूलशरीरकाले । अन्तिमप्रत्ययोऽपि ।

व्यापारः । फलं परमपदपर्यङ्कारोहणादिकम् । तदा चायमीश्वर इवापहतपाप्मत्वसत्यसङ्कल्पत्वादि-विशिष्टो भवति । तच्चास्य समस्तप्रतिबन्धकात्यन्तिकलयादाविर्भूतं स्वाभाविकं रूपम् ।

रूपप्रतिबन्धकनिवृत्तिरित्यर्थः । न तु वैद्युतपुरुषामानवकरस्पर्शादिति मन्तव्यम् । "गत्वाऽथो विरजां विमुञ्चति तनुं सूक्ष्मां ततोऽमानवस्पर्शात् क्षालितवासनाः सुकृतिनो गच्छन्ति विष्णोः पदम्" इत्यभियुक्तोक्तेः' इति केचिदूचुः। केचित्तु अमानवद्वयसद्भावे प्रमाणाभावादातिवाहिकस्यैवामानवस्य विरजातरणानन्तरभाविसपदि करस्पर्शात् वासनानिरास इत्याहुः। स आगच्छत्यमितौजसं पर्यङ्कम् । तस्मिन् ब्रह्माऽऽस्ते तमित्थंवित् पादेनैवाग्र आरोहति । तं ब्रह्माह कोऽसीति । तं प्रतिब्रूयादृतुरस्मि" इत्यादिश्रुतिमभिप्रयन् आह फलमिति । [1]पर्यङ्कारोहणानन्तरभाविस्वरूपाविर्भावः प्रधानफलमित्यर्थः । 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते", 'सम्पद्याविर्भावः स्वेनशब्दात्" इति श्रुतिसूत्रार्थमभिप्रयन् आह तच्चास्येति । तत् अपहतपाप्मत्वादिकमित्यर्थः । समस्तेति । देहवियोगकाले कर्मरूपप्रतिबन्धकापनयः, अमानवकरस्पर्शदशायां प्रकृतिरूपप्रतिबन्धकापनयः, पर्यङ्कारोहणदशायां तदुभयविलक्षणभगवत्सङ्कल्परूपप्रतिबन्धकनिवृत्तिरिति भावः । "ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते", 'मामुपेत्य तु कौन्तेय पुनर्जन्म

निवृत्तिरूपतया न प्रधानफलत्वमिति भावः । तदेति । पर्यङ्कारोहणक्षण [2]इत्यर्थः । अपहतपाप्मत्व-सत्यसङ्कल्पत्वादिविशिष्टो भवतीति । निवृत्ततिरोधानोक्तधर्मविशिष्टो भवतीत्यर्थः । अपहतपाप्मत्वादिकं हि जीवानामपि स्वाभाविकमेव । परन्तु बद्धानां संसारदशायां भगवत्सङ्कल्पवशेन तिरोहितम्, अमानवकरस्पर्शेन च तिरोधायकसङ्कल्पनिवृत्तिरिति भावः । "देहवियोगकाले कर्मरूपप्रतिबन्धकापनयः, अमानवकरस्पर्शदशायां प्रकृतिरूपप्रतिबन्धकापनयः, पर्यङ्कारोहणदशायां तदुभयविलक्षणभगवत्सङ्कल्प-रूपप्रतिबन्धकनिवृत्तिः" इति रङ्गरामानुजस्वामिव्याख्याने प्रकृतिशब्देन वासनारूपोक्ततिरोधायकसङ्कल्प एव विवक्षितः—"अमानवस्पर्शात् क्षालितवासनाः" इत्यभियुक्तोक्त्यानुगुण्यात् । पर्यङ्कारोहण-दशाशब्देन च पर्यङ्कारोहणप्रागवस्थैव विवक्षिता । अथवा एतत् सर्वं मतान्तराभिप्रायं नेयम् । तदेवाह तच्चेति । स्वाभाविकमिति । यावदात्मभावीत्यर्थः। अत्रेदं बोद्धव्यम्—अपहतपाप्मत्वं कर्मणां फलजननशक्तिप्रतिभटत्वम् । तच्च तादृशशक्तिप्रतिबन्धकत्वम् । क्षेत्रज्ञेषु प्रत्यवायकरपापसजातीयैः स्वलीलाकृतैर्भगवति प्रत्यवायवारणाय भगवत्स्वरूपस्य तादात्म्येन तत्र प्रतिबन्धकत्वमावश्यकम् । प्रतिबन्धकत्वञ्च कार्यानुत्पादप्रयोजकत्वम् । यद्यपि कारणाभावेपि तदस्ति—तथापि कार्यानुत्पादप्रयोजकता-

1 स्वरूपाविर्भावस्यामानवकरस्पर्शकालिकत्वे, परं ज्योतिरुपसंपद्येति श्रुतिसूत्रविरोधः । अतोऽन्यथाऽर्थमाह । वचनान्तरं श्रुत्यविरोधायान्यार्थकमिति भावः । वाक्यस्वरसार्थो द्वितीयव्याख्याने द्रष्टव्यः । 2 श्रूयते च कौषीतकयुपनिषदि, 'स आगच्छति विचक्षणामासन्दीम्...सा प्रज्ञा । प्रज्ञया हि विपश्यति' इति पूर्णधीविकासं निर्दिश्य पश्चादेव पर्यंकारोहणकथनात्, ज्योतिरुपसंपद्येत्यत्र उपशब्दबलात् समीपप्राप्तिरेवेष्टाऽस्तु । पर्यंकारोहणपूर्वक्षण एवामानवकरस्पर्शोऽप्यस्त्वस्तु इत्याशयः। 'தன்மைபெறுத்தித் தன் தாளிணைக் கீழ் கொள்ளுமப்பன்' इति श्रीशठारि-र्दिव्यसूरिरपि स्वरूपाविर्भावात् पश्चादेव परमपुरुषपदारविन्दप्राप्तिमाह ।

ततःपरं अस्य कदाचिदपि न संसारात्मिका पुनरावृत्तिः । प्रथमं [1]तावत् अकालकाल्यत्वाजरत्वाक्षरत्वादिवचनेन देशलयाभावात्,[द्वितीयम्?] "स यदि पितृलोककामो भवति" इत्यादिना अनायास-

न विद्यते', 'अनावृत्तिश्शब्दात्' इत्यादिश्रुतिस्मृतिसूत्राण्यभिप्रयन् आह ततःपरमिति । संसारात्मिका हि पुनरावृत्तिर्देशविशेषविशिष्टब्रह्मप्राप्तस्य किं तद्देशविनाशादुच्यते, किं वा, "स यदि पितृलोककामो भवति, सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति । तेन पितृलोकेन सम्पन्नो महीयते....भ्रातृलोकेन सम्पन्नो महीयते", "जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा" इत्यादिप्राकृतभोगसंसर्गश्रवणादिति विकल्पं हृदि निधाय आद्यं निराचष्टे प्रथमं तावदिति । "कालं स पचते तत्र न कालस्तत्र वै प्रभुः", "अक्षरे परमे व्योमन्", "दिव्यं स्थानमजरञ्चाप्रमेयम्" इत्यादिभिर्धर्मिग्राहकप्रमाणैस्तद्देशविशेष[स्य?]प्राथमिकावगतिदशायामेव नित्यत्वादिना प्रतिपन्नत्वादित्यर्थः । द्वितीयं निराचष्टे—स यदि पितृलोकेति । स यदि पितृलोककामो भवतीत्यादिनेत्यनन्तरम्, अवगतस्य भोगस्येति शेषः । सृष्टिप्रयुक्तदुःखसम्बन्धरूपसंसारप्रसक्तिज्ञापनाय अनायासेत्युक्तम् । "विकारावर्ति च तथा हि स्थितिमाह" इति सूत्रार्थमभिप्रयन्

वच्छेदकशक्तिमत्त्वस्यैव प्रतिबन्धकत्वरूपतया न दोषः । कारणाभावस्य हि कारणाभावत्वेनैव कार्यानुत्पादप्रयोजकता ; न तु शक्तिमत्त्वेन । मण्यादीनाञ्च शक्तिविशेषवत्त्वेनैव दाहाद्यनुत्पादप्रयोजकतया तत्र प्रतिबन्धकत्वोपपत्तिः । इत्थञ्च प्रतिबन्धकाभावसहितस्यैव कारणस्तोमस्य कार्योत्पत्तिनियामकतया न भगवति प्रत्यवायप्रसङ्गः—भगवद्भेदरूपस्य प्रतिबन्धकाभावस्य तत्रासत्त्वात् । तथाच कर्मणां फलजननशक्त्यनुत्पादप्रयोजकतावच्छेदकशक्तिमत्त्वमपहतपाप्मत्वमिति फलितम् । इदञ्च जीवानामप्यस्ति ; तेषामपि तच्छ्रवणात् । परन्तु बद्धावस्थायां तत् तिरोहितम् । तिरोधायकश्च प्रागुक्तविशदतमसाक्षात्काररूपप्राप्तिविरोधिभगवत्सङ्कल्पः । तन्निवृत्तौ चापहतपाप्मत्वमाविर्भवति । बद्धदशायां हि उक्तापहतपाप्मत्वरूपशक्तिविशेषसत्त्वेन तद्विशिष्टजीवरूपप्रतिबन्धकवशात् जीवेऽपि प्रत्यवायानुत्पत्तौ प्रसक्तायाम् उक्तप्राप्तिविरोधिसङ्कल्पस्योत्तेजकत्वाभ्युपगमात् उत्तेजकाभावविशिष्टप्रतिबन्धकस्यैव कार्यानुत्पादप्रयोजकत्वेन तस्यासत्त्वात् उत्तेजकाभावविशिष्टप्रतिबन्धकाभावसहितकारणकलापस्यैव कार्योत्पत्तौ नियामकतया तस्य सत्त्वाच्च बन्धदशायां प्रत्यवायोत्पत्त्युपपत्तिः । ततश्च प्रतिबन्धकताफलभूतायाः प्रत्यवायानुत्पत्तेर्बद्धदशायामदर्शनादपहतपाप्मत्वरूपप्रतिबन्धकत्वस्य तदा फलादर्शनरूपं तिरोधानम् । मुक्तदशायां तु फलसंभवात् तद्दर्शनरूपाविर्भाव उपपद्यते । एवं सत्यसङ्कल्पत्वमपीच्छाविषयसर्वसिद्धिप्रयोजकशक्तिमत्त्वम् । उक्तशक्तौ सत्यामपि प्रागुक्तप्राप्तिविरोधिसङ्कल्पस्य तादृशसर्वसिद्धौ प्रतिबन्धकतया बद्धदशायां न तत्सिद्धिः, मुक्तौ तु प्रतिबन्धकनिवृत्त्या तत्सिद्धिरिति तत्रापि कार्यादर्शनतद्दर्शनरूपौ तिरोधानाविर्भावावुपपद्येते इति भाव इति । संसारात्मिकेति । पुण्यपापसंबन्धात्मिकेत्यर्थः । "सर्वेषु लोकेषु कामचारो भवति" इत्युक्तप्राकृतलोकसञ्चारो न निषिद्ध्यत इति भावः । अकालकाल्यत्वेत्यादि । अकालकाल्यत्वम्=कालाधीनविकाररहितत्वम् । "कालं स पचते तत्र न कालस्तत्र वै प्रभुः",

1 प्रथममिति । एतत्साधनं बहुप्रकारमनावृत्तिसूत्रगम्यम्, नित्यसायुज्यश्रवण-मिथोत्यन्तप्रियत्वहेतुभूतकर्मराहित्य-अभिमतसेवात्वादितोऽपि । प्रथमं तत्साधनं त्वित्यर्थः। प्रथमं तावदिति न स्याद्वा ।

स्वसङ्कल्पमात्रसृष्टपरमपुरुषभोगनिर्मग्नाप्राकृतभोगरूपत्वेन संसारत्वाभावात्। सृष्ट्यादिजगद्व्यापार-मोक्षप्रदत्व-मुमुक्षूपास्यत्व-शेषित्वादिरूपभगवदसाधारणधर्मव्यतिरिक्त-ज्ञानानन्दसत्यसङ्कल्पत्वादिगुणात्यन्तसाम्यातिरेकेण सायुज्यं तु गगनारविन्दमकरन्दवार्तामनुसरति। न तावत् सायुज्यं ब्रह्मणि लयः; अग्निवाय्वादित्यादिसायुज्येऽपि लयप्रसङ्गात्। नापि साधारणशरीरवत्त्वम्; जीवशरीरापेक्षया संसारेऽपि समत्वात्। ईश्वरशरीरापेक्षया मोक्षेऽप्ययोगात्। एवमन्यदपि॥ किं तर्हीदम्?॥ समानात्मगुणयोगित्वम्। तदेव चास्य साम्यम्। सयुग्भावो हि सायुज्यम्। सयुक्छब्दश्च भिन्नयोरेकत्र साधारणयोगं दर्शयति। "परमं साम्यमुपैति", "मम साधर्म्यमागताः" इत्यादिबलाच्च, "ब्रह्मैव भवति" इत्यादीनामपि साम्य एव तात्पर्यमिति प्रागेवोपपादितम्। अग्न्यादिप्राप्तिषु सालोक्यादितारतम्यमस्ति। ब्रह्मप्राप्तौ तु सायुज्यरूपायां पूर्वं त्रयमप्यविनाभूतम्। यत्तु, "मोक्षं सालोक्यसारूप्यं प्रार्थये न कदाचन। इच्छाम्यहं महाबाहो सायुज्यं तव सुव्रत॥ "लोकेषु विष्णोर्निवसन्ति केचित् समीपमृच्छन्ति च केचिदन्ये। अन्ये तु रूपं सदृशं भजन्ते सायुज्यमन्ये स तु मोक्ष उक्तः॥" इत्यादि–तदपि श्रीविष्णुलोकादिविषयावान्तरपदप्राप्त्यपेक्षयेति न दोषः।

न च सेवा दुःखहेतुः सेवात्वादिति वाच्यम्; अनीश्वरसेवापक्षीकारे सिद्धसाधनात्।

---

आह **परमपुरुषभोगनिर्मग्नेति**। "जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च" इति सूत्रार्थमभिप्रयन् आह **जगद्व्यापारेति**। जगद्व्यापारमोक्षप्रदत्वादेरपि मुक्तसाधारण्ये तेषां वेदान्तेषु ब्रह्मलक्षणत्वेनोपदेशो न स्यादिति भावः। "भोगमात्रसाम्यलिङ्गाच्च" इति सूत्रार्थमभिप्रयन् आह **ज्ञानानन्देति**। **अग्निवाय्वादित्येति**। जीवे जीवान्तरलयस्य तैरनभ्युपगमात्। इतरथा आमोक्षात्स्थायित्वस्य तदभ्युपगतस्य भङ्गप्रसङ्गादित्यर्थः। **संसारेऽपि समत्वादिति**। जीवशरीरस्य परमात्मानं प्रत्यपि शरीरत्वादित्यर्थः। **मोक्षेऽप्यभावादिति**। न हि भगवद्विग्रहस्य मुक्तं प्रत्यपि शरीरत्वमस्तीति भावः। **एवमन्यदिति**। स्वरूपैक्यादिकमित्यर्थः। **अग्न्यादिप्राप्तिष्विति**। तत्र हि अग्न्यासालोक्यं प्राप्तानामप्यग्न्यादिसमानभोगत्वादिलक्षणसायुज्याभावोऽपि सम्भवति। प्रकृते तु अप्राकृतभगवल्लोकगतानां सायुज्यादिकमवर्जनीयमिति भावः। **पूर्वं त्रयमिति**। सालोक्यसारूप्यसामीप्यानीत्यर्थः। **श्रीविष्णुलोकादीति**। प्रकृतिमण्डलान्तर्गतलोकान्तरविषयाणीमानि वचनानि। प्रकृतिमण्डलानन्तर्गतभगवल्लोकगतानां तु सायुज्यादिकमावश्यकमिति भावः।

---

"दिव्यं स्थानमजरञ्चाप्रमेयम्", "अक्षरे परमे व्योमन्", "तद्विष्णोः परमं पदं सदा पश्यन्ति" इत्यादिकमिहाभिप्रेतम्। **इत्यादिनेत्यनन्तरम्** अवगतस्य भोगस्येति शेषः। **अग्निवाय्वादित्येति**। जीवे जीवान्तरलयस्य कैरप्यनभ्युपगमात। अन्यथा आमोक्षाज्जीवभावस्य स्थायितायास्तदभ्युपगताया अनुपपत्तेरिति भावः। **समत्वादिति**। [संसारेऽपि] जीवशरीरस्य परमात्मानं प्रत्यपि शरीरत्वादिति भावः। **मोक्षेऽप्ययोगादिति**। भगवद्विग्रहस्य मुक्तं प्रत्यपि शरीरत्वायोगादिति भावः। **अन्यदिति**। स्वरूपैक्यमित्यर्थः। "अन्यद्द्रव्यं हि नैति तद्द्रव्यतां यतः" इत्युक्तरीत्या भिन्नयोरैक्यायोगात्, अग्न्यादिसायुज्यस्थले एकस्य युगपत् क्रमेण वाऽनेकदेवताभिरैक्यासंभवाच्चेति भावः। **पूर्वं त्रयमिति**। सालोक्यसारूप्यसामीप्यानीत्यर्थः। **श्रीविष्णुलोकादीति**। प्रकृतिमण्डलान्तर्गतेत्यादिः। अप्राकृतलोकं प्राप्तानां तु सालोक्यादिचतुष्टयमप्यावश्यकमिति भावः।

**सेवात्वादिति**। अन्यप्रीतीच्छाधीनव्यापारत्वादित्यर्थः। **अनीश्वरसेवेत्यादि**। अयं भावः–

ईश्वरसेवापक्षीकारे बाधात् । सुखरूपेषु वदान्यसेवादिषु चानैकान्त्यात् । एतद्व्यतिरिक्तसेवा दुःखहेतुः सेवात्वात् एतत्सेवावदित्यत्रापि व्यतिरेकोपलक्षितव्यक्तिद्वये अंशतःसिद्धसाधनबाधयोरन्यतरानतिपातात् । एवं सेवामात्रपक्षीकारे दृष्टान्ताभावश्चाधिकः । केवलव्यतिरेकित्वविवक्षायां दुःखहेत्वन्तरसद्भावेन सपक्षवतस्तत्रावर्तमानस्य सेवात्वस्यासाधारणत्वप्रसङ्गात् । केवलव्यतिरेकी च निरसिष्यते । तर्कोऽपि निराश्रयो'(निराश्रयतर्को ?) न साधकः । केवला व्याप्तिरप्रयोजिका । व्यभिचारश्चोक्तः । दुःखहेतुत्वे च पापावष्टब्धत्वमुपाधिः । निवृत्तस्वातन्त्र्याभिमानस्य दासभूतस्य

---

**एतद्व्यतिरिक्ते**ति । अत्र सर्वव्यक्तिपक्षीकारे दृष्टान्तासिद्धिप्रसङ्गा**देतद्व्यतिरिक्ते**ति विशेषणेनैका व्यक्तिर्दृष्टान्तार्थं परिशेषितेति द्रष्टव्यम् । अत्र **एतद्व्यतिरिक्तसेवा**त्वस्य पक्षतावच्छेदकीकरणात् नेश्वरसेवात्वम्, **अनीश्वरसेवात्वं** वा पक्षतावच्छेदकम्; येन पूर्वोक्तदोषः स्यादिति भावः । **व्यतिरेकोपलक्षिते**ति एतद्व्यक्तिव्यतिरिक्तक्रूरवदान्यसेवारूपव्यक्तिद्वय इत्यर्थः । क्रूरसेवायामंशतः **सिद्धसाधनम्,** वदान्यसेवायामंशतो **बाध** इति भावः । **तत्रावर्तमानस्ये**ति । पुत्रनाशादौ सपक्षे सेवात्वाभावादिति भावः । **निराश्रयतर्क इति** । तस्य मानान्तरा(प्रमाणा ?)नुग्राहकतया स्वतःप्रमाण-

---

सेवात्वेन पक्षत्वे दृष्टान्तासिद्धिप्रसङ्गात् विशेषरूपेणैव तत् वाच्यम् । तच्च रूपं यद्यनीश्वरसेवात्वम्, तदा तदवच्छिन्ने दुःखहेतुत्वस्य संप्रतिपन्नतया सिद्धसाधनम् । यदीश्वरसेवात्वम्, तदा बाधः; ईश्वरसेवायाः शास्त्रबलेन दुःखहेतुत्वाभावसिद्धेरिति । **सुखरूपेष्वि**ति दुःखहेतुत्वाभाववत्स्वित्यर्थः । **अनैकान्त्या-दि**ति । तत्र दुःखहेतुत्वाभावस्यानुभाविकत्वादिति भावः । ननु दुःखहेतुत्वेन संप्रतिपन्नक्रूरसेवाव्यक्ति तद्व्यक्तित्वेनोपादाय तद्व्यक्तिभिन्नसेवात्वस्य पक्षतावच्छेदकत्वाभ्युपगमान्न दृष्टान्तासिद्धिः; न वा सिद्धसाधनबाधावित्यत आह **एतदि**ति । **व्यतिरेकोपलक्षिते**ति । उक्तभेदविशिष्टेत्यर्थः । **व्यक्तिद्वय** इति । क्रूरसेवावदान्यसेवारूपव्यक्तिद्वय इत्यर्थः । **अन्यतरानतिपातादि**ति । उक्तपक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे उक्तपक्षतावच्छेदकाक्रान्तक्रूरसेवाव्यक्तौ अंशतः सिद्धसाधनम्; अवच्छेदकावच्छेदेन तथात्वे, वदान्यसेवाव्यक्तावंशतो बाध इति भावः । **केवलव्यतिरेकित्वविवक्षायामि**ति । तथासति ह्यन्वयदृष्टान्ताभावो न दोषायेत्यभिप्रायः । **दुःखहेत्वन्तरे**ति । पुत्रनाशादिरूपेति भावः । **असाधारणत्वप्रसङ्गादि**ति । पुत्रनाशादिरूपसपक्षस्य सत्त्वात् तत्र हेतोरसत्त्वाच्चेति भावः । ननु सेवात्वे दुःखहेतुत्वं स्यादिति संभावनातर्कबलात् दुःखहेतुत्वसिद्धिः स्यादित्याशङ्क्याह **तर्क इ**ति । **निराश्रय** इति । स्वानुग्राह्यत्वेन किञ्चन प्रमाणमनाश्रित इत्यर्थः । तर्कस्य हि प्रमाणानुग्राहकत्वमेव । न तु प्रमाणत्वमिति भावः । **केवले**ति । विपक्षे बाधकतर्कासहकृतेत्यर्थः । **व्याप्तिः**=व्याप्तिधीः । **अप्रयोजिके**ति । साध्यासाधिकेत्यर्थः । अनुमितिप्रतिबन्धिकाया आहार्यव्यभिचारशङ्कायाः आहार्य-साध्याभावशङ्काया वा तर्केणैव निवर्तनीयत्वात् । अन्यथा शब्दो नित्यत्वातिरिक्तशब्दधर्मातिरिक्त-धर्मवान् प्रमेयत्वादित्यादिमहाविद्यानुमानेनापि साध्यसिद्धिप्रसङ्गादिति भावः । वस्तुतो व्याप्तिधीरेव नेत्याह **व्यभिचार** इति । उपाधिमप्याह **दुःखे**ति । **उपाधिरि**ति । पापजन्यत्वस्य दुःखहेतुत्व-

(दासीभूतस्य) ईश्वरसेवायाः स्वरूपानुरूपत्वेन सुखरूपत्वमेवोपपन्नम्। तदेवं विषय-कारण-स्वरूप-विशेषविशिष्टज्ञानविशेषसाध्यो मोक्षः, स च निर्दुःखनिरतिशयानन्दरूपभगवदनुभवात्मक इति सिद्धम्। अन्येषां तु देहविच्छेदमात्र-सहस्रयुवतिसम्भोग-ज्ञानालीकलय-वासनात्यन्तविराम-विषयोपरागवैधुर्य-नित्योर्ध्वगमनार्हच्छरीरानुप्रवेश-विशिष्टनिरावरणत्व-वियातानुभव-स्वातन्त्र्यशिवसा-

---

त्वाभावादिति भावः। दासीभूतस्येति। अत्र भूतशब्दः साम्यवाची। पितृभूत इतिवत्। ततश्च दाससदृशस्येत्यर्थः। यद्वा बन्धदशायां स्वातन्त्र्याभिमानशालितया अदासत्वादभूततद्भावच्विप्रत्ययोपपत्तिः। दासभूतस्येति पाठस्तु सुगम एव॥

विषयकारणेति विषयविशेषो ब्रह्म। कारणविशेषो विवेकादिसाधनसप्तकम्। स्वरूपविशेषस्तु दर्शनसमानाकारत्वादिः। चार्वाकमतमाह। देहविच्छेदमात्र-सहस्रयुवतिसंभोगेति। धीसन्तानप्रणाशमुक्तिवादिप्रज्ञाकरमतमाह ज्ञानालीकलयेति। समस्तालीकविषयज्ञानसन्तानोच्छेद इत्यर्थः। न्यायपरिशुद्धयन्ते तथाभिधानात्। विषयवासनोच्छेदमुक्तित्ववादिबौद्धैकदेशिमतमाह वासनात्यन्तविरामेति। विषयोपरागलक्षणोपप्लवशून्यचित्सन्ततिमुक्तित्ववादिनां तदेकदेशिनामेव मतमाह विषयोपरागवैधुर्येति। जैनमतभेदान् आह नित्योर्ध्वगमनेत्यादिना। अर्हच्छरीरानुप्रवेशेति। अर्हतः शरीरानुप्रवेश इत्यर्थः। सर्वलोकमस्तकोपरिनिविष्टसाधारणदेहानुप्रवेश इत्यर्थः। विशिष्टनिरावरणत्वेति। निरावरणत्वविशिष्टत्वमित्यर्थः। लोकाकाशमतिक्रम्य सकललोकाकाशमस्तकस्थायिनि अलोकाकाशेऽवस्थानमिति तन्मतम्। वियातेति। वियातानुभवः प्रगल्भानुभवः। स एव च अपवर्गः। संसारदशायां हि विषयसम्बन्धवशेन तीव्रवायुविक्षिप्तदीपवन्न प्रागल्भ्यमिति द्रष्टव्यम्।

---

व्यापकत्वात्। ईश्वरसेवारूपपक्षावृत्तित्वाच्चेति भावः। ईश्वरसेवा सुखहेतुः पुण्यजन्यत्वात् स्वर्गादिप्राप्तिवदित्यनुमानस्य वा शास्त्रस्यैव वा ईश्वरसेवायां सुखहेतुताग्राहकप्रमाणस्यानुग्राहकं संभावनातर्कमाह निवृत्तेति। दासभूतस्येति। स्वाभाविकदासत्वाश्रयस्येत्यर्थः। दासीभूतस्येति क्वचित् पाठः। तत्र दासशब्देन स्वबुद्ध्याऽपि दासत्वं दासत्वबुद्धिविषयत्वरूपं विवक्षितमिति च्विप्रत्ययोपपत्तिः॥

विषयेत्यादि। विषयविशेषः=ब्रह्म, कारणविशेषः=विवेकादिसाधनसप्तकम्। स्वरूपविशेषः=दर्शनसमानाकारत्वादिः। देहविच्छेदः सहस्रयुवतिसंभोगो वा मोक्ष इति चार्वाकमतम्। ज्ञानालीकस्येति। विषयविषयिभावापन्नयोर्ज्ञानालीकयोरुच्छेद इत्यर्थः। अलीकविषयज्ञानसन्तानोच्छेद इति यावत्। स्पष्टमिदं न्यायपरिशुद्ध्यन्ते। इदञ्च प्रज्ञाकरमतम्। वासनात्यन्तविरामेति। विषयवासनोच्छेद इत्यर्थः। इदञ्च बौद्धैकदेशिमतम्। विषयोपरागवैधुर्येति। चित्सन्ततिनिष्ठा विषयोपरागात्मकोपप्लवशून्यतेत्यर्थः। इदमपि बौद्धैकदेशिमतमेव। नित्योर्ध्वगमनेति। अयञ्च जैनमतभेदः। अर्हच्छरीरानुप्रवेशेति। सर्वलोकमस्तकोपरिनिविष्टसाधारणदेहविशेषानुप्रवेश इत्यर्थः। विशिष्टनिरावरणत्वेति। आनन्दप्रकाशरूपविशेषयुक्तं निरावरणत्वमित्यर्थः। वियातानुभवः=प्रगल्भानुभवः। संसारदशायां विषयसंबन्धवशेन वायुविक्षिप्तदीपवन्न प्रागल्भ्यमिति भावः। इमे जैनमतभेदा इत्याहुः।

रूप्य-शिवसाम्यापत्ति-चिच्छक्तिपरिशेष-अविद्यानिवृत्ति उपाधिनिवृत्ति-सकलवैशेषिकगुणोच्छेद-केवलात्मानन्दानुभवप्रभृतयो निश्श्रेयसविकल्पा देहातिरिक्तात्मसद्भाव-बाह्यार्थपारमार्थिकत्व-तत्तदागमाप्रामाण्य-ब्रह्मनिर्विकारत्वनिर्दोषत्व-ज्ञानानन्दादिनित्यत्वप्रतिपादनादिभिर्दूषणीयाः। यदिह दृषद्विशेषनिश्श्रेयसवादिनां दृषन्मतीनामिदमनुमानम्-आत्मा कदाचिदखिलविशेषगुणशून्यः अनित्यवैशेषिकगुणाश्रयत्वात् उत्पद्यमानघट-प्रलयाकाशादिवदिति ; तत्रागमबाधस्तावत् व्यक्तः। ज्ञान-संस्कारपक्षे हेतोरन्यतरासिद्धिश्च। ज्ञानादीनां भवदभिमतगुणत्वानभ्युपगमात् सिद्धसाधनं स्वरूपा-

---

पाशुपतानां मतभेदानाह **स्वातन्त्र्यशिवसारूप्यशिवसाम्यापत्तिचिच्छक्तिपरिशेषेति**। मृषावादिनां मतमाह **अविद्यानिवृत्तीति**। यादवभास्करयोर्मतमाह **उपाधिनिवृत्तीति**। नैयायिकमतमाह **सकलवैशेषिकेति**। साङ्ख्यमतमाह **केवलेति**। **देहातिरिक्तात्मसद्भावेति** चार्वाकमतदूषणम्। **बाह्यार्थपरामार्थिकत्वेति**। **विषयोपरागवैधुर्येति** बौद्धैकदेशिमतदूषणम्। **तत्तदागमाप्रामाण्येति** चार्वाकबौद्धजैनशैवादिमतदूषणम्। **ब्रह्मनिर्विकारत्वेति** यादवभास्करमतदूषणम्। **निर्दोषत्वेति** मृषावादिमतदूषणम्। **ज्ञानानन्दनित्यत्वप्रतिपादनेति** नैयायिकमतदूषणमित्यादिऊह्यम्। **अनित्यवैशेषिकगुणाश्रयत्वादिति**। **वैशेषिकगुणाश्रयस्येश्वरे**ऽपि विद्यमानतया तत्र व्यभिचार-वारणाय **अनित्येति**। संयोगादिरूपानित्यगुणाश्रये तत्रैव व्यभिचारवारणाय **वैशेषिकेति**। **उत्पद्यमानघटप्रलयाकाशवदिति**। **उत्पद्यमानघटवत्** प्रलयाकाशवच्चेत्यर्थः। घटस्योत्पत्तिदशायाम् आकाशस्य प्रलयदशायाञ्च निर्गुणत्वादिति भावः। **आगमबाध इति**। "न विज्ञातुर्विज्ञातुर्विपरिलोपो विद्यते" इत्यागमबाध इत्यर्थः। अनित्यविशेषगुणाश्रयत्वं वदता किं ज्ञानस्वरूपपरिणतयो गुणत्वेनाभिप्रेताः, उत ज्ञानस्वरूपमेव ? नाद्य इत्याह **ज्ञानसंस्कारपक्ष इति**। इच्छादीनां ज्ञानपरिणाम-

---

**स्वातन्त्र्यम्, शिवसारूप्यम्, शिवसाम्यापत्तिः, चिच्छक्तिपरिशेषश्च** एते पाशुपतमतभेदाः। **अविद्यानिवृत्तिरिति** मृषावादिमतम्। **उपाधिनिवृत्तिरिति** यादवभास्करयोर्मतम्। **सकल-वैशेषिकगुणोच्छेद इति** नैयायिकमतम्। **केवलात्मानन्दानुभव इति** साङ्ख्यमतम्। **प्रभृति-शब्देन** नित्यसुखाविर्भावादयो **भूषणा**द्यभिमता ग्राह्याः। **देहातिरिक्तात्मसद्भावेति** चार्वाकदूषणम्। **बाह्यार्थपारमार्थिकत्वेति** बौद्धदूषणम्। **तत्तदागमाप्रामाण्येति** चार्वाकादीनां सर्वेषां दूषणम्। **ब्रह्मनिर्विकारत्वेति** यादवभास्करमतदूषणम्। **निर्दोषत्वेति** मृषावादिमतदूषणम्। **ज्ञानानन्दादि-नित्यत्वेति** नैयायिकमतदूषणम्। **आदिना** अन्यत्रोक्तास्तत्तन्मतदूषणप्रकारा ग्राह्याः। **ईश्वरे** व्यभिचार-वारणाय **अनित्येति**। संयोगादिकमादाय तत्रैव तद्वारणाय **वैशेषिकेति**। **उत्पद्यमानेत्यादि**। उत्पत्तिकालावच्छिन्नघटवत् प्रळयावच्छिन्नाकाशवच्चेत्यर्थः। उत्पत्तिकाले घटादेः, प्रळये आकाशस्य च निर्गुणत्वादिति भावः। **आगमबाध इति**। "न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" इत्यागमेन बाध इत्यर्थः। **ज्ञानसंस्कारपक्ष इति**। अयं भावः— इच्छात्वादयो धर्मभूतज्ञानस्यैवावस्थाविशेषाः। न त्विच्छादयोऽतिरिक्तगुणाः सन्ति। अतस्तान् आदायानित्यवैशेषिकगुणाश्रयत्वोपपादनं न संभवति। परन्तु

सिद्धिश्च। प्रलयाकाशादेरनभ्युपगमात् उत्पद्यमानघटादेरपि सगुणत्वाभ्युपगमादुदाहरणस्याश्रयहीनत्वसाध्यविकलते। प्रलयकालगतप्रकृत्यादेरपि सत्त्वादिगुणयोगात् परैरनभ्युपगमाच्च न तद्दृष्टान्तोपन्यासः। एवमस्मदीये ज्ञानसंस्कारपक्षे मुक्तावस्थायां ज्ञानस्याखिलविशेषगुणशून्यत्वमस्तु वा, मा वा, तथापि परानभ्युपगमात् नैष दृष्टान्तः। ज्ञानद्रव्यत्वतद्गतसंस्कारयोस्तैरनभ्युपगमादिति॥

ननु स्वात्मानन्दानुसन्धानरूपकैवल्याख्योऽपि मोक्षो भगवद्यामुनमुनिभिरुक्तः; "ऐश्वर्याक्षरयाथात्म्यभावचरणार्थिनाम्। वेद्योपादेयभावानामष्टमे भेद उच्यते॥" इति, "संसृत्यक्षरवैष्णवाध्वसु नृणां सम्भाव्यते कर्हिचित्" इति च। अनुसृतश्चायमर्थो भाष्यकारैरपि। तथा हि, "चतुर्विधा

---

त्वपक्ष इत्यर्थः। ज्ञानस्वरूपस्यैवेच्छादयः परिणतय इति पक्षे ज्ञानस्यैव परिणत्याश्रयतया आत्मस्वरूपे इच्छाद्याश्रयत्वाभावात् अन्यतरासिद्धिः। द्वितीयं दूषयति भवदभिमतेति। अस्मन्मते ज्ञानस्य नित्यद्रव्यत्वेन रूपादिवदागन्तुकगुणत्वानभ्युपगमात् सिद्धसाधनं स्वरूपासिद्धिश्चेत्यर्थः। उदाहरणस्येति। उदाहरणस्य दृष्टान्तस्य। आश्रयहीनत्वम्=असत्स्वरूपत्वमित्यर्थः। ननु भवदभिमतं ज्ञानद्रव्यमेव मुक्तिकालीनं दृष्टान्तो भविष्यतीत्याशङ्क्याह एवमस्मदीय इति। मुक्तावस्थायां कर्मकृतपरिणामाभावेऽपि धीविकासादिरूपानन्तगुणसम्भवमभिप्रेत्योक्तं मावेति। परानभ्युपगमादिति। नैयायिकैः स्वाभिमतस्यैव दृष्टान्तीकर्तव्यत्वादिति भावः॥

ऐश्वर्येति। ऐश्वर्यशब्दितप्राकृतभोगापेक्षया अक्षरशब्दितप्रत्यगात्मयाथात्म्यस्य कैवल्यस्य पृथक्कीर्तनादिति भावः। एवं, "संसृत्यक्षर" इत्यत्रापि द्रष्टव्यम्। वेद्येति। ज्ञातव्यानामनुष्ठे-

---

स्मृतिहेतुसंस्कारस्य शक्तिविशेषरूपस्यात्मनिष्ठतया तमादायैव हेतुरुपपादनीयः। तस्य ज्ञाननिष्ठत्वपक्षे तु आत्मन्यनित्यवैशेषिकगुणाश्रयत्वमेव सिद्धान्तिमते न संभवतीत्यन्यतरासिद्धिरित्यर्थः। भवदभिमतगुणत्वेति। द्रव्यव्यावृत्तजातिरूपत्वेन भवत्सम्मतगुणत्वेत्यर्थः। ज्ञानस्य तद्विशेषरूपेच्छादीनां च सिद्धान्ते द्रव्यत्वाभ्युपगमात् रूपादीनामेव तादृशगुणत्वसंभवः। संस्कारस्याद्रव्यतया तत्संभवेऽपि तस्य ज्ञाननिष्ठत्वमेवेति भावः। स्वरूपासिद्धिश्चेति। रूपादीनामेवानित्यविशेषगुणरूपतया तदभावस्यात्मनि मतद्वयेऽपि संप्रतिपन्नत्वादिति भावः। उदाहरणस्य=दृष्टान्तस्य, आश्रयहीनत्वम्=अप्रसिद्धिः। ननु सिद्धान्त्यभिमतज्ञानद्रव्यमेव मुक्तिकालीनं दृष्टान्तस्स्यात् तस्य संस्काररूपानित्यविशेषगुणवत्त्वात् मुक्तिकाले तदभावेन सकलविशेषगुणशून्यत्वाच्चेत्यत आह एवमिति। मुक्तिकाले प्राचीनसंस्काराणां विनाशभावेऽपि क्षत्यभावात् मा वेत्युक्तम्। परानभ्युपगमादिति। नैयायिकैः स्वाभिमतस्यैव दृष्टान्तीकरणीयत्वादिति भावः॥

ऐश्वर्येति। ऐश्वर्यापेक्षया भगवच्चरणापेक्षया चातिरिक्तस्य कैवल्याख्यपुरुषार्थस्याक्षरयाथात्म्य-

1 ननु सात्त्विकत्यागादिपूर्वकमेवाऽऽत्मावलोकनसाधनकर्मयोगज्ञानयोगानुष्ठानात् तस्य च भक्त्यर्थत्वात्, भूमविद्यायां प्राणरूपजीवोपासनस्य पृथक्फलाकीर्तनात्, पञ्चाग्निविद्यायाञ्च ब्रह्मशेषतयैव जीवोपासनात् ज्ञानयोगफलमात्मसाक्षात्कारः ऐहिक एव। अतः शेषत्वज्ञानिनाऽनुष्ठितस्य कैवल्यरूपामुष्मिकफलजनकत्वमेवासंभावितम्। व्यक्तवचनाभावाच्च इति तटस्थशंकां संप्रदायविरोधेन शमयन्, तस्यापि मोक्षत्वं शङ्कते नन्विति। "कैवल्यं भगवन्तञ्च मन्त्रोऽयं साधयिष्यति" इत्यादिप्रमाणमप्यत्र।

भजन्ते माम्" इत्यादौ, "जिज्ञासुः=प्रकृतिवियुक्तात्मस्वरूपावाप्तीच्छुः" इत्याद्युक्तेः। अष्टमाध्याया-रम्भेऽपि सप्तमार्थानुक्रमणे, "सुकृततारतम्येन च प्रतिपत्तिवैशिष्ट्यादैश्वर्याक्षरयाथात्म्यभगवत्प्राप्ती-च्छयोपासकभेदम्" इत्याद्युक्तेश्च। तथा, "कैवल्यार्थिनां स्मरणप्रकारमाह" इत्युक्त्वा, "यदक्षरं वेद" इति श्लोकमवतार्य, "सर्वद्वाराणि" इत्यादेर्व्याख्याने, "ओमित्येकाक्षरं ब्रह्म मद्वाचकं व्याहरन् वाच्यं मामनुस्मरन् आत्मनः प्राणं मूर्धन्याधाय देहं त्यजन् यः प्रयाति, स याति परमां गतिम्। प्रकृतिवियुक्तं मत्समानाकारमपुनरावृत्तिमात्मानं प्राप्नोतीत्यर्थः" इति चोक्तेः। अनन्तरञ्च, "एवमैश्वर्यार्थिनः कैवल्यार्थिनश्च स्वप्राप्त्यनुगुणं भगवदुपासनप्रकार उक्तः। अथ ज्ञानिनो भगवदुपासनप्रकारं प्राप्तिप्रकारञ्चाह" इत्युक्त्वा, "अनन्यचेताः" इत्येतद् व्याख्यातम्। "अतः परमध्याय-

---

यानाञ्चार्थानामित्यर्थः। **चतुर्विधा भजन्ते मामित्यादा**विति। "**चतुर्विधा भजन्ते मां** जनाः सुकृतिनोऽर्जुन। आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ॥" इति सप्तमाध्यायगतश्लोकव्याख्यानावसरे कैवल्यार्थ(र्थि?)वाचिजिज्ञासुशब्दार्थविवरणे प्रकृतिवियुक्तमेव स्वरूपं कैवल्यमिति निर्णीतमित्यर्थः। **उपासकभेदमित्यादी**ति। सुकृततारतम्येन च प्रतिपत्तिवैशिष्ट्यादैश्वर्याक्षरभगवत्प्राप्त्यपेक्षयोपासकभेदम्, भगवन्तं प्रेप्सोर्नित्ययुक्ततयैकभक्तितया चात्यर्थपरमपुरुषप्रियत्वेन च श्रैष्ठ्यम्, दुर्लभत्वञ्च प्रतिपाद्यैषां त्रयाणां ज्ञातव्योपादेयभेदांश्च प्रास्तौषीत्" इत्युक्तमिति भाष्यम्। अत्र **उपासकभेदमित्यस्य** प्रतिपाद्येत्यनेनान्वयः। **यदक्षरमि**ति। "**यदक्षरं वेदविदो** वदन्ति विशन्ति यद्यतयो वीतरागाः। यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत् ते पदं संग्रहेण प्रवक्ष्ये॥ **सर्वद्वाराणि** संयम्य मनो हृदि निरुध्य च। मूर्ध्न्याधायाऽऽत्मनः प्राणमास्थितो योगधारणाम्॥ **ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्। यः प्रयाति त्यजन् देहं स याति परमां गतिम्॥ अनन्यचेताः** सततं यो मां स्मरति नित्यशः। तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः॥ **मामुपेत्य** पुनर्जन्म दुःखालयमशाश्वतम्। नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः॥ आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन। **मामुपेत्य तु** कौन्तेय! पुनर्जन्म न विद्यते॥ सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो विदुः। रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः॥ अव्यक्ताद् व्यक्तयः सर्वाः प्रभवन्त्यहरागमे। रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके॥ भूतग्रामः स एवायं भूत्वाभूत्वा प्रलीयते। रात्र्यागमेऽवशः पार्थ! **प्रभवत्यहरागमे॥ परस्तस्मात्तु** भावोऽन्योऽव्यक्तोऽव्यक्तात् सनातनः। यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति॥ अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम्। यं प्राप्य न निवर्तन्ते **तद्धाम परमं मम॥ पुरुषः स परः** पार्थ! भक्त्या लभ्यस्त्वनन्यया" इति हि श्लोकक्रमः। **सर्वद्वाराणीत्यादेर्व्याख्यान इति**। "**सर्वद्वाराणि**", "ओमित्येकाक्षरम्" इति श्लोकद्वयव्याख्यान इत्यर्थः। "**एवमैश्वर्यार्थिनः**" इत्यादि

---

शब्देनाभिधानादिति भावः। **चतुर्विधा भजन्ते मामित्यादा**विति। "चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन। आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ" इति श्लोकव्याख्यानावसर इत्यर्थः। **जिज्ञासुः प्रकृतिवियुक्तात्मस्वरूपावाप्तीच्छुरित्यादी**त्यादिना, "**ज्ञानमेवास्य स्वरूपमिति जिज्ञासुरित्युक्तम्**"

शेषेण ज्ञानिनः कैवल्यार्थिनश्चापुनरावृत्तिम्, ऐश्वर्यार्थिनः पुनरावृत्तिश्चाह" इत्युक्त्वा, "मामुपेत्य" इत्यादिकम्, "प्रभवत्यहरागमे" इत्येतदन्तं व्याख्याय, "कैवल्यं प्राप्तानामपि पुनरावृत्तिर्न विद्यते इत्याह" इत्युक्त्वा, "परस्तस्मात्तु" इत्यादिकमपि, "तद्धाम परमं मम" इत्येतदन्तं व्याख्यातम्। अनन्तरञ्च, "ज्ञानिनः प्राप्यं तु तस्मादत्यन्तविभक्तमित्याह" इत्युक्त्वा, "पुरुषः स परः" इति श्लोको व्याख्यातः। अनन्तरञ्च, "आत्मयाथात्म्यविदः परमपुरुषनिष्ठस्य च साधारणीमर्चिरादिकां गतिमाह" इत्युक्तम्। अथ तत्र[त्य?] भाष्यग्रन्थ एवेह लिख्यते। तथा हि–"द्वयोरप्यर्चिरादिका गतिः श्रुतौश्रुता। सा चापुनरावृत्तिलक्षणा। यथा पञ्चाग्निविद्यायम्, "तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहः" इत्यादौ। अर्चिरादिना गतस्य परब्रह्मप्राप्तिरपुनरावृत्तिश्चाम्नाता, "स एनान् ब्रह्म गमयति एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते" इति। न च प्रजापतिवाक्यादौ श्रुतपरविद्याङ्गभूतात्मप्राप्तिविषयेयम्, "तद्य इत्थं विदुः' इति गतिश्रुतिः; "ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" इति परविद्यायाः पृथक्छ्रुतिवैयर्थ्यात्। पञ्चाग्निविद्यायाश्च, "इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति, "रमणीयचरणाः", "कपूयचरणाः" इति पुण्यपापहेतुको मनुष्यादिभावोऽपामेव भूतान्तरसंसृष्टानाम्, आत्मनस्तु तत्परिष्वङ्गमात्रमिति चिदचितोर्विवेकमभिधाय, "तत् य इत्थं विदुः, तेऽर्चिषमभिसम्भवन्ति, इमं मानवमावर्तं नावर्तन्ते" इति विविक्ते चिदचिद्वस्तुनी त्याज्यतया प्राप्यतया च य इत्थं विदुस्तेऽर्चिरादिना गच्छन्ति। न च पुनरावर्तन्ते इत्युक्तमिति गम्यते। आत्मयाथात्म्यविदः परमपुरुषनिष्ठस्य च, "'स एनान् ब्रह्म

भाष्यवाक्यम्। भाष्यग्रन्थ एवेति। "द्वयोः" इत्यारभ्य, "यस्यात्मा शरीरम् इत्यादिश्रुतिसिद्धम्" इत्यन्तो भाष्यग्रन्थो द्रष्टव्यः। तेऽर्चिषमिति। "तद्य इत्थंविदुः" इति प्राकप्रस्तुताः पञ्चाग्निविद्यानिष्ठाः परामृश्यन्ते। "ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" इति श्रद्धापूर्वकं ब्रह्मोपासीनाः परामृश्यन्ते। तेऽर्चिषमभिसम्भवन्तीत्यत्र तच्छब्देन प्रकृतानामुभयेषामपि परामर्श इति भावः। ननु, "तद्य इत्थं विदुः" इति न केवलं जीवनिष्ठाः परामृश्यन्ते। येन तेषामप्यर्चिरादिगतिर्ब्रह्मप्राप्तिर्वा प्रसजेत्। अपि तु ब्रह्मविद्याङ्गभूतजीवनिष्ठा इत्याशङ्क्य, "ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" इत्यनेनैव ब्रह्मविदां सर्वेषां परामृष्टतया, "तद्य इत्थं विदुः" इति पृथक्कीर्तनवैयर्थ्यादिति परिहरति न च प्रजापतीति। "अयमात्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः। सोऽन्वेष्टव्यः स विजिज्ञासितव्यः। सर्वान् लोकान् आप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानातीति प्रजापतिरुवाच" इति प्रजापतिवाक्यश्रुतपरविद्याङ्गभूतात्मोपासननिष्ठविषया न भवतीत्यर्थः। इति तु पञ्चम्यामाहुताविति। उक्तेन प्रकारेण योषिद्रूपाग्न्याधारायां रेतोरूपायां पञ्चम्यामाहुतौ अप्छब्दनिर्दिष्टानि भूतसूक्ष्माणि पुरुषाकारतां भजन्तीत्यर्थः। रमणीयचरणाः रमणीयकर्माणः। कपूयचरणाः कुत्सितकर्माणः। "त्र्यात्मकत्वात्तु भूयस्त्वात्" इति सूत्रं हृदि निधायाह अपामेव भूतान्तरसंसृष्टानामिति। त्याज्यतया प्राप्यतया चेति—क्रमो न विवक्षितः।

इत्यस्य संग्रहः। भाष्यग्रन्थ इति। "द्वयोः" इत्यारभ्य, "यस्यात्मा शरीरमित्यादि श्रुतिसिद्धम्" इत्यन्तो भाष्यग्रन्थ इति बोद्धव्यम्॥ अचिरसंसृष्टावस्थाविषयमिति। संसारदशाभिप्रायमित्यर्थः। न तु कैवल्यदशाविषयमिति भावः॥

गमयति' इति ब्रह्मप्राप्ति[illegible]कमात्मवस्तु ब्रह्मात्मकतया ब्रह्मशेषतैकरसमित्यनुसन्धेयम् । तत्क्रतुन्यायाच्च । परशेषतैकरसत्वञ्च, 'य आत्मनि तिष्ठन्...यस्यात्मा शरीरम्', इत्या[illegible]" इति । अतोऽक्षरनिष्ठस्याप्यर्चिरादिगतिः सिद्धा । [1]यत्तु, "यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति" इत्यस्याक्षरविषयस्य व्याख्याने, "सर्वेषु वियदादिभूतेषु सकारणेषु सकार्येषु विनश्यत्सु तत्रतत्र स्थितोऽपि न विनश्यति" इत्युक्तम्; तदप्यचित्संसृष्टावस्थाविषयम् । अन्यथा पूर्वोक्तगतिविरोधा[illegible] । द्वादशाध्याये च, "ये त्वक्षरम्" इत्यत्र, 'तेऽपि मां प्राप्नुवन्त्येव — मत्समानाकारमसंसारिणमात्मा[illegible] प्राप्नुवन्त्येवेत्यर्थः' इत्युक्तम् । अतः साम्प्रदायिक एवायं कैवल्याख्यो मोक्ष इति केचित् (इति चेत्?)[2]

[3]अत्रोच्यते—न तावदयं मोक्षो भाष्यकाराभिमतः; शारीरकभाष्ये व्यक्त[illegible] । तथा हि, "वाक्यान्वयात्" इत्यधिकरणे तावत्, "अमृतत्वस्य परमपुरुषवेदनैकोपायतया प्रतिपादनात्" इत्युक्त्वा, "परमपुरुषविभूतिभूतस्य प्राप्तुरात्मनः स्वरूपयाथात्म्यवेदनमपवर्गसाधनभूतपरमपुरुषवेदनोपयोगितयाऽवगन्तव्यम्; न स्वत [illegible]न" इत्युक्तम् । तथा, "येयं प्रेते विचिकित्सा

---

ब्रह्मप्राप्तिवचनादिति । सर्वात्मना ब्रह्मज्ञानाभावे ब्रह्मप्राप्त्यभावादिति भावः । तत्क्रतुन्यायाच्चेति । "यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति" इति न्यायादित्यर्थः । अत्र क्रतुशब्द उपासनपरः यथोपासते तथा फलं प्राप्नुवन्तीत्यर्थः । ननु परशेषतैकरसस्वात्मानुसन्धानेऽपि तत्क्रतुन्यायेन परशेषतैकरसस्वात्मप्राप्तेरेवोचितत्वात् ब्रह्मप्राप्तिर्न स्यात् । न चेष्टापत्तिः; "तद् य इत्थं विदुर्ये चेमेऽरण्ये" इति ब्रह्मविच्चुल्यतया ब्रह्मप्राप्तिश्रवणादिति चेन्न; तत्क्रतुन्यायेन, "स एनान् ब्रह्म गमयति" इत्यत्र पञ्चाग्निविद्यानिष्ठेषु ब्रह्मात्मकस्वात्मप्राप्तिमात्रम्, ब्रह्मविद्याविषये तु साक्षाद्ब्रह्मप्राप्तिरिति वैषम्याश्रयणे दोषाभाव इति भाष्यकृदभिप्राय इति पूर्वपक्ष्यभिप्रायः । अचित्संसृष्टावस्थाविषयमिति संसारदशाभिप्रायम्; न तु कैवल्यावस्थाविषयमिति भावः । ये त्वक्षरमित्यत्रेति । "ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते । सर्वत्रगमचिन्त्यञ्च कूटस्थमचलं ध्रुवम् ॥ सन्नियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः । ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥" इति श्लोकव्याख्यानावसर इत्यर्थः । अक्षरं प्रत्यगात्मस्वरूपमित्यर्थः ।

न तावदयं मोक्ष इति । केवलप्रत्यगात्मयाथात्म्यज्ञानसाध्यः प्रत्यगात्मप्राप्तिरूपो मोक्ष इत्यर्थः । "वाक्यान्वयात्" इत्यधिकरण इति । मोक्षस्य परमपुरुषवेदनैकसाध्यत्वावगमादतश्चायं

---

अयमिति । प्रत्यगात्मयाथात्म्यज्ञानसाध्यः प्रत्यगात्मप्राप्तिरूप इत्यर्थः । मोक्षो भाष्यकाराभिमत इति । मोक्षत्वेन भाष्यकारसंमत इत्यर्थः । न स्वत एवोपायत्वेनेत्युक्तमिति । तथाचोक्तस्य प्रत्यगात्मयाथात्म्यज्ञानसाध्यस्य मोक्षत्वाभ्युपगमे तद्विरोधः स्पष्ट एवेति भावः ।

---

1 ननु, 'यः प्रयाति त्यजन् देहम्' इति त्यक्तदेहजीवानुभवः परमगतिरित्युक्तम्; अन्यत्र शरीरस्थितेऽपि परमगतित्वम्; अतो न कैवल्यं स्थलान्तरे इत्याशंक्य [illegible] तद्दर्शनविशिष्टात्मदर्शनदशामादाय परमगतित्वोक्तावपि मुख्यपरमगतित्वं स्थलान्तर एवेति प्रत्याह यत्त्वित्यादिना । 2 इति केचिदिति न स्वरसम् । नन्विति पूर्वपक्षारम्भात् इति चेदिति विगमनीयम् । 3 कैवल्यमिति फलमिष्टम् । तस्य मोक्षत्वं तु न भाष्यतः प्रतीयते; संप्रदायविरोधश्चेति प्रत्याह ।

मनुष्ये" इत्यादिव्याख्याने तत्तद्वाद्यभिमतमोक्षविकल्पान् उपन्यस्य, 'त्रय्यन्तनिष्णातास्तु' इत्यादिना जीवपरयोः स्वरूपस्वभावानप्यभिधाय, "जीवस्यानादिकर्मरूपाविद्यातिरोहितस्य अविद्योच्छेदपूर्वकस्वाभाविकपरमात्मानुभवमेव मोक्षमाचक्षते" इत्युक्तम्। "सर्वकर्मविनिर्मुक्तात्मस्वरूपावाप्तिर्हि भगवत्प्राप्तिगर्भा; 'त इमे सत्याः कामा अनृतापिधानाः' इति भगवतो गुणगणस्य तिरोधायकत्वेनानृतशब्देन स्वकर्मणः प्रतिपादनात्" इति वेदार्थसंग्रहेऽभिहितम्। एवं वरदविष्णुमिश्रैरपि, "नन्वेवं निश्शेषकर्मक्षयाभावात् कैवल्यप्राप्तौ न मुक्तः स्यात्" इत्याशङ्क्योक्तम्, "सत्यम्; अमुक्त एव सः। मोक्षस्य परमात्मानन्दानुभवरूपत्वात्, तस्य ब्रह्मानन्दानुभवाभावात् स्वानन्दमात्रानुभवात्। स्वानन्दमात्रानुभवश्च, "योगिनाममृतं स्थानं स्वात्मसन्तोषिणश्च ये(तोषकारिणाम्)" इति भगवत्पराशरवचनात्। मुक्तिव्यतिरिक्तमनपायि [1]योगसाध्यमैश्वर्यम्" इति। भट्टपराशरपादैरध्यात्मखण्डद्वयव्याख्यायाम् ऐश्वर्याक्षरयोः अपवर्गव्यतिरिक्ततया तुल्यत्वं दर्शितम्। "अन्येष्वैश्वर्याक्षरभोगेषु अनपेक्षया जुगुप्सया साधिष्ठानम्" इत्यादिना।

यदि चासौ मोक्षः, तदा स्वाभाविकरूपप्राप्तिमन्तरेण[2] न पर्यवसानम्। यदि पर्यवसानम्, तदा [3]नित्यसंसारविशेष एवायमिति मन्तव्यम्। अशरीरस्य कथं संसारित्वमिति चेत्, कथं

---

कैवल्यं न मोक्ष इति भावः। तत्तद्वाद्यभिमतेति। "बहुधा विप्रतिपद्यन्ते—केचिद्वित्तिमात्रस्यात्मनः स्वरूपोच्छित्तिलक्षणं मोक्षमाचक्षते; अन्ये वित्तिमात्रस्यैव सतोऽविद्यास्तमयम्; अपरे पाषाणकल्पस्यात्मनो ज्ञानाद्यशेषवैशेषिकगुणोच्छेदलक्षणं कैवल्यरूपम्। अपरे त्वपहतपाप्मानं परमात्मानमभ्युपगच्छन्तस्तस्यैवोपाधिसंसर्गनिमित्तजीवभावस्योपाध्यपगमेन तद्भावलक्षणमातिष्ठन्ते। त्रय्यन्तनिष्णातास्तु निखिलजगदेककारणस्याशेषहेयप्रत्यनीकानन्तज्ञानानन्दैकस्वरूपस्य स्वाभाविकानवधिकातिशयासङ्ख्येयकल्याणगुणाकरस्य सकलेतरविलक्षणस्य सर्वात्मभूतस्य परस्य ब्रह्मणः शरीरतया प्रकारभूतस्यानुकूलापरिच्छिन्नज्ञानस्वरूपस्य परमात्मानुभवैकरसस्य जीवस्यानादिकर्मरूपाविद्यातिरोहितस्वरूपस्याविद्योच्छेदपूर्वकस्वाभाविकपरमात्मानुभवमेव मोक्षमाचक्षते" इत्युक्तमित्यर्थः। भगवत्प्राप्तिगर्भेति। भगवत्प्राप्त्यविनाभूतेत्यर्थः। तमेवार्थमुपपादयति त इमे सत्याः कामा इत्यादिना। कर्मणः प्रतिपादनादिति। ततश्च कैवल्ये तादृशकर्मणो नाशात् भगवद्गुणानुभवोऽवश्यम्भावीति भावः। अनपायीति। आपेक्षिकमनपायित्वमिति भावः। नित्यसंसारविशेष एवायमिति। बद्धस्य यदाकदाचित्

---

स्वाभाविकपरमात्मानुभवमेव मोक्षमाचक्षत इत्युक्तमिति। तथाचोक्तप्रत्यगात्मप्राप्तेः मोक्षरूपत्वे तद्विरोधो दुर्वार इति भावः। भगवत्प्राप्तिगर्भेति। भगवत्प्राप्तिव्याप्येत्यर्थः। ततश्च भगवत्प्राप्तिरहितसर्वकर्मनिर्मुक्तात्मस्वरूपप्राप्तिरेव न संभवतीति भावः। व्याप्तिमेवोपपादयति त इम इति। अनपायीति। आपेक्षिकमनपायित्वं चिरकालस्थायित्वरूपमिह विवक्षितम्। इदञ्चैश्वर्यविशेषणम्। नित्यसंसारविशेष एवायमिति। कैवल्यस्य नित्यत्वे कदाचिदपि भगवदनुभवासंभवात् कैवल्यहेतुभूतं

---

1 अत्र कैवल्ये अनपायित्वमुक्तम्, स्थानभ्रंशेऽपि आत्मानुभवोऽनुवर्तेत इत्याशयः।

2 स्वरूपप्राप्तिमन्तरेण = स्वरूपाविर्भावं विना। 3 नित्यसंसारेति। आत्मगुणानां कामानामीषदनुभूयमानत्वेऽप्यनाविर्भावादनृतापिधानतयाऽस्य सकर्मत्वात्।

वा प्रलयदशापन्नस्य? तदानीमप्युत्तरशरीराद्यारम्भयोग्यसूक्ष्माचित्संसर्गादिति चेत्; अस्याप्यचित्संसर्गोऽभ्युपगन्तव्य एव। अतः शरीरारम्भो भविष्यति न वेत्येष [1]एव विशेषः। किमस्याचित्संसर्गे[2] प्रमाणमिति चेत्; स्वपरयाथात्म्यानुभवाभावः। मायायवनिकान्तर्हितो हि जीवो यथावस्थितं स्वरूपं न जानाति। किं कारणमिति चेत्; कर्मविशेषः। उक्तञ्च वेदार्थसंग्रहे, "सर्वकर्मविनिर्मुक्तात्मस्वरूपावाप्तिर्हि भगवत्प्राप्तिगर्भा। 'त इमे सत्याः कामा अनृतापिधानाः' इति भगवतो गुणगणस्य तिरोधायकत्वेनानृतशब्देन स्वकर्मणः प्रतिपादनात्" इति। यद्यस्य निश्शेषाविद्याविलयेऽपि परमात्मयाथात्म्यानुभवो न स्यात्, [3]अन्येषामपि तथा स्यात्; अविशेषात्। तावदेवास्य स्वाभाविकरूपं स्यात्। अचित्संसर्गेऽपि कथमसौ पुनर्न संसरतीति चेत्; कैवल्य[4]हेतुकर्मजनितभगवत्संकल्पस्य तथाविधत्वादिति भाव्यम्। ननु तापत्रयाभि-

---

अपहतपाप्मत्वादिविशिष्टस्वाभाविकरूपप्राप्तिशङ्काऽस्ति। एतस्य तु कदापि नास्ति; कैवल्यस्य नित्यत्वाङ्गीकारात्। तथाच कैवल्यं कष्टमेव स्यादिति भावः। **किमस्येति**। उत्तरकालभाविशरीरसम्बन्धविधुरस्येत्यर्थः। **मायेति**। **मायाशब्देन** प्रकृतिरुच्यते। ननु **निश्शेषाविद्याविलयेऽपि** केवलस्य न परमात्मानुभवप्रसङ्गः; अविद्याविलयस्य स्वाभाविकस्वरूपाविर्भावमात्रप्रयोजकत्वात्, परमात्मानुभवस्य चास्वाभाविकत्वादित्याशङ्क्याह **तावदेवेति**। स्वाभाविकस्वरूपाविर्भावस्य परमात्मानुभवपर्यन्तत्वेन

---

भगवत्सङ्कल्पस्य स्वर्गादिप्राप्तिहेतुभगवत्सङ्कल्पस्येव भगवदनुभवविरोधित्वेन भगवदनुभवसापेक्षं प्रति पापरूपतया संसारात्मकत्वादिति भावः। **अशरीरस्य कथं संसारित्वमिति**। शरीरित्वस्य संसारित्वव्यापकत्वादिति भावः। **कथं वा प्रलयदशापन्नस्येति**। संसारित्वमित्यनुषज्यते। तथाच व्यभिचारान्न शरीरित्वस्य संसारित्वव्यापकत्वमिति भावः। ननु शरीरित्वस्य संसारित्वव्यापकत्वविरहेऽप्यचित्संसर्गस्य तथात्वमस्त्येव; प्रलयदशायामपि सूक्ष्माचित्संसर्गसद्भावात्। ततश्च केवले तदभावात् कथं संसारित्वमित्यभिप्रायेण शङ्कते **तदानीमपीति**। केवलेऽप्यचित्संसर्गसद्भावान्न संसारित्वानुपपत्तिरिति समाधत्ते **अस्यापीति**।

**किमस्याचित्संसर्गे प्रमाणमिति**। भाविशरीरसंबन्धे सत्येव ह्यचित्संसर्गस्यावश्यकता, कैवल्यस्य नित्यत्वपक्षे भाविशरीरसंबन्धाभावादचित्संसर्गे प्रमाणाभाव एवेति भावः। **मायायवनिकेति**। प्रकृतिरूपतिरोधायकेत्यर्थः। **कर्मविशेष इति**। त्रिगुणतिरस्करिणीतिरोधानसङ्कल्प इत्यर्थः। त्रिगुणद्रव्यसंबन्धाधीनयथावस्थितभगवदनुभवाभावसङ्कल्प इति यावत्। तथाचोक्तसङ्कल्पसत्त्वे अचित्संसर्ग आवश्यकः। तदभावे तु भगवदनुभवस्यावश्यकतया न कैवल्यसंभव इति कैवल्यवतामचित्संसर्गोऽप्येनोक्तसङ्कल्पविषयत्वेनाचित्संसर्गसिद्धिरिति भावः। अत्रेदं बोद्धव्यम्—वस्तुस्थितिमनुसृत्याचित्संसर्गावश्य-

---

1 विषयानुभावौपयिकसर्वकर्मक्षयसंभवे शरीरारम्भो न भविष्यति। तत्क्षये प्रमाणाभावे तु भविष्यत्येवेत्येवंरूपो विशेषः। प्रथमः पञ्चाग्निविद्यानिष्ठे। अन्यत्रोत्तरः। 2 अचित्संसर्गे = अचित्परिणामकर्मसंसर्गे—तदधीनभगवत्संकल्पविषयत्वे। वक्ष्यमाणभाष्याद्यनुसारात्।

3 अन्येषामपि = परविद्यया मुक्तानामपि। तावदेवेति। यथा हि द्वैतिमते ईश्वरप्रसादाधीनो मोक्षः स्वानुभवमात्रात्मकस्वरूपाविर्भावः। 4 कैवल्यं हि विषयास्वादपरमात्मानुभवोभयराहित्यम्। तत् कैवल्यमनपायीति पक्षे एवमेव स्यादिति।

इतोऽयमीश्वरज्ञानादेव विशुद्धिं गतः, तत् कथं विशदस्वात्मानुभवदशायामीश्वरं विस्मरेदिति चेत्; सम्यगुक्तम्। तथापि कैवल्यसद्भावे निर्बन्धश्चेत्[1], पूर्वोक्त एव हेतुः। उक्तञ्च सङ्गतिमालायां श्रीविष्णुचित्तैः, "ननु ब्रह्मप्राप्तीच्छयोपक्रान्तस्योपासनस्य कथं केवलप्रापकत्वम्? उच्यते; यथा स्वर्गकामस्यैव यागे प्रक्रान्तस्य यथावदननुष्ठाने ब्रह्मराक्षसत्वादि भवति" इति। ननु कस्यैवंविधे स्वाभाविकभगवदनुभवयोग्यतागन्धविधुरतया दग्धबीजपर्याये स्वात्मन्यभिलाषः स्यादिति चेत्—हन्त! अनेवंविधेष्वपि स्वर्गपशुपुत्रभिक्षौदनादिष्वभिलाषिणो दृश्यन्ते; किं पुनरतिशयानन्दशालिन्येवंविधे। प्रसिद्धञ्च प्रियास्पदत्वं स्वात्मनः। आगमश्च, "आश्चर्यवत्पश्यति कश्चिदेनम्" इत्यादि। सुप्तोत्थितप्रत्यभिज्ञानं सुखमहमस्वाप्समित्येवंरूपं प्रागेवोक्तम्। प्रपञ्चितञ्च भाष्यादिषु। श्रीविष्णुचित्तैश्चोक्तम्, "स्वापे सुखत्वाभिज्ञानात् तद्विच्छेदे च रोषतः। तदर्थमन्यत्यागाच्च श्रुतिस्मृतिशतैरपि[2]" इति।

कथमिह [3]मोक्षव्यपदेश इति चेत्—दुःखहेतुभूतदेहेन्द्रियात्यन्तविलयात्। केन मार्गेण कैवलो गच्छति? [4]कुत्र तिष्ठति? इति चेत्; [येन केनापि?] यत्रकुत्रापि। न तावत् अर्चिरादिगतिः प्रकृतेः परस्ताद् वासश्चास्य युज्यते। परमात्मोपासनप्रकरणेष्वेव तयोः श्रवणात्। "तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" इति विभागस्यापि परमात्मात्मकस्वात्मानुसन्धान-स्वात्म-

---

तस्यापि स्वाभाविकत्वादित्यर्थः। आश्चर्यवदिति। "आश्चर्यवत्पश्यति कश्चिदेनं आश्चर्यवद्वदति तथैव चान्यः। आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाऽप्येनं वेद न चैव कश्चित्॥" अस्यार्थः—आश्चर्यवत्। आश्चर्यम्=अदृष्टमद्भुतम्; तद्वत्पश्यतीत्यर्थः। एवमुत्तरत्रापि द्रष्टव्यम्। तदर्थमन्यत्यागाच्चेति। भोजनाध्ययनादीनां त्यागाच्चेत्यर्थः। श्रुतिस्मृतीति। पूर्वोक्ता श्रुतिर्द्रष्टव्या।

---

कतोक्ता। अचित्संसर्गानभ्युपगमेऽपि भगवदनुभवविरोधिसङ्कल्पसद्भावाभ्युपगमस्यावश्यकतया तस्यैव ज्ञानसङ्कोचहेतोः पापरूपतया संसारारम्भकत्वात् कैवल्यस्य नित्यत्वे केवलस्य नित्यसंसारित्वं दुर्वारमिति। पूर्वोक्त एवेति। कैवल्यहेतुजनितभगवत्सङ्कल्प एवेत्यर्थः। आश्चर्यवदिति। "आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्यः। आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाऽप्येनं वेद न चैव कश्चित्" इति

---

1 निर्बन्धश्चेदिति। संप्रदायाविरोधाय कैवल्यस्य त्वयाऽपि साधनादिति भावः। 2 आत्मरूपसुखस्य स्वापे धर्मभूतज्ञानागृहीतत्वेऽपि कैवल्ये तद्ग्राह्यत्वमप्यस्ति। 3 व्यपदेशः=सांख्यतार्किकवासनामूलकतिपयग्रन्थगतः। 4 ननु शुक्लकृष्णगतिद्वयस्यैव शास्त्रे प्रतिपादनात् स्थलान्तरानुभाव्यं प्राकृतभोगैश्वर्यभोगरूपपुरुषार्थद्वयमेव; जीवात्मानुभवस्तु योगजन्यः भक्त्युपसर्जनभूतः स्थूलदेहकालिक एवेति कैवल्यनिरासं सिद्धान्ते मन्यमानस्य शंकेयम्। केनेति प्रश्नानुसारात् येनकेनापीति चोत्तरेण भाव्यम्। स्वर्गापवर्गयोर्मार्गद्वये प्रसिद्धे सत्यपि मार्गान्तरेण तत्र गमनं कतिपयपुरुषविषये इष्टम्। कथं पुनः कैवल्ये सिद्धे मार्गनिर्देशमात्रेण तदभावशंका। अस्तु वा कैवल्यकामो यत्र लोके देशे वा म्रियते, तत्रैव तदनुभवः। न तु फलस्यापलाप इति मार्गविचारानावश्यकत्वाभिप्रायेणैवमुक्तम्। वस्तुतः पञ्चाग्निविद्यानिष्ठस्यार्चिरादिमिश्रं मार्गान्तरम्; अन्यस्य तु केवलस्य तदमिश्रमिति मनसिकृत्य येन केनापीत्युक्तम्। तथा मध्येपथं पञ्चाग्निविद्यानिष्ठः कामं परमपदपरिसर एव कैवल्यमनुभवतु; अन्यस्तु योगिनाममृतमिति दर्शिते स्थाने। तस्यामृतत्वञ्च, "आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते" इति परिभाषितम् इत्याशयेन यत्रकापीत्युक्तम्। अत्र कैवल्यस्य मोक्षत्वशंकी स्वाभिमतमर्चिरादिमार्गमुपस्थापयेदिति तन्निरासायाह न तावदिति।

शारीरकपरमात्मानुसन्धानभेदमूलत्वात् । यदि चास्यार्चिरादिमार्गेण गतिः स्यात्, तदा विशिष्टदेशप्राप्त्या निश्शेषाविद्यानिवृत्तिर्ब्रह्मप्राप्तिश्च स्यादेव ; "स एनान् ब्रह्म गमयति" इति श्रवणात् । सूत्रञ्च "दर्शनाच्च" इति । एवञ्च सति ज्ञानसंकोचहेतुभूताविद्यात्यन्तविलयात् सर्वज्ञत्वादिप्रसङ्गो दुष्परिहरः । भगवद्यामुनमुनिभिरपि, "संसृत्यक्षरवैष्णवाध्वसु[1]" इति वैष्णवाध्वा पृथगुपदिष्टः । अक्षिपुरुषस्य परमात्मत्वनिर्णयायोक्ते, "श्रुतोपनिषत्कगत्यभिधानाच्च" इति सूत्रे भाष्यञ्च, "अधिगतपरमपुरुषयाथात्म्यस्यानुसन्धेयतया श्रुत्यन्तरप्रतिपाद्यमानार्चिरादिका गतिर्या, तामपुनरावृत्तिलक्षणपरमपुरुषप्राप्तिकरीमुपकोसलायाक्षिपुरुषं श्रुतवते" इत्यादि। अतोऽपि केवलात्मानुसन्धायिनोऽर्चिरादिगतिर्नास्ति । अन्यथा तया परमात्मनिर्णयायोगात् । "अप्रतीकालम्बनान्नयतीति

---

**दर्शनाच्च** । दर्शयति च श्रुतिर्मूर्धन्यनाड्या निर्गम्य देवयानेन गतस्य परब्रह्मप्राप्तिम्, 'एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इति । **वैष्णवाध्वेति** । वैष्णवाध्वन एव मोक्षत्वमिति स्वमतदार्ढ्याभिमानादेवमुक्तम्। यद्यपि वैष्णवाध्वापेक्षया पृथग्व्यपदेशवत्, संसृत्यपेक्षयापि व्यपदेशोऽस्त्येव, तथापि पूर्वोक्तयुक्तिषु तात्पर्यम् । **अक्षिपुरुषं श्रुतवते इति**। "तेऽर्चिषमभिसम्भवन्ति अर्चिषोऽहरह्न आपूर्यमाणपक्षम्" इत्यारभ्य, "चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति एष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते" इत्यन्तेनोपदिशति" इत्येतत् आदिपदग्राह्यम् । **प्रपञ्चितं भाष्ये इति** । "**अप्रतीकालम्बनान्नयतीति बादरायण** उभयथा च दोषात् तत्क्रतुश्च" । **अप्रतीकालम्बनान्** प्रतीकालम्बनव्यतिरिक्तान् **नयत्यर्चिरादिरातिवाहिको गण इति** भगवान् **बादरायणो** मन्यते । एतदुक्तं भवति—कार्यमुपासीनान् नयतीति नायं पक्षः संभवति । परमेवोपासीनानित्यपि नियमो नास्ति । न च प्रतीकालम्बनानपि नयति । अपितु ये परं ब्रह्म उपासते, ये चाऽऽत्मानं प्रकृतिवियुक्तं ब्रह्मात्मकमुपासते, तान् उभयविधान् नयति । ये तु ब्रह्मकार्यान्तर्भूतनामादिकं वस्तु देवदत्तादिषु सिंहादिदृष्टिवत् ब्रह्मदृष्ट्या केवलं वा तत्तद्वस्तूपासते, न तान् नयति । अतः परं ब्रह्मोपासीनान् आत्मानञ्च प्रकृतिवियुक्तं ब्रह्मात्मकमुपासीनान् नयतीति । कुतः ? उभयथा च दोषात् । कार्यमुपासीनान् नयतीति पक्षे, "अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य" इत्यादिकाः श्रुतयः प्रकुप्येयुः । परमेवोपासीनान् नयतीति च नियमे, "तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते, तेऽर्चिषमभिसम्भवन्ति' इति पञ्चाग्निविदोऽर्चिरादिगणो नयतीति श्रुतिः प्रकुप्येत् । अत

---

**गीता**वचनम् । आश्चर्यमदृष्टपूर्वमद्भुतम्, तद्वत् पश्यतीत्यर्थः । एवमुत्तरत्र द्रष्टव्यम् । **दर्शनाच्चेति** । दर्शयति च श्रुतिर्मूर्धन्यनाड्या निष्क्रम्य देवयानेन गतस्य परब्रह्मप्राप्तिम्, "एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इति, इत्युक्तसूत्रार्थः । **वैष्णवाध्वा पृथगुपदिष्ट इति** । अनेनाक्षरशब्दनिर्दिष्टकैवल्यवतां वैष्णवाध्वशब्दनिर्दिष्टार्चिरादिगतिः, परमपदप्राप्तिर्वा नास्तीति लभ्यत इति भावः । **अन्यथेति** । केवलात्मानुसन्धायिनोऽर्चिरादिगतिसत्त्व इत्यर्थः । **तया परमात्म**

---

1 अध्वपदस्य त्रिष्वप्यन्वये अध्वभेदः स्पष्टः । वैष्णवाध्वेति पृथक्करणे वैष्णवपदस्य तदध्वनश्च नियतसंबन्धसूचनात् कैवल्यस्य न सोऽध्वेति सिध्यति ।

बादरायणः" इति सूत्रे चात्र वक्तव्यं सर्वं प्रपञ्चितं भाष्ये । पञ्चाग्निविद्यानिष्ठस्यापि प्रकृतिविनिर्मुक्त-ब्रह्मात्मकस्वात्मानुसन्धायित्वं तत्रैव तत्क्रतुन्यायादिना निर्णीतम्। भूमविद्यागतप्राणशब्दवाच्य-केवलजीवोपासकस्य चार्चिरादिगतिः कण्ठोक्त्या प्रतिषिद्धा, "नामादिप्राणपर्यन्तप्रतीकालम्बनानां तु उभयविधश्रुतिसिद्धोपासनाभावात् तत्क्रतुन्यायाच्चार्चिरादिगतिर्ब्रह्मप्राप्तिश्च न विद्यते" इत्यादिना । नामादिप्राणपर्यन्तोपासकानां, 'विशेषञ्च दर्शयति' इति सूत्रेण फलान्तरञ्च प्रदर्शितम् । तदधिक-रणोपसंहारे चोक्तम्, 'तस्मादचिन्मिश्रं केवलं वा चिद्वस्तु ब्रह्मदृष्ट्या तद्वियोगेन च य उपासते ; न तान् नयति ; अपि तु परं ब्रह्मोपासीनान्, आत्मानञ्च प्रकृतिवियुक्तं ब्रह्मात्मकमुपासीनान् आति-वाहिको गणो नयतीति सिद्धम्' इति । सारे चोक्तम्, 'पञ्चाग्निविद्स्तु प्रकृतिवियुक्तात्मस्वरूपं, 'य आत्मनि तिष्ठन्' इत्यादिना ब्रह्मात्मकमुपासते इत्यप्रतीकालम्बनत्वं तत्क्रतुन्यायाविरोधश्च । उभयेऽपि परिपूर्णं ब्रह्मोपासते मुखभेदेन, स्वात्मशरीरं ब्रह्म केचन, ब्रह्मात्मकस्वात्मानमितरे' इत्यादि । एवं दीपेऽपि प्रपञ्चितं द्रष्टव्यम् । एवं स्थिते श्रीमद्गीताभाष्यवाक्यान्यपि तदनुरोधेन वर्णनीयानि । पञ्चाग्निविदोऽर्चिरादिगतिस्तावत् सर्वग्रन्थेषु अविगीता । तस्य च परमात्मात्मकस्वात्मानुसन्धातृत्वं सिद्धम् । तस्य किं कैवल्यमेव पुरुषार्थः, उत परमात्मानुभवोऽपीत्यत्र विशयः । तत्र च शारीरकभाष्याद्यनुसारे तस्य परमात्मानुभवः, श्रीमद्गीताभाष्यस्वारस्यानुसारे कैवल्यम् इतीच्छन्ति। उभयाविरुद्धतया ग्रन्थनिर्वहणं तु श्रीमद्गीताभाष्यटीकायां तात्पर्यचन्द्रिकायामुक्तमस्माभिः ।

---

उभयस्मिन्नपि पक्षे दोषस्स्यात् । तस्मादुभयविधान् नयति । तदेवाह **तत्क्रतुश्चेति** । **तत्क्रतुः** । तथोपासीनः तथैव ब्रह्म प्राप्नोतीत्यर्थः । "यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति तं यथायथोपासते" इति न्यायात् इत्यादि प्रपञ्चितमित्यर्थः । **प्रतिषिद्धेति** । तस्मिन्नेव सूत्र इति शेषः । कण्ठोक्तिमेव दर्शयति **नामादीति** । **उभयविधेति** । जीवशरीरकपरमात्मानुसन्धान–परमात्मात्मक-स्वात्मानुसन्धानलक्षणोभयविधेत्यर्थः । **फलान्तरञ्च प्रदर्शितमिति** । "यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति" इति प्रतिपादनादित्यर्थः ॥

---

**निर्णयायोगादिति** । अक्षिविद्या परमात्मविषया अर्चिरादिगतिचिन्तनाङ्गकत्वात्, अर्चिरादिगति-हेतुत्वाद्वा, ब्रह्मविद्यान्तरवदिति परमात्मविषयत्वसाधने केवलात्मानुसन्धाने व्यभिचारप्रसङ्गादिति भावः । **उभयविधेति** । जीवशरीरकपरमात्मानुसन्धान–परमात्मात्मकस्वात्मानुसन्धानलक्षणोभयविधेत्यर्थः । **फलान्तरञ्चेति** । "यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति" इत्येवंरूपमिति भावः । **भाष्यादीति** आदिना **दीपसारयोर्ग्रहणम्। परमात्मानुभव** इति अप्रतीकालम्बनसूत्रभाष्ये, "पञ्चाग्निविदोऽप्यर्चिरा-दिना गतिश्रवणादर्चिरादिना गतस्य ब्रह्मप्राप्त्यपुनरावृत्तिश्रवणाच्च" इत्यभिधानात्, **दीपे** च, अर्चिरादिना गतानां देहावसानसमय एव सुकृतदुष्कृतयोर्हानात् हिरण्यगर्भलोकावाप्ति-उद्वास-तत्रस्थभोगानुभवहेत्व-भावात् तत्क्रतुन्यायविरोधात् तदानीमेव ब्रह्मप्राप्तिश्रुतिविरोधाच्च" इति, तथा **सारेऽपि**, "अर्चिरादिना गतानां हि ब्रह्मप्राप्तिरपुनरावृत्तिश्च श्रूयते" इत्यभिधानादिति भावः । **श्रीमद्गीताभाष्यस्वारस्यानुसारे कैवल्यमिति** । "आर्तो जिज्ञासुः" इत्यत्र जिज्ञासुशब्दोक्तकैवल्यनिष्ठस्य गतिप्रतिपादनसमये, "आत्मयाथात्म्यविदः परमपुरुषनिष्ठस्य च" इत्यादिग्रन्थेन पञ्चाग्निविद्यानिष्ठत्वप्रकटीकरणादिति भावः । स्पष्टमिदं **श्रीमत्तात्पर्यचन्द्रिकायाम्** ।

**र. पे.** **यत्तु तात्पर्यदीपिकायाम्**—न तावत् पञ्चाग्निविद्यानिष्ठो जिज्ञासुः प्रकृतिवियुक्तात्मस्वरूपावाप्तीच्छुः। "ज्ञानमेवास्य स्वरूपमिति जिज्ञासुरित्युक्तम्। ज्ञानी च, 'इतस्त्वन्यां प्रकृतिं विद्धि मे पराम्' इत्यादिनाऽभिहितभगवच्छेषतैकरसात्मस्वरूपवित्, प्रकृतिवियुक्तकेवलात्मन्यपर्यवस्यन्, भगवन्तं प्रेप्सुर्भगवन्तमेव परमप्राप्यं मन्यमानः" इति **गीताभाष्ये** जिज्ञासोः परशेषतैकरसात्मज्ञानशून्यत्व-केवलात्मपर्यवसान-भगवत्प्रेप्सुत्वाद्यभावप्रतीतेः। पञ्चाग्निविद्यानिष्ठस्यापि शेषतैकरसात्मस्वरूपवित्त्वाभिधानादिति—तन्न; गीताभाष्योक्तस्य जिज्ञासोः पञ्चाग्निविद्यानिष्ठव्यतिरिक्तत्वस्वीकारे, "आत्मयाथात्म्यविदः परमपुरुषनिष्ठस्य च" इत्यादिनोपरितनग्रन्थेन तस्य पञ्चाग्निविद्यानिष्ठत्वप्रतीत्या तद्विरोधप्रसङ्गात्। "ज्ञानी च" इत्यत्रापि भाष्येणाविलंबितमोक्षेच्छाहेतुभूतपरशेषतैकरसात्मज्ञानवत्त्वमेव ज्ञानित्वमिति प्रतीत्या जिज्ञासोस्तच्छून्यत्वमेव हि प्रतीयते। तच्च पञ्चाग्निविद्यानिष्ठेऽप्यबाधितमेव। तद्गतज्ञानस्य कैवल्यव्यवहितमोक्षेच्छां प्रत्येव हेतुत्वात्। शेषत्वज्ञानाविशेषेऽपि कैवल्येच्छाहेतुभूतकर्मविशेषेण प्रतिबन्धादव्यवहितमोक्षेच्छायास्तस्यानुदयात्। उक्तभाष्ये हि, "भगवन्तं प्रेप्सुः" इत्यत्र प्रशब्देनाविलम्बितत्वरूपः प्रकर्षः प्रतीयते। "भगवन्तमेव परमप्राप्यं मन्यमानः" इति च तस्यैवोत्तम्भकम्। "भगवन्तमेवेति आत्मानुभवविलम्बाक्षमत्वमभिप्रेतम्" इति हि **तात्पर्यचन्द्रिका**। तथाच, "केवलात्मन्यपर्यवस्यन्" इत्यनेन नगरं प्रविविक्षोरध्वगस्य च्छायातरुमूलस्वापवत् आत्मानुभवविलम्ब इत्यभिप्रायेण तद्राहित्यमेव बोध्यत इति जिज्ञासोस्तादृशविलम्बवत्त्वमेव प्रतीयत इति न तस्य पञ्चाग्निविद्यानिष्ठरूपत्वानुपपत्तिः। इदमत्र बोद्धव्यम्—**ज्ञानी**त्यत्र प्रशंसायां मत्वर्थीय इनिः। प्राशस्त्यञ्चाविलम्बितमोक्षेच्छोपधायकत्वं परशेषतैकरसात्मस्वरूपविषयकत्वादिकञ्च तदुपयोगितयोक्तम्। न तु ज्ञानिपदार्थतावच्छेदककोटौ तस्यापि प्रवेशः; प्रयोजनाभावात्। अथवा अविलम्बितमोक्षेच्छारूपज्ञानवत्त्वमेव ज्ञानित्वम्। सिद्धान्ते इच्छाया अपि ज्ञानविशेषरूपत्वात् तादृशेच्छारूपत्वमेव ज्ञानस्य प्राशस्त्यम्। "भगवच्छेषतैकरसात्मस्वरूपवित्" इत्यादिकं तत्सामग्रीप्रदर्शनाय हेतुगर्भविशेषणम्। ज्ञानीत्यस्य भगवन्तं प्रेप्सुरित्येव विवरणम्। इत्थञ्च ज्ञानिगतं यादृशं भगवच्छेषतैकरसात्मस्वरूपज्ञानं तादृशस्याविलम्बितमोक्षेच्छोपधायकस्य भगवच्छेषत्वज्ञानस्यैव जिज्ञासौ अभावः प्रतीयत इति न तस्य पञ्चाग्निविद्यानिष्ठरूपत्वानुपपत्तिरिति। न चाविलंबितमोक्षेच्छावत एव ज्ञानिरूपत्वे मधुविद्यानिष्ठानां ज्ञानिजिज्ञासूभयबहिर्भावेन चातुर्विध्यव्याकोप इति वाच्यम्; जिज्ञासूपलक्षितेषु प्रयोजनान्तरप्राप्तिपूर्वकमोक्षेच्छावत्सु तेषामन्तर्भूततया चातुर्विध्यव्याकोपविरहात्। तथाहि—न तावत् मधुविद्यानिष्ठानां ज्ञानिष्वन्तर्भावसंभवः। "तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते" इत्येतद्भाष्ये ज्ञानिनां भगवदेकप्राप्यत्वाभिधानात् मधुविद्यानिष्ठानां वस्वादिपदरूपप्राप्यान्तरसद्भावात् अनन्यप्रयोजनैः सह प्रयोजनान्तरपराणामैकराश्येन परिगणनस्यात्यन्तानुचितत्वात्। दर्शितविभागस्य सुकृततारतम्यमूलकप्रतिपत्तिवैशेष्यकृतत्वस्य भाष्ये व्यक्ततया प्रयोजनान्तरपरानन्यप्रयोजनयोः सुकृततारतम्यस्य महत्तरस्य सद्भावेन तदुपेक्षायां बीजाभावाच्च। नाप्यैश्वर्यार्थिष्वन्तर्भावसंभवः; मुमुक्षुत्वात्। अतः परिशेषात् जिज्ञासुग्रहणस्य प्रयोजनान्तरप्राप्तिपूर्वकमोक्षेच्छावदुपलक्ष-

र. पे. कत्वमङ्गीकृत्य तैरैकरस्यमाश्रयणीयमिति न चातुर्विध्यव्याकोप इति । न चात्मानुभवविलम्बाक्षमत्वे परशेषतैकरसात्मस्वरूपज्ञानस्य न हेतुतासंभवः । तस्य पञ्चाग्निविद्यानिष्ठसाधारण्यात् । तथाच भगवच्छेषतैकरसात्मस्वरूपविदिति हेतुगर्भविशेषणानुपपत्तिरिति वाच्यम्; कैवल्येच्छाहेतुकर्मविशेषरूपप्रतिबन्धकविरहसहकृतस्य भगवच्छेषतैकरसात्मस्वरूपज्ञानस्यैवात्मानुभवविळम्बाक्षमत्वहेतुत्वात् । न हि मणिसमवधानदशायां वह्निना दाहो न जन्यत इत्येतावता वह्नेर्दाहहेतुता नास्तीति शक्यं वक्तुम् । न चैवंसति पर्यवसानशब्दास्वारस्यं दुर्वारमिति वाच्यम्; इह पर्यवसानशब्दविरहात् । अपर्यवस्यन्निति हि वर्तते । तत्र नञा पर्यवसानसामान्यं निषिध्यते । पर्यवसानञ्च द्विविधम्; तात्कालिकं सदातनञ्चेति । ततश्च ज्ञानिनि निषिध्यमानं तात्कालिकपर्यवसानं पञ्चाग्निविद्यानिष्ठेऽप्यस्तीति न किञ्चिदप्यस्वारस्यमिति । न च, "इतरयोस्तु यावत्स्वाभिलषितप्राप्ति मया योगः" इति भाष्योक्तस्य न पञ्चाग्निविद्यानिष्ठे संभव इति वाच्यम्; कैवल्यानुभवदशायां भगवदनुभवविरहेण तदुपपत्तेः । आत्ममात्रानुभवो हि कैवल्यम् । न चैवं ज्ञानिनोऽपि सूर्यचन्द्रादिसायुज्यस्य दक्षिणायनोत्तरायणमरणनिमित्तस्य सत्त्वेन तस्यापि तथात्वापत्तिरिति वाच्यम्; चन्द्रादिसायुज्यदशायामपि तत्कालोचितभगवदनुभवादिसत्त्वेन[1] तथात्वासंभवात् । न हि भगवदनुभवे कैवल्यस्वरूपहानिवत् चन्द्रादिसायुज्यस्वरूपहानिः संभाव्यते; येन तदभावः स्वीक्रियेत । न च, "तत्साधनत्वेन मयि च" इति स्वस्य भोग्यत्वाभावाविष्करणान्न पञ्चाग्निविद्यानिष्ठसंग्रहसंभव इति वाच्यम्; फलान्तरविळम्बाक्षमत्वौपयिकभोग्यत्वाभावे तात्पर्येणाविरोधात् । भगवति प्रयोजनान्तरसाधनताबुद्ध्यधीनप्रीतेरेवोक्तत्वेन तस्याः पञ्चाग्निविद्यानिष्ठासाधारण्याच्च । न च-पञ्चाग्निविद्यायां परमात्मात्मकस्वात्मोपासनं विहितम्, अत्र तु कैवल्यार्थिनस्तत्प्राप्त्युपायतया भगवद्भजनमेव विहितमिति भेदः स्फुट इति-वाच्यम् । भगवतो विशेषणतया भानेऽपि तदंश एव तादृशज्ञानस्य भक्तिरूपतया भगवद्भजनरूपत्वानपायात् । यत्तु—"शुक्लकृष्णे गती ज्ञानिनां द्विविधानां पुण्यकर्मणाञ्च श्रुतौ शाश्वते मते" इति च भाषितमिति स्वाभिमतानुगुणपाठपरिकल्पनम्—तत् अत्यन्तमयुक्तम्; कचिदपि प्राचीनकोशे तथा पाठादर्शनात्, **विविधानामित्येव** पाठदर्शनात्, "इष्टापूर्तं दत्तमित्युपासत इत्युक्ततत्कर्मनिष्ठभेदाभिप्रायेण विविधशब्दः" इति तात्पर्यचन्द्रिकाविरोधाच्च । न हि प्राक्तनैः कैश्चिदपि तथाविधपाठ आदृतः, येन तत्र विस्रम्भः संभाव्येतापि । न चैवं सति पुण्यकर्मसु विविधत्वोक्तेरानर्थक्यम्, अवश्यवक्तव्यजिज्ञासुसाधारण्यानुवृत्त्या न्यूनत्वञ्चेति वाच्यम्; "इष्टापूर्ते दत्तमित्युपासते" इति श्रुतिप्रसिद्धिप्रत्यभिज्ञापनार्थतया वैविध्योक्तेः सार्थक्यात् । ज्ञानिनामिति बहुवचनबलेन पञ्चाग्निविद्यानिष्ठसाधारणज्ञानवत्त्वस्यैव ज्ञानिपदार्थतावच्छेदकत्वावगमेन न्यूनताविरहात् । जिज्ञासुव्यतिरिक्तज्ञानिपरत्वे ह्येकवचननिर्देश एवेह क्रियते । यथा "अथ ज्ञानिनो भगवदुपासनप्रकारम्" इति । तथा "ज्ञानिनः कैवल्यार्थिनश्चापुनरावृत्तिम्" इति । एवं, "ज्ञानिनः प्राप्यं तु तस्मादत्यन्तविभक्तम्" इत्यादि । अतो बहुवचननिर्देशस्य

1 भगवदनुभवेति । मधुविद्यादिफलभूतवस्वादिपदप्राप्तावपीयं रीतिः सुवचा ।

र. पे. उक्तरीत्याऽर्थभेदज्ञापकतया जिज्ञासुसाधारण्यसिद्धेर्न न्यूनतावकाश इति। अत एव द्विविधानामिति पाठस्य प्रामाणिकत्वेऽपि न क्षतिः। अत्रत्यज्ञानिशब्दस्योक्तरीत्या, "चतुर्विधा भजन्ते माम्" इति वचनस्थज्ञानिशब्दसमानार्थकताविरहेण अत्र द्विविधानामिति निर्देशस्योक्तवचनस्थज्ञानिपदार्थतावच्छेदके पञ्चाग्निविद्यानिष्ठसाधारण्यासाधकतया जिज्ञासोः पञ्चाग्निविद्यानिष्ठरूपत्वाविरोधात्। तत् सिद्धम्, 'आर्तो जिज्ञासुः' इत्युक्तो जिज्ञासुः पञ्चाग्निविद्यानिष्ठरूप एवेति, "आत्मयाथात्म्यविदः" इत्यनेन ग्रन्थेन सिद्ध्यतीति।

यत्तु, "आत्मयाथात्म्यविदः" इत्यादिग्रन्थो ज्ञान्यवान्तरभेदप्रतिपादनपर एवेति—तन्न; अविलम्बितमोक्षेच्छावत एव ज्ञानिरूपतया प्रागुक्तगीताभाष्यस्वारस्यसिद्धत्वेन पञ्चाग्निविद्यानिष्ठस्यातथात्वात् ज्ञान्यवान्तरभेदत्वानुपपत्तेः। अप्रस्तुतज्ञान्यवान्तरभेदप्रतिपादनवैयर्थ्याच्च। न च—पञ्चाग्निविद्यानिष्ठस्याकैवल्यत्वप्रतिपादनार्थत्वान्न वैयर्थ्यम्; महता संरम्भेण पञ्चाग्निविद्यानिष्ठस्य ब्रह्मोपासकतयाऽन्यत्र प्रतिपादितत्वात्, स्वात्ममात्रानुभवरूपस्य कैवल्यस्य स्वात्ममात्रविषयकपञ्चाग्निविद्यासाध्यत्वप्रसक्तेर्वारणाय तत्साधनोपपत्तेरिति—वाच्यम्; पञ्चाग्निविद्यानिष्ठस्याकैवल्यत्वप्रतिपादनस्याप्यप्रस्तुतार्थप्रतिपादनरूपतया असङ्गतत्वात्। अन्यथा सद्विद्यानिष्ठादीनामप्यकैवल्यत्वप्रतिपादनप्रसङ्गात्। अत्र हि, "अतः परमध्यायशेषेण ज्ञानिनः कैवल्यार्थिनश्चापुनरावृत्तिमैश्वर्यार्थिनः पुनरावृत्तिश्चाह" इति, "मामुपेत्य" इत्येतदवतारिकाभाष्येण ज्ञानिकैवल्यार्थ्यपुनरावृत्त्यैश्वर्यार्थिपुनरावृत्ति—तदुपयुक्तार्थानामेवाध्यायशेषेण प्रतिपादनीयतावगमेन पञ्चाग्निविद्यानिष्ठाकैवल्यत्वस्य ज्ञानिकैवल्यार्थ्यपुनरावृत्तावैश्वर्यार्थिपुनरावृत्तौ वा अनुपयोगेन तत्प्रतिपादनासङ्गतेः। अर्चिरादिगतेः कैवल्यार्थिसाधारण्यं तु कैवल्यार्थिनोऽपुनरावृत्तिसाधकतयाऽवश्यवक्तव्यनित्यात्मयाथात्म्यविच्छब्देन कैवल्यार्थ्येवाभिधीयत इत्यकामेनापि स्वीकार्यमिति प्राक्प्रस्तुतः कैवल्यार्थी पञ्चाग्निविद्यानिष्ठ एवेति सिद्धम्। किञ्च पञ्चाग्निविद्यानिष्ठस्याकैवल्यत्वमेवेह प्रतिपिपादयिषितं चेत्—आत्मयाथात्म्यविन्न केवल इति प्रतिज्ञाय तदुपपादकतया ब्रह्मोपासकत्वादिकं वक्तव्यं स्यात्; न तथाऽभिहितमिति न किञ्चिदेतत्। एतेन मधुविद्यानिष्ठसाधारण्यवारणार्थं विशेषकीर्तनमित्यपि प्रत्युक्तम्; प्रकृतानुपयोगात्। यत्तु, "अथोभयोः साधारणीमर्चिरादिकां गतिमाह" इत्येव वक्तव्ये, "आत्मयाथात्म्यविदः परमपुरुषनिष्ठस्य च साधारणीम्" इत्युक्तिर्ज्ञानिविषय एवावान्तरभेदप्रदर्शनार्थत्वे स्वरसेति—तन्न; उभयोः साधारणीमित्युक्ते कथमर्चिरादिगतेः कैवल्यनिष्ठसाधारण्यम्; ब्रह्मोपासनप्रकरण एव तदाम्नानादिति शङ्कासंभवात् तद्वारणाय तस्य पञ्चाग्निविद्यानिष्ठरूपतया ब्रह्मोपासकत्वप्रदर्शनाय तदावश्यकत्वात्। अयमर्थस्तत्रत्यगीताभाष्यसन्दर्भपर्यालोचनयैव स्फुटीभवति। अयमर्थः श्रीमत्तात्पर्यचन्द्रिकायां स्पष्टः। यदपि, 'न वा कश्चिद्विद्यानिष्ठस्य मध्ये स्वात्मानुभवो भाष्यादिषूक्तः इति—तदपि शारीरकभाष्यगीताभाष्ययोरैकरस्यार्थं तथाभ्युपगमावश्यकताया वक्ष्यमाणतया निरस्तम्।

यदपि, "च्यवनधर्माणः प्रतिबुद्धस्तु मोक्षभाक्" इति चैवमस्वरसमिति—तदप्ययुक्तम्; उक्तरीत्या जिज्ञासु-पञ्चाग्निविद्यानिष्ठयोरैक्यस्याकामेनापि स्वीकार्यतयाऽगत्या किञ्चिदस्वारस्यस्य सोढव्यत्वात्। तात्पर्यचन्द्रिकानुगृहीतरीत्या अर्थवर्णने अस्वारस्यविरहाच्च। "यत्पुनरुच्यते-ये तु शिष्टास्त्रयो भक्ताः फलकामा

र.पे. हि ते मताः। सर्वे च्यवनधर्माण इति–तत्रापि आत्ममात्रानुभवसुखस्यास्थिरत्वादेव च्यवनधर्मत्वमुच्यते। न तावता पुनः संसारप्रसङ्गः–'इन्द्रलोकात्परिभ्रष्टो मम गेयपरायणः। प्रमुक्तः सर्वसंसारैर्मम लोकञ्च गच्छति', 'प्रच्युतो वा एषोऽस्माल्लोकात् अगतो देवलोकम्' इत्यादिष्विवोत्तरातिशयितपदप्राप्तावपि पूर्वपदभ्रंशमात्राद् च्यवनधर्मत्ववाचोयुक्तेरविरोधात्। परिमितसुखानुभवविलम्बेन तदानीं निरतिशयसुखानुभवादूभ्रष्टत्वेनापि निन्दोपपत्तेश्च। उपासनदशानुभूते परमात्मनि फलदशायां किञ्चित्कालमनुभवविच्छेदाद्वा प्राप्तभ्रंशलक्षणं च्यवनधर्मत्वम्। 'प्रतिबुद्धस्तु मोक्षभाक्' इति चाव्यवहितमोक्षभाक्त्वं प्रतिबुद्धस्योच्यते। न तावताऽन्यस्य मोक्षाभावः; 'भुक्त्वा च भोगान् विपुलांस्त्वमन्ते मत्प्रसादतः। ममानुसरणं प्राप्य मम लोकमवाप्स्यसि' इतिवत् अविरोधात्" इति हि तात्पर्यचन्द्रिकायामनुगृहीतम्। तस्मात् श्रीगीताभाष्ये प्रस्तुतो जिज्ञासुः पञ्चाग्निविद्यानिष्ठ एवेति सिद्धम्। अत एव जिज्ञासुवेषतयोक्तस्वभाव-विसर्गयोः पञ्चाग्निविद्योदाहरणं तत्र सङ्गच्छते। अत एव च, "सर्वद्वाराणि" इत्येतद्भाष्ये, "देहं त्यजन्नर्चिरादिकया गत्या यः प्रयाति" इति जिज्ञासुविषयेऽर्चिरादिगतिर्भाषिता। आत्ममात्रोपासकस्यार्चिरादिगतिर्नास्तीति हि भवद्भिरभ्युपगम्यते। उक्तं हि तात्पर्यदीपिकायामेव, "प्रकृतिमण्डलातिक्रमस्वीकारेऽपि नार्चिरादिगतिस्वीकारः" इति। यद्यपि तात्पर्यचन्द्रिकायाम्, "त्यजन् यः प्रयातीति=त्यक्त्वा यः प्रयातीत्यर्थः" इति दृश्यते; तथापि तत्रोपयुक्तांशमात्रप्रतीकधारणमिति वक्तव्यम्। प्राचीनगीताभाष्यश्रीकोशेषु, "त्यजन् अर्चिरादिकया गत्या यः प्रयाति" इत्येव पाठदर्शनात्। अतो जिज्ञासुः पञ्चाग्निविद्यानिष्ठ एवेत्यकामेनापि स्वीकार्यम्। तत् सिद्धं गीताभाष्यस्वारस्यानुसारे पञ्चाग्निविद्यानिष्ठस्य कैवल्यं फलमिति।

तात्पर्येति। अत्रेयं तात्पर्यचन्द्रिकासूक्तिः—"अत्र शारीरकभाष्यादिविरोधो मन्दैराशङ्कितः। इह तावत् श्रुतिसूत्रभाष्यादिष्वन्यत्र च पञ्चाग्निविदः परमात्मात्मकस्वात्मानुसन्धातृत्वमर्चिरादिगतिश्च अविशेषेणोच्यते। तस्याश्च ब्रह्मगमयितृत्वस्य श्रुत्यादिषु, इह च, 'तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः' इति सिद्धत्वात् पञ्चाग्निविदोऽपि ब्रह्मप्राप्तिरस्त्येवेति स्वीकर्तव्यम्। तत्र प्राप्तौ ज्ञानिनां परमात्मा स्वविशिष्टो भोग्यः। अक्षरयाथात्म्यनिष्ठानां तु स्वस्वरूपमेव पूर्वं भोग्यम्। ब्रह्मादिपदप्राप्तिपूर्वकब्रह्मप्राप्तिसाधनमधुविद्यादिन्यायादनन्तरो ब्रह्मप्राप्तिः। ईदृशस्वैक्रमप्रतिनियमश्च प्राचीनापेक्षाभेदात्; स च प्राचीनकर्मविशेषादिति, "चतुर्विधा भजन्ते माम्" इति प्रागेव दर्शितः। न चात्र जिज्ञासोरन्य एवात्मयाथात्म्यविदिति भाष्यते; जिज्ञासुवेषतयोक्तस्वभाव-विसर्गयोरत्र च पञ्चाग्निविद्योदाहरणात्। मध्ये च कैवल्यार्थिन एव मूर्धन्यनाड्या निष्क्रमणम्; अनावृत्तिश्चोक्ता। आत्मयाथात्म्याक्षरयाथात्म्यशब्दयोश्चात्र न भिन्नार्थत्वम्। तस्योपासने किञ्चिदस्ति विशेषः। अक्षरयाथात्म्यविदः परमात्मशरीरभूतस्वात्मोपासकाः, ज्ञानिनस्तु स्वात्मशरीरकपरमात्मोपासका इत्ययमेव विशेषः, 'तद्य इत्थं विदुर्ये चेमेऽरण्ये' इति विभागनिर्देशाभिप्रेत इति भाष्यादिषूक्तः। सारे तु, 'उभयेऽपि हि परिपूर्णं ब्रह्मोपासते मुखभेदेन, स्वात्मशरीरकं ब्रह्म केचन, ब्रह्मात्मकस्वात्मानमितरे' इति। अत एव सप्तमे प्रकान्तो जिज्ञासुः परमात्मप्राप्तिकामज्ञान्यतिरिक्तत्वात् अब्रह्मात्मकस्वात्मानुसन्धायीति न भ्रमितव्यम्; तस्य चोदारकोटि त्व

र. पे. निवेशः स्वात्मानुभवविच्छेदविमुखज्ञानिव्यतिरेकात्। अर्चिरादिगतिनिषेधस्तु, ब्रह्मात्मकत्वानुसन्धानरहितस्वात्मोपासनविषयः। इदमपि भाष्यादिषु व्यक्तमेवोक्तम्, 'तस्माद्वचिन्मिश्रं चिद्वस्तु ब्रह्मदृष्ट्या तद्वियोगेन च य उपासते, न तान्नयति। अपितु परं ब्रह्मोपासीनान् आत्मानञ्च प्रकृतिवियुक्तं ब्रह्मात्मकमुपासीनान् आतिवाहिको गणो नयति' इत्यादिभिः" इति। अनेन च ग्रन्थसन्दर्भेण शारीरकभाष्ये पञ्चाग्निविदो मोक्षप्रतिपादनं परमफलाभिप्रायम्, श्रीमद्गीताभाष्ये कैवल्यप्रतिपादनमवान्तरफलाभिप्रायमिति नोभयोर्विरोधः; क्वचिदपि तदन्मात्रफलाभिप्रायविरहादित्युक्तं भवति। इत्थञ्च, "यं प्राप्य न निवर्तन्ते तद्धाम परमं मम" इति गीतावचनेषु तद्भाष्यादिषु चापुनरावृत्तिप्रतिपादनं पुनरवरोहाभावाभिप्रायमिति व्यक्तं तात्पर्यचन्द्रिकायाम्।

एतेन, "विरजापरमव्योम्नोरन्तरा केवलः स्मृतः। तत्र स्वानन्दमुपभोक्तव्यमव्यक्तब्रह्मसेविनाम्॥ स्वात्मानुभवानन्दसुखदं केवलं पदम्। निश्रेयसञ्च निर्वाणं कैवल्यं मोक्ष उच्यते॥ श्रीशाङ्घ्रिभक्तिसेवैकरसभोगविवर्जितम्। तदिच्छन्त्यल्पमतयो मोक्षं सुखविवर्जितम्" इत्यादिपाद्मपुराणवचनस्य बहुविधप्रक्षेपोद्भावशङ्काकलङ्कितपुराणान्तर्गतस्य पूर्वैरनुदाहृतस्य, 'योगिनाम्' इति वक्ष्यमाणसंप्रतिपन्नवचनविरुद्धस्य प्रामाणिकत्वस्वीकारेऽपि पञ्चाग्निविद्यानिष्ठविषयतयोपपत्तिः संभवति। तदितरेषां कैवल्यानुभवस्थानं तु न नित्यविभूतिरिति शक्यं वक्तुम्; "योगिनाममृतं स्थानं स्वात्मसन्तोषकारिणाम्" इत्युक्तकैवल्यस्थानात्, "एकान्तिनः सदा ब्रह्मध्यायिनो योगिनो हि ये। तेषां तत् परमं स्थानं यद्वै पश्यन्ति सूरयः" इत्यनेन सूरिदृश्याया नित्यविभूतेः पृथक्त्वस्य स्पष्टं प्रतीयमानत्वात्। अत एव, "योगिनाममृतम्" इत्यमृतशब्दः, "वायुश्चान्तरिक्षञ्चैतदमृतम्" इतिवत् चिरकालस्थायित्वाभिप्रायः; प्रकृतिमण्डलान्तर्गतस्य तस्य नित्यत्वायोगात्। किञ्च उक्तवचने अव्यक्तब्रह्मसेविनामित्यनेन पञ्चाग्निविदामेवाभिधानात् तस्य न तदितरपरत्वसंभवः। तथाहि—अव्यक्तब्रह्मशब्दयोर्द्वन्द्वनिर्दिष्टयोर्जीववाच्यव्यक्तशब्दस्य पूर्वं प्रयोगादभ्यर्हितत्वमिह जीवस्यैवावगम्यते। तच्चोपासने विशेष्यतयेति जीवविशेष्यकपरमात्मशरीरत्वप्रकारकोपासनमेवाव्यक्तब्रह्मसेविनामित्यनेनावगम्यत इति। न चाव्यक्तब्रह्मशब्दयोः सामानाधिकरण्येन कर्मधारयत्वं शङ्क्यम्; ब्रह्मशब्दस्यौपचारिकत्वप्रसङ्गात्। न हि मुख्यत्वसंभवे तत् युक्तम्। द्वन्द्वसमासश्च कर्मधारयादप्युत्कृष्टः। गीतं हि, "द्वन्द्वः सामासिकस्य च" इति। तत्र च भाष्यम्, "स ह्युभयपदार्थप्रधानत्वेनोत्कृष्टः" इति। अपिच, "योगिनाममृतं स्थानम्" इत्येतद्वचनविरोधादप्युक्तपाद्मपुराणवचनस्य पञ्चाग्निविन्मात्रविषयत्वमेवावश्यकम्—तेषां प्रकृतिमण्डलातिक्रमस्य संप्रतिपन्नत्वेन विरजातरणानन्तरं सूक्ष्मशरीरस्याप्यभावात् केवलात्मानुभवोपपत्तेः। तदितरेषां कैवल्यानुभवस्तु, "योगिनाममृतं स्थानम्" इत्युक्तप्रकृतिमण्डलान्तर्गतस्थानविशेष एवेति वचनद्वयस्यापि व्यवस्थितविषयत्वान्न विरोधः। वस्तुतस्तु परमव्योमशब्दो नित्यविभूतिमात्रवाचकः, न तु तदन्तर्गतजनपदादिवाचकः। तथाच विरजापरमव्योम्नोर्मध्यमिति न किञ्चिदस्ति ततश्च, 'आकाशो ह वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा' इत्यत्र नामरूपे अन्तरा ताभ्यामस्पृष्टः" इति भाषिततया तद्रीत्या विरजापरमव्योमभ्यामस्पृष्ट इत्यर्थस्यैवावश्याश्रयणीय

अत्र किञ्चिदुच्यते—यस्त्वयम्, "आत्मयाथात्म्यविदः परमपुरुषनिष्ठस्य च साधारणीमर्चिरादिकां गतिमाह" इत्यादिग्रन्थस्तु प्रस्तुतत्वमात्रेण कैवल्यनिष्ठपरमपुरुषनिष्ठविषय इति न मन्तव्यम्। किं तु परमात्मात्मकस्वात्मानुसन्धातृस्वात्मशरीरकपरमात्मानुसन्धातृभेदभिन्नब्रह्मविद्विषय एव। तथा सति आत्मयाथात्म्यविच्छब्दोऽप्यत्यन्तानुगुणः। एकग्रन्थशकलास्वारस्यं बहुग्रन्थस्वारस्याय ग्राह्यम्। न चात्र कश्चित् भगवद्यामुनमुनिवचनविरोधगन्धोऽपीति। श्रीमद्गीताभाष्येऽपि पञ्चाग्निविद्यानिष्ठस्य ब्रह्मात्मकस्वात्मानुसन्धानम्, तत्क्रतुन्यायात् ब्रह्मप्राप्तिश्च स्फुटतरं प्रत्यपादि।

---

कैवल्यं नाम अर्चिरादिमार्गेण भगवल्लोकगतस्य ब्रह्मात्मकस्वात्मसाक्षात्कार एव। न च तस्यार्चिरादिगतिसद्भावे प्रमाणाभावः; "तद्य इत्थं विदुः" इति वाक्यस्यैव प्रमाणत्वात्। न च तस्य

---

तयोक्तवचनेनापि प्रकृतिमण्डलान्तर्गतमेव कैवल्यस्थानमिति सिद्ध्यतीति न वचनद्वयविरोधशङ्का; न वा तत्परिहाराय व्यवस्थितस्थानद्वयाश्रयणमिति। षष्ठ्युपपत्तिस्तु छान्दसत्वेनैवेत्येतत्तु पक्षद्वयेऽपि समानम्। परमार्थतस्तु, "अन्तरान्तिकमध्ययोः" इति **नानार्थरत्नमालोक्त्या** अन्तराशब्दस्यान्तिकपरत्वमेव युक्तम्। तथाच प्रकृतिमण्डल एवेतरपुरुषार्थस्थानापेक्षया कैवल्यस्थानस्य विरजापरमव्योमसमीपवृत्तित्वमेव लभ्यत इति न कश्चिद्विरोधः। एतेन कैवल्यस्य नित्यत्ववादो निरस्तः; स्थानस्यानित्यत्वात्। प्रमाणाभावाच्च। यत्तु, "सर्वकामांश्च साक्षरान्" इत्यक्षरत्वव्यपदेशात् तस्य नित्यत्वसिद्धिरिति। तन्न; स्थानानित्यत्वेन तस्यानित्यत्वावश्यम्भावेनाक्षरत्वव्यपदेशस्य देवानाममरत्वव्यपदेशवत् चिरकालस्थायित्वपरताया आवश्यकत्वात्। मोक्षपर्यायकैवल्यशब्दस्तु तत्रामुख्य एवेति तात्पर्यदीपिकायामेवाभिहितमिति न तद्बलान्नित्यत्वसिद्धिः। श्रीमद्गीताभाष्ये जिज्ञासोरपुनरावृत्त्यादिप्रतिपादनमपि न कैवल्यनित्यत्वसाधकम्। तस्य पञ्चाग्निविद्विषयताया: प्रागेव व्यवस्थापितत्वादित्यलम्।

**प्रस्तुतत्वमात्रेणेति**। प्रागुक्तशब्दजन्य-स्वारसिक-प्रतीतिविषयत्वमात्रेणेत्यर्थः। **कैवल्यनिष्ठेति**। कैवल्यमात्रपरेत्यर्थः। तेन पञ्चाग्निविदामप्यवान्तरफलतया कैवल्यार्थित्वेऽपि न क्षतिः। **ब्रह्मविद्विषय एवेति**। तथा च तदेकार्थजिज्ञास्वादिशब्दानामवान्तरफलतया कैवल्यार्थिपरत्वमेवावश्यकमिति न शारीरकभाष्यविरोध इति भावः। ननु जिज्ञासुपदव्याख्यानस्वारस्यपर्यालोचनायां कैवल्यैकनिष्ठत्वप्रतीतेस्तद्विरोध इत्यत आह **एकग्रन्थशकलेति**। बहुग्रन्थेत्यनेन शारीरकभाष्य-दीपसारान्तर्गतानि पञ्चाग्निविदां ब्रह्मप्राप्तिप्रतिपादकान्यनेकानि वाक्यानि विवक्षितानि। ननु, "संसृत्यक्षरवैष्णवाध्वसु" इति श्रीमद्यामुनमुनिभिः कैवल्यस्य नित्यपर्यायाक्षरशब्देन प्रतिपादनान्न तस्यावान्तर फलत्वसंभवः—अवान्तरफलत्वे परमफलानुभवदशायां तन्निवृत्त्यवश्यम्भावात्। अतो भाष्योक्तजिज्ञासोः कैवल्यस्यावान्तरफलत्वे श्रीमद्यामुनमुनिवचनविरोध इत्यत आह **नचेति**। अत्र पञ्चाग्निविदां कैवल्यपूर्वकब्रह्मप्राप्तिविषये। **विरोधगन्धोऽपीति**। देवामरत्वव्यपदेशवत् अक्षरत्वव्यपदेशस्य चिरकालस्थायित्वपरत्वादिति भावः। श्रीमद्गीताभाष्यस्थोत्तरवाक्यकण्ठोक्त्यनुरोधेनापि पूर्ववाक्यास्वारस्यं सोढव्यमित्यभिप्रायेणाह **श्रीमदिति**।

**केचित्तु ब्रह्मभूतस्त्वात्मा कैवल्यभोग्यः, ब्रह्मणस्तु स्वात्मविशेषणतया भानमात्रमस्तीत्याहुः। तर्हि न तत् कैवल्यं भवेत्। साधनतो गतितः प्रमाणतः प्रकारतश्च दुर्निरूपञ्च तदित्यात्मयाथात्म्यविदः[1]।**

**कान्तां प्राप्य विचित्रकर्मरचितां पर्यायतो भूमिकां**

---

ब्रह्मविद्विषयत्वं शङ्क्यम्, "ये चेमेऽरण्ये' इति पृथङ्निर्देशस्यात्यन्तनिरालम्बनत्वप्रसङ्गात्। तथा सति, "परं जैमिनिर्मुख्यत्वात्" इत्यस्यैव सिद्धान्तसूत्रतापत्तेः। न च तेषामर्चिरादिगतिसद्भावे ब्रह्मप्राप्तेरपि प्रसङ्गः, श्रुतिचोदितत्वाविशेषादिति वाच्यम्; समानप्रकरणे, 'ब्रह्मलोकान् गमयति" इति श्रवणेन तत्क्रतुन्यायविरोधेन च ब्रह्मलोकगमनमात्रे ब्रह्मगमनत्वोपचारोपपत्तेः। न च निर्मुक्तसकलकर्मसम्बन्धस्य ब्रह्मानुभवोऽवश्यम्भावीति वाच्यम्; सर्वकर्मविनिर्मोक्षेऽपि भगवत्सङ्कल्परूपप्रतिबन्धकविशेषसत्त्वेन ब्रह्मानुभवाभावात्। इतरथा मुक्तानां विरजातरणानन्तरमेव स्वरूपाविर्भावप्रसङ्गात्। न चेष्टापत्तिः; "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इति प्रमाणानुसारेण तस्य पर्यङ्कारोहणानन्तरभावित्वात्। न च केवलानामर्चिरादिमार्गेण भगवल्लोकगमने पुनरावृत्तिप्रसङ्गाभावेन, "चतुर्विधा मम जना भक्ता एव हि ते स्मृताः। तेषामेकान्तिनः श्रेष्ठास्ते चैवानन्यदेवताः॥ अहमेव गतिस्तेषां निराशीःकर्मकारिणाम्। ये तु शिष्टास्त्रयो भक्ताः फलकामा हि ते मताः॥ सर्वे च्यवनधर्माणः प्रतिबुद्धस्तु मोक्षभाक्॥" इत्यादिप्रमाणप्रतिपादितच्यवनधर्मत्वविरोधः; भगवदनुभवापेक्षया स्वात्मानन्दानुभवस्यापकृष्टत्वेन तथोक्त्युपपत्तेः। न च केवलानां भगवल्लोकगमने, "योगिनाममृतं स्थानं स्वात्मसन्तोषकारिणाम्॥ एकान्तिनः सदा ब्रह्मध्यायिनो योगिनो हि ये। तेषां तत् परमं स्थानं यद्वै पश्यन्ति सूरयः॥" इति केवलानां भगवच्छरणार्थिनाञ्च स्थानभेदोक्तिविरोध इति वाच्यम्; "योगिनाममृतं स्थानं स्वधर्ममनुवर्तिनाम्" इत्येव पाठात्। "स्वात्मसन्तोषकारिणाम्" इति पाठेऽपि केवलानां मुमुक्ष्वपेक्षया भिन्नप्रदेशवर्तित्वेन स्थानभेदोक्तिविरोधाभावाच्चेति ये मन्यन्ते, तन्मतमुपन्यस्यति **केचि**त्त्विति।

**कान्ता**मिति। **विचित्रैः** सुकृतदुष्कृतलक्षणैः कर्मभिः **कान्तां भूमिकां** देवमनुष्यपशुपक्ष्यादिवेषं

---

**ब्रह्मभूते**ति। ब्रह्मापृथक्सिद्धविशेषणभूतेत्यर्थः। **भानमात्र**मिति। न तु तत्र भोग्यताबुद्धिरिति भावः। **तर्ही**ति। ब्रह्मणोऽपि भान इत्यर्थः। **न तत् कैवल्यं भवे**दिति। जीवमात्रानुभवस्यैव कैवल्यरूपत्वादिति भावः। पक्षान्तरमाह **साधनत इति**। **आत्मयाथात्म्यविद् इति**। श्रीमद्वादिहंसाम्बुवाहप्रभृतय इति भावः॥

**कान्ता**मिति। एषः जीवः, विचित्रैः-सुकृतदुष्कृतरूपैः कर्मभिः विरचिताम्, अन्यत्र प्रसाधनक्रियाविशेषैर्विचित्रैर्विरचितां **कान्तां**-मनोज्ञां, **भूमिकां**-देवमनुष्यपशुपक्ष्यादिवेषम् अन्यत्र तत्तन्नाटकोप-

---

[1] मुमुक्षुप्पडिव्याख्यायां तात्पर्यदीपिकायां वादिहंसाम्बुदाचार्यमतमुक्तम्। शास्त्रतः परमात्मशेषत्वं बुद्ध्वा शेषिप्रीत्यर्थकार्यकारिणः कर्मयोगादितः स्वात्मावलोकने लब्धे, स्वगतानुकूल्यानुभवस्य स्वविशिष्टपरमात्मानुकूल्यभानपोषकत्वात्, मुक्तौ परमात्ममात्रानुभवाभावाच्च भक्तौ प्रवृत्तिरवर्जनीया। भगवत्युपायत्वमात्रबुद्धिस्तु आत्मावलोकनात्प्रागेव। पञ्चाग्निवित्तु अर्चिरादिगतिबलात् ब्रह्मानुभाव्येव। अतः परविद्यांगभूतैहिकात्मानुभवातिरिक्तकैवल्यं दुर्निरूपमिति ततः प्रतीयते। प्रमेयं तु सम्यक्। अथापि वादिहंसाम्बुदार्यन्यायकुलिशे कैवल्यवादे एकदेशमात्रोपलम्भात् तन्मतं दुर्निर्णेयम्।

**केनाप्यद्भुतनाटकेन कमपि श्रीमन्तमानन्दयन् ।**
**कृत्वा शास्त्रमुखे मनः प्रतिमुखं गर्भाविमर्शात्परं**
**विद्यानिर्वहणेन लब्धविभवो हृद्येष विद्योतते ॥ १८ ॥**

**इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु न्यायसिद्धाञ्जने जीवपरिच्छेदो द्वितीयः ।**

---

प्राप्य [केनापि?] लोकविलक्षणेन जननमरणादिव्यापारलक्षणेन **अद्भुतनाटकेन** समस्तचिदचिद्विलक्षणं श्रीसखम् **आनन्दयन्** अनेकगर्भानुप्रवेशादिदुःखपरामर्शेन शास्त्रप्रधानभूते सारतमशास्त्रे अभिमुखं **मनः कृत्वा** परमात्मविद्यानिष्पत्त्या भगवत्पर्यङ्कारोहणादिविभवं लब्ध्वा कौस्तुभस्थानीयः सन् परमात्मनो हृदयङ्गमो भवतीत्यर्थः । लोके हि प्रसिद्धो नटः प्रसाधनक्रियाविशेषैः कमनीयविचित्रवेषान् परिगृह्य किञ्चिन्नाटकमाश्रित्य भरतशास्त्रमनुसृत्य **मुखप्रतिमुखगर्भावमर्शनिर्वहणसन्धीन्** कृत्वा नाटकतोषितात् प्रभोरैश्वर्यं प्राप्य प्रभोरन्तरङ्गो भवति । तत्समाधिरिह प्रतीयते । **नाटके** हि **मुखप्रतिमुखगर्भावमर्शनिर्वहणभेदेन** पञ्च सन्धयोऽङ्गभूताः । "**मुखं** बीजसमुत्पत्तिर्नानार्थरससम्भवात् । लक्ष्यालक्ष्यस्य बीजस्य व्यक्तिः **प्रतिमुखं** मतम् ॥ **गर्भ**स्तु दृष्टनष्टस्य बीजस्यान्वेषणं मुहुः । गर्भसन्धौ प्रवृत्तस्य बीजार्थस्या**वमर्शनम्** ॥ हेतुना येन केनापि विमर्शः सन्धिरिष्यते । बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् ॥ ऐकार्थ्यमुपनीयन्ते यत्र **निर्वहणं** हि तत् ॥" इत्यादीनि तल्लक्षणानि । तत्प्रपञ्चस्तु दशरूपकादौ द्रष्टव्यः ॥

**इति श्रीमत्तातयार्यचरणनलिनचञ्चरीकस्य वात्स्यानन्तार्यसेवासमधिगतशारीरकमीमांसाभाष्यहृदयस्य परकालमुनिकृपालब्धपारमहंस्यस्य श्रीरङ्गरामानुजमुनेः कृतिषु श्रीन्यायसिद्धाञ्जनव्याख्यायां जीवपरिच्छेदो द्वितीयः ॥**

---

योगिविचित्रवेषं, **पर्यायतः** क्रमेण, **प्राप्य**-लब्ध्वा, केनाप्यद्भुतनाटकेन लोकविलक्षणेन जननमरणादिव्यापारलक्षणेन नाटकेन, अन्यत्र भरतशास्त्रानुसारिणा केनचिन्नाटकेन, **कमपि श्रीमन्तं** चिदचिद्विलक्षणं श्रीसखं, अन्यत्र यं कञ्चन संपत्समृद्धं पुरुषम् **आनन्दयन्** लीलारसमनुभावयन्, **गर्भावमर्शात्** अनेकगर्भानुप्रवेशादिदुःखपरामर्शात्, **परं** अनन्तरं **शास्त्रमुखे** शास्त्रप्रधानभूते सारतमशास्त्रे, प्रतिमुखं मनः कृत्वा, **विद्यानिर्वहणेन** ब्रह्मविद्यानिष्पादनेन, लब्धविभवः लब्धमुक्तैश्वर्यः, **हृदि विद्योतते** अतिशयितप्रीतिविषयो भवति । अपुनरावृत्त्युपयुक्तात्यन्तप्रीतिविषयो भवतीत्यर्थः । अन्यत्र भरतशास्त्रानुसारेण मुख.प्रतिमुख.गर्भ.विमर्श.निर्वहणाभिधानपञ्चसन्धियुक्तनाटकेन पारितोषिकं लब्ध्वा अत्यन्तसन्तुष्टो भवतीत्यर्थः । मुखसन्ध्यादिलक्षणं **दशरूपकादौ** द्रष्टव्यम् ।

**इति श्रीकृष्णतातयार्यकृतिषु श्रीन्यायसिद्धाञ्जनव्याख्यायां रत्नपेटिकासमाख्यायां जीवपरिच्छेदः ।**

—o—o—

---

**अन्त्यपंक्तिस्तु ब्रह्मभानविशिष्टं कैवल्यमिति पक्षखण्डनपराऽपि स्यात् । कैवल्यस्य साम्प्रदायिकत्वं प्रागेवादर्शि । सांख्योक्तप्रकृतिलयादिवत् अपरिपूर्णात्मतत्त्वज्ञानादपि कैवल्यं स्यादित्यलम् । शुभमस्तु ।**

श्रीः

## श्रीन्यायसिद्धाञ्जने ईश्वरपरिच्छेदः ॥

**अथेश्वरश्चिन्त्यते । सर्वेश्वरत्वम्, व्यापकत्वे सति चेतनत्वम्, सर्वशेषित्वम्, सर्वकर्मसमाराध्यत्वम्, सर्वफलप्रदत्वम्, सर्वाधारत्वम्, सर्वकार्योत्पादकत्वम् । स्वज्ञानस्वेतरसमस्त-**

---

**रंग. स्वज्ञानस्वेतरेति ।** ईश्वरधर्मभूतज्ञानस्य द्रव्यत्वेऽपि न तं प्रति शरीरत्वम्; चैतन्यविशिष्टधार्य-

---

**र. पे.** ईश्वरनिरूपणं प्रतिजानीते **अथेति** । **सर्वेश्वरत्वमिति** सर्वनियन्तृत्वमित्यर्थः। स्वेतरत्वव्यापकस्वसङ्कल्पाधीनप्रवृत्तिकत्वमिति यावत् । स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसंबन्धेन एकमात्रवृत्तिधर्मवत्त्वमिति तु निष्कर्षः । तेन नाननुगमः । स्वनिष्ठावच्छेदकता स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसंबन्धावच्छिन्ना । स्वाधिकरणता स्वावच्छिन्नप्रतियोगिताकभेदवत्त्वसंबन्धावच्छिन्ना । भेदप्रतियोगितावच्छेदकता स्वसंकल्पाधीनप्रवृत्तिमत्त्वसंबन्धावच्छिन्ना । एकमात्रवृत्तित्वञ्च स्वप्रतियोगिवृत्तित्वस्वसामानाधिकरण्योभयसंबन्धेन भेदविशिष्टान्यत्वम् । **व्यापकत्वे सतीति** । स्वभिन्नसर्वद्रव्यसंयोगित्वे सतीत्यर्थः । इदञ्च जीवव्यावर्तनाय । कालादिवारणाय विशेष्यम् । स्वस्मिन् स्वसंयोगाभावादसंभवः स्यादिति स्वाभिन्नत्वनिवेशः । अद्रव्ये संयोगविरहात् तद्दोषवारणाय द्रव्यत्वनिवेशः । स्वभिन्नशरीरादिसंयोगिनि जीवेऽतिव्याप्तिवारणाय सर्वेति । स्वभिन्नसर्वद्रव्यसंयोगित्वञ्च स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसंबन्धेनैकमात्रवृत्तिधर्मवत्त्वम् । स्वनिष्ठावच्छेदकता स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसंबन्धेन । स्वाधिकरणता स्वावच्छिन्नप्रतियोगिताकभेदवत्त्वसंबन्धेन । भेदप्रतियोगितावच्छेदकता संयोगसंबन्धेन । सर्वशेषित्वं स्वेतरसर्वनिरूपितशेषित्वम् । जीववारणाय सर्वेति। **सर्वकर्मसमाराध्यत्वम्**=सर्वकर्मजन्यप्रीत्याश्रयत्वम्। **सर्वफलप्रदत्वम्**=सकलफलजनकसङ्कल्पवत्त्वम् । **सर्वाधारत्वम्**=अपृथक्सिद्धिसंबन्धावच्छिन्नस्वेतरसर्वनिरूपितमधिकरणत्वम् । तेन कालिकविशेषणतया सर्वाधारे काले नातिव्याप्तिः । अधिकरणत्वं च इहेदमिति प्रतीतिनियामकस्वरूपसंबन्धविशेषः, अखण्डधर्मान्तरं वा । यत्तु सर्वाधारत्वं सर्वद्रव्यपतनप्रतिबन्धकसङ्कल्पवत्त्वरूपमिति । तन्न; सर्वद्रव्यान्तर्गताकाशकालादेः पतनाप्रसिद्ध्या तद्घटितोक्तलक्षणासंभवात् । न च पतनप्रतिबन्धकत्वं पतनाभावप्रयोजकत्वं तत्र पतनाभाव एव सर्वद्रव्यनिष्ठत्वनिवेशान्नोक्तदोषावकाश इति वाच्यम्; अमूर्तद्रव्येषु पतनप्रसक्त्यभावेन भगवत्सङ्कल्पस्य तत्र पतनप्रतिबन्धकताया अस्वीकरणीयत्वात् । न च, "इच्छात एव तव विश्वपदार्थसत्ता" इत्युक्तप्रक्रियया पतनप्रसक्तिशून्यवस्तुनिष्ठपतना-

---

स्वपदेन ईश्वरनिष्ठ ईश्वरत्व तद्व्यक्तित्वादिकं ग्राह्यम् । स्वावच्छिन्नप्रतियोगिताकभेदवत्त्वसंबन्धेन ईश्वरत्ववति घटादौ वर्तमानः स्वसङ्कल्पाधीनप्रवृत्तिमत्त्वसंबन्धेन पटादिभेद एव । न तु तेन संबन्धेन ईश्वरभेदः । तथाच स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसंबन्धेन स्ववत् = ईश्वरत्ववत् पटादिकमेवेति तद्भेदस्य ईश्वरे एव सत्त्वात् इदं सर्वेश्वरत्वमीश्वरमात्रे । ईश्वरत्वस्य श्रीसाधारण्ये तु एकमात्रवृत्तिधर्मविशिष्टत्वमित्यनुक्त्वा उक्तसंबन्धेनेश्वरत्वविशिष्टत्वमिति वक्तव्यम् ।

**द्रव्यशरीरकत्वम्, स्वतस्सत्यसङ्कल्पत्वादिकञ्च ईश्वरलक्षणम् ।**

त्वादेरेव शरीरलक्षणत्वेन चैतन्ये तद्विशिष्टधार्यत्वाभावात् । अतोऽसम्भववारणाय **स्वज्ञाने**त्युक्तम् । **सत्यसङ्कल्पत्वादिक**मिति । आदिशब्देन स्वतोऽपहतपाप्मत्वमुमुक्षूपास्यत्वादिकं विवक्षितम् । ननु सर्व-

भावस्यापि भगवत्सङ्कल्पप्रयोज्यत्वावश्यम्भावान्न दोष इति वाच्यम्; तथासति द्रव्यपदवैयर्थ्यप्रसङ्गः अद्रव्यनिष्ठपतनाभावस्याप्युक्तरीत्या भगवत्सङ्कल्पप्रयोज्यत्वात् । यदि च पतनप्रतिबन्धकत्वं पतनानुत्पाद-प्रयोजकत्वम् । अनुत्पादश्च प्रागभाव एव । ततश्चाद्रव्येषु प्रागभावविरहादसंभवः स्यादिति द्रव्यत्वनिवेश आवश्यक इत्युच्यते; तदा अमूर्तेष्वपि पतनप्रागभावासंभवादसंभवतादवस्थ्यम् । किञ्च जगति सर्वत्र आधारत्वं पतनप्रतिबन्धकसङ्कल्पवत्त्वमेवेति न शक्यं वक्तुम्; भूतलादेर्घट.द्य.धारत्वस्य घटादेः रूपाद्या-धारत्वस्य चानुपपत्तिप्रसङ्गात् । ततश्च तत्र यादृशमाधारत्वं स्वरूपसंबन्धविशेषरूपमखण्डधर्मरूपं वा तस्यैव यथाश्रुतस्य प्रकृतलक्षणेऽपि निवेशसंभवात् सङ्कल्पघटितोक्तपरिष्कारानावश्यकतेति । **सर्वकार्यो-त्पादकत्वम्**=कार्यत्वव्यापकस्वनिष्ठकारणतानिरूपकत्वकत्वम् । दण्डकुण्डलादिव्यावृत्तये व्यापकत्व-निवेशः । न च कालेऽतिव्याप्तिरिति शङ्क्यम्; नित्यविभूत्यन्तर्गतकार्येषु कालस्याहेतुत्वात् । "कालं स पचते तत्र न कालस्तत्र वै प्रभुः" इति ह्युच्यते ।

**स्वज्ञाने**ति । स्वज्ञानभिन्नं स्वभिन्नं च यत् तादृशसर्वद्रव्यशरीरकत्वमित्यर्थः । ईश्वरज्ञानस्य चैतन्य-विशिष्टं प्रति अपृथक्सिद्धविशेषणत्वविरहात् तस्य शरीरत्वासंभवः स्यादिति स्वज्ञानभिन्नत्वनिवेश. । स्वस्य स्वशरीरत्वासंभवात् तद्दोषवारणाय स्वभिन्नत्वनिवेशः । अद्रव्ये द्रव्यत्वघटितशरीरत्वविरहात् तद्दोषवारणाय द्रव्यत्वनिवेशः । यदि च चैतन्यविशिष्टापृथक्सिद्धत्वमात्रमेव निवेश्यते; तदात्रऽलक्षणे द्रव्यपदं नोपादेयम् । न च रूपरसादिष्वीश्वरापृथक्सिद्धत्वविरहादसंभव इति वाच्यम्; तत्रापि द्रव्य-द्वाराऽपृथक्सिद्धिसत्त्वात् साक्षात्परंपरासाधारणापृथक्सिद्धत्वस्यैव लक्षणे निवेशात् । तथाच स्वेतरत्वव्याप कस्वापृथक्सिद्धविशेषणताकत्वं पर्यवसितम् । यद्यपि प्रकृतलक्षणे शरीरत्वशरीरे द्रव्यत्वनिवेशे प्रयोजनविरहेण स्वज्ञानस्वेतरसमस्तद्रव्येति द्रव्यत्वनिवेशवैयर्थ्यं दुर्वारम् । एवं चैतन्यावच्छिन्नानुयोगिताकत्वस्याप्यपृथक् सिद्धौ निवेशे प्रयोजनविरहात् स्वज्ञानेतरत्वनिवेशनमपि व्यर्थमेवापद्यते । न च-स्वज्ञानस्वेतरसमस्तद्रव्य-शरीरकत्वं स्वज्ञानस्वेतरद्रव्यत्वव्यापकशरीरत्वकत्वम् । तत्र स्वेतरत्वव्यापकत्वरूपात् स्वेतरत्वसमानाधि-करणभेदप्रतियोगितावच्छेदकत्वाभावादतिरिक्त एव स्वज्ञानस्वेतरद्रव्यत्वव्यापकत्वरूपः तादृग्द्रव्यत्व समा-नाधिकरणभेदप्रतियोगितावच्छेदकत्वाभाव इति न यथासन्निवेशो वैयर्थ्यम् [इति वाच्यम् ?]; यत एवमपि शरीरशब्दोक्तस्यापृथक्सिद्धौ ज्ञानावच्छिन्नानुयोगिताकत्वस्य द्रव्यत्वे वैशिष्ट्यस्य च वैयर्थ्यं दुष्परिहरमेव; तथापि शरीरपदवाच्यत्वस्यैवेह लक्षणे निवेशनीयतया नानुपपत्तिगन्धः । इत्थञ्च स्वज्ञानेतरत्वस्य द्रव्यत्वस्य चासंभववारकतयैव चारितार्थ्यं संभवतीत्यपि बोध्यम् । **स्वत इति** । स्वीयेच्छाप्रयोज्यमित्यर्थः । जीववारणाय स्वत इति । आदिना स्वतोऽपहतपाप्मत्वादिकं गृह्यते । ननु सर्वकार्योत्पादकत्वमिति कथमुत्पत्तिहेतुत्व-मात्रस्य लक्षणत्वसंभवः । तदसङ्गत्यभिप्रायेण हि जन्मादिसूत्रे जन्मादित्रितयहेतुत्वमेव लक्षणतयाऽभिहित

यत्तु जन्मादिसूत्रे जन्मादित्रितयसमाहारो लक्षणमुक्तम्, [1]तत्र एकैकस्य लक्षणत्वे सम्भवत्यपि, त्रयाणां त्रयः कर्तार इति कुम[तिशङ्काव्या]वर्तनाय तदिति मन्तव्यम्। सत्यादिवाक्येऽपि अनन्तपदेनैव सर्वव्यवच्छेदसिद्धौ शङ्कितक्रमेण व्यवच्छेदात् पूर्वविशेषणद्वयम्। एवमन्यत्रापि भाव्यम्॥

कार्योपादानत्वस्य प्रत्येक(पृथक्?)लक्षणत्वे जन्मादिसूत्रे जन्मादीत्येकवचनेनान्यपदार्थतया विवक्षितस्य समुदायस्य लक्षणत्वकथनं न युज्यते इत्यत्राह यत्त्विति। कुमतिशङ्काव्यावर्तनायेति। घटनिष्पत्तौ कुलालवत् राज्यस्थेम्नि राजवच्च उत्पादकसंरक्षकादीनां भेदशङ्का स्यादिति तद्व्यावृत्त्यर्थमेव। न तु प्रत्येकं लक्षणत्वेऽतिप्रसङ्गवारणार्थम्। अत एव, "अत्ता चराचरग्रहणात्" इति सूत्रे सर्वसंहर्तृत्वस्यैव परमात्मलिङ्गत्वं वर्णितमिति भावः। शङ्कितदोषव्यावृत्त्यर्थमेवान्यत्रापि विशेषणान्तरं द्रष्टव्यमित्याह सत्यादिवाक्येऽपीति। "सत्यपदं निरुपाधिकसत्तायोगि ब्रह्माह; तेन विकारास्पदमचेतनं तत्संसृष्टश्चेतनश्च व्यावृत्तः; नामान्तरभजनार्हावस्थायोगेन तयोर्निरुपाधिकसत्तायोगरहितत्वात्। ज्ञानपदं नित्यासंकुचितज्ञानैकाकारमाह; तेन कदाचित् संकुचितज्ञानत्वेन मुक्ता व्यावृत्ताः। अनन्तपदं देशकालवस्तुपरिच्छेदरहितस्वरूपमाह; तेन पूर्वपदद्वयव्यावृत्तकोटिद्वयविलक्षणाः सातिशयस्वरूपस्वगुणाः नित्याः व्यावृत्ताः" इति हि व्यावृत्तिक्रमः। अत्र च अनन्तपदेनैव सर्वव्यवच्छेदे सिद्धे सत्यज्ञानपदयोर्वैयर्थ्यमिति शङ्किते शिष्याकाङ्क्षाक्रमेणैव सत्यादिविशेषणानामुपन्यसनीयतया शिष्यस्य च प्रकृति-बद्ध-मुक्त-नित्यव्यावृत्तिजिज्ञासायाः स्थूलस्वसूक्ष्मत्वादिना क्रमेण प्रवृत्ततया तत्परिहारस्यापि तत्क्रमेणैव प्रवर्तनीयतया नोत्तरविशेषणेन पूर्वविशेषणवैयर्थ्यम्; उक्तरीत्या परिहारसम्भवादित्थमेव हि परिहर्तव्यमिति भावः। एवमन्यत्रापीति। "नित्यं विज्ञानमानन्दं ब्रह्म", "अविकाराय शुद्धाय नित्याय परमात्मने" इत्यादावित्यर्थः॥

या तु—परस्परभिन्नास्त्रय ईश्वराः सत्त्वादिगुणोन्मेषभिदुरकल्पभेदेषु चक्रनेमिनीत्या निम्नोन्नते-

मित्यत आह यत्त्विति। त्रितयसमाहारः—त्रितयरूपः समुदायः; उक्तसमुदायहेतुत्वमिति यावत्। यद्वा हेतुतासंबन्धेनोक्तसमुदाय एव लक्षणमित्यभिप्रायेणेदम्। "जन्मस्थितिलयाः स्वनिमित्तोपादानभूतं वस्तु ब्रह्मेति लक्षयन्ति" इति हि भाषितम्। संभवत्यपीति। अतिव्याप्तिराहित्यादिति भावः। अत एव "अत्ता चराचरग्रहणात्" इत्यत्र सर्वसंहर्तृत्वमात्रस्य परमात्मलिङ्गत्वमुक्तम्। त्रयाणां त्रयः कर्तार इति कुमतिशङ्काव्यावर्तनायेति। त्रिमूर्तिसाम्यवादिभिस्तथैवाभ्युपगमादिति भावः। अन्यत्राप्येवं दृश्यत इत्याह सत्यादीति। अनन्तपदेनैव सर्वव्यवच्छेदसिद्धाविति। त्रिविधपरिच्छेदराहित्यस्यैवानन्तपदार्थतया तत्रापकर्षरूपस्वरूपपरिच्छेदराहित्यस्याप्यन्तर्गततया तस्येश्वरव्यतिरिक्ते क्वाप्यसंभवादिति भावः। शङ्कितक्रमेणेति। स्थूलत्वात् प्रथमं प्रकृतित्व-बद्धत्वशङ्का जायत इति निर्विकारत्वरूपसत्यत्वविशेषणेन तद्व्यावृत्तौ, ततः सूक्ष्मरूपमुक्तत्वशंका जायत इति नित्यासंकुचितज्ञानैकाकारत्वरूपज्ञानत्वेन तद्व्यावृत्तिः; ततः सूक्ष्मतरनित्यत्वशङ्कायामनन्तपदेन तद्व्यावृत्तिरित्येवं क्रमेणेत्यर्थः। एवमन्यत्रापीति। "नित्यं

1 यत्तु इति यच्छब्दस्य लक्षणवाचित्वात् तत्प्रतिसंबन्धि तत्रेति पदं समाहारात्मकलक्षणे इत्यर्थकम्। तदिति पदं तु लक्षणवचनमित्यर्थकम्।

**अद्वितीय-समाभ्यधिकदरिद्रत्वश्रवणादसावेकः । स एव ब्रह्म । तस्यैव त्रिविधपरिच्छेद-**

---

श्वर्या इति कल्पना, तां निरस्यति **अद्वितीयेति** । 'एकमेवाद्वितीयम्', 'न तत्समश्चाभ्यधिकश्च दृश्यते', "प्रशासितारं सर्वेषाम्" इत्यादिश्रवणादिति भावः । एतेन मुक्तानामपि, "स स्वराड् भवति", "परमं साम्यमुपैति" इति स्वाराज्यादिश्रवणात् तेऽपीश्वरा इति शङ्का निराकृता । "सायुज्यं प्रतिपन्ना ये तीव्रभक्तास्तपस्विनः । किङ्करा मम ते नित्यं भवन्ति निरुपद्रवाः ॥", "परात्परं पुरुषमुपैति दिव्यम्" इत्यादिश्रवणादिति । ननु एकविज्ञानेन चिदचिदात्मकस्य सर्वस्य जगतो विज्ञानं प्रतिज्ञाय मृत्कार्यादि-दृष्टान्तैस्तदुपपादनात्, "ईश्वराव्याकृतप्राणैः स्वराट् सिन्धुरिवोर्मिभिः । यत् प्रनृत्यदिवाभाति तस्मै सद्ब्रह्मणे नमः ॥" इति **कात्यायन**वचनाच्च समुद्रस्थानीयस्य सद्रूपस्य ब्रह्मणस्तरङ्गस्थानीया इमे चिदचिदीश्वरा इति कस्यचिच्छंकामुद्भाव्य ब्रह्मण ईश्वरातिरिक्तत्वे चिदचिदीश्वराणां नित्यत्वागमविरोधम्, "नारायणः परं ब्रह्म तत्त्वं नारायणः परः" इत्यादिश्रुतिविरोधश्चाभिप्रयन् आह **स एव ब्रह्मेति** । **त्रिविधपरिच्छेदेति** । देश काल-वस्तुपरिच्छेदराहित्यं त्रिविधपरिच्छेदराहित्यम् । देशापरिच्छेदः सर्वदेशवर्तित्वम् । कालापरिच्छेदः

---

विज्ञानमानन्दं ब्रह्म", "अविकाराय शुद्धाय नित्याय परमात्मने" इत्यादावित्यर्थः ॥

त्रिमूर्तिसाम्यपक्षं निरस्यति **अद्वितीयेति** । "एकमेवाद्वितीयम्", "न तत्समश्चाभ्यधिकश्च दृश्यते" इत्यादिभिरीश्वरानेकत्वनिरासादित्यर्थः । **अत्राद्वितीयत्वं** स्वसजातीयद्वितीयराहित्यम् । स्वसजातीय-निष्ठभेदप्रतियोगितानवच्छेदकैकत्वमिति यावत् । साजात्यञ्च समस्तचिदचिन्नियन्तृत्वेन । तेन चेतनत्वादिना साजात्यमादाय नासंभवः । **समराहित्यं** स्वावधिकापकर्षानाश्रयराहित्यम् । स्वेतरत्व-व्यापकस्वावधिकापकर्षकत्वमिति यावत् । **अभ्यधिकराहित्यम्** स्वावधिकोत्कर्षाश्रयराहित्यम्, उत्कर्षावधित्वशून्यत्वपर्यवसितम् ॥ ईश्वरो न ब्रह्म ; किन्तु ब्रह्मांश एवेति पक्षं निरस्यति **स एव ब्रह्मेति** । तत्र हेतुमाह **तस्यैव त्रिविधपरिच्छेदरहितस्येति** । अयं भावः—"ब्रह्मविदाप्नोति परम्' इत्युक्त-ब्रह्मशब्दार्थविवरणरूपे, "सत्यं ज्ञानमनन्तं ब्रह्म" इति वाक्ये पुल्लिङ्गद्वितीयान्तानन्तपदेन रूढ्युपस्थापिते विष्णौ योगार्थस्य त्रिविधपरिच्छेदराहित्यस्य बोधनात् तत्र वस्तुपरिच्छेदराहित्यस्य सर्ववस्तुसामानाधि-करण्यार्हत्वरूपस्यापृथक् सिद्धिसंबन्धेन सर्ववस्तुविशिष्टत्वपर्यवसिततया तेन सर्वावधिकोत्कर्षरूपबृहत्त्वस्य विष्णावेव सिद्ध्या, "यो वेद निहितं गुहायां परमे व्योमन्" इत्यादिना तदुपासनेनैव मोक्षफल श्रवणेन, "स चानन्त्याय कल्पते" इत्युक्तज्ञानविकासहेतुत्वरूपबृंहणत्वस्यापि तत्रैव सिद्ध्या, "बृहति बृंहयति तस्मादुच्यते परं ब्रह्म", "बृहत्त्वात् बृंहणत्वाच्च तद्ब्रह्मेत्यभिधीयते" इति निरुक्तब्रह्म-शब्दार्थत्वं विष्णोरेवेति । **सर्वात्मकत्वेनेति** । सर्वमात्मा=स्वरूपम् अपृथक्सिद्धविशेषणं यस्येति व्युत्पत्त्या सर्ववस्तुविशिष्टत्वेनेत्यर्थः । तृतीयार्थश्च हेतुत्वम् । तस्य च निरूपकतासंबन्धेन निरतिशयबृहत्त्वे सर्वोत्कर्षरूपेऽन्वयः । सर्वस्यापि तदपृथक्सिद्धविशेषणत्वादेव हि तस्य सर्वोत्कृष्टत्वम् । ननु, "अग्निः सर्वा देवता" इत्यादिभिरग्न्यादेरपि सर्वदेवतात्मकतया निरतिशयबृहत्त्वप्रतीत्या कथं भगवत एव

रहितस्य सर्वात्मकत्वेन निरतिशयबृहत्त्वबृंहणत्वश्रवणात्। "अग्निः सर्वा देवताः", "आपो वा इदं सर्वम्", "ब्राह्मणो वै सर्वा देवताः", "नकिरिन्द्र त्वदुत्तरः" इत्यादेर्व्याघात-कर्मविधिशेषत्वाभ्यामन्यपरत्वनिर्णयात् न तेषामानन्त्यब्रह्मत्वादिसिद्धिः। स एव सदसदव्याकृतब्रह्मात्माऽऽकाशप्राणशिवनारायणादिशब्दैः कारणप्रकरणगतैः सामान्यतो विशेषतश्च व्यपदिश्यते।

---

सर्वकालवर्तित्वम्। वस्तुपरिच्छेदः सर्ववस्तुसामानाधिकरण्यार्हत्वम्। ततश्च यत्तेदं त्रिविधपरिच्छेद-राहित्यम्, तस्यैव सर्वात्मत्वसम्भवः। सर्ववस्तुसामानाधिकरण्याभावे सर्वात्मत्वासम्भवात्। यस्य च सर्वात्मत्वम्, तस्यैव सर्वाधारत्वसर्वशेषित्वसर्वनियन्तृत्वरूपसर्वोत्कृष्टगुणत्वसम्भवेन, 'बृहन्तो ह्यस्मिन् गुणाः' इति श्रुतिप्रतिपाद्यस्य गुणतो बृहत्त्वलक्षणनिरतिशयबृहत्त्वस्य ब्रह्मशब्दप्रवृत्तिनिमित्तस्य सम्भवः। ततश्च तैत्तिरीयके, "सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायाम्" इति द्वितीयान्तपुल्लिङ्गानन्तशब्देन योगरूढिमता रूढिशक्त्युपस्थापितदेवताविशेषे विष्णौ अवयवशक्त्या त्रिविधपरिच्छेदराहित्यं प्रतिपाद्य तदुपपादनाय, "तस्माद्वा एतस्मादात्मनः" इत्युत्तरसन्दर्भेण सर्वान्तरत्वम्, तन्मुखेन निरतिशयबृहत्त्वञ्चाऽऽविष्कृत्य "अनन्तं ब्रह्म यो वेद" इत्युपक्षिप्तस्य बृहत्त्वस्य प्रतिष्ठापनादिति भावः। नकिः—नास्तीत्यर्थः। अन्यपरत्वनिर्णयादिति। कर्मप्राशस्त्यपरत्वनिर्णयादित्यर्थः। ननु, 'अग्निः सर्वा देवताः' इत्यादिवाक्यानामन्यपरत्वेऽपि सृष्टिप्रकरणगतेष्वपि वाक्येषु, 'सदेव सोम्येदमग्र आसीत्', 'असद्वा इदमग्र आसीत्', 'तद्धेदं तर्ह्यव्याकृतमासीत्' 'ब्रह्म वा इदमग्र आसीत्', 'आत्मा वा इदमेक एवाग्र आसीत्' "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते", 'प्राणमेवाभिसंविशन्ति', 'न सन्न चासच्छिव एव केवलः', "एको ह वै नारायण आसीत्" इत्येवं परस्परविरुद्धार्थदर्शनात् कथमर्थनिर्णय इत्याशङ्क्याह—सदसदिति। सामान्यत इति। सद्ब्रह्मादिशब्दाः सामान्यशब्दाः। तेषां व्यक्तिविशेषरूढ्यप्रसिद्धेः। नारायणादिशब्दाः विशेषशब्दाः। सच्छब्दस्तावत् सत्तायोगिषु सर्वेषु प्रवृत्ततया न विशेषनिर्धारणार्हः।

---

निरतिशयबृहत्त्वमित्यत आह अग्निरिति। नकिः=नास्तीत्यर्थः। व्याघातेति। अनेकेषां सर्वोत्कृष्टत्वं हि व्याहतमिति भावः। कर्मविधिशेषत्वेति। अर्थवादाधिकरणन्यायादिति भावः। अन्यपरत्वनिर्णयात्--प्राशस्त्यपरत्वनिर्णयात्। आनन्त्यम्--त्रिविधपरिच्छेदराहित्यम्। ब्रह्मत्वम्—निरतिशयबृहत्त्वं बृंहणत्वञ्च। आदिना जगत्कारणत्वपरिग्रहः। ननु तथापि सृष्टिप्रकरणगतेष्वपि वाक्येषु सदसदव्याकृतादिशब्दैः कारणस्याभिधानात् भगवत एव जगत्कारणत्वमिति निर्णयो न संभवतीति कथं तस्य ब्रह्मत्वसिद्धिः; कारणत्वस्यैव ब्रह्मलक्षणत्वादित्यत आह स एवेति। सदसदित्यादि। "सदेव सोम्येदमग्र आसीत्", "असद्वा इदमग्र आसीत्", "तद्धेदं तर्ह्यव्याकृतमासीत्", "ब्रह्म वा इदमग्र आसीत्", "आत्मा वा इदमेक एवाग्र आसीत्", "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते", "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति", "न सन्न चासच्छिव एव केवलः", 'एको ह वै नारायण आसीत्' इति श्रवणादिति भावः। नारायणादीति। आदिना पुरुषसूक्तगतपुरुषशब्दपरिग्रहः। कारणप्रकरणगतैरिति। इदञ्चैकार्थ्यावश्यंभावहेतुगर्भम्। कारणैक्यं ह्यावश्यकमिति भावः। सामान्यत इति। सद्ब्रह्मात्मशब्दाः सामान्यशब्दाः। तेषां व्यक्तिविशेषे रूढिविरहात्।

न च वृश्चिकोत्पत्तौ गोमयवृश्चिकादिवत् जगदुत्पत्तौ देशकालभेदात् कारणानियमः किं न स्यादिति वाच्यम्; प्रमाणान्तरेण भेदासिद्धेः। शब्देन तु समानप्रकरणत्वप्रत्यभिज्ञानात् सर्वशाखाप्रत्यय-

ब्रह्मशब्द एकत्र रूढोऽपि बहुषु रूढत्वप्रयुक्ततया अन्यार्थत्वशङ्कार्हः स्यात्। **आत्मशब्दश्च** जीवपरादिसाधारणप्रयोगः। एवं पुरुषप्राणाक्षरादिशब्दा अपि। **शिवशब्दस्यापि** मङ्गळत्वप्रवृत्तिनिमित्तकतया सामान्यशब्दत्वम्। **नारायणशब्दस्तु** न जात्युपाधिवचनः, न चानेकरूढः। अतस्तेनान्येषां विषयविशेषनिर्धारणं युक्तम्। **आकाशशब्दश्च** योगार्थः। ततश्चाविरोधाय एकस्मिन्नर्थे पर्यवसानं युक्तमिति भावः। ननु कल्पभेदेनाण्डभेदेन वा सर्वेषामपि कारणत्वसम्भवेन विरोधाभावात् न भिन्नार्थरूढानां शब्दानाममुख्यवृत्त्या एकस्मिन्नर्थे पर्यवसानं युक्तमित्याशङ्क्याह **न च वृश्चिकेति**। **समानप्रकरणत्वेति**। प्रकरणान्तरगतानां भूयसां धर्माणां प्रकरणान्तरे प्रत्यभिज्ञायमानत्वादित्यर्थः। ततश्च किमित्यत आह **सर्वशाखेति**। यथा, "एकं वा संयोगरूपचोदनाख्याऽविशेषात्" इति न्यायेन फलसंयोग-रूप-चोदना-समाख्यारूपधर्माविशेषात् विद्याकर्मलक्षणधर्म्यैक्यम्, एवं भूयसां धर्माणां प्रत्यभिज्ञयैक्यावगमात् कारणरूपधर्म्यैक्यमित्यर्थः। ननु बहुधर्मप्रत्यभिज्ञानेऽपि धर्मिवाचिपदानां विरुद्धार्थप्रतिपादकत्वात् कथमैक्य-

सच्छब्दो हि प्रमाविषयत्वरूपस्य कालसंबन्धरूपस्य वा सत्त्वस्याश्रयेषु सर्वत्र प्रवर्तमानतया न विशेषनिर्णायकः। ब्रह्मशब्दस्यैकरूढत्वेपि चेतनत्वाचेतनत्वसंशयसहतया तस्यापि सामान्यशब्दत्वमेव। विशेषणनिर्णयाजनकत्वमेव हि सामान्यत्वम्। आत्मशब्दस्य जीवेश्वरसाधारण्यात् तथात्वम्। नारायणादिशब्दास्तु व्यक्तिविशेषे रूढत्वात् विशेषशब्दाः। शिवशब्दस्यापि मङ्गलत्वप्रवृत्तिनिमित्तकतया सामान्यशब्दत्वमेव। ततश्च कारणवाचिनां सर्वेषां शब्दानामेकविषयत्वावश्यम्भावे, "छागो वा मन्त्रवर्णात्" इति न्यायेन, "पशुना यजेत" इति विधिगतपशुशब्दस्य, "छागस्य वपाया मेदस" इति मन्त्रवर्णोक्तच्छागरूपविशेषे पर्यवसानवत् सदादिसामान्यशब्दानां नारायणशब्दोक्तविशेषे पर्यवसानात्, विशेषरूढाकाशादिशब्दानामपि रूढ्यर्थस्य कृत्स्नप्रपञ्चकारणत्वासंभवेन योगेन परमात्मपरतया च सर्ववाक्यैककण्ठ्येन भगवत एव जगत्कारणत्वसिद्धिरिति भावः। ननु कल्पभेदेनाण्डभेदेन वाऽनेकेषां कारणत्वसंभवात्, एकस्यैव जगत्कारणत्वमाश्रयणीयमिति निर्बन्धस्य निर्बन्धनतया कारणवाक्यानामेकत्र पर्यवसानं नावश्यकमित्यभिप्रायेण शङ्कते **न चेति**। किं प्रमाणान्तरेण भेदप्रतीत्या तथैवाभ्युपगन्तव्यमित्यभिप्रायः, उत शब्देन तथा प्रतीयत इति [इति?] विकल्पमभिप्रेत्य क्रमेण प्रतिवक्ति **प्रमाणान्तरेणेति**। **भेदासिद्धेरिति**। शास्त्रयोनित्वाधिकरणन्यायेन प्रत्यक्षानुमानयोर्जगत्कारणविषये अप्रवृत्तेरिति भावः। **समानप्रकरणत्वप्रत्यभिज्ञानादिति**। एकविषयत्वप्रत्यभिज्ञानादित्यर्थः। तच्च प्रकरणान्तरगतानां भूयसां धर्माणां प्रकरणान्तरे उपलभ्यमानत्वकृतम्। **सर्वशाखेति**। यथा, "एकं वा संयोग-रूप-चोदनाख्याऽविशेषात्" इति न्यायेन फलसंयोग-रूप-चोदना-समाख्यारूपधर्माविशेषवशात् विद्याकर्मरूपधर्म्यैक्यम्, एवं भूयसां धर्माणां प्रत्यभिज्ञयैक्यावगमात् कारणरूपधर्म्यैक्यसिद्धिरित्यभिप्रायः। ननु प्रत्यभिज्ञानेऽपि

न्याय-सामान्यविशेषन्यायाभ्यामेकत्वादिकण्ठोक्तया अभिन्नार्थोपपत्तौ भेदकल्पनायोगात्। अतो न प्रधानादेर्ब्रह्मत्वम्॥ नापि ब्रह्मरुद्रादेः; तेषां सृज्यत्वसंहार्यत्वकर्मवश्यत्वादिश्रवणेन जीवत्वसिद्धेः।

**कण्ठोक्तकर्मवश्यत्वकार्यत्वेषु न हेतुता। कार्यता लीलया युक्ता कारणस्य हतैनसः॥**

मित्याशङ्क्याह **सामान्यविशेषेति**। **एकत्वादिकण्ठोक्तयेति**। "एकः शास्ता न द्वितीयोऽस्ति" "द्यावापृथिवी जनयन् देव एकः" इत्यादिश्रुतेरेकविज्ञानेन सर्वविज्ञानश्रवणाच्चेति भावः॥

**तेषां सृज्यत्वेति**। "विश्वकर्मा ह्यजनिष्ट देवः", "स प्रजापतिरेकः पुष्करपर्णे समभवत्", "यो ब्रह्माणं विदधाति पूर्वम्", 'त्र्यक्षः शूलपाणिः पुरुषोऽजायत', 'ललाटात् क्रोधजो रुद्रोऽजायत', "[1]सोऽरोदीत्। तं प्रजापतिरब्रवीत्। कुमार किं रोदिषि, यच्छ्रमात्तपसोऽधिजातोऽसीति। सोऽब्रवीदनपहतपाप्मास्म्यविहित-नामा; नाम मे देहि पाप्मनोऽपहत्या इति। तमब्रवीत् रुद्रोऽसीति", "एको ह वै नारायण आसीन्न ब्रह्मा नेशानः", "आभूतसम्प्लवे प्राप्ते प्रलीने प्रकृतौ महान्। एकस्तिष्ठति विश्वात्मा स तु नारायणः प्रभुः" इत्यादिभिः **कार्यत्वकर्मवश्यत्वादीनां** प्रतिपादनादिति भावः। **कण्ठोक्तकर्मवश्यत्वकार्यत्वेष्विति** बहुव्रीहिः। पुरुषेष्विति शेषः। ननु **अथर्वशिखायाम्**, "ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्ते" इति भगवतोऽप्युत्पत्तिर्भगवदवतारेषु शास्त्रार्थानुष्ठानतत्फलभोगादिश्च श्रूयते इत्यत आह **कार्यता लीलया युक्तेति**। "अजायमानो बहुधा विजायते", "न मे पार्थास्ति कर्तव्यम्", "धर्मसंस्थापनार्थाय", "इच्छा-गृहीताभिमतोरुदेहः" इत्यादिभि**र्लीलाकार्यत्व**श्रवणात्। ननु, "अजायमानः" इति श्रुतेर्देवतान्तरविषयत्व-मस्त्वित्याशङ्क्याह **हतैनस** इति। अपहतपाप्मन इत्यर्थः। "अपहतपाप्मा दिव्यो देव एको नारायणः" इति श्रुतेः। इदमुपलक्षणम्, "ह्रीश्च ते लक्ष्मीश्च पत्न्यौ" इति तत्प्रकरणेऽनन्यथासिद्धलक्ष्मी-

---

कथमैक्यसिद्धिः, धर्मिवाचिपदानां विरुद्धार्थत्वादित्यत आह **सामान्येति**। **एकत्वादिकण्ठोक्त्येति**। 'एकः शास्ता न द्वितीयोऽस्ति शास्ता', 'द्यावापृथिवी जनयन् देव एकः' इत्यादिरूपया, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञारूपया चेति भावः।

**तेषामित्यादि**। "विश्वकर्मा ह्यजनिष्ट देवः" "स प्रजापतिरेकः पुष्करपर्णे समभवत्", 'यो ब्रह्माणं विदधाति पूर्वम्', 'त्र्यक्षः शूलपाणिः पुरुषोऽजायत', 'ललाटात् क्रोधजो रुद्रोऽजायत', 'सोऽरोदीत्। तं प्रजापतिरब्रवीत् कुमार किं रोदिषि यच्छ्रमात्तपसोधिजातोसीति। सोऽब्रवीत् अनपहतपाप्माऽस्म्यविहित-नामा नाम मे देहि पाप्मनोपहत्या इति। तमब्रवीत् रुद्रोसीति" एवं, "एको ह वै नारायण आसीत् न ब्रह्मा नेशानः", "आभूतसंप्लवे प्राप्ते प्रलीने प्रकृतौ महान्। एकस्तिष्ठति विश्वात्मा स तु नारायणः प्रभुः" इत्यादिभिः कार्यत्वादिप्रतिपादनादिति भावः। **कण्ठोक्तकर्मवश्यत्वकार्यत्वे**ष्विति बहुव्रीहिः। पुरुषेष्विति शेषः। नन्वथर्वशिखायाम्, "ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्ते" इति भगवतोपि कार्यत्वं श्रूयत इत्यत आह **कार्यतेति**। **लीलयेति**। "अजायमानो बहुधा विजायते", "इच्छागृहीताभिमतोरुदेहः", "रक्षार्थं सर्वभूतानां विष्णुत्वमुपजग्मिवान्" इत्यादिभिस्तथाऽवगमादिति भावः। **हतैनस** इति, "अपहत-

---

1 शतपथब्राह्मणवाक्यमिहानूद्यमानमन्यत्रस्थितानुपूर्वीविलक्षणम्। अर्थैक्यं त्वक्षतम्।

**कारणादिप्रकरणेषु च तत्तद्वाचकशब्दानां शरीरिपर्यन्ततया, निर्वचनान्तरेण वा आकाश-प्राणादिशब्दवत्, परमात्मन्येव पर्यवसानसिद्धेः । तदयं संग्रहः—**

**परविद्यासु जीवोक्तिर्निरुक्तयादेः [1]पराश्रया । तल्लिङ्गानन्यथासिद्धौ तद्विशिष्टावलम्बिनी ॥**

---

पतित्वश्रवणादित्यपि द्रष्टव्यम् । ननु, "हिरण्यगर्भः समवर्तताग्रे भूतस्य", "कारणं तु ध्येयः सर्वैश्वर्यसम्पन्नः सर्वेश्वरः शम्भुराकाशमध्ये", "देवा ह वै स्वर्गं लोकमगमन् । ते देवा रुद्रमपृच्छन्" इत्यारभ्य, "नान्यः कश्चिन्मत्तो व्यतिरिक्तः" इत्यादिभिः कारणत्वमुमुक्षुध्येयत्वादिप्रकरणेषु देवतान्तरस्यापि श्रवणात् कथं नारायणे पर्यवसानमित्याशङ्क्याह **कारणादिप्रकरणेषु चेति । शरीरिपर्यन्ततयेति** । आकृत्यधिकरणन्यायादिति भावः । **निर्वचनान्तरेण वेति** । यौगिकव्युत्पत्त्येत्यर्थः । आ=समन्तात् काशते, काशयतीति वा आकाश-इत्याकाशादिशब्दानां परमात्मपरत्ववत् हिरण्यस्य=हिरण्मयस्य परमव्योम्नो गर्भभूतः-तत्र स्थितः परमपदनिलय-स्सन् सृष्टेः प्राक् समवर्तत, "देवानां पूरयोध्या तस्यां हिरण्मयः कोशः" इति श्रुतेः । तथा शम्भुशब्देऽपि शं भवतीति शम्भुः ; सुखरूपो भवतीत्यर्थः । यदा अन्तर्भावितण्यर्थो भवति, तदा सर्वेषां सुखं भावयतीति शम्भुः-इत्यादिप्रकारेण, "साक्षादप्यविरोधं जैमिनिः" इति न्यायेन नारायणे पर्यवसानसम्भवादिति भावः ॥ **निरुक्तयादेरिति** । निगमनिरुक्तव्याकरणवशेन प्रकृतिप्रत्ययविभागकल्पनेन जीवोक्तीनां परविषयत्वमित्यर्थः । तल्लिङ्गेति । "त्रिशीर्षाणं त्वाष्ट्रमहनम्" इत्यादौ त्वाष्ट्रवधादीनामनन्यथासिद्धेन्द्रलिङ्गत्वादिन्द्रादिशब्द-

---

पाप्मा दिव्यो देव एको नारायणः" इत्यकर्मवश्यतयोक्तस्य कर्मकृतजन्मासंभवादिति भावः । ननु, "हिरण्यगर्भः समवर्तताग्रे भूतस्य", "कारणं तु ध्येयः, सर्वैश्वर्यसंपन्नः सर्वेश्वरः शंभुराकाशमध्ये ध्येयः" इत्यादिभिः कारणत्वमुमुक्षुध्येयत्वादिप्रकरणेषु देवतान्तरस्यापि श्रवणात् कथं नारायणपर्यवसानमित्या-शङ्क्याह **कारणेति । शरीरिपर्यन्ततयेति** । आकृत्यधिकरणन्यायादिति भावः । **निर्वचनान्तरेण वेति**। यौगिकव्युत्पत्त्येत्यर्थः । आ=समन्तात् काशते, काशयतीति वा आकाशशब्दस्य, प्राणयति सर्वाणि भूतानीति प्राणशब्दस्य च परमात्मपरत्ववत्[2] हिरण्यगर्भशब्दस्य हिरण्यस्य हिरण्मयस्य परमव्योम्नो गर्भः अन्तः स्थित इति, शम्भुशब्दस्य च शं भवति सुखरूपो भवतीति वा, अन्तर्भावितण्यर्थकभूधातुना शं भावयति=सुखमुत्पादयतीति वा परमात्मपरत्वसंभवादिति भावः । **निरुक्त्यादेरिति** । निगमनिरुक्त-व्याकरणवशेन प्रकृतिप्रत्ययविभागकल्पनेन जीवोक्तीनां परमात्मविषयत्वमित्यर्थः । **तल्लिङ्गेति** ।

---

1 परविद्यास्वित्युपलक्षणम् । परमात्मप्रतिपादकतया निर्धारितस्थले इति यावत् । जीवेत्य-प्युपलक्षणम् ; अचेतनवाचिपदेऽपि परमात्मपरत्वस्येष्टत्वात् । अत एव पूर्वार्धम्, 'व्युत्पत्त्या परमात्मानं तत्तदुक्तिः प्रकाशयेत्' इत्येवंरूपाऽपि लक्ष्यते अधिकरणचिन्तामणौ (77. श्लोके) । निरुक्त्यादेरित्यादिना अपर्यवसानवृत्तिरपि गृह्यते । एतद्वृत्तिनैयत्यं तु उत्तरार्धविवक्षितस्थले । एवं गायत्रीविद्यायां गायत्री वा इदं सर्वमित्यत्र गायत्रीसदृशरूपगौणार्थग्रहणमपि; तथा चेतोर्पण-निगमादिति सूत्रात् । विशेषणतया चेतनाचेतनवचनावश्यकत्वं यत्र, तत्स्थलमाह तदिति । इन्द्रप्राणाधिकरणादौ व्यक्तमेतत् ॥ 2 वदिति दृष्टान्ततया निर्देशः शारीरकेविशिष्य स्थापित-त्वात् । सर्वव्याख्यानाधिकरणे हिरण्यगर्भादिशब्दग्रहणेऽपि तत् सूत्रे न स्पष्टम् ।

स्वोपासनोपदेश-स्वसर्वैश्वर्यप्रपञ्चनादेश्च प्रह्लादवामदेवादिवत् शास्त्रावगतस्वात्मशरीरकपरमात्मा-स्तद्विशिष्टपरमात्मपरः ; "जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्" इत्युक्तेरिति भावः । ननु चतुर्मुखरुद्रेन्द्रादीनामब्रह्मत्वे इन्द्रस्य, "प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृत-मित्युपास्स्व" इति स्वस्योपास्यत्वोपदेशः कथं सङ्गच्छताम् ? तथा अथर्वशिरसि, "देवा ह वै स्वर्गं लोकमगमन् । ते देवा रुद्र-पृच्छन् को भवानिति । सोऽब्रवीदहमेकः प्रथममासं वर्तामि भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्त इति. सोऽन्तरादन्तरं प्राविशत्। दिशश्चान्तरं स प्राविशत् । सोऽहं नित्यानित्यो ब्रह्माहं प्राञ्चोऽहं प्रत्यञ्चोऽहम्" इत्यादिना रुद्रस्यैव त्रिकालावस्थायित्वं सार्वात्म्यञ्च प्रतिपाद्यते इति प्रतीयते इत्याशङ्क्य, "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इति सूत्रकृतैव परिहृतमित्यभिप्रयन् आह स्वोपासनोपदेशेति । तस्य सूत्रस्यायमर्थः-प्रख्यातजीवभावेनेन्द्रेण, "मामेव विजानीहि मामुपास्स्व" इत्युपास्यस्य ब्रह्मणः स्वात्मोपदेशोऽयं न प्रमाणान्तरप्राप्तस्वात्मावलोकनकृतः । अपितु शास्त्रेण स्वात्मदृष्टिकृतः। "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि", "ऐतदात्म्यमिदं सर्वम्", "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा", "य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति । एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इत्येवमादिना शास्त्रेण जीवात्मशरीरकं परमात्मानमवगम्य जीवात्मवाचिनामहंत्वमादि-शब्दानामपि परमात्मनि पर्यवसानं ज्ञात्वा, "मामेव विजानीहि । मामुपास्स्व" इति स्वात्मशरीरक-परमात्मानमेवोपास्यत्वेनोपदिदेशेति । वामदेववत् । वामदेवः परस्य ब्रह्मणः सर्वान्तरात्मत्वं सर्वस्य च तच्छरीरत्वं शरीरवाचिनाञ्च शब्दानां शरीरिणि पर्यवसानं पश्यन्, अहमिति स्वात्मशरीरकं परं ब्रह्म निर्दिश्य तत्सामानाधिकरण्येन मनुसूर्यादीन् व्यपदिशति, "तद्धैतत् पश्यन्नृषिर्वामदेवः प्रतिपेदे, अहं

---

अनन्यथासिद्धजीवलिङ्गसत्त्वे तत्रत्यजीववाचिशब्दस्य तद्विशिष्टपरमात्मपरत्वम् । यथा, "त्रिशीर्षाणं त्वाष्ट्रमहनम्" इत्यादौ त्वाष्ट्रवधादीनामनन्यथासिद्धेन्द्रलिङ्गत्वादिन्द्रादिशब्दस्तद्विशिष्टपर इत्यर्थः । नन्विन्द्रादीनामब्रह्मत्वे, "प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्व" इति इन्द्रेण स्वस्योपास्यत्वोपदेशः कथं क्रियते, कथं वा अथर्वशिरसि रुद्रेण, "सोऽहं नित्यानित्यो ब्रह्माहं प्राञ्चोहं प्रत्यञ्चोहम्" इत्यादिना स्वस्य सार्वात्म्योपदेशेन सर्वेश्वरत्वप्रपञ्चनादिकञ्च क्रियत इत्यत आह स्वोपासनेति । सर्वैश्वर्यं सर्वेश्वरत्वम्, प्रपञ्चनम्—स्पष्टीकरणम् । सर्ववस्तुसामानाधिकरण्यनिर्देशेन हि सर्वेश्वरत्वं स्पष्टीक्रियते । एवं, "अहमेकः प्रथममासं वर्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्तः" इत्याद्युक्तनित्यत्व-स्वापृथक्सिद्धविशेषणतारहितवस्तुनिषेधादिकमादिना गृह्यते । प्रह्लादवामदेवादिवदिति । यथा प्रह्लादः स्वात्मशरीरकत्वेन परमात्मानुसन्धानात्, "सर्वगत्वादनन्तस्य स एवाहमवस्थितः । मत्तः सर्वमहं सर्वं मयि सर्वं सनातने" इत्यवदत् । यथा च वामदेवस्तादृशानुसन्धानात्, "तद्धैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहंमनुरभवम्" इत्याद्युक्तरीत्या सर्वं वस्तु स्वसामानाधिकरण्येनैव व्यपदिशति—तद्वदित्यर्थः। शास्त्रावगतेति । "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इति सूत्रोक्तरीत्येति भाव.। तथोपदेशः

नुसन्धानमूलत्वात् **तस्य च सर्वशरीरस्य यथाविधि चेतनाचेतनविशिष्टतयाऽप्युपास्यत्वोपपत्तेः।** मनुरभवं सूर्यश्च", "अहं कक्षीवानृषिरस्मि विप्र" इत्यादि। यथा च प्रह्लादः, "सर्वगत्वादनन्तस्य" इत्यादि वदति। ननु अस्मिन् प्रकरणे जीववाचिभिः शब्दैश्चिद्विशेषाभिधायिभिश्चोपास्यभूतस्य परस्य ब्रह्मणोऽभिधाने किं कारणमित्याशङ्क्य, "जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्" इति सूत्रकृतैव परिहृतमित्यभिप्रयन् आह **तस्य चे**ति। सूत्रस्यायमर्थः—"न वाचं विजिज्ञासीत वक्तारं विद्यात्। त्रिशीर्षाणं त्वाष्ट्रमहनम्। अरुन्मुखान् यतीन् सालावृकेभ्यः प्रायच्छम्" इत्यादिजीवलिङ्गात्, 'यावद्ध्यस्मिन् शरीरे प्राणो वसति, तावदायुः। अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति' इति मुख्यप्राणलिङ्गाच्च नाध्यात्मसम्बन्धभूमेति चेन्न; उपासात्रैविध्याद्धेतोः। उपासात्रैविध्यमुपदेष्टुं तत्तच्छब्देन अभिधानात्। निखिलकारणभूतस्य परस्य ब्रह्मणः स्वरूपेणानुसन्धानं भोक्तृवर्गशरीरकत्वानुसन्धानं भोग्यभोगोपकरणशरीरकत्वानुसन्धानञ्चेति त्रिविधमनुसन्धानमुपदेष्टुमित्यर्थः। तदिदं त्रिविधं ब्रह्मानुसन्धानं प्रकरणान्तरेऽप्याश्रितम्—"सत्यं ज्ञानमनन्तं ब्रह्म", "आनन्दो ब्रह्म" इत्यादिषु स्वरूपानुसन्धानम्; "तत् सृष्ट्वा तदेवानुप्राविशत्। तदनुप्रविश्य सच्च त्यच्चाभवत् निरुक्तञ्चानिरुक्तञ्च निलयनञ्चानिलयनञ्च। विज्ञानञ्चाविज्ञानञ्च सत्यञ्चानृतञ्च सत्यमभवत्" इत्यादिषु भोक्तृशरीरतया भोग्यभोगोपकरणशरीरतया चानुसन्धानम्। इहापि प्रकरणे त्रिविधानुसन्धानं युज्यत एवेत्यर्थः। **यथाविधी**त्यस्य **उपास्यत्वोपपत्ते**रित्यनेनान्वयः। **वेदार्थसंग्रहभाष्यादिष्वि**ति। प्रपञ्चित इति शेषः। तत्र हि, "अहमेकः प्रथममासम्" इत्यादिना न रुद्रः स्वस्य त्रैकालिकत्वमुपदिशति। किंतु स्वान्तर्यामिणः परमात्मन एव। इतरथा, "सोऽन्तरादन्तरं प्राविशत्" इति तच्छब्दप्रयोगस्य, "प्राविशत्" इति प्रथमपुरुषप्रयोगस्य चायुक्तत्वप्रसङ्गात् अहं प्राविशमिति प्रयोगापत्तेः। न च तत् श्रुतिवाक्यम्, न रुद्रवाक्यमिति वाच्यम्; "सोऽहं नित्यानित्यो ब्रह्माहं प्राञ्चोऽहं प्रत्यञ्चोहं दक्षिणाञ्च उदञ्चोऽहमधश्चोर्ध्वादिशश्चाहं पुमानहं स्त्र्यहं

---

किमर्थं इत्याशंक्याह **तस्य चे**ति। परमात्मन इत्यर्थः। **उपपत्ते**रिति। उपपत्त्यर्थमित्यर्थः। प्रयोजनस्य हेतुत्वविवक्षया पञ्चमी। **उपपत्तिः** संपत्तिः। तथाच स्वोपासनोपदेशादिकम् उक्तोपास्यत्वसंपत्त्यर्थमित्युक्तं भवति। **विशिष्टतयाऽपी**ति **अपि**ना स्वरूपेणोपास्यत्वसङ्ग्रहः। यद्वा नन्विन्द्रादीनां स्वोपास्यत्वोपदेशः तद्विशिष्टतया परमात्मोपासनार्थमिति वक्तव्यम्; तन्नोपपद्यते; परमात्मनो दिव्यमङ्गळविग्रहविशिष्टतयैवोपास्यत्वादित्यत आह **तस्य चे**ति। **यथाविधी**ति। विधिबलेन दिव्यमङ्गळविग्रहविशिष्टतयेव चेतनाचेतनविशिष्टतयाऽप्युपासनमुपपद्यत इति भावः। अत्र रुद्रस्य स्वात्मशरीरकपरमात्मानुसन्धानमूलकमेव स्वसार्वात्म्यादिप्रतिपादनमित्ययमर्थोऽथर्वशिरस्येव स्पष्टः। तत्र हि, "सोन्तरादन्तरं प्राविशत्" इति रुद्र एव वदति। तत्र हि सर्वात्मभावमनुसन्दधतो रुद्रस्य बुद्धिस्थः परमात्मा स इति परामृश्यते। ततश्च अन्नमयादेरन्तरात्=मनोबुद्ध्यहङ्काररूपान्तःकरणवर्गात् अन्तरं=जीवात्मानं स परमात्मा प्राविशदित्यर्थः। अनेन हि, 'न रुद्रस्य परमात्मत्वम्' इति स्पष्टं प्रतीयते। अहं प्राविशमित्यनुक्तेः; स्वोक्तसार्वात्म्योपपादकतया परमात्मानुप्रवेशोक्तेश्च।

अथर्वशिरश्श्वेताश्वतरादीनां निर्वाहः पुरुषनिर्णये प्रपञ्चितः। श्रीभाष्यकारैश्च वेदार्थसंग्रहभाष्यादिषु।

---

रंग. सावित्र्यहं गायत्र्यहं त्रिष्टुब्जगत्यनुष्टुप्चाहं छन्दोऽहं सत्योऽहं गार्हपत्योऽहं दक्षिणाग्निराहवनीयोहं सत्योऽहं गौरहं गौर्यहं ज्येष्ठोऽहं श्रेष्ठोऽहं वरिष्ठोऽहमापोऽहं तेजोऽहमृग्यजुःसामाथर्वाङ्गिरसोऽहमक्षरमहं गुह्योऽहमरण्योऽहं पुष्करमहं पवित्रमहमग्रञ्च मध्यञ्च बहिश्च पुरस्ताज्ज्योतिरहमहमेव च सर्वं च मामेव....यो मां वेद स सर्वान् देवान् वेद सर्वान् वेदान् वेद। गां गोभिर्ब्राह्मणान् ब्राह्मणेन हवींषि हविषाऽऽयुरायुषा सत्यं सत्येन धर्मं धर्मेण तर्पयामि स्वेन तेजसा। ततो देवा रुद्रमपश्यन्'' इति। ''स्वेन तेजसा'' इत्येतत्पर्यन्तं रुद्रवाक्यानुवृत्तेर्मध्ये श्रुतिवाक्यस्यानवकाशात्, ''सोऽन्तरात्'' इति वाक्यं रुद्रवाक्यमेव। न चैवम्, ''नान्यः कश्चिन्मत्तो व्यतिरिक्त इति'' इत्यत्र रुद्रवाक्यसमाप्तिद्योतकेतिकरणस्यासङ्गतिप्रसङ्गः; ''स्वेन तेजसा तर्पयामि'' इति रुद्रवाक्यान्ते वाक्यान्त(?)समाप्तिद्योतकस्य इतिकरणस्यापेक्षितत्वेन तत्रैवास्येतिकरणस्य निवेशनीयत्वात्। आकाङ्क्षापेक्षया संनिधेर्दुर्बलत्वेन व्यवहितान्वयस्यैव ज्यायस्त्वात्। ''यस्य येनार्थसम्बन्धो दूरस्थेनापि तेन सः। अर्थतो ह्यसमर्थानामानन्तर्यमकारणम्'' इत्यभियुक्तोक्तेश्च। ''तस्मान्मम त्वमेकोऽसीति हि कौषीतकिः पुत्रमुवाच। रश्मींस्त्वं पर्यावर्तयात्। बहवो वै ते भविष्यन्ति'' (छा.) इत्यादौ इतिशब्दप्रयोगानन्तरमपि वाक्यशेषानुवृत्तेर्दर्शनाच्च। तस्मात्, ''स्वेन तेजसा तर्पयामि'' इत्येतदन्तस्य सर्वस्य रुद्रवाक्यत्वात्, ''सोऽन्तरात्'' इति वाक्यं रुद्रवाक्यमेव। अतश्च, स इति निर्दिष्टस्य परमात्मन एवान्तर्यामित्वप्रतिपादनपरं तद्वाक्यम्। ततश्च प(तत्प?)युक्तोऽहंशब्दोऽपि ''शास्त्रदृष्ट्या तूपदेशः'' इति न्यायेनैव प्रवृत्त इत्यकामेनापि स्वीकरणीयम्। ननु, ''को भवान्'' इत्यभिमुखस्य रुद्रस्य स्वरूपे देवैः पृष्टे, ''अहमेकः प्रथममासम्'' इत्यादिना मदन्तर्यामी सर्वात्मेति [1]प्रतिवचनम्, ''आम्रान् पृष्टः कोविदारानाचष्टे'' इति न्यायं कथं नानुसरेदिति चेन्न; मदन्तर्यामी सर्वात्मेत्युक्ते सर्वात्मकभगवच्छरीरभूतोऽहमित्यर्थे पर्यवसन्नतया, ''को भवान्'' इति प्रश्नप्रत्युत्तरत्वसम्भवात्।

तथा अथर्वशिखायामपि न रुद्रपारम्यप्रतिपत्तिः। ननु अथर्वशिखायाम्, ''भगवन् किमादौ प्रयुक्तं ध्यानं ध्यायितव्यं किं तद्ध्यानं को वा ध्याता कश्च ध्येयः'' इत्युपक्रमे प्रश्नचतुष्टयमुपक्षिप्य तत्क्रमेण, ''ओमित्येतदक्षरमादौ प्रयुक्तं ध्यानं ध्यायितव्यम्'' इत्यादिना, ''ध्याता रुद्रः'' इत्यन्तेन प्रश्नत्रयोत्तरानन्तरं ध्येयनिर्धारणार्थमिदमाम्नायते, ''प्राणं मनसि सह करणैर्नादान्ते संप्रतिष्ठाप्य ध्यायीतेशानं प्रध्यायितव्यम् सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्ते सर्वाणि चेन्द्रियाणि सह भूतैः। न कारणं कारणानां ध्याता कारणं तु ध्येयः सर्वैश्वर्यसम्पन्नः सर्वेश्वरः शम्भुराकाशमध्ये'' [इति। अत्र ध्यायीतेशानम् ?] इत्यादिना शिवस्य ध्येयत्वं निर्धार्य तदितरवैमुख्येन तस्य ध्येयत्वनिर्धारणमुपपादयितुम्,

---

1 प्रतिवचनमिति। अयं रुद्र इति देवैः पूर्वमेव ज्ञाततया को भवानिति प्रश्न एव कथम्। सत्यम्। एवं प्रश्नाशयः—सर्वेषु देवमनुष्यादिषु विष्णुपारम्यानुगुणवेषाचारादिमत्सु दृश्यमानेषु भवान् परं लोकविलक्षणो भस्मधारी स्वतन्त्र इव लक्ष्यते। तत् को भवानिति। तत्र प्रतिवचनम्—मद्वाचकोऽहंशब्दोऽपि परमात्मपर्यन्तार्थक एव। अतः तच्छेषोऽहम्। तद्विषयोपासनविशेष एवायं भस्मधारणाद्यंगविशिष्टः। विशिष्याहमत्र नियमितस्तेनैवेति।

रंग. "सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे सम्प्रसूयन्ते" इति देवेषु ब्रह्मविष्णुरुद्रेन्द्राणां प्रमुखवोक्तिपूर्वकं ते प्रसूयन्ते इत्यादिना तेषामपि भूतेन्द्रियादितौल्येन सर्वेश्वरात् प्रसूतिमत्त्वोपन्यासेन, "न कारणं कारणानां ध्याता" इति तेषां कारणभूतस्य शिवस्य प्रसूतिराहित्योपन्यासेन च सर्वदेवेभ्यः शिवस्य विशेषं विभाव्य सोपपत्तिकं तस्य ध्येयत्वमुपपाद्य, "शिव एको ध्येयः शिवः शङ्करः सर्वमन्यत्परित्यज्य। समाप्ताऽथर्वशिखा" इत्युपसंहृतमिति चेन्न—तस्य कारणानुवादेन ध्येयत्वविधिपरत्वात्। पुरोवादे च नारायणपरत्वनिर्णये तस्मिन्निरुपाधिकावयवार्थभूम्ना शम्भ्वादिशब्दानां प्रवृत्तिरुपपन्ना। तथाच नारायणानुवाके, "विश्वशम्भुवम्" इत्युच्यते, 'शाश्वतँ शिवम्' इति च। "शिवास्ते पन्थानः सन्तु", "शिवः शिवानाम्", "यो वः शिवतमो रसः" इत्यादिषु शिवशब्दस्य मङ्गळमात्रे प्रयोगदर्शनात् "सर्वः शर्वः शिवः स्थाणुः", "स्वयम्भूः शम्भुरादित्यः" इति भगवन्नामसहस्रे शिवशम्भ्वादिशब्दानामपि पठितत्वात् पूर्वोक्तयुक्त्या शम्भ्वादिशब्दानां विष्णावेव [1]वृत्तिसम्भवादथर्वशिखा विष्णुपरैव।

ननु श्वेताश्वतरोपनिषदि, "किं कारणं ब्रह्म कुतः स्म जाता जीवामहे केन क्व च सम्प्रतिष्ठा। अधिष्ठिताः केन सुखेतरेषु वर्तामहे ब्रह्मविदो व्यवस्थाम्" इति मन्त्रेण केषाञ्चित् ब्रह्मवादिनामृषीणां ब्रह्म जगज्जन्मादिकारणं सर्वाधिष्ठानभूतञ्च इत्येतावन्निश्चितवतां तद्ब्रह्म किंदेवतारूपमिति विशिष्याबुध्यमानानां सकलजगज्जननजीवनोपसंहारकारणं सर्वाधिष्ठानभूतञ्च तद्ब्रह्म किंदेवतारूपमित्यमुं संशयं सामान्यतो विशेषतश्च, 'किं कारणं ब्रह्म" इत्यादिभागैः प्रदर्श्य, जगतः काल.स्वभाव.नियति.महाभूत.प्रधान.पुरुषान्यतमकारणत्वस्य यादृच्छिकत्वरूपस्याकारणत्वस्य चोपपत्तेः, ब्रह्म कारणमित्येतदेवासिद्धमिति संशयस्य निरालम्बनत्वशङ्का मा भूदिति संशयधर्म्युत्पादकतया तेषामेव कालकारणत्वादिनिरासप्रकारम्, "कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम्। संयोग एषां न त्वात्मभावादात्माऽप्यनीशः सुखदु.खहेतोः॥" इति मन्त्रेण प्रदर्श्य स्वतो निर्णयाशक्तानां तेषां ब्रह्मविद्याप्रदानैककृत्यायाः परशक्तेरम्बिकायाः प्रसादात् अयमर्थो निर्णीतो भविष्यतीति तां ध्यायतां तत्साक्षात्कारम्, "ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्" इति प्रतिपाद्य ततः, "यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः" इत्यादिना तमप्यपश्यन्निति क्रियानुषङ्गवता तत्प्रसादादुपजातं तेषां कालाद्यनुक्रान्तावान्तरकारणबृन्दाधिष्ठातुः सर्वकारणस्यापि ब्रह्मणो विशिष्य निर्णयञ्चोपदिश्य, अनन्तरम्, "क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः" इत्यादिना प्रपञ्चेन शिवस्य सर्वकारणत्वसर्वाधिष्ठानत्वप्रतिपादनादुपक्रममारभ्य आ समाप्तेर्हर.शिव.रुद्र-महेश्वरादिपदैः स्पष्टीकृतशिवपरत्वस्य श्वेताश्वतरस्य नान्यपरत्वं शक्यशङ्कमिति चेन्न—"महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः" इति भगवदसाधारणपुरुषशब्दश्रवणात् सत्त्वप्रवर्तकत्वरूपभगवदसाधारणलिङ्गदर्शनाच्च। उक्तञ्च पुरुषादिशब्दानां भगवदसाधारणत्वम्, "भगवानिति शब्दोऽयं तथा पुरुष इत्यपि। निरुपाधी च वर्तेते वासुदेवे सनातने॥ ब्रह्माद्याः सकला देवा यक्षगन्धर्वकिन्नराः। ते सर्वे पुरुषांशत्वा-

1 वृत्तीति। तथाच अथर्वशिरसि विहितमुपासनं रुद्रविशिष्टपरमात्मविषयकम्। अथर्वशिखायां शिवादिशब्दाः साक्षात्परमात्मवाचकाः नात्र रुद्रस्य ध्येयतेति विवेकः कार्यः। शेषं तत्त्वसारव्याख्याने।

दुच्यन्ते पुरुषा इति ॥ पुरुसंज्ञे शरीरेऽस्मिन् शयनात् पुरुषो हरिः । शकारस्य षकारोऽयं व्यत्ययेन प्रयुज्यते ॥" इति । अतः श्वेताश्वतरोपनिषदो भगवत्परत्वं सिद्धम् । ननु, "यदा तमस्तत्" इति वाक्ये "शिव एव केवलः" इत्युच्यते । अतः प्रसिद्धशिवः कारणमिति चेन्न; इदं तावत् वाक्यं न कारणतमसः प्रापकम् ; यदेति कालविशेषप्राप्तानुवादात् । "अव्यक्तमक्षरे लीयते । अक्षरं तमसि लीयते" इति सुबालोपनिषद्वाक्येन तत्प्राप्तिः । सा चोपनिषत् नारायणस्यैव कारणत्वोपास्यत्वे बहुधा वक्ति । अव्यक्ताक्षरक्रमेण तमःस्थाने, "यस्य मृत्युः शरीरम्" इति पठितमृत्युशब्दार्थतमसो नारायणशरीरत्वाभिधानाच्च तस्यैव तदधिष्ठातृत्ववादः । ननु, "नासदासीन्नोसदासीत्तदानीं तम आसीत्" इत्यादिवाक्यमत्र पुरोवादः किं न स्यादिति चेत्—तथापि तस्य सौबालवाक्यसमानार्थत्वं ग्राह्यम् । अतः कारणतमोधिष्ठातृत्वेन प्रसिद्धो नारायण एवात्र शब्दान्तरपरामृष्टः । अनन्तरं तु, "तदक्षरं तत्सवितुर्वरेण्यम्" इत्यादिना तत्प्रकारविशेषोपदेशः । मानवे च, "आसीदिदं तमोभूतम्" इत्यारभ्य, "तेन नारायणः स्मृतः" इत्यन्तेन स एव कारणतमोधिष्ठातृत्वेनोक्तः । अयमत्र निष्कर्षः–देवतान्तरप्रतिपादकवाक्येषु कानिचित् वाक्यानि अनुवादरूपाणि ; कानिचिच्च साधारणशब्दयुक्तानि ; कानिचिच्च अयोग्यार्थानि ; कानिचिच्च योग्यार्थप्रत्यभिज्ञापकधर्मयुक्तानि । ततश्च ईदृशानामेषां प्रापकासाधारण.योग्यार्थ.तद्धर्मप्रत्यभिज्ञाप्य.वस्तुविशेषप्रतिपादकवाक्यसाकाङ्क्षत्वं सिद्धम् । तादृशञ्च वाक्यं पुंसूक्तनारायणानुवाकादिकम् । अतस्तदनुसारेणैवार्थनिर्णयः सिद्धः। अत एव ह्युक्तं भगवता सूत्रकृता वेदव्यासेन, "तत्त्वं जिज्ञासमानानां हेतुभिः सर्वतोमुखैः । तत्त्वमेको महायोगी हरिर्नारायणः परः ॥ आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः । इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा" इति। उत्तरानुवाके, "ह्रीश्च ते लक्ष्मीश्च पत्न्यौ" इत्यनन्यथासिद्धलक्ष्मीपतित्वलिङ्गेन भगवत्परत्वमप्रकम्प्यम् । तदैकार्थ्यात् पुरुषशब्दश्रवणाच्च पुरुषसूक्तस्यापि तत्परत्वमप्रकम्प्यम् । नारायणानुवाके च देवतान्तरसाधारण्यगन्धरहितनारायणशब्दाभ्यासमहिम्ना नान्यपरत्वं शक्यशङ्कम् । ईशान.शम्भु.रुद्र.महादेव.परमेश्वर.हिरण्यगर्भ.प्रजापति.धातृ.स्वयम्भ्वादिशब्दाश्च नासाधारणाः, "सोऽनिरुद्धः स ईशानो व्यक्तिः सा सर्वकर्मसु", "इति नारायणः शंभुर्भगवान् जगतः पतिः" "रुद्रो बहुशिरा बभ्रुः", "जय विश्व महादेव जय शार्ङ्गधनुर्धर ।", "नमश्चकार हृष्टात्मा परमं परमेश्वरम्" "हिरण्यगर्भः शत्रुघ्नो व्याप्तो वायुरधोक्षजः ।", "पूर्वे प्रजानिसर्गे त्वामाहुरेकं प्रजापतिम्", "एकस्तद्वेद भगवान् धाता नारायणः स्वयम्", "विष्णुरेवातिसर्गे च स्वयम्भूर्भवति प्रभुः" इत्यादिषु ईशानशम्भुरुद्रमहादेवपरमेश्वरहिरण्यगर्भप्रजापतिधात्रादिशब्दाः सर्ववेदान्तोपबृंहणे महाभारते सूत्रकृतैव प्रयुक्ताः, नारायणानुवाके च दृष्टप्रयोगाः, ब्रह्मरुद्रादीनां कार्यत्वकर्मवश्यत्वप्रतिपादनेनाकाशादिशब्दवदयोग्यार्थाः "यदा तमस्तत्" "यो ब्रह्माणम्", "यो देवानां प्रभवश्चोद्भवश्च", "यद्वेदादौ स्वरः प्रोक्तः" इत्यादीनां यच्छब्दानुवेधेनानुवादरूपत्वं सुस्पष्टम् । "वेदाहमेतं पुरुषं महान्तम्", "सहस्रशीर्षा पुरुषः" इत्यादीनां पुंसूक्तवाक्यानां बहूनां श्वेताश्वतरादिषूपलम्भेन योग्यार्थपुंसूक्तैकार्थ्यमकामेनापि स्वीकार्यम् । अतः सिद्धं भगवत्पारम्यमित्यादि कण्ठतस्तात्पर्यतश्च प्रपञ्चितमिति भावः ॥

तदखिलानुसन्धायिभिर्वात्स्यवरदगुरुभिस्तत्त्वनिर्णयाख्ये प्रकरणे सर्वो निष्कर्षः संगृहीतः। तत्त्वसारे च, 'कस्त्वं तत्त्वविदस्मि वस्तु परमं किं तर्हि विष्णुः कथं तत्त्वेदम्परतैत्तिरीयकमुखत्रय्यन्तसंदर्शनात्। अन्यास्तर्हि गिरः कथं, गुणवशात्, अत्राह रुद्रः कथं, तद्दृष्ट्या, कथमुद्भवत्यवतरत्यन्यत्कथं,नीयताम्॥' इत्यादिभिः श्लोकैः संगृहीतः। एवञ्च नारायणस्यैव परमकारणत्व-मुमुक्षूपास्यत्व-सर्वान्तर्यामित्वादिसिद्धेः त्रिमूर्तिसाम्यैक्योत्तीर्णव्यक्त्यन्तरपरत्वपक्षाश्चत्वारोऽपि निरस्ताः(निर्मूला)विदितव्याः।

---

कस्त्वं तत्त्वविदस्मीति। उक्तिप्रत्युक्तिरूपोऽयं श्लोकः। तत्त्वेदम्परेति। नारायणानुवाके "सहस्रशीर्षं देवम्" इत्यादिभिः पुरुषसूक्तप्रभृतिसर्वपरविद्यावेद्यं पुरुषं प्रत्यभिज्ञाप्य तस्य नारायणत्वं बहुशोऽभ्यस्तम्। अतो यत्रयत्र परब्रह्म-परतत्त्व-परज्योतिः-परमात्मादिशब्दा दृष्टाः, तत्र सर्वत्र नारायण एव प्रतिपाद्यते इति निश्चीयते। ततश्च परत्वनिर्णये नारायणानुवाकः पर्याप्त इति भावः। "इन्द्रो मायाभिः पुरुरूप ईयते", "न सन्न चासच्छिव एव केवलः" इत्यादीनां का गतिरित्याशङ्क्य, "इदि परमैश्वर्ये" इति धातुनिष्पन्नस्येन्द्रशब्दस्य परमैश्वर्यगुणयोगनिबन्धनत्वाच्छिवादिशब्दानामपि मङ्गलत्वादिगुणयोगनिबन्धनत्वात् अविरोध इत्यभिप्रयन् आह अन्यास्तर्हीति। "अहमेकः प्रथममासम्" इत्यथर्वशिरोवाक्यस्य का गतिरित्याशङ्क्य शास्त्रदृष्ट्येत्याह अत्राहेति। "ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे सम्प्रसूयन्ते" इति भगवत उत्पत्तिश्रवणं कथमित्याशङ्क्याह अवतरतीति। श्वेताश्वतरादिषु शिवमहेश्वरादिशब्दितस्य कथं परब्रह्मभावप्रतिपादनमित्याशङ्क्य पुंसूक्तप्रत्यभिज्ञापकशब्दविशेषस्य तत्प्रकरणे श्रवणेन तदनुरोधेन सर्वं नेयमित्याह नीयतामिति। त्रिमूर्तिसाम्येति। परस्परभिन्नास्त्रय ईश्वरा इति पक्ष एकस्य सर्वप्रशासितृत्ववादेन निरस्तः। "त्रिष्णुरेव

---

भाष्यादिष्विति। प्रपञ्चित इत्यनुषज्यते। कस्त्वं तत्त्वविदस्मीति। उक्तिप्रत्युक्तिरूपोऽयं श्लोकः। कस्त्वमिति प्रश्नस्य तत्त्वविदस्मीत्युत्तरम्। तर्हि परमं वस्तु किमिति प्रश्नस्य विष्णुरित्युत्तरम्। कथमिति प्रश्नस्य तत्त्वेदंपरतैत्तिरीयकमुखत्रय्यन्तसन्दर्शनादित्युत्तरम्। अस्यायमर्थः-नारायणानुवाके, "सहस्रशीर्ष देवम्" इत्यादिभिः पुरुषसूक्तप्रभृतिसर्वपरविद्यावेद्यं पुरुषं प्रत्यभिज्ञाप्य तस्य नारायणत्वं बहुशोऽभ्यस्तम्। अतो यत्रयत्र परब्रह्मपरतत्त्व-परज्योतिः-परमात्मादिशब्दा दृष्टाः, तत्र सर्वत्र नारायण एव प्रतिपाद्यत इति निश्चीयत इति। अन्यास्तर्हि गिरः कथमिति प्रश्नः, "इन्द्रो मायाभिः पुरुरूपं ईयते", "नसन्नचासच्छिव एव केवलः" इत्यादीनां कथमुपपत्तिरिति तदर्थः। गुणवशादित्युत्तरम्। "इदि परमैश्वर्ये" इति धातुनिष्पन्नेन्द्रशब्दस्य परमैश्वर्यरूपगुणवशात् शिवादिशब्दानामपि मङ्गलत्वादिगुणवशात् परमात्मभूतनारायणपरत्वेनोपपत्तिरिति तदर्थः। अत्राह रुद्रः कथमिति प्रश्नः। अथर्वशिरसि, "अहमेकः प्रथममासम्" इत्यादिरुद्रवाक्यस्य कथमुपपत्तिरिति तदर्थः। तद्दृष्ट्येत्युत्तरम्। स्वात्मशरीरकपरमात्मानुसन्धानेनेति तदर्थः। कथमुद्भवतीति प्रश्नः। "ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्ते" इति भगवत उत्पत्तिकथनं कथमिति तदर्थः। अवतरतीत्युत्तरम्। स्वेच्छावताररूपा सोत्पत्तिः, न कर्माधीनेति तदर्थः। अन्यत् कथमिति प्रश्नः। श्वेताश्वतरादिषु शिवमहेश्वरादिशब्दितस्य कथं परब्रह्मभावप्रतिपादनमिति तदर्थः। नीयतामित्युत्तरम्। पुरुषसूक्तप्रत्यभिज्ञापकशब्दविशेषस्य तत्प्रकरणे श्रवणेन तदनुरोधेन सर्वं नेयमिति तदर्थः। एवञ्चेति।

[1]तिसृषु च मूर्तिषु परिपूर्ण एवेश्वरः। प्रजापतिपशुपतिमूर्त्योस्तु प्रमाणबलात् जीवव्यवहित इति विशेषः। एवमेव सर्वत्रापि पूर्ण एव॥ अन्यत्र विद्यमानस्यान्यत्र पूर्णत्वं न स्यादिति चेत्— किमिदं पूर्णत्वं निषिध्यते? किमत्रैव विद्यमानत्वम्? किमत्र पूर्णोपलब्धिविषयत्वम्? किं वा अत्र पूर्णकार्यजननसामर्थ्यम्? किं वा अत्र समस्तगुणविशिष्टत्वम्? नाद्यः; तस्यास्माभिरनभ्युपगमात्।

न द्वितीयः; तन्निषेधोऽपीह स्वरूपोपलब्धिनिषेधमात्रं वा? कृत्स्नभागोपलब्धिनिषेधो

---

परं ब्रह्म त्रिभेदमिह पठ्यते" इत्यादिवचनमूलत्रिमूर्त्यैक्यवादोऽपि, "ममान्तरात्मा तव च" इत्यादिवाक्यान्तरस्वारस्यनिरस्तः। त्रिमूर्त्यतिरिक्तं पुरुषान्तरं चिन्मात्रं वा परतत्त्वमिति पक्षश्च, "स संज्ञां याति भगवानेक एव जनार्दनः" इत्यादिभिर्बाधितः। विष्णोरन्य एव ब्रह्मा रुद्र आदित्यो वा कश्चिदीश्वर इति पक्षश्च विष्णोरेव ब्रह्मत्वस्थापनान्निरस्तः। **परिपूर्ण एवेश्वर इति**। पर्याप्य वर्तते इत्यर्थः। न द्वित्वादिवत् व्यासज्येति भावः। तर्हि त्रिमूर्तिसाम्यमित्याशङ्क्याह **प्रजापतिपशुपतीति**। **व्यवहित इति विशेष इति**। ततश्च तयोर्मूर्त्योर्जीवद्वारा आत्मेति भावः। ततश्च, "नमो हिरण्यगर्भाय हरये शङ्कराय च" इत्यादौ हिरण्यगर्भशङ्करमूर्त्योर्जीवविशेषद्वारा भगवच्छरीरत्वम्, विष्णुमूर्तौ तु अव्यवहितमिति भावः। **तस्यास्माभिरिति**। ततश्च ब्रह्मात्रैव वर्तमानं न भवति, अन्यत्र सत्त्वादिति साधने सिद्धसाधनमिति भावः। **तन्निषेधोऽपीति**।

---

उक्तरीत्या सर्वश्रुतिनिर्वाहे चेत्यर्थः। **त्रिमूर्तिसाम्येति**। ब्रह्मादयस्त्रयोऽपि तरतमभावमनापन्नाः परस्परमत्यन्तभिन्ना ईश्वरा इति साम्यपक्षः। ब्रह्मादीनां त्रयाणां **शरीरभेद एव; नात्मभेदः**, रामकृष्णाद्यवतारवदिति आत्मैक्यपक्षः। त्रिमूर्तिव्यतिरिक्तं पुरुषान्तरं चिन्मात्रं वा परतत्त्वमिति उत्तीर्णपक्षः। ब्रह्मा रुद्रो वाऽन्यो वा कश्चित् विष्णोरन्य एवेश्वर इति पक्षो व्यवस्त्यन्तरपक्षः। एतत्पक्षचतुष्टयमपि नारायणस्यैव ब्रह्मरुद्रादिसकलकारणत्वस्थापनान् निरस्तम्; न हि त्रयाणां साम्ये ऐक्ये नारायणातिरिक्तस्य कारणत्वे वा नारायणस्यैव ब्रह्मरुद्रादिसर्वकारणत्वमित्याद्युपपद्यते।

**परिपूर्ण इति**। पर्याप्त्या वर्तते–न द्वित्वादिवत् व्यासज्येत्यर्थः। तर्हि त्रिमूर्तिसाम्यं स्यादित्याशङ्क्याह प्रजापतीति। **जीवव्यवहित इति विशेष इति**। तथाच न भगवदसाधारणदिव्यमङ्गळविग्रहसाम्यमितरमूर्तिद्वयस्येति भावः। ईश्वरो यद्यन्यत्र वर्तमानः स्यात्, तर्ह्यत्र पूर्णो न स्यादिति तर्कबलाद्य शङ्कते **अन्यत्रविद्यमानस्येति**। **किमिदमित्यादि**। आपाद्यमानाभावप्रतियोगि पूर्णत्वं किंरूपमित्यर्थः। **अत्रैव विद्यमानत्वमिति**। एतद्भिन्नावृत्तित्वविशिष्टैतद्वृत्तित्वमित्यर्थः। **अत्र पूर्णोपलब्धिविषयत्वमिति**। एतत्संबन्धित्वप्रकारकपूर्णोपलब्धिविषयत्वमित्यर्थः। **अत्रेति**। अवच्छिन्नत्वं तदर्थः सामर्थ्यान्वयी। एवमुत्तरत्रापि विशिष्टत्वान्वयि अवच्छिन्नत्वं तदर्थः। **अस्माभिः** ईश्वरस्य विभुत्वमङ्गीकुर्वाणैः। **अनभ्युपगमादिति**। तथाचेष्टापत्तिरिति भावः। **तन्निषेध इति**। अत्र पूर्णोपलब्धिविषयत्वरूपपूर्णत्वाभाव इत्यर्थः। **इह स्वरूपोपलब्धिनिषेधमात्रमिति**। एतत्संबन्धित्वप्रकारकोपलब्धि

---

1 ननु मूर्तिशब्दप्रयोगाविशेषात् मूर्तित्रयस्येतरापेक्षयोत्कर्षः प्रतीयते। भिदाविरहश्च भागवतादौ भण्यते। तत् समानैश्वर्येण वा आत्मैक्येन वा निर्वाह्यमिति कथं तारतम्यम्? किञ्च संपूर्णस्याप्यवरेष्वनुप्रवेशे महिमह्रासात् साम्यमवर्जनीयमित्यत्राह तिसृष्विति। ऐश्वर्यसाम्ये संमतिलवप्रदर्शकः

वा ? अंशत्वानुपलब्धिनिषेधो वा ? आद्ये त्वप्रयोजकत्वम्; अनुपलम्भस्य सामग्र्यभावप्रयुक्तत्वात् । तस्याश्चात्र सत्त्वे तदुपलम्भोपपत्तेः । द्वितीये सभागत्वसिद्ध्यसिद्ध्योरिष्टप्रसङ्गः । तृतीये अंशत्वाभावादेवांशत्वानुपलब्धिर्युक्तेति न तन्निषेधः । बहुसम्बन्धादेव तत्तत्संबन्धावच्छेदेनांशत्वं स्यादिति चेन्न; बहुगुण-व्यक्ति-प्रतियोग्यादिविशिष्टेषु द्रव्यजातिनिषेधादिषु

---

ब्रह्मणोऽन्यत्र सत्त्वे इह ब्रह्मस्वरूपमेव नोपलभ्येतेत्यर्थो वा, उत कृत्स्नोऽपि भागो नोपलभ्येतेति विकल्पार्थः । अप्रयोजकत्वमेवोपपादयति **सामग्र्यभावप्रयुक्तत्वादिति** । **इष्टप्रसङ्ग इति** । भागानां सत्त्वे देशान्तरस्थभागानामिहासत्त्वेन तदनुपलम्भस्येष्टत्वात् । सर्वात्मना निर्भागत्वे च कृत्स्नभागस्यानुपलम्भस्येष्टत्वादिष्टापत्तिपराहतस्तर्क इति भावः । अत्र सभागत्वपक्षमङ्गीकृत्यापि दूषणकथनं प्रौढिवादेनैव । उत्तरत्र **अंशत्वाभावादिति** वक्ष्यमाणत्वादिति द्रष्टव्यम् । **न तन्निषेध इति** । अंशतयोपलम्भो नापादयितुं शक्यते इत्यर्थः । **बहुसम्बन्धादेवेति** । कृत्स्नस्याप्येकेन वस्तुना सम्बन्धे वस्त्वन्तरसम्बन्धाभावप्रसङ्गेन तदंशानामेव वस्त्वन्तरसम्बन्धोऽभ्युपेतव्य इति भावः । **द्रव्यजातिनिषेधादिष्विति** । बहुगुणविशिष्टं **द्रव्यम्** । बहुव्यक्तिविशिष्टा **जातिः** । बहुप्रतियोगिविशिष्टो **निषेधः** । आदिपदेन बहुविषयज्ञानादिकं

---

विषयत्वाभावमात्ररूप इत्यर्थः । **मात्रशब्देन** वक्ष्यमाणकरपद्वयवदंशघटितत्वव्यवच्छेदः । **कृत्स्नभागोपलब्धिनिषेध इति** । एतत्संबन्धित्वप्रकारकोपलब्धिविषयत्वीययावदवयवकत्वात्मकपूर्णत्वाभावरूप इत्यर्थः । **अंशत्वानुपलब्धिनिषेध इति** । एतत्संबन्धित्वप्रकारकोपलब्धिविषययावदवयवकभिन्नत्वात्मकपूर्णत्वाभावरूप इत्यर्थः । **अप्रयोजकत्वमिति** । आपादकवति आपाद्याभावोऽपरथा व्याप्त्यसंभवात् तर्काभासत्वमित्यर्थः । तदेवोपपादयति **अनुपलम्भस्येति** । एतत्संबन्धित्वप्रकारकोपलब्धिविषयत्वाभावस्येत्यर्थः । **सामग्र्यभावेति** । एतत्संबन्धित्वप्रकारकोपलब्धिजनकसामग्र्यभावेत्यर्थः । तस्याः—उक्तसामग्र्याः । **सभागत्वसिद्ध्यसिद्ध्योरिति** । सावयवत्वसिद्ध्यसिद्ध्योरित्यर्थः । **इष्टप्रसङ्ग इति** । सावयवत्वे एतदसंबन्धिनोऽप्यवयवस्यावश्यम्भावादेतत्संबन्धित्वप्रकारकोपलब्धिविषयत्वीयसर्वावयवकत्वासंभवात् तदभावापत्ताविष्टापत्तिः, निरवयवत्वे तूक्तोपलब्धिविषयत्वीयसर्वावयवकत्वमन्यत्रैव स्यात्, **नेश्वरे इति** तदापीश्वरे तदभावापत्ताविष्टापत्तिरित्यर्थः । अत्र सावयवत्वाभ्युपगमेन दूषणाभिधानं प्रौढ्या; उत्तरत्रांशत्वाभावादेवेति वक्ष्यमाणत्वादिति बोद्धव्यम् । **अंशत्वाभावादेवेति** । सावयवत्वाभावादेवेत्यर्थः । **अंशत्वानुपलब्धिर्युक्तेति** । एतत्संबन्धित्वप्रकारकोपलब्धिविषयत्वीयावयवकभिन्नत्वमावश्यकमित्यर्थः । **न तन्निषेध इति** । न तदभाव आपादयितुं शक्यत इत्यर्थः । बहुभिः संबन्धस्य सावयवत्वव्याप्यतया बहुसंबन्धस्वीकारे सावयवत्वमावश्यकमित्यभिप्रायेण शङ्कते **बहुसंबन्धादेवेति** । कार्त्स्न्येनैकवस्तुसंबन्धे वस्त्वन्तरसंबन्धाभावप्रसङ्गेन तदंशानामेव वस्त्वन्तरसंबन्धः स्वीकार्य इति भावः । **बहुगुणेत्यादि** । एकस्य निरवयवतया

---

परिपूर्ण इत्यत्र परिशब्दः । आत्मैक्यमक्षतं व्यवधानेऽपि । अवरेष्वनुप्रवेशेऽप्यक्षतैश्वर्यत्वममृतत्वादिश्रुतिसिद्धमिति भावः । पूर्णशब्दार्थः पूर्णमद इति व्याख्याने अस्मत्परिष्कारे द्रष्टव्यः ।

तैस्तैस्तदनभ्युपगमात्। यथोपलम्भं तद्वदेव संयोगादिष्वपि। निरंशेष्वपि भावाभावसामानाधिकरण्यस्य युगपद्भाविनोऽपि व्यवस्थाप्यत्वात्। अन्यथा समस्तसम्बन्धतत्त्वस्यैव लोपे तन्मूलभूतसमस्तकार्यकारणभावादिलोपात् शून्यताप्रसङ्गात्। न च तृतीयः; अवच्छिन्नदेशे सर्वोत्पत्तिनिषेधस्येष्टत्वात्। सर्वानुकूलशक्तिमतस्तत्रापि वृत्तौ विरोधाभावात्। यत्रयत्र यद्यत्कार्यं दृष्टम्, तत्रतत्र तदनु-

---

गृह्यते। तैस्तैरिति। बहुगुणव्यक्तिप्रतियोग्यादिभिर्द्रव्यादीनामंशेन सम्बन्धानभ्युपगमादित्यर्थः। संयोगादिष्वपीति। न हि संयोगविभागद्वित्वादीनामनेकद्रव्याश्रितानामंशभेदः सम्भवतीत्यर्थः। निरंशेष्वपीति। वृक्षादिवदंशभेदरहिते आकाशादौ संयोगशब्दादितदभावाश्रयत्वस्य अंशभेदमन्तरेणैव निर्वोढव्यत्वादित्यर्थः। सम्बन्धतत्त्वस्यैव लोप इति। निरंशस्य सम्बन्धतत्त्वस्य द्व्याश्रयत्वासम्भवेन सम्बन्धमात्रानभ्युपगमे सर्वस्यापि वस्तुन कार्यकारणकालसम्बन्धरहिततया शून्यत्वमेव स्यादित्यर्थः॥ अन्यत्र सतोऽन्यत्र परिपूर्णकार्यजननसामर्थ्यं नास्तीति कोऽर्थः? किं सकलकार्योपहितत्वं नास्तीत्यापाद्यते, उत तच्छक्त्यभावः इति विकल्प्य प्रथमं दूषयति— अवच्छिन्नदेश इति। द्वितीयं दूषयति—सर्वानुकूलेति। सर्वत्रापि विद्यमानस्य ब्रह्मणो यदि सर्वानुकूलशक्तिमत्त्वम्, तदा जलगत-

---

स्वीकृतस्य परमाण्वादिद्रव्यस्य रूपाद्यनेकगुणसंबन्धस्वीकारात्, एकस्याः निरंशाया जातेरनेकव्यक्तिसंबन्धाङ्गीकारात्, एकस्य निरंशस्याभावस्यानेकप्रतियोगिसंबन्धदर्शनाच्च बहुसंबन्धस्य न सावयवत्वव्याप्यत्वमित्यभिप्रायः। प्रतियोग्यादीति आदिना विषयपरिग्रहः। निषेधादीति आदिना ज्ञानसंग्रहः। तदनभ्युपगमादिति। सावयवत्वानभ्युपगमादित्यर्थः। तथाच निरंशेऽपि बहुसंबन्ध उपलम्भबलादभ्युपगन्तव्य इति भावः। तद्वदेवेति। द्रव्यादिष्विवेत्यर्थः। संयोगादिष्वपीति। बहुसंबन्धितया संप्रतिपन्नेष्विति शेषः। तदनभ्युपगमादित्यनुषङ्गेणान्वयः। तथाच निरंशेऽपि संयोगे बहुसंबन्धस्योपलम्भात् न बहुसंबन्धस्य सावयवत्वव्याप्यत्वमिति भावः। अन्यत्र विरुद्धतयोपलभ्यमानभावाभावसंबन्धस्याप्येकस्मिन् निरंशे स्वीकारे अविरुद्धानेकसंबन्धस्वीकारः कैमुतिकन्यायसिद्ध इत्यभिप्रायेणाह निरंशेष्वपीति। वृक्षादिवदंशभेदरहितेष्वाकाशादिष्वपीत्यर्थः। आकाशस्यापि सावयवत्वपक्षे कालज्ञानादिकं ग्राह्यम्। सप्तम्यर्थो निरूपितत्त्वं सामानाधिकरण्यान्वयि। भावाभावसामानाधिकरण्यस्येति। संयोगादिरूपभावनिष्ठाभावसामानाधिकरण्यस्येत्यर्थः। युगपद्भाविन इति। एककालावच्छिन्नस्येत्यर्थः। कालभेदेनापि न विरोधपरिहार इति भावः। व्यवस्थाप्यत्वादिति। सर्वतो बलवती ह्यन्यथानुपपत्तिरिति न्यायादिति भावः। एकस्य निरंशस्यानेकसंबन्धानुपगमे बाधकमाह अन्यथेति। संबन्धतत्त्वस्यैव लोप इति। निरंशस्य संबन्धस्य द्विनिष्ठत्वाभावे संबन्धत्वासंभवादिति भावः। तन्मूलभूतेति। सः संबन्धः मूलभूतः घटको यस्येति व्युत्पत्त्या तद्घटितेत्यर्थः। कार्यत्वं हि नियतोत्तरकालसंबन्धः; कारणत्वञ्च नियतपूर्वकालसंबन्धः; सत्त्वं प्रमाणसंबन्धः कालसंबन्धो वा। तथाच संबन्धलोपे तद्घटितकार्यत्वादिलोपात् शून्यत्वमेव जगतः स्यादिति भावः। अत्र पूर्णकार्यजननसामर्थ्यमित्यनेन एतदवच्छिन्ने ब्रह्मणि सर्वोत्पत्तिर्विवक्षिता वा, एतदवच्छिन्ने ब्रह्मणि सर्वकार्यानुकूलशक्तिर्विवक्षिता वेति विकल्प्य, आद्ये दूषणमाह अवच्छिन्नदेश इति। द्वितीये तदाह सर्वेति। विरोधाभावादिति। अन्यत्र विद्यमानत्वेऽप्येतदवच्छे-

**कूलत्वेन तच्छक्तेः स्वीकारे क्वचित्सर्वोत्पत्तिप्रसङ्गाभावात् । अन्यथा शक्तस्यापि सर्वदा कार्यकरणप्रसङ्गे तद्विपर्ययात् क्षणभङ्गावतारात् । तदभ्युपगमेन प्रत्यवस्थाने तद्भङ्गेन भङ्गात् । यदि च कालक्रमेण**

स्यापि ब्रह्मणो दाहकत्वप्रसङ्ग इत्याशङ्क्य जलगतादाहस्यात्यन्तासत्त्वेन सर्वशब्दकोडीकृतत्वाभावात् वह्निगत दाहस्य प्रामाणिकत्वेन तज्जननानुकूलशक्तिमत्त्वं जलगतब्रह्मणोऽपि वर्तते इति सर्वत्र विद्यमानस्यापि ब्रह्मणः प्रामाणिकसर्वकार्यजननानुकूलशक्तिर्न विरुध्यते इत्याह—**यत्रयत्रेति । तत्रतत्र तदनुकूलत्वेनेति ।** तत्तद्देशवृत्तितत्तत्कार्यजनकत्वेनेत्यर्थः । **अन्यथेति**—शक्तेः शक्याविनाभावनियमात् तस्मिन्नेव देशे सर्वैः शक्यैर्भवितव्यमिति देशान्तरस्थानामपि शक्यानामापादनम्—तदा कालान्तरोत्पत्स्यमानानामपि शक्यानामस्मिन्नेव काले प्रसंगः । न च तदुपपद्यते । अतः कालान्तरभाविकार्यजननशक्तिर्नास्तीत्यभ्युपगन्तव्यम् । इतश्च क्षणभङ्गापातः । एवं हि क्षणभङ्गवादिनो मन्यन्ते, यद्यसौ दण्डो भाविघटजननशक्तः, इदानीमेव घट उत्पद्येत । अतोऽयमशक्त इत्यभ्युपेयम् । अशक्तत्वशक्तत्वयोर्विरोधात् घटोत्पत्तिसमयवर्तिदण्डोऽस्माद्भिद्यते इत्यभ्युपगन्तव्यम् । ततश्च युक्त्या व्यक्तिभेदे प्रामाणिके सति स एवायं दण्ड इति प्रत्यभिज्ञा ज्वालैक्यप्रत्यभिज्ञातुल्येति । ततश्च क्षणभङ्गावतारः स्यादिति भावः । **तद्भङ्गेन भङ्गादिति ।** क्षणिकत्वभङ्गेनेत्यर्थः । **यदि च कालक्रमेणेति ।** क्षणिकत्वभयात्

---

देनापि सर्वानुकूलशक्तिमत्त्वे विरोधाभावादित्यर्थः । तथा च व्याप्त्यभावात् तर्काभासत्वमेवेति भावः । इदञ्च व्याप्यवृत्तेः स्वाश्रयसंबन्धिसर्वावच्छिन्नवृत्तिकत्वमभिप्रेत्य । यदि पुनः—व्याप्यवृत्तेरनवच्छिन्नवृत्तिकत्वमेव ; अव्याप्यवृत्तावेव स्वाभावसामानाधिकरण्यात् विरोधभङ्गाय प्रतियोग्यभावयोर्भिन्नभिन्नावच्छेदेन वृत्तेर्वक्तव्यतया तत्रैवावच्छिन्नवृत्तिकत्वम् । तथा चेश्वरगतसर्वानुकूलशक्तेर्व्याप्यवृत्तितया किञ्चिदवच्छिन्नवृत्तिकत्वासंभवात् अत्र पूर्णत्वमेतदवच्छिन्नवृत्तिक सर्वानुकूलशक्तिमत्त्वमिति न निर्वक्तुं शक्यत इत्यालोच्यते, तदाऽत्र पूर्णत्वमेतत्संबन्धित्वे सति एतदवच्छिन्नवृत्तिकात्यन्ताभावाप्रतियोगिसर्वानुकूलशक्तिमत्त्वमिति निर्वाच्यम् । ननु सर्वावच्छेदेनापि ब्रह्मणि सर्वानुकूलशक्तिस्वीकारे आकाशादावपि स्पर्शाद्युत्पत्तिप्रसङ्गः; तत्तत्कार्यं प्रति अवच्छेदकतासंबन्धेन तत्तत्कार्यानुकूलेश्वरशक्तेरेव हेतुत्वात् तस्याश्चोक्तसंबन्धेन सर्वत्र सत्त्वादित्यत आह **यत्रयत्रेति । तत्र तत्र तदनुकूलत्वेन तच्छक्तेः स्वीकारादिति ।** तत्तदधिकरण एव तत्तत्कार्योपधायकत्वेनेश्वरशक्तेः स्वीकारादित्यर्थः । ईश्वरशक्तेस्तत्तदधिकरण एव तत्तत्कार्योपधायकत्वस्वीकारादिति यावत् । अयं भावः—यद्यत् कार्यं यत्रयत्र दृष्टं तत्तत्कार्यं प्रति तत्तदधिकरणस्यापि तादात्म्येन कारणतया नातिप्रसङ्गः—ईश्वरशक्तेः कारणान्तरसहितायाः एव फलोपधायकत्वादिति । कारणान्तरसाचिव्यमन्तरेणैकस्यैव कारणस्य फलोपधायकत्वाङ्गीकारेऽनिष्टं प्रसञ्जयति **अन्यथेति ।** **सर्वदेति** कारणान्तरसमवधानविरहकालेऽपीत्यर्थः । **कार्यकरणं** फलोपधानम् । **तद्विपर्ययात्** कार्यकरणविपर्ययात् । **क्षणभङ्गावतारादिति ।** क्षणभङ्गे फलाव्यवहितपूर्ववृत्तेरेव शक्तत्वेन हेतुत्वस्वीकारान् न सर्वदा कार्योत्पत्तिप्रसङ्ग इति भावः । **तदभ्युपगमेनेति ।** इष्टापत्त्येत्यर्थः । **तद्भङ्गेन भङ्गादिति ।** प्रत्यभिज्ञादिबलेन

कश्चित् सर्वोत्पादकत्वप्रसङ्ग इष्टः, तदा सर्वदेशभाविकृत्स्नव्यक्तिविवक्षायां व्याघातः। भूतानाम् अन्यत्र भवन्तीनां व्यक्तीनामत्र भवननैरपेक्ष्यात्। नष्टानां कदाचिदप्यत्र जन्मागमयोरयोगात्।

---

कालान्तरभाविनामेकस्मिन् काले उत्पादनासम्भवेऽपि कालभेदेन सर्वदेशगतानामेकत्र देशे उत्पादो यद्यापाद्यते इत्यर्थः। किमत्र सर्वदेशीयभविष्यद्व्यक्तय आपाद्यन्ते, [1]उत सर्वदेशीयभूतभवद्व्यक्तयः इति विकल्प्य आद्यं दूषयति **सर्वदेशभाविकृत्स्नेति**। **व्याघात इति**। तासां भवनसापेक्षत्वेऽपि सर्वदेशभावित्वमेतद्देश-भावित्वेन विरुध्येतेत्यर्थः। इदञ्च दूषणमुत्तरविकल्पस्यापि साधारणमिति द्रष्टव्यम्। द्वितीयं दूषयति **भूतानामिति**। **नैरपेक्ष्यादिति**। उत्पन्नस्योत्पद्यमानस्य चोत्पत्त्यनपेक्षत्वादिति भावः। ननु जन्मानपेक्षणेऽपि कारणकार्यभावादेश्यसिद्ध्यर्थमागमोऽवश्यम्भावीत्याशङ्क्य तत् किं विनष्टेष्वापाद्यते, उताविनष्टेषु इति विकल्प्य विनष्टेषु केषाञ्चिदागमनेऽप्यदोष इत्युत्तरं हृदि निधाय आद्यं दूषयति **नष्टानामिति**। **जन्मागमयोरिति**। यथा **जन्म** न सम्भवति, तथा **आगमो**ऽपीत्यर्थः। ननु क्षणभङ्गस्यासंभवादिष्टापत्त्ययोगेन तन्निरासादित्यर्थः। ननूक्तक्षणभङ्गपरिहाराय कालविशेषाणामेव सहकारित्वं स्वीक्रियते; न तु कारणान्तराणाम्। तथाच सर्वानुकूलशक्त्यवच्छेदकत्वबलेन कालक्रमेणैकत्र सर्वोत्पत्तिप्रसङ्गो दुर्वार इति शङ्कामनुभाषते **यदि चेति**। अत्र **सर्वोत्पत्तिप्रसङ्ग इत्यनेन** किं सर्वदेशभावि-कृत्स्नव्यक्त्युत्पत्तिप्रसङ्गो विवक्षितः; उत भूतानाम्, अन्यत्र भवन्तीनाञ्चोत्पत्तिप्रसङ्ग इति विकल्पमभिप्रेत्य प्रथमं दूषयति **तदेति**। **व्याघात इति**। तत्तद्देशभावित्वमेतद्देशभावित्वे विरुद्ध्येतेत्यर्थः। तथाच तत्तद्देशभावित्वग्राहकप्रमाणसिद्धतत्तद्देशभावित्वेन सह एतद्देशभावित्वस्य विरोधान्नोक्तापत्तिसंभवः। न हि गोरश्वत्वं स्यादित्यापादनं संभवतीति भावः। यद्यपि तत्तत्कार्यं प्रति तत्तत्कार्यानुकूलेश्वरशक्ति-मात्रस्यावच्छेदकतासंबन्धेन कारणत्वमित्यप्यभ्युपगमात् तादृशशक्तेरीश्वरे सर्वावच्छेदेन स्वीकारे सर्वत्र तत्कार्योत्पत्तिर्दुर्वारा। अतो यत्र यत् कार्यं दृष्टं तदवच्छेदेनैवेश्वरे तत्कार्यानुकूलशक्तिर्वर्तत इत्याश्रयणीयम्। इत्थञ्च सर्वावच्छेदेनेश्वरे सर्वानुकूलशक्तिर्वर्तत इत्यभ्युपगमो न संभवतीत्येवापद्येत; तथापि तद्व्यक्तिवृत्ति-कार्यसामान्यं प्रति तादात्म्येन तद्व्यक्तेर्हेतुत्वाभ्युपगमस्यावश्यकतया तत एव तद्देशवृत्तिकार्यस्य देशान्तरे उत्पादासंभवेनातिप्रसङ्गवारणादीश्वरे सर्वानुकूलशक्तेः सर्वावच्छेदेन सत्त्वेऽपि क्षत्यभावः। तत्तत्कार्यं प्रति तत्तत्कार्यानुकूलेश्वरशक्तेरवच्छेदकतासंबन्धेन हेतुत्वमित्यंगीकारेण कार्यव्यक्तिभेदेनानन्तकार्यकारणभाव-प्रसङ्गात् महागौरवम्। अतः कार्यसामान्यं प्रति ईश्वरशक्तेरवच्छेदकतासंबन्धेन स्वाश्रयसंयोग-संबन्धेन वा हेतुत्वमित्येवाश्रयणीयम्, लाघवात्। तथा सामान्यकारणरूपाया ईश्वरशक्तेः तत्तद्विशेष-कारणसहिताया एव फलोपधायकतया भूतानां कार्यव्यक्तीनां तत्तत्प्रागभावरूपकारणविरहान्नेदानी-मुत्पत्त्यापत्तिः। अन्यत्र भवन्तीनां कार्यव्यक्तीनां तु तत्तद्व्यक्तिवृत्तिकार्यसामान्यं प्रति तादात्म्येन तत्तद्व्यक्तेर्हेतुतयैवान्यत्रोत्पत्त्यसंभवान्न तदापत्तिः। तथाचायमर्थः—भूतानामन्यत्र भवन्तीनां व्यक्ती-नामत्र **भवननैरपेक्ष्यात्**=अत्रोत्पादकसामग्र्यभावात् **व्याघातः**=आपादकाभावः इति।

---

1 मूले भावीत्यस्योत्पत्स्यमानेत्यर्थात् भूतानामन्यत्रेत्यत्र भूतपदमुत्पन्नार्थकम्। भवन्तीना-

स्वसजातीयमात्रविवक्षायामिष्टप्रसङ्गात्। विभूतिद्वयस्यापि अंशतः संभेदोऽवतारदशायां दृश्यते।

नापि चतुर्थः; रूपरसगन्धादीनां स्वाश्रयव्यापिनां कृत्स्नप्रदेशव्यापित्वस्यावयविपरमाण्वादिषु तैस्तैरभ्युपगमात्। [1]एतत् सर्वं, "कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा" इति परिचोद्य, "श्रुतेस्तु"

लीलाविभूत्यवच्छिन्नब्रह्मणो नित्यविभूतिस्थकार्यं प्रत्यपि समर्थत्वाल्लीलाविभूतौ नित्यविभूतिस्थकार्य-सजातीयकार्यमपि स्यात्। न चेष्टापत्तिः; तत्सजातीयानां घटादीनां विद्यमानत्वादिति वाच्यम्; त्रिगुणद्रव्यस्य नित्यविभूत्यत्यन्तविसजातीयत्वादित्याशङ्क्य परिहरति विभूतिद्वयस्यापीति। संभेदः सम्बन्धः। गन्धादीनामिति। आदिपदेन परिमाणादिकं गृह्यते। परमाण्वादिष्विति। अत्र च आदिपदेनाकाशादिकं गृह्यते। तथा च यथा अवयव्यादीनां सर्वावच्छेदेनापि रूपादिगुणपूर्णत्वम् एवं ब्रह्मणोऽप्युपपद्यते इत्यर्थः। कृत्स्नप्रसक्तिरिति। "सदेव सोम्येदमग्र आसीत्", "इदं वा

स्वसजातीयमात्रविवक्षायामिति। देशान्तरभाविकालान्तरभाविकार्यसजातीयकार्योपादन इत्यर्थः। इष्टप्रसङ्गादिति। सामग्रीसत्त्व इत्यादिः। तदभावे आपादकभाव एवेत्यर्थसिद्धम्। ननु देशान्तरवृत्तिकार्यस्य देशान्तरेऽभ्युपगमे नित्यविभूतिस्थकार्यसजातीयकार्यस्यापि लीलाविभूतावुत्पत्त्यापत्तिः; न चेष्टापत्तिः; विभूतिद्वयसंभेदासंभवादित्याशंक्याह विभूतीति। संभेदः संबन्धः। गन्धादीति आदिना स्पर्शादिपरिग्रहः। स्वाश्रयव्यापिनामिति व्याप्यवृत्तीनामित्यर्थः। स्वाभावसामानाधिकरण्यरहितानामिति यावत्। कृत्स्नप्रदेशव्यापित्वस्य स्वसंबन्धिसर्वावच्छिन्नवृत्तिकत्वस्य अनवच्छिन्नवृत्तिकत्वस्य वा। परमाण्वादिष्विति आदिनाऽऽकाशपरिग्रहः। तैस्तैरभ्युपगमादिति। तथाचान्यत्र विद्यमानत्वेऽप्येतदवच्छेदेनापि समस्तगुणविशिष्टत्वसंभवादप्रयोजकतेति भावः। ननु ब्रह्मणोऽनेकसंबन्धस्यैवासंभवात् कथं सर्वत्र पूर्णत्वम्। तथाहि—ब्रह्म किं घटादिभिः कार्त्स्न्येन संबद्ध्यते, उतैकदेशेन; नाद्यः; पटादिसंबन्धासंभवात्। न द्वितीयः; सावयवत्वापत्त्या निरवयवत्वश्रुतिविरोधादित्याशङ्कयाह एतत् सर्वमिति। श्रुतेस्त्वित्या-

मिति तद्विशेषणम्। वर्तमानानामित्यर्थः। अवर्तमानभूतोक्तिर्नष्टानामिति इत्यप्यर्थः स्यात्।

1 ननु, "सभागत्वसिद्ध्यसिद्ध्योरिष्टप्रसंगः" इति पूर्वमुक्तम्। तावता एकत्र तस्य पूर्णत्वाभावोऽसन्दिष्टः कथं परिहृतः। ब्रह्मणस्सभागत्वात् ब्रह्म न स्वैस्सर्वैर्भागैरेकत्र संबन्धुमर्हतीति अपूर्णत्वमेव खल्वसन्दिष्टमित्याशंकायाम्, निरवयवत्वसिद्धान्तविरोधादेवं न शंकनीयम्। सभगत्वासिद्धिरूपोत्तरपक्ष एव ग्राह्य इति दर्शयितुं प्रकृतसर्वविचारप्रसक्तिमदधिकरणं गृह्णाति एतत्सर्वमिति। अत्रेदं बोध्यम्—ब्रह्मैकत्र कृत्स्नतया संबध्नाति, एकदेशेन वेति विकल्पे द्वितीयकल्प एव निरवयवत्वशब्दकोप उक्तः न तु प्रथमकल्पेऽपि। तेन कृत्स्नशब्दो निरवयवेऽपि प्रयोक्तुमर्हं इति प्रतीयते। तच्च कृत्स्नत्वं न सर्वावयवसमुदायत्वरूपम्, अवयवास्वीकारात्। कृत्स्नस्य = सर्वगुणविशिष्टस्य संबन्ध एकैकत्रापीत्युक्तौ नानेकसंबन्धस्यास्य च विरोधः। अथ कार्त्स्न्येन = असंबन्ध्यंशराहित्येन संबध्नातीति तदर्थात् कथं तथाविधस्यान्यत्रापि संबन्ध इति चेत्—तत्रोक्तमुत्तरं श्रुतेस्तु इति। धर्मिग्राहकमानबलात् अविरोध एष्टव्य इति भावः। परसंमतमनुमानादिरूपं धर्मिग्राहकमानमपि दर्शयित्वा तन्मतेऽपि अत्र संमतिं संपादयितुमेव, 'आत्मनि चैवं विचित्राश्च हि' इत्यादिकमपि सूत्रम्। 'अकृत्स्नो ह्येषः आत्मेत्येवोपासीत' इति श्रुतिश्च विशेषणविशिष्टे कृत्स्नत्वं दर्शयति। इदमेव चात्र पूर्णत्वमपि।

कृत्स्नपदेन गुणविभूतिविशिष्टस्य ग्रहणे एकविभूतिविशिष्टरूपेण विभूत्यन्तरे संबन्धस्य दुर्वचत्वात् सर्वगुणविशिष्टेत्येतावदेवोच्यते। एवं, 'पूर्णमदः पूर्णमिदम्' इत्यादौ अदइदमादिशब्दोपात्तकारण-कार्यान्तर्यामिणि पूर्णत्वं सर्वगुणविशिष्टत्वरूपं विवक्षितम्। पूरी आप्यायने इति धातोः कर्तरिक्ते पूर्णः = समृद्ध इति ह्यर्थः। 'तेनेदं पूर्णं पुरुषेण सर्वम्' इत्यादौ पूर्णशब्दस्तु, 'धा दान्तशान्तपूर्ण' इति निपातनात् पूरितमत्यर्थकम्। व्याप्तमिति यावत्। पूर्णमद इत्यत्रापि तथाऽर्थग्रहणेन वाक्यार्थवर्णन-संभवेऽपि तदा तृतीयान्तमध्याहर्तव्यं भवेत्। "तदेतत् पूर्णमप्रवर्ति। पूर्णमप्रवर्तिनीं श्रियं लभते" इत्यत्राप्येवं पूर्णशब्दार्थो ग्राह्यः। 'पूर्णः पूरयिता' इति नामसहस्रश्रीभट्टपराशरपादभाष्यम्, वाक्यान्व-याधिकरणश्रुतप्रकाशिकाश्चानुसृत्यायमर्थो गृह्यते। लोके, जलपूर्णो घट इति प्रयोगे पूरित इत्यर्थः। 'पूर्णं जलं घटे' इति प्रयोगस्तु अन्यत्रापि जलसद्भावान्न स्वरसः। क्वचित्कप्रयोगस्तु, "सर्वत्वमाधि-कारिकम्" इति न्यायेन प्रकरणलभ्यविशेषरूपसर्वार्थकत्वस्य पूर्णशब्दे विवक्षया। अत्र कृत्स्न-प्रसक्त्यधिकरणोपादानेन, 'भावाभावयोरेव विरोधः, न तु सामान्यतो दृष्टेन विरोधः' इति तत्र भाष्ये स्थापनात् अत्र पूर्ण इत्यस्य अन्यत्राविद्यमान इत्यर्थस्य च विरोधादन्यथाऽर्थो वक्तव्य इति ज्ञाप्यते। अत्र मूले, "अन्यत्र विद्यमानस्यान्यत्र पूर्णत्वं न स्यात्" इति वाक्ये, अन्यत्रपूर्णत्वमित्येतत्स्थाने, 'अत्र पूर्णत्वम्', इति पाठ उत्प्रेक्ष्यते। उपरि कल्पचतुष्टयेऽपि अत्रेति पदस्यैव प्रयोगात्। पूर्णशब्दस्य व्याप्त इत्येतावन्मात्रार्थकत्वे शब्दस्वरसार्थत्याग इति समृद्धिरूपपौष्कल्यरूपार्थस्यापि ग्रहणम्।

अन्यत्रावर्तमानत्वं सर्वांशेनापिवर्तनम्। इत्यादिकं न पूर्णत्वं विश्वत्रनशे विरोधतः॥
पूर्तिः प्रत्यर्थसंबन्धो व्याप्तिः स्यान्नाम किं ततः। प्रत्यर्थं पूर्तिरित्यत्र योगशब्दोऽप्यलं खलु॥
व्यासज्यवृत्तिद्वित्वादिवैषम्यं परमात्मनः। पूर्तिं प्रत्येकपर्याप्तिमन्ये प्राहुरबाधतः॥
सत्यं स्वरूपमात्रेण पूर्तिनिर्वचनं त्विदम्। तथापि तद्बोधनस्य न श्लाघ्यं लक्ष्यते फलम्॥
अत्यन्तणौ च षाड्गुण्यवत्त्वेन ग्रहणार्हता। वाक्यान्वयाधिकरणटीकायां पूर्तिरीरिता॥
प्रतिवस्त्वस्य पूर्णत्वमंशेऽप्यखिलशक्तिता। मूलमन्त्राधिकारोक्ता षाड्गुण्ये शक्तिसंग्रहात्॥

जात्यादिकं प्रतिव्यक्ति परिसमाप्तमिति व्यवहारेऽपि व्यक्त्यन्तरेष्वविद्यमानमित्यर्थस्वीकारे विरोध एव। वस्तुतस्तु द्वित्वादिव्यासज्यवृत्तिस्थले, 'द्वित्ववत्', 'द्वे' इति प्रयोगद्वयवैलक्षण्यनिर्वाहाय समवायसंबन्धित्वातिरिक्तपर्याप्त्याख्यसंबन्धस्वीकारेऽपि अन्यत्र तत्तत्संबन्धानुयोगित्वप्रतियोगि-त्वातिरिक्तपर्याप्तिसंबन्धस्वीकारे न मानमस्ति। परमात्मनस्तु सर्वाधारत्वात् वस्तुष्वस्य वर्तमानत्व-स्यैवाभावादपि न पर्याप्य वर्तमानत्वम्। वेदान्तदीपे, 'यथा जातिवादिनां जातिरेकैवामूर्ता खण्ड-मुण्डादिष्वत्यन्तविलक्षणेष्वनन्तेष्वपि परिसमाप्यैव वर्तते, न तत्रेतरवस्तुचोद्यम्' इति दृष्टान्तकथन-मात्रेण पर्याप्तिरूपसंबन्धविशेषो न परमात्मनि सिध्येत्। तत्र स्वपक्षदोषाच्चेति सूत्रविवक्षितदोष-प्रकटनार्थं जातिविषये समाप्तिपदप्रयोगः। अयमाशयः—अनेकानुगतनित्यैकजातिवादी हि नाना-गोव्यक्तिष्वेकजातिस्वीकारे मध्यदेशसंबन्धं विना नानागोव्यक्तिसंबन्धायोगात् मध्ये भूतल-गगनादावपि तत्सत्त्वेष्टौ तेषामपि गोत्वापत्तेः तदसंबन्धसंपादनाय जातेस्तत्रतत्र परिसमाप्तिं तथाप्ये-कताञ्च गत्यभावात् धर्मिग्राहकमानसिद्धां वदति। एवमनुभवविरुद्धमपि तर्कबलात् स्वीकुर्वन् आगमसिद्धसर्वव्याप्तविलक्षणवस्तुने किमित्यसूयतीति। न च ब्रह्मणो गगनवद्व्यापिनः क्वचिदपि वृत्तिनियामकसंबन्धापेक्षा। न च नित्यविभुनिरवयवगगनसंबन्धं सर्वत्र तार्किको नेच्छति। सर्वमिदमभिप्रेत्य श्रीमति रहस्यत्रयसारे, 'प्रतिवस्तु स्वरूपसमाप्तिर्न परमात्मनः' इति समाप्तिपद-प्रयोगः। अत्र च न्यायसिद्धाञ्जने परिपूर्णत्वमेवोक्तम्, न तु समाप्तत्वम्, सम्यक् = नियन्तृत्वादि-गुणविशिष्टतया आप्तत्वं = व्याप्तत्वमितीदं तु समाप्तत्वमिष्यत एवेत्यलम्।

इत्यादिभिः परिहरन् सूत्रकार एव प्रदर्शितवान्। अतो यथागमं सर्वत्र पूर्ण एव भगवान् ॥

अत एव निर्गुणवादोऽपि निरस्तः। विरुद्धौ गुणविधिनिषेधौ कथमिति चेत्-विचारयामः। न तावदत्र समुच्चयो युक्तः; विरोधात्। अत एव नोभयत्यागः। न च विकल्पः; सिद्धे [2]तदयोगात्। न चान्यतरत्यागः; किं त्याज्यमिति नियामकाभावात्। अपच्छेदनयात् पूर्वं त्याज्यमिति चेत्—

---

अग्रे नैव किञ्चनासीत्", "आत्मा वा इदमेक एवाग्र आसीत्", इत्यादिषु तदविभागमेकं निरवयवमेव ब्रह्म, "बहु स्याम्" इति सङ्कल्प्य आकाशवाय्वादिविभागम्, ब्रह्मादिस्तम्बपर्यन्तजीवजात-विभागञ्चाभवदित्युक्तम्। एवं सति कारणभूतस्य ब्रह्मणो निरवयवत्ववादिनः शब्दाः कुप्येयुः। तस्य निरवयवत्वे हि बहुभवनं नोपपद्यते; कार्यत्वानुपयुक्तांशस्थितिश्च नोपपद्यते। अतोऽसमञ्जसमिवाऽऽभाति। अतो ब्रह्मकारणत्वं नोपपद्यते इति परिचोद्य, "श्रुतेस्तु शब्दमूलत्वात्। तुशब्द उक्तदोषं व्यावर्तयति। नैवमसामञ्जस्यम्। कुतः? श्रुतेः। श्रुतिस्तावत् निरवयवत्वं ब्रह्मणः, ततो विचित्रसर्गञ्चाह। श्रौतेऽर्थे यथाश्रुति प्रतिपत्तव्यमित्यर्थः। ननु श्रुतिरप्यग्निना सिञ्चेदितिवत् परस्परान्वयायोग्यार्थं प्रतिपादयितुं न समर्था। अत आह शब्दमूलत्वादिति। शब्दैकप्रमाणकत्वेन सकलेतरवस्तुविसजातीयत्वा[1]दस्यार्थस्य विचित्रशक्तियोगो न विरुद्धः" इत्येवं परिहरन् सूत्रकार एव प्रदर्शितवानिति भावः। आदिशब्दात्, "आत्मनि चैवं विचित्राश्च हि" इत्यादिसूत्राणि विवक्षितानि।

अत एव निर्गुणवादोऽपीति। "स्वाभाविकी ज्ञानबलक्रिया च", "सत्यकामः सत्यसङ्कल्पः" इत्यागमविरोधादित्यर्थः। अत एव नोभयत्याग इति। सगुणत्वनिर्गुणत्ववत् तदभावयोरपि विरोधात् न समुच्चय इत्यर्थः। सिद्धे [2]तदयोगादिति। अनुष्ठाने विकल्पसंभवेऽपि वस्तुनो द्वैरूप्यासम्भवेन विकल्पायोगादित्यर्थः। अपच्छेदनयादिति। यथा ज्योतिष्टोमे बहिष्पवमानं[प्रति?] प्रसर्पतामुद्गातुरपच्छेदे सति, "यद्युद्गाताऽपच्छिद्येत अदक्षिणं तं यज्ञमिष्ट्वा तेन पुनर्यजेत" इति श्रुतिनिरीक्षणेन जाता उद्गात्रपच्छेद-

---

दिभिः परिहरन्निति। अयं भावः-ब्रह्म घटादिभिरेकदेशेनैव संबध्यते; न तु कार्त्स्न्येन। अतो न पटादि-संबन्धानुपपत्तिः। न चैवं सावयवत्वप्रसङ्गेन निरवयवत्वश्रुतिविरोध इति वाच्यम्; औपाधिकावयववत्त्व-स्यैवाङ्गीकारात्। स्वाभाविकस्य निरवयवत्वस्य श्रुतिप्रतिपन्नस्याविरोधात्। उपाधिश्च तत्तद्घटसंबन्ध एव। तथाच तत्तद्घटसंबन्धावच्छिन्नब्रह्मणस्तत्तद्घटेन संबन्ध इत्युक्तं भवति। यद्यप्येवंसति तत्तद्घटसंबन्धावच्छेदेनैव ब्रह्मणि तत्तद्घटसंबन्धो वर्तत इति पर्यवसानादात्माश्रयः प्रसज्यते, तथापि ब्रह्मणि सर्वसंबन्धित्वग्राहकश्रुतिबलात् स न दोषः। कल्पनायामेव तस्य तथात्वमिति।

अत एवेति। सर्वत्र समस्तगुणविशिष्टस्वरूपपूर्णत्वादेवेत्यर्थः। अत एवेति। विरोधादेवेत्यर्थः। नोभयत्याग इति। सगुणत्वाभाव-निर्गुणत्वाभावयोरपि निर्गुणत्व-सगुणत्वयोरेव पर्यवसानादिति भावः। सिद्धे तदयोगादिति। वस्तुनो द्वैरूप्यासंभवादिति भावः। अपच्छेदनयादिति। यथा ज्योतिष्टोमे बहिष्पवमानं [प्रति?]प्रसर्पतामुद्गातुरपच्छेदे सति, "यद्युद्गाताऽपच्छिन्द्यात् अदक्षिणं तं यज्ञमिष्ट्वा तेन पुनर्यजेत तत्र तद्दद्यात् यत् पूर्वस्मिन् दास्यन् स्यात्" इति वाक्यजनितमुद्गात्रपच्छेदनिमित्तप्रायश्चित्तकर्तव्यताज्ञानं

---

1 विसजातीयेति। सजातीयत्वे ह्यन्वयायोग्यत्वनिश्चयः स्यात्। 2 वस्तुनि विकल्पायोगादित्यर्थः।

**तस्यानियतविरोधपौर्वापर्यविषयत्वात्। नियमे हि विरोधनयात् परानुत्पत्तिरेव। न च विषयव्यवस्थया विरोधपरिहारे सति अन्यतरात्यन्तबाधकापच्छेदन्यायावतारो युक्तः; गुणनिषेधवचसा-**

---

निमित्ततया प्रायश्चित्तकर्तव्यताबुद्धि, पश्चात् प्रतिहर्तुरपच्छेदे सति, "यदि प्रतिहर्ताऽपच्छिद्येत सर्ववेदसं दद्यात्" इति श्रुतिनिरीक्षणेन जातया तद्विरुद्धप्रतिहर्त्रपच्छेदनिमित्तप्रायश्चित्तकर्तव्यताबुद्ध्या बाध्यते, तद्वत् पश्चाद्भाविनिर्गुणज्ञानेन सगुणज्ञानं बाध्यते इत्यर्थः। **तस्यानियते**ति। उद्गातृप्रतिहर्त्रोरुभयोरपच्छेदनियमो नास्ति। तत्रापि क्रमेणापच्छेदोऽप्यनियतः। तस्य क्रमभावित्वेऽप्युद्गात्रपच्छेदः पूर्वभावी इतरश्चरमभावीति वा, विपर्ययेणेति वा (येन वा!) नियमो नास्ति। अतो **विरोधस्य पौर्वापर्यस्य** च यत्र नियमो न, तत्रापच्छेदन्यायप्रवृत्तिः। तत्र तत्प्रवृत्तौ पूर्वशास्त्रस्य सर्वथा अप्रामाण्यप्रसङ्गात्। तदुक्तम्' ' पौर्वापर्यं विरोधश्च पूर्वाप्रामाण्यमेव च। नियमान्नास्ति तत्रासावपच्छेदनयो भवेत्॥" इति। अतो**ऽनियतविरोधपौर्वापर्यविषयो**ऽपच्छेदन्यायो नात्र प्रवर्तते इति भावः। **विरोधनयादि**ति। [1]तत्र हि पौर्वापर्यं नियमो विरोधनियमश्च विद्येते। तथा हि, "औदुम्बरीं स्पृष्ट्वोद्गायेत्" इति प्रत्यक्षश्रुतिः। "औदुम्बरी सर्वा वेष्टयितव्या" इति स्मृतिः। तत्र श्रुतिः प्रथमत एव प्रमितिं जनयति, निरपेक्षप्रमाणभावात्। स्मृतिस्तु स्वमूलभूतश्रुत्यनुमानसापेक्षतया विलम्बितप्रवृत्तिः। अतस्तत्र पौर्वापर्यं नियतम्। औदुम्बरीस्पर्शतद्वेष्टनयोर्विरोधश्च नियतः। तत्र प्रमित्यां जातायां तद्विरुद्धार्थः कालात्ययापदिष्टः स्यात्। ततः, "विलम्बितधीहेतोः शीघ्रधीहेतुर्बलीयान्" इति न्यायात् पूर्वस्याः श्रुतेर्बलीयस्त्वमित्युत्तरशास्त्रानुदय एव।

---

पश्चात् प्रतिहर्तुरपच्छेदे सति, "यदि प्रतिहर्ता, सर्ववेदसं दद्यात्" इति वाक्यजनितेन तद्विरुद्धप्रतिहर्त्रपच्छेदनिमित्तप्रायश्चित्तकर्तव्यताज्ञानेन बाध्यते, तद्वत् पश्चाद्भाविनिर्गुणज्ञानेन सगुणज्ञानं बाध्यत इत्यर्थः. **तस्यानियते**ति। उद्गातृप्रतिहर्त्रोरुभयोरपच्छेदनियमो नास्ति, तत्रापि क्रमेणापच्छेदोऽप्यनियतः। तस्य क्रमभावित्वेऽप्युद्गात्रपच्छेदः पूर्वभावी, इतरश्चरमभावीति वा, विपर्ययेणेति वा नियमो नास्ति। अतो विरोधस्य पौर्वापर्यस्य च यत्र नियमः, न तत्रापच्छेदन्यायप्रवृत्तिः। तत्र तत्प्रवृत्तौ पूर्वशास्त्रस्य सर्वथा अप्रामाण्यप्रसङ्गात्। अतो नियतविरोधपौर्वापर्यविषयोऽपच्छेदन्यायो नात्र प्रवर्ततेति भावः। **विरोधनयादि**ति। विरोधाधिकरणन्यायादित्यर्थः। **परानुत्पत्तिरेवे**ति। निर्गुणवाक्यात् ज्ञानानुदय एवेत्यर्थः। अयं भावः—तत्र हि पौर्वापर्यनियमो विरोधनियमश्च विद्येते। तथाहि; "औदुम्बरींस्पृष्ट्वोद्गायेत्' इति प्रत्यक्षश्रुतिः। 'औदुम्बरी सर्वा वेष्टयितव्या" इति स्मृतिः। तत्र श्रुतिः प्रथमत एव प्रमितिं जनयति—निरपेक्षत्वात्। स्मृतिस्तु स्वमूलभूतश्रुत्यनुमानसापेक्षतया विलम्बितप्रवृत्तिः। अतस्तत्र पौर्वापर्यं नियतम्। औदुम्बरीस्पर्शनतद्वेष्टनयोर्विरोधश्च नियतः। तत्र पूर्वं श्रुत्या प्रमित्यां जातायाम् तद्विरुद्धार्थविषयस्मृत्या ज्ञानोदय एव न संभवतीति। न च तत्र स्मृतित्वश्रुतित्वे एव बाध्यबाधकभावप्रयोजके इति वाच्यम्; श्रुतित्व-स्मृतित्वयोः पौर्वापर्यहेतुत्वात्। तत् सिद्धं पौर्वापर्यमेव बाध्यबाधकभावे हेतुरिति न्यायसाम्यात् सगुणवाक्यबलीयस्त्वमिति। इदमुपलक्षणम्; उपक्रमाधिकरणन्यायेनापि

---

1 तत्र = विरोधाधिकरणोदाहरणे।

मुत्सर्गापवादन्यायेन विहितमङ्गळगुणव्यतिरिक्तविषयत्वात्, श्रूयमाणे हेयगुणनिषेधे पर्यवसानात्। उक्तञ्च तत्त्वसारे, "यद्ब्रह्मणो गुण.शरीर.विकार.जन्म.(भेद)कर्मादिगोचरविधिप्रतिषेधवाचः।
अन्योन्यभिन्नविषया न विरोधगन्धमर्हन्ति; तन्न विधयः प्रतिषेधबाध्याः॥" इत्यादि।

---

ननु अनाधीतमेव परशास्त्रमिति चेत्-ततः किम्? प्रमित्यनुदयो हि अनुदयः; न तु शब्दानुदयः; "आदित्यो यूपः" इतिवत्। ननु तत्र श्रुतित्वस्मृतित्वे बाध्यबाधकभावप्रयोजके॥ नैवम्। श्रुतित्वस्मृतित्वयोः पौर्वापर्यहेतुत्वात्। तेन सिद्धं पौर्वापर्यमेव बाध्यबाधकभावे हेतुरिति न्यायसाम्यात् सगुणवाक्यबलीयस्त्वमिति। यद्वा मा भूद्विरोधाधिकरणन्यायः। उपक्रमाधिकरणन्यायः प्रवर्तते। विरोधपौर्वापर्यनियमात्। अतः सगुणप्रतिबद्धत्वान्निर्गुणशास्त्रानुदय एवेति। **उत्सर्गापवादन्यायेनेति।** उक्तञ्चाभियुक्तैः, "हिंसाऽहिंसावाक्यसाम्यात् गुणनिर्गुणवाक्ययोः। अविरोधेऽप्यमानत्वं भेषे सौगतसौहृदात्॥" इति। **श्रूयमाण इति।** यथा, "अग्नीषोमीयं पशुमालभेत" इति सामान्यशब्दस्य, "छागस्य वपायाः" इति मन्त्रवर्णप्राप्तच्छागरूपविशेषे पर्यवसानम्, एवं निर्गुणवाक्यस्यापि, "अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सः", इत्यादिगुणविशेषनिषेधे पर्यवसानादिति भावः।

---

सगुणवाक्यप्राबल्यम्, विरोधपौर्वापर्यनियमादित्यादि बोध्यम्। इदञ्च सगुणनिर्गुणवाक्ययोः परोक्तं विरोधस्य प्रकारान्तरेण दुष्परिहरत्वमभ्युपगम्योक्तम्। वस्तुतस्तूत्सर्गापवादन्याय-सामान्यविशेषन्यायाभ्यां विरोधस्य सुपरिहरतया नात्रान्यतरात्यन्तबाधकन्यायप्रवृत्तिरित्यभिप्रायेणाह **न चेति।** **उत्सर्गापवादन्यायेनेति।** "न हिंस्यात्" इति निषेधस्य, "अग्नीषोमीयं पशुमालभेत" इति विहितव्यतिरिक्तविषयत्ववत् गुणनिषेधस्यापि विहितमङ्गळगुणव्यतिरिक्तविषयत्वमिति भावः। **श्रूयमाण इति।** विधिगतपशुशब्दस्य, "छागस्य वपायाः," इति मन्त्रवर्णप्रतिपादितच्छागे पर्यवसानवत् निर्गुणवाक्यस्यापि, "अपहतपाप्मा" इत्यादिहेयगुणनिषेधे पर्यवसानमिति भावः।

ननु, "सामान्यविधिरस्पष्टः संह्रियेत विशेषतः। स्पष्टस्य तु विधेर्नान्यैरुपसंहारकल्पना।" इत्युक्तेरस्पष्टसामान्यविधिस्थल एव सामान्यविशेषन्यायः प्रवर्तेत; न तु निषेधस्थले; निषेधस्य निवृत्तिमात्रफलकतया सर्वङ्कोडीकारसंभवात् विशेषाकांक्षाविरहेण निराकाङ्क्षबोधजनकतया स्पष्टत्वात्, 'अग्नीषोमीयं पशुमालभेत'

---

गुणेति। गुणादिविषये क्रमेण विधिवाचः = सद्भावबोधकवाक्यानि, निषेधवाचः = नास्तित्वबोधकवाक्यानि चैवम्—वर्षायुतैर्यस्य गुणाः, तवानन्तगुणस्यापि; पुरुषं निर्गुणम्; तदात्मानं स्वयमकुरुत, कर्ता विकर्ता गहनो गुहः, अविकाराय शुद्धाय, सत्यस्य सत्यम्; हिरण्मयः पुरुषो दृश्यते, यथा माहारजनं वासः, अशरीरं शरीरेषु, अकायमव्रणम्; जन्मेति पाठे अजायमानो बहुधा विजायते, अजोऽपि सन्...संभवामि। इच्छागृहीताभिमतोरुदेहः इत्यादि; भेदेत्येव पाठे-पृथगात्मानं प्रेरितारञ्च, अन्यमीशम्, यः पृथिव्यां तिष्ठन्, विद्याविद्ये ईशते यस्तु सोऽन्यः, नेह नानास्ति, यत्र हि द्वैतमिव भवतीत्यादि; स्वाभाविकी ज्ञानबलक्रिया च, स्वैकर्मा, यस्य वैतत्कर्म, विष्णोः कर्माणि पश्यत, निष्क्रियं शान्तम्, तदु नैजतीत्येवम्। अन्योन्यभिन्नविषयत्वं निषेधानां हेयविषयत्वात्, विधीनां शुभगुणादिविषयत्वात्, स्वतन्त्रभेदनिषेधात् अपृथक्सिद्धानेकस्वीकारात्, विभौ परिस्पन्दनिषेधात्, अप्राकृतदेहमूलं दिव्यकर्माचरणात्, हेयकर्माभावात्, पुण्यपापाधीन-जन्माभावादित्येवं द्रष्टव्यम्॥

एवं स्थितेऽपि निषेधार्थस्वभावप्रयुक्तपरत्वमात्रेण यदि निर्विशेषवचसा पूर्वबाधः, तदा शून्यवचसा तस्यापि बाधात् माध्यमिकमतस्यैव विजयित्वम्। द्वयोरपि वचसोः, पारमार्थिकस्य

निषेधार्थस्वभावेति—प्रतिषेधस्य प्रसक्तिपूर्वकत्वादिति भावः। ननु बुद्धागमस्य परत्वेऽपि अप्रमाणत्वात् न श्रुत्यर्थप्रतिक्षेपकत्वमित्याशङ्क्याह—द्वयोरपि वचसोरिति। पारमार्थिकप्रामाण्याभावो द्वयोरप्यविशिष्टः। अपारमार्थिकञ्च प्रामाण्यं द्वयोरप्यविशिष्टम्। उक्तञ्चाभियुक्तैः, "वेदोऽनृतो बुद्धकृतागमोऽनृतः प्रामाण्यमेतस्य च तस्य चानृतम्। बोद्धाऽनृतो बुद्धिफले तथाऽनृते यूयं च बौद्धाश्च समानसंसदः॥"

इत्यादिविधिस्थले तु पशुसामान्यस्य विशेषपर्यवसानमन्तरा अनुष्ठानासंभवाद्विशेषाकाङ्क्षासत्त्वेन निराकाङ्क्षबोधजनकत्वविरहेणास्पष्टतयाऽनुष्ठानकालिकार्थस्मृतिजनकमन्त्रवर्णसमर्पिते विशेषे पर्यवसानं युक्तम्। इह तु निर्गुणश्रुतेर्गुणसामान्याभावबोधकतया स्पष्टत्वमेव। निरादिशब्दानां हि अन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकाभावबोधकत्वं व्युत्पन्नम्[1]। न हि श्वेतघटशून्ये नीलघटवति भूतले निर्घटं भूतलमिति व्यवहारोऽस्ति। अतो न हेयगुणनिषेधे निर्गुणश्रुतेः पर्यवसानं युक्तम्। अन्यथा, "न हिंस्यात्" इति निषेधस्य, "न ब्राह्मणं हन्यात्" इत्यनेनोपसंहारे हिंसान्तरस्यादोषत्वप्रसङ्गः। एवं स्त्रीवधनिषेधेनोपसंहारेऽनात्रेयीवधस्यादोषत्वप्रसङ्गः। अत एव निर्णयसिन्धौ, "गोत्रान्मातुस्सपिण्डात्तु विवाहो गोवधस्तथा। नराश्वमेधौ मद्यञ्च कलौ वर्ज्यं द्विजातिभिः" इति हेमाद्र्युदाहृतब्राह्मवचने सामान्येन मद्यनिषेधस्य, "सौत्रामण्यामपि सुराग्रहणस्य च संग्रहः" इति तदुदाहृत-कलिवर्ज्यप्रकरणपठितादित्यपुराणवचनेनोपसंहारमाशङ्क्योक्तरीत्यैव समाहितम्। हेमाद्रौ चेदमन्यथा सम्यङ्निरूपितमिति चेत्—

सत्यम्; निर्गुणश्रुतेर्निषेधरूपत्वेऽपि सगुणश्रुतिविरोधेन गुणसामान्याभावबोधकत्वासंभवान्निषेध्यगुणविशेषाकाङ्क्षालक्षणास्पष्टत्वसद्भावात् कथोक्तन्यायप्रवृत्तेरविघातात्। यद्यपि, "न हिंस्यात्" इति निषेधस्यापि, "अग्नीषोमीयं पशुमालभेत" इति हिंसाविशेषविधिबलेन हिंसासामान्यनिषेधासंभवाद्विशेषाकाङ्क्षालक्षणमस्पष्टत्वमस्त्येव। ततश्च, "न ब्राह्मणं हन्यात्" इत्युक्तं विशेषे पर्यवसानं प्रसज्यते; तथापि, "अग्नीषोमीयं पशुमालभेत" इति विहितमरणानुकूलव्यापारस्य सिद्धान्ते हिंसापदार्थत्वाभावाद्विरोधविरहेण, "न हिंस्यात्" इति निषेधस्य निषेध्यविशेषाकाङ्क्षाविरहात् नोक्तदोषावकाशः। अथवा निषेधस्थलेऽपि यत्रोत्सर्गापवादन्यायेन निषेध्यसङ्कोचः—तत्र तादृशसंकुचितनिषेध्यविशेषे निषेध्यसामान्यस्य पर्यवसानात् सामान्यविशेषन्यायप्रवृत्त्यङ्गीकारे बाधकाभाव एव। परन्तु सामान्यविशेषन्यायमात्रेण निषेधस्य विशेषे पर्यवसानं नास्त्येव। अतो न पूर्वोक्तदोषः। अतः सुष्ठूक्तं सामान्यविशेषन्यायेन निर्गुणश्रुतेर्हेयगुणनिषेधे पर्यवसानमिति।

निषेधार्थस्वभावेति। प्रतिषेधस्य प्रसक्तिपूर्वकतया प्रमाणान्तरागोचरे ब्रह्मणि प्रसक्तिसंपादकसगुणवाक्यानां पूर्वत्वमावश्यकमिति भावः। तदेवमिति। तस्मादुक्तप्रकारेणेत्यर्थः। निर्गुण

1 व्युत्पन्नमिति। निषेधस्थलेऽपि विशेषे पर्यवसाने नानोदाहरणप्रदर्शनं निषेधस्थलव्युत्पत्तिभंगः अस्पष्टत्वनिर्वचनादिकञ्च विस्तरेणास्मदीये परमार्थभूषणे सगुणनिर्गुणवादे द्रष्टव्यम्।

प्रामाण्यस्यानभ्युपगमात्, अपारमार्थिकस्य चाविशिष्टत्वात्। तदेवमुभयलिङ्ग एवेश्वरः।

**एतेन निर्विशेषस्यापि ब्रह्मणः आच्छादिकयाऽविद्यया तिरोहितस्य विक्षेपिकया तया प्रपञ्चाऽध्यास एव सृष्टिरित्यपि निरस्तम्। तस्य अविद्यादिदोषगन्धायोग्यत्वात्। सर्वज्ञत्वादिगुणगणविशिष्टत्वस्य नित्यचेतनबहुत्वस्य च समर्थितत्वात्। "सदेव" इत्यादिवाक्येऽप्युपादानत्वविधान-**

इति। **उभयलिङ्ग** इति। निर्दोषत्वकल्याणगुणाकरत्वरूपोभयलिङ्ग इत्यर्थः।

**आच्छादिकयेति**। अविद्याया द्वे शक्ती आवरणशक्तिर्विक्षेपशक्तिश्च। आवरणं नाम यथाऽवस्थितस्वरूपाप्रतिभासः। विक्षेपो नामायथावस्थितप्रतिभानम्। आवृत्य विक्षिपतीति तदभ्युपगतत्वादिति भावः। **सर्वज्ञत्वादिगुणगणविशिष्टत्वस्येति**। आदिपदेन सर्वशक्तित्वादिकं गृह्यते। सर्वज्ञत्वासर्वज्ञत्वयोर्विरोधादिति भावः। ननु अज्ञानकल्पितानां जीवानामज्ञानाश्रयत्वासम्भवात् ब्रह्मण एवाज्ञानाश्रयत्वमकामेनापि स्वीकरणीयमित्याशङ्क्याह **नित्यचेतनबहुत्वस्येति**। यद्वा **सर्वज्ञत्वादिगुणविशिष्टस्या**विद्यातिरोधानं न संभवति। तथा चेतनबहुत्वादीनां नित्यत्वात् चेतनभेदादिलक्षणप्रपञ्चाध्यासोऽपि न सम्भवतीत्याह **तस्य सर्वज्ञत्वादिगुणगणविशिष्टत्वस्ये**त्यादिना। यद्वा ननु सर्वज्ञस्य ब्रह्मणोऽविद्याश्रयत्वाभावे प्रपञ्चाध्यासो न स्यादित्यत आह **नित्यचेतनबहुत्वस्येति**। प्रपञ्चसत्यत्वसमर्थनादित्यर्थः। ननु, "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इत्यत्र सृष्टेः प्राक् चेतनबहुत्वादिलक्षणप्रपञ्चस्य निषिद्धत्वात् कथं तद्बहुत्वस्य नित्यत्वम्? किञ्च, "अद्वितीयम्" इति श्रुतेः गुणतोऽपि सद्वितीयत्वासहत्वेन ब्रह्मणः सर्वज्ञत्वादिवैशिष्ट्यमपि न संभवतीत्याशङ्क्याह **सदेवेत्यादिवाक्येऽपीति**। एकशब्दः, "बहु स्याम्" इति वक्ष्यमाणबहुत्वप्रतियोग्येकत्वपरः सन् अविभक्तनामरूपब्रह्मपरः। एवञ्चाविभक्तनामरूपत्वात्, ब्रह्मण उपादानत्वं सिद्धम्। अन्यवस्थाविशेषवतः प्रागवस्थायोगो हि उपादानत्वम्। **अद्वितीयमिति** निमित्तान्तरनिषेधः। उपादानस्य प्रसक्तत्वेन निमित्तस्य शेषत्वात्। एतत्स्वरूपविशेषणानां विहितत्वात् निषेधस्य विहितव्यतिरिक्तविषयत्वात्। उपरितनवाक्यसङ्गतेरपेक्षणीयत्वाच्च। एकमेवेति शब्दस्य अविभक्तनामरूपतापरत्वं, "बहु स्याम्" इत्यनेनावगम्यते। "तदैक्षत", "तत्तेजोऽसृजत"

---

वाक्यानां हेयगुणनिषेधकत्वात् सगुणवाक्यानां कल्याणगुणविधायकत्वात्; विशिष्यैव हेयगुणराहित्यकल्याणगुणवत्त्वबोधनाच्चेति भावः। **उभयलिङ्ग** इति। हेयप्रत्यनीकत्वकल्याणगुणाकरत्वरूपासाधारणाकारद्वयविशिष्ट इत्यर्थः। **एतेनेति**। उक्तोभयलिङ्गत्वसमर्थनेनेत्यर्थः। **आच्छादिकयेति**। आवारकशक्तिविशिष्टयेत्यर्थः। **विक्षेपिकयेति**। विक्षेपकशक्तिविशिष्टयेत्यर्थः। अविद्यायां ह्यावरणविक्षेपरूपकार्यद्वयानुकूलं शक्तिद्वयमस्ति। तत्राऽऽवरणं यथावस्थितस्वरूपानवभासः, विक्षेपश्चायथावस्थिताकारभानम्। **प्रपञ्चाध्यास एवेति**। प्रपञ्चभ्रम एवेत्यर्थः। **निरस्तमिति**। अविद्यादीनां हेयरूपत्वात् हेयप्रत्यनीके ब्रह्मण्यसंभवादिति भावः। तदेवाह **तस्येति**। **सर्वज्ञत्वादिगुणगणविशिष्टत्वस्येति**। अतो न भ्रमसंभव इति भावः। **नित्यचेतनबहुत्वस्य चेति**। चेतनभेदादिरूपप्रपञ्चसत्यत्वस्य चेत्यर्थः। अतः सृष्टिर्नाध्यासरूपेति भावः। एवं ब्रह्मणो निर्विशेषत्वे प्रमानुपपत्तिरूपं दूषणमाह

बुद्धिस्थकारणान्तरनिषेधमात्रे तत्परत्वस्य पौर्वापर्यादिपर्यालोचनसिद्धत्वात् ॥ किञ्च—

**अधिष्ठानस्य कार्त्स्न्येन मानेऽभाने च न भ्रमः । भाताभाताकृतिभिदा सविशेषत्वसाधिका ४१**

**अतो निर्विशेषस्य तिरोधेयधर्मविशेषायोगात् स्वरूपमात्रतिरोधाने स्वस्यैव हानिप्रसङ्गात् स्वयम्प्रकाश-तया अत्यन्तविशदस्वरूपे च वस्तुनि बाधकप्रत्ययावसेयविशेषाभावेन अनिर्मोक्षात् संसारयो-**

---

इत्यनेनाद्वितीयपदस्य निमित्तान्तराभावपरत्वमवगम्यते । परस्य ब्रह्मणः सर्वदा सत्त्वेन, "सदेव" इत्यवधारणमसत्कार्यव्युदसनपरमिति उपरितनेन, "कथमसतः सज्जायेत" इति वाक्येनावगम्यते । विजातीयसजातीयस्वगतनानात्वव्यावृत्तिरत्र विवक्षिता चेत्—अग्र इति वक्तुमयुक्तम् । न हि ब्रह्मणः कालविशेषे निर्विशेषत्वम् । वैषम्यनैर्घृण्यादिपरिहाराय जीवबहुत्व-तत्कर्मप्रवाह-तदनादित्वादीनामभ्यु-गमात् ॥ तद्बहुत्वमपारमार्थिकमिति चेन्न ; पारमार्थिकबहुत्वस्य इदानीमप्यभावादग्रशब्दवैयर्थ्यात् । न चाग्रशब्दस्याविवक्षितार्थत्वम् ; अनन्तरं सृष्टयुक्तेः । अतः कालरूपो विजातीयभेदः, जीवरूपः सजातीयभेदः, सार्वज्ञ्यादिसृष्ट्यनुगुणगुणरूपस्वगतभेदश्च तदानीमप्यस्तीति विजातीयादित्रिविधभेद-निरसनपरत्वं विरुद्धमिति भावः ॥

**किञ्चाधिष्ठानस्येति** । सामान्याकारेण विदितस्य विशेषाकारेण चाज्ञातस्याधिष्ठानतया सविशेष-त्वावश्यम्भावादिति भावः । **स्वस्यैव हानिप्रसङ्गादिति** । प्रकाशरूपस्य ब्रह्मणस्तिरोधानं हि स्वरूपनाश एवेति भावः । **स्वयम्प्रकाशतयेति** । किं बाधकप्रत्ययः स्वरूपानतिरिक्तं विशेषं प्रकाशयति, उत

---

**अधिष्ठानस्येति** । अधिष्ठानं किं यावदाकारविशिष्टतया भासते, उत कतिपयाकारविशिष्टतया, अथवा नैव भासत इति विकल्पे आद्यन्तयोः कल्पयोर्भ्रमानुपपत्तिः—व्यावर्तकाकारभानेऽधिष्ठानज्ञानाभावे च भ्रमासंभवात् । मध्यमे च कल्पे सविशेषत्वमिति । एवं निर्विशेषत्वे तिरोधानमपि नोपपद्येतेत्याह **अत इति** । भाताभाताकृतिभेदस्य सविशेषत्वसाधकत्वादित्यर्थः । अस्य च तिरोधेयधर्मविशेषा-योगादित्यनेनान्वयः । ननु व्यावर्तकाकाराप्रकाशरूपतिरोधानासंभवेऽपि स्वरूपाप्रकाशरूपतिरोधानं संभवत्येवेत्याशङ्क्याह **स्वरूपमात्रेति** । **स्वस्यैव हानिप्रसङ्गादिति** । प्रकाशरूपधर्मानुपगमेन स्वरूपस्यैव प्रकाशरूपतया प्रकाशाभावरूपं तिरोधानं स्वरूपनाशात्मकमेव स्यादिति भावः। एवं निर्विशेषत्वे दूषणान्तरमप्याह **स्वयमिति** । अयं भावः—अज्ञानरूपसंसारनिवर्तकतयाऽभिमतं प्रमाणज्ञानं किं ब्रह्मस्वरूपातिरिक्ततद्गतविशेषगोचरम्, उत ब्रह्मस्वरूपमात्रगोचरम्? आद्ये, ब्रह्मणः सविशेषत्वम् । द्वितीये ब्रह्मस्वरूपमात्रावभासकस्य ब्रह्मस्वरूपवत् अज्ञाननिवर्तकत्वासंभवान्नित्यसंसारप्रसङ्गः । तादृशस्याप्य-ज्ञाननिवर्तकत्वस्वीकारे अविशेषात् ब्रह्मस्वरूपस्यापि निवर्तकत्वापत्त्या नित्यमोक्षप्रसङ्ग इति । **अत्यन्त-विशदस्वरूप इति** । अनेन स्वरूपप्रमाणज्ञानयोरनिवर्तकत्वनिवर्तकत्वौपयिकमविशदत्वविशदत्व-वैषम्यं न संभवतीत्युक्तं भवति । स्वतो भासमानं हि स्वरूपं विशदमेव भासते । अधिकधर्मभानन्यूनधर्मभान-रूपे वैशद्यावैशद्ये निर्धर्मके न संभवत इति भावः । **बाधकप्रत्ययावसेयविशेषाभावेनेति** । निर्विशेषतयेत्यादिः । तादृशविशेषसत्त्वे तद्भानतदभानाभ्यां प्रमाणज्ञानस्वरूपज्ञानयोर्वैषम्यसंभवात्

[1]अन्यतरप्रसङ्गात्। अभिज्ञाप्रत्यभिज्ञयोरपि हि[2] देशकालादिविशेषादस्त्येव मात्रया वैषम्यम् ॥

**अभिज्ञायाः प्रत्यभिज्ञा विशिष्टविषया सती। तदशक्यभिदाबाधप्रगल्भा ; न तथाऽत्र ते ॥**

**अतो यदि स्वरूपं निवर्तकम्; नित्यनिवृत्तिः स्यात्। यदा तु तदतिरिक्तं मानम्; तदा**

---

तदतिरिक्तम्? नाद्यः; तस्य स्वप्रभत्वेन स्वयमेव भातत्वात्। न द्वितीयः; अतिरिक्तविशेषानङ्गीकारात्। ततश्च यदि स्वरूपानतिरिक्तविषयस्यापि प्रमाणज्ञानस्य निवर्तकत्वम्; तर्हि स्वरूपस्यापि निवर्तकत्वावश्यम्भावेन नित्यमुक्तत्वप्रसङ्गः। यदि च न स्वरूपस्य निवर्तकत्वम्; तदा तदनधिकविषयस्य प्रमाणज्ञानस्याप्यनिर्वर्तकत्वान्नित्यसंसारित्वप्रसङ्ग इत्यर्थः। ननु अभिज्ञातः प्रत्यक्षायाः शाब्द्या वा प्रत्यभिज्ञायास्तावन्न प्रमेयतो विशेषोऽस्ति। अभिज्ञया ज्ञातस्यैव देवदत्तैक्यस्य प्रत्यभिज्ञया ग्रहणात्। न हि देवदत्तस्य स्वेनैक्यमभिज्ञायां न भाति। न चानभिज्ञातं प्रत्यभिज्ञाज्ञेयं देवदत्तस्य स्वेनैक्यान्तरमस्ति। ननु एकस्य कालद्वयसम्बन्धः प्रत्यभिज्ञागोचर इति चेन्न; ऐक्यस्य कालद्वयसम्बन्धस्य च अभिज्ञाभ्यामेव सिद्धेः। तस्मात् प्रमेयतो न विशेषः; किं तु फलतः। तथाच कालद्वयसम्बन्धिपदार्थैक्यविषयत्वे द्वयोरप्यविशिष्टेऽपि प्रत्यभिज्ञायां एव पदार्थभेदभ्रमनिवर्तकत्वदर्शनात् विषयवैषम्यं निवर्तकतायामप्रयोजकमिति **विवरणे** प्रतिपादितमित्याशङ्क्य, अभिज्ञाभ्यां वस्तुत एकस्मिन् कालद्वयसम्बन्धस्य देवदत्ते देवदत्ताभेदस्य च ग्रहणेऽपि प्रत्यभिज्ञायामिव भेदविरोधिस्वरूपविशेषस्याग्रहणेन प्रत्यभिज्ञायां प्रमेयत एव भेदादित्याशयेन परिहरति **अभिज्ञाप्रत्यभिज्ञयोरपी**ति। **अभिज्ञाया इति।** प्रत्यभिज्ञाया अभिज्ञापेक्षया अधिकविषयत्वेन तदनिवर्त्यभेदभ्रमनिवर्तनप्रगल्भत्वेऽपि त्वदभिमतज्ञानं न तथेत्यर्थः। **नित्यनिवृत्तिः स्यादि**ति। अविद्याया इति शेषः।

---

निवर्तकत्वतदभावावुपपद्येयातामिति भावः। नन्वयं देवदत्त इत्यभिज्ञायाः सोऽयं देवदत्त इति प्रत्यभिज्ञायाश्च विषयवैषम्याभावेऽपि, अयं न स इति भेदभ्रमाविरोधित्वतद्विरोधित्वे दृश्येते। तद्वदिहापि स्यादित्यापात[2]शङ्कां वारयति **अभिज्ञे**ति। **देशकालादी**ति आदिना पूर्वावगताकारान्तरपरिग्रहः। **मात्रया वैषम्यमि**ति। अभिज्ञायां प्रत्यभिज्ञाविषयपूर्वावगतदेशकालाद्यभानादिति भावः। अतोऽभिज्ञाया अयं न स इति भेदभ्रमानिवर्तकत्वं प्रत्यभिज्ञायाश्च तन्निवर्तकत्वमुपपद्यत इत्याह **अभिज्ञाया इ**ति। इदञ्च पञ्चम्यन्तम्। अभिज्ञापेक्षयेत्यर्थः। **विशिष्टविषया सती**-अधिकविषया सती। **तदशक्ये**ति। अभिज्ञया निवर्तयितुमशक्येत्यर्थः। **भिदाबाधप्रगल्भे**ति। भेदभ्रमनिवर्तनसमर्थेत्यर्थः। **न तथाऽत्र त इ**ति। त्वन्मते स्वरूपप्रमाणज्ञानयोरीदृशं वैषम्यं नास्तीत्यर्थः। ततः किमित्यत्राह यदीति। **स्वरूपं निवर्तकमि**ति। स्वरूपमात्रावभासकस्य प्रमाणज्ञानस्य निवर्तकत्वस्वीकारे तादृशस्य स्वरूपस्यापि निवर्तकत्वं दुर्वारमिति भावः। **तदतिरिक्तमि**ति। स्वरूपातिरिक्तस्वरूपगतविशेषविषयकमित्यर्थः। गत्यन्तर-

---

1 किञ्चेत्यादेः अन्यतरप्रसंगादित्यन्तस्य निरस्तमिति पूर्वेणान्वयः। 2 आपातेति। प्रथमव्याख्याने विवरणानुसारः। एवं तु स्यात्, ननु सोऽयं देवदत्त इत्यत्र तद्देशकालविशिष्टएतद्देशकालविशिष्टाभेदान्वयायोगात् धर्मिमात्रे लक्षणास्वीकारात् अभिज्ञाप्रत्यभिज्ञयोर्धर्मिविषयकत्वमधिकाविषयकत्वञ्च तुल्यमित्यत आह अभिज्ञेति। सोऽयं देवदत्त इत्यादौ लक्षणागन्धोऽपि न विद्यते इति भाष्यं स्मर्तव्यमिति भावः।

सविशेषत्वमेष्टव्यम् ॥ **अमानस्य निवर्तकत्वादर्शनात् मानत्वमेव निवर्तकत्वौपयिकमिति चेत्—तद्वदेवामेयस्याधिष्ठानत्वादर्शनात् मेयत्वमेव तदौपयिकमिति किं न स्वीक्रियते?** ॥ **जडाजडवैष-**

---

**तदा सविशेषत्वमिति ।** अनधिकविषयत्वे निवर्तकत्वाभावेनाधिकविषयत्वस्य वक्तव्यतया **सविशेषत्वं** स्यादित्यर्थः नन्‍ु प्रमाण–स्वरूपज्ञानयोर्विषयकृतवैषम्याभावेऽपि प्रमाणत्वाप्रमाणत्वाभ्यां निवर्तकत्वानिवर्तकत्वे उपपद्येते इति शङ्कते **अमानस्येति ।** घटादेरित्यर्थः। **अमेयस्येति।** शुक्त्यादेरमेयतादशायामधिष्ठानत्वादर्शनात्, शशशृङ्गादेश्चाधिष्ठानत्वादर्शनात् मेयत्वमपेक्षितमित्यर्थः। **जडाजडवैषम्यादिति चेदिति।** भासमानस्याधिष्ठानत्वात् जडस्य च स्वतोभानासम्भवात् प्रमेयत्वापेक्षणेऽपि, ब्रह्मणस्त्वजडत्वेन स्वतोभासमानतया न प्रमेयत्वमपेक्षितमिति चेदित्यर्थः। **तुल्यमिति।** घटादेरज्ञानानिवर्तकत्वं न प्रमाणत्वाभावप्रयुक्तम्; अपि तु ज्ञानत्वाभावप्रयुक्तम् । ब्रह्मणश्च स्वत एव ज्ञानरूपत्वात् निवर्तकत्वं सम्भवतीति भावः । किञ्च त्वन्मते प्रमाणं हि वृत्त्युत्थो बोधो बोधोत्था वृत्तिरिति वा प्रक्रियया चिदचित्संवलनरूपम् । तत्र वृत्तिरूपस्याचिदंशस्य जडत्वादेव न निवर्तकत्वम्; प्रमाणस्वरूपानुप्रविष्टचिदंशस्य तु निवर्तकत्वे तस्य प्रागपि सत्त्वेन नित्यनिवृत्तिप्रसङ्ग इत्याह—

---

विरहादिति भावः । **मानमिति ।** प्रमितिरूपं ज्ञानमित्यर्थः । विषयवैषम्याभावेऽपि प्रमाणज्ञानत्वतदभावयोरेव निवर्तकत्वतदभावप्रयोजकत्वं संभवतीत्यभिप्रायेण **शङ्कते अमानस्येति ।** प्रमाणज्ञानत्वशून्यघटादेरित्यर्थः । **निवर्तकत्वौपयिकमिति ।** निवर्तकत्वाभावव्याप्याभावप्रतियोगीत्यर्थः । तथाच स्वरूपज्ञानस्य प्रमाणज्ञानत्वाभावेन निवर्तकत्वाभावसिद्धिरिति भावः । सोपाधिकतया प्रमाणज्ञानत्वाभावस्य न निवर्तकत्वाभावव्याप्यत्वसंभव इति वक्तुं परेषामन्यत्र तादृशोपाध्यावश्यकत्वप्रदर्शनाय प्रतिबन्दीमाह **तद्वदिति । अमेयस्याधिष्ठानत्वादर्शनादिति ।** शुक्त्यादेर्ज्ञानाविषयत्वे भ्रमधर्मित्वादर्शनादित्यर्थः । **मेयत्वमेव तदौपयिकमिति ।** ज्ञानविषयत्वमेव भ्रमधर्मित्वाभावव्याप्याभावप्रतियोगीत्यर्थः । **किञ्च स्वीक्रियत इति ।** तथा स्वीकारे हि ब्रह्मणो ज्ञानविषयत्वाभावादधिष्ठानत्वाभावः स्यादिति भावः । **जडाजडवैषम्यादिति चेदिति।** यत्र ज्ञानविषयत्वाभावः, तत्र भ्रमाधिष्ठानत्वाभाव इति व्याप्त्या ब्रह्मण्यधिष्ठानत्वभावसाधने जडत्वमुपाधिः। भ्रमाधिष्ठानत्वे भासमानत्वमात्रमेव ह्यपेक्षितम् । तच्च शुक्त्यादेर्जडतया ज्ञानान्तरेण भवति । ब्रह्मणस्तु ज्ञानरूपस्य स्वयंप्रकाशतया स्वत एव भासमानत्वसंभवान्न ज्ञानान्तरापेक्षा । तथाच ब्रह्मणो जडत्वाभावात् ज्ञानाविषयत्वेऽपि नाधिष्ठानत्वानुपपत्तिरिति चेदित्यर्थः । **तुल्यमिति ।** प्रकृतेऽपि प्रमाणज्ञानत्वाभावेनाज्ञानानिवर्तकत्वसाधने ज्ञानभिन्नत्वमुपाधिः; यत्राज्ञाननिवर्तकत्वं घटादिषु, तत्र ज्ञानभिन्नत्वसत्त्वात् ब्रह्मणि च तदभावात् । यथावस्थितवस्तुभानमेव हि भ्रमनिवृत्तावपेक्षितम्। तच्च जडस्य ज्ञानान्तरेण भवति; ज्ञानरूपस्य तु ब्रह्मणः स्वत एव भवतीति तुल्यमित्यर्थः। तथाच प्रमाणज्ञानत्वाभावेन ब्रह्मणोऽज्ञाननिवर्तकत्वाभावसाधनं न संभवतीति भावः । किञ्च भवन्मते अन्तःकरणवृत्त्यवच्छिन्नचैतन्यमेव हि प्रमाणज्ञानम् । तत्र विशेषणविशेष्याभ्यामतिरिक्तस्य विशिष्टस्याप्रामाणिकतया वृत्तेश्चैतन्यस्य वा निवर्तकता वाच्या । तत्र वृत्तेर्जडाया निवर्तकत्वासंभवात् चैतन्यमेव निवर्तकं वाच्यमिति तस्य प्रागपि सत्त्वान्नित्यनिवृत्तिप्रसङ्गो दुर्वार इत्याह **मानस्यापीति ।** वृत्त्यवच्छिन्नचैतन्यरूप-

स्यादिति चेत्—तुल्यम् । मानस्यापि स्वरूपातिरिक्तस्य जडत्वात् । स्वरूपानुप्रवेशिनस्तु तदंशस्य प्रागपि सत्त्वात् ॥

**किञ्च ब्रह्मणो निर्विशेषत्वमिति धर्मोऽस्ति वा न वा । द्विधापि सविशेषत्वं तद्योगतदयोगजम् ॥**

---

मानस्यापीति॥ तद्योगतदयोगेति निर्विशेषत्वरूपधर्मयोगे तेनैव सविशेषत्वम्, तदयोगे च सविशेष-

---

प्रमित्यन्तर्गतस्येत्यर्थः । **स्वरूपातिरिक्तस्येति**। चैतन्यातिरिक्तस्य वृत्तिरूपविशेषणस्येत्यर्थः । **स्वरूपानुप्रवेशिन इति** । स्वरूपात्मकचैतन्यरूपस्येत्यर्थः । **तदंशस्य**—वृत्त्यवच्छिन्नचैतन्यरूपप्रमितिघटकस्य । **प्रागपि सत्त्वादिति** । अस्य नित्यनिवृत्तिः स्यादित्यनेनान्वयः ; अथवा नित्यनिवृत्तिः स्यादित्यध्याहारः । यद्यपि चैतन्यमात्रस्य प्राक् सत्त्वेऽपि वृत्तिशून्यकाले वृत्तिविशिष्टत्वेन चैतन्यं न वर्तत एव; वृत्तिविशिष्टत्वेनैव तस्य निवर्तकत्वाभ्युपगमात्, निवर्तकतावच्छेदकावच्छिन्नस्य प्रागसत्त्वान्न नित्यनिवृत्तिप्रसङ्गः ; कारणतावच्छेदकावच्छिन्नसत्त्वस्यैव कार्योत्पत्तिनियामकत्वात्—तथापि, एवमभ्युपगमे सविशेषत्वमावश्यकमिति भावः । यत्तु चैतन्यस्य वृत्तिवैशिष्ट्येऽपि न निर्विशेषत्वहानिः ; वैशिष्ट्यस्य मिथ्यात्वेन तदभावस्यापि सत्त्वादिति—तन्न ; एवं सति वियदादिप्रपञ्चस्यापि निर्विशेषत्वप्रसङ्गेन ब्रह्म निर्विशेषमिति विशेषाभावः । वियदादिनिष्ठशब्दादिविशेषस्यापि मिथ्यात्वेन तदभावोऽपि हि तत्रास्त्येव । यदि च निर्विशेषत्वं स्वसमानसत्ताकविशेषवद्भिन्नत्वम् । वियदादिप्रपञ्चस्य तादृशविशेषवत्तया न तद्भिन्नत्वसंभवः। ब्रह्मणस्तु परमार्थस्य तदुपपत्तिः । तद्गतविशेषाणां व्यावहारिकत्वात् स्वभेदेन ब्रह्मोपादानासंभवादित्युच्यते—तदाऽप्युक्तदोषतादवस्थ्यम् । वियदादिकं स्वसमानसत्ताकविशेषवदिति समानाधिकृतप्रत्ययेन भेदाभेदयोरुभयोर्विषयीकरणस्य भवद्भिर्व्यवस्थापितत्वात् । यदि च, स्वसमानसत्ताकविशेषवत्प्रतियोगिकात्यन्तिकभेदस्यैव निर्विशेषत्वरूपतया न दोषः; आत्यन्तिकत्वं च तादात्म्यविरोधित्वमित्युच्यते—तदा तादात्म्यविरोधित्वमिति **किं विवक्षितम् ?** तादात्म्यसामानाधिकरण्याभाव इति चेन्न ; समानाधिकृतप्रत्ययवेद्यभेदनिष्ठतादात्म्यसामानाधिकरण्यस्य मिथ्यात्वेन तत्र तदभावस्यापि सत्त्वेनोक्तदोषतादवस्थ्यात् । तादात्म्यसामानाधिकरण्यवद्भिन्नत्वविवक्षायामपि तद्दोषतादवस्थ्यम् ; समानाधिकृतप्रत्ययवेद्यो भेदस्तादात्म्यसमानाधिकरण इति समानाधिकृतप्रत्ययेन तादात्म्यसमानाधिकरणभेदस्यापि विषयीकरणात् । तादृशभेदेऽप्यात्यन्तिकत्वनिवेशे उक्तरीत्या तस्यैव दुर्वचत्वम् । यदि च आत्यन्तिकत्वं नञुल्लिखितप्रतीतिविषयतावच्छेदको भेदनिष्ठोऽखण्डो धर्मः ; यद्विरहान्नीलघटादौ, न नील इति प्रतीतिविरहः । अन्यथा हि समानाधिकृतप्रतीतिसिद्धभेदमादाय तादृशप्रतीतेर्दुर्वारतैव स्यात् । तथाच नोक्तदोषावसरः ; वियदादेः स्वसमानसत्ताकविशेषवत्प्रतियोगिकात्यन्तिकभेदविरहादित्युच्यते—तदा ब्रह्मणो निर्विशेषत्वानुपपत्तिः ; तत्र वृत्तिविशिष्टचैतन्यप्रतियोगिकात्यन्तिकभेदविरहात्, विशिष्टशुद्धयोरात्यन्तिकभेदविरहस्य भवद्भिरेवासकृदुक्तत्वात् । विशिष्टशुद्धयोरत्यन्तिकभेदाभ्युपगमे हि विशिष्टसत्ता सत्ता नेति प्रमा स्यादिति शिरोमण्युक्तापत्तिर्दुर्वारा । किञ्च विशिष्टस्यातिरिक्तत्वे तत्तत्क्षणविशिष्टस्य भिन्नतया क्षणिकत्वप्रसङ्गेन बौद्धमतप्रवेशापत्तिः । न च केवलस्य क्षणिकत्वविरहान्न दोष इति वाच्यम् ; तस्य

**त्वद्वाक्याद्भ्रान्तिसिद्धं [1] तल्लक्षणावृत्त्यनूदितम्। निषेधामोऽभिधाशक्तिर्नास्तीति हि निषिध्यते॥**

---

त्वमवर्जनीयमित्यर्थः । ननु निर्विशेषं प्रतीतं वा ? न वा, नाद्यः ; प्रतीतस्य निषेधायोगात् । अप्रतीतस्य च सुतराम् । किञ्च वाचामगोचरस्य निर्विशेषस्य अनूद्यनिषेधोऽपि तव न सम्भवतीत्याशङ्क्य, प्रमितस्यैव परं निषेधो न संभवति ; न तु भ्रान्तिसिद्धस्यापि । "यतो वाचो निवर्तन्ते" इति वाचामगोचरत्वमपि मुख्यवृत्त्यविषयत्वमेव, न तु लक्षणावृत्त्यविषयत्वमिति युष्माभिरभ्युपगमेन **त्वद्वाक्यात् भ्रान्तिसिद्धस्य** ब्रह्मणो लक्षणावृत्त्या अनूद्यनिषेधे नानुपपत्तिरित्यभिप्रायेणाह **त्वद्वाक्यादिति** । **एकत्रेति** । सकलविशेषशून्य इत्यर्थः । ननु नैयायिकाभिमतविशेषवत् निर्विशेषत्वमुपपद्यतामित्याशङ्क्य दृष्टान्तमपि दूषयति

---

तत्तत्क्षणसंबन्धे क्षणिकत्वस्य दुर्वारत्वात् । तदसंबन्धे कालासंबन्धितया तुच्छत्वापत्तिरित्यलम् ॥

दूषणान्तरमाह **किञ्चेति** । **तद्योगतदयोगजमिति** । निर्विशेषत्वात्मकधर्मयोगे तेनैव सविशेषत्वम्, तदयोगो च सुतरां तथात्वमिति भावः । ननु निर्विशेषत्वं निषेधतस्तत्र निर्विशेषत्वप्रमितिरस्ति वा न वा। आद्ये सिद्धं नः समीहितम्। द्वितीये निषेधानुपपत्तिः—प्रतियोगिप्रमितिं विना तदयोगादित्याशङ्क्याह **त्वद्वाक्यादिति** । **निर्विशेषं** ब्रह्मेति वाक्यादित्यर्थः । **भ्रान्तिसिद्धमिति** । निषेधस्य हि प्रतियोगिज्ञानमेवापेक्षितम् ; न तु प्रतियोगिप्रमा । गगनारविन्दं नास्तीत्यपि हि निषेधो दृश्यते—तत्र च न प्रतियोगिप्रमाऽस्ति । अतो न भवदभिमतसिद्धिरिति भावः । **लक्षणावृत्त्यनूदितमिति** । बहुव्रीहौ चरमपदस्य पदद्वयस्यैव वा विशिष्टान्यपदार्थलाक्षणिकतया, निर्विशेषस्य वस्तुतोऽप्रसिद्ध्या तत्र कस्यचिदपि पदस्य शक्त्यसंभवेन च निर्विशेषपदेन विशेषाभाववद्बोधो लक्षणयैव स्यादिति भावः । अत्र च विशेषदर्शिनां निर्विशेषशब्दादाहार्यरूपमेव ज्ञानं जन्यते । शब्दादप्याहार्यज्ञानमनुमतमेव बहूनाम् । ननु शक्त्यैव तदनुवादोऽस्त्वित्याशङ्क्याह **अभिधाशक्तिरिति** । वैयाकरणव्यतिरिक्तैः सर्वैरपि बहुव्रीहौ सामासिकसमुदायशक्तेर्निषिध्यमानत्वादित्यर्थः । अथवा, "यतो वाचो निवर्तन्ते" इति निर्विशेषे ब्रह्मण्यभिधावृत्तिर्नास्तीति बोध्यत इति भवद्भिः प्रतिपादनादित्यर्थः । **नास्तीति हि निषिद्ध्यत इति** । नास्तीत्येवंरूपो निषेधः क्रियत इत्यर्थः । अत्रेदं बोद्धव्यम्—यदि व्यधिकरणधर्मस्याभावप्रतियोगितावच्छेदकत्व—तदवच्छेदकत्वादिकमङ्गीक्रियते, तदा निर्विशेषं नास्तीति वाक्यात् विशेषाभावावच्छिन्नप्रतियोगिताकाभाव एव प्रतीयेत । तत्र चाभावनिष्ठायां प्रतियोगितावच्छेदकतायां विशेषत्वावच्छिन्नत्वस्य प्रतियोगितानिरूपकत्वसंबन्धेन व्यधिकरणीभूयावच्छेदकत्वम् । यदि च व्यधिकरणधर्मस्याभावप्रतियोगि

---

1 ननु निर्विशेषत्वमप्रसिद्धं चेत्, कथं निषेधसि ; प्रतियोग्यप्रसिद्ध्या अभावाप्रसिद्धेरित्यत्राह त्वदिति । त्वद्वाक्यात् भ्रान्त्या प्रतीतं ब्रह्मणोनिर्विशेषपदलक्ष्यत्वात् लक्ष्यतावच्छेदकतया त्वदभिमतं च यत् तन्निषिध्यत इत्यर्थः । अप्रसिद्धमनिषेध्यमिति प्रश्नः कथं समाहित इति चेत्—अयं भावः—लक्षणामूलकभ्रान्तिज्ञानस्य त्वयि जायमानत्वात् ज्ञानं तावत् प्रसिद्धम् । तथा च विशेषत्वावच्छिन्नप्रतियोगिताकत्वप्रकारकाभावविशेष्यकज्ञानं प्रमितिर्न भवतीति ब्रूमः । प्रतियोगितायां विशेषत्वावच्छिन्नत्वादौ वैज्ञानिकं वैशिष्ट्यं ग्राह्यम्, न तु वास्तविकम् । तथाच विशेषत्वं प्रतियोगितावच्छेदकं न भवतीत्युक्तं भवति ।

**निर्विशेषा पुरीत्युक्तिर्यथैकत्र न तिष्ठति । तथा सर्वप्रयोगश्च विशेषे पर्यवस्यति ॥ ४५ ॥**
**विशेषो निर्विशेषश्चेत् सोऽपि[1] कस्यापि वा न वा । पूर्वत्र सविशेषत्वम् , अन्यत्र न विशेषता ॥**

ब्रह्म निर्विशेषमित्यभिलापमात्रमिति चेत्; तर्हि सिद्धं नः समीहितम् । वस्तुतो विशेषप्रतिक्षेपाभावात्, अन्ततश्चाभिलापगोचरत्वस्य विधानात् ॥ वस्तुमात्रस्य तदपि नास्तीति चेन्न;
**अवाच्यं वाच्यमिति वा वस्तुनि प्रतिपादिते । वाच्यमेव भवेद्वस्तु वाच्यावाच्यवचोऽन्वयात् ॥**
**किञ्च दृढाध्यक्षादिमानेन जगत्सत्यत्वनिर्णये । निर्विशेषवचोऽन्यार्थं यूपादित्यैक्यवाक्यवत् ॥**

[2]प्रत्यक्षादिप्रत्ययो निरालम्बनः प्रत्ययत्वात् स्वाप्नप्रत्ययवत्; प्रपञ्चो मिथ्या दृश्यत्वात्, व्यावर्तमानत्वात् शुक्तिरूप्यवत् इत्यादिभिरागममन्तरेणापि जगद्बाध इति चेन्न; निर्विषयासदन्यथाख्यातिसाधने विरोधापसिद्धान्तादिदोषात् । अनिर्वाच्यत्वसाधने अप्रसिद्धविशेषणत्व-स्ववचनविरोधादि-

---

**विशेषो निर्विशेषश्चेदिति** । **पूर्वत्रेति** । किञ्चित्सम्बन्धित्वरूपविशेषाभ्युपगमादित्यर्थः । **अन्यत्रेति** । किञ्चित्सम्बन्धित्वाभावे कस्यचिदपि वस्तुनो व्यावर्तकत्वाभावाद्विशेषत्वमेव न स्यादित्यर्थः । **अभिलापमात्रमिति चेदिति** । निर्विशेषत्वरूपधर्ममन्तरेणैव निर्विशेषमिति व्यवहार इत्यर्थः । **वस्तुमात्रस्येति** । **अभिलापगोचरत्वमपि** किञ्चिद्धर्मोपहितस्यैव । शुद्धस्य तु तदपि नास्तीत्यर्थः । **अन्यार्थमिति** । हेयगुणनिषेधाभिप्रायमित्यर्थः ॥

**विरोधेति** । प्रतीतीनां सालम्बनत्वभावत्वविरोधादित्यर्थः । असतोऽपि विषयत्वे असत्त्व-

---

वच्छेदकत्वादिकं नाङ्गीक्रियते; तदा निर्विशेषं नास्तीति वाक्यात् विशेषत्वमभावप्रतियोगितावच्छेदकं न भवतीत्येवमेव बोधो लक्षणया स्वीकार्य इति । **एकत्रेति** । सकलविशेषशून्य इत्यर्थः । ननु नैयायिकैर्विशेषस्य निर्विशेषत्वस्वीकारात् तद्वत् ब्रह्मणोऽपि निर्विशेषत्वं स्यादित्याशङ्क्य दृष्टान्तमपि दूषयति **विशेष इति** । **कस्यापि वा न वेति** । किञ्चित्संबन्धि वा न वेत्यर्थः । **पूर्वत्र सविशेषत्वमिति** । किञ्चित्संबन्धित्वरूपविशेषाभ्युपगमादिति भावः । **अन्यत्र न विशेषतेति** । किञ्चित्संबन्धित्वाभावे कस्यापि व्यावर्तकत्वासंभवाद्विशेषतैव न स्यादित्यर्थः ।

**अभिलापमात्रमिति** । न तु ब्रह्मणि निर्विशेषत्वरूपो धर्मोऽस्ति; येन सविशेषत्वं स्यादित्यर्थः । **वस्तुमात्रस्य तदपि नास्तीति** । अभिलापगोचरत्वमपि किञ्चिद्धर्मोपहितस्यैव; शुद्धस्य तु तदपि नास्तीत्यर्थः । **वाच्यावाच्यवचोन्वयादिति** । वाच्यशब्दस्य वा अवाच्यशब्दस्य वा वाच्यत्वावश्यम्भावादित्यर्थः । ननु तर्हि, "सत्तामात्रं निर्विशेषं निरीहम्" इत्यादिषु ब्रह्मणो निर्विशेषत्वप्रतिपादनं कथं संघटत इत्यत्राह **किञ्चेति** । **अन्यार्थमिति** । स्वरूपान्यथाभावादिराहित्यपरमित्यर्थः ॥

**आगममन्तरेणापि जगद्बाध इति** । तथा च न निर्विशेषवचनस्यान्यार्थत्वमाश्रयणीयमिति भावः । **विरोधेति** । प्रतीतीनां सालम्बनत्वस्वभावविरोधः, असतो ज्ञानविषयत्वे असत्त्वविरोधः, अन्यस्य चान्यथाभानस्य प्रतीतिविरोधश्चात्राभिप्रेतः । अथवा प्रत्ययत्वरूपहेतोः प्रकृतानुमानजन्यप्रतीतावपि सत्त्वेन तत्र निरालम्बनत्वप्रसक्तौ स्वाभिमतार्थविरोध इत्येव(वः) विरोधो बोध्यः । **अपसिद्धा**

---

1 कस्यापीति । अन्ततो धर्म्यपि धर्मं प्रति विशेष इति तत्त्वमुक्ताकलापादौ व्यक्तम् ।
2 प्रकटबौद्ध एव भूत्वा पृच्छति स्वप्नेति ।

**वात्। विरुद्धयोः समुच्चयवत् तत्प्रतिक्षेपयोरपि परस्पराभावात्मनोः समुच्चयस्य विरुद्धत्वात्। तथा दसद्व्यतिरेकेण विधानात् तन्निषेधनात्। सदसद्व्यतिरिक्तस्य सिद्धा सदसदात्मता ॥ ४८ ॥ कविज्ञानेन सर्वविज्ञानञ्च न ते भवेत्। सद्विज्ञानेन सदसदन्यविज्ञप्त्यसंभवात् ॥ ४९ ॥**

रोधात्। अन्यस्य चान्यथाभानस्य च प्रतीतिविरोधात्। किञ्च प्रत्ययत्वहेतोस्त्वदनुमानजन्यप्रतीतावपि त्वेन तत्रापि निरालम्बनत्वप्रसक्तौ स्वाभिमतार्थविरोध इत्येव(च?) विरोधो द्रष्टव्यः **अपसिद्धान्तादीति**। आदिपदेन तत्त्वमस्यादिवाक्यजन्यज्ञाने व्यभिचारो बोध्यः। मिथ्यात्वानुमानं दूषयति **अनिर्वाच्य-त्वसाधन इति**। **अप्रसिद्धविशेषणत्वेति**। अनिर्वाच्यत्वाप्रसिद्ध्या साध्याप्रसिद्धिरित्यर्थः। **स्ववचनविरोधेति**। अनिर्वाच्यपदेनैव निर्वचनादित्यर्थः। ननु अनिर्वाच्यत्वं न निरुक्तिविरहः; येन विरोधः स्यात्। किं तु सत्त्वाभाववत्त्वे सति असत्त्वाभाववत्त्वमित्यर्थमाशङ्क्याह **विरुद्धयोः समुच्चयवदिति**। यथा सत्त्वासत्त्वसमुच्चयो विरुद्धः, एवं तदभावयोरपि समुच्चयस्य विरुद्धतया सत्त्वाभाववत्त्वे सति असत्त्वाभाववत्त्वरूपमनिर्वचनीयत्वं विरुद्धम्। न च विरुद्धयोरपि गोत्वाश्वत्वयोरभाव-समुच्चयो घटे दृष्ट इति वाच्यम्; परस्परविरहलक्षणविरोधस्येह विवक्षितत्वात्। गोत्वाश्वत्वयोस्तथात्वात्। असत्त्वस्य च सत्त्वविरहव्यतिरेकेणभावादिति भावः। **सदसद्व्यतिरेकेणेति**। सदसद्व्यतिरिक्तत्वेन प्रमाणप्रतिपन्नत्वात् प्रमाणप्रतिपन्नेन रूपेण सत्त्वमवश्याभ्युपगन्तव्यम्। **तन्निषेधनादिति**। "नेह नानाऽस्ति" इति स्वरूपेण निषेधादसत्त्वम्। एवञ्च विधिनिषेधाभ्यामुभयरूपत्वमेव वक्तुमुचितमिति

---

न्तेति। अनिर्वचनीयख्यातेरेव स्वसिद्धान्तसिद्धत्वादिति भावः। **आदिना** तत्त्वमस्यादिवाक्य-जन्यज्ञाने व्यभिचारस्य ग्रहः। मिथ्यात्वानुमानं दूषयति **अनिर्वाच्यत्वेति**। **अप्रसिद्धविशेषणत्वं** साध्याप्रसिद्धिः। अनिर्वाच्यत्वं हि क्वचिदपि न प्रसिद्धम्। **स्ववचनविरोधेति**। अनिर्वाच्य-शब्देनैव निर्वाच्यत्वादिति भावः। **आदिपदेन** प्रत्यक्षादिप्रमाणविरोधो गृह्यते। स च स्फुटीभविष्यति। नन्वनिर्वाच्यत्वं न निर्वाच्यत्वाभावः; येन स्ववचनविरोधः स्यात्; किन्तु सत्त्वात्यन्ताभावासत्त्वात्यन्ता-भावोभयवत्त्वमेव। अतो न दोष इत्यत आह **विरुद्धयोस्समुच्चयवदिति**। परस्पराभावव्याप्ययो (?) सत्त्वासत्त्वयोः साहित्यवदित्यर्थः। **तत्प्रतिक्षेपयोरिति**। तदभावयोरित्यर्थः। **परस्पराभावात्मनोरिति**। गोत्वाश्वत्वयोर्विरुद्धयोरप्युष्ट्रादावभावदर्शनान्न विरुद्धधर्मप्रतिक्षेपसमुच्चयानुपपत्तिरिति शङ्कावारणाय। अयं भावः—यादृशविरुद्धधर्माभावौ परस्पराभावात्मकौ—यथा गोत्व-गोत्वाभावरूपविरुद्धधर्मयोरभावौ गोत्वाभाव-गोत्वाभावाभावरूपौ, तयोर्न समुच्चयसंभवः। गोत्वाभावाश्वत्वाभावयोश्च परस्पराभावरूपता-विरहान्न समुच्चयानुपपत्तिः। प्रकृते तु सत्त्वाभावासत्त्वाभावयोः परस्परविरहरूपतया न समुच्चयसंभव इति। सदसद्व्यतिरिक्तत्वेन स्वीकृतस्य प्रपञ्चस्य सदसदात्मकताया अपि संभवात् सदसदात्मकत्वरूपं निर्वाच्यत्वमेव जगत इति वक्तुं युक्तमिति किमित्यनिर्वाच्यत्वमुच्यत इत्यभिप्रायेणाह **सदसदिति**। **सदसद्व्यतिरेकेण**=सदसद्विलक्षणत्वेन **विधानात्**=केनचित् प्रमाणेन साधनात्। प्रपञ्चस्येत्यादिः। तथाच प्रमितिविषयत्वरूपसत्त्वं सिद्धमिति भावः। **तन्निषेधनादिति**। "नेह नाना" इत्यादिना

**ऐक्यसाधर्म्यवैधर्म्यभावैः स्यादेकतोऽन्यधीः। बाधासिद्ध्यध्याहृतयो लक्षणा च स्युरत्र ते ॥**
**किञ्च, तत्त्वे द्वित्रिचतुष्कोटिव्युदासेन यथायथम्[1] निरुच्यमाने निर्लज्जैरनिर्वाच्यत्वमुच्यते॥**

---

सदसद्विलक्षणत्वमनुपपन्नमिति भावः **सदसदन्येति** सदसद्विलक्षणप्रपञ्चस्येत्यर्थः। **बाधासिद्ध्यध्याहृतय इति।** तस्मिन् विज्ञाते सर्वं विज्ञातं भवति; तदैक्यात् तत्साम्यात् तद्वैधर्म्याद्दिति हि [2]प्रयोक्तव्यम्। तत्र त्वया ब्रह्मज्ञानेन निवृत्त्यभ्युपगमेन ज्ञातत्वानभ्युपगमाद्बाधः। तथा प्रपञ्चे ब्रह्मैक्यस्य तद्धर्मसमानधर्मरूप साधर्म्यस्य [3]तद्धर्मविसदृशधर्मवत्त्वरूपवैधर्म्यस्य चानङ्गीकारात् **ऐक्यसाधर्म्यवैधर्म्यहेतूनामसिद्धि।** ननु(अथ?) सर्वं ज्ञातं भवति=सर्वाधिष्ठानं ज्ञातं भवतीत्यर्थः, अथवा सर्वं ज्ञातं भवति=निवृत्तं भवतीत्यर्थ इति यद्याश्रीयते; तदा[4] **लक्षणाध्याहारप्रसङ्ग** इत्यर्थः॥ **किञ्च तत्त्व इति।** सद्विलक्षणत्वे सति असद्विलक्षणत्वमिति वा, सद्विलक्षणत्वे सति असद्विलक्षणत्वे सति सदसद्विलक्षणत्वमनिर्वचनीयत्वमिति वा मृषावादिनो **द्वित्रिकोटिव्युदासेन** [तत्त्वं?]तृतीयचतुर्थकोटावन्तर्भावयन्ति। चतुष्कोटिविनिर्मुक्तं तत्त्वमिति माध्यमिकाः। एवं ब्रुवन्त एव मृषावादिमाध्यमिकादयोऽनिर्वाच्यं निरुपाख्यमिति कथं लज्जामपहाय प्रलपन्तीत्यर्थः ॥ ननु सर्वात्मना

---

प्रपञ्चस्य निषेधादित्यर्थः। तथाच प्रमितिविषयीभूताभावप्रतियोगित्वरूपमसत्त्वं सिद्धमिति भावः ॥ **सदसद्व्यतिरिक्तस्य**=सदसद्विलक्षणत्वेन भवद्भिरिष्टस्य प्रपञ्चस्य। **सिद्धा सदसदात्मतेति।** तथाच सदसदात्मकत्वरूपं निर्वाच्यत्वमेव जगत इति वक्तुं युक्तमिति भावः। एवं जगतस्सदसद्विलक्षणत्वे दूषणान्तरमाह **एकविज्ञानेति। सदसदन्येति।** सदसद्विलक्षणस्य प्रपञ्चस्येत्यर्थः। **बाधेत्यादि।** अयं भावः—तस्मिन् विज्ञाते सर्वं विज्ञातं भवति, तदैक्यात, तत्साधर्म्यात, तद्वैधर्म्याद्वा इति हि [2]प्रयोक्तव्यम्। तत्र त्वया ब्रह्मज्ञानेन प्रपञ्चस्य निवृत्त्यभ्युपगमात् ज्ञातत्वासंभवात् बाधः। तथा प्रपञ्चे ब्रह्मैक्यस्य, तद्धर्मसमानधर्मवत्त्वरूपसाधर्म्यस्य, [3]तद्धर्मविलक्षणधर्मवत्त्वरूपवैधर्म्यस्य वा भवद्भिरनङ्गीकारादैक्यादिहेतूनामसिद्धिः। यदि च सर्वं ज्ञातं भवतीत्यस्य सर्वसंबन्ध्यधिष्ठानं ज्ञातं भवतीत्यर्थः, अथवा ज्ञातं भवतीत्यस्य निवृत्तं भवतीत्यर्थ इत्युच्यते; तदा सर्वशब्दस्य सर्वसंबन्धिनि लक्षणा अधिष्ठानपदाध्याहारश्च, ज्ञातपदस्य निवृत्ते लक्षणा वा स्यादिति। प्रकारान्तरेण स्ववचनविरोधमाह **किञ्चेति द्वित्रिचतुष्कोटिव्युदासेनेति।** नसन्नासदिति कोटिद्वयव्युदासेन सद्विलक्षणत्वे सति असद्विलक्षणतया, नसन्नासन्नसदसदिति कोटित्रयव्युदासेन सद्विलक्षणत्वे सति असद्विलक्षणत्वे सति सदसद्विलक्षणतया च मृषावादिभिः, न सन्नासन्नसदसन्न चानुभयमिति कोटिचतुष्टयव्युदासेन सद्विलक्षणत्वे सति असद्विलक्षणत्वे सति सदसद्विलक्षणत्वे सति सदसदनिर्वचनीयविलक्षणतया माध्यमिकैश्च तत्त्वं निरुच्यते। एवं निर्बुद्धिभिरेव स्ववचनविरोधमूलक—परिहासंभावनाहेतुकलज्जामन्तरा अनिर्वचनीय-निरुपाख्यशब्दाभ्यामनिर्वाच्यत्वमुच्यत इत्यर्थः।

---

1 निरुच्यमान इति तत्त्व इत्यस्य विशेषणम्। तथातथा निर्वचनविषयभूते तत्तदभिमते तत्त्वे निर्वचनविषयत्वसामान्याभावरूपमनिर्वाच्यत्वं वक्तुं कथं न लज्जन्ते; विरोधस्य स्फुटत्वादित्यर्थः। 2. प्रयोक्तव्यमिति। वादिभेदेन एतदन्यतमस्यैव संभवादिति भावः। 3 तद्धर्मेति निर्विशेष ब्रह्मधर्मप्रसिद्ध्येति भावः। 4 सर्वपदस्य सर्वाध्यासाधिष्ठानमित्यर्थस्वीकारे लक्षणा। सर्वं ज्ञातमित्यत्र सर्वं न ज्ञातमिति नञध्याहारेण निवृत्तमित्यर्थपर्यवसानकरणे अध्याहार इत्यर्थः।

**तथा बाधयोग्यत्वादिसाधने चानुपलम्भादिदोषात्। नश्वरत्वादिसाधनं त्विष्टमेव। किञ्च—**

निरुक्तिविरहो नानिर्वाच्यत्वम्; येनायं दोषः स्यात्। किं तु ज्ञानबाध्यत्वतद्योग्यत्वादिकमित्याशङ्क्याह **तथा बाधेति**। तत्र किं बाध्यत्वं प्रतिपन्नोपाधौ निषेधप्रतियोगित्वम्, किं वा ज्ञाननिवर्त्यत्वम्? नाद्यः; **अनुपलम्भात्**। न हि घटादेः स्वदेशे निषेध उपलभ्यते। न द्वितीयः; तावता ज्ञाननिवर्त्यतया नश्वरत्वमात्रसिद्धिप्रसङ्गेन प्रपञ्चसत्यत्वव्यापकप्रध्वंसतया सिद्धसाधनादित्याशयेनाह **अनुपलम्भादिदोषादिति**।

---

नन्वनिर्वाच्यत्वं न निर्वचनविषयत्वाभावः; येनोक्तदोषः स्यात्—किन्तु बाधितत्वं वा बाधयोग्यत्वं वा ज्ञाननिवर्त्यत्वं वा तत्, अतो न दोष इत्यत्र आह **तथेति**। **बाधेति**। बाधितत्वेत्यर्थः। बाधश्चादुष्टकारणजन्या निषेधबुद्धिः। स्वप्रकारकधीविशेष्ये सर्वत्र दोषानधीना स्वाभावबुद्धिरिति यावत्। तथाच स्वप्रकारकधीविशेष्यताव्यापकदोषानधीनस्वाभावप्रकारकधीविशेष्यताकत्वं बाधितत्वमिति फलितम्। **तद्योग्यत्वेति**। बाधयोग्यत्वेत्यर्थः। तच्च स्वप्रकारकधीविशेष्यताव्यापकाभावप्रतियोगित्वं स्वसमानाधिकरणाभावप्रतियोगित्वं वा। **आदिना** ज्ञाननिवर्त्यत्वपरिग्रहः। **अनुपलम्भेति**। अयं भावः— घटादेः स्वदेशेऽभावानुपलब्ध्या पूर्वोक्तस्य बाधितत्वस्य बाधयोग्यत्वस्य वा साधने बाधः। ज्ञाननिवर्त्यत्वस्य ज्ञानजन्यनाशप्रतियोगित्वरूपत्वे मुद्गरपातादिना नष्टे घटादौ बाधः। तन्नाशस्य ज्ञानाजन्यत्वात्। ज्ञानजन्यनाशयोग्यत्वरूपत्वे च योग्यता दुर्निरूपा। न हि मिथ्यात्वं तद्योग्यत्वमिति वक्तुं शक्यम्; मिथ्यात्वस्यैव निरूपणीयतयाऽऽत्माश्रयप्रसङ्गात्। उत्तरज्ञाननिवर्त्यपूर्वज्ञानवत् अमिथ्यात्वोपपत्त्या अर्थान्तरञ्चेति। ननु नश्वरत्वं जन्यत्वं वा अनिर्वाच्यत्वं विवक्षितमिति नोक्तदोषावकाश इत्यत आह **नश्वरत्वादीति**। **इष्टमेवेति**। तथाच सिद्धसाधनमिति भावः।

यत्तु सद्भेदासद्भेदोभयं साध्यम्। तत्र सत्त्वावच्छिन्नभेदस्य न ज्ञानानिवर्त्यत्वरूपसत्त्वावच्छिन्नप्रतियोगिताकत्वेन निवेशः—तथासति असद्भेदस्य, ज्ञाननिवर्त्यत्वेतरांशस्य वा वैयर्थ्यात्। ज्ञानोच्छेद्यत्वरूपज्ञाननिवर्त्यत्वस्य वक्ष्यमाणरीत्या सर्ववादिसम्मतस्यैकस्याभावेन तदभावस्यैकरूपत्वाभावात्। ज्ञानानिवर्त्यरूपसद्भेदनिवेशे असम्मते ब्रह्मविषयकतत्तद्धीविषयत्वस्य लघोरेवावच्छेदकत्वसंभवेन तत्समनियतस्य ज्ञाननिवर्त्यत्वस्य प्रतियोगितानवच्छेदकत्वेन तदवच्छिन्नप्रतियोगिताकभेदाप्रसिद्धेश्च। नाप्युक्तधीविषयत्वावच्छिन्नप्रतियोगिताकभेदत्वेन; सिद्धसाधनापत्तेः। किन्तु सत्यं सर्वं वाच्यमित्याकारकस्य पराभ्युपगतस्य कस्यचित् ज्ञानस्य यद्विषयत्वं तदव्यवहितावच्छिन्नप्रतियोगिताकभेदत्वेन सद्भेदस्य तदव्यवहिताभावत्वेन सत्त्वाभावस्य वा निवेशः। तादृशज्ञाने च सदभ्युपगतबाध्यत्वविरोधव्यलीकव्यावृत्तसत्यत्वप्रकारकत्वं परैः स्वीक्रियत इति तदीयमुख्यविशेष्यताव्यक्तेः प्रत्यत्यन्ताभावादिसाधने सिद्धसाधनं तैर्वक्तुमशक्यम्—मुख्यविशेष्यतात्वञ्च प्रकारतासांसर्गिकविषयतान्यविषयतात्वम्। तच्च विशेष्यताविशेष इव निर्विकल्पकज्ञानीयतुरीयविषयतायामप्यस्तीति परमते आद्यस्य मन्मते द्वितीयस्य च सङ्ग्रहः। मन्मते सत्यादिसमानाधिकरणनामभिः सत्यत्वाद्युपलक्षितशुद्धब्रह्मणो निर्विकल्पकधीरेव जायत इति तदीयविषयतालाभः। सर्वपदमहिम्ना सत्यत्वव्यापकविषयतालाभः। तेन

**तत्तत्पक्षादिबुद्धीनां प्रमाणत्वा[1]प्रमात्वयोः । बाधासिद्ध्यादयो दोषा विजृम्भन्ते यथायथम् ॥**

तत्तत्पक्षादिबुद्धीनामिति । प्रपञ्चो मिथ्या दृश्यत्वादित्यत्र प्रपञ्चादिबुद्धीनां प्रमाणत्वे प्रपञ्चस्य सत्यत्वावश्यम्भावेन तत्र मिथ्यात्वसाधने बाधः, पक्षादिबुद्धीनां भ्रमत्वे पक्षादीनामसत्त्वावश्यम्भावेना श्रयासिद्ध्यादिप्रसङ्ग इत्यर्थः ॥ ननु सर्वमिथ्यात्ववादिनो बाधासिद्ध्यादिकमिष्टमेवेत्याशङ्क्याह

यत्किञ्चित्सत्यनिष्ठविषयतायाः कुत्रचित्सत्ये ब्रह्मणि प्रमाणमादाय न परेषां सिद्धसाधनम् । वाच्यत्वेनोपलक्षितं शुद्धं ब्रह्मापि भवति । विशिष्टब्रह्मनिष्ठस्य तस्य विशेष्यभूतशुद्धेऽपि सत्त्वात् । वाच्यत्वस्थाने ज्ञेयत्वं वा निवेश्यम् । तद्ज्ञानीयमुख्यविशेष्यतानिष्ठानवच्छिन्नावच्छेदकताकप्रतियोगिताकभेदत्वेन मुख्यविशेष्यतासंबन्धावच्छिन्नतद्ज्ञानव्यक्तित्वावच्छिन्नप्रतियोगिताकात्यन्ताभावत्वेन वा निवेशान्न व्यापकत्वादिनिवेशकृतगौरवादिकम् । तेन घटादिकं ब्रह्मवृत्तित्वविशिष्टतादृशविशेष्यतावन्नेति प्रतीतौ घटादौ तादृशविशेष्यतावच्छेदसत्त्वात् सिद्धसाधनमिति परास्तम् ; तादृशप्रतीतिविषयभूताया भेदप्रतियोगितावच्छेदकतायाः ब्रह्मवृत्तित्वावच्छिन्नत्वेनानवच्छिन्नत्वविशेषणेन तस्या वारणादिति—

तन्न; जगतः सत्यत्वेऽपि तादृशज्ञानविषयतावति तदत्यन्ताभावमात्रस्य तद्भेदमात्रस्य वा सिद्धिमात्रेण साध्योपपत्त्या अर्थान्तरात् । न ह्युक्तसाध्यसिद्धिमात्रेण वियदादधिकरणे वियदाद्यभावः सिद्ध्यति ।

यदपि प्रातिभासिकनिष्ठत्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वविनाशिनिष्ठत्वसमानाधिकरणाप्रातिभासिकाभावप्रतियोगित्वान्यतरवत्त्वं साध्यम् । अयञ्च, 'प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वम्' इत्यस्य निष्कृष्टार्थ इति। अत्र समानसत्ताकयोर्भावाभावयोर्विरोधस्वीकारेऽपि जगतस्सत्यस्यैव सतो विनाशित्वमात्रेण साध्योपपत्त्या अर्थान्तरात्, स्वसमानाधिकरणव्यावहारिकाभावप्रतियोगित्वसिद्धिमात्रेण साध्योपपत्तेः । तदस्वीकारे तु सुतराम् ; जगतः परमार्थत्वेऽपि तदधिकरणे व्यावहारिकस्य पारमार्थिकस्यैव वा अभावपरिभाषितस्य कस्यचिद्धर्मस्य सिद्धौ विरोधविरहात्। विनाशित्वस्थाने व्यावहारिकत्वनिवेशोऽप्यनुपपन्नः ; जगतः पारमार्थ्येऽपि व्यावहारिकनिष्ठतादृशभावप्रतियोगित्वस्य परमार्थभूते जगति सिद्धिमात्रेण साध्योपपत्त्याऽर्थान्तरात् । व्यावहारिकत्वस्य दुर्वचत्वाच्च । न हि प्रातिभासिकातिरिक्तत्वे सति बाध्यत्वं व्यावहारिकत्वमिति निर्वक्तुं शक्यम् । बाध्यत्वस्यैव निरुच्यमानत्वात् । ज्ञाननिवर्त्यत्वरूपबाध्यत्वस्य च सर्वमतसाधारणस्य कस्यचिदभावो हि भवद्भिरेवाभिहितः ।

एतेन ज्ञाननिवर्त्यत्वं मिथ्यात्वमित्यपि प्रत्युक्तम् ; ज्ञाननिवर्त्यत्वस्य सर्वमतसाधारणस्य कस्यचिदभावादेव । तद्धि ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वरूपं निरुक्तमद्वैतसिद्धौ, तच्चाज्ञानतत्प्रयुक्तादिघटितमूर्तिकं व्याख्यातं चन्द्रिकायाम् । अज्ञानादिकं च परमते शशशृङ्गायमाणमिति दिक् ।

**तत्तत्पक्षादिबुद्धीनामिति** । प्रपञ्चो मिथ्या दृश्यत्वादित्यत्र पक्षभूतप्रपञ्चज्ञानस्य प्रमात्वे तद्विषयभूतस्य प्रपञ्चस्य सत्यत्वावश्यम्भावेन तत्र मिथ्यात्वसाधने बाधः। तस्य भ्रान्तित्वे तद्विषयपक्षस्यासत्त्वावश्यम्भावादाश्रयासिद्धिः। एवं हेतुबुद्धेः प्रमात्वे तस्यापि ब्रह्मभिन्नरूपप्रपञ्चान्तर्गतत्वेन पक्षतया उक्तरीत्या बाधः । तस्या भ्रान्तित्वे तद्विषयहेतोरसत्त्वावश्यम्भावात् हेत्वप्रसिद्धिश्चेत्यर्थः। ननु सर्वमिथ्यात्ववादिनो बाधासिद्ध्य दिक-

तदभ्युपगमे च अनुमानस्य निष्प्रयोजनत्वस्ववचनविरोधानुत्थानानि स्युः । किञ्च समस्तप्रत्यक्षाद्यप्रमाणत्वसिद्धौ एतदनुमानोत्थानम्, ततश्च तत्सिद्धिरित्यन्योन्याश्रयणम् ॥ भेदवासनादोषमूलत्वात् प्रत्यक्षमप्रमाणमिति चेन्न ; दोषत्वाप्रमाणत्वयोरन्योन्याश्रयणात् । शास्त्रतोऽन्यतरसिद्धौ तत्प्राबल्यापेक्षया चक्रकापातः श्रुतिप्राबल्याप्रामाण्यदुष्टकारणत्वनिश्चयानुमानप्रवृत्तीनाम् ॥

---

**तदभ्युपगमे चे**ति । बाधाद्यभ्युपगम इत्यर्थः । **निष्प्रयोजनत्वे**ति । आश्रयासिद्ध्यादिदोषदुष्टस्य कार्यानार्जकत्वादित्यर्थः । **स्ववचनविरोधे**ति । पक्षे साध्यहेत्वोर्मिथ्यात्वं वदतैव साध्यहेत्वोः प्रतिपादने **स्ववचनविरोध** इत्यर्थः । **अनुत्थानानी**ति । अनुमित्यनुत्थानमित्यर्थः । **अप्रमाणत्वसिद्धावि**ति । इतरथा प्रत्यक्षप्रतिबन्धेनानुमानाप्रवृत्तेरित्यर्थः । **तत्प्राबल्ये**ति । शास्त्रेण प्रत्यक्षस्य दोषजन्यत्वाप्रामाण्यान्यतरनिश्चये प्रतिबन्धकाभावादनुमानप्रवृत्तिः, तत्प्रवृत्तौ तदनुगृहीतश्रुतिप्राबल्यम्, तत्प्राबल्ये च दोषजन्यत्वाप्रामाण्यान्यतरसिद्धिरिति श्रुतिप्राबल्य-दोषजन्यत्वाप्रामाण्यान्यतरनिश्चयानुमानप्रवृत्तीनां

---

मिष्टमेवेत्याशङ्क्याह **तदभ्युपगम** इति । बाधाद्युपगम इत्यर्थः। **निष्प्रयोजनत्वे**ति । बाधासिद्ध्यादिदोषज्ञानेनानुमितिप्रतिबन्धादिति भावः । **स्ववचनविरोधे**ति । प्रपञ्चमिन्नरूपप्रपञ्चान्तर्गतयोः साध्यहेत्वोः प्रतिज्ञया मिथ्यात्वं वदतैव तत्र तत्सत्त्वप्रतिपादनादिति भावः । **अनुत्थानं** अनुमानप्रयोगप्रवृत्त्यसंभवः । तत्त्वनिर्णयरूपस्य विजयरूपस्य वा प्रयोजनस्यासंभवात् प्रत्युत हेत्वाभासेन निग्रहात् पराजयस्यैव प्रसङ्गादिति भावः । **अप्रमाणत्वसिद्धावि**ति । अन्यथा प्रत्यक्षादिना बाधप्रसङ्गादिति भावः । उत्थानं=प्रवृत्तिः, अनुमितिजनकत्वमिति यावत् । **ततश्च तत्सिद्धिरि**ति । एतदनुमानाधीनप्रपञ्चमिथ्यात्वानुमित्या च प्रपञ्चविषयकप्रत्यक्षादीनां मिथ्याविषयकत्वरूपाप्रामाण्यसिद्धिरित्यर्थः । प्रत्यक्षादीनां दोषमूलत्वेनैवाप्रामाण्यसिद्ध्या तत्रैतदनुमानापेक्षाविरहान्नान्योन्याश्रयणमिति शङ्कते **भेदवासनेति । दोषत्वाप्रमाणत्वयोरन्योन्याश्रयणादि**ति । अयं भावः—भेदवासनाया दोषत्वं किं प्रमाणान्तरेण सिध्यतीत्युच्यते-उत प्रत्यक्षाद्यप्रामाण्यान्यथानुपपत्त्यैवेति । नाद्यः ; तादृशप्रमाणानुपलम्भात् । द्वितीये तु अन्योन्याश्रयणात् । प्रत्यक्षाद्यप्रामाण्यस्योक्तरीत्या भेदवासनादोषत्वसिद्ध्यधीनत्वात् । न हि वासनामूलत्वमेवाप्रामाण्यहेतुः ; अभेदभावनारूपनिदिध्यासनजनितवासनामूलाद्वैतज्ञानस्याप्यप्रामाण्यप्रसङ्गात् । किन्तु दोषमूलत्वमेव । तच्च भेदवासनाया दोषत्वसिद्धिमन्तरा न सिद्ध्यतीति । **अन्यतरसिद्धावि**ति । दोषमूलत्वाप्रामाण्यान्यतरसिद्धावित्यर्थः । तथाच प्रत्यक्षेण बाधायोगादनुमानप्रवृत्त्युपपत्तिरिति भावः । **तत्प्राबल्यापेक्षये**ति । शास्त्रप्राबल्यस्यापेक्षितत्वेनेत्यर्थः । अयं भावः—न हि केनचिच्छास्त्रेण प्रत्यक्षाद्यप्रामाण्यं तद्दोषमूलत्वं वा कण्ठोक्त्या प्रतिपाद्यते । किन्तु शास्त्रविरोधात् प्रत्यक्षाद्यप्रामाण्यादिकं वक्तव्यम् । तत्र प्रत्यक्षादिविरोधात् शास्त्रस्यैवाप्रामाण्यं स्यादिति शङ्कायां शास्त्रप्राबल्यान्न वैपरीत्यशङ्केति वक्तव्यम् । ततश्च शास्त्रप्राबल्यमपेक्षितमिति । **चक्रकापात** इति । शास्त्रप्राबल्यात् तद्विरुद्धप्रत्यक्षादेरप्रामाण्यदोषमूलत्वान्यतरसिद्धिः, उक्तान्यतरसिद्धावेव पूर्वोक्तरीत्या मिथ्यात्वानुमानप्रवृत्तिः, तत्प्रवृत्तावेव च तदनुगृहीतस्य शास्त्रस्य प्राबल्यसिद्धिरिति चक्रकप्रसङ्ग इत्यर्थः । ननु मिथ्यात्वानुमानानुगृहीतत्वेन न

तत्तत्पदार्थस्वरूपं प्रत्यक्षादिविषयः, धर्मस्तु मिथ्यात्वादिनामकस्तद्विरुद्धानुमानविषय इत्यविरोध इति चेन्न; स्वरूपसिद्धेरेव मिथ्यात्वविरोधात्। स्वरूपाविरोधिमिथ्याशब्दपरिभाषितधर्मसाधने चास्माकमनिष्टाभावः ॥ किञ्च—

---

चक्रक'मित्यर्थं । प्राबल्यापेक्षयाऽन्यतरसिद्धाविति योजना। तत्तत्पदार्थेति । यथा घटस्वरूप-ग्राहिप्रत्यक्षस्य तद्गतगुरुत्वादिधर्मग्राह्यनुमानेन न विरोधो भिन्नविषयत्वात्, तथेत्यर्थः ॥ मिथ्यात्व-विरोधादिति । मिथ्यात्वस्य स्वरूपाभावरूपत्वादिति भावः ॥

---

शास्त्रस्य प्राबल्यमुच्यते; येनोक्तचक्रकं स्यात्, किन्तु निर्दोषत्वनिश्चयविषयतयैव । यद्यपि प्रत्यक्षादे-र्दोषमूलत्वनिश्चयो नास्ति; तथापि वादिविप्रतिपत्त्या भेदवासनाया दोषत्वसंशयात् दोषमूलत्वसंशयोऽस्त्येव तथाच निर्दोषत्वनिश्चयाविषयप्रत्यक्षाद्यपेक्षया तादृशनिश्चयविषयशास्त्रप्राबल्यं निर्विवादमेव, न ह्यनादिनिधनाविच्छिन्नसंप्रदाये शास्त्रे दोषमूलत्वसंशयोऽस्ति । दर्शितप्राबल्यसिद्धौ च प्रत्यक्षाद्य प्रमाण्यापेक्षाविरहान्न काचिदनुपपत्तिरिति चेन्न—यतोऽनादिनिधनाविच्छिन्नसंप्रदायस्य शास्त्रस्य भ्रमप्रमादविप्रलिप्साकरणापाटवरूपवक्तृदोषासंस्पर्शेऽपि तस्यापूर्वार्थ एव तात्पर्यस्य सर्वसंप्रतिपन्नतया अपूर्वत्वस्य च प्रमाणान्तराबाधितत्वप्रमाणान्तरासाधितत्वोभयरूपतया प्रत्यक्षादिप्रमाणविरुद्धे भवदभि-मताद्वैते तात्पर्यासंभवेन तत्र तात्पर्यज्ञानस्य भ्रमत्वावश्यम्भावेन तन्मूलके शास्त्रजन्यज्ञाने दोषमूलत्व ज्ञानविषयत्वसत्त्वेन निर्दोषत्वनिर्णयाविषयतया तस्य प्राबल्यं न संभवत्येवेति । यदि च द्वैतग्राहि-प्रत्यक्षादेरप्रामाण्यात् तद्विरुद्धेऽप्यद्वैते तात्पर्यसंभवाच्छास्त्रजन्यज्ञानस्य दोषमूलत्वाभावनिर्णयविषयत्वात् प्राबल्यं संभवत्येवेत्युच्यते—तदोक्तरीत्या शास्त्रप्राबल्यसिद्धेः प्रत्यक्षाद्यप्रामाण्यसिद्ध्यधीनतया प्रत्यक्षाद्यप्रामाण्यसिद्धेः शास्त्रप्राबल्यसिद्ध्यधीनतया चान्योन्याश्रयणं दुर्वारमिति; न च भेदवासनाया दोषत्वनिर्णयाभावेऽपि वादिविप्रतिपत्त्या दोषत्वसंशयात् प्रत्यक्षादावप्रामाण्यसंशयोऽस्त्येवेति तस्य बाधकत्वासंभवान्मिथ्यात्वानुमानमुपपद्यत एवेति वाच्यम्—एवं सति मिथ्यात्वानुमितिजनकव्याप्ति-ज्ञानादावप्युक्तरीत्या अप्रामाण्यसंशयसंभवेनानुमितेरेवानुदयप्रसङ्गात् । यथा घटादिस्वरूपग्राहकप्रत्यक्षस्य तद्गतत्वगुरुत्वादिग्राहकानुमानेन न विरोधः । तद्वदेव तत्तत्पदार्थस्वरूपग्राहकप्रत्यक्षस्य तद्गतमिथ्यात्व रूपधर्मग्राहकानुमानेनाविरोधान्न मिथ्यात्वानुमानस्य प्रत्यक्षबाधः। न हि मिथ्यात्वाभावः प्रत्यक्षविषयः; येन बाधस्स्यात् इत्यभिप्रायेण शङ्कते तत्तदिति । दूषयति स्वरूपसिद्धेरेवेति । कस्मिंश्चिद्धर्मिणि केनचित् संबन्धेन प्रकारताया स्वरूपावगाहिप्रत्यक्षस्यैवेत्यर्थः। एवकारेण मिथ्यात्वाभावावगाहननैरपेक्ष्यं बोध्यते। मिथ्यात्वविरोधात्=मिथ्यात्वानुमितिप्रतिबन्धकत्वात् । अयं भावः—यस्मिन् धर्मिणि येन संबन्धेन यत्प्रकारतया भासते तद्धर्मिनिष्ठात्यन्ताभावनिरूपिततत्संबन्धावच्छिन्नप्रतियोगित्वमेव हि तत्र तस्य मिथ्यात्वम्। तद्भाने च तादृशमिथ्यात्वाभावज्ञानस्येव तस्मिन् धर्मिणि तेन संबन्धेन तत्प्रकारज्ञानस्यापि प्रतिबन्धकत्वमानुभविकं तान्त्रिकसंप्रतिपन्नं च, यथा भूतले घटाभाववत्ज्ञाने घटाभावाभाववत्ताज्ञानस्येव घटवत्ताज्ञानस्यापि प्रतिबन्धकत्वम्, तद्वदिति । ननु यस्मिन् धर्मिणि येन संबन्धेन यत्प्रकारतया भासते,

**मिथ्यावादिप्रतिज्ञार्थं स्वप्रतिज्ञां स्पृशेन्न वा । आद्ये स्वस्यैव विध्वंसो द्वितीये व्यभिचारिता॥ मिथ्यात्वस्य तु मिथ्यात्वे मिथ्यात्वं बाधितं भवेत्। सत्यत्वस्य तु सत्यत्वे सत्यत्वं स्थापितं भवेत्॥**

**मिथ्यावादिप्रतिज्ञार्थ इति** । मिथ्यात्वे मिथ्यात्वमस्ति वा? न वा? आद्ये प्रपञ्चमिथ्यात्वमेव न सिध्येत् । अन्त्ये दृश्यत्वहेतोस्तत्र व्यभिचार इत्यर्थः । ननु मिथ्यात्वानुमाने मिथ्यात्वतदभावविकल्पेन दूष्यमाणे सत्यत्वेऽपि एवंरूपविकल्पसंभवेन स्वव्याघातकत्वान्नेदमुत्तरमित्याशङ्कय एतादृशदूषणं नासत्पक्षेऽवतरतीत्याह **मिथ्यात्वस्य तु मिथ्यात्व इति** ।

तद्धर्मिनिष्ठपारमार्थिकात्यन्ताभावनिरूपिततत्संबन्धावच्छिन्नप्रतियोगित्वमेव तत्र तस्य मिथ्यात्वम्, पारमार्थिकश्चात्यन्ताभावो ब्रह्मस्वरूप एवेति नाद्वैतहानिः । तादृशमिथ्यात्वज्ञाने च तत्तद्धर्मिणि तेन तेन संबन्धेन तत्तद्वस्तुप्रकारकज्ञानस्य न विरोधित्वम्; विरोधविरहात् । न हि व्यावहारिकैः तत्तद्वस्तुभिः साकं पारमार्थिकस्य तत्तद्वस्तुप्रतियोगिकात्यन्ताभावस्य विरोधः; समानसत्ताकयोरेव भावाभावयोर्विरोधादित्यत आह **स्वरूपाविरोधीति** । यस्मिन् धर्मिणि येन संबन्धेन यद्वस्तु भासते, तद्वस्तुनि तेन संबन्धेन तद्धर्मिवृत्तित्वाविरोधीत्यर्थः । **मिथ्याशब्दपरिभाषितेति** । मिथ्याशब्देन भवद्भिस्सङ्केतितेत्यर्थः । वस्तुगत्या न मिथ्यात्वरूपत्वम्; उक्तस्वरूपाविरोधादिति भावः । **अनिष्टाभाव इति** । न च कथमनिष्टाभावः; उक्तमिथ्यात्वसाधनेन तत्तद्धर्मिणि तत्तद्वस्तुप्रतियोगिकपारमार्थिकाभावसिद्धया समानसत्ताकयोर्भावाभावयोर्विरोधेन तत्तद्वस्तूनां तत्रतत्र पारमार्थिकत्वं नास्तीति सिद्धेरिति वाच्यम्; तत्तद्वस्तूनां तत्र तत्र तेन तेन संबन्धेन वृत्ति(वर्तमान?)त्वस्यैव पारमार्थिकत्वरूपत्वात्, दर्शितमिथ्यात्वस्य तदविरोधितया भवद्भिरेवाङ्गीकृतत्वात् । पारमार्थिकशब्दपरिभाषितधर्मान्तराभावस्यास्माकमनिष्टत्वाभावात्॥

**प्रतिज्ञार्थ इति** । प्रतिज्ञाविषयीभूतं मिथ्यात्वमित्यर्थः । **स्वप्रतिज्ञां**=स्वीयप्रतिज्ञाविषयीभूतम् । मिथ्यात्वे मिथ्यात्वमस्ति न वेति पर्यवसितोऽर्थः । **स्वस्यैव विध्वंस इति** । प्रपञ्चे मिथ्यात्वस्यैवाभाव इत्यर्थः । मिथ्यात्वस्य प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपत्वादिति भावः । **व्यभिचारि-**

1 मिथ्यावादीत्यादेरयमर्थः—मिथ्यावाद्युक्तायाः प्रपञ्चो मिथ्येति प्रतिज्ञाया अर्थो मिथ्यात्वं स्वप्रतिज्ञां = स्वप्रतिपादकं प्रतिज्ञावाक्यं स्पृशति न वा । प्रपञ्चान्तर्गतप्रकृतप्रतिज्ञावाक्येऽपि मिथ्यात्वं साध्यते न वेति यावत् । आद्ये तद्वाक्यमिथ्यात्वे तज्जन्यज्ञानस्यापि मिथ्यात्वात् तद्विषयो मिथ्यात्वं मिथ्या स्यात् । यथा शास्त्रमिथ्यात्वे ब्रह्ममिथ्यात्वापादनं भाष्ये, तथेति मन्यताम् । अन्त्ये, तत्र प्रतिज्ञावाक्ये साध्याभावात् व्यभिचारः । ननु यथा सर्वं सत्यमिति वादः सर्वान्तर्गते सत्यत्वेऽपि सत्यत्वं ब्रुवन् सर्वसत्यत्वानुकूल एव, तथा सर्वं मिथ्येति वाक्यमपि वाक्यस्य वाक्यप्रमेयभूतमिथ्यात्वस्य च मिथ्यात्वं ब्रुवत् सर्वमिथ्यात्वानुकूलमेव । मिथ्यात्वस्य मिथ्यात्वाभावे हि सर्वमिथ्यात्वं विवक्षितं न सिध्येत्; न त्वन्यदेत्यत्राह मिथ्यात्वस्य त्विति । (शतदू. 43.) सत्यत्वसत्यत्वतुल्यं मिथ्यात्वमिथ्यात्वं न भवतीत्यर्थः । ईदृशशंकापरिहाराय श्लोकावतारात् नोत्तरार्धवैयर्थ्यम् । अयमत्र पूर्वार्धभावः—मिथ्यात्वं ब्रह्म वा तदन्यद्वा । आद्यः पक्षो दूषयिष्यते । अन्त्ये तत् सत्यमसत्यं वा । आद्ये द्वैतापत्तिः । अन्त्ये तु पूर्ववाक्योक्तरीत्या मिथ्यात्वमुक्तं भवति । तच्च मिथ्यात्वगतं मिथ्यात्वं घटादेरिव घटादिगतरूपादेरपि घटादिगतत्वेन रूपेण मिथ्यात्ववत् प्रपञ्चस्यैव प्रपञ्चगत-

यदि प्रपञ्चमिथ्यात्वं स(त)द्ब्रह्मैवेति सद्भवेत् । प्रपञ्चश्च तथैवेति स सत्यो न कथं भवेत् ॥
जडत्वात् स न तच्चेत् तन्मिथ्यात्वञ्च न तद्भवेत्। तत्त्वेनैव तदन्यत्वान्न तत् सत्यञ्च ते भवेत् ॥
सदसद्भिन्नता चापि विरोधात् सदसत्त्ववत् । परस्परमतिस्तस्य बाधिकेति निरूप्यताम् ॥

किञ्च प्रपञ्चतद्बाधकप्रत्ययाभ्यामुपहितानुपहितादिविशेषेण ब्रह्मणोऽपि दृश्यत्वादनैकान्त्यम्, ब्रह्ममिथ्यात्वं वा स्यात् ॥

---

प्रपञ्चतद्बाधकप्रत्ययाभ्यामिति । 'सर्वप्रत्ययवेद्ये च ब्रह्मरूपे व्यवस्थिते'' इत्युक्तरीत्या प्रपञ्चप्रत्ययस्य सर्वस्यापि प्रपञ्चोपहितब्रह्मविषयत्वात् तत्त्वमस्यादिवाक्यजन्यनिष्प्रकारकज्ञानस्यानुपहितब्रह्म-

---

तेति । मिथ्यात्वशून्ये मिथ्यात्वे दृश्यत्वहेतोस्सत्त्वादिति भावः । ननु मिथ्यात्वस्य मिथ्यात्वतदभावविकल्पेन दूषणे सत्यत्वस्यापि सत्यत्वतदभावविकल्पेन दूषणप्रसक्त्या स्वव्याघातः स्यादित्याशङ्क्य नासत्पक्षे तथा दूषणावकाश इत्याह मिथ्यात्वस्येति । यदीत्यादि । प्रपञ्चगतं मिथ्यात्वं सत्यभूतब्रह्मस्वरूपमेव—अतस्तत्सत्यमित्यर्थः । तद्ब्रह्मैवेति पाठे प्रपञ्चमिथ्यात्वं ब्रह्मैवेति तत्सद्भवेदित्यन्वयः । प्रपञ्चश्चेत्यादि । तथैवेति । ब्रह्मस्वरूप एवेत्यर्थः । सः=प्रपञ्चः । जडत्वादित्यादि । सः=प्रपञ्चः । न तच्चेदिति । ब्रह्म न चेदित्यर्थः । तन्मिथ्यात्वञ्चेति प्रपञ्चगतमिथ्यात्वमपीत्यर्थः । न तद्भवेदिति । ब्रह्म न भवेदित्यर्थः। तत्त्वेनैव=जडत्वेनैव । तदन्यत्वात्=ब्रह्मान्यत्वात् । न तत् सत्यञ्च ते भवेदिति । ते तच्च सत्यं न भवेदित्यन्वयः । त्वदभिमतं प्रपञ्चमिथ्यात्वमपि सत्यं न भवेदित्यर्थः । ननु मिथ्यात्वस्य प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपं मिथ्यात्वं न स्वीक्रियते-येन स्वस्यैव विध्वंसः स्यात्—किन्तु सदसद्विलक्षणत्वरूपमेव मिथ्यात्वं तत्र स्वीक्रियते । अतो न दोष इत्यत आह सदसद्भिन्नता चापीति । न ते भवेदित्यनुषङ्गेणान्वयः । कुत इत्यत्राह विरोधादिति । तत्तदन्यत्वरूपत्वादिति भावः । विरोधमेव दृष्टान्तेनोपपादयति सदसत्त्ववदिति । सत्त्वसद्भिन्नत्वयोरिवेत्यर्थः । परस्परमतिर्बाधिकेतीति इतिर्हेतौ । एकबुद्धिं प्रति अपरबुद्धेः प्रतिबन्धकत्वादित्यर्थः । तथाच सद्भिन्नत्वासद्भिन्नत्वोभयस्य एकाबाहार्यविषयत्वासंभवात् व्याघात इति भावः । प्रपञ्चतद्बाधकप्रत्ययाभ्यामिति । घटस्सन् पटस्सन्नित्यादिप्रपञ्चप्रत्यये घटाद्युपहितसद्रूपब्रह्मणो भानाङ्गीकारात् तत्त्वमस्यादिवाक्यजन्याखण्डाकारनिर्विकल्पकज्ञाने अनुपहितस्य ब्रह्मणो भानाङ्गीकाराच्चेति भावः अनुपहितादीति आदिनोपलक्षितविशिष्टवेषयोः परिग्रहः । कार्यान्वयि वर्तमानं व्यावर्तकं विशेषणम्, कार्यानन्वयिवर्तमानं व्यावर्तकमुपाधिः, कार्यानन्वय्यवर्तमानं व्यावर्तकमुपलक्षणमिति हि तैरुच्यते । ननूपहितस्य मिथ्यात्वाभ्युपगमान्न तेनानैकान्त्यम्, दृश्यत्वादिधर्माणां स्वोपहित एव सत्त्वाभ्युपगमान्न शुद्धेनाप्य

---

मिथ्यात्वस्यापि ब्रह्मणि कल्पितत्वोक्त्या भवतीति न युक्तम्—शुक्तिरजतमिथ्यात्वस्य शुक्तिरजतविषमसत्ताकत्ववत् प्रपञ्चमिथ्यात्वस्यापि प्रपञ्चविषमसत्ताकत्वावश्यम्भावात् । प्रपञ्चमिथ्यात्वं प्रपञ्चविषमसत्ताकं प्रपञ्चमिथ्यात्वत्वात्, यत्र यन्मिथ्यात्वत्वम्, तत्र तद्विषमसत्ताकत्वमिति व्याप्तेः । शुक्तिरजतस्य प्रातिभासिकत्वात् तन्मिथ्यात्वं व्यावहारिकम् ; प्रपञ्चस्य व्यावहारिकत्वात् तन्मिथ्यात्वं पारमार्थिकमिति वक्तव्यं भवेदिति। असत्त्व-सत्त्व-सदसद्भिन्नत्वानामयोगाच्च ।

अनुभूतिरवेद्या अनुभूतित्वादिति चेन्न,

**अनुभूतिरवेद्येति वचनं बोधक न वा। आद्ये तेनैव वेद्यत्वं नो चेत् किं क विधीयते ॥**

ब्रह्मणश्चात्यन्तावेद्यत्वे, "अथातो ब्रह्मजिज्ञासा", "ब्रह्मविदाप्नोति परम्" "आत्मा वा अरे द्रष्टव्यः" इत्यादिव्याकोपश्च। उपदेशश्च निष्प्रयोजनः, उपदेष्टुश्चाद्वैतनिश्चयानिश्चययोः कस्मै किमुपदेश्यम्? न ह्यनुन्मत्ता मिथ्यात्वेन निर्णीतेभ्यः प्रतिबिम्बादिभ्य उपदिशन्ति ॥

व्यावृत्त्यनुवृत्तिमात्रं तु न मिथ्यात्वादिप्रयोजकम्। तथा हि—

**व्यावृत्तेऽपि च सत्यत्वं रज्जुवंशादिके स्फुटम्। तत्रैव चानुवृत्तस्य मिथ्यात्वमपि भोगिनः ॥**

---

विषयत्वाद्ब्रह्मणोऽपि दृश्यत्वावश्यम्भावादिति भावः। दृश्यत्वहेत्वभावादव्यभिचारं शङ्कते **अनुभूतिरवेद्येति**। **किं क विधीयत इति**। अनुभूतौ न किञ्चिदपि साधितं स्यादिति भावः। **निष्प्रयोजन इति**। ज्ञानार्थत्वादुपदेशस्येति भावः। **कस्मै किमिति। निश्चये कस्मा उपदेश्यम्, अनिश्चये किमुपदेश्यम् इति** विवेकः॥ प्रथमं दूषयित्वा द्वितीयं हेतुं दूषयति **व्यावृत्तीति**। **एकस्यां रज्जौ** सर्पभूदलनाम्बुधाराध्यासवदेकस्यैव सर्पस्य रज्जुवंशदण्डादिष्वनेकेष्वध्याससम्भवात् व्यावर्तमानत्वानुवर्तमानत्वे

---

नैकान्त्यमित्यत आह **ब्रह्ममिथ्यात्वं वेति**। उपहितशुद्धयोर्भेदस्याप्रमाणिकतया उपहितस्य मिथ्यात्वं स्यादित्यर्थः। ननु मिथ्यात्वादिधर्माणां स्वोपहित एव सत्त्वम्। न तु शुद्धे धर्मवत्त्वे शुद्धत्वव्याघातात्। यद्यपि शुद्धोपहितयोः नात्यन्तभेदः—उपहितसत्ता शुद्धसत्ता नेति प्रतीतिव्यवहारयोरभावात्; तथापि भेदाभेदोऽस्त्येव। नन्वुल्लिखितनीतौ चात्यन्तिकभेदस्यैव विषयत्वादुक्तप्रतीतिव्यवहाराभावोपपत्तिः। इत्थं च उपहितस्य मिथ्यात्वेऽपि भेदांशमादाय शुद्धस्यामिथ्यात्वमुपपद्यत एव। एवं दृश्यत्वादिधर्माणामपि स्वोपहित एव सत्त्वात् शुद्धे तदसत्त्वान्नैकान्त्यमित्यभिप्रायेण शङ्कते **अनुभूतिरिति**। वक्ष्यमाणानेकानुपपत्तिवशात् ज्ञानविषयत्वरूपदृश्यत्वस्य स्वोपहित एव सत्त्वम्—न तु शुद्ध इत्यभ्युपगमो न संभवति। ततश्च शुद्धेऽपि दृश्यत्वसंभवादनैकान्त्यं दुष्परिहरमित्यभिप्रायेण दूषयति **नेति**। अनुपपत्तीरेव विवृणोति **अनुभूतिरित्यादिना। किं क विधीयत इति**। कुत्र किं साध्यत इत्यर्थः। **किंशब्दः** क्षेपे। क्वापि किमपि न साधितं स्यादित्युक्तं भवति। उक्तानुमानेनानुभूतौ किमपि न सिद्ध्येदिति भावः। **निष्प्रयोजन इति**। तस्य ज्ञानार्थत्वादिति भावः। दृश्यत्वहेतोरनैकान्त्यमुक्त्वा प्रपञ्चमिथ्यात्वे उपदेशानुपपत्तिरूपबाधकतर्कमाह **उपदेष्टुरिति। कस्मै किमुपदेश्यमिति**। कस्मा उपदेश्यं किमुपदेश्यमित्यन्वयः। अयमर्थः—भवद्भिरद्वैतोपदेष्टृत्वेन स्वीकृतो गुरुरद्वैतनिश्चयवान् वा न वा; आद्ये मिथ्यात्वेन निर्णीतेभ्यः परेभ्यः प्रतिबिम्बेभ्य इव नोपदेशसंभवः। द्वितीये अद्वैतापरिज्ञानादेव न तदुपदेशसंभव इति। उक्तबाधकतर्कस्य सर्वहेतुसाधारण्येऽप्युपदेशप्रस्तावादिहाभिधानमिति बोद्धव्यम् ॥

दृश्यत्वहेतुं दूषयित्वा व्यावर्तमानत्वहेतुं दूषयति **व्यावृत्त्यनुवृत्तिमात्रमिति। मात्रशब्देन** वक्ष्यमाणविशेषणव्यवच्छेदः। **मिथ्यात्वादीति आदिना** सत्यत्वपरिग्रहः। **प्रयोजकं** व्याप्यम्। तथा च व्याप्यत्वासिद्धिरिति भावः। **व्यावृत्त इति**। उत्तरोत्तरप्रतीत्यविषय इत्यर्थः। **सत्यत्वं रज्जुवंशादिके स्फुटमिति**। ननु कथं रज्ज्वादेः सत्यत्वम्; कृत्स्नस्यापि तैः मिथ्यात्वाभ्युपगमा-

**व्यावृत्तिमात्रात् यदि तत् सतोऽप्येतत् प्रसज्यते। सत्त्वं घटस्येहेदानीं नास्तीत्यादिनिरूपणात्॥**

न प्रयोजके इति भावः । सतो व्यावृत्तिं प्रदर्शयति सत्त्वं घटस्येति । वर्तमानेऽपि घटे देशान्तरं नीते इहेदानीं सत्त्वं नास्तीति प्रतीतेः सत्त्वस्यापि व्यावृत्ततया मिथ्यात्वप्रसङ्ग इत्यर्थः ॥ ननु यस्मिन् देशे यस्मिन् काले यस्य सद्भावः प्रतिपन्नः, तस्मिन् देशे तस्मिन् काले तस्याभाव एव व्यावर्तमानत्वम् । तदेव च दिति चेत्, अत्रोच्यते-इहाभिधीयमानं सत्यत्वमधिकसत्ताकत्वरूपम्; मिथ्यात्वमपि न्यूनसत्ताकत्वरूपम् । तत्रश्चायं प्रयोगः-प्रपञ्चो ब्रह्मापेक्षया न्यूनसत्ताकः ब्रह्मापेक्षया व्यावर्तमानत्वात् । यत् यदपेक्षया व्यावर्तमानम्, तत् तदपेक्षया न्यूनसत्ताकम्; यथा रज्ज्वपेक्षया व्यावर्तमानं सर्पभूदळनादिकं रज्ज्वपेक्षया न्यूनसत्ताकम् । रज्ज्वादीनां हि व्यावहारिकं सत्त्वम्, सर्पादीनां तु प्रातिभासिकमिति । एवं ब्रह्म वियदाद्यपेक्षया अधिकसत्ताकं तदपेक्षयाऽनुवर्तमानत्वात्, यत् यदपेक्षयानुवर्तमानं तत् तदपेक्षयाधिकसत्ताकम्, यथा सर्पाद्यपेक्षयानुवर्तमाना रज्जुस्तदपेक्षयाऽधिकसत्ताकेति उक्तप्रयोगद्वयेनापि प्रपञ्चस्य व्यावहारिकसत्ता ब्रह्मणः पारमार्थिकसत्ता च सिद्ध्यति । तत्र पारमार्थिकसत्ता=बाध्यत्वसामान्याभावः। व्यावहारिकसत्ता=व्यवहारकालाबाध्यत्वे सति बाध्यत्वम् । प्रातिभासिकवारणाय सत्यन्तम्। ब्रह्मवारणाय विशेष्यम् । इत्थं च प्रपञ्चस्य बाध्यत्वरूपमिथ्यात्वसिद्ध्या समीहितसिद्धिरित्यद्वैतिनामुपपादनम् । अत्र रज्ज्वंशादिषु भ्रान्तिविषयप्रातिभासिकसर्पानुवृत्तिदर्शनात् तदपेक्षया रज्ज्वादेर्व्यावर्तमानत्वमस्ति, न्यूनसत्ताकत्वञ्च नास्ति । एवं रज्ज्वाद्यपेक्षयाऽनुवर्तमानत्वं सर्पस्यास्ति । तत्र चाधिकसत्ताकत्वं नास्ति । अतो न व्याप्तिसंभव इति भावः। अत्र चानुवर्तमानत्वमुत्तरोत्तरप्रतीतिविषयत्वम् । तदपेक्षयाऽनुवर्तमानत्वञ्च तद्विषयकप्रतीतिविषयत्वे सति तदविषयकप्रतीतिविषयत्वम् । व्यवर्तमानत्वमुत्तरोत्तरप्रतीत्यविषयत्वम् । तदपेक्षया व्यावर्तमानत्वञ्च स्वाविषयकप्रतीतिविषयतद्विषयकप्रतीतिविषयत्वम् । व्यावृत्तेर्मिथ्यात्वव्याप्यत्वानभ्युपगमेऽनिष्टमाह व्यावृत्तिमात्रादिति । मात्रपदं वक्ष्यमाणप्रतीति विरोधव्यवच्छेदकम्। पञ्चम्यर्थो ज्ञापकत्वरूपहेतुत्वम्। निरूपकतासंबन्धेन तच्छब्दार्थो मिथ्यात्वेऽन्वेति। मिथ्यात्वं यद्यनुवर्तमानत्वहेतुकम्; अनुवर्तमानत्वव्यापकमिति तु पर्यवसितोऽर्थः सतोऽप्येतत् प्रसज्यत इति। ब्रह्मणोऽपि मिथ्यात्वप्रसंग इत्यर्थः। घटस्सन् पटस्सन् इत्यादिप्रतीतौ सद्रूपब्रह्मणो भानेऽपि भूतलं घटवत्, घटो नील इत्यादिसदनुल्लिखितज्ञानेषु सतो भानाभावेन सद्विषयकप्रतीतिविषयघटविषयकप्रतीतिविषयत्वरूपस्य घटापेक्षया व्यावर्तमानवत्वस्य सद्रूपे ब्रह्मणि सत्त्वेन तस्य घटापेक्षया न्यूनसत्ताकत्वव्याप्यत्वाभ्युपगमे ब्रह्मण्युक्तन्यूनसत्ताकत्वरूपमिथ्यात्वस्यावश्यकत्वादिति भावः। नन्वस्मन्मते सदन्यविषयकप्रतीतेः सद्विषयकत्वनियमाभ्युपगमात् भूतलं घटवदित्यादिज्ञानानामपि भूतलघटादिषु सत्तादात्म्यावगाहित्वमस्त्येव । ततश्च न ब्रह्मणि व्यावर्तमानत्वसंभव इत्यत आह सत्त्वमित्यादि। निरूपणात् प्रतीतेः। अयं भावः--इहेदानीं घटस्य सत्त्वं नास्ति, इहेदानीं घटो न सन् इत्यादिप्रतीतिषु न घटादिषु सत्तादात्म्यप्रतीतिः संभवति । विरोधात् । ततश्च सदन्यविषयकज्ञानस्य सद्विषयकत्वनियमासंभवात् ब्रह्मण्युक्तव्यावर्तमानत्वमक्षतमेवेति । न च इहेदानीमित्युक्तप्रतीत्या कालविशेषावच्छिन्नदेशविशेषनिरूपित-

**तच्चेत् तद्देशकालादौ नापोढं तत् समं घटे । सदेव घटदेशश्चेत्यन्यथैवोपलम्भनात् ॥ ६२ ॥**
**सत्सदित्यनुवृत्त्या चेत् सतः सत्यत्वमिष्यते । भिन्नभिन्नास्त्यनुवृत्त्यादेर्भेदनास्त्योश्च सत्यता ॥**

मिथ्यात्वसाधकम् ; तच्च न सत्तायामस्तीति यदि, तर्हि तत् घटेऽपि समानमित्याह तच्चेदिति। ननु सद्रूपे देशे घटः प्रतीयते; तत्रैव च निषिध्यते; अतो मिथ्यात्वमित्याशङ्क्य भूतले घटोऽस्ति, चत्वरे घटोऽस्तीत्येवं [भूतल?]चत्वरादेरेव घटदेशत्वेनोपलम्भान्न सतो घटदेशत्वमित्याह सदेव घटदेशश्चेदिति। व्यावर्तमानत्वं दूषयित्वा अनुवर्तमानत्वं दूषयति सत्सदिति । भिन्नभिन्नास्तीति । घटो भिन्नः, पटो भिन्नः, स्तम्भो

सत्त्वस्यैवाभावो विषयीक्रियते, न तु सत्त्वसामान्याभावः । ततश्च सामान्यतः सत्त्वभाने न विरोध इति वाच्यम् ; इहेदानीं घटः सन् इत्यादिरूपेणैव प्रतीतेर्देशविशेषाद्यविशेषितसत्त्वभानमप्रामाणिकमित्याशयात् । इदमुपलक्षणम्—घटः सत्त्वसामान्याभाववानिति भ्रमे तदनन्तरभाविघटज्ञाने वा घटे सत्तादात्म्यभाने न संभवत्येवेत्यपि बोद्धव्यम् । एतेन—स्वविषयकप्रतीतित्वव्यापकविषयितानिरूपकतद्विषयकयत्किञ्चित्प्रतीत्यविषयत्वमेव तदपेक्षया व्यावर्तमानत्वम् । घटविषयिकासु सर्वास्वपि प्रतीतिषु सतो विषयत्वात् सद्विषयकपटादिप्रतीतौ घटस्याविषयत्वाच्च घटस्य सदपेक्षया व्यावर्तमानत्वोपपत्तिः । एवं पटादेरपि । अत एव न घटस्य पटापेक्षया व्यावर्तमानत्वप्रसङ्गः—घटे हि घटपटसमूहालम्बनविषयतया स्वाविषयकप्रतीतिविषयपटविषयकप्रतीतिविषयत्वमस्ति । इत्थं च न सर्पापेक्षया रज्जोर्व्यावर्तमानत्वसंभवः-रज्जुविषयकसर्वप्रतीतिविषयत्वस्य सर्पे अभावात्। एवं तदपेक्षयाऽनुवर्तमानत्वं तदविषयकप्रतीतिविषयत्वे सति तद्विषयकयावत्प्रतीतिविषयत्वम् । अत एव न पटस्य घटापेक्षयाऽनुवर्तमानत्वप्रसङ्गः । पटस्य हि घटाविषयकप्रतीतिविषयत्वं, समूहालम्बनमादाय घटविषयकप्रतीतिविषयत्वं चास्ति । इत्थं च रज्ज्वपेक्षया न सर्पस्यानुवर्तमानत्वसंभवः--इत्यपास्तम् ; उक्तरीत्या घटादिविषयकसर्वप्रतीतिषु सतोऽपि विषयत्वासंभवेन स्वरूपासिद्ध्यापत्तेः । ननु स्वप्रकारकधीविशेष्यतावद्विशेष्यकधीविषयीभूताभावप्रतियोगित्वमेव व्यावर्तमानत्वम् । तदेव च मिथ्यात्वव्याप्यम् । तच्च न सत्त्वेऽस्ति ; घटादौ यस्मिन् देशे यस्मिन् काले सत्त्वं प्रतीतम्, तस्मिन् देशे तस्मिन् काले सत्त्वं नास्तीत्यप्रतीतेरिति शङ्कते तच्चेदिति । तत्=सत्त्वम्, तद्देशकालादौ=यद्देशनिरूपितं यत्कालावच्छिन्नं सत्त्वं घटादौ प्रतीतम्, तद्देशनिरूपितं तत्कालावच्छिन्नम्, नापोढं=निषेधबुद्ध्यविषयीभूतम् । तथाच स्वप्रकारकधीविशेष्यविशेष्यकधीविषयीभूताभावप्रतियोगित्वरूपं व्यावर्तमानत्वं न सत्त्वेऽस्तीति भावः । दूषयति तदिति । उक्तव्यावर्तमानत्वशून्यत्वमित्यर्थः । समं घट इति । तथाच स्वरूपासिद्धिरिति भावः । ननु सत एव घटदेशत्वात् घटस्य तत्रैव प्रतीतिः, तत्रैव च निषेध इति स्वप्रकारकधीविशेष्यविशेष्यकधीविषयीभूताभावप्रतियोगित्वरूपं व्यावर्तमानत्वं घटे अक्षतमिति शङ्कते सदेवेति । अनुभवविरोधेन दूषयति नेति । अन्यथैव=सदन्यत्वेनैव । उपलम्भनादिति । घटदेशस्येत्यादिः । भूतले घटोऽस्तीत्यादिरूपेणेति भावः । एतावता व्यावर्तमानत्वहेतोर्दोष उक्तः ; अथानुवर्तमानत्वस्याधिकसत्ताकत्वरूपसत्यत्वव्याप्यत्वे अनिष्टमाह सत्सदिति । इत्यनुवृत्त्या=इत्याकारकप्रतीतिविषयत्वरूपानुवर्तमानत्वेन । घटाद्यविषयक-

**देशकालादिभेदेन नास्तिता सर्वगामिनी । भिन्नता च मिथोपेक्षा न क्वचिद्विनिवर्तते ॥६४**
**शब्दमात्रानुवृत्तिश्चेत् तत्रापि च तथैव नः । तत्तत्प्रमाणयोग्यत्वमात्रं सत्तेति मन्महे ६५ ॥**

---

भिन्नः, घटो नास्ति, पटो नास्ति, शशशृङ्गं नास्ति, खपुष्पं नास्तीति प्रतीत्या व्यावर्तमानानां घटपटादीनामसत्यत्वस्यानुवर्तमानयोर्भेदनास्त्यर्थयोः सत्यत्वस्य च प्रसङ्गः । **भेदनास्त्योरनुवृत्तिमेवोपपादयति देशकालादीति । नास्तिता सर्वगामिनीति** । प्रमेयत्वादेरपि केवलान्वयिनः संयोगादिसम्बन्धेनासत्त्वात् ; ब्रह्मणोऽपि दुःखित्वजडत्वादिरूपेणासत्त्वादिति भावः। **मिथोपेक्षेति** । परस्परप्रतियोगिकेत्यर्थः । स्वेतरभेद इति यावत् । ननु घटपटादिषु अयं भिन्नोऽयं भिन्नोऽयमसन्नयमसन्नित्यादिषु **शब्दमात्रानुवृत्तिरेव** ; न तु भिन्नासच्छब्दार्थयोरनुवृत्तिरित्याशङ्क्य तत् सतोऽपि तुल्यमित्याह **शब्दमात्रेति** । नन्वनुगतस्य कस्यचिदभावे सत्सदित्यनुवृत्तव्यवहार एव न सम्भवति । अतः सर्वानुस्यूतं ब्रह्मरूपं सच्छब्दितमङ्गीकर्तव्यम् ; न च सत्ता जातिः सम्भवति; जातौ मानाभावादित्याशङ्क्य अवदार्दिशब्दप्रतिबन्दीमभिप्रयन् अननुगतस्यापि सत्पदप्रवृत्तिनिमित्तत्वमस्त्वित्याह **तत्तत्प्रमाणेति** । असति बाधकेऽनुगतव्यवहारस्यानुगतप्रवृत्तिनिमित्ताधीनत्वं वक्तव्यमिति यदि निर्बन्धः, तथाऽपि सिध्यन्ती सत्ता घटत्वादिवत् धर्मत्वेनैव सिध्यति; न त्वधिष्ठानत्वेनेत्याह

---

प्रतीतिविषयत्वे सति तद्भिन्नविषयकप्रतीतिविषयत्वरूपानुवर्तमानत्वेनेति यावत् । तृतीयार्थो ज्ञापकत्वरूपहेतुत्वम् । तच्च सत्यत्वे निरूपकतासंबन्धेनान्वेति । सतस्सत्यत्वमनुवर्तमानत्वहेतुकमिष्यते चेदित्यर्थः । सत्यत्वस्याऽनुवर्तमानत्वव्यापकत्वाङ्गीकार इति फलितोऽर्थः । **भिन्नेत्यादि** । घटो भिन्नः, पटो भिन्नः, घटो नास्ति पटो नास्तीत्यादिप्रतीत्या भेदासत्त्वयोरप्युक्तानुवर्तमानत्वसत्त्वेन न तत्रोक्तसत्यत्वप्रसङ्ग इत्यर्थः । ननु सतो घटस्य कथमसत्त्वमित्यत आह **देशकालादिभेदेनेति** । स्वदेशकालयोस्सत्त्वेऽपि देशान्तरादावभावसंभवादिति भावः । **नास्तिता**=अभावप्रतियोगित्वम् । **सर्वगामिनीति** । प्रमेयत्वादेरपि व्यधिकरणसंबन्धेन व्यधिकरणधर्मेण चाभावसंभवादिति भावः । ननु घटभेदस्य कथं सर्वत्रानुवर्तमानत्वं घटे अभावादित्यत आह **भिन्नता चेति** । **मिथोपेक्षा**=परस्परप्रतियोगिका । घटे घटभेदस्यासत्त्वेऽपि पटभेदस्य सत्त्वात् भेदत्वेन सामान्यरूपेण सर्वत्रानुगतत्वमस्तीति भावः इदमुपलक्षणम्-सर्वत्रानुगतत्वाभावेऽपि कतिपयवस्त्वनुगतत्वमात्रेणाप्युक्तानुवर्तमानत्वनिर्वाहात् सर्वत्रानुगतत्वाभावेऽपि क्षत्यभाव इत्यपि बोध्यम् । ननु तत्संबन्धित्वे सति तदन्यसंबन्धित्वमेव तदपेक्षयाऽनुवर्तमानत्वम् । तच्च न भेदासत्त्वयोरस्ति ; तयोः प्रतिव्यक्तिभिन्नत्वाभ्युपगमादित्यभिप्रायेण शङ्कते **शब्दमात्रेति** । **मात्र**शब्देन अर्थानुवृत्तिव्यवच्छेदः । **तत्रापीति** । सत्त्वेऽपीत्यर्थः । **तथैवेति** । शब्दमात्रानुवृत्तिरेवेत्यर्थः । **प्रमाणयोग्यत्वं** प्रमितिविषयत्वम् । तथाच विषयताया विषयभेदेन भिन्नतया सत्ताया अप्युक्तविधमनुवर्तमानत्वं संभवतीति भावः । न चानुगतधर्मं विना कथमनुगतप्रतीतिव्यवहारयोरुपपत्तिरिति वाच्यम् ; भिन्नः, भिन्नः, नास्ति, नास्तीत्याद्यनुगतप्रतीतिवदुपपत्तेरित्याशयात् । यद्यनुगतप्रतीतिव्यवहारयोरसति बाधके अनुगतनिमित्ताधीनत्वनियमः स्वीक्रियते, तदाऽप्यनुगततया सिद्ध्यन्ती सत्ता घटत्वादिवत् धर्मरूपतयैव

**अनुवृत्तधिया सत्ता सर्वभावानुयायिनी । यद्यपीष्टा तथाप्येषा तद्धर्मत्वेन सिध्यति ॥ ६६ ॥**

अतः प्रतिपन्नदेशकालादौ निवृत्तं मिथ्या; नान्यत्; अन्यत् सदिति तत्त्वम् । [1]प्रत्यनुमानञ्च—

**भानासद्व्यतिरेकाद्यैर्विमतं सत्यमात्मवत् । विमतः प्रत्ययः सम्यक् ज्ञानाबाधात् [2]स्वतन्त्रवत् ॥**

इत्यादि । अन्तिमयुगवेदान्तिनामभिजन्मरहस्यं प्रकाशयामः—

**सांख्यसौगतचार्वाकसङ्कराच्छङ्करोदयः । दूषणान्यपि तान्यत्र भूयस्तदधिकानि च ॥ ६८ ॥**

**अनुवृत्तधियेति । भानेति । विमतं सत्यं** भासमानत्वात्, असद्विलक्षणत्वात्, **विमतः प्रत्ययः** सदालम्बनः अबाधितत्वात्, उभयवादिसम्प्रतिपन्नात्मप्रत्ययवदित्यर्थः ॥ **अन्तिमयुगवेदान्तिनामिति** । मृषावादिनामित्यर्थः । **अभिजन्म** आभिजात्यम् । **साङ्ख्येति** । चिच्छायापत्तिसम्पर्कादिनाऽऽत्मनो ज्ञातृत्वम्, वस्तुतो न कर्तृत्वं भोक्तृत्वं वा आत्मनः इत्येवमादिसाङ्ख्योपदिष्टार्थोपजीवनात्, स्तम्भादिप्रत्ययो मिथ्या प्रत्ययत्वात्; यः प्रत्ययः स मृषा दृष्टो यथा स्वप्नादिप्रत्ययः इति बौद्धोपदिष्टप्रपञ्चमिथ्यात्वोपजीवनात्, चार्वाकोपदिष्टाहमर्थविनाशाभ्युपगमाच्च मिलितमपि[3] (मिलितमिदं?)मतत्रयं शङ्करमतरूपेण परिणतमित्यर्थः ॥

सिद्धयेत, न स्वधिष्ठानब्रह्मरूपतयेत्याह **अनुवृत्तधियेति** । अनुगतप्रतीत्येत्यर्थः । इदमनुगतव्यवहारस्याप्युपलक्षणम् । **अत इति** । उक्तव्यावर्तमानत्वानुवर्तमानत्वयोर्मिथ्यात्वसत्यत्वव्याप्यत्वासंभवादित्यर्थः । **प्रतिपन्नदेशकालादौ निवृत्तमिति** । यस्मिन् देशे यस्मिन् काले सत्त्वं प्रतिपन्नम्, तस्मिन् देशे तस्मिन् काल एवासत्त्वावगाहिनिषेधधीविषयीभूतं शुक्तिरजतादिकमित्यर्थः । **अन्यत्सदिति** । अनेवंविधं जगत् सत्यमित्यर्थः । **भानेत्यादि** । ब्रह्मभिन्नं सत्यं भासमानत्वात् आत्मवत्, ब्रह्मभिन्नं सत्यं असद्भिन्नत्वात् आत्मवत्, प्रपञ्चप्रत्ययः सद्विषयकः बाधकप्रत्ययरहितत्वात् उभयवादिसंप्रतिपन्नात्मप्रत्ययवदित्यर्थः । अत्र **स्वतन्त्र**शब्देनोभयवादिनोरपि स्वसिद्धान्तसिद्धार्थप्रत्ययस्य विवक्षणादुभयवादिसंप्रतिपन्नात्मप्रत्ययलाभः । अत्र साध्यं सत्यत्वं मिथ्यात्वाभावरूपम् । **भासमानत्वं** ज्ञानविषयत्वम् । विषयत्वमेव वा, विषयतासंबन्धेन ज्ञानमेव वा हेतुः । **असत्त्वं** कालासंबन्धित्वम् । कालासंबन्धिभिन्नत्वं सत्त्वं कालसंबन्धित्वपर्यवसितम् । तेन कालासंबन्धिनोऽप्रसिद्धावपि न क्षतिः । **असद्व्यतिरेकाद्यैरिति आद्य**शब्देन प्रमेयत्वादिसङ्ग्रहः । अनिर्वचनीयख्यात्यनुपगमाच्छुक्तिरजतादेरपि सत्यत्वान्न तत्र व्यभिचारः । **अन्तिमयुगवेदान्तिनामिति** । कलियुगानुरूपाणां तदुपकारकत्वेनैव वेदान्तं नयतां मृषावादिनामित्यर्थः । **अभिजन्म**=आभिजात्यम् । **सांख्येति** । चिच्छायापत्त्यादिना आत्मनो ज्ञातृत्वम्, वस्तुतो न कर्तृत्वं भोक्तृत्वं वाऽऽत्मन इत्येवमादिसांख्योपदिष्टार्थोपजीवनात्, योगाचारोपदिष्टप्रपञ्चमिथ्यात्वस्य चार्वाकोपदिष्टाहमर्थविनाशस्य चाङ्गीकारादुक्तमतत्रयमपि मिलितं शङ्करमतरूपेण

---

1 विमतः प्रत्ययो निरालम्बनः, प्रपञ्चो मिथ्या दृश्यत्वात् व्यावर्तमानत्वादित्याद्यनुमानं निरस्तम् । तत्र प्रत्यनुमानमपि व्युत्क्रमेणोदाहरति प्रत्यनुमानञ्चेति । 2 स्वतन्त्रेति । सर्वतन्त्रप्रतितन्त्रेति न्यायसूत्रे सर्वतन्त्रसिद्धार्थविलक्षणतया स्वतन्त्रसिद्धत्वाभिमतो योऽर्थः तद्विषय इवेत्यर्थे दृष्टान्तत्वायोगात् उभयसंप्रतिपन्नविषयप्रत्ययवदित्यर्थं उक्तः । 3 मतत्रयमपि मिलितमित्यन्वयः ।

तदेवं सिद्धम्, 'न [1]च ब्रह्म बम्भ्रमीति' इति ।

न च तत् स्वरूपेण [2]जगदुपादानम्; निर्विकारत्वनिर्दोषत्वादिविरोधात् । नापि शक्त्युपधानेन; शक्तेरभिन्नत्वे स्वरूपानतिरेकात्। भिन्नत्वेऽसन्मतापातात् । भिन्नाभिन्नत्वेऽभिन्नत्वाकारेण विकारादिदोषप्रसङ्गात्। एतेन स्वतस्सर्वेषां भिन्नाभिन्नत्वमपि निरस्तम्। व्यावृत्तमेव(वं?) दूषितम् । (सन्मात्रस्यांशिनो ब्रह्मत्वञ्च व्यावृत्तमेव दूषितम्(4410 कोशे))(सन्मात्रस्यांशिनो ब्रह्मत्वमपि निर्विकारत्वनिर्दोषत्वादिविरोधात् पूर्वमेव दूषितम्।।पा०)शङ्करादिपक्षत्रयेऽपि (शांकरभास्करयादवपक्षेषु. ता. को.) चिदचित्प्रपञ्चब्रह्मणां बहुविधसामानाधिकरण्यवैरूप्येण लक्षणादिभिश्च महान् क्लेशः ।

---

सर्वात्मकं सद्रूपं ब्रह्म चिदचिदीश्वरांशत्रयशक्तिविशिष्टं सत् समुद्र इव फेनबुद्बुदतरङ्गभेदेन सावान्तरभेदेन त्रिविधव्यष्टिभावेन परिणमते इति **यादवप्रकाश**मतं दूषयति । **नापि शक्त्युपधानेने**ति। **असन्मतापातादि**ति । **असन्मते** प्रकृतिरूपशक्त्युपहितस्य जगदुपादानत्वाभ्युपगमादिति भावः । **व्यावृत्तमि**ति । ईश्वरात् **व्यावृत्त**मित्यर्थः । सन्मात्रमेव ब्रह्म, ईश्वरो न ब्रह्मेत्ययं पक्ष ईश्वरस्य ब्रह्मत्वसाधनात् दूषित एवेत्यर्थः । **पक्षत्रयेऽपी**ति । शङ्करयादवप्रकाशभास्करपक्षेष्वित्यर्थः । **बहुविधे**ति । **सामानाधिकरण्यवैरूप्यबहुविधत्वञ्च** उत्तरत्र स्फुटम् । **लक्षणादिभिश्चे**ति । बाधार्थसामानाधि-

---

परिणतमित्यर्थः । [3]**भूय इत्यादि** । सांख्यादिमतदूषणेभ्योऽधिकानि भूयांसि दूषणानि च सन्तीत्यर्थः । तदनभ्युपगतब्रह्माज्ञानानेकानुपपन्नार्थस्वीकारादिति भावः । शङ्करमतनिरसनमुपसंहरति **तदेवमि**ति । प्रपञ्चस्य मिथ्यात्वासंभवात् सत्यत्वाच्च ब्रह्म जगद्भ्रमाश्रयो नेति सिद्धमित्यर्थः ॥

मृत्पिण्डस्य घटशरावादिरूपेणेव, समुद्रस्य फेनतरङ्गबुद्बुदरूपेणेव च सद्रूपब्रह्मणश्चिदचिदीश्वरप्रपञ्चरूपेण परिणाम इति **यादवप्रकाश**पक्षं निरस्यति **न चे**ति । **निर्विकारत्वे**ति। ब्रह्मणा निर्विकारत्वस्य क्लेशकर्मादिदोषराहित्यस्य स्वाभाविकनित्यैश्वर्यस्य च श्रुतिप्रतिपन्नतया तद्विरोधादित्यर्थः। उपाध्युपहितमेव ब्रह्म जगदुपादानम् ; उपाधेरेव परिणामाभ्युपगमात् ब्रह्मणः स्वरूपेण परिणामविरहान्न निर्विकारत्वादिविरोध इति भास्करपक्षं निरस्यति **नापी**ति । **शक्त्युपधानेने**ति । कार्योपयोगिविशेषणभूतोपाध्युपधानेनेत्यर्थः । कार्योपयोगि विशेषणं हि शक्तिः। **स्वरूपानतिरेकादि**ति। जगद्रूपेण परिणममानोपाधेर्ब्रह्मस्वरूपाभिन्नत्वे ब्रह्मण एव स्वरूपेण परिणामप्रसङ्गेन निर्विकारत्वादिविरोध इति भावः। **असन्मतापातादि**ति। **असन्मते** ब्रह्माभिन्नप्रकृतिरूपशक्त्युपहितब्रह्मण एव जगदुपादानत्वाभ्युपगमादिति भावः । **व्यावृत्तमि**ति । ईश्वराद्व्यावृत्तमित्यर्थः । सन्मात्रमेव ब्रह्म; न त्वीश्वरः इति पक्षोऽपीश्वरस्यैव ब्रह्मत्वसाधनान्निरस्त इत्यर्थः । **पक्षत्रयेऽपि**=उक्तशङ्करयादवभास्करपक्षत्रयेऽपि । **लक्षणादिभिश्चे**ति । बाधार्थसामानाधिकरण्यत्वेन

---

1 न चेति । निर्गुणवादं निरस्य उभयलिंग परमेश्वर इत्युक्तम् । अथाविद्यातिरोधानादिकं निरस्तम् । ततो जगतो मिथ्यात्वात् तज्ज्ञानस्य भ्रमत्वं दुर्वारमिति शंकाशमनम्। तदेवं शांकरनिरासोपसंहारः।

2 यादवप्रकाशपक्षपरतया व्याख्यानेऽपि भास्करपक्षपरताऽपि स्वीकार्या । न्यायकुसुमाञ्जलौ, "ब्रह्मपरिणतेरिति भास्करगोत्रे युज्यते" इति स्वरूपपरिणामवादो भास्करस्योक्तः । जीवस्योपाधिविशिष्टरूपत्वेन तत्रोपाध्यंशे परिणामेऽपि, उपाधेः प्रकृत्यादेरचेतनस्य ब्रह्मभिन्नत्वे द्वैतापत्त्या तस्य ब्रह्मपरिणामत्वं तन्मते स्थितमेव। शक्तिदूषणं यादवमतदूषणमिति दीपादौ विशदम् । उभयदूषणमेकहेलयेति वाऽस्तु । 3. सांख्यशांकरोभयसंमतेऽर्थे सांख्यापेक्षया शांकरेऽधिकदूषणानि ;

निर्भेदे सति [1]दौष्कर्यात् विधाय जगदात्मताम् । तत्रैव तन्निषेधोऽयमिति बालिशजल्पितम् ॥

करण्यादौ लक्षणाध्याहारादेरवश्यम्भावादिति भावः । दूषणान्तरमप्याह निर्भेद इति । "सदेव सोम्येदमग्र आसीत्" इति निर्भेदं सद्रूपं ब्रह्म प्रतिपाद्य तस्यैव सतः, "बहु स्यां प्रजायेय" इत्यादिना विचित्रस्थिरत्नसरूपेण बहुभवनप्रतिपादनद्वारा जगदात्मत्वादिकं मानान्तराप्राप्तत्वाद्दुरारोहं महता यत्नेन प्रतिपाद्य श्रुतिः स्वयमेव तमर्थं निषेधतीत्युपहास्यमित्यर्थः । शङ्करादिपक्षत्रयेऽपि सामानाधिकरण्यानुपपत्तिं दर्शयति सामानाधिकरण्यं हीति । मृषावादिनां मते जडेशभेदो जडजीवभेदो जीवेशभेदो जडाना मन्योन्यभेदो जीवानामन्योन्यभेद इति पञ्चापि भेदाः सामानाधिकरण्येन निरस्यन्ते इति प्रवादः । तत्र च जडात्मकः प्रपञ्चः सर्वोऽपि ब्रह्मणि शुक्तौ कलधौतवदध्यस्तः स्वरूपतो मिथ्याभूतः । "यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् । उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेव-मजोऽयमात्मा", "अत एव चोपमा सूर्यकादिवत्" इति श्रुतिसूत्रस्वारस्यात् बिम्बभूत ईश्वरः प्रतिबिम्ब भूता जीवा इति विवरणानुसारिणां मतम् । 'घटसम्पृक्तमाकाशम्; नीयमाने घटे यथा । घटो नीयेत नाकाशं तद्वज्जीवो नभोपमः ॥" इति श्रुतिस्वारस्यानुसारेणाविद्यया अन्तःकरणेन वा अवच्छिन्ना जीवा इति वाचस्पत्यनुसारिणः । तत्र जीवाः प्रतिबिम्बा इति पक्षे बिम्बप्रतिबिम्बयोरैक्यासम्भवात्, प्रतिबिम्बानाञ्च परस्परमैक्यासम्भवात्, जीवानामन्योन्यभेदाभावस्य जीवब्रह्मणोश्चाभेदस्यासम्भवात् सामानाधिकरण्यानुपपत्तिः । तथा अवच्छिन्नजीवत्वपक्षेऽपि जीवब्रह्मणोर्घटाकाशमहाकाशस्थानीययोर्घट मठाकाशस्थानीयानां च जीवानामन्योन्यमैक्यासम्भवात् तत्तदैक्यबोधकसामानाधिकरण्यानुपपत्तिः । तथा घटाकाशस्थानीयस्य (यत्वे?) जीवस्य तदुपाधिभूतघट दिस्थानीयस्याविद्यान्तःकरणादेर्घटाकाशस्थानी-येन तदुपहितेन जीवेनैक्यासम्भवः । तथा घटादिस्थानीयानां जीवोपाधिभूताविद्यान्तःकरणादीनां परस्परमैक्यासम्भवः । एवञ्चैषामैक्यं न मुख्यं सम्भवति । गौणमपि नैकरूपं वक्तुं शक्यमित्याह

परैरङ्गीकृते, "ज्योतींषि विष्णुः" इत्यादौ ज्योतिर्भ्रमाधिष्ठाने ज्योतिश्शब्दस्य लक्षणाया वा, 'इति भ्रमा-धिष्ठानम्' इत्यध्याहारस्य वाऽऽवश्यकत्वादिति भावः। दूषणान्तरमप्याह निर्भेद इति । "सदेव सोम्येदमग्र आसीत्" इति निर्भेदतया प्रतिपादिते सद्रूपे ब्रह्मणि, "बहु स्यां प्रजायेय" इत्यादिना विचित्रजगद्रूपेण बहुभवनप्रतिपादनद्वारा जगदात्मकत्वं प्रमाणान्तराप्रतिपन्नतया दुरारोहं महायत्नेन प्रतिपाद्य श्रुतिः स्वयमेव तमर्थं निषेधतीति मूर्खभाषितमित्यर्थः । उक्तं बहुविधसामानाधिकरण्यवैरूप्यमेव विवृणोति सामानाधिकरण्यमिति । मृषावादिमते जडेशभेदादीनां पञ्चानामपि सामानाधिकरण्येन निरसनमिति प्रवादः। बिम्बभूत ईश्वरः प्रतिबिम्बभूता जीवा इति विवरणानुसारिणः। अविद्यया अन्तःकरणेन वाऽवच्छिन्ना जीवा इति वाचस्पत्यनुसारिणः। तत्र जीवाः प्रतिबिम्बा इति पक्षे बिम्बप्रतिबिम्बयोः प्रतिबिम्बानां परस्परञ्च अभेदासंभवात , अवच्छिन्नजीवत्वपक्षेऽपि घटाकाशमहाकाशयोः घटाकाशमठाकाशादीनामन्योन्यञ्चैक्या

भूयः = शांकरमात्रसंमतेऽर्थान्तरे च दूषणानीत्यर्थः। 1 दौष्कर्यादितीदं बालिशभाषितमित्यत्र हेतुः।

**सामानाधिकरण्यं हि न शुक्तिकलधौतयोः । न च द्विचन्द्रयोर्नापि बिम्बतत्प्रतिबिम्बयोः ॥**
**न घटाकाशयोर्नापि घटद्वितयरन्ध्रयोः । तथैव न घटाकाशमहाकाशादिकेष्वपि ॥ ७१ ॥**
**एवं न पिण्डघटयोर्न वा घटशरावयोः । न च पिण्डांशयोर्नापि घटयोश्च परस्परम् ॥ ७२**

---

**सामानाधिकरण्यं हि न शुक्तिकलधौतयोरिति** । ततश्चाध्यस्तस्य प्रपञ्चस्याधिष्ठानेन सामानाधिकरण्यं न सम्भवतीत्यर्थः । **न च द्विचन्द्रयोरिति** । चन्द्रप्रतिबिम्बयोरित्यर्थः । ततश्च प्रतिबिम्बजीवत्वपक्षे जीवानां परस्परमैक्यं न संभवतीत्यर्थः । **नापि बिम्बेति** । ततश्च बिम्बप्रतिबिम्बस्थानीययोर्जीवेश्वरयोरैक्यं न संभवतीत्यर्थः । न च बिम्बतत्प्रतिबिम्बयोरैक्यं मुखस्थले दृष्टमिति वाच्यम्; तत्र मुखस्यैव दर्पणप्रतिहतनायनरश्मिगृह्यमाणस्य प्रतिबिम्बत्वसम्भवेऽपि नायनरश्म्यविषयब्रह्मणि तन्न्यायासंभवेन भेदस्यैवाश्रयणीयत्वादिति भावः ॥ **न घटाकाशयोरिति** । ततश्च घटस्थानीयस्य उपाधिभूतान्तःकरणस्य जडस्य, अवच्छिन्नाकाशस्थानीयस्य जीवस्य च भेदात् सामानाधिकरण्यं न सम्भवतीत्यर्थः । **नापि घटद्वितयेति** । अवच्छिन्नजीवपक्षेऽवच्छिन्नाकाशस्थानीययोर्जीवयोरैक्यं न सम्भवतीत्यर्थः; आकाशांशयोर्भिन्नत्वादिति भावः । **तथैवेति** । अवच्छिन्नपक्षे घटाकाशमहाकाशस्थानीययोर्जीवब्रह्मणोः सामानाधिकरण्यं न सम्भवतीत्यर्थः । **भेदाभेदवादिमतं** दूषयति **एवं न पिण्डघटयोरिति** । तन्मते पिण्डस्थानीयं ब्रह्म, घटस्थानीयाश्चिदचिदीश्वराः । ततश्च यथा **न पिण्डघटयोः** सामानाधिकरण्यम्, पिण्डो घट इत्यव्यवहारात्; तथा घटस्थानीयानां चिदचिदीश्वराणां पिण्डस्थानीयेन ब्रह्मणा सामानाधिकरण्यं न स्यादित्यर्थः । न वा घटशरावयोरिति । ततश्च घटशरावस्थानीययोर्जीवेश्वरयोरभेदाभावात् सामानाधिकरण्यं न स्यादित्यर्थः । **न च पिण्डांशयोरिति** । मृत्पिण्डस्थानीयकारणावस्थब्रह्मांशभूतानां चिदचिदीश्वराणामैक्यं न सम्भवतीत्यर्थः । इदञ्च **भास्करपक्षदूषणम्** । जडानां वियदादीनां ब्रह्मपरिणामभूतानां परस्परमैक्यानुपपत्तिरित्याह **नापि घटयोरिति** । ननु व्यक्तिभेदेऽपि मृत् घटः, मृत् शरावः,

संभवात् सामानाधिकरण्यानुपपत्तिरित्याह **सामानाधिकरण्यं हीति** । **नापि बिम्बेति** । ततश्च बिम्बप्रतिबिम्बस्थानीययोः जीवेश्वरयोरैक्यं न संभवतीति भावः । **यद्यपि सिद्धान्ते** दर्पणादिप्रतिहतनायनरश्मिभिर्गृह्यमाणस्य मुखादेरेव प्रतिबिम्बतया बिम्बप्रतिबिम्बयोरैक्यमस्त्येव; तथापि परमते अचाक्षुषस्यापि प्रतिबिम्बस्वीकारात् बिम्बप्रतिबिम्बयोः भेदाभ्युपगमाच्चोक्तरीत्यसंभवात् बिम्बप्रतिबिम्बयोरैक्यं न संभवतीति भावः । **नापि घटद्वितयरन्ध्रयोरिति** । आकाशांशयोर्भिन्नत्वात् निरवयवाकाशपक्षेऽप्यौपाधिकभेदाङ्गीकाराच्चावच्छिन्नाकाशस्थानीययोर्जीवयोरैक्यं न संभवतीति भावः ।

**भेदाभेदवादियादवप्रकाशमतं** दूषयति **एवं न पिण्डघटयोरिति** । उपाध्युपहितब्रह्मकारणतावादिभास्करमतं दूषयति **न च पिण्डांशयोरिति** । यथा मृत्पिण्डावयवयोः परस्परमैक्यं न संभवति, तथा कारणावस्थोपाध्युपहितब्रह्मणो विशेषणविशेष्यांशयोरुपाधिब्रह्मणोरैक्यं न संभवतीति भावः । पुनरपि यादवप्रकाशमते एकमृत्पिण्डपरिणामभूतानामनेकेषां घटानामिव सन्मात्रब्रह्मपरिणामभूतानां जीवानां परस्परमैक्यासंभवाज्जीवानां परस्परसामानाधिकरण्यं न संभवतीत्यभिप्रायेणाह **नापि घटयोरिति** । ननु घटः शरा-

**मृदाद्याकारतो या तु सामानाधिकरण्यधीः । व्यक्तिभेदेऽपि जात्यादिनिमित्तैक्यनिबन्धना ॥**

अक्लिष्टत्वेऽपि पक्षाणां नैयायिकादिमतमेव साधीयः । तथाहि—

**वाचां परिगृहीतानां यूपादित्यादिवाक्यवत् । व्याहतार्थाभिधायित्वात् [1]वरं क्लिष्टार्थकल्पना ॥**

भिन्नाभिन्नत्वं भवदभिमतं विरुद्धमिति वक्तुमपि लज्जामहे । तथापि ब्रूमः—अभेदो हि भेदाभावः । अतस्तच्च तदभावश्च कथमेकत्रैकदैवाध्यवस्येम? भेदाभावातिरिक्तस्त्वभेदो नास्त्येव ॥ जात्याकारेणाभेद इति चेत्—तर्हि जात्यादावभेदः, व्यक्त्यादिषु भेद इति नैकस्य भिन्नाभिन्नत्वम् । जातिव्यक्त्यादिकमपि मिथोभिन्नाभिन्नमिति चेत्—इदं स्वरूपेणैव वा? आकारान्तरेण वा?

---

खण्डो गौः, मुण्डो गौः, इत्यैक्यप्रतीतेर्व्यक्तीनामप्यैक्यमङ्गीकार्यमित्यत आह **मृदाद्याकारत** इति । **अक्लिष्टत्वेऽपीति** । नैयायिकमते अभेदश्रुतीनां क्लेशोऽस्ति । अर्थे न व्याहतिः । भेदाभेदवादिनां मते श्रुतेः स्वारस्यमस्ति ; अर्थस्तु व्याहत इति भावः । **परिगृहीतानामिति** प्रमाणत्वेन **परिगृहीताना**मित्यर्थः ॥ ननु नाभेदो भेदाभावः ; येन सामानाधिकरण्यविरोधः स्यादित्याशङ्क्याह **भेदाभावातिरिक्तस्त्विति** । अतिरिक्तत्वे परिभाषामात्रापत्तेरिति भावः । **जातिव्यक्त्यादिकमपीति** । ततश्च

---

वश्च मृद्रूपत्वैक्य एवेति व्यवहारदर्शनात् घटशरावादीनामप्यैक्यमङ्गीकार्यमित्यत आह **मृदाद्याकारत** इति । **सामानाधिकरण्यधीः**=एक एवेत्याकारिका धीः । **जात्यादिनिमित्तैक्यनिबन्धनेति** । एक एवेत्यत्रैकशब्दः एकाकारविशिष्टपर इति भावः । **अक्लिष्टत्वेऽपि पक्षाणामिति** । शङ्करयादवप्रकाशभास्कर-पक्षाणामभेदश्रुतिनिर्वाहविषये क्लेशराहित्येऽपीत्यर्थः । **अपिना** भेदाभेदव्यतिरिक्तपक्षे ईषत् क्लेशोऽप्यस्तीति सूच्यते । **परिगृहीतानामिति** । प्रमाणत्वेन परिगृहीतानामित्यर्थः । **वाक्यवदिति** । वाक्यस्येवेत्यर्थः । **व्याहतेत्यादि** । अयं भावः—"इदं सर्वं यदयमात्मा" इत्याद्यभेदश्रुतेरध्यस्ताधिष्ठानयोस्तादात्म्यात् यथाश्रुतार्थपरत्वमेव सामञ्जस्यं शङ्करमते वर्ण्यते । भेदाभेदपक्षे च, नीलो घट इत्यादिवदेवोपपत्तिः स्पष्टा । परन्तु शङ्करमते प्रत्यक्षादिप्रमाणैः सत्त्वेनावगतस्य प्रपञ्चस्य ब्रह्मण्यध्यस्तत्वेन मिथ्यात्वाभ्युपगमो व्याहतः, भेदाभेदयोर्व्याहतिश्च स्पष्टैव । नैयायिकमते तु प्रपञ्चस्य परमात्माधीनव्यापारवत्त्वमेव बोद्धयत इत्यङ्गी-कारान्नार्थव्याहतिः ; परन्तु क्लिष्टार्थकल्पनामात्रम् । अतो नैयायिकमतमेव शङ्करादिमतापेक्षया ज्यायः । व्याहतार्थत्वे हि वाक्यस्यैवाप्रामाण्यं स्यात्, क्लिष्टार्थकल्पनायां त्वमुख्यार्थपरतामात्रम् । न हि, आदित्यो यूप इति वाक्यस्याक्लेशाय यूपादित्यैक्यपरत्वमङ्गीक्रियते ; किन्तु गौणार्थपरत्वमेवेति ॥

नन्वभेदो न भेदाभावः येन विरोधः स्यात्, किन्तु धर्मान्तररूप एवेत्यत्राह **भेदाभावातिरिक्त** इति । **नास्त्येवेति** । इदमुपलक्षणम् ; अतिरिक्तत्वे परिभाषामात्रमेव स्यात् ; सामानाधिकरण्य-निर्वाहकत्वञ्च न स्यादित्यपि बोद्धयम् । **जातिव्यक्त्यादिकमपीति** । तथाच जातिगताभेदस्य व्यक्तिगतभेदस्य चैकनिष्ठत्वसंपत्त्या भिन्नाभिन्नत्वमुपपद्यत इति भावः । **इदं**=जातिव्यक्त्योर्भिन्न-त्वम् । **स्वरूपेणैवेति** । आकारभेदमन्तरेणैवेत्यर्थः । **आकारान्तरेणेति** । भिन्नाकारेणेत्यर्थः ।

---

1 अत एव, "असिना तत्त्वमसिना परजीवप्रभेदिना । विद्यारण्यमहारण्यमक्षोभ्यमुनि-रच्छिनत्" इति माध्यस्थ्ये श्रीदेशिकश्लोकः । चिदचिद्भेदप्रदर्शिबहुश्रुतियुक्तिप्रत्यक्षविरोधात् ।

पूर्वत्र विरोधः। उत्तरत्र अनवस्थादिदोषः। सप्तभङ्गीभक्तान् प्रति चोद्यते—

जातिगतभेदस्य व्यक्तिगतभेदस्य चैकव्यक्तिनिष्ठत्वात् भिन्नाभिन्नत्वमायातीति भावः। पूर्वत्रेति। येन जातिव्यक्तित्वाकारेण भेदः, तेनैवाऽऽकारेणाभेदे विरोध इत्यर्थः। उत्तरत्रेति। जातिव्यक्त्योर्जातिव्यक्तित्वात्मना भेदः, भावत्वात्मना अभेद इत्युक्ते भावत्वस्यापि जातिव्यक्त्योश्च केनाकारेणेति पृच्छायां तत्राप्याकारान्तरमुपन्यसनीयमित्यनवस्थेत्यर्थः॥ सप्तभङ्गीभक्तानिति। स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्यम्, स्यादस्ति चावक्तव्यम्, स्यान्नास्ति चावक्तव्यम्, स्यादस्ति च नास्ति चावक्तव्यमिति। स्याच्छब्दः कथञ्चिदर्थेतिङन्तप्रतिरूपः सत्त्वम्, असत्त्वम्, सदसत्त्वम्, सदसद्विलक्षणत्वम्, सत्त्वे सति सदसद्विलक्षणत्वम्, असत्त्वे सति सदसद्विलक्षणत्वम्, सदसत्त्वे सति सदसद्विलक्षणत्वमिति सप्त भङ्गान् आचक्षते जैनाः। ते किलैवं वर्णयन्ति— तत्रैकान्त्यं वदन् प्रष्टव्यः— घटस्य किं सत्त्वं स्वभावः?

पूर्वत्रेति। आकारभेदमन्तरेण भेदाभेदस्वीकार इत्यर्थः। उत्तरत्रेति। भिन्नाकारेण भेदाभेदस्वीकार इत्यर्थः। अनवस्थादिदोष इति। अयं भावः- आकारभेदेन भेदाभेदयोरविरोधं वदतः कोऽभिप्रायः; व्यक्तित्वभावत्वरूपाकारद्वययोगिन्येकस्मिन् व्यक्तिरूपाश्रये व्यक्तित्वावच्छेदेन जातिभेदः भावत्वावच्छेदेन जातिभेदाभाव इति वा, एकस्मिन् आकारे भेदः आकारान्तरे अभेदः अथाप्याकारद्वययोगिनो भिन्नाभिन्नत्वमुपपद्यत एव; आकारद्वय.तद्वतोर्भिन्नाभिन्नत्वाभ्युपगमादिति वा। नाद्यः; भेद.तदभावयोरवच्छेदकभेदेनाप्येकस्मिन् आश्रयेऽनुपलम्भेनाकारभेदस्य भेदाभेदविरोधनिर्वाहकत्वासंभवात्। भाषितं हि समन्वयाधिकरणे भगवद्भिः, "स्वस्माद्विलक्षणं स्वाश्रयमाकारद्वयं स्वस्मिन् विरुद्धधर्मद्वयसमावेशनिर्वाहकं कथं भवेत्?" इति। व्यासार्यैश्च, "स्वशब्दस्तयमप्याश्रयपरम् भेदाभेदयोरेकाश्रयत्वेन हि विरोधः। अविरोधनिर्वाहकाकारद्वयं हि न भेदाभेदयोराश्रयभूतम्। अतो न तदविरोधनिर्वाहकम्। अग्निगतं पैङ्गल्यमौज्ज्वल्यञ्चाऽऽकारद्वयमग्नौ शीतोष्णत्वरूपविरुद्धधर्मद्वयसमावेशनिर्वाहकं न भवतीत्यर्थः" इति व्याचख्यु॥ अतोऽवच्छेदकभेदेनैकस्मिन् आश्रये न भेदाभेदयोस्संभवः। किञ्च भेदाभेदादिमते भेदाभेदयोरवच्छेदकभेदेन वृत्तेरसंमततया अपसिद्धान्तश्च। उक्तं हि मणिकृता. "न चैवं भेदाभेदः; अवच्छेदकभेदाभ्युपगमात्" इति। द्वितीये आकारद्वय.तद्वतोभिन्नाभिन्नत्वनिर्वाहकमाकारान्तरम्, तस्यापि तथात्वनिर्वाहकमाकारान्तरमित्येवं निर्वाहकपरंपराङ्गीकारेऽनवस्था। रूपद्वय.तद्वतोर्भेदाभेदनिर्वाहकमन्यद्रूपद्वयं-तत्तदाश्रयोर्भेदाभेदनिर्वाहकमेतद्रूपद्वयमित्यङ्गीकारेऽन्योन्याश्रय इति। सप्तभङ्गीभक्तानिति। तरङ्गवज्जृम्भयमाणाः सत्त्वादयः सप्तधर्माः सप्तभङ्गाः, तत्समाहारः सप्तभङ्गी। स्यादस्ति स्यान्नास्ति च नास्ति च, स्यादवक्तव्यं स्यादस्ति चावक्तव्यं स्यान्नास्तिचावक्तव्यं स्यादस्ति च नास्ति चावक्तव्यमिति प्रतिपादिताः सत्त्वमसत्त्वं सदसदात्मकत्वं सदसद्विलक्षणत्वं सत्त्वे सति सदसद्विलक्षणत्वमसत्त्वे सति सदसद्विलक्षणत्वं सदसदात्मत्वे सति सदसद्विलक्षणत्वमित्येते सप्त धर्माः। अत्र स्यादित्येतद्विभक्तिपणिरूपकमव्ययं कथञ्चित्पर्यायम्। ईषत्पर्यायमित्यन्ये। इयञ्च सप्तभङ्गी जैनैरभिधीयते। भेदाभेदवादिनां तन्मतोपजीवित्वत् ते सप्तभङ्गीभक्ता इत्युपालभ्यन्ते। भेदाभेदवादिप्रस्तावेऽनेकान्तवादित्वसामान्यादुपस्थितान् जैनान् प्रत्येव वेदमभिहितम्।

**यदि सत्त्वादनैकान्त्यं विमतस्यान्यवन्मतम्। तस्यैकान्त्ये त्वनेकान्त्यमनैकान्त्ये न नः क्षतिः ॥**
**विशेषणविशेष्यत्वप्रतीतेर्नैकधीः क्वचित्। एकोऽयं घट इत्यादिरेको दण्डीति बुद्धिवत् ॥ ७६॥**

---

इत असत्त्वमिति । न तावत् अस्तित्वं स्वभावः; घटोऽस्तीत्यनयोः पर्यायतया युगपत्प्रयोगायोगात्; नास्तीति प्रयोगविरोधाच्च । एवमन्यत्रापि योज्यम् । यथोक्तम्, "घटोऽस्तीति न वक्तव्य सन्नेव हि घटो यतः । नास्तीति च न वक्तव्यं विरोधात् सदसत्त्वयोः ॥" इति । भेदाभेदवादिभिरपि तन्मतस्यानुसृतत्वात् **सप्तभङ्गीभक्तान्** इत्युपालम्भः । यद्वा(?) तान् प्रत्येव वा तदुक्तिः । विमतमनैकान्तिकं सत्त्वात् घटवदिति घटस्यानेकान्तत्वं सिद्धवत्कृत्य तद्दृष्टान्तेन यदि विमतस्यानैकान्तिकत्वं साध्यते, तदा अनैकान्तिकत्वरूपे साध्येऽनैकान्त्यमस्ति वा, न वा ? यदि नास्ति; तदा तस्मिन् साध्याभाववति सत्त्वरूपहेतोः सत्त्वात् व्यभिचारः। अनैकान्त्येऽप्यनैकान्त्यरूपसाध्यसत्त्वे सर्वं वस्त्वनेकान्तमिति त्वदभिमतार्थासिद्धेर्न **नः क्षति**रित्याह **यदि सत्त्वादि**ति । ननु जातिव्यक्त्योर्भेदाभेदे चत्वारो हेतवः परोक्ताः । प्रथमपिण्डग्रहणेन व्यावृत्तानुवृत्तत्वरूपभेदकाकाराग्रहणादभेदेन ग्रहणम्, **एको घट** इत्येकशब्दानुविद्धप्रत्ययः, नीलो घट इति, मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यप्रयोगः, सहोपलम्भनियमश्चेति । अतो भेदाभेदौ अवश्याभ्युपगन्तव्यावित्याशङ्क्य प्रथमपिण्डग्रहणे अभेदेन ग्रहणं प्रत्याचष्टे **विशेषणविशेष्यत्वप्रतीते**रिति । इदमित्थमिति सर्वप्रतीत्युपजननादिति भावः । द्वितीयं हेतुं प्रतिवक्ति **एकोऽयमि**ति । तृतीयं प्रतिक्षिपति

---

**यदी**ति । विमतमनैकान्तिकं सत्त्वात् घटवदिति घटस्यानेकान्तत्वं सिद्धवत्कृत्य तद्दृष्टान्तेन यदि विमतस्यानेकान्तत्वं साध्यते; तदा अनैकान्तिकत्वरूपे साध्ये अनैकान्त्यमस्ति वा न वा । नास्ति चेत्, तत्र सत्त्वरूपहेतोस्सत्त्वाद् व्यभिचारः । अनैकान्त्येऽप्यनैकान्त्यरूपसाध्यसत्त्वे प्रपञ्चस्यैकान्त्याविरोधात् नास्माकं क्षतिरित्यर्थः । अयं भावः—एकान्तत्वं हि एकमात्रस्वभावत्वम् । तत्र प्रपञ्चस्य सत्त्वमात्रस्वभावत्वादेकान्तत्वमस्माभिरुच्यते । अनेकान्तवादिभिस्त्वेकमात्रस्वभावत्वाभावरूपमनेकान्तत्वं साध्यते । तत्रोक्तसाध्येऽप्यनेकान्तत्वाभ्युपगमे तत्र सत्त्वमात्रस्वभावत्वाभावेनासत्त्वस्याप्यभ्युपगमादेकान्तत्वाभावाभावरूपैकान्तत्वसिद्ध्या नास्मत्पक्षक्षतिरिति । ननु गौरिति प्रथमपिण्डग्रहणे जातिव्यक्त्योरभेदेनैव ग्रहणम् । अनुवृत्तत्वव्यावृत्तत्वरूपव्यावर्तकाकाराप्रतीतेः । ततश्च प्रतीतिबलाच्च भेदाभेदयोर्विरोधः । "न हि दृष्टेऽनुपपन्नं नाम" इति हि न्यायविदः इत्यत आह **विशेषणे**ति । **नैकधीरि**ति । एकमिति धीरेकधीः—अभेदधीरित्यर्थः । **क्वचिदि**ति । प्रथमपिण्डग्रहण इत्यर्थः । गौरिति प्रथमपिण्डग्रहणेऽपि विशेषणविशेष्यभावेनैव हि गोत्वपिण्डयोर्भानम् । विशेषणविशेष्यभावश्च भेदरूप एवेति तत्रापि नाभेदेन ग्रहणमिति भावः । ननु तथाप्येकोऽयं घट इत्येकशब्दानुविद्धप्रत्ययात् घटत्वघटयोरभेद आवश्यक इत्याशङ्क्याह **एकोऽयमि**ति । **एको दण्डीति बुद्धिवदि**ति । अत्र हि विशेष्यैक्यनिबन्धनैवैकशब्दानुविद्धप्रतीतिः; न तु दण्डदण्डिनोरैक्यनिबन्धना; तद्वदित्यर्थः । ननु तथापि भिन्नयोर्मत्वर्थीयप्रत्ययसापेक्षमेव सामानाधिकरण्यं दृश्यते ; यथा दण्डी देवदत्त इति । जातिव्यक्त्योस्तु घटोऽयमिति मत्वर्थीयनिरपेक्षमेव सामानाधिकरण्यमिति तयोरभेद आवश्यक इत्यत आह

परतन्त्रस्वभावत्वात् मत्वर्थीयानपेक्षता । सहधीनियमोऽप्येवं स हि भेदैकसाधकः ॥ ७७ ॥
असिद्धिश्च विना द्रव्यं गन्धादेरुपलम्भनात् । आलोकाध्वान्तरूपादावनैकान्त्यश्च दृश्यताम् ॥
तदयं संग्रहः— नाभेदधीः प्राक् वैशिष्ट्यात् धर्म्यैक्यादेकतामतिः ।
मत्वर्थीयः पृथक्सिद्धे सहभावोऽपि भेदतः(कः) ॥ ७९ ॥

जगद्ब्रह्मणोरत्यन्तभेदे कथं त्रिविधपरिच्छेदराहित्यम्? इत्थम् । तत्र देशकालपरिच्छेदरा-

---

परतन्त्रस्वभावत्वादिति। अपृथक्सिद्धत्वादित्यर्थः। चतुर्थं प्रतिवक्ति सहधीनियमोऽप्येवमिति। [एवम्?] परतन्त्रस्वभावत्वादेवेत्यर्थः। द्वयोरेव सहभावात् सहोपलम्भो द्वित्वसाधकत्वात् प्रत्युत विरुद्ध इत्याह स हि भेदैकसाधक इति । आलोकाध्वान्तरूपादाविति । अन्धकारव्यतिरिक्तघटादिगतरूपादेरालोकेन सहैव भाननियमादालोकपटरूपयोश्चाभेदाभावाद्व्यभिचार इत्यर्थः। इदञ्च त्रिगुणपरिच्छेदे, "भास्वराध्वान्ताभास्वररूपाभ्यां व्यभिचाराच्च" इत्यत्र व्याख्यातम् । नाभेदधीरिति । प्राक् प्रथमतः अभेदधीर्नास्ति; इदमित्थमिति विशिष्टतया प्रतीतेरित्यर्थः। मत्वर्थीय इति। मत्वर्थीयः पृथक्सिद्ध एव । अपृथक्सिद्धे तु मत्वर्थीयोऽनपेक्षित इति भावः। सहभाव इति । सहोपलम्भनियमोऽपि

---

परतन्त्रस्वभावत्वादिति । अपृथक्सिद्धविशेषणत्वादित्यर्थः । न त्वभेदादिति भावः। ननु तथापि सहोपलम्भनियमाज्जातिव्यक्त्योरभेदः स्यादित्याशङ्क्याह सहेति। एवमिति । अपृथक्सिद्धविशेषणत्वनिबन्धन इत्यर्थः। तथाचाप्रयोजकतेति भावः। भेदैकसाधक इति । साहित्यस्य भेदघटितत्वादिति भावः। तथाच जातिर्व्यक्त्यभिन्ना, स्वोपलम्भत्वव्यापकव्यक्त्युपलम्भसाहित्यकत्वादिति साधने विरुद्धत्वम् ; जातिव्यक्त्योरभेदे जात्युपलम्भे व्यक्त्युपलम्भसाहित्यासंभवात् । तत्साहित्यं हि तद्भिन्नत्वे सति तदधिकरणवृत्तित्वम् । स्वस्मिन् स्वसाहित्याव्यवहारात् । न हि जातिव्यक्त्योरभेदे जात्युपलम्भे व्यक्त्युपलम्भभेदः संभवति । नन्विह तत्साहित्यं तदधिकरणवृत्तित्वमात्रमेव ; अतो नोक्तदोष इत्याशङ्क्याह असिद्धिश्चेति। गन्धादिराश्रयाभिन्नः सहोपलम्भनियमादिति साधने असिद्धिः ; आश्रयं विनाऽपि गन्धादेरुपलम्भादित्यर्थः। इदमुपलक्षणम्—अन्यथाख्यातिपक्षे रजतत्वादेः शुक्त्यादावुपलम्भादसिद्धिः स्यादित्यपि बोध्यम् । आलोकाध्वान्तरूपादाविति । यत्र येन सहोपलम्भनियमः, तत्र तदभेद इति व्याप्तौ आलोकेन सहोपलम्भनियमवति तमोव्यतिरिक्तद्रव्यवृत्तिरूपे आलोकाभेदविरहात् व्यभिचार इत्यर्थः। प्रागिति । प्रथमपिण्डग्रहणवेळायामित्यर्थः। वैशिष्ट्यादिति। विशेषणविशेष्यभावेनैव प्रतीतेरित्यर्थः। एकतामतिः=एकशब्दानुविद्धप्रत्ययः। पृथक्सिद्ध इति। अपृथक्सिद्धे न मत्वर्थीयापेक्षेति भावः। सहभावः=सहोपलम्भनियमः, भेदकः=भेदसाधकः। भेदत इति पाठे भेदप्रयुक्त इत्यर्थः। भेदकार्यतया भेदव्याप्य इति पर्यवसितोऽर्थः। अत्यन्तभेद इति। अभेदासमानाधिकरणभेद इत्यर्थः। कथं त्रिविधपरिच्छेदराहित्यमिति। अभेदरूपवस्तवपरिच्छेदविरहादिति भावः। देशकालेत्यादि । द्रव्यवृत्त्यत्यन्ताभावनिरूपितसंयोगसंबन्धावच्छिन्नप्रतियोगित्वं देशपरिच्छेदः ; सर्वद्रव्यसंयोगित्वया तद्राहित्यमस्ति । कालवृत्त्यत्यन्ताभावनिरूपितकालिकसंबन्धावच्छिन्नप्रतियोगित्वं कालपरिच्छेदः ; सर्व-

भावस्तु सर्वदेशकालव्याप्तत्वात् सिद्धः। वस्तुपरिच्छेदराहित्यं तु न सर्वतादात्म्यम्, सर्वाध्या-साश्रयत्वम्, स्वेतरसमस्तमिथ्यात्वादिकं वा; प्रागुक्तदूषणशतोन्मेषात्। अतोऽन्यथैतन्निर्वाह्यम्, तत्रैवमुक्तं जन्माद्यधिकरणे विवरणकारैः "वस्तुपरिच्छेदो वस्तुपरिमाणम्। देशपरिच्छेदस्तद्धेतुकः" इति। अयमेवार्थो वेदार्थसंग्रहविवरणेऽप्युक्तः। वरदनारायणभट्टारकैस्त्वेवमुक्तं न्यायसुदर्शने, "वस्तुपरिच्छेदो नाम इयद्गुणक इयद्विभूतिमानित्येवंविधः। तद्रहितं ब्रह्म। वस्त्वन्तरभावो वा वस्तुपरिच्छेदः। तद्रहितञ्च ब्रह्म। ब्रह्मव्यावृत्तस्य सर्वस्य ब्रह्मशरीरत्वात् तद्व्यतिरिक्तं किञ्चि-दपि नास्ति" इति। अयमसौ न भवतीति व्यवहारो न तस्यामवस्थायां प्रवर्तते इत्यर्थः। तथा च भाष्यकारः, "ब्रह्मव्यतिरिक्तवस्त्वन्तराभावात्" इति। अयमेवार्थो नारायणार्यैरप्युक्तः "गुणैरियत्ता-राहित्यात् वस्तुना अपरिच्छिन्नत्वञ्चावगम्यते" इति। अत्र "इयद्गुणकः" इत्यादिपक्ष एव [1]प्रायः

भेदप्रयुक्त इत्यर्थः॥ **वस्तुपरिमाणमिति**। इयदिति निर्देशार्हत्वमित्यर्थः। **वस्त्वन्तरभाव इति**। **वस्त्वन्तरसद्भाव** इत्यर्थः। **व्यावृत्तस्येति**। ब्रह्मव्यतिरिक्तस्येत्यर्थः। **न तस्यामवस्थायामिति**। "यत्र त्वस्य सर्वमात्मैवाभूत्" इत्युक्तब्रह्मात्मकत्वाविर्भावदशायामित्यर्थः। **ब्रह्मव्यतिरिक्तवस्त्वन्तरा-भावादिति**। प्रकृत्यधिकरण इति शेषः। **इयद्गुणक इत्यादिपक्ष एवेति**। परममहत्परिमाणाश्रये स्वशेषभूतचिदचिद्रूपवस्त्वन्तरशालिनि ब्रह्मणि वस्तुपरिमाणस्य वस्त्वन्तराभावस्य वा वस्तुपरिच्छेदाभावस्य बुद्धौ निःशङ्कमनारोहादिति भावः। **इयद्गुणक** इति पक्षस्य वस्तुपरिच्छेदशब्दार्थत्वं पक्षान्तरस्य

कालवर्तितया तदभाववत्त्वमित्यर्थः। ननु किञ्चिद्वस्तुतादात्म्याभावो वस्तुपरिच्छेदः। तदभावश्च सर्व-तादात्म्यपर्यवसितः। अथवा किञ्चिद्वस्त्वध्यासानधिष्ठानत्वं वस्तुपरिच्छेदः; तदभावः सर्वाध्या-साधिष्ठानत्वपर्यवसितः। यद्वा सत्यवस्तुप्रतियोगिकभेदो वस्तुपरिच्छेदः; तदभावः स्वेतरसमस्तमिथ्यात्व-पर्यवसितः। अथवा नित्यवस्तुप्रतियोगिकभेदो वस्तुपरिच्छेदः, तदभावः स्वेतरसमस्तानित्यत्वपर्यवसितः। एवं वस्तुपरिच्छेदराहित्यं ब्रह्मण्युपपद्यत एवेत्याशङ्क्याह **वस्त्विति**। **वस्तुपरिमाणमिति**। वस्तुगतेयत्ता अल्पपरिमाणवत्त्वपर्यवसिता। **देशपरिच्छेदस्तद्धेतुक** इति। अल्पपरिमाणत्वे हि कतिपयद्रव्या-संयोगस्यावश्यकतया देशपरिच्छेदः स्यादिति भावः। **वस्त्वन्तरभाव** इति। अपृथक्सिद्धिरहित-वस्त्वन्तरसद्भाव इत्यर्थः। **ब्रह्मव्यावृत्तस्येति**। ब्रह्मव्यतिरिक्तस्येत्यर्थः। **तद्व्यतिरिक्तं**=ब्रह्मापृथक्-सिद्धविशेषणताराहितम्। **तस्यामवस्थायामिति**। ब्रह्मापृथक्सिद्धविशेषणताराहितं किञ्चिदपि नास्तीत्येवं-विधनिर्णयदशायामित्यर्थः। **भाष्यकार** इति। प्रकृत्यधिकरण इत्यादिः। **इयद्गुणक इत्यादिपक्ष एवेति**। वस्तुपरिच्छेदशब्देनाल्पपरिमाणत्वविवक्षायां तद्राहित्यं परममहत्परिमाणवत्त्व एव पर्यवस्यतीति देशपरिच्छेदराहित्यादनधिकार्थत्वमेव स्यात्। एवमपृथक्सिद्धविशेषणताराहितवस्तुसद्भावो न वस्तुपरि-

1 प्राय इति। इदमत्र बोध्यम्—यथा देशपरिच्छेदः कालपरिच्छेदश्च किञ्चिद्देशकाला-संबन्धित्वम्, तथा वस्तुपरिच्छेदोऽपि किञ्चिद्वस्त्वसंबन्धित्वमेव। तथाच सर्ववस्तुसंबन्धित्वं तदपरिच्छेदः। ईश्वरस्येश्वरत्वोपयोग्याकाराः शेषित्वाधारत्वनियन्तृत्वादयः सर्वेऽप्यविशेषात् सर्व-वस्तुगोचरा इत्युक्तं भवति। तेन सर्वोत्कर्षः सर्वतोभेदश्चैव सिध्यत इति नाभेद-प्रपञ्चमिथ्या-त्वादिसिद्धिरिति।

श्लाध्यः । एतदुक्तं भवति—स्वरूपतो गुणतो विभूतितो वा केनचिदाकारेण कुतश्चिदपकर्षो वस्तुपरिच्छेदः । वस्तुपरिमाणमिति पक्षोऽपि एतदन्तर्गतः । तथा वस्त्वन्तराभावपक्षोऽपि । स हि सर्ववस्तुसामानाधिकरण्यनिबन्धनं सर्वशरीरत्वेन सर्वात्मकत्वमिति नियमनादिगुणकाष्ठैवेति । तदेवमत्यन्तभिन्नानन्तवस्तुसत्त्वेऽपि ब्रह्मणस्त्रिविधपरिच्छेदराहित्यमुपपन्नम् ॥

एतेन पातञ्जलशैवकाणादादीनां निमित्तमात्रवादोऽपि निरस्तः । कारणावस्थसूक्ष्मचिदचिद्वस्तुविशिष्टस्य तस्यैवोपादानत्वश्रुतेः । न च तावता निर्विकारत्वश्रुतिविरोधः; तस्याः सर्वान्तर्यामिशरीर्यंशव्यवस्थितत्वात् । विशिष्टवेषेण विकाराश्रयत्वं त्विष्टमेव, मनुष्यादिशरीर-

---

चात्रान्तर्भावमुपपादयितुमाह **एतदुक्तमिति** । **वस्तुपरिमाणमिति पक्षोऽप्येतदन्तर्गत इति** । परिमितवस्तुनोऽपकृष्टत्वादिति भावः । **नियमनादिगुणकाष्ठेति** । निरङ्कुशसर्वनियन्तृत्वरूपगुणोत्कृष्टत्वं वस्त्वपरिच्छेद इति पर्यवस्यतीत्यर्थः ॥

एतच्छब्दार्थमाह **कारणावस्थेति** । **उपादानत्वश्रुतेरिति** । "सोऽकामयत बहु स्यां प्रजायेयेति", "ब्रह्म वनं ब्रह्म स वृक्ष आसीत्", "तदात्मानँ स्वयमकुरुत", "कर्तारमीशं पुरुषं ब्रह्मयोनिम्" इत्यादिश्रवणादिति भावः । **शरीर्यंशव्यवस्थितत्वादिति** । विशेष्यमात्रे व्यवस्थितत्वादित्यर्थः ।

---

च्छेदशब्दस्वारसिकार्थ इति भावः । उक्तां श्लाघ्यतामेवोपपादयितुमाह **एतदुक्तमिति** । **कुतश्चिदपकर्षो वस्तुपरिच्छेदः** । परिच्छेदशब्दस्येयत्तार्थकतया अपकर्षपरत्वं स्वारसिकमिति भावः ॥ **वस्तुपरिमाणमिति पक्षोऽप्येतदन्तर्गत इति** । परिमाणशब्देनेयत्तारूपापकर्षविवक्षायामुक्तार्थ एवान्तर्भावादिति भावः । **वस्त्वन्तराभावपक्षोऽपीति** । एतदन्तर्गत इत्यनुषङ्गेणान्वयः । **स हीति** । वस्त्वन्तराभावो हीत्यर्थः । अस्य सर्वात्मकत्वमित्यनेनान्वयः । **सर्ववस्तुसामानाधिकरण्यनिबन्धनमिति** । उक्तसामानाधिकरण्यस्य प्रयोजकमित्यर्थः । **सर्वशरीरत्वेन**=सर्वनिरूपितशरीरित्वेन । अभेदस्तृतीयार्थः। सर्वात्मकत्वेऽन्वेति। **सर्वात्मकत्वमिति**। सर्वप्रतियोगिकापृथक्सिद्धिसंबन्धानुयोगित्वमित्यर्थः। **नियमनादिगुणकाष्ठेति** । तादृशगुणोत्कर्ष इत्यर्थः । तादृशगुणोत्कर्षाक्षेपक इति यावत् । तथाचापकर्षाभाव एव वस्तुपरिच्छेदराहित्यमिति भावः। त्रिविधपरिच्छेदराहित्योपपत्तिमुपसंहरति **तदिति**। उक्तसर्वात्मकत्वादित्यर्थः॥ **एतेनेति**। उक्तसर्वात्मकत्वेनेत्यर्थः। **काणादादीति आदिना** नैयायिकसेश्वरसांख्ययोः सङ्ग्रहः। ननु प्रमाणमन्तरा कथमुपादानत्वं सिध्येत्? उक्तसर्वात्मकत्वं हि प्रमाणेनोपादानत्वे सिद्धे तदुपपादकं भवेदित्याशङ्क्याह **कारणेति** । **उपादानत्वश्रुतेरिति** । "सोऽकामयत बहु स्यां प्रजायेयेति ।", "ब्रह्म वनं ब्रह्म स वृक्ष आसीत्", "तदात्मानँ स्वयमकुरुत", "कर्तारमीशं पुरुषं ब्रह्मयोनिम्" इत्यादिश्रवणादिति भावः । ननूपादानत्वस्य विकारव्याप्यत्वादुपादानत्वाभ्युपगमे विकारस्यावश्यकतया निर्विकारत्वश्रुतिविरोध इत्याशङ्क्याह **न चेति** । **शरीर्यंशव्यवस्थितत्वादिति** । विशिष्टरूपे उपादाने विशेष्यांशमात्रविषयत्वादित्यर्थः। अयं भावः-नामान्तरभजनार्हावस्था हि विकारः। अवस्था चाऽऽगन्तुकापृथक्सिद्धधर्मः । आगन्तुकत्वं च जन्यत्वम् । तथाचैवंविधो धर्मोऽचिद्गतो महत्त्वाहङ्कारत्वादिरूपः, चेतनधर्मभूतज्ञाननिष्ठ सङ्कोचविकासादिरूपश्च । न तु स्थूलचिदचिद्विशिष्टत्वादिरूपः; चिदचिद्विशिष्टा

विशिष्ट स्वरूपतो निर्विकारे पुंसि बाल्ययुवत्वस्थविरत्वस्थूलत्वादिवत् ॥ ईश्वरो न जगदुपादानं जगन्निमित्तत्वात्, यो यन्निमित्तं न स तस्योपादानम्, यथा घटस्य कुलाल इति चेन्न— धर्मिग्राहकविरोधात् । निमित्ततयैवानुमानसिद्धः पक्षीकृत इति चेन्न ; तस्यानुमातुमशक्यत्वात् ॥

क्षित्यादिकं सकर्तृकं कार्यत्वात् घटवदिति चेन्न ; यथादृष्टोपसंहारे [2]बाधात् । अन्यथा-

---

**धर्मिग्राहकविरोधादिति** । धर्मिग्राहिकया श्रुत्या उपादानत्वेन प्रतिपन्नत्वेन **तद्विरोधादित्यर्थः** । **यथादृष्टेति** । सपक्षे **यत् यथा दृष्टम्**, तत् तथैव साधनीयम् । घटादौ च सपक्षे शरीर्येव कर्ता दृष्ट इति क्षित्यादावपि तथैव साधनीयं स्यात् । न चेष्टापत्तिः ; क्षित्यादौ शरीरिणः कर्तुरसम्भवेन [2]**बाधादित्यर्थः** ।

---

नतिरिक्तस्य तस्य विशिष्टवेषेण कादाचित्कत्वेऽपि स्वरूपेण नित्यतया जन्यत्वासंभवात्, स्वावृत्तित्व-स्वध्वंसाधिकरणसमयवृत्तित्वोभयसंबन्धेन समयविशिष्टत्वरूपस्य स्वरूपेण कादाचित्कत्वात्मकजन्यत्वस्यैव विकारशरीरे प्रविष्टत्वात् । ततश्चोक्तविकाररहित्यं ब्रह्मणि निर्बाधमेव । माव्यवस्थावतः प्रागवस्थाश्रयत्व-रूपोपादानत्वशरीरप्रविष्टमवस्थात्वं च स्वरूपेण विशिष्टवेषेण वा कादाचित्कत्वमात्रम् । तच्च स्ववृत्त्यभाव-प्रतियोगित्वस्वध्वंसाधिकरणसमयवृत्तित्वोभयसंबन्धेन समयविशिष्टत्वरूपं स्थूलचिदचिद्वैशिष्ट्यादावक्षतम् । स्थूलत्वादिघटितविशिष्टरूपेण तदभावस्य प्राक् सत्त्वात् । चिदचिद्वैशिष्ट्यरूपे विशेष्ये प्राक्काल-वृत्तित्वसत्त्वात् स्थौल्यादिघटिते विशिष्टेऽपि, विशेष्यवृत्तेरिति[1] न्यायेन तदभावासंभवात् स्वरूपेण कादा-चित्कत्वविरहान्न स्थूलचिदचिद्वैशिष्ट्यादेर्विकाररूपत्वम् । इत्थं च विकाराभावेऽप्युपादानत्वोपपत्त्या ब्रह्मणो जगदुपादानत्वेऽपि न निर्विकारत्वश्रुतिविरोधः । अथवा उपादानत्वशरीरप्रविष्टावस्थात्वस्य विकारत्वरूपत्वेऽपि अवस्थाश्रयत्वस्य साक्षात्परम्परासाधारणस्यैवोपादानत्वशरीरप्रविष्टतया परम्परया महत्त्वाद्यवस्थाश्रयत्वमादायैव ब्रह्मण उपादानत्वोपपत्तिः ; निर्विकारत्वश्रुतिश्च साक्षात्संबन्धावच्छिन्न-प्रतियोगिताकविकाराभावं प्रतिपादयतीति न तद्विरोध इति । इदमेवाह **विशिष्टवेषेणेति** । विकाराश्रय-विशिष्टत्वेनेत्यर्थः । परम्परयेति यावत् । **इष्टमेवेति** । तस्योक्तरीत्या निर्विकारत्वश्रुत्यविरुद्धत्वाच्चेति भावः । **स्वरूपतोनिर्विकारे**=साक्षात्संबन्धावच्छिन्नप्रतियोगिताकविकाराभाववति । **धर्मिग्राहकविरोधादिति** । पक्षभूतेश्वरग्राहकश्रुत्या बाधादित्यर्थः ; तयोपादानत्वेनैवेश्वरसिद्धेरिति भावः । ननु श्रुतेर्न प्रमाणान्तरविरुद्धार्थपरत्वं संभवति ; उक्तं हि, "असन्निकृष्टवाचा तु द्वयमत्र जिहासितम् । ताद्रूप्येण परिच्छित्तिस्तद्वि-पर्ययतोऽपि वा" इति । अत एव हि, "आदित्यो यूपः" इत्यादेर्न स्वार्थपरत्वम् । ततश्च निमित्ततयैवा-नुमानसिद्धमीश्वरं पक्षीकृत्य तत्रोपादानत्वाभावे साधिते उपादानत्वश्रुतेरन्यपरत्वमेवावश्यकमित्यभिप्रायेण शङ्कते **निमित्ततयैवेति** । **यथादृष्टोपसंहार इति** । घटादिरूपसपक्षे यादृशं सकर्तृकत्वं दृष्टम्, तादृशमेव साधनीयमित्यभिप्रायेणोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमच्छरीरादिमज्जन्यत्वं साध्यते ; आहोस्वित् शरीरादिमत्त्वमपहाय शेषं साध्यत इति विकल्पान्तर्गतप्रथमकोटिपरिग्रह इत्यर्थः । [2]**बाधादिति** । शरीरा-

---

1 विशेष्यवृत्तेर्न विशिष्टेऽभावः ; विशेष्यवृत्तिप्रतियोगिको विशिष्टानुयोगिकोऽभावो नांगी-क्रियत इति न्यायः । 2 बाधादिति । अनुमानरूपधर्मिग्राहकप्रमाणेनेश्वरे सिद्धे तत्रानुपादानत्वं

**ज्ञानेच्छयोरपि त्यागप्रसङ्गात् । नित्यज्ञानस्य शरीरादिनेव नित्यप्रयत्नस्यापि ज्ञानादिना निरपेक्षत्ववचनोपपत्तेः ॥ [1]स्वतो विषयप्रावण्ये ज्ञानत्वप्रसङ्ग इति चेन्न ; जीवनपूर्वकप्रयत्नवदुपपत्तेः ॥**

---

ननु घटादौ कृतेर्जन्यतया शरीरसापेक्षत्वेऽप्यङ्कुरादिकृतेरजन्यतया न शरीरसापेक्षतेत्याशङ्क्य परिहरति **अन्यथे**ति । **त्यागप्रसङ्गादि**ति । तयोरपि कृत्युत्पादनार्थमपेक्षितत्वेनाङ्कुरादिकृतेश्च नित्यतया शरीरवत् ज्ञानेच्छयोरपि त्यागप्रसङ्ग इति भावः । तमेवोपपादयति **नित्यज्ञानस्ये**ति । **ज्ञानादिना निरपेक्षे**ति । विनापीति शब्दोऽध्याहर्तव्यः[2] । **ज्ञानादिना** विनापि **निरपेक्षत्व**स्य वक्तुं युक्तत्वादित्यर्थः। ननु कृतिमात्रं न साध्यम् ; कृतेः स्वत एवाङ्कुरादिविषयत्वाभावेनाङ्कुरविषयज्ञानाधीनमेवाङ्कुरविषयत्वं वक्तव्यमिति ज्ञानेच्छयोरप्यावश्यकत्वमित्यभिप्रायेण शङ्कते **स्वत इ**ति । **ज्ञानत्वप्रसङ्ग इ**ति । स्वतः सविषयकत्वस्यैव ज्ञानत्वप्रयोजकत्वादिति भावः । **जीवने**ति । तस्य ज्ञानाद्यजन्यत्वेऽपि सविषयत्वादिति भावः। **अदृष्टात्त्व**

---

दिमत्कर्तृकत्वाभावस्योभयसंप्रतिपन्नत्वादनीश्वरकर्तृकत्वस्यैवाभ्युपगमादिति भावः । **अन्यथे**ति । द्वितीयकोटिपरिग्रह इत्यर्थः । **ज्ञानेच्छयोरपि त्यागप्रसङ्गादि**ति । सपक्षदृष्टस्य शरीरादिमत्त्वस्य परित्यागे तुल्यन्यायतया ज्ञानेच्छयोरपि परित्यागेन कृतिमज्जन्यत्वमात्रमेव साध्यं स्यादिति भावः । ननु नित्यज्ञानस्य शरीरादिनिरपेक्षत्वाच्छरीरादित्यागेऽपि प्रयत्नस्य ज्ञानेच्छासापेक्षत्वान्न तत्त्यागः इत्याशङ्कायां प्रयत्नस्य ज्ञानेच्छासापेक्षत्वं किमुत्पत्त्यर्थम् , उत सविषयकत्वसिद्ध्यर्थमिति विकल्प्य, आद्यं शिरो दूषयति **नित्यज्ञानस्ये**ति । **नित्यप्रयत्नस्ये**ति । तथाचोत्पत्त्यर्थं तदपेक्षेति न शक्यं वक्तुमिति भावः । द्वितीयस्यावश्यकतामुपपादयन् शङ्कते **स्वत इ**ति । आश्रयतारूपसाक्षात्संबन्धेनेत्यर्थः । **विषयप्रावण्ये**=विषयतानिरूपकत्ववत्त्वे । **ज्ञानत्वप्रसङ्ग इ**ति । आश्रयतासंबन्धेन विषयतानिरूपकत्ववत्त्वस्य ज्ञानत्वव्याप्यत्वादिति भावः । इदञ्चेच्छाप्रयत्नयोर्याचितमण्डनन्यायेन ज्ञानद्वारकमेव सविषयकत्वमिति प्राचीन[3]मताभिप्रायेण । तथाच प्रयत्नस्याङ्कुरादिविषयकत्वसंपत्तये ज्ञानेच्छयोरावश्यकता । प्रयत्नस्याङ्कुरादिविषयकत्वं हि अङ्कुरादिविषयकज्ञानसमानाधिकरणेच्छासामानाधिकरण्यरूपमेवेत्युक्तं भवति । दूषयति **ने**ति । **जीवनपूर्वकप्रयत्नव**दिति । सुषुप्तिदशायां निश्वासादिहेतुतया अतीन्द्रियः प्रयत्नः कश्चन नैयायिकैरङ्गीकृतः ।

---

साध्यत इति त्वदुक्तं न युक्तम् ; तस्यानुमानस्य ज्ञानेच्छाप्रयत्नशरीरादिसर्वोपकरणविशिष्टपुरुषजन्यत्वसाधन एव यथादर्शनं सामर्थ्यावधारणात् शरीर्यतिरिक्तकर्तुरसिद्धेः प्रमाणान्तरानुपलम्भाच्चेश्वरबाध एव पर्यवसानात् ;। अतो वेदस्यैव धर्मिग्राहकत्वे तद्विरोधात् अनुपादानत्वानुमानस्य बाधितत्वादित्यर्थः । साध्ये शरीरांशाघटने तद्वत् ज्ञानेच्छयोरपि घटनं न स्यादित्याह अन्यथेति । निरपेक्षत्ववचनोपपत्तेरिति । निरपेक्षत्वं वक्तुं शक्यमित्यर्थः । 1 "स्वरूपतो विषयप्रवणत्वेनैवं ज्ञानस्येतरवैलक्षण्यात्" इति आत्मतत्त्वविवेकवाक्यं मनसिकृत्याऽऽह स्वत इति । 2 अध्याहर्तव्य इति । तद्विषयकापेक्षारहितत्वादित्यर्थे तेनानपेक्षत्वादिति तृतीयान्तप्रयोगपरिपाट्या निरूढत्वात् नात्राध्याहारः तृतीयाया एव अपेक्षापदार्थान्वयपर्यन्तकत्वं प्रयोगबलात् ग्राह्यम् । अधिकरणसारावली 40 , "विद्या तेनानपेक्षा" इति । *திருவாய்மொழி 4—8-2 மடநெஞ்சாற் குறை விலமே* इत्यादि बहु । 3 प्राचीनेति । वास्तवो मूलार्थो वक्ष्यत एवेहैवोपरि ।

**अदृष्टात् तत्र नियम इति चेत्; अत्रापि तथाऽस्तु। त्वयाऽप्येतदेष्टव्यम्। अन्यथा नित्यज्ञानचिकीर्षाप्रयत्नानां सर्वदा सर्वगोचरत्वेन विषयनियमाभावे युगपत्सर्वकार्योत्पत्तौ युगपदनायाससर्वमोक्ष-क्षणभङ्गानन्तरक्षणकार्याभावादिप्रसङ्गात्॥ सहकारिक्रमात् कार्यक्रम इत्यविलक्षवचनम्;**

---

**नियम इति चेदिति।** ततश्च कृतेस्तद्विषयत्वे तद्विषयकज्ञानजन्यत्ववत् तज्जनकादृष्टजन्यत्वमपि नियामकमिति विषयनियमसिद्धिरिति भावः। **अत्रापि**=ईश्वरकृतावपीत्यर्थः। **त्वयापीति।** नित्यज्ञानेच्छावादिनाऽपीत्यर्थः। **क्षणभङ्गेति।** भाविनां सर्वध्वंसनमपि तदानीमेवावश्यम्भावितया **क्षणभङ्गप्रसङ्ग** इत्यर्थः। **अनन्तरक्षणेति।** उत्पादनीयानां कार्याणां पूर्वमेवोत्पन्नतयाऽवशिष्टकार्याभावादिति भावः। **अविलक्षवचन-**

---

स च न ज्ञानेच्छापूर्वकः; तत्र च निश्वासादिविषयकत्वमुक्तरूपं न वक्तुं शक्यमिति तत्र यादृशं निश्वासादिविषयकत्वं तैरभिधीयते, तादृशमङ्कुरादिविषयकत्वं ज्ञानेच्छयोरभावेऽप्युपपद्यत इति न तदर्थमपि ज्ञानेच्छाभ्युपगम आवश्यक इति भावः। ननु निश्वासादिजनकादृष्टसामानाधिकरण्यमेव जीवनपूर्वकप्रयत्ने निश्वासादिविषयत्वम्। नित्यप्रयत्नस्य च न तादृशमङ्कुरादिविषयकत्वं संभवति; तज्जनकादृष्टस्य जीव एव सत्त्वादित्याशङ्कने **अदृष्टादिति।** अदृष्टाधीन इत्यर्थः। अदृष्टघटित इति यावत्। **तत्र**=जीवनपूर्वकप्रयत्ने, **नियमः**=निश्वासादिविषयकत्वम्। **अत्रापीति।** नित्यप्रयत्नेऽपीत्यर्थः। **तथास्त्विति।** अदृष्टान्नियमोऽस्त्वित्यर्थः। नित्यप्रयत्नस्याङ्कुरादिजनकादृष्टसामानाधिकरण्यस्य समवायद्वयघटितस्यासंभवेऽपि स्वाश्रयसंयुक्तसंयोग-समवायोभयघटितस्य संभवादिति भावः। **अथवा स्वतो विषयप्रावण्य** इत्यस्य स्वभावात् सविषयकत्व इत्यर्थः। इतरानधीनविषयतानिरूपकत्व इति यावत्। अयं भावः—ज्ञानेच्छाप्रयत्नानां त्रयाणां मध्ये स्वभावात् तत्तद्विषयकत्वं ज्ञानस्यैव। इच्छायास्तत्तद्विषयकत्वं तत्तद्विषयकज्ञानाधीनमेव। प्रयत्नस्य तु तत्तद्विषयकेच्छाधीनम्। ततश्चेतरानधीनविषयतानिरूपकत्वस्य ज्ञानत्वव्याप्यतया इच्छाप्रयत्नयोस्तत्स्वीकारे ज्ञानत्वप्रसङ्गान्नित्यप्रयत्नस्यापि तत्तद्विषयकेच्छाधीनमेव तत्तद्विषयकत्वं वाच्यमितीच्छाभ्युपगम आवश्यकः, इच्छायास्तत्तद्विषयकत्वं तत्तद्विषयकज्ञानाधीनमिति ज्ञानाभ्युपगम इति। **जीवनपूर्वकप्रयत्नवदुपपत्तेरिति।** जीवनपूर्वकप्रयत्ने निश्वासादिविषयकत्वस्य तद्विषयकेच्छाधीनत्वासंभवादितरानधीनविषयतानिरूपके तस्मिन् ज्ञानत्वविरहेण व्यभिचारात् नोक्तापत्तिसंभव इति भावः। **अदृष्टात् तत्र नियम** इति। अदृष्टाधीनं निश्वासादिविषयकत्वमित्यर्थः। तथा चेतराधीनविषयतानिरूपकत्वविरहान्न व्यभिचार इति भावः। **अत्रापि तथास्त्विति।** नित्यप्रयत्नेऽप्यदृष्टाधीनविषयतानिरूपकत्वमस्त्वित्यर्थः। तथा चादृष्टाधीनविषयतानिरूपकत्ववति नित्यप्रयत्ने तत एवेतरानधीनविषयतानिरूपकत्वविरहादुक्तापत्त्यनवकाशेन ज्ञानेच्छयोरभावेऽपि क्षतिविरहान्न तदावश्यकतेति भावः। ननु नित्यप्रयत्नगततत्तद्विषयकत्वे तदन्यधिकरणजीवगतादृष्टस्य परम्परया प्रयोजकत्वादपि तत्समानाधिकरणतत्तद्विषयकेच्छाया एव प्रयोजकत्वमुचितम्, एवमिच्छागतेऽपि तत्तद्विषयकत्वे ज्ञानस्यैव तथात्वमित्याशङ्कायां नित्यप्रयत्नगततत्तद्विषयकत्वेऽदृष्टाधीनत्वं परमतेऽप्यावश्यकमिति दर्शयति **त्वयाऽपीति।** ज्ञानेच्छे अभ्युपगच्छताऽपीत्यर्थः। **क्षणभङ्गेति।** सर्वविषयकेश्वरप्रयत्नबलेन सर्वेषामपि

सहकारिणामपि कार्यत्वात् युगपदेव निवृत्तिप्रसङ्गात् । प्रयत्नस्य समस्तवस्तुगोचरज्ञानसमानविषयत्वे नित्यवस्तूनामपि तत्प्रयत्नविषयत्वप्रसङ्गः । ततश्च तेषामपि सृष्टिसंहारादिप्रसङ्गः । अशक्यविषयप्रयत्नत्वादीश्वरस्यैवानीश्वरत्वं वा । अस्तु तर्हि अदृष्टैकनियतप्रयत्नमात्रवानीश्वर इति चेत्; जीवस्यैवानित्यप्रयत्नस्यैव तथाविधनियमोपपत्तेः ॥ अंकुरादिगोचरप्रयत्नो न केनापि ह्युपलभ्यते इति चेन्न; जीवनपूर्वकप्रयत्नेऽपि समत्वात् । कार्यादेव हि तत्कल्पनम्, तदत्रापि समम् । अदृष्टस्य च सर्वकार्यनिमित्तस्य नियामकत्वे किमदृष्टप्रयत्नकल्पनप्रयत्नेन? अत्रैवं संग्रहः—

**सर्वगत्वादनियमो नित्यगत्वादुपद्रवः । अदृष्टान्नियमे नित्ययत्नोऽत्राजागळस्तनः ॥ ८० ॥**

**स्वादृष्टपरतन्त्रः स्यादवरात्मा क्वचित् क्वचित् । परादृष्टपराधीनः सर्वत्रैव भवेत् परः ॥ ८१ ॥**

मिति । निर्लज्जवचनमित्यर्थः । ननु ईश्वरकृतेर्नित्यविषयत्वेऽपि न सृष्ट्यादिप्रसङ्गः; तस्य नित्यत्वेन स्रष्टुं वा संहर्तुं वा अशक्यत्वादित्याशङ्क्याह **अशक्यविषयेति । जीवस्यैवेति** । जीवानित्यप्रयत्नस्य सम्प्रतिपन्नस्यैव अदृष्टनियतत्वोपपत्तौ किमसम्प्रतिपन्ननित्यप्रयत्नवदीश्वरकल्पनेनेति भावः। **अङ्कुरादीति** । कस्यापि जीवस्य कदाऽपि, 'अङ्कुरं करोमि' इति प्रतिसन्धानाभावादित्यर्थः। **किमदृष्टप्रयत्नकल्पनप्रयत्नेनेति** । किमसम्प्रतिपन्ननित्यप्रयत्नकल्पनप्रयासेनेत्यर्थः ॥ **सर्वगत्वादिति** । ईश्वरज्ञानादीनां सर्वविषयकत्वात् सर्वेषामपि कार्याणां युगपदुत्पत्तिप्रसङ्गेन कालनियमो न स्यादित्यर्थः । **नित्यगत्वादिति** । नित्येष्वप्याकाशादिषु सृष्टिसंहाराद्युपद्रव इत्यर्थः । **स्वादृष्टपरतन्त्र इति** । **स्वादृष्ट**पारतन्त्र्यापेक्षय **परादृष्ट**पारतन्त्र्यस्यातिकष्टत्वमिति भावः । **क्वचित्क्वचिदिति** । अनेकभोगसाधनवेश्मनिर्माणादिषु **परादृष्ट**पारतन्त्र्येऽपि क्वचिद्भोजनादौ स्वादृष्टपारतन्त्र्यमप्यस्ति । परमात्मनस्तदपि नास्तीति भावः ।

कार्याणां द्वितीयक्षण एव ध्वंसावश्यंभावादिति भावः । **अनन्तरेति** । उत्पादनीयानां कार्याणामेकस्मिन्नेव क्षणे उत्पन्नत्वावश्यम्भावादिति भावः । **अविलक्षवचनमिति** । निर्लज्जवचनमित्यर्थः । **जीवस्यैवेति** । जीवानित्यप्रयत्नस्य संप्रतिपन्नत्वादिति भावः । **न केनाप्युपलभ्यत इति**। अहमङ्कुरं करोमीति प्रतीतेः कस्याप्यनुदयादिति भावः । **सममिति** । तथैवातीन्द्रियत्वमित्यर्थः । **अदृष्टप्रयत्नेति** । असप्रतिपन्नप्रयत्नेत्यर्थ. । **प्रयत्नेन**=प्रयासेन ॥ **सर्वगत्वादिति** । ईश्वरज्ञानादीनां सर्वविषयकत्वादित्यर्थः । **अनियम इति** । सर्वेषामपि कार्याणां युगपदुत्पत्तिप्रसङ्गेन कालनियमाभावप्रसङ्ग इत्यर्थः । **नित्यगत्वात्**=जीवादिनित्यविषयकत्वात् **उपद्रवः**=सृष्टिसंहारादिप्रसङ्गः । **स्वादृष्टपरतन्त्र इति** । स्वादृष्टपारतन्त्र्यादपि परादृष्टपारतन्त्र्यमत्यन्तहेयमिति भावः **क्वचित् क्वचिदिति** । स्वार्थव्यापारेष्वित्यर्थः । परार्थव्यापारेषु जीवानां परादृष्टपारतन्त्र्येऽपि क्वचिद्भोजनादिरूपस्वार्थव्यापारेषु स्वादृष्टापारतन्त्र्यमप्यस्ति; परमात्मनस्तु क्वचिदपि तन्नास्तीति भावः ॥ न च सिद्धान्तेऽपीदं दूषणं समानम् । सृष्ट्यादिव्यापारस्य जीवकर्मसापेक्षत्वस्वीकारादिति वाच्यम्; देवादिविषमसृष्टौ तत्सापेक्षत्वेऽपि सामान्यसृष्टेस्तन्निरपेक्षत्वात् । अदृष्टस्यापीश्वरनिग्रहानुग्रहरूपेच्छाविशेषात्मकतया स्वेच्छापारतन्त्र्यस्यैव सिद्धेश्च । अथवा परतन्त्रत्वं स्वीयेच्छानधीनपराधीनव्यापारवत्त्वम् । तत् स्वादृष्टाधीनं जीवस्य जीवनयोनियत्नादौ क्वचित् क्वचित्, ईश्वरस्य तु अदृष्टैकनियतप्रयत्नमात्रवत्त्वाङ्गीकारे सार्वत्रिकमेव दर्शितं पारतन्त्र्यमित्यर्थः । ननु प्रयत्नस्यापि सिद्धान्ते

प्रयत्नस्य च ज्ञानादतिरेकं पराभिमतमनुरुध्यैतदुक्तमिति मन्तव्यम् । किञ्च—
**सिद्ध्यसिद्ध्योर्विरोधो नेत्येवं प्रलपतस्तव । विरोधसिद्ध्यसिद्ध्योश्च तन्निषेधो निषिध्यते ॥ ८२**

**सिद्ध्यसिद्ध्योर्विरोधो** नेति । "न बाधोऽस्योपजीव्यत्वात् प्रतिबन्धो न दुर्बलैः । **सिद्ध्यसिद्ध्योर्विरोधो नो** नासिद्धिरनिबन्धना ॥" **इत्युदयन**श्लोकः (न्या. कु. ५. २) । अस्य ईश्वरानुमानस्य ईश्वरनाश्नित्वतदकर्तृत्वतत्सशरीरत्वसाधकैरनुमानैर्बाधो न सम्भवति ; ईश्वरस्यासिद्धौ तेषामनुमानानामाश्रयासिद्धिदूषितत्वेनाबाधकत्वात् । तत्सिद्धेश्च तदनुमानायत्ततयेश्वरानुमानेन धर्मिग्राहकेण तेषामेव बाधः । अत एव दुर्बलैस्तैर्नापि प्रतिरोधः । न हि भवति कठोरकण्ठीरवप्रतिभटः कुरङ्गशाब इति पूर्वार्धार्थः । **सिद्ध्यसिद्ध्योर्विरोधो नो** इत्यस्यायमर्थः —यद्ययं कार्यत्वहेतुर्घटादौ शरीरादिमत्कर्तृकत्वव्याप्तो दृष्ट इति पक्षेऽप्युर्वीदूर्वाङ्कुरादौ शरीरादिविशिष्टमेव कर्तारं साधयेत् । ततो नास्माकं कश्चिद्विरोधः । को हि प्रमाणसिद्धं नाङ्गीकुर्यात् ? यदि च दूर्वाङ्कुरादौ योग्यानुपलम्भनिराकृतत्वेन शरीरादिकं न साधयेत्, तर्हि अशरीरत्वादीनि न विरुन्ध्यात् । तेषां कार्यत्वहेतोश्च गोत्वाश्वत्ववन्मिथोविरोधासिद्धेरिति । **नासिद्धिरनिबन्धने**ति । अनुकूलप्रतिकूलसाहित्यराहित्यसहकृतेन भूयोदर्शनेन व्याप्तिसिद्धेः निर्हेतुका व्याप्यत्वासिद्धिर्नास्तीत्यर्थः। यद्वा ईश्वरे सिद्धे मानान्तरविरोधो न प्रवर्तते, असिद्धौ चाश्रयासिद्ध्या मानान्तरस्याप्रसरात् न तद्विरोध इति । प्रकृते चेयमेव व्याख्या सङ्गता । [**इत्येव**तिति] इत्येवं वदतो नैयायिकस्येत्यर्थः। **विरोधसिद्ध्यसिद्ध्यो**रिति

ज्ञानविशेषरूपत्वात् कथं तद्वतो ज्ञानराहित्यमित्याशङ्क्याह [1]**प्रयत्नस्ये**ति । ननु बाधादेव शरीरादिमत्त्वं परित्यज्योपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वमात्रं साध्यते ; ज्ञानचिकीर्षयोर्बाधाभावादभिमतत्वाच्च तदपरित्यागात् । अतो न कोऽपि दोषः । न च—तथापीश्वरो नाशरीरः, कर्तृत्वात् कुलालवदित्यनुमानेनाशरीरत्वाभावस्य सिद्ध्या अभिमताशरीरत्वविरोध इति वाच्यम् ; ईश्वराशरीरत्वसिद्ध्यसिद्ध्योर्विरोधविरहात् । ईश्वराशरीरत्वस्य प्रमितत्वे हि न तन्निषेधसंभवः । अप्रमितत्वे तु सुतरां तदसंभवः; प्रतियोगिज्ञानाभावादित्याशङ्क्याह **सिद्ध्यसिद्ध्यो**रिति । इत्थं ह्युदयनाचार्यैरुक्तम्, "न बाधोऽस्योपजीव्यत्वात् प्रतिबन्धो न दुर्बलैः । सिद्ध्यसिद्ध्योर्विरोधो नो नासिद्धिरनिबन्धना ॥" इति। अस्यार्थो **रङ्गरामानुजीये** स्पष्टः । **नासिद्धिरनिबन्धने**त्यस्य(?), ईश्वरनिष्ठाशरीरत्वस्य सिद्धौ निषेधानुपपत्तिः, असिद्धौ प्रतियोगिज्ञानाभावात् सुतरां निषेधासंभव इति नेश्वराशरीरत्वविरोध इत्येव व्याख्या प्रकृतसङ्गता । **विरोध**-

1 स्वतो विषयप्रावण्ये ज्ञानत्वप्रसंग इति प्रागुक्तं दूषणं वस्तुतो नास्मान् प्रति युक्तम् । अस्माभिः प्रयत्नादेरपि ज्ञानपरिणामत्वस्वीकारादित्याह प्रयत्नस्य चेति । न च प्रत्यक्षत्वानुमितित्वादिविशेषापत्तिः; तत्तत्कारणाजन्यतया तदभावोपपत्तेः । एतदुक्तमिति । ज्ञानत्वप्रसंगवारणं कृतमित्यर्थः । जीवनयोनियत्नस्यापि प्रामाणिकत्वे ज्ञानपरिणामत्वमेव सिद्धान्ते स्यात् ॥ ननु यथादृष्टोपसंहारे बाधादिति भवदुक्तमयुक्तम्; एतदाशंकासमाधानस्यास्माभिरेव कारिकातृतीयपादेनोक्तेरिति उदयनशंकायामाह सिद्धीति । प्रलपतः — निरर्थकं वदतस्तत्राभिमतो यः तन्निषेधः — विरोधोद्भावननिषेधः, सः विरोधस्य सिद्धावसिद्धौ चाशक्य इति ब्रूम इत्यर्थः । संपूर्णकारिकार्थः

**त्वत्सिद्धान्ततद्दुक्तिभ्यां हेत्वाभासेन वा पुनः। ज्ञातो व्याप्तिविरोधेन विशेषः प्रतिषिध्यते ॥**

**विरोधः** सिद्धश्चेत्, **निषेधो**ऽनुपपन्नः। असिद्धश्चेत्, अत्यन्तासतो निषेधासम्भवात् **विरोधनिषेधो न** सम्भवतीत्यर्थः॥ सुहृद्भावेन प्रश्ने उत्तरमाह **त्वत्सिद्धान्तेति** **विशेषः प्रतिषिध्यते इति**। कर्तृत्वस्य शरीरित्वव्याप्ततया तद्विरोधात् त्वत्सिद्धान्तादिप्रसिद्धाशरीरत्वादिरूपविशेषः **प्रतिषिध्यते** इत्यर्थः।

**सिद्ध्यसिद्ध्योरिति**। अयमर्थः—ईश्वराशरीरत्वविरोधः प्रमितो न वा; प्रमितत्वे निषेधायोगः, अप्रमितत्वे प्रतियोगिज्ञानाभावान्निषेधानुपपत्तिरिति। इदञ्च सिद्ध्यसिद्ध्योः विरोधो नेति वदतः प्रतिबन्ध्युत्तरम्। यदि च—निषेधे अप्रमासाधारणं प्रतियोगिज्ञानमात्रमेवापेक्षितम्। तच्च प्रकृतधर्मिकतत्प्रकारकभ्रान्तिरूपं वा अन्यधर्मिकप्रमितिरूपं वा यथासंभवं भवति। ततश्च प्रकृते ईश्वराशरीरत्वे परसिद्धान्ततदुक्तिभ्यां हेत्वाभासेन वा प्रमाणविरोधभ्रान्तिसंभवात् तादृशभ्रान्तिसिद्धः प्रमाणविरोध ईश्वराशरीरत्वे निषिध्यते। तत्र प्रमाणविरोधमात्रमेव प्रतियोगि। न त्वीश्वराशरीरत्वनिष्ठप्रमाणविरोधः; येन तदप्रसिद्ध्या निषेधानुपपत्तिः स्यात्। ईश्वराशरीरत्वं तु निषेधधर्मि। अतो न दोषः—इत्युच्येत—तदेश्वरे अशरीरत्वनिषेधोऽप्युक्तरीत्योपपद्यत इत्याह **त्वत्सिद्धान्ततद्दुक्तिभ्यामिति**। त्वद्गुरुवाक्य-त्वद्वाक्याभ्यामित्यर्थः। **हेत्वाभासेनेति**। ईश्वरोऽशरीरः जीवभिन्नत्वात् घटवदित्यनुमानेनेत्यर्थः। अयं हि हेतुर्जीवानामेव प्रकृष्टादृष्टशालिनां विश्वामित्रादीनां येनाङ्कुरादिकर्तृत्वसंभवं मन्यमानान् प्रति असिद्धतया हेत्वाभासः। **ज्ञातः** ईश्वरधर्मिकभ्रान्तिप्रकारीभूत इत्यर्थः। इदमुपलक्षणम्; घटादौ प्रमित इत्यपि बोध्यम्। **व्याप्तिविरोधेन**=व्याप्तिनिष्ठस्वाभावनिरूपितत्वेन। कर्तृत्वादिनिष्ठया स्वाभावनिरूपितव्याप्त्येति यावत्; स्वं विशेषः। **विशेषः प्रतिषिद्ध्यत इति**। अशरीरत्वरूपस्य भवदभिमतविशेषस्याभाव ईश्वरे साध्यत

श्रीरंगरामानुजीये स्पष्टः। तत यद्वेत्यादिकं न चतुर्थपादस्य द्वितीयरीत्या व्याख्यानम्, तस्यात्र मूलेऽनुक्तेः। कारिका हि पादैश्चतुर्भिः कार्यत्वहेतोः सकर्तृकत्वसाधकस्य बाधितत्व-सत्प्रतिपक्षितत्व-विरुद्धत्व-व्याप्यत्वासिद्धिरूपदोषचतुष्टय राहित्यं क्रमेणाह। अन्तिमपादेनैव सव्यभिचारत्वपरिहारोऽपि। एतदर्थः अस्मदीये कुसुमाञ्जलिविस्तरेऽपि द्रष्टव्यः। तदत्र यद्वेत्यादिकं तृतीयपादस्य प्रकृतग्रन्थोदाहृतस्य व्याख्यानान्तरम्। यद्यप्येवं व्याख्यानं उदयनकृतविवरणे व्याख्यानान्तरे वा न प्रतीयेत, अथापि संभवादेवमुक्तिः, ईश्वरः शरीरी कर्तृत्वादित्यनुमानदूषणमुदयनाभिमतमिति। अत्र संपूर्ण कारिकादूषणस्याकरणात् प्रकृतानुरूपं द्वितीयव्याख्यानं कृतं श्रीरङ्गरामानुजीये। प्रथमव्याख्यानरीतिरेव, "विशेषविरोधस्तु" इत्युपरितनोदयनग्रन्थानुकूला। तृतीयपादमात्रस्यात्र प्रदर्शनहेतुश्चास्माभिरत्रावतारिकायां दर्शितः। अनतिभेदाच्च न द्वितीयव्याख्यानरीतेरवसरः। रत्नपेटिकायां, "नासिद्धिरनिबन्धनेत्यस्य" इति पदं न स्यात्। अस्य कारिकातुर्यपादव्याख्यारूपत्वादर्शनात्। त्वत्सिद्धान्तेति। तर्काध्यायिनां तर्कसिद्धान्तवाक्यतदीयोक्तिबलात् ज्ञानम्, तर्कप्रवर्तकस्य हेत्वाभासमूलकं तज्ज्ञानम्। तथा च अशरीरिकर्तृकत्वविरुद्धं कार्यत्वमिति वेदान्तिवाक्यं वा तज्जन्यं विरोधज्ञानं वा न यथार्थम्, कर्तरि अशरीरित्वाविषयकत्वादिति यदि, अशरीरिकर्तृकत्वरूपविशेषणासिद्धौ तद्विरोधासिद्धेरिति वक्तुरुदयनस्याशयः, तर्हि कार्यत्वं पक्षधर्मताबलात् अशरीरिकर्तृकत्वसाधकमिति त्वद्वाक्यं (उदयनवाक्यं) तज्जन्यज्ञानं वा न यथार्थं त्वदुक्तहेतोरिति अस्मदुक्तेरप्याशय इति।

**तृणादिमर्मरीभावहेतुत्वादग्निमद्धिमम्**[1] **इति कृत्वा पक्षबलात् शीताग्निर्न हि कल्प्यते ॥८४**

**तृणादीति** । यदि घटादिविलक्षणस्याङ्कुरादेः पक्षीकरणात् लोकदृष्टविलक्षणः शरीरानपेक्षनित्यज्ञानादिमान् कर्ता सिध्येत्, तदा हिममग्निमत् पद्मपत्रादिमर्मरीभावहेतुत्वादित्यनुमानात् सिध्यन्नग्निर्महानसादिविलक्षण-

इत्यर्थः । तथाच कर्तृत्वेन हेतुना कुलालादिदृष्टान्तेनेश्वरे अशरीरत्वाभावस्य शरीरवत्त्वस्यैव वा सिद्धिर्निष्प्रत्यूहैवेति सिद्धम् । यत्तु प्रमाणबलाच्छरीरादिमत्त्वसिद्धौ तथैवाभ्युपगमसंभवान्नास्माकं विरोध इति, तन्न ; तथासति कर्मवश्यत्वेन जीवत्वापत्त्याऽभिमतासिद्धेः । यदपीश्वरे सिद्धे मानान्तरविरोधो न प्रवर्तत इति—तत्र मानान्तरविरोध इति किं विवक्षितम् ? मानान्तरेणेश्वरासत्त्वसाधनं वा, तस्य शरीरित्वादिसाधनं वा । आद्ये तादृशानुमानाप्रवृत्तिरिष्टैव । द्वितीये तु नानुपपत्तिः; ईश्वरसिद्धावपि तस्य शरीरित्वादिसाधकानुमानप्रवृत्त्यविघातात् । न हि कार्यत्वहेतुना अङ्कुरादिकर्तृतया सिद्ध्यन्नीश्वरोऽशरीरत्वेनैव सिद्ध्यति, कार्यत्वहेतोः सकर्तृकत्वमात्रसाधकत्वात् कर्तुरशरीरत्वसाधने तस्यासामर्थ्यात् । प्रत्युत शरीरादिमत्कर्तृकत्वव्याप्यतया एव सपक्षे दर्शनाच्च ।

नन्वीश्वरे कर्तृत्वेन शरीरादिमत्त्वानुमानं धर्मिग्राहकमानबाधितम् । तथा हि; सामान्यधर्मावच्छिन्ननिरूपितव्याप्यत्वेनैव गृहीतस्यापि लिङ्गस्य विशेषबाधविषयपक्षधर्मताबलात् बाधितेतरविशेषानुमापकत्वं दृश्यते । यथा महानसीयवह्न्यभाववान् पर्वत इति बाधज्ञानदशायां पर्वते वह्निव्याप्यधूमवत्ताज्ञानात् महानसीयेतरवह्निमानित्यनुमितिर्भवति । ततश्च योग्यानुपलब्ध्याऽङ्कुरादौ शरीरादिमत्कर्तृकत्वाभावे सिद्धे सकर्तृकत्वव्याप्यकार्यत्वहेतुनैव शरीरादिमद्भिन्नकर्तृकत्वं सिद्ध्यतीत्यत आह **तृणादीति** । **मर्मरीभावः** रूपादिपरावृत्तिविशेषः । हेतुत्वमिहाव्यवहितपूर्ववृत्तित्वम् । तेन मर्मरीभावं प्रति अग्नेरेव कारणत्वेऽपि न क्षतिः । **अग्निमदिति** । अग्निमत्त्वमिह सामानाधिकरण्येन बोध्यम् । अत्र घटादौ रूपादिपरावृत्त्यव्यवहितपूर्वकाले तत्संयुक्तवस्त्वन्तरं दृष्टान्तः । **इति कृत्वेति** । इत्येवंविधपक्षसाध्यहेतुकानुमानादित्यर्थः । **पक्षबलादिति** । हिमं शीतेतरवह्न्यभाववदिति विशेषबाधरूपात् पक्षसंबन्धबलादित्यर्थः ॥ **शीताग्निर्नहिकल्प्यत इति**। शीताग्निर्नानुमीयत इत्येतत् सर्वसंप्रतिपन्नमित्यर्थः । अयं भावः—पर्वतादौ महानसीयवह्न्यभाववत्तानिर्णयरूपविशेषबाधसत्त्वेऽपि वह्नित्वावच्छेदेन महानसीयत्ववत्तानिश्चयदशायां महानसीयेतरवह्निमानित्यनुमितिर्न जायते । एवं काञ्चनमयेतरवह्न्यभाववानिति विशेषबाधसत्त्वेऽपि वह्नित्वावच्छेदेन काञ्चनमयेतरत्वनिर्णयदशायां काञ्चनमयवह्निमानित्यनुमितिर्न जायते । अतो विशेषबाधसहायेन बाधितेतरविधेयकानुमितिस्थले तत्प्रतिबन्धकनिर्णयविरहोऽप्यपेक्षित एव । अत एव काञ्चनमयेतरवह्निबाधसहायेन वह्नेः काञ्चनमयत्वे लाघवमिति लाघवज्ञानसहायेन वा पर्वतादौ वह्निसाधने काञ्चनमयत्वाभाववद्वह्निबाधत्वमुक्तं नैयायिकैः । ततश्च यथा हिमं शीतेतरवह्न्यभाववदिति

1 हिमेऽग्निरनुपलभ्यमानोऽपि स्थितः तृणादिशुष्कीभावाय कल्पते । तत्रायःपीतं तोयमयसः स्फुलिंगाधिक्यमूलविशीर्णतापरिहारेण मसृणतया परिणामाय यथा ।

**व्यापकत्वेन दृष्टस्य पक्षसंबन्ध[1]मात्रतः । अधिकांशग्रहे हेतुः पक्षधर्मोऽपि न क्षमः ॥ ८५ ॥**

हिमपक्षीकरणबलादनुष्ण एव सिद्ध्येदित्यर्थः । **पक्षसम्बन्धमात्रत**[1] **इति । पक्षसम्बन्धातिरिक्तांशग्रहे पक्षधर्मोऽपि हेतुर्न क्षम** इत्यर्थः । ननु क्षित्याद्युपादानगोचरज्ञानादिमत्तामात्रेण ईश्वरसिद्धेः तज्ज्ञान-

विशेषबाधसत्त्वेऽपि जगति क्वचिदपि शीतवह्नेरदृष्टचरत्वेन वह्नित्वावच्छेदेन शीतेतरत्वनिर्णयरूपबाधवशात् शीतवह्निमद्धिममित्यनुमतिर्न जायते—तथैवाङ्कुरादिषु शरीरादिमत्कर्तृकत्वाभावनिर्णयरूपविशेषबाध-सत्त्वेऽपि शरीरादिरहितकर्तुः क्वचिदप्यदृष्टचरत्वेन कर्तृत्वावच्छेदेन शरीरादिमत्त्वनिर्णयरूपबाधवशात्र शरीरादिमद्भिन्नकर्तृकत्वानुमितिः संभवतीति । एतावता विशेषबाधादिसहकारवशात् व्यापकतावच्छेद कत्वेनागृहीतधर्मावच्छिन्नप्रकारकत्वमप्यनुमितेस्संभवतीति नैयायिकोक्तमभ्युपगम्य दूषणमुक्तम्; अथ तदेव न संभवतीत्याह **व्यापकत्वेनेति । अधिकांशग्रहे**=व्यापकतावच्छेदकत्वेनागृहीतधर्मप्रकारेण साध्यानुमितौ, पक्षधर्मो हेतुः न क्षमोऽपीत्यन्वयः । अयं भावः—महानसीयवह्न्यभाववान् पर्वत इति निश्चयदशायां यदा धूमादिना महानसीयेतरवह्नित्वावच्छिन्नप्रकारकानुमितिः, तदा महानसीय-वह्न्यभावविशिष्टधूमत्वावच्छिन्ने महानसीयेतरवह्नित्वावच्छिन्नव्याप्तिज्ञानादेव तादृशानुमितिर्जायत इति स्वीक्रियते; उक्तव्याप्तिज्ञानस्योक्तानुमितिजनकतायाः क्लृप्तत्वात्, तदानीं तादृशव्याप्तिज्ञानस्य संभवाच्च । उक्तव्याप्तिज्ञानविरहदशायां वह्नित्वावच्छिन्नव्याप्तिज्ञानमात्रात् तादृशानुमितेरसम्प्रतिपन्नत्वेन तत्र तद्धेतुताकल्पनस्य गौरवग्रस्तत्वात् । एवं लाघवज्ञानवशादपि न व्यापकतावच्छेदकत्वेनागृहीतधर्मस्य साध्यांशे प्रकारतया भानम् । परन्तु प्राचीननैयायिकोक्तरीत्या व्यापकतावच्छेदकत्वेनागृहीतधर्म-पुरस्कारेणैव लघ्वर्थविषयकत्वमनुमितेः स्वीक्रियते, "अनुमितिविषये लाघवस्यानुसारात्" इत्यनु गृहीतत्वात् । न ह्येतावता शरीरादिरहितः कर्ता नित्यज्ञानादिर्वा सिद्ध्येत्; अप्रसिद्धत्वात् । लाघवज्ञानेन प्रसिद्धस्यैव भानाभ्युपगमात् । अप्रसिद्धार्थकल्पने गौरवस्यैव सत्त्वाच्च । अतो व्यापकतावच्छेदकत्वेना-गृहीतधर्मप्रकारकानुमितिजनकत्वं हेतो क्वचिदपि नास्तीति । अत्रेदं बोध्यम्—लाघवज्ञानवशात् व्यापकतावच्छेदकत्वेनागृहीतधर्मस्य साध्यांशे प्रकारतया भानाभ्युपगमे कर्तृत्वावच्छेदेन शरीरादि मत्त्वनिर्णयस्य ज्ञानत्वावच्छेदेनानित्यत्वनिर्णयस्य च बाधकस्य सत्त्वेन कर्तरि शरीरादिमद्भिन्नत्वस्य, ज्ञानादौ नित्यत्वस्य च भानासंभवादिति । नन्वङ्कुरादिषु कार्यत्वेन सकर्तृकत्वे सिद्धे योग्यानुपलब्ध्या शरीरादिमत्कर्तृकत्वाभावसिद्धौ शरीरादिमत्कर्तृकत्वाभावसहितसकर्तृकत्वहेतुकानुमानरूपपरिशेषानुमानेन शरीरादिमद्भिन्नकर्तृकत्वं सिद्ध्यतीत्याशङ्कते **सिद्ध इति । पक्षसंबन्ध इति ।** सकर्तृकत्वस्येति शेषः । **पारिशेष्यादिनेति ।** पारिशेष्यमिह कर्तृत्वस्य शरीरादिमत्कर्तृकत्वाभाववैशिष्ट्यम् । **आदिनोपादान** गोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वरूपकर्तृत्वघटकज्ञानादिषु लाघवोपनीतनित्यत्वसङ्ग्रहः । अङ्कुरादिकर्ता शरीरादिमद्भिन्नः नित्यज्ञानवत्त्वात्; यन्नैवम्, तन्नैवम्; यथा जीव इत्यनेनापि ह्यभिमतसिद्धिः । **अधिकांशग्रह इति ।** कर्तरि शरीरादिमद्भिन्नत्वग्रह इत्यर्थः । अङ्कुरादिषु शरीरादिमद्भिन्नकर्तृकत्वा-

1 मात्रत इति पदम् आधिकेत्यत्र प्रतियोगिसमर्पकत्वयाऽन्वेति । पक्षसंबन्धमात्रातिरिक्तेत्यर्थः ।

**सिद्धे तु पक्षसम्बन्धे पारिशेष्यादिना पुनः । अधिकांशग्रहश्चेन्न पारिशेष्यानिरूपणात् ॥८६**
**दृष्टजातीयनिश्शेषभङ्गे[1] साध्यं न सिध्यति। अभङ्गे नाधिकं सिध्येत् न च सामान्यतःस्थितिः॥**
**परिशेषानुमानस्याप्यन्वयित्वे समा गतिः । केवलव्यतिरेकी तु परस्तान्निरसिष्यते ॥ ८८ ॥**

---

स्येन्द्रियलिङ्गाद्यजन्यत्वेन नित्यतया शरीरानपेक्षत्वं साध्यते इत्याशङ्क्याह **सिद्धे त्विति । पारिशेष्यानिरूपणादिति** । इन्द्रियलिङ्गाद्यजन्यत्वस्य, नित्यत्वस्य वा, व्याप्यसिद्धेरिति भावः । **दृष्टजातीयेति** । स-क्षे **साध्यं** यादृशं दृष्टम्, तद्विलक्षणस्य पक्षे साधने ज्ञानचिकीर्षाकृतिमानपि न सिध्येत्[1] । तादृशस्यैव साधने कर्तुः शरीरनिरपेक्षनित्यज्ञानवत्त्वं न सिध्येदित्यर्थः । ननु नित्यत्वानित्यत्वौदासीन्येन ज्ञानादिमान् कर्ता सिध्यत्वित्याशङ्क्य ज्ञानस्यानित्यत्वेन सिद्ध्यभावे[ज्ञानमेव न सिद्ध्येत् ?] अनुभूतिस्मृतिहेत्वजन्यत्वेन गुणदोषाद्यजन्यत्वेन च भ्रमप्रमानुभूतिस्मृतिवैलक्षण्यप्रसङ्गात् निर्विशेषसामान्याभावाच्चेत्यभिप्रयन् आह **न च सामान्यतः स्थितिरिति** । ननु स्मृतिभ्रमहेत्वजन्यत्वादिना प्रमात्वमनुभूतित्वञ्च समर्थ्यते इत्याशङ्क्य तस्य **अन्वयित्वे** पूर्वोक्तरीत्या सपक्षदृष्टसकलधर्मप्राप्तिप्रसङ्गात्, व्यतिरेकिणश्च दूषयिष्यमाणत्वात् नोभयथापि युज्यते इत्याह **परिशेषानुमानस्येति** ।

---

नुमितिः, अङ्कुरादिकर्तरि शरीरादिमद्भिन्नत्वानुमितिर्वेति भावः। दूषयति **नेति । पारिशेष्यानिरूपणादिति** । सकर्तृकत्वे शरीरादिमत्कर्तृकत्वाभाववैशिष्ट्यनिश्चयासंभवादित्यर्थः । पुण्यातिशयशालिनः अङ्कुरादिकर्तुरस्मादाद्यदृश्यशरीरादिमत्त्वसंभवात् योग्यानुपलब्धिविरहेणाङ्कुरादिषु शरीरादिमत्कर्तृकत्वाभावसिद्ध्यसंभवादिति भावः । इदमुपलक्षणम्; पूर्वोक्तरीत्या बाधकज्ञानवशात् ज्ञानादिषु नित्यत्वभानं न संभवतीत्यपि बोध्यम् । एतावता हेत्वप्रसिद्धिरुक्ता । अथ साध्याप्रसिद्धिमाह- **दृष्टजातीयनिश्शेषभङ्ग** इति । [1]शरीरादिमत्त्वावच्छिन्नप्रतियोगिताकभेदस्य साध्यतावच्छेदकघटकत्वस्वीकार इत्यर्थः । **साध्यं न सिद्ध्यतीति** । साध्यं न प्रसिद्ध्यतीत्यर्थः । शरीरादिमत्त्वावच्छिन्नप्रतियोगिताकभेदवत्कर्तृकत्वं हि क्वचिदपि न प्रसिद्धम् । उक्तदोषपरिहाराय तादृशभेदस्य साध्यतावच्छेदकघटकत्वास्वीकारे अभिमतासिद्धिरित्याह **अभङ्ग** इति । **अधिकं**=कर्तरि शरीरादिमद्भिन्नत्वम् । नन्वनुमानेन कर्तरि शरीरादिमद्भिन्नत्वासिद्धावपि कार्यत्वहेतुना अङ्कुरादिषु सामान्यतस्सकर्तृकत्वमात्रसिद्धौ आगमेन कर्तुरशरीरत्वं सिद्ध्यतीत्याशङ्क्याह **न चेति । स्थितिरिति** । कर्त्रनुमितेरित्यर्थः । अयं भावः-कार्यत्वहेतुना कर्ता सिध्यन् हि शरीरादिमानेव सिद्ध्येत्; घटादिषु सपक्षेषु तथैव व्याप्तिसिद्धेः । ततश्च तदनुवादेनागमेनाशरीरत्वविधानमशक्यम्; उपजीव्यानुमानविरोधादिति ॥ प्रकारान्तरेण परिशेषानुमानं दूषयति **परिशेषेत्यादिना** । अयं भावः—हेतुशरीरप्रविष्टः शरीरादिमत्कर्तृकत्वाभावः किंरूपः ? किमसदाद्यात्मकशरीरादिमत्कर्तृकत्वाभावरूपः, उत शरीरादिमत्कर्तृकत्वसामान्याभावरूपः ।

---

1 कर्तुरशरीरत्वं ज्ञानस्य नित्यत्वञ्च तार्किकेष्टम् । तत्रैकैकखण्डकतया कारिका व्याख्याता । तत्तद्व्याख्योक्तार्थद्वयमपि संकलनीयम् ।

किञ्च सकर्तृकमित्यत्र उपादानादिसमस्तकारणविषयज्ञानादिमान् कर्तृतया विवक्षितः, कतिपयविषयज्ञानादिमान् वा, सामान्यतो वा। पूर्वत्र व्याप्त्यसिद्धिः। न हि कुलालादयो घटादिहेतुभूतमदृष्टेश्वरादिकं जानन्ति। उत्तरयोः पक्षयोरीश्वरासिद्धिः। यागाद्युपकरणमृदाद्युपादानवेदिभिर्जीवैरेव सिद्धसाधनात्। एतेन द्व्यणुकादिकर्तृत्वमपि जीवस्यैवादृष्टद्वारा घटते इति सिद्धम्।

---

**कर्तृतया विवक्षित इति**। पूर्वं कर्ता सिध्यन् अन्यत्र दृष्टसजातीयः सिध्यति, उत दृष्टविलक्षणः इति विकल्प्य दूषितः, इदानीं कर्तृत्वमेव विकल्प्य दूषयतीति विवेकः। **यागाद्युपकरणेति**। यागादेरप्यदृष्टद्वारा क्षित्याद्युपकरणत्वात्; मृदादेरपि क्षित्याद्युपादानत्वाच्चेति भावः। **बाध इति**। अकर्तृकत्वशरीराजन्यत्वयोर्व्याप्तेर्निरुपाधिकतयाऽधिकबलत्वमभिप्रेत्य बाध इत्युक्तमिति द्रष्टव्यम्। अत्र

---

साध्यमपि किमस्मदादिभिन्नकर्तृकत्वरूपम्, उत शरीरादिमत्त्वावच्छिन्नप्रतियोगिताकभेदवत्कर्तृकत्वरूपम्। तत्रास्मदादिकर्तृकत्वाभावसहितसकर्तृकत्वेन हेतुना विश्वामित्रादिसृष्टिवस्तुविशेषदृष्टान्तेनास्मदादिभिन्नकर्तृकत्वं यदि साध्यते—तदा सपक्षदृष्टव्याप्त्या शरीरादिमत्कर्तृकत्वमेव सिध्येदिति कार्यत्वलिङ्गकानुमानतुल्यतैव। यदि पुनः शरीरादिमत्कर्तृकत्वसामान्याभावसहितसकर्तृकत्वहेतुना केवलव्यतिरेकिणा अस्मदादिभिन्नकर्तृकत्वं शरीरादिमत्त्वावच्छिन्नप्रतियोगिताकभेदवत्कर्तृकत्वं वा साध्यते—तदा तन्निरसनमग्रे भविष्यतीति॥ प्रकारान्तरेण दूषणमाह **किञ्चेति**। **सकर्तृकमित्यादि**। अयमर्थः; किं स्वनिरूपितकारणताश्रययावद्विषयकज्ञानादिमज्जन्यत्वं साध्यतया विवक्षितम्; उत स्वनिरूपितकारणताश्रयविषयकज्ञानादिमज्जन्यत्वम्, आहोस्वित् ज्ञानादिमज्जन्यत्वमात्रमिति। **पूर्वत्र व्याप्त्यसिद्धिरिति**। प्रथमकल्पे व्याप्तिज्ञानासंभव इत्यर्थः। अयं भावः—स्वनिरूपितकारणताश्रययावद्विषयकज्ञानादिमज्जन्यत्वं यत्र क्वचन प्रसिद्धं न वा; आद्ये तदभाववति घटादौ कार्यत्वहेतोः विद्यमानत्वात् व्यभिचारः। द्वितीये साध्याप्रसिद्धिः। उभयथाऽपि न व्याप्तिज्ञानसंभव इति। व्याप्त्यसिद्धिरित्यनेनोक्तदोष एव विवक्षितः। **ईश्वरासिद्धिरिति**। जीवविलक्षणकर्त्रसिद्धिरित्यर्थः। **जीवैरेव सिद्धसाधनादिति**। जीवान् आदायानुमानपर्यवसानादित्यर्थः। यद्यप्युपादानगोचरापरोक्षज्ञानस्यैव कर्तृत्वोपयोगितया अस्मदादिषु तदसंभवात्, नाहमङ्कुरादिकं करोमीत्यादिप्रत्यक्षबाधाच्च नास्मदादिष्वङ्कुरादिकर्तृत्वाभ्युपगमसंभवः; तथापि विश्वामित्रन्यायेन प्रकृष्टादृष्टशालिनि जीव एव तदभ्युपगमसंभव इत्यभिप्रायः। अनुगृहीतं हि **श्रीमदधिकरणसारावल्याम्**, "इत्युन्नीतौ लघुत्वादनुमितिवशतः कर्मजैश्वर्ययुक्ते विश्वामित्रादिनीत्या स्फुरति विभुमिहासूत्रयच्छास्त्रवेद्यम्" इति। **एतेनेति**। जीवानामेव क्षित्यङ्कुरादिकर्तृत्वसंभवोपपादनेनेत्यर्थः। **अदृष्टद्वारेति**। प्रकृष्टादृष्टरूपविशेषकारणाधीनमित्यर्थः। तेनादृष्टद्वारककर्तृजन्यत्वस्यैव द्व्यणुकादौ साध्यत्वेऽपि न क्षतिः—घटादौ कुलालादिजन्यत्वं तादृशमेवेति तदेव साधनीयमिति हि परैरुच्यते। **घटत इति**। उपादानभूतपरमाणुगोचरापरोक्षज्ञानादेरपि प्रकृष्टादृष्टवशेन संभवादिति भावः। **बाध इति**। अङ्कुरादिकं कर्तृजन्यत्वाभाववत् शरीराजन्यत्वादित्यनुमानेन निरुपाधिकतया बलवता बाध

शरीराजन्यत्वेन च कार्यत्वहेतोर्बाधः सोपाधिकत्वं वा दुष्परिहरम्। न च व्यर्थं विशेषणम्; असिद्धिपरिहारेण तस्य सार्थकत्वात्। न च हेतुविशेषणं सर्वमनैकान्त्यपरिहारायेति मन्त्रपाठोऽयम्॥ व्यर्थविशेषणं तर्हि सर्वत्रादूषणं स्यादिति चेन्न; यत्किञ्चिद्दोषपरिहारानुपयुक्तत्वस्य[1] वैयर्थ्येऽनुरूपत्वात्। तथाच प्रकृतानुपयोगित्वस्तस्यार्थान्तराख्यनिग्रहस्थानं वाऽस्तु। न च

विप्रतिपन्नं प्रत्याह **सोपाधिकत्वं** वेति। **कार्यत्वहेतोः** शरीरजन्यत्वेन **सोपाधिकत्वम्**; अतः **शरीराजन्यत्व**लक्षणेनोपाधिव्यतिरेकेण सत्प्रतिपक्षत्वमित्यर्थः॥ **न च व्यर्थमिति**। अजन्यत्वमात्रस्यैव अकर्तृकत्वव्याप्ततया शरीरेति **विशेषणं व्यर्थ**मित्यर्थः। **वैयर्थ्येऽनुरूपत्वा**दिति। तस्यैव व्यर्थत्वरूपत्वादि-

इत्यर्थः। ननु कार्यत्वहेतोरपि निरुपाधिकतया कथमस्य बलवत्त्वमित्यत आह **सोपाधिकत्वं** वेति। सोपाधिकत्वं चेत्यर्थः। शरीरजन्यत्वेनेति शेषः। शरीराजन्यत्वेनेत्यस्यानुषङ्गो वा। क्षित्यङ्कुरादेः पक्षस्य शरीराजन्यत्वप्रयुक्तं सोपाधिकत्वमित्यर्थः। साध्यव्यापकत्वे सति पक्षावृत्तित्वरूपोपाधित्वे साध्यव्यापकत्वमिव पक्षावृत्तित्वमपि हि प्रयोजकम्—उपाधित्वस्य तत्सत्ताधीनसत्ताकत्वात्। तत्र पूर्वं कार्यत्वस्य शरीरादिविशिष्टकर्तृजन्यत्वव्याप्यत्वोक्त्यैवार्थात् कर्तृजन्यत्वशरीरजन्यत्वयोः समनैयत्यलाभात् तदनुक्तिः। **दुष्परिहरमिति**। उपाधौ साध्यव्यापकत्वनिर्णयानुपगमेऽपि कर्तृजन्यत्वाभावसाधकानुमानस्य प्राबल्यानुपगमेऽपि च सन्दिग्धोपाधित्वं सत्प्रतिपक्षत्वं च दुर्निवारमिति हृदयम्। अनुकूलतर्कविरहे सन्दिग्धोपाधेरपि दूषकत्वं नैयायिकैरेवोद्घोषितम्। **व्यर्थं विशेषणमिति**। अजन्यत्वस्यैव कर्तृजन्यत्वाभावव्याप्यत्वसत्त्वात् जन्यतायां निरूपितत्वसंबन्धेन शरीररूपविशेषणं व्यर्थमित्यर्थः। **असिद्धिपरिहारेणेति**। क्षित्यङ्कुरादेरजन्यत्वासंभवेन प्रसिक्ताया असद्धेर्जन्यत्वे शरीरविशेषणेन वारणादिति भावः। ननु हेतुघटकविशेषणानामनैकान्त्यपरिहारकत्वेनैव सार्थक्यमिति नियमादसिद्धिवारकस्याप्युक्तविशेषणस्य न सार्थक्यसंभव इत्याशङ्क्य तादृशनियमो निर्युक्तिकत्वादनादरणीय इत्याह न चेति। हेतुविशेषणं सर्वमनैकान्त्यपरिहारायेत्ययमर्थो न च मन्त्रपाठ इत्यन्वयः। मन्त्रपाठो हि युक्तिविचारमन्तरेणोपदेशमात्रादादरणीयः; अयमर्थो नैव तथाभूत इत्यर्थः। **तर्हीति**। व्यभिचारावारकस्यापि व्यर्थत्वाभाव इत्यर्थः। **सर्वत्रेति**। पर्वतो वह्निमान् नीलधूमवत्त्वादित्यादावपीत्यर्थः। अत्र किं व्यभिचारावारकस्यापि वैयर्थ्याभावे व्यर्थपदार्थावच्छेदकवैयर्थ्यस्यैव दुर्निरूपतया व्यर्थविशेषणस्य दूषणत्वाभिधानं क्वापि नोपपद्यत इत्यभिप्रायः, आहोस्वित् व्याप्त्यनुपयुक्तविशेषणघटितधर्मावच्छेदेनापि व्याप्तिसत्त्वे व्यर्थविशेषणस्य व्याप्यत्वासिद्धिसंपादकत्वासंभवात् दूषकताबीजविरहेण दोषत्वासंभव इत्यभिप्राय इति विकल्प्य क्रमेणोत्तरमाह **यत्किञ्चिदिति**। **वैयर्थ्ये**=व्यर्थपदवाच्यत्वे, **अनुरूपत्वात्**=अवच्छेद-

1 यत्किञ्चिद्दोषपरिहारार्थमप्रयुक्तत्वं व्यर्थत्वसाधकम्। अत्रासिद्धिपरिहारार्थं प्रयोगान्न व्यर्थता। नीलधूमादित्यत्र तदर्थप्रयोगाभावात् व्यर्थतेत्यर्थः। ननु धूमः श्वेत एवेति भ्रान्त्या पक्षवृत्तेर्नीलस्याधूमत्वभ्रान्तिवारणाय नीलपदप्रयोगसंभवात् तत्रापि न व्यर्थविशेषणतेति चेन्न—असिद्धिभ्रान्तावपि वस्तुतोऽसिद्ध्यभावात्। भ्रान्तिवारणादपि सार्थत्वे व्यर्थत्वं कथमिति चेत्—व्यर्थस्थले हेत्वाभासरूपदूषणमेव वक्तव्यमिति किम्? निग्रहस्थानस्यापि सुवचत्वादित्याह तथा चेति।

**विशिष्टस्य व्याप्त्यभावात् एकामसिद्धिं परिहरतो द्वितीयापत्तिरिति वाच्यम्; तस्य तदभावासिद्धेः।**

---

त्यर्थः । **तस्येति** । व्यर्थविशेषणस्येत्यर्थः । **अर्थान्तराख्येति** । प्रकृतानुपयुक्तोक्तिरर्थान्तरम् । **एकामसिद्धिमिति** । अङ्कुरादिकमकर्तृकमजन्यत्वादित्युक्ते **स्वरूपासिद्धिः** । तत्परिहाराय शरीरपददाने व्याप्तिग्रहानुपयुक्तविशेषणवत्त्वेन व्यर्थविशेषणतया **व्याप्यत्वासिद्धिः** । यथा पर्वतो वह्निमान् नीलधूमवत्त्वादिति प्रयोगे नीलधूमत्वावच्छेदेन व्याप्तेरभावात् नीलधूमो व्याप्यत्वासिद्धः, एवं शरीराजन्यत्वत्वावच्छेदेन व्याप्तेरभावाच्छरीराजन्यत्वं व्याप्यत्वासिद्धमित्यर्थः । **तस्य तदभावासिद्धेरिति** ।

कत्वात् । **अतो न वैयर्थ्यस्य दुर्वचतेति** भावः । **अनेन** यत्किञ्चिद्दोषपरिहारोपयुक्तताभ्रान्तिमन्तरेण तादृशविशेषणनिवेशासंभवादशक्तिविशेषोत्थापकतया व्यर्थविशेषणस्य दूषकत्वमिति फलितम् । **मुख्यं** दूषकताबीजमाह **तथा चेति** । वैयर्थ्यस्योक्तरूपत्वे चेत्यर्थः । **तस्येति** । विशेषणस्येत्यर्थः । वचनमिति शेषः । **अर्थान्तराख्यनिग्रहस्थानमिति** । 'प्रकृतानुपयुक्तवचनमर्थान्तरम्'' इति तल्लक्षणादिति भावः । अशक्तिविशेषकल्पकतया प्रथमोपस्थितत्वात् उद्भटत्वाच्चेदमेव मुख्यं दूषकताबीजमिति वाकाराभिप्रायः । **विशिष्टस्य व्याप्त्यभावादिति** । शरीररूपविशेषणघटितस्य शरीरजन्यत्वाभावत्वस्य व्याप्यतानवच्छेदकत्वादित्यर्थः । जन्यत्वभावत्वापेक्षया शरीरजन्यत्वाभावत्वस्य गुरुत्वात्, संभवति लघोरवच्छेदकत्वे गुरौ तदसंभवादिति भावः । **एकामसिद्धिं परिहरत इति** । जन्यत्वाभावस्य हेतुत्वे स्वरूपासिद्धिः स्यादिति तत्परिहाराय शरीररूपविशेषणं निवेशयत इत्यर्थः । **द्वितीयापत्तिरिति** । द्वितीयाया असिद्धेर्व्याप्यत्वासिद्धिरूपाया आपत्तिरित्यर्थः । अयं भावः—पर्वतो वह्निमान् प्रमेयादित्यादौ हेतुतावच्छेदकीभूतप्रमेयत्वाश्रयधूमादौ व्याप्तिसत्त्वात् तदवच्छिन्नस्य सद्धेतुत्ववारणाय व्याप्यतायां हेतुतावच्छेदकावच्छिन्नत्वावगाहिज्ञानमेवानुमितिहेतुरिति वक्तव्यम् । धूमो वह्निव्याप्य इति ज्ञाने व्याप्यतायां धूमत्वस्य धर्मिपारतन्त्र्येणावच्छिन्नत्वसंबन्धेन प्रकारतया भानात् तदुपपत्तिः । ततश्च प्रमेयत्वस्यातिप्रसक्तस्य व्याप्यतावच्छेदकत्वासंभवान्न तद्धर्मावच्छिन्नस्य सद्धेतुत्वम्; एवं वह्निमान् नीलधूमादित्यादावपि धूमत्वापेक्षया गुरुतया नीलधूमत्वस्य व्याप्यतावच्छेदकत्वासंभवात् तत्रापि न सद्धेतुत्वम् । तत्र च व्याप्यतायां हेतुतावच्छेदकावच्छिन्नत्वज्ञानस्य, अवच्छिन्नत्वसंबन्धेन हेतुतावच्छेदकवद्भिन्नत्वज्ञानस्यैव चोक्तव्याप्तिज्ञानविरोधितया तद्विषयस्य व्याप्यत्वासिद्धिदोषत्वम् । इत्थं च शरीरजन्यत्वाभावत्वस्यापि गुरुतया व्याप्यतानवच्छेदकतया व्याप्यत्वासिद्धेरावश्यकतेति । **तस्य तदभावासिद्धेरिति** । शरीरजन्यत्वाभावत्वस्य व्याप्यतावच्छेदकत्वाभावासिद्धेरित्यर्थः । अयं भावः—गुरुधर्मस्यावच्छेदकत्वानुपगमे पर्वतो वह्निमान् धूमप्रागभावादित्यादेः सद्धेतुत्वानुपपत्तिः; धूमत्वापेक्षया धूमप्रागभावत्वस्य गुरुतया व्याप्यतानवच्छेदकत्वात् । तस्य सद्धेतुत्वं हि भवद्भिरेवाभिहितम् । अतः स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तराघटितस्यैव व्याप्यतावच्छेदकत्वमित्याश्रयणीयम् । इत्थञ्च धूमत्वस्य धूमप्रागभावत्वसमानाधिकरणत्वविरहान्न दोषः । नीलधूमत्वादेस्तु स्वसमानाधिकरणतादृशधूमत्वघटिततया न व्याप्यतावच्छेदकत्वम् । ततश्च जन्यत्वसामान्याभावापेक्षया शरीरजन्यत्वाभावस्य विशेषाभावरूपत्वेनातिरिक्ततया धूमप्रागभावा-

**यत्र शरीराजन्यत्वम्, तत्र सर्वत्राजन्यत्वमात्रमप्यस्तीति तस्य व्याप्तौ अस्यापि व्याप्तिर्दुर्निवारैव ।**

शरीराजन्यत्वत्वावच्छेदेन व्याप्त्यभावासिद्धेरित्यर्थः । तदेवोपपादयति **यत्र शरीराजन्यत्वमिति** । सर्वत्रेत्येतत् प्रायिकं द्रष्टव्यम् । अयमर्थः—शरीरजन्यत्वाभावजन्यत्वाभावयोर्विशिष्टाविशिष्टप्रतियोगिभेदभिन्नयोः सामानाधिकरण्येऽपि शरीरजन्यत्वाभावत्वकेवलजन्यत्वाभावत्वयोर्गुरुलघुधर्मभूतव्याप्यतावच्छेदकयोरेकत्रासमावेशेन नीलधूमादिवद्व्याप्यत्वासिद्ध्यभावात् । तत्र हि नीलधूमत्वधूमत्वयोर्गुरुलघुधर्मयोः

स्ववत् शरीरजन्यत्वाभावत्वस्य व्याप्यतावच्छेदकत्वोपपत्तिः । यद्यपि विशेषाभावकूटातिरिक्तसामान्याभावानुपगमपक्षे सामान्याभावत्वविशेषाभावत्वयोरसामानाधिकरण्यं संभवति, एवं सिद्धान्ते भावान्तरस्यैवाभावत्वादधिकरणविशेषवृत्तेर्धर्मविशेषस्यैकस्यैव विशेषाभावरूपत्वसामान्याभावरूपत्वयोरसंभवात् तयोः सामानाधिकरण्योपपत्तिः—तथापि विशेषाभावत्वस्य सामान्याभावत्वाघटितत्वान्न दोषः—तद्घटकयोः सामान्यधर्मावच्छिन्नप्रतियोगित्वविशेषधर्मावच्छिन्नप्रतियोगित्वयोर्भेदात् । न हि स्वसमानाधिकरणे लघौ व्यापकतावच्छेदकत्वसंभवे गुरोस्तदवच्छेदकत्वं नास्तीत्येव नियमस्सुवचः; तथा सति पृथिवीत्वव्य न् घ्राणग्राह्यगुणात्, भूतपदवाच्यो बहिरिन्द्रियग्राह्यविशेषगुणादित्यादावप्यवच्छेदकत्वाभावप्रसङ्गात्, गन्धत्वशब्दत्वादेर्लघोः स्वसमानाधिकरणस्यावच्छेदकत्वसंभवात् ।

नतु जन्यत्वत्वावच्छिन्नप्रतियोगिताकाभावत्वस्य शरीरजन्यत्वाभावत्वघटकत्वासंभवेऽपि जन्यत्वनिष्ठप्रतियोगिताकाभावत्वस्य तद्घटकत्वमुपपद्यत एव; शरीरजन्यत्वत्वावच्छिन्नप्रतियोगितायां जन्यत्वनिष्ठत्वानपायात् । ततश्च स्वसमानाधिकरणव्याप्यतावच्छेदकतादृशधर्मान्तरघटितत्वान्न शरीराजन्यत्वस्य व्याप्यतावच्छेदकत्वसंभव इत्याशङ्कायां जन्यत्वनिष्ठप्रतियोगिताकाभावत्वेन व्याप्यत्वाभ्युपगमे शरीरजन्यत्वत्वस्य व्याप्यतावच्छेदकत्वं दुर्निवारमित्याह **यत्रेति** । **अजन्यत्वमात्रमिति** । जन्यत्वनिष्ठप्रतियोगिताकाभावमात्रमित्यर्थः । जन्यत्वत्वावच्छिन्नप्रतियोगिताकाभावासत्त्वेऽप्येतावतो न हानिरिति **मात्र**पदाभिप्रायः । अपिना इन्द्रियाजन्यत्वस्य दृष्टान्तार्थं सङ्ग्रहः । यदि अजन्यत्वशब्देन जन्यत्वत्वावच्छिन्नप्रतियोगिताकाभाव एव बोध्येत, 'नञोऽन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकाभावबोधकत्वव्युत्पत्तेः न हि नीलघटः इति श्वेतपटाभावाभिप्रायेण, इह पटो नेति व्यवहार उपपद्यते; तथापीहाजन्यत्वशब्देन जन्यत्वत्वावच्छिन्नप्रतियोगिताकाभावबोधने शरीराजन्यत्वव्यापकत्वोक्तिविरोधः शरीराजन्येऽङ्कुरादौ तदभावात् । न चाङ्कुरादेः शरीराजन्यत्वं नास्तीत्यभिप्राय इति शङ्क्यम्; तथा सति अङ्कुरादौ शरीराजन्यत्वेन कर्तृजन्यत्वाभावसाधनाभिधानायोगात् । अतो लक्षणया नञो जन्यत्वनिष्ठप्रतियोगिताकाभावपरत्वम्; जन्यत्वपदं तात्पर्यग्राहकम् । नञः प्रतियोगितानिरूपकाभाव एव वा लक्षणा । प्रतियोगितयामाधेयतासंबन्धेन जन्यत्वान्वय इति रीत्या कथञ्चिज्जन्यत्वनिष्ठप्रतियोगिताकाभावबोधकत्वमाश्रयणीयम् । **तस्य व्याप्ताविति** । जन्यत्वनिष्ठप्रतियोगिताकाभावत्वस्य कर्तृजन्यत्वाभावव्याप्यतावच्छेदकत्व इत्यर्थः । **अस्यापीति** । शरीराजन्यत्वत्वस्यापीत्यर्थः । **व्याप्तिरिति** । व्याप्यतावच्छेदकत्वमित्यर्थः । **दुर्निवारैवेति** । तद्व्याप्यतावच्छेदकावच्छिन्ननिरूपितव्याप्यतावच्छेदकस्य तद्व्याप्यतावच्छेदकत्वनियमादिति भावः । **व्याप्ताविल्यनेन**

अन्यथा कलमाङ्कुरात् कलमबीजानुमानमुच्छिद्येत। बीजव्यतिरेकमात्रेण कलमाङ्कुरस्यापि व्यतिरेकसिद्धेर्व्यतिरेकव्याप्तौ व्यर्थविशेषणत्वात् ॥ बीजमन्तरेणापि केचिदङ्कुरा जायन्ते इति चेत्—कलमबीजमपि नानुमीयेत; तदन्तरेणापि तदुपपत्तेः। एवं मैत्रीतनयस्य श्यामत्वे

---

समावेशोऽस्ति, नात्रेति भावः। **कलमबीजानुमानमिति**। अयं कलमबीजवान् कलमाङ्कुरवत्त्वादित्यनुमाने **व्यतिरेकव्याप्तौ** यत्र बीजाभावस्तत्र कलमाङ्कुराभाव इत्येव व्याप्तेः सम्भवेन कलमपदवैयर्थ्यमित्यर्थः। स्वव्याघातमजानानश्चोदयति **बीजमन्तरेणापीति**। **केचिदङ्कुरा इति**—कलमाङ्कुरा इत्यर्थः, कलमाङ्कुरस्यैव प्रस्तुतत्वात्। **तदन्तरेणापीति**। तस्माद्बीजमन्तरेणाङ्कुरोत्पत्तिर्नास्तीति भावः। स्वव्या-

---

वस्तुगत्या व्याप्तिर्नास्तीति गम्यते। जन्यत्वप्रतियोगिकभावस्य हि घटादिसाधारण्याच्छरीराजन्यत्वव्याप्यत्वं न संभवति। अत्र शरीराजन्यत्वशरीरे प्रतियोगितायास्संसर्गविधयैव प्रविष्टतया जन्यत्वप्रतियोगिकाभावत्वे च प्रतियोगितायाः प्रकारविधया प्रविष्टतया तत्संसर्गतया आधेयत्वनिवेशावश्यम्भावात् शरीराजन्यत्ववत्वस्य जन्यत्वप्रतियोगिकाभावत्वघटितत्वं न संभवतीत्यपि बोद्धव्यम्। **अन्यथेति**। स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तरघटितत्वविरहेऽपि गौरवमात्रेण व्याप्यतावच्छेदकत्वानुपगम इत्यर्थः। **कळमबीजानुमानमिति**। व्यतिरेकव्याप्त्येत्यादि। **उच्छिद्येतेति**। यत्र बीजसामान्याभावः, तत्र कळमाङ्कुराभाव इति व्याप्तिसत्त्वेन बीजाभावत्वस्य लघोर्व्याप्यतावच्छेदकत्वसंभवात् कळमबीजाभावत्वस्य व्याप्यतावच्छेदकत्वासंभवादिति भावः। व्यतिरेकव्याप्तिशरीरे हि साध्याभावत्वावच्छिन्नव्याप्यतैव प्रविष्टा; अन्यथा वह्न्यभाववान् धूमाभावादित्यादेः सद्धेतुत्वप्रसङ्गात्, वह्न्यभावाभावस्य वह्निरूपस्य तद्व्यक्तित्वादिना हेत्वभावव्याप्यत्वात्। **व्यतिरेकव्याप्तौ व्यर्थविशेषणत्वादिति**। व्यतिरेकव्याप्त्यनुपयुक्तविशेषणघटितत्वादित्यर्थः। अन्वयव्याप्तौ बीजे कळमविशेषणमभिमतविशेषसिद्ध्यर्थम्, अङ्कुरे कळमविशेषणं व्यभिचारवारणार्थमिति भावः। अथवा व्याप्यवृत्तिव्यतिरेकिसाधकस्थले व्यतिरेकव्याप्त्यभावेऽन्वयव्याप्तिरपि नास्त्येवेति कैश्चिन्नैयायिकैरभिधीयते। स्पष्टमिदमुपाधिवाददीधित्यादौ। तेषामयमाशयः—तादृशस्थले व्याप्तिद्वयज्ञानमेवानुमित्याद्युपयोगि। न त्वेकैकव्याप्तिज्ञानमिति। तत्पक्षे च कळमाङ्कुरे कळमबीजनिरूपितान्वयव्याप्तिमात्रं नोपयोगीति तदभिप्रायकमेवेदम्। **बीजमन्तरेणापि केचिदङ्कुरा जायन्त इति चेदिति**। अयं भावः—नाङ्कुरत्वेन बीजत्वेन च सामान्यकार्यकारणभावः; उक्तव्यभिचारात्। किन्तु कळमाङ्कुरत्वादिना कळमबीजत्वादिना च विशिष्यैव। ततश्च कारणतावच्छेदकावच्छिन्नाभावस्यैव कार्यतावच्छेदकावच्छिन्नाभावव्याप्यत्वनियमात् कलमाङ्कुरत्वावच्छिन्नं प्रति वा कलमाङ्कुरत्वव्यापकाङ्कुरत्वावच्छिन्नं प्रति वा बीजत्वस्य कारणतावच्छेदकत्वविरहेण तदवच्छिन्नाभावस्य न व्याप्यत्वमावश्यकमिति तत्र व्यभिचारशङ्का स्यात्। अतस्तद्व्यावर्तनाय कळमविशेषणम्। तथा सति कळमबीजत्वस्य कलमाङ्कुरत्वावच्छिन्नकारणतावच्छेदकतया तदवच्छिन्नाभावस्योक्तकार्याभावव्याप्यत्वनियमस्य सर्वसंप्रतिपन्नत्वात्। अन्यथा अकारणकार्योत्पत्तिप्रसङ्ग इति तर्कबलाच्च न व्यभिचारशङ्का स्यात्। अतः कलमविशेषणं व्यतिरेकव्याप्त्यावपि सार्थकमेवेति। दूषयति **कलमबीजमपीति**। **नानुमीयेतेति**। व्यतिरेकव्याप्त्येत्यादि।

शाकाद्याहारपरिणामश्च नोपाधिः स्यात्; आहारपरिणामव्यतिरेकमात्रेण श्यामत्वव्यतिरेकात् शाकादीति विशेषणवैयर्थ्यात् ॥ तन्निवृत्तावपि तमालेन्द्रनीलश्यामत्वं दृश्यते इति चेन्न; विशिष्टस्यापि तत्र व्यतिरेकात् । न च शरीरश्यामत्वस्यैव तत् प्रयोजकम्; स्थावरायो-

---

घातमजानानःशाकपदसार्थक्यं चोदयति **तन्निवृत्तावपीति** । **विशिष्टस्यापीति** । शाकादिविशेषण-विशिष्टस्यापीति भावः । विशिष्टव्यभिचारपरिहारमाशङ्क्य परिहरति **न च शरीरेति** । **स्थावरायो-**

---

**तदन्तरेणापीति** । कळमबीजमन्तरेणापीत्यर्थः । **तदुपपत्तेरिति** कळमाङ्कुरोपपत्तिज्ञानादित्यर्थः । अयं भावः—बीजमन्तरेणापि केषाञ्चिदङ्कुराणामुत्पत्तौ ज्ञातायां तद्वदेव कळमबीजमन्तरेणापि कळमाङ्कुरोत्पत्ति-संभवशङ्कायां कार्यकारणभावग्रहस्यैवासंभवेनोक्तरीत्या कळमविशेषणसाफल्यायोगात् व्यर्थविशेषणघटितस्य व्याप्यत्वानुपगमे व्यतिरेकव्याप्त्या कळमाङ्कुरेण कळमबीजानुमानं न संभवतीति । यदि चोक्तव्यभिचार-शङ्कायां सत्यामपि, यदि कलमाङ्कुरे कळमबीजत्वं न स्यात्, तदा कळमाङ्कुरार्थं नियमेन कळमबीजो-पादानं न स्यादित्यादितर्करूपोत्तेजकबलेन कारणत्वग्रहसंभव इत्यालोच्यते—तदापि न कळमविशेषणस्य व्याप्तिग्रहोपयोगित्वम्, तदभावेऽपि व्याप्तिग्रहोपपत्तेः । तथाहि— यदि बीजसामान्याभावेऽपि कळमाङ्कुरो-त्पत्तिः स्यात्, तदा कलमबीजाभावेऽपि तदुत्पत्तिः स्यादिति तर्कबलेन बीजसामान्याभावेऽपि कळमाङ्कुरा भावव्याप्यत्वं सुग्रहमेव – बीजसामान्याभाववदुत्पत्तिकत्वे कळमबीजाभाववदुत्पत्तिकव्याप्यत्वं कळमाङ्कुरे कळमबीजाभाववदुत्पत्तिकत्वस्यानिष्टत्वं च सर्वसंप्रतिपन्नमिति । **शाकाद्याहारपरिणाम** इति । तादृशाहार-जन्यत्वमित्यर्थः । **नोपाधिस्स्यादिति** । व्यतिरेकव्याप्तिघटितोपाधिर्न स्यादित्यर्थः । अयं भावः— इतरेषु सर्वेषु मैत्रीतनयेषु श्यामेषु सत्सु गर्भस्थे शिशौ मैत्रीतनयत्वेन हेतुना श्यामत्वे साध्ये शाकाद्या-हारजन्यत्वमुपाधिरिति सर्वसंप्रतिपन्नम् । इदञ्चेतरेषां सर्वेषां मैत्रीतनयानां शाकाद्याहारजन्यत्वस्य गर्भस्थे तदभावस्य च निश्चयदशायामुपपद्यत एव । ततश्च यत्र साध्यं तत्रोपाधिरित्यन्वयव्याप्त्येव यत्रोपाध्य-भावः, तत्र साध्याभाव इति व्यतिरेकव्याप्त्याप्युपाधित्वमविवादम् । तत्रोपाध्यभावत्वावच्छिन्नव्याप्यतैव निवेश्या । अन्यथा धूमाभाववान् अयोगोळकत्वादित्यादौ वह्न्यभावस्योपाधित्वापत्तिः, वह्न्यभावाभावस्य वह्नेस्तद्व्यक्तित्वादिना साध्याभावव्याप्यत्वसत्वात् । तथाच यत्राहारजन्यत्वाभावः, तत्र श्यामत्वाभाव इति व्याप्तिसत्वादाहारजन्यत्वाभावत्वस्य लघोर्व्याप्यतावच्छेदकत्वसंभवात् शाकाद्याहारजन्यत्वाभावत्वस्य गुरोरवच्छेदकत्वासंभवेन शाकाद्याहारजन्यत्वस्य नोक्तोपाधित्वसंभव इति । **शाकादीति विशेषणेति** । आहारे शाकाद्यात्मकत्वविशेषणेनेत्यर्थः । उक्तविशेषव्यावर्तनीयत्वभ्रान्त्या नैयायिको व्यभिचारमाह **तन्निवृत्तावपीति** । आहारजन्यत्वाभावेऽपीत्यर्थः । अमुं निवर्तयन् तस्योपाधित्वमेवासंभवदुक्तिकमिति तटस्थो दूषयति **विशिष्टस्यापीति** । शाकाद्यात्मकत्वविशेषणघटितस्यापीत्यर्थः । तत्र=तमालेन्द्रनीलादौ । **व्यतिरेकादिति** । तथाचान्वयव्याप्तेरप्यभावेन शाकाद्याहारजन्यत्वस्योपाधित्वमेवासंभवदुक्तिकमिति तत्र सिद्धान्तिनाऽनुपपत्त्यभिधानं नैयायिकेन परिहारान्वेषणञ्चेत्युभयमपि हास्यमित्यभिप्रायः । तत्र नैयायिक उपाधित्वोपपत्तिं शङ्कते **नचेति** । **शरीरेत्येत्यादि** । शाकाद्याहारजन्यत्वं सामानाधिकरण्यसंबन्धेन

**निजश्यामशरीरेषु शाकाद्याहारपरिणामाभावात्॥ आहारपरिणतिजशरीरश्यामत्वं शाकाद्याहारपरिणतिपूर्वकमिति चेन्न; अत्र साध्यद्वाराऽपि समव्याप्तेर्वैयर्थ्यकबळितत्वात्। यत् श्यामं न भवति,**

---

**निजेति।** तत्र शिरःपाण्यादिसमुदायरूपशरीरत्वाभावेऽपि चेतनधार्यत्वादिरूपशरीरत्वसम्भवादिति भावः। **साध्यद्वाराऽपीति। समव्याप्तिसिद्ध्यर्थं** साध्येऽप्युपाधिव्यापकत्वस्य वक्तव्यत्वात् व्यापकाभावस्य व्याप्यत्वेऽवश्यम्भाविनि व्यर्थविशेषणत्वं स्यात्। ततश्चोपाधौ व्यर्थविशेषणत्वं परिहरतः साध्येऽपि

---

शरीरत्वविशिष्टश्यामत्वव्यापकमित्यर्थः। तथाच वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यादावात्मान्यद्रव्यत्वविशिष्टप्रत्यक्षत्वव्यापकोद्भूतरूपवत् अयमपि पक्षधर्मावच्छिन्नसाध्यव्यापकोपाधिरिति भावः। तत्र हि पक्षे उपाध्यभावेन पक्षधर्मावच्छिन्नसाध्याभावसिद्धौ विशेषणवति विशिष्टाभावस्य विशेष्याभावरूपतया विशेष्याभावव्याप्यतया वा संप्रतिपन्नतया पक्षधर्मरूपविशेषणवति पक्षे साध्याभावसिद्धिः। दूषयति **स्थावरायोनिजश्यामशरीरेष्विति।** तमालादिस्थावरश्यामशरीरेषु द्रौपद्याद्ययोनिजश्यामशरीरेषु चेत्यर्थः। **शाकाद्याहारपरिणामाभावादिति।** तादृशाहारजन्यत्वाभावादित्यर्थः। तथाचोपाधेः पक्षधर्मावच्छिन्नसाध्यव्यापकत्वमपि नोपपद्यत इति भावः। पुनरपि पक्षधर्मं परिष्कुर्वन् शङ्कते **आहारेति।** न केवलं शरीरत्वमात्रं पक्षधर्मतया विवक्षितम्; किंत्वाहारपरिणतिजन्यशरीरत्वमेव। तथाच स्थावरायोनिजश्यामशरीरेषु तदभावान्नानुपपत्तिरिति भावः। **शाकाद्याहारपरिणतिपूर्वकमिति।** शाकाद्याहारजन्यत्वप्रयुक्तमित्यर्थः। तादृशजन्यत्वव्याप्यमिति यावत्। अस्मिन्नवकाशे सिद्धान्ती स्वाभिमतसिद्ध्युपयोगिदूषणसद्भावाभिप्रायेणाह **नेति।** तादृशदूषणमेव प्रकटयति **अत्रेति।** उक्तपक्षधर्मावच्छिन्नसाध्यव्यापकोपाधावित्यर्थः। **साध्यद्वाराऽपीति।** साध्यविशेषणरूपप्रयोजकेनापीत्यर्थः। पूर्वमुपाधिविशेषणप्रयुक्ता वैयर्थ्यनिबन्धनानुपपत्तिः—इदानीं साध्यविशेषणप्रयुक्ताऽपि सेति भावः। **वैयर्थ्यकबलितत्वात्** वैयर्थ्यनिबन्धनानुपपत्तिग्रस्तत्वात्। अयं भावः—उपाधेस्साध्यसमव्याप्तेरावश्यकतया प्रकृतोपाधौ विशिष्टसाध्यव्याप्यत्वस्य व्यतिरेकव्याप्तिरूपत्वे यत्र तादृशविशिष्टसाध्याभावः, तत्रोपाध्यभाव इति व्यतिरेकव्याप्तौ तादृशविशिष्टसाध्याभावत्वस्य व्याप्यतावच्छेदकत्वमवश्यं वक्तव्यम्। तच्च नोपपद्यते; यत्र केवलसाध्याभावः, तत्रोपाध्यभाव इति व्याप्तिसत्त्वेन केवलसाध्याभावत्वस्य व्याप्यतावच्छेदकत्वसंभवेन विशिष्टसाध्याभावत्वस्य तदवच्छेदकत्वायोगात्। तद्धर्मावच्छिन्ननिरूपितव्यतिरेकव्याप्तिशरीरे तद्धर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नव्याप्यताया एव प्रवेश इत्यस्य प्रागेवोक्तत्वादिति। **अथवा** शाकाद्याहारपरिणामश्च नोपाधिस्स्यादित्यत्रोपाधिशब्देन साध्यव्यापकत्वमेव विवक्षितम्। तथाच शाकाद्याहारजन्यत्वं साध्यव्यापकं न स्यादित्यर्थः। तस्योपाधितायास्सर्वसंप्रतिपन्नतया नेष्टापत्तिस्संभवतीति भावः। कुतो व्यापकत्वासंभव इत्यत्राह **आहारेत्यादि।** अयं भावः—व्यापकाभावस्य व्याप्याभावव्याप्यतानियमस्य सर्वसंप्रतिपन्नतया यत्र यद्व्यापकत्वम्, तत्र तदभावव्याप्यतावच्छेदकस्वाभावत्वकत्वमिति व्याप्तिरपि निर्विवादा। ततश्च तदभावव्याप्यतावच्छेदकस्वाभावत्वकत्वरूपव्यापकाभावे तद्व्यापकत्वरूपव्याप्याभावप्रसङ्ग इति। शेषं पूर्ववदेव। **साध्यद्वारे-**

तत् शाकाद्याहारपरिणतिपूर्वकं न भवतीत्येतावता तत्सिद्धेः ॥ श्यामत्वजातिविशेषोऽनुपात्त-विशेषणः साध्यः ; तेन न व्यर्थतेति चेन्न ; विशेषणमन्तरेण तस्य दुर्वचत्वात् । विशेषशब्दमात्राभिधानेऽपि तस्यैव व्यर्थत्वात् ॥

किञ्च कार्यत्वात् सकर्तृकमित्यत्रापि व्यर्थविशेषणत्वं सुवचम् ; हेतुमत्त्वमात्रव्यतिरेकेण कार्यत्वव्यतिरेकस्य सुवचत्वात् ॥ हेतुशब्दोऽत्रानुपात्त इति चेन्न ; तस्य फलितत्वात् । अन्यथा

---

व्यर्थविशेषणत्वं स्यादिति भावः । तदेवोपपादयति **यच्छ्यामं न भवतीति । तस्य दुर्वचत्वादिति ।** श्यामपदमात्रेण श्यामत्वजातिविशेषस्याप्रतीतेस्तन्मात्रवाचकस्य विशेषणान्तराघटितस्य शिञ्जितशाशितादि शब्दवदभावादित्यर्थः ॥ **व्यर्थविशेषणत्वमिति ।** कर्तृरूपहेतुमत्त्वं हि सकर्तृकत्वम् ; तत्र हेतुमत्त्वमेव

---

त्यादेरपि विशिष्टसाध्यस्योपाधिव्यापकत्वं न स्यात् ; उपाध्यभावव्याप्यतावच्छेदकत्वाभाववत्वकत्व-विरहात् । व्यापकाभावे व्याप्याभावस्यावश्यकत्वात् । तद्व्यापकत्वं प्रति तदभावव्याप्यतावच्छेदक त्वाभाववत्वकत्वस्य व्यापकतायाः सर्वसंप्रतिपन्नत्वादिति तात्पर्यम् । **शाकाद्याहारपरिणतिपूर्वकमिति ।** तादृशाहारजन्यमित्यर्थः । **एतावता**=श्यामत्वाभाववत्वमात्रेण, **तत्सिद्धेः**=समव्याप्तिसिद्धेः । तथाच विशिष्टश्यामत्वाभाववत्वस्य व्याप्यतावच्छेदकत्वासंभवादुक्तरीत्या विशिष्टश्यामत्वस्य शाकाद्याहारजन्यत्व-रूपोपाधिव्यापकत्वाभावप्रसङ्ग इति फलितोऽर्थः । श्यामत्वव्याप्यजातिविशेषपुरस्कारेणैव श्यामत्वस्य साध्यत्वाभ्युपगमात् तत्र विशेषणान्तरनिवेशविरहेण तादृशजात्यवच्छिन्नप्रतियोगिताकाभाववत्वस्य व्याप्यता वच्छेदकत्वोपपत्त्या नोक्तानुपपत्तिरित्यभिप्रायेण शङ्कते **श्यामत्वजातिविशेष इति ।** श्यामत्वत्व-व्याप्यजातिविशेषविशिष्ट इत्यर्थः । **अनुपात्तविशेषणः** विशेषणान्तराविशेषितः । **विशेषणमन्तरेण तस्य दुर्वचत्वादिति ।** शब्दत्वव्याप्यजात्यवच्छिन्नवाचकशिञ्जितशाशितादिशब्दवत् तादृशजात्य-वच्छिन्नवाचकपदाभावात् श्यामशब्दमात्रेण तादृशजातिविशेषप्रतीत्यसंभवाच्च परार्थानुमाने साध्य-निर्देशासंभवादित्यर्थः । ननु श्यामत्वविशेषवानित्येव साध्यनिर्देशान्नोक्तदोष इत्याशङ्क्याह **विशेषेति । तस्यैव व्यर्थत्वादिति ।** अयं भावः—**श्यामत्वविशेषवानित्यत्र** न तावद्विशेषशब्दो निरर्थकः, न वाऽनन्वितार्थकः ; तथा सति श्यामत्वमात्रस्यैव साध्यताया वाच्यत्वेन प्रागुक्तदोषप्रसङ्गात् ; निग्रह-स्थानप्रसङ्गाच्च । किन्तु श्यामत्वान्वितार्थविशेषप्रतिपादक इत्येवाश्रयणीयम् । तथाच श्यामत्व त्वावच्छिन्नप्रतियोगिताकाभाववत्वस्यैव व्याप्यतावच्छेदकत्वसंभवाद्विशेषपदार्थसहितश्यामत्वत्वावच्छिन्न-प्रतियोगिताकाभाववत्वस्य न तदवच्छेदकत्वसंभव इति । न च—श्यामत्वशब्दस्य श्यामत्वत्वव्याप्यजाति-विशेषावच्छिन्ने लक्षणा ; विशेषपदं तात्पर्यग्राहकम् ; विशेषपदस्यैव वा तत्र लक्षणा ; श्यामत्वपद तात्पर्य-ग्राहकम् ; अतो न दोषः—इति वाच्यम् । उक्तलक्षणाया निरूढत्वे प्रमाणविरहेण कथायां तत्स्वीकारा-संभवात् , शक्त्या निरूढलक्षणया वा बोधक एव शब्दः कथायां प्रयोक्तव्य इति हि नियमः सर्वसंप्रतिपन्नः ॥

**व्यर्थविशेषणत्वं सुवचमिति ।** सकर्तृकमित्यस्य कर्तृनिष्ठकारणतानिरूपकमित्यर्थात् कारणतायां कर्तृनिष्ठत्वविशेषणवैयर्थ्यं सुवचमित्यर्थः । तदुपपादयति **हेतुमत्त्वेति ।** कारणतानिरूपकत्वेत्यर्थः । **सुवचत्वादिति ।** तथाच कर्तृनिष्ठकारणतानिरूपकत्वरूपसाध्यस्योक्तरीत्या कार्यत्वरूपहेतुव्याप-

**अशरीरत्वशब्दप्रयोगे भवतोऽपि पर्यनुयोगानवकाशात् ॥ विग्रहेण शरीराजन्यत्वं फलितमिति चेत्; तर्हि कर्तृशब्दनिर्वचनेनापि हेतुविशेषत्वं फलितम्। सकर्तृकमिति हेतुतयैव सम्बन्धो वाच्यः।**

---

साध्यमस्त्वित्यर्थः । **विग्रहेणेति** । **न शरीरं** जनकत्वेन यस्येति विग्रहेणेत्यर्थः । **हेतुविशेषत्वमिति** ।

---

कत्वाभावप्रसङ्ग इति भावः । ननु सकर्तृकमित्यत्र कारणताबोधकपदाभावात् न कर्तृनिष्ठकारणतानिरूपकत्वस्य साध्यत्वलाभः; सहशब्दस्य संबन्धसामान्यरूपसहित्यमात्रार्थकत्वेऽपि कारणतानिरूपकत्वात्मकसंबन्धविशेषार्थकत्वविरहात् । ततश्च कर्तृप्रतियोगिकसंबन्धस्यैव साध्यत्वं लभ्यते । तत्र च कर्तृप्रतियोगिकत्वविशेषणवैयर्थ्यम्; तदभावे यत्र संबन्धाभावस्तत्र कार्यत्वाभाव इति व्याप्तिग्रहस्य वाच्यतया संबन्धाभावाप्रसिद्ध्या तदसंभवात् । अतः कर्तृप्रतियोगिकत्वविशेषणस्य व्याप्तिग्रहोपयोगितया न वैयर्थ्यशङ्कावकाश इत्यभिप्रायेण शङ्कते **हेतुशब्द इति** । हेतुत्वबोधकशब्द इत्यर्थः; हेतोश्शब्द इति व्युत्पत्तेः; हेतुपदस्य भावप्रधानत्वाच्च । **तस्य फलितत्वादिति** । हेतुत्वस्य पर्यवसानविषयत्वादित्यर्थः । अयं भावः—न तावत् कर्तृसंबन्धमात्रं साध्यमिति वक्तुं शक्यम्; सिद्धसाधनप्रसङ्गात्, जीवरूपकर्तृप्रतियोगिकसमानकालिकत्वादिरूपसंबन्धस्योभयसंप्रतिपन्नत्वात् । अतः सहशब्दोक्तसंबन्धसामान्यस्य कारणतानिरूपकत्वरूपसंबन्धविशेष एव पर्यवसानमावश्यकमिति । ननु जन्यतासंबन्धेन कर्तुरेव साध्यत्वाभ्युपगमात्र कस्यचिद्वैयर्थ्यावकाश इत्यत आह **अन्यथेति** । जन्यतासंबन्धेन कर्तृसाध्यत्वाभ्युपगम इत्यर्थः । **अशरीरत्वशब्दप्रयोग इति** । जन्यतासंबन्धावच्छिन्नशरीरत्वावच्छिन्नप्रतियोगिताकाभावपराशरीरत्वशब्देन हेतुनिर्देश इत्यर्थः । **पर्यनुयोगानवकाशादिति** । तत्रापि वैयर्थ्यस्य वक्तुमशक्यत्वादिति भावः । यद्यपि ज्ञानावच्छिन्नानुयोगिताकापृथक्सिद्धिप्रतियोगित्वविशिष्टद्रव्यत्वरूपशरीरत्वघटकद्रव्यत्वावच्छिन्नजन्यतासंबन्धावच्छिन्नप्रतियोगिताकाभावस्य हेतुत्वसंभवात् तत्रापीतरांशवैयर्थ्यं सुवचम्-तथापि स्वावच्छिन्नानुयोगिताकापृथक्सिद्धिसंबन्धप्रतियोगिद्रव्यजन्यत्वसंबन्धावच्छिन्नज्ञानत्वावच्छिन्नप्रतियोगिताकाभावस्यैव हेतुत्वाभ्युपगमसंभवान्न कस्यापि वैयर्थ्यशङ्कावकाशः । **विग्रहेणेति** । न शरीरं यस्येति विग्रहेणेत्यर्थः । **शरीराजन्यत्वं फलितमिति** । विग्रहवाक्येषष्ठ्या जनकत्वबोधनेन यज्जनकत्वाभाववच्छरीरमिति विग्रहवाक्यार्थे सति तद्वैपरीत्येन समासवाक्याच्छरीराजन्यत्वस्यैव बोधनीयत्वादिति भावः । तादृशविशिष्टार्थे चरमपदस्य विशिष्टसमासस्यैव वा लाक्षणिकतया फलितत्वोक्तिः । तथा चाशरीरत्वशब्दादपि शरीराजन्यत्वस्यैव बोधनात् तस्यैव हेतुत्वमावश्यकमिति वैयर्थ्यं दुर्वारमिति भावः । न चाशरीरशब्दस्योक्तरीत्या शरीराजन्यत्वार्थकत्वेऽपि शरीरशून्यत्वशब्देन शरीराभावशब्देन वा जन्यतासंबन्धावच्छिन्नशरीरत्वावच्छिन्नप्रतियोगिताकाभावबोधकेन हेतुनिर्देशसंभवाच्छरीराजन्यत्वस्यैव हेतुत्वमाश्रयणीयमिति निर्बन्धो निर्निबन्धन इति वाच्यम्—वृत्त्यनियामकसंबन्धस्यात्यन्ताभावप्रतियोगितावच्छेदकत्वविरहेण उक्तशरीराभावस्यैवाप्रसिद्ध्या शरीराजन्यत्वस्यैव हेतुत्वमावश्यकमित्यत्र तात्पर्यात् । **कर्तृशब्दनिर्वचनेति** । "स्वतन्त्रः कर्ता" इति पाणिनीयसूत्रेणेत्यर्थः । अनेन हि स्वतन्त्रकारकस्यैव कर्तृसंज्ञा विहिता । कारकत्वञ्च, "क्रियां कुर्वद्धि कारकम्" इत्युक्तेः क्रिया-

एवं [1]सावयवत्वादनित्यत्वाभिधानेऽप्यवयवजन्यत्वं फलितमिति तत्रापि व्यर्थविशेषणता स्यात् ।

स्वतन्त्रहेतुत्वस्यैव कर्तृपदार्थत्वेन स्वतन्त्रपदवैयर्थ्यादिति भावः । अभिधानेऽपीति । साधनेऽपीत्यर्थः ।

स्वरूपमिति सकर्तृकमित्यत्र संबन्धो हेतुस्वरूप एव सिध्येदिति भावः । हेतुतयैव संबन्ध इति हेतुत्वाभिन्न एव संबन्ध इत्यर्थः । तथाच कर्तृनिष्ठहेतुत्वनिरूपकत्वस्यैव साध्यत्वं वाच्यं न तु जन्यतासंबन्धेन कर्तुरित्युक्तरीत्या वैयर्थ्यं दुर्वारमिति भावः । न च संयोगसंबन्धेन वह्नेस्साध्यतायामपि पर्वतो वह्निमानिति प्रतिज्ञावत् कर्तुर्जन्यतासंबन्धेन साध्यतायामप्यङ्कुरादिकं कर्तृमदिति प्रतिज्ञोपपत्त्या कर्तृनिष्ठ कारणतानिरूपकत्वमेव साधनीयमिति निर्बन्धो निर्निबन्धनः--तथा च न वैयर्थ्यावकाश इति वाच्यम्; वृत्त्यनियामकसंबन्धस्य साध्यतावच्छेदकत्वासंभवात् । साध्यतावच्छेदकत्वं ह्यनुमितिविधेयतावच्छेदकत्वमेव । तत्संबन्धावच्छिन्नविधेयताशाल्यनुमितौ च तत्संबन्धघटितव्यापकताज्ञानं हेतुरित्यविवादम् । तत्संबन्धघटितव्यापकत्वञ्च हेतुसमानाधिकरणात्यन्ताभावनिरूपिततत्संबन्धावच्छिन्नप्रतियोगितानवच्छेदकधर्मवत्त्वरूपमेव । इत्थं च वृत्त्यनियामकसंबन्धस्यात्यन्ताभावप्रतियोगितानवच्छेदकत्वेन व्यापकताघटकत्वासंभवान्न साध्यतावच्छेदकत्वसंभव इति ॥

अनित्यत्वाभिधाने=अनित्यत्वसाधने । तत्रापीति । अवयवजन्यत्वेऽपीत्यर्थः । व्यर्थविशेषणता स्यादिति । ननु—अत्र साध्यभूतमनित्यत्वं किंरूपम्; किं प्रागभावप्रतियोगिमात्रम्, उत ध्वंसप्रतियोगित्वम्, अत वोभयम् । आद्ये जन्यत्वमात्रस्यैव सम्यक्त्वेन तत्रावयवविशेषणस्य यत्किञ्चिद्दोषपरिहारानुपयुक्ततया तद्वैयर्थ्यं सर्वैरपि दुर्वारम् । द्वितीयतृतीययोर्ध्वंसे व्यभिचारवारकतया अवयवविशेषणमर्थवदेव । न च तथाप्यवयवध्वंसे व्यभिचारो दुर्वारः, प्रतियोगिविधयावयवस्य हेतुत्वादिति वाच्यम्; सावयवजन्यत्वस्य स्वसमवायिजन्यत्वरूपस्य समवायसंबन्धावच्छिन्नजन्यत्वपर्यवसितस्य विवक्षितत्वात् । अतः कथमिदं सङ्गच्छत इति चेत्—अत्रोच्यते; सावयवत्वादनित्यत्वाभिधान इत्यस्य सावयवत्वहेतुना अनित्यत्वसाधन इति नार्थः; किन्तु सावयवत्वव्यापकत्वेनानित्यत्वप्रतिपादन इत्यर्थः । अयं भावः-आकाशादिकं निरवयवं नित्यत्वादित्यत्र यत् सावयवं तदनित्यं यथा घटादिकमिति व्यतिरेक्युदाहरणेनावयवजन्यत्वरूपसावयवत्वव्यापकत्वेन प्रागभावप्रतियोगित्वरूपानित्यत्वस्य बोधनं नोपपद्यते—जन्यत्वत्वावच्छिन्नस्यैवोक्तनित्यत्वव्याप्यतया अवयवजन्यत्वत्वावच्छिन्नस्य व्यर्थविशेषणघटिततया भवन्मते व्याप्यत्वासंभवात् । निरवयवत्वस्य साध्यतायां हि यत् सावयवं तदनित्यमित्येव व्यतिरेक्युदाहरणं प्रयोक्तव्यम्—न तु यज्जन्यं तदनित्यमितीत्येतत् सर्वसंमतम् । तद्धर्मावच्छिन्नव्याप्यतानिरूपितव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभाववत्ताज्ञानस्यैव तद्धर्मावच्छिन्नप्रतियोगिताकाभावानुमितिहेतुत्वात् । अतो व्यर्थविशेषणत्वे व्याप्यत्वं नास्तीति वक्तुमशक्यमिति । एतेन स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तरघटितस्यैव व्याप्यतावच्छेदकत्वमिति नियमोऽप्यनुपपन्न इत्युक्तं भवति—

1 व्यतिरेकव्याप्तावभावरूपव्याप्येत्यर्थविशेषणत्वमुक्त्वा अन्वयव्याप्तौ भावरूपे व्याप्येऽपि तदाह एवमिति । अभावस्थले व्यक्तिभेदान्न गुरुलघुधर्मयोः सामानाधिकरण्यमिति स्यात्; न त्वत्रेति ।

**न हि अवयवैः सम्बन्धमात्रम्, तेषु समवायमात्रं वा हेतुः; नित्येष्वपि जातिगुणादिषु तत्सम्भवात्।**

---

जातिगुणादिष्विति। न च स्वावयवसमवेतत्वाभावात् जात्यादेर्न व्यभिचार इति वाच्यम्; स्वावयवत्वं स्वहेतुभूतावयवत्वमिति तत्रापि हेतुप्रवेशात् सहेतुकत्वस्यानित्यत्वसाधनत्वक्षमतया शेषवैयर्थ्यं स्यादिति

---

अवयवजन्यत्वस्यानित्यत्वव्याप्यतावच्छेदकत्वासंभवप्रसङ्गात् ॥ ननु निरवयवत्वमवयवसंबन्धशून्यत्वम् अवयवसमवेतत्वशून्यत्वं वा। ततश्च यदवयवसंबन्धि अवयवसमवेतं वा तदनित्यमित्येवोदाहर्तव्यम्। तत्र च नावयवविशेषणवैयर्थ्यं संबन्धमात्रस्य समवेतत्वमात्रस्य वा आकाशादिनित्यद्रव्यवृत्तिविशेषसाधारणतया अनित्यत्वव्याप्यत्वासंभवादित्यत आह नहीति। हेतुरिति। व्याप्य इत्यर्थः, व्यतिरेक्युदाहरणे व्याप्यतया निर्देश्य इति यावत्। निरवयवं नित्यत्वादित्यत्र साध्यतयाऽभिमताभावप्रतियोगीति तु फलितोऽर्थः। जातिगुणादिष्विति। परमाण्वात्मकावयववृत्तिषु पृथिवीत्वादिजातिषु परिमाणादिगुणेषु विशेषेषु चेत्यर्थः। तत्संभवादिति। अवयवसंबन्धस्य तत्समवेतत्वस्य वा संभवादित्यर्थः। तथाच तच्छून्यत्वस्य साध्यतायां जातिगुणादिषु व्यभिचारप्रसङ्गादवयवजन्यत्वमेव साध्यतया स्वीकार्यमिति भावः। अत्रेदं बोध्यम्—धूमप्रागभावत्वादेर्व्याप्यतावच्छेदकत्वोपपत्तये स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तरघटितस्यैव व्याप्यतावच्छेदकत्वविरहः—न तु गुरुधर्ममात्रस्येति नैयायिकैरेवाभिहिततया शरीरजन्यत्वाभावजन्यत्वसामान्याभावयोर्भिन्नतया जन्यत्वसामान्याभावत्वस्य शरीरजन्यत्वाभावत्वसामानाधिकरण्यविरहान्न तस्य व्याप्यतावच्छेदकत्वानुपपत्तिः। विशेषाभावातिरिक्तसामान्याभावानुपगमेन भावान्तरस्यैवाभावत्वाभ्युपगमेन जन्यत्वसामान्याभावत्वस्य शरीरजन्यत्वाभावत्वसामानाधिकरण्यसंभवेऽपि जन्यत्वत्वावच्छिन्नप्रतियोगित्वयोर्भिन्नतया शरीरजन्यत्वत्वावच्छिन्नप्रतियोगितासंबन्धेन शरीरजन्यत्वविशेषिताभावत्वे जन्यत्वत्वावच्छिन्नप्रतियोगितासंबन्धेन जन्यत्वविशेषिताभावत्वस्याघटकतया न शरीरजन्यत्वाभावत्वस्य व्याप्यतावच्छेदकत्वक्षतिः। प्रतियोगिविशेषिताभावबुद्धौ केवलप्रतियोगितायास्संसर्गतया भानविरहात् प्रतियोगिसंसर्गतयाधेयत्वमानावश्यंभावात् जन्यत्वप्रतियोगिकाभावत्वस्य व्याप्यतावच्छेदकत्वविरहान्न न तद्घटितत्वमादायानुपपत्तिः। एवं स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तरघटितस्य व्याप्यतावच्छेदकत्वं नास्तीत्यप्यनुपपन्नम्; अवयवजन्यत्वत्वस्यानित्यत्वव्याप्यतावच्छेदकत्वासंभवप्रसङ्गात्; न चेष्टापत्तिः; निरवयवं नित्यत्वादिति प्रयोगे यत्सावयवं तदनित्यं यथा घटादीति सर्वसंप्रतिपन्नव्यतिरेक्युदाहरणासङ्गतिप्रसङ्गात्। सावयवत्वं अवयवजन्यत्वम्। किञ्च निर्धूमो निर्वह्नित्वादित्यादौ यत्र निर्धूमत्वाभावस्तत्र निर्वह्नित्वभाव इति व्यतिरेक्युदाहरणानुपपत्तिः—धूमाभावाभावस्य धूमरूपतया तादृशाभावत्वस्य स्वसमानाधिकरणधूमत्वात्मकव्याप्यतावच्छेदकघटिततया व्याप्यतावच्छेदकत्वासंभवात्। किं बहुना—व्याप्यता—तावच्छेदकत्वे नातिरिक्ताखण्डोपाधिरूपे; मानाभावात्; किन्तु साध्याभाववदवृत्तित्वविशिष्टसाध्यसामानाधिकरण्य—तदवच्छेदकत्वरूपे हेतुव्यापकसाध्यसामानाधिकरण्यतदवच्छेदकत्वरूपे वा। ततश्च पर्वतादिनिरूपिताधेयतावच्छेदकत्वेन सर्वसंप्रतिपन्ने नीलधूमत्वादौ वह्न्यभाववदवृत्तित्वसहितवह्न्यधिकरणनिरूपिताधेयतारूपव्याप्यतावच्छेदकं नास्तीति

विपक्षे बाधकतयोक्ताकारणकार्योत्पत्तिप्रसङ्गोऽपि कर्तुः कारणविशेषत्वनिश्चयादेव परिहृतः॥ अचेतनं चेतनाधिष्ठितमेव प्रवर्तत इति नियमात् कारणमात्रत्वं सिद्धमिति चेन्न; नियमासिद्धेः।

भावः। **कारणविशेषत्वनिश्चयादिति**। विशेषकारणत्वादिति यावत्। अयं भावः—**अकारणकार्योत्पत्तिप्रसङ्ग**रूपबाधकबलेन कारणमात्रं सिध्यतु नाम, न तु तद्विशेषता। ततश्च विशेषकारणरूपकर्तृजन्यत्वसाधके त्वदनुमाने नायमनुग्राहकस्तर्क इति। **कारणमात्रत्वमिति**। सामान्यकारणत्वमित्यर्थः। ततश्च अकारणकार्योत्पत्तिप्रसङ्गरूपविपक्षबाधकतर्कस्य कारणविशेषानाक्षेपकत्वेऽपि कर्तुः कारणसामान्यरूपतया तदाक्षेपकत्वं सम्भवतीति भावः। ननु **चेतनाधिष्ठितमेवे**ति नियमस्य कोऽर्थः? अचेतनाधिष्ठितं न प्रवर्तत इति चेतनान्ययोगव्यवच्छेदोऽभिप्रेतः, उत चेतनाधिष्ठानशून्यं न प्रवर्तते

कथं शक्यं वक्तुम्। अतो नीलधूमत्वादेरपि व्याप्यतावच्छेदकत्वमस्त्येवेत्यकामेनापि स्वीकार्यम्। न चैवं सति वह्निमान् प्रमेयादित्यादेरसद्धेतुत्वप्रसङ्गः—प्रमेयत्वादौ वह्न्यधिकरणवृत्तितावच्छेदके विशिष्टवह्न्यधिकरणवृत्तितारूपव्याप्यतावच्छेदकत्वानपायादिति वाच्यम्; हेतुतावच्छेदकावच्छेदेन साध्याभाववदवृत्तित्वसाध्यसामानाधिकरण्ययोः, एकसद्धर्ममिति रीत्या ज्ञानस्यैवानुमितिहेतुतया हेतुतावच्छेदकसामानाधिकरण्येनाव्यभिचारज्ञानस्य तद्विरोधितया प्रमेयत्वसामानाधिकरण्येन वह्न्यभाववदवृत्तित्वरूपाव्यभिचारस्य जागरूकत्वात् हेतुव्यापकसाध्यसामानाधिकरण्यरूपव्याप्तिरूपत्वे तु हेतुतावच्छेदकावच्छिन्नव्यापकत्वमेव साध्ये न संभवतीति सद्धेतुत्वशङ्कैव नावतरति। तस्मात् शरीराजन्यत्वेन कर्तृजन्यत्वाभावसाधने व्यापकत्वासिद्धिशङ्काया एवानवकाश इति। विपक्षे बाधकं निरस्यति **विपक्ष इति**। **कारणविशेषत्वनिश्चयादिति**। कर्तृकालादृष्टोपादानादिष्वनेकेषु कारणेषु कर्ताऽप्येकः कारणविशेष इत्येवं निश्चयादित्यर्थः। तथाच कर्तृरूपकारणाभावेऽपीतरकारणैरेवाङ्कुराद्युत्पत्तिरुपपद्यत एवेति शङ्कायां कथमकारणकार्योत्पत्तिप्रसङ्गावतारः, कारणसामान्याभावेऽपि कार्योत्पत्त्यभ्युपगमे हि तदवतार इति भावः। अनुमानान्तरेणेश्वरसिद्धिं शङ्कते **अचेतनमिति**। **चेतनाधिष्ठितमेव प्रवर्तत इति नियमादिति**। चेतनव्यापाराधीनप्रवृत्तिमत् सदेव प्रवर्तत इति नियमादित्यर्थः। यत्राचेतनप्रवृत्तित्वम्, तत्र चेतनव्यापाराधीनत्वमिति नियमादिति यावत्। **प्रवृत्तिः** कार्योत्पादनम्। तच्च स्वकार्याव्यवहितप्राक्क्षणवृत्तित्वम्, स्वजनकनिष्ठ स्वाव्यवहितप्राक्क्षणनिरूपित वोभयसंबन्धेन कार्यविशिष्टाधेयत्वपर्यवसितम्। **कारणमात्रं सिद्धमिति**। अङ्कुरादिकारणनिष्ठतदुत्पादने अचेतननिष्ठकार्योत्पादनत्वेन हेतुना वास्यादिनिष्ठच्छिदानुकूलव्यापारदृष्टान्तेन चेतनव्यापाराधीनत्वसिद्धौ जीवव्यापारस्य तत्प्रयोजकत्वासंभवादीश्वरसिद्धिरिति भावः। अमूर्तेषु प्रेरणासंभवेन प्रेरकत्वासिद्धावपि कार्योत्पादनप्रयोजकव्यापारवत्त्वेनेश्वरसिद्धिर्निष्प्रत्यूहैवेत्यभिप्रायेण मात्रपदप्रयोगः। अत्र चेतननिष्ठदुःखदुत्पादने रोगाद्यधीने व्यभिचारवारणाय, हेतावचेतननिष्ठत्वनिवेशः। अचेतननिष्ठस्वाभाविकधर्मे तद्वारणाय स्वजनकनिष्ठत्वसंबन्धस्य दण्डादिनिष्ठमहाकालवृत्तित्वे तद्वारणाय स्वाव्यवहितप्राक्क्षणनिरूपितत्वसंबन्धस्य च निवेशः। **नियमासिद्धेरिति**।

दृश्यते हि अयस्कान्तादिभिरप्ययःप्रभृतेः प्रवर्तनम् ॥ अयोगव्यवच्छेदः[1] सिषाधयिषितः, न त्वन्ययोगव्यवच्छेद इति चेन्न ; अन्वयव्यतिरेकवतस्तस्यैवान्यस्य विशेषहेतुत्वोपपत्तौ ततोऽतिरिक्तस्यादृष्टस्य कल्पनायोगात् । विपक्षे बाधकाभावस्य चोक्तत्वात् ॥

किञ्च इदमधिष्ठानं किंरूपम्? प्रेरणमिति चेन्न ; अमूर्तेषु तदयोगात् ॥ हेतुत्वेन ज्ञानमात्रमिति चेन्न ; प्रयत्नस्याकिञ्चित्करत्वप्रसङ्गात् ॥ ज्ञानादित्रयवतः सन्निधानमात्रमिति चेन्न ; तस्य नित्यत्वेन

---

इत्ययोगव्यवच्छेदो वा इत्यभिप्रेत्य प्रथमं निराचष्टे—दृश्यते हीति । द्वितीयं शङ्कते—अयोगव्यवच्छेद इति । विशेषहेतुत्वोपपत्ताविति । त्वदभिमतचेतनमात्रेण कार्यानिष्पत्त्या आवश्यकस्याचेतनस्यैवाधिष्ठातृत्वोपपत्तावित्यर्थः ॥

किञ्चेदमिति । चेतनकर्तृकमधिष्ठानं किंरूपमित्यर्थः । हेतुत्वेन ज्ञानमात्रमिति चेदिति । ईश्वरो हेतुचक्रमधितिष्ठतीत्यस्य हेतुत्वेन जानातीत्यर्थ इति भावः । प्रयत्नस्येति । प्रयत्नमन्तरेणाप्यधिष्ठातृ-

---

चेतनव्यापाराधीनत्वे अचेतननिष्ठकार्योपधानत्वव्यापकत्वासिद्धेरित्यर्थः । अयःप्रभृतेः प्रवर्तनमिति । तथा चायोनिष्ठगमनादिकार्योपधानेऽप्ययस्कान्ताधीने व्यभिचारात् नोक्तहेतोस्साधकत्वमिति भावः । नन्वयस्कान्ताधीनायःप्रवृत्तेरपि पक्षकोट्यन्तर्गततया न तत्र व्यभिचारोद्भावनसंभवः । एवमपि यदि चेतनव्यापारमात्राधीनत्वं सिषाधयिषितं स्यात् ; तदा पक्षान्तर्गतेऽप्ययःप्रवृत्तौ बाधो व्यभिचारश्च स्यादेव । न त्वेतदस्ति ; चेतनव्यापाराधीनत्वमात्रस्यैव साध्यत्वात् अङ्कुराद्युत्पादनस्येवायोनिष्ठगमनाद्युपधानस्यापीश्वरव्यापाराधीनत्वसन्देहान्न तत्र व्यभिचारोद्भावनसंभव इत्यभिप्रायेण शङ्कते अयोगव्यवच्छेद इति । अन्यस्येति । अयस्कान्तादेरित्यर्थः । विशेषहेतुत्वोपपत्ताविति । चेतनव्यापारनिरपेक्षहेतुत्वोपपत्तावित्यर्थः ॥

अधिष्ठानस्वरूपविकल्पेनापि दूषणमाह किञ्चेति । किंरूपमिति । प्रेरणरूपं वा, हेतुत्वेन ज्ञानमात्रं वा, ज्ञानादित्रयवतस्सन्निधानमात्रं वेति भावः । अमूर्तेषु तदयोगादिति । प्रेरणं हि क्रियानुकूलव्यापारः । न ह्यमूर्ते कालाकाशादौ क्रिया संभवति । ततश्च तत्तन्निष्ठकार्योपधाने चेतनव्यापारप्रयोज्यक्रियाधीनत्वरूपचेतनाधिष्ठानाधीनत्वं नोपपद्यत इति तत्र बाधो व्यभिचारश्च । तादृशमेव हि साध्यं दृष्टान्ते वास्यादौ दृष्टमिति भावः । हेतुत्वेन ज्ञानमात्रमिति । मात्रशब्देन क्रियाहेतुप्रयत्नव्यवच्छेदः । तथाच चेतनगतहेतुत्वज्ञानाधीनत्वस्यैव साध्यतया अमूर्तगतकार्योपधानेऽपि तत्संभवान्नोक्तदोषावकाश इति भावः । प्रयत्नस्याकिञ्चित्करत्वप्रसङ्गादिति । तस्याधिष्ठानानुपयोगित्वादिति भावः । तथाच ईश्वरस्य चिकीर्षाप्रयत्नवत्त्वासिद्धिप्रसङ्ग इति फलितम् । ज्ञानादित्रयवतस्सन्निधानमात्रमिति । सन्निधानमिह संयुक्तसंयोगः ; न तु संयोगमात्रम् ; विभुषु तदसंभवात् । सन्निधानमात्रमित्यत्र

---

1 अयोगव्यवच्छेद इति । चेतनाधिष्ठितमेव प्रवर्तत इत्यत्र एवकारः चेतनाधिष्ठानायोगव्यवच्छेदपरः, न तु तदितराधीनाधिष्ठाननिवारकः इत्यर्थः । तस्यैव = अयस्कान्ताधिष्ठानस्यैव । नन्वेवं रचनानुपपत्त्यधिकरणविरोधः । न । प्रथमतश्चेतनाधिष्ठानमपेक्षितम् । तदधीनाचेतनाधिष्ठानपरम्परासु मध्ये प्रत्येकं चेतनापेक्षा नास्ति; अन्त्यपरम्परायामिव । तथाऽनेककार्यानुद्देशेऽपि एकमात्रोद्देशेऽपि तदधीनानेककार्यपरम्परा भवति । यथा वृक्षे पातिते तदधोगृहतद्गतभाण्डपुरुषादिभङ्गे । अतः सर्वकार्यस्य पुरुषासिद्धिरिति ।

कार्यस्यापि सदातनत्वप्रसङ्गात्॥ अदृष्टविशेषात् नियम इति चेत्; न तर्हि अदृष्टस्य एतदधीना प्रवृत्तिः, तस्यैव तन्नियामकत्वात्। अन्यथा तस्यापि यावत्सत्त्वं प्रवृत्तिप्रसङ्गात्। किञ्च स्वयमचेतनस्य ईश्वरज्ञानस्य न चेतनाधिष्ठानमस्ति; ज्ञानान्तराभावात्। वस्तुतश्चेतन एव ईश्वरात्मा तदाश्रयतया स्थित इति चेन्न; जीवेन सिद्धसाधनात्॥ सामान्यतः स्वयमेव तदपि ज्ञानं प्रतीयते

---

त्वोपपत्तेरिति भावः। तस्य नित्यत्वेनेति। सन्निधानस्येत्यर्थः। एतदधीने न। ईश्वराधीनेत्यर्थः। तस्यैव तन्नियामकत्वादिति। अदृष्टस्यैवेश्वरनियामकत्वादित्यर्थः। ईश्वराधीनत्वे बाधकमाह अन्यथा तस्यापीति। यावत्सत्त्वमिति। यावदीश्वरसत्त्वमित्यर्थः। ईश्वरज्ञानस्येति। कर्मणि षष्ठी। ईश्वरज्ञानस्य न चेतनाधिष्ठितत्वमित्यर्थः। ज्ञानान्तराभावादिति। ततश्च हेतुत्वेन ज्ञानमात्ररूपाधिष्ठानस्य वा, तद्विषयकज्ञानादिमत्त्ववत् सन्निधानरूपाधिष्ठानस्य वा, अभावादधिष्ठानासम्भव इति भावः। वस्तुतश्चेतन एवेति। न तद्विषयकज्ञानादिमत्त्वमधिष्ठानेऽपेक्षितम्। किं तु ज्ञानादिमतः

---

मात्रशब्देन ज्ञानादेः कारणगतव्यापारहेतुत्वव्यवच्छेदः। तस्येति। सन्निधानरूपाधिष्ठानस्येत्यर्थः। कार्यस्यापि सदातनत्वप्रसङ्गादिति। चेतनाधिष्ठानस्यैव कार्योपधानहेतुत्वादिति भावः। तथाच ज्ञानादिमत्त्ववत्सन्निधानस्य कार्योपधानहेतुत्वासंभवात् तादृशाधिष्ठानाधीनत्वसाधने बाध इत्युक्तं भवति। सन्निधानरूपाधिष्ठानस्य सदातनत्वेऽप्यदृष्टविशेषस्यापि कार्योत्पत्तिहेतुत्वाभ्युपगमान्न कार्यस्य सदातनत्वप्रसङ्ग इति शङ्कते अदृष्टविशेषान्नियम इति। अदृष्टपरिपाके सति कार्योत्पत्तिः; तदभावे नेत्येवम् नियम इत्यर्थः। तेनापरिपाकदशापन्नादृष्टान्न कार्यप्रसङ्गः। दूषयति न तर्हीति। तर्हि=कार्यनियमस्यादृष्टविशेषाधीनत्वे, अदृष्टस्य एतदधीनप्रवृत्तिर्नेत्यन्वयः। एतदधीनप्रवृत्तिः=ईश्वराधीनकार्योपधानम्। कुत इत्यत्राह तस्यैव तन्नियामकत्वादिति। अदृष्टस्यैवेश्वरनिष्ठकार्योपधानप्रयोजकत्वादित्यर्थः। अन्यथेति। अदृष्टस्येश्वरनिष्ठकार्योपधानप्रयोजकत्वाभाव इत्यर्थः। तस्यापीति। ईश्वरस्यापीत्यर्थः। यावत्सत्त्वमिति। यावदीश्वरसत्त्वमित्यर्थः। प्रवृत्तिप्रसङ्गादिति। कार्योपधानप्रसङ्गादित्यर्थः। अयं भावः—अदृष्टनिष्ठकार्योपधानस्येश्वरसन्निधानरूपाधिष्ठानाधीनत्वं न संभवति संयुक्तसंयोगरूपसन्निधानस्यैवादृष्टे असंभवात्। संबन्धान्तरस्य संभवेऽपि तस्यादृष्टगतकार्योपधानप्रयोजकतायां प्रमाणाभावात्, तस्यासार्वत्रिकत्वेनाधिष्ठानरूपत्वासंभवात् अदृष्टपरिपाकेनैव कार्योत्पत्तिनियमोपपत्तेः, ईश्वरनिष्ठकार्योपधानेऽप्यदृष्टपरिपाकस्यैव नियामकत्वाभ्युपगमाच्च। इत्थंचादृष्टनिष्ठकार्योपधाने बाधो व्यभिचारश्च; तस्योक्तचेतनाधिष्ठानाधीनत्वासंभवादिति। ईश्वरज्ञानस्येति कर्मणि षष्ठी। ईश्वरज्ञाने चेतनाधिष्ठितत्वम् नास्तीति फलितोऽर्थः। ज्ञानान्तराभावादिति। ज्ञानस्यामूर्ततया प्रेरणासंभवात्, हेतुत्वेन ज्ञानस्य वा तद्विषयकज्ञानादिमत्सन्निधानस्य वाऽधिष्ठानस्य ज्ञानान्तरमन्तरेणासंभवादिति भावः। तथाच चेतननिष्ठकार्योपधानत्वस्य चेतनाधिष्ठानाधीनत्वव्याप्यत्वमेव न संभवतीति नोक्तहेतुनोक्तसाध्यसिद्धिसंभव इत्युक्तं भवति॥ वस्तुतश्चेतन एवेति। तद्विषयकज्ञानादिमत्संबन्धो नाधिष्ठानम्, किन्तु ज्ञानगुणलक्षितवस्तुसंबन्धमात्रमित्यर्थः। जीवेन सिद्धसाधनादिति। जीवानादायानुमानपर्यवसानादित्यर्थः। अङ्कुराद्युपादाने ज्ञाना-

इति तावता तदधिष्ठानमिति चेन्न; विशेषाकारस्याहेतुत्वप्रसङ्गात् । अन्यथा यथाकथञ्चित् सर्वगोचरज्ञानवत्त्वे सर्वस्रष्टृत्वाविरोधात्॥ ज्ञानान्तरेण तदधिष्ठानमिति चेन्न; अनवस्थानात् । एतेनैव तदधिष्ठानमिति चेन्न; अन्योन्यप्रवर्तनेऽन्योन्याश्रयणात्॥ उत्तरस्य ज्ञानस्य जगत्कारणत्वा-

---

सन्निधानमात्रमित्यर्थः । **सामान्यतः स्वयमेवेति** । हेतुत्वेनोपलम्भविषयत्वमेवाधिष्ठितत्वम् । ईश्वरज्ञाने च हेतुतया स्वेनोपलभ्यमानत्वमस्त्येव । न च कर्मकर्तृभावविरोधः; ईश्वरज्ञानं हेतुरित्येवंरूपेण विशेषाकारेण ज्ञानस्य स्वकारणत्वोल्लेखन एव कर्मकर्तृभावविरोधः । न तु सामान्याकारेण स्वस्मिन् हेतुत्वोपलम्भेऽपीति भावः । **विशेषाकारस्येति** । इदमुपादानम्, इदमुपकरणम्, इदं सम्प्रदानम् इत्येवं तद्विशेषाकारेण हेतुत्वावगाहिज्ञानं हि लोकेऽधिष्ठातृत्वप्रयोजकं दृष्टम् । ततश्च **सामान्याकारावगाहि**ज्ञानवत्तामात्रेणाधिष्ठातृत्वे **विशेषाकारावगाहिज्ञानस्या**धिष्ठातृत्वाप्रयोजकतया हेतुत्वं न स्यादित्यर्थः । **सर्वस्रष्टृत्वेति** । सामान्यतः सकलकरणविषयकज्ञानवत्त्वलक्षणस्याधिष्ठानत्वस्य जीवेऽपि सम्भवादिति भावः । **एतेनैव तदधिष्ठानमिति** । प्रथमेन द्वितीयस्या**धिष्ठानमिति चे**दित्यर्थः । अतो न तृतीयापेक्षेति भावः । **अन्योन्यप्रवर्तन इति** । **अन्योन्या**धिष्ठान इत्यर्थः । **उत्तरस्य ज्ञानस्येति** । कारणस्य हि स्वप्रवृत्ता-

---

दिमत्संबन्धाधीनत्वसिद्धावपि ज्ञानादिमतो जीवत्वे बाधकाभावात् उपादानादिविषयकज्ञानवत्त्वं हि जीवानां न संभवति; न तु केवलज्ञानादिमात्रमिति भावः । ननु हेतुत्वेन ज्ञानमेवाधिष्ठानमिति न जीवान् आदायानुमानपर्यवसानसंभवः; अङ्कुरादिहेतुष्वयमङ्कुरादिहेतुरिति ज्ञानस्य जीवेष्वसंभवात्। ईश्वरज्ञानञ्च स्वयमेव स्वाधिष्ठानरूपं भवति; स्वस्याङ्कुरादिहेतुत्वावगाहित्वात् । अतो न पूर्वोक्तव्याप्त्यसंभवचोद्यावकाशः । यद्यप्ययमङ्कुरादिहेतुरित्येवंविधोल्लेखस्य स्वस्मिन्नसंभवान्न विशेषरूपेण हेतुत्वावगाहित्वम्; तथाप्युपादानादिषु हेतुत्वावगाहिज्ञानं कार्यहेतुरित्येवंविधज्ञानस्य तादृशज्ञानत्वावच्छेदेन कार्यहेतुत्वावगाहिनस्तादृशज्ञानत्वाक्रान्ते स्वस्मिन्नपि हेतुत्वावगाहित्वमुपपद्यत एवेत्यभिप्रायेण **शङ्कते सामान्यत इति** । उपादानादिविशेष्यकहेतुत्वादिप्रकारकज्ञानत्वरूपसामान्याकारेणेत्यर्थः । **प्रतीयत इति** । हेतुत्वेनेत्यादिः । **स्वयमेव प्रतीयत इति** । स्वाभिन्नप्रतीतिविशेष्यताश्रय इत्यर्थः । **विशेषाकारस्येति** । इदंत्वरूपविशेषाकारावच्छिन्नविशेष्यतानिरूपितहेतुत्वप्रकारतानिरूपकत्वस्येत्यर्थः । **अहेतुत्वप्रसङ्गात्**=अधिष्ठानघटकतया प्रयोजकत्वाभावप्रसङ्गात् । इष्टापत्तिं वारयति **अन्यथेति**। विशेषाकारस्याहेतुत्व इत्यर्थः । **यथाकथञ्चित्सर्वगोचरज्ञानवत्त्व इति** । कार्यसामान्यमुपादानादिहेतुकमिति ज्ञानवत्त्व इत्यर्थः । अयं भावः—इदमङ्कुराद्युपादानकारणमित्यादिरूपविशेषज्ञानस्य जीवानामसंभवेऽप्युक्तसामान्यज्ञानस्य तेषामपि संभवात् तावन्मात्रस्याधिष्ठानरूपत्वे जीवानादायानुमानपर्यवसानं स्यादिति । अयं हेतुरित्येवं विशेषाकारेण हेतुत्वावगाहिज्ञानमेवाधिष्ठानरूपमिति नोक्तदोषावकाशः—ईश्वरज्ञानाधिष्ठानं तु ज्ञानान्तररूपमेव । अतो न विशेषाकारेण हेतुत्वावगाहित्वानुपपत्तिरित्यभिप्रायेण शङ्कते **ज्ञानान्तरेणेति**। **अनवस्थानादिति**। ज्ञानान्तरस्याधिष्ठानं ज्ञानान्तरेण, तस्यापि ज्ञानान्तरेणेत्येवमनवस्थानादित्यर्थः । **एतेनैव तदधिष्ठानमिति**। प्रथमेन द्वितीयस्याधिष्ठानमित्यर्थः । अतस्तृतीयापेक्षाविरहान्नानवस्थेति भावः । **अन्योन्यप्रवर्तने**=अन्योन्यनिष्ठकार्योपधानहेतुत्वे । अधिष्ठानस्य कार्योप-

भावात् नान्योन्याश्रयणमिति चेन्न; अत्यन्ताकारणत्वे असत्त्वप्रसङ्गात्। कारणाधिष्ठानौपयिकस्यास्य चाकारणत्वे प्रथमस्यापि कारण(ज्ञान?)स्याकारणत्वप्रसङ्गात्। एवं चिकीर्षाप्रयत्नयोरप्यकारणत्वे गतमीश्वरकर्तृत्वेन ॥

किञ्च यदकर्तृकम्, तन्न कार्यं न भवतीति व्यतिरेकव्याप्तावहेतुकत्वमुपाधिः ॥ अहेतुकत्वम्

---

वधिष्ठानापेक्षा। द्वितीयज्ञानस्याकारणत्वान्नाधिष्ठानापेक्षेत्यर्थः। **अत्यन्ताकारणत्व इति**। सन्मात्रस्य किञ्चित् प्रति कारणत्वावश्यम्भावादिति भावः। **अकारणत्व इति**। द्वितीयज्ञानस्याकारणत्वेऽधिष्ठानानुपयुक्ततया **प्रथमज्ञानस्याधिष्ठानत्वेनाकारणत्वप्रसङ्गादिति** भावः। ननु ज्ञानस्याकारणत्वे का क्षतिः? न च ज्ञानस्याकारणत्वे कार्यानुकूलज्ञानवत्त्वलक्षणकर्तृत्वभङ्ग इति वाच्यम्; कार्यानुकूलचिकीर्षाकृतिमत्त्वेन कर्तृत्वसम्भवादित्याशङ्क्य, 'ज्ञानस्याधिष्ठानौपयिकत्वाभावेन चिकीर्षाकृत्योरप्यनधिष्ठितयोर्हेतुत्वाभावात् कर्तृत्वं न स्यात्। न च चिकीर्षाकृत्यन्तरेण चिकीर्षाकृत्योरधिष्ठानमिति वाच्यम्; ज्ञानपक्षोक्तदोषानतिवृत्तेः' इत्यभिप्रयन् आह **एवं चिकीर्षेति** ॥

**अहेतुकत्वमुपाधिरिति**। कार्यत्वे सकारणकत्वस्यैव प्रयोजकत्वेनाकार्यत्वेऽप्यहेतुकत्वस्यैव प्रयोजकत्वमिति भावः। साधनव्यापकत्वान्नोपाधित्वमिति शङ्कते **अहेतुकत्वमिति**।

---

धानहेतुतयाऽन्योन्याधिष्ठानेऽन्योन्यप्रवर्तनमावश्यकमिति भावः। **उत्तरस्य ज्ञानस्य जगत्कारणत्वाभावादिति**। कारणस्य हि सतः कार्योपधानेऽधिष्ठानापेक्षेति भावः। **अत्यन्ताकारणत्वेऽसत्त्वप्रसङ्गादिति**। सन्मात्रस्य किञ्चित्कारणत्वनियमादिति भावः। **कारणाधिष्ठानौपयिकस्येति**। कारणभूतं यत् प्रथमज्ञानं तदधिष्ठानरूपस्य द्वितीयज्ञानस्येत्यर्थः। **प्रथमस्यापि कारणस्येति**। अङ्कुरोपादानाद्यधिष्ठानरूपस्य अत एवाङ्कुरादिकारणभूतस्य प्रथमज्ञानस्यापीत्यर्थः। **अकारणत्वप्रसङ्गादिति**। कारणाधिष्ठानरूपस्य ज्ञानस्य कारणत्वनियमादेव हि प्रथमज्ञानस्य कारणत्वमङ्गीक्रियते। यदि कारणाधिष्ठानरूपस्यापि द्वितीयज्ञानस्य कारणत्वं नास्तीत्युच्यते; तदा कारणाधिष्ठानरूपज्ञानस्य कारणत्वनियमासंभवात् प्रथमज्ञानस्य कारणत्वसाधकाभावादिति भावः। ननु ज्ञानस्याकारणत्वेऽपि क्षत्यभावः। न च कार्यानुकूलज्ञानवत्त्वरूपकर्तृत्वासंभव इति वाच्यम्; तथापि चिकीर्षाकृत्योः कारणतया कार्यानुकूलचिकीर्षाकृतिमत्त्वरूपकर्तृत्वस्याव्याहतत्वादित्यत्राह **एवमिति**। ज्ञानस्येवेत्यर्थः। **चिकीर्षाप्रयत्नयोरप्यकारणत्व इति**। अयं भावः—चिकीर्षाप्रयत्नयोः कारणत्वे अचेतनयोस्तयोरनधिष्ठितयोः कार्योपधाने उक्तव्याप्तिभङ्गः। अधिष्ठानञ्च ज्ञानेन, अन्यचिकीर्षया, अन्यप्रयत्नेन वा न संभवति—कारणाधिष्ठानौपयिकस्य कारणत्वनियमेन तत्राधिष्ठानान्तरापेक्षयाऽनवस्थाप्रसङ्गात्, अन्योन्यप्रवर्तनेऽन्योन्याश्रयणात्, उत्तरेषामकारणत्वे पूर्वयोरप्यकारणत्वप्रसङ्ग इति ॥

**व्यतिरेकव्याप्तावहेतुकत्वमुपाधिरिति**। अहेतुकत्वं कारणतानिरूपकत्वाभावः। साधनाभावव्यापकत्वे सति साध्याभावव्यापकत्वादिति भावः। **अकर्तृकत्वव्यापकमिति**। अकर्तृकत्वेन निश्चितेषु नित्येषु सर्वत्राहेतुकत्वसद्भावादिति भावः। तथाच साध्याभावाव्यापकत्वाभावान्नोपाधित्व-

अकर्तृकत्वव्यापकमिति चेन्न; पक्षे सन्दिग्धत्वेनोपाधित्वानपायात्। अन्यथा शाकाद्याहारपरिणतेरप्यनुपाधित्वेन मैत्रीतनयस्य श्यामत्वमनुमीयेत। न च सामान्याभावस्य विशेषाभावव्यापकत्वम्। अन्यथा पृथिवीत्वाभावेन घटत्वाभावव्याप्तौ करकादेरपार्थिवत्वादिप्रसङ्गः। ननु कर्तुर्हेतुविशेषत्वं

---

पक्षे सन्दिग्धत्वेनेति। अहेतुकत्वरूपोपाध्यभाववत्तया निश्चिते पक्षेऽकर्तृकत्वलक्षणसाधनसन्देहादित्यर्थः। अन्यथेति। सन्दिग्धोपाधेरदूषकत्व इत्यर्थः। ननु कर्तुरभावे हेत्वभावोऽप्यावश्यक इत्यकर्तृकत्वव्यापकमेवाहेतुकत्वमित्याशङ्क्य कर्तुः कारणविशेषतया न तदभावस्य कारणसामान्याभावो व्यापक इत्यभिप्रयन् आह न च सामान्याभावस्येति। ननु अकर्तृकत्वे अकार्यत्वं भवत्येव। न च तत्राहेतुकत्वमुपाधिः; अकर्तृकत्वे अहेतुकत्वावश्यम्भावेन साधनव्यापकत्वात्। न च विशेषाभावे सामान्याभावो नावश्यक इत्युक्तमिति वाच्यम्; अहेतुकत्वमित्यस्य हेतुसामान्याभाववत्त्वमिति नार्थो वक्तुं शक्यः; अकार्येषु वियदादिष्वपि केषाञ्चित् कालादिकारणानां सत्त्वात् सामान्याभावाभावात् साध्याव्यापकत्वप्रसङ्गात्। अपि तु असम्भृतसामग्रीकत्वम्। तदा अकर्तृकत्वे असंभृतसामग्रीकत्वमित्यापादने सामान्यविशेषभावाभावात्। न च कारणविशेषाभावः सामग्र्यभावेऽप्रयोजक इति वाच्यम्; कीदृशं विशेषाभावमभिप्रेत्य सामग्र्यभावाप्रयोजकत्वमुच्यते? न तावत् कारणेष्वन्यतमाभावम्; तादृशस्य यस्य कस्यचिददृष्टादेः कारणस्याभावेऽपि सामग्र्यभावदर्शनात्। नापि सर्वकार्याननुवृत्तरूपकारणविशेषाभावस्य सामग्र्यभावाप्रयोजकत्वम्; कार्यमात्रे चेतनाधिष्ठानावश्यम्भावेन कर्तुः सर्वकार्यानुवृत्तत्वेन कर्त्रभावस्य तादृशविशेषाभावरूपत्वाभावे

---

संभव इत्युक्तं भवति। पक्षे संदिग्धत्वेनेति। अकर्तृकत्वस्येत्यादिः। उपाधित्वानपायादिति। अयं भावः—पक्षे साध्याभावसंशयात् पक्षावृत्तावुपाधौ साध्याभावाव्यापकत्वसंशयो भवत्येव। ततश्च साध्याभावे हेत्वभावव्यापकोपाधिव्यभिचारसंशयाद्धेत्वभावव्यभिचारसंशये सति न हेत्वभावव्याप्तिनिश्चयसंभव इति। अन्यथेति। सन्दिग्धोपाधेरदूषकत्व इत्यर्थः। शाकाद्याहारपरिणतेरप्यनुपाधित्वेनेति। शाकाद्याहारजन्यत्वस्याप्यनुपाधित्वप्रसङ्गेनेत्यर्थः। अयं भावः—स श्यामो मैत्रीतनयत्वादित्यत्र संशयदशायामपि तस्य सन्दिग्धोपाधितया श्यामत्वानुमित्यभावः सर्वसंप्रतिपन्नः स च नोपपद्येतेति। ननु कर्तुरपि हेतुरूपतया अकर्तृकत्वे अहेतुकत्वावश्यंभावात् कथमहेतुकत्वस्याकर्तृकत्वाव्यापकत्वसंभवः; ततश्चाव्यापकत्वसंशयस्याप्यसंभवान्न संदिग्धोपाधित्वमित्याशङ्क्य, कर्तुर्हेतुविशेषरूपतया तदभावस्य विशेषाभावात्मकतया तं प्रति सामान्याभावात्मकस्याहेतुकत्वस्य न व्यापकत्वसंभव इत्याह न चेति। अन्यथेति। विशेषाभावस्य सामान्याभावव्याप्यत्व इत्यर्थः। पृथिवीत्वाभावेनेति। निरूपितत्वं तृतीयार्थः व्याप्त्यन्वयी। घटत्वाभावव्याप्तौ=घटत्वाभावनिष्ठव्याप्तौ। करकादेरपार्थिवत्वप्रसङ्ग इति। व्याप्यसत्त्वेन व्यापकावश्यंभावादिति भावः। नन्वकर्तृकत्वस्य हेतुविशेषाभावरूपतया अहेतुकत्वस्य च हेतुसामान्याभावरूपतया सामान्याभावस्य विशेषाभावव्यापकत्वासंभवादहेतुकत्वस्याकर्तृकत्वव्यापकत्वं न संभवतीत्युपाधित्वं निष्प्रत्यूहमिति यदुक्तं तन्नोपपद्यते; अहेतुकत्वरूपसामान्याभावस्य यादृशविशेषाभावव्यापकत्वं न संभवेत्, तादृशविशेषरूपत्वं न कर्तुःसंभवतीत्यभिप्रायेण शङ्कते नन्विति। हेतुविशेषत्वमिति। यादृशहेतुविशेष-

नाम हेतुष्वन्यतमत्वम्, सर्वकार्याननुवृत्तत्वं वाऽभिप्रेत्येदमुच्यते; तत्राऽदृष्टादावपि प्रसङ्गादाद्यो निरस्तः। द्वितीयस्तु कल्पोऽसिद्ध इति चेन्न; पूर्वोक्ताधिष्ठाननियमनिरासेन दत्तोत्तरत्वात् ॥

किञ्च क्षित्यादिकमिति ईश्वरघटादिसंयोगः पक्षीकृतः, न वा? पूर्वत्र भागासिद्धिः, एतदनुमानसिद्धपक्षीकारेऽन्योन्याश्रयणम्, उत्तरत्र सन्दिग्धानैकान्तिकता ॥ घटेश्वरसंयोगस्य

---

सामग्र्यभावप्रयोजकत्वावश्यम्भावात्, साधारणकारणाभावे सामग्र्यभावावश्यम्भावादिति शङ्कते नन्विति। पूर्वत्र भागासिद्धिरिति। पक्षैकदेशस्यासिद्धतया भागासिद्धिरित्यर्थः। उत्तरत्र सन्दिग्धानैकान्तिकतेति। न च हेतुमत्तया निश्चिते साध्यसन्देहस्य वा साध्यवत्तया निश्चिते हेतुसन्देहस्य वा सन्दिग्धानैकान्तिकत्वम्; प्रकृते च ईश्वरानुमानप्रवृत्तिदशायां धर्मिण एवासिद्धत्वेनान्यतरनिश्चयस्याप्यभावात् कथं सन्दिग्धानैकान्तिकत्वमिति वाच्यम्—न्यायतौल्येन यथाकथञ्चित्साध्याभावसामानाधिकरण्यस्य सन्दिग्धानैकान्तिकत्वमित्यत्र तात्पर्यात्। न चेश्वरघटसंयोगसिद्धिपक्षे तस्येश्वरकर्तृकत्वस्यैव सिद्धेर्न साध्याभावनिश्चय इति वाच्यम्; ईश्वरस्य स्वसंयोगं प्रत्युपादानत्वमेव, न कर्तृत्वम्; उपादानत्वकर्तृत्वयोर्विरोधादिति

---

जन्यत्वाभावव्यापकत्वमहेतुकत्वस्य न संभवति, तादृशहेतुविशेषत्वमित्यर्थः। सर्वकार्याननुवृत्तत्वमिति। यादृशहेतुजन्यत्वं कार्यत्वसमानाधिकरणाभावप्रतियोगि, तादृशत्वमित्यर्थः। अदृष्टादावपीति। तस्यापि हेतुष्वन्यतमत्वादिति भावः। प्रसङ्गादिति। यादृशहेतुविशेषजन्यत्वाभावव्यापकत्वमहेतुकत्वस्य न संभवति, तादृशत्वप्रसङ्गादित्यर्थः। न ह्यदृष्टजन्यत्वाभावव्यापकत्वमहेतुकत्वस्य न संभवतीति शक्यं वक्तुमिति भावः। आद्यो निरस्त इति। हेतुष्वन्यतमत्वं तादृशहेतुविशेषत्वमित्येतत् निरस्तमित्यर्थः। द्वितीयस्तु कल्पोऽसिद्ध इति। कर्तुरपि कार्यसामान्ये हेतुतया कर्तृजन्यत्वस्यापि कार्यत्वसमानाधिकरणाभावप्रतियोगित्वसंभवादिति भावः। अधिष्ठाननियमनिरासेनेति। अचेतनं चेतनाधिष्ठितमेव प्रवर्तत इति नियमनिरासेनेत्यर्थः। दत्तोत्तरत्वादिति। कार्यसामान्ये कर्तुर्हेतुत्वासंभवेन कर्तृजन्यत्वस्य कार्यत्वसमानाधिकरणाभावप्रतियोगित्वोपपत्त्या कर्तुस्तादृशहेतुविशेषत्वोपपत्तेरिति भावः। अत्रेदं बोध्यम्—न्यूनदेशवृत्तिप्रतियोगिकाभावं प्रति नाधिकदेशवृत्तिप्रतियोगिकाभावस्य व्यापकत्वं भवति; यथा घटत्वाभावं प्रति न पृथिवीत्वाभावस्य व्यापकत्वम्। ततश्च कर्तृजन्यत्वस्य सर्वकार्याननुवृत्ततया तदनुवृत्तकारणतानिरूपकत्वापेक्षया न्यूनदेशवृत्तितया कर्तृजन्यत्वाभावरूपकर्तृकत्वव्यापकत्वं न कारणतानिरूपकत्वाभावरूपाहेतुकत्वस्य संभवतीति पूर्वोक्तरीत्या अहेतुकत्वे अकर्तृकत्वाव्यापकत्वसंशयसंभवात् सन्दिग्धोपाधित्वं दुर्वारमेव। अत एव क्वचिदपि कार्ये कर्तृजन्यत्वाभावानिश्चयेऽपि न क्षतिः। अङ्कुरादौ तत्संशयेन सन्दिग्धोपाधित्वोपपत्तेरिति ॥

भागासिद्धिरिति। पक्षैकदेशासिद्धिरित्यर्थः। एतदनुमानसिद्धपक्षीकारेऽन्योन्याश्रयणमिति। पक्षसिद्ध्या अनुमानप्रवृत्तिः अनुमानप्रवृत्त्या पक्षसिद्धिरित्यन्योन्याश्रयमित्यर्थः। उत्तरत्र=तस्य पक्षीकरणाभावे। सन्दिग्धानैकान्तिकतेति। घटेश्वरसंयोगसद्भावसंशयाधीनस्य कार्यत्वे हेतौ कर्तृजन्यत्वाभावसामानाधिकरण्यसंशयस्य सद्भावादिति भावः। तस्य पक्षत्वे पक्षीकृतव्यभिचारसंशयस्याऽदोष-

सकर्तृकत्वसन्देहेऽपि ईश्वरसिद्धिरविरुद्धेति चेन्न; तत्संयोगवदेव केषाञ्चित् अन्येषामप्यकर्तृकत्वं भवेदिति शङ्कामात्रस्य दुर्वारत्वात्। तावताऽपि क्षित्यादिसकर्तृकत्वनिश्चयभङ्गात् ॥ विप्रतिपन्नं कार्यं सकर्तृकमिति सामान्यतः पक्षीकारात् न कश्चिद्दोष इति चेन्न; सामान्यस्य

---

युक्तचेश्वरघटसंयोगस्याकर्तृकत्वसम्भवात्। **ईश्वरसिद्धिरविरुद्धेति चेदिति।** अभिमतेश्वरसिद्ध्युत्तरभाविन ईश्वरघटसंयोगेनैकान्तिकसन्देहस्याप्रतिबन्धकत्वात्। न हि ईश्वरघटसंयोग ईश्वरविरोधीति भाव। **सामान्यतः पक्षीकारादिति।** ततेश्वरघटसंयोगस्यापि पक्षीकृततया पक्षे न सन्दिग्धानैकान्तिकतेत्यर्थः।

---

त्वान्नाय दोष उक्तः। न चेश्वरघटसंयोगस्यापीश्वरकर्तृकत्वसद्भावात् कथमकर्तृकत्वमिति वाच्यम्; ईश्वरघटसंयोगं प्रतीश्वरस्योपादानतया उपादानत्वकर्तृत्वयोर्विरुद्धत्वं वदता परेण तत्रेश्वरस्य कर्तृत्वाभ्युपगमासंभवात्। न च तथाऽपि सकर्तृकत्वं कर्तृजन्यत्वमेवेति कार्यान्तरे कर्तृभूतेश्वरस्य स्ववृत्तिघटसंयोगे उपादानविषया हेतुत्वसत्त्वेन तत्रापि कर्तृजन्यत्वं सिद्धमेवेति वाच्यम्; अङ्कुरादिष्वप्युपादानादिविषया हेतुत्वमादायानुमानपर्यवसानवारणाय स्ववृत्तिकृतिविशेष्यतासंबन्धावच्छिन्नकर्तृनिष्ठकारणतानिरूपिताश्रयतासंबन्धावच्छिन्नकार्यतायाः एव साधनीयतया तस्याः घटेश्वरसंयोगे निमित्तोपादानभेदवादिभिः स्वीकर्तुमशक्यत्वात् ॥ **ईश्वरसिद्धिरविरुद्धेति।** अयं भावः—साध्याभावप्रकारकसंशयविषयतावच्छेदकावच्छिन्ने धर्मिणि हेतोर्वृत्ति[त्व]निश्चये साध्याभावनिश्चयविषयतावच्छेदकावच्छिन्ने धर्मिणि हेतोर्वृत्ति[त्व]सन्देहे वा सन्दिग्धानैकान्तिकता; न तु साध्याभाववति यत्र कुत्रचन हेतोर्वृत्तित्वं(त्तेः?) व्याप्तित्वेनैवविधसंशये सन्दिग्धानैकान्तिकता; तथासत्यनुमानमात्रोच्छेदप्रसङ्गात्, धूमाद्यनुमानेऽपि तादृशसंशयस्य सुलभत्वात्। तादृशसंशयस्याप्रयोजकत्वसंशयरूपस्य तत्समशीलस्य वाऽनुकूलतर्कनिरसनीयस्य न दोषावहत्वमित्येव सर्वसंप्रतिपन्नम्। किञ्च अनेन सन्दिग्धानैकान्तिकतेत्येवमुद्भावनस्यैव सांप्रदायिकतया धर्मनिश्चयमन्तरा न संदिग्धानैकान्तिकतोद्भावनं संभवति। ततश्चेश्वरानुमानप्रवृत्त्यनन्तरमेवेश्वरघटादिसंयोगनिश्चयात् तेन सन्दिग्धानैकान्तिकताप्रवृत्तिर्वाच्या। इत्थञ्चेश्वरसिद्ध्यनन्तरभाविनी संदिग्धानैकान्तिकताप्रवृत्तिर्नेश्वरसिद्धिं प्रतिबध्नातीति। **तत्संयोगवदेवेति।** ईश्वरघटसंयोगवदेवेत्यर्थः। **केषाञ्चिदन्येषामपीति।** ईश्वरघटसंयोगादन्येषां क्षित्यङ्कुरादीनामपीत्यर्थः **शङ्कामात्रस्येति।** मात्रपदेनानुमितिप्रतिबन्धकत्वव्यवच्छेदः। **क्षित्यादिसकर्तृकत्वनिश्चयभङ्गादिति।** अप्रामाण्यज्ञानास्कन्दितनिश्चयासंभवादित्यर्थः। जातायामपि क्षित्यादिसकर्तृकत्वानुमितावनैकान्तिकहेतुज्ञानजन्यत्वसंशयेनाप्रामाण्यसंशयसंभवात् अप्रामाण्यज्ञानानास्कन्दितनिश्चयस्यैवोत्तरोत्तरसंशयविरोधित्वान्निष्कम्पप्रवृत्तिहेतुत्वाच्च जाताऽपि क्षित्यादिसकर्तृकत्वानुमितिर्न कार्यकरीति भावः। **विप्रतिपन्नमिति।** सकर्तृकत्वतदभावकोटिकसंशयविषयीभूतमित्यर्थः। तेन घटादिव्यावृत्तिः। तत्र हि कुलालादिकर्तृकत्वस्य निर्णीततया न तादृशसंशयविषयत्वम्। **कार्यमिति** स्वरूपाख्यानमात्रम्। न तु कार्यत्वमपि पक्षतावच्छेदकघटकम्; प्रयोजनाभावात्। **सामान्यतः पक्षीकारान्न कश्चिद्दोष इति।** विप्रतिपन्नत्वरूपसामान्यधर्मपुरस्कारेणेश्वरघटसंयोगस्यापि पक्षीकृततया तत्र व्यभिचारसंशयस्य अनुकूलतर्केणैव निरस्ततया व्याप्तिनिश्चयेनोपजातायामनुमितौ हेतावनैकान्तिकत्वसंशया-

प्रयोगस्यापि समस्तविशेषकबळीकारार्थत्वात् । ततश्च समस्तविशेषाणां सामान्यतः सिद्धिसाकाङ्क्षत्वात् । अन्यत इत एव वा तत्सिद्धावनुमानवैयर्थ्यान्योन्याश्रयौ दुष्परिहरौ ॥

ननु अस्माकमीश्वरानुमाननिरासेन किं प्रयोजनम्? न च प्रयोजनाभावमात्रम्; अनुमानत एवेश्वरं प्रतिपद्य तं भजमानान् प्रति नास्तिक्यशङ्काऽप्यापादिता स्यादिति महत्तेषामस्माकञ्च पापमिति ॥ अहो? महाकारुणिकोऽसि । तादृशेभ्य एतन्नोपदिश्यताम् । प्रयोजनं च शृणु—प्रथमं तावत् यथावस्थिततत्त्वावबोधः । श्रोत्रेण गन्धग्रहणनिरासवत्, अनुमानस्याभासतां पश्यत-

---

**सामान्यतः सिद्धी**ति । साध्यतदभावौदासीन्येन स्वरूपमात्रेण **सिद्धिसाकाङ्क्षत्वा**दित्यर्थः । **अन्यत इत एव वे**ति । अन्यतःसिद्धावनुमानवैयर्थ्यम्, अस्मादेवानुमानादीश्वरघटसंयोगसिद्धावन्योन्याश्रयः । अनुमानप्रवृत्त्यनन्तरं घटेश्वरसंयोगपक्षीकरणम्, पक्षीकरणानन्तरमनुमानप्रवृत्तिरित्यन्योन्याश्रय इत्यर्थः ॥

शिष्यः पृच्छति **नन्वस्माक**मिति । तेषाम**स्माकञ्चे**ति । अनुमाननिरासकयुक्तिश्रोतॄणां तद्वक्तॄणाञ्चेत्यर्थः । **तादृशेभ्य इ**ति । अनुमाननिरसनयुक्तिश्रवणमात्रशिथिलित(?)विश्वासेभ्य इत्यर्थः । **प्रथम-**

---

संभवात् नानेकान्तिकहेतुज्ञानजन्यत्वसंशयाधीनाप्रामाण्यसंशयः संभवतीति भावः । **सामान्यस्य प्रयोगस्ये**ति । संशयविषयत्वरूपसामान्यधर्मावच्छिन्नपक्षकानुमानस्येत्यर्थः । **समस्तविशेषकबळीकारार्थत्वा**दिति । समस्तविशेषधर्मावच्छिन्ने साध्यनिश्चयफलकत्वादित्यर्थः । तादृशनिश्चयस्यैव प्रवृत्त्यादिकार्यकरत्वादिति भावः । इदमत्र बोध्यम्—यद्धर्मावच्छिन्नविशेष्यकसंशयविषयत्वस्य पक्षतावच्छेदकता तद्धर्मावच्छिन्न एव सकर्तृकत्वनिश्चयसंभवादीश्वरघटसंयोगत्वरूपविशेषधर्मावच्छिन्ने सकर्तृकत्वनिश्चयरूपफले जननीये तद्धर्मावच्छिन्नविशेष्यकसंशयविषयताया एव पक्षतावच्छेदकत्वं वाच्यम् । ततश्चेश्वरघटसंयोगसिद्धिमन्तरा सामान्यप्रयोगस्य न कार्यकरत्वम् । अत्र हि सकर्तृकत्वतदभावकोटिकसंशयस्य न तादृशसंशयत्वेन निवेशसंभवः । तथासति घटादिष्वपि सकर्तृकत्वनिर्णयविरहदशायां तादृशसंशयसंभवेन तद्विषयत्वरूपपक्षतावच्छेदकाक्रान्तेषु घटादिषु सकर्तृकत्वस्य सिद्धतया सिद्धसाधनापत्तेः । यदि चावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यतया नांशतःसिद्धसाधनं दोष इत्युच्यते; तदा आत्मादिषु निरयेष्वकर्तृकत्वनिर्णयविरहदशायां तादृशसंशयसंभवेन तद्विषयत्वरूपपक्षतावच्छेदकाक्रान्तेषु तेषु बाधापत्तेः । अतः क्षितिस्सकर्तृका, न वा, अङ्कुरं सकर्तृकं न वेत्यादिसमूहालम्बनसंशयं किं तद्व्यक्तित्वेनोपादाय तद्विषयत्वं तदवच्छेदकधर्मवत्त्वं वा पक्षतावच्छेदकं वाच्यमिति । **समस्तविशेषाणां सामान्यतस्सिद्धिसाकाङ्क्षत्वा**दिति । साध्यवत्तया साध्याभाववत्तया वा निर्णयस्यानपेक्षितत्वेऽपि विवक्षितसंशयधर्मितावच्छेदकीभूततत्तद्धर्मपुरस्कारेण तत्तद्विशेषनिर्णयस्यावश्यापेक्षितत्वादित्यर्थः । यदि चानुमानान्तरेणेश्वरघटसंयोगसिद्ध्या तद्धर्मिकोक्तसंशयसंभवात् तस्य पक्षीकरणं संभवतीत्युच्यते, तदा एतदनुमानवैयर्थ्यम्; अनेनैवानुमानेश्वरघटसंयोगसिद्ध्या संशयोत्पादने अन्योन्याश्रयणम्—तादृशसंशयसिद्ध्यावेव तद्विषयत्वावच्छिन्नपक्षकानुमानेनेश्वरसिद्धिः, ईश्वरसिद्धावेवेश्वरघटसंयोगादिधर्मिकोक्तसंशयसिद्धिरिति । तदेतदाह अन्यत इत्यादि ॥

**यथावस्थिततत्त्वावबोध** इति । ईश्वरविशेष्यकानुमानमात्रत्वाभावप्रकारकप्रमितिरूपज्ञान-

स्तीव्रबुद्धेरीश्वराविश्वासपरिहारश्च । ततश्च मन्दानां मतेस्तीव्रबुद्धिना प्रक्षोभो न स्यात् । एवमपि क्रियतां कारुण्यम्; अप्राप्तप्रापकस्य आगमस्यानुवादप्रसङ्गोऽपि परिहृतः स्यात् ॥ अनुवादत्वेपि ईश्वरः सिध्यत्येवेति न कश्चिद्दोष इति चेन्न; निमित्तोपादानभूतेश्वरासिद्धेः ॥ निमित्ततयाऽनुमानसिद्धमीश्वरमनूद्य उपादानत्वादि विधीयताम्, प्रत्यक्षसिद्धं पृथिव्यादिकमनूद्येश्वरशेषत्वशरीरत्वादिविधानवदिति चेत्—तथैवानूद्य उपादानत्वनिषेधकानुमानोदये धर्मिग्राहकबाधस्य दुर्वचत्वप्रसङ्गात्; विशिष्टतया तु आगमेनैव सिद्धौ तस्य सुवचत्वात् ॥ पृथिव्यादेरीश्वरशेषत्वादि-

---

मिति । प्रयोजनमिति शेषः । ईश्वराविश्वासपरिहारश्चेति । ईश्वरो ह्यनुमानैकशरणः, अनुमानञ्च न क्षोदक्षमम् अतो नेश्वरः प्रामाणिक इति तीव्रबुद्धेर्मतिः स्यात्, सा (तथा?) मा विज्ञायीत्येतदर्थमीश्वरस्य शास्त्रयोनित्वसमर्थनमित्यर्थः । अनुवादत्वेऽपीति । प्रतिपन्नस्यार्थस्य पुनः प्रापणं हि अनुवादः । न चैतावता वस्तुनोऽसिद्धिः; अपि तु दार्ढ्यमेवेति भावः । ईश्वरासिद्धेरिति । अनुमानत इति शेषः । दुर्वचत्वप्रसङ्गादिति । ईश्वरो नोपादानं निमित्तत्वादित्यनुमानस्य धर्मिग्राहकशास्त्रबाधितत्वं हि उद्घाटनीयम् । यदि चेश्वर आनुमानिकः स्यात्, तदा शास्त्रस्य धर्मिग्राहकत्वाभावेनोपादानत्वनिषेधकानुमानस्य शास्त्रबाधितत्वं वक्तुं न शक्यते इति भावः । विशिष्टतयेति । अभिन्ननिमित्तोपादानत्वविशिष्टतया ईश्वरसिद्धौ उपादानत्वनिषेधकानुमानस्य धर्मिग्राहकबाधः सुवचः स्यादित्यर्थः । पृथिव्यादेरिति ।

---

मित्यर्थः । गन्धग्रहणनिरासवदिति । तादृशनिरासस्येवेत्यर्थः । तत्त्वावबोधः प्रयोजनमित्यनेनान्वयः । उक्तनिरासस्य हि गन्धस्य श्रोत्रग्राह्यत्वाभावप्रमितिरेव प्रयोजनम् । ईश्वराविश्वासपरिहारश्चेति । ईश्वरग्राहकत्वेन संमतस्यानुमानस्याऽऽभासतयेश्वरोऽप्रामाणिक एवेत्येवमविश्वासपरिहार इत्यर्थः । अनुवादत्वेऽपीश्वरः सिद्ध्यत्येवेति । अनुवादत्वं हि प्रमाणान्तरसिद्धस्य पुनर्बोधनम् । तेन वस्तुनो दार्ढ्यमेव स्यादिति भावः । निमित्तोपादानभूतेश्वरासिद्धेरिति । क्षित्यादिकं सकर्तृकमित्यनुमानेन निमित्ततयेश्वरसिद्धेरिति भावः । विधीयतामिति । "सदेव" इत्यादिश्रुत्येत्यादिः । ईश्वरशेषत्वशरीरत्वादिविधानवदिति । "पतिं विश्वस्य", "यस्य पृथिवी शरीरम्", "यः पृथिवीमन्तरो यमयति", "अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः" इत्यादिश्रुतिभिरित्यादिः । शरीरत्वादीति । आदिना नियाम्यत्वादिपरिग्रहः । तथैवानूद्येति । श्रुतिवदेवानुमानसिद्धमनूद्येत्यर्थः । उपादानत्वनिषेधकेति । ईश्वरो नोपादानं निमित्तत्वात् कुलालवदित्येवंरूपेत्यर्थः । धर्मिग्राहकबाधस्य दुर्वचत्वप्रसङ्गादिति । उपादानत्वग्राहकशास्त्रस्य धर्मिग्राहकत्वविरहेण तत्कृतप्राबल्यस्य वक्तुमशक्यत्वादिति भावः । तथा चेश्वरस्योपादानत्वं न सिद्ध्येदित्युक्तं भवति । विशिष्टतयेति । अभिन्ननिमित्तोपादानत्वविशिष्टतयेत्यर्थः । तस्य धर्मिग्राहकमानबाधस्य सुवचत्वादिति । ततश्चेश्वरस्योपादानत्वसिद्ध्यर्थमीश्वरानुमाननिरास इति भावः । ननु पृथिव्यादिकमीश्वरशेषत्वाभाववत् प्रमेयत्वात् ईश्वरवदित्यनुमानस्य, "पतिं विश्वस्य" इत्यादिश्रुत्या बाधोऽभिधीयते । न च तस्याः धर्मिग्राहकत्वमस्ति । अतः श्रुतित्वादेव प्रमाणान्तरापेक्षया प्राबल्यं वाच्यम् । तद्वदिहापि स्यादिति शङ्कते पृथिव्यादेरिति श्रुतित्वादेव प्राबल्ये, "आदित्यो यूपः"

निषेधानुमानवत् तदपीष्यतामिति चेन्न ; तस्य निषेध्यग्राहकसिद्ध्यसिद्धिभ्यां व्याघातस्य सुवचत्वात्। अत्र ईश्वरो न पृथिव्याद्युपादानम् ; चेतनत्वात् कर्तृत्वाद्वा कुलालवदित्यादिप्रयोगो कथञ्चिदपि स दुर्वचः। तदा तु आगमस्यान्यपरत्वोपपत्तौ ईश्वरस्यानुपादानत्वमेव स्यादिति, "जन्माद्यस्य यतः" इति निखिलजगदेककारणत्वसंवित् विलीयेतेति भयादनन्तरमेव सूत्रकारैः, "शास्त्रयोनित्वात्" इति प्रमाणान्तरगोचरत्वं निरस्तम्। ननु तर्हि, "रचनानुपपत्तेश्च" इत्यादिसूत्रं तद्भाष्यादिकञ्च कथं सङ्गच्छेत? न्यायतत्त्वे च प्रमातृपादे चेतनस्यैव कर्तृत्वप्रतिपादनप्रकरणे,

---

श्रुतेः पृथिव्यादिधर्मिग्राहकत्वाभावेऽपि तत्पक्षकेश्वरशेषत्वाभावानुमानबाधकत्ववदीश्वरविषये श्रुतेर्धर्मिग्राहकत्वाभावेऽपि तदुपादानत्वाभावानुमानबाधकत्वं सम्भवतीति भावः। **तस्य निषेध्येति**। निषेधस्य निषेध्यग्रहोपजीवकत्वात् निषेध्यग्रहे च श्रुतितोऽन्यस्य प्रमाणस्याभावेन श्रुतेरेवोपजीव्यतया तद्विरोधे नानुमानं प्रवर्तते, नरशिरःकपालं शुचि प्राण्यङ्गत्वादितिवदिति भावः॥ **स दुर्वच** इति ईश्वरो न जगदुपादानमित्यनुमाने पक्षग्राहकतया, निषेध्यग्राहकतया वा, श्रुतेरनुपजीव्यत्वेन धर्मिग्राहकविरोधो नास्तीत्यर्थः। **तदा त्विति**। ईश्वरस्यानुमानिकत्वेऽनुमानस्योपजीव्यजातीयतया प्रबलत्वेन तद्विरोधे उपादानत्वप्रतिपादकं शास्त्रं यूपादित्यैक्यप्रतिपादकशास्त्रवदन्यपरमेवेत्यर्थः। **जगदेककारणत्वसंविदिति**। अभिन्ननिमित्तोपादानत्वप्रतिज्ञेत्यर्थः। **रचनानुपपत्तेश्चेति**। "अनुमीयत इत्यनुमानम्। न भवदुक्तं प्रधानं विचित्रजग-

---

इत्यादेः प्रत्यक्षबाधकत्वप्रसङ्गः। न हि प्रमाणान्तरेण साधिते बाधिते वा श्रुतस्तात्पर्यं संभवति। उक्तं हि, "असन्निकृष्टवाचा तु द्वयमत्र जिहासितम्। तद्रूप्येण परिच्छित्तिः तद्विपर्ययतोऽपि वा" इति। अपूर्वत्वं हि तात्पर्यलिङ्गेषु प्रधानम्। तच्च प्रमाणान्तराबाधितत्वे सति प्रमाणान्तरासाधितत्वम्। अतः श्रुतेः श्रुतित्वादेव प्राबल्यं वक्तुमशक्यमित्यभिप्रायेण समाधत्ते नेति। कथं तर्हि शेषत्वनिषेधकानुमानापेक्षया तद्ग्राहकश्रुतेः प्राबल्यमित्यतः अभावज्ञाने प्रतियोगिज्ञानस्य कारणतया शेषत्वग्राहकश्रुतेः शेषत्वाभावानुमानोपजीव्यतया प्राबल्यमित्याह **तस्येति**। शेषत्वाभावानुमानस्येत्यर्थः। **निषेध्यग्राहकेति**। प्रकृतानुमानग्राह्याभावप्रतियोगिभूतशेषत्वग्राहकेत्यर्थः। **सिद्ध्यसिद्धिभ्यामिति**। शेषत्वग्राहकप्रमाणसत्त्वे तस्य प्रतियोगिग्राहकतया शेषत्वाभावानुमानोपजीव्यत्वात् तद्विरोधेन शेषत्वाभावानुमानं न संभवति ; तादृशप्रमाणासत्त्वे प्रतियोगिज्ञानविरहात् सुतरामभावानुमानासंभव इत्यर्थः। तथाच शेषत्वग्राहकश्रुतेरुपजीव्यत्वेन प्राबल्यम्। ईश्वरशेषत्वस्य प्रमाणान्तरेण ग्रहीतुमशक्यतया श्रुत्यैव ग्राह्यत्वात्, पृथिव्याद्युपादानत्वस्य स्वतथात्वात् निषेध्यग्राहकतया धर्मिग्राहकतया वोपजीव्यत्वासंभवेन प्राबल्यायोगात् ईश्वरे उपादानत्वनिषेधकानुमानस्य कथञ्चिदपि श्रुतिबाधो वक्तुमशक्य इति भावः। तर्हि श्रुत्यनुमानयोस्तुल्यबलत्वात् सुन्दोपसुन्दन्यायेनोपादानत्वाभावोऽपि न सिद्ध्येदित्याशङ्क्याह **तदा त्विति**। **आगमस्यान्यपरत्वोपपत्ताविति**। ईश्वरस्यानुमानिकत्वेऽनुमानस्योपजीव्यजातीयतया प्रबलत्वेन तद्विरुद्धागमस्य यूपादित्यैक्यवाक्यवत् अन्यपरत्वमेवाऽवश्यकमिति भावः। **निखिलजगदेककारणत्वसंविदिति**। सकलजगन्निरूपिताभिन्ननिमित्तोपादानत्वप्रतिज्ञेत्यर्थः। **रचनानुपपत्तेश्चेत्यादिसूत्रमिति**। "रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च" इति सूत्रमित्यर्थः। **तद्भाष्यादिकञ्चेति**। "अनुमीयत

"ननु वायुर्भूरेणूनां सङ्घातं करोति" इत्यादिना परिचोद्य दत्तमुत्तरम्, "उच्यते । कर्तृकरणकर्माणीति त्रीणि कारणानि क्रियाविशिष्टानि । तेषामन्यतमाभावे क्रिया न युज्येत" इत्यादि । अत्रापि ईश्वरानुमानानुमतिर्दृष्टा । अतः, "शास्त्रयोनित्वात्" इत्यस्यान्यथाऽर्थो वाच्य इति चेन्न ; "रचनानुपपत्तेः" इत्यादेरन्यभावत्वात् । तत्र हि चेतनानधिष्ठितप्रकृत्याद्युपादानत्वमात्रप्रतिपादकान् प्रति विशेषविरोधादिप्रदर्शने तात्पर्यम् । स्वपक्षे तु तेषां सम्भावनातर्कत्वमेव, तदनुगृहीतस्त्वागम एव प्रमाणम् । अत एव न्यायतत्त्ववचनमपि निर्व्यूढम् । तदेवमुपादानमनूद्य निमित्तत्वनिषेधकान् निमित्तमनूद्योपादानत्वनिषेधकांश्च प्रति धर्मिग्राहकबाधं [1] वक्तुं केवलजगदुपादान-

द्रचनासमर्थम् ; अचेतनत्वे सति तत्स्वभावाभिज्ञानधिष्ठितत्वात् । यदेवं तत्तथा ; यथा रथप्रासादादिनिर्माणे केवलदार्वादिकम् । दार्वादेरचेतनस्य तज्ज्ञानधिष्ठितस्य कार्यारम्भानुपपत्तेर्दर्शनात्, तज्ज्ञाधिष्ठितस्य, कार्यारम्भप्रवृत्तेर्दर्शनाच्च न प्राज्ञानधिष्ठितं प्रधानं कारणमित्युक्तं भवति" इति भाष्यश्चेत्यर्थः । अत्रापीति। "तेषामन्यतमाभावे क्रिया न युज्येत" इत्यस्मिन् न्यायतत्त्ववाक्ये इत्यर्थः । विशेषविरोधादीति ।

इत्यनुमानम्" इत्यादिभाष्यादिकं चेत्यर्थः । आदिना दीपसारयोर्ग्रहणम् । ननु हैरण्यगर्भागमात् केवलनिमित्तकारणत्वेनेश्वरसिद्धौ तत्रोपादानत्वनिषेधकानुमानं प्रवर्तते । एवं साङ्ख्यागमेन जगदुपादानसिद्धौ तत्र निमित्तत्वनिषेधकानुमानं प्रवर्तते । अतः ईश्वरानुमाननिरासेऽपि क्षत्यभाव इत्याशङ्क्याह

1 पृथिव्यादि ईश्वरोपादानकं न भवतीति साधने साध्यप्रसिद्ध्यर्थमागमापेक्षा कथञ्चित् स्यात् । अनुमानादीश्वरप्रसिद्धावपि तदुपादानत्वाप्रसिद्धेः—तत्रापि द्रव्यनिरूपितोपादानत्वस्य ईश्वरे अप्रसिद्धत्वेऽपि संयोगादिनिरूपितोपादानत्वं आनुमानेश्वरेऽपि प्रसिद्धं सुवचमित्याशयेन कथञ्चिदिति । ईश्वरो न पृथिव्याद्युपादानमिति साधने तु नागमापेक्षालेश इति भावः ।

ननु ईश्वरसाधकानुमानोपजीवनेऽपि तस्यानुपादानत्वसाधकानुमानोपजीवने मानाभावात्, प्रथमानुमानेनैवानुपादानत्वविशिष्टेश्वरानुमाने कारणाभावाच्चानुमानसिद्धमीश्वरमुद्दिश्य श्रुत्या उपादानत्वविधौ नोपजीव्यविरोधः—किञ्च किमिदं पृथिव्युपादानत्वम्, यन्निषिद्ध्यते । न तावत् पृथिवीनिष्ठसमवायसंबन्धावच्छिन्नकारणतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणत्वम् । पृथिवीविशिष्टब्रह्म प्रति अविशिष्टब्रह्मण एवोपादानत्वस्य श्रुतिसंमततया एतन्निषेधस्येष्टत्वात् । अपृथक्सिद्धिसंबन्धेन धर्मं प्रति धर्मिणस्तादात्म्येन कारणतायाः गुणविषय एवेष्टत्वात् द्रव्यविषये उपादानोपदेयैक्यस्य संमतत्वात् । समवायानङ्गीकारेण समवायघटितसाध्यप्रयोगायोगाच्च । अवयवातिरिक्तावयव्यसंमत्या शास्त्रसिद्धमीश्वरं विना पृथिव्या अन्यत्रापृथक्सिद्धत्वाभावेनापृथक्सिद्धिघटितसाध्यस्यापि दुर्वचत्वाच्च । पृथिवीत्वावस्थावन्निष्ठतादात्म्यसंबन्धावच्छिन्नकार्यतानिरूपिततत्संबन्धावच्छिन्नकारणतावत्त्वनिषेधनस्य साध्यत्वे तदिष्टमेवेश्वरे । ईश्वरे साक्षात् पृथिवीत्वावस्थाविरहेण तादृशकारणताया अभावात् । अतः पृथिव्यवस्थब्रह्मकार्यनिरूपितोपादानत्वमेव निषेद्धव्यम् । तथाच निषेध्यस्य श्रुत्यैकगम्यतया ईश्वरशेषत्वनिषेधवत् अशक्यत्वमेव । ईश्वरशेषत्वस्य ईश्वरगुणावपि प्रसिद्धस्य क्षित्यादौ निषेध इति तत्र स्यात् । ईश्वरशरीरत्वनिषेधस्थल एव तु निषेद्धव्यप्रसिद्धये श्रुत्यपेक्षा स्यात् । अनुमानवादिना ईश्वरस्याशरीरत्वस्वीकारात् इति चेत्—

सत्यम् ; अत एव धर्मिग्राहकबाधस्य दुर्वचत्वप्रसंगात्', 'धर्मिग्राहकबाधं वक्तुम्' इत्युक्तम् । तथाचानुमानिकत्वे ईश्वरस्य बाधान्तरेण तत् दूषणीयं भवेत् । धर्मिग्राहकमानबाधोऽपि विवक्षितः ; वस्तुतोऽनुमानस्यान्यथासिद्धत्वात् । तदुपपादनाय शास्त्रयोनित्वस्थापनम् इति ॥

निमित्तानुमानयोर्दूषणमिति मन्तव्यम्। आगमेश्वरादिपक्षीकारे त्वाश्रयासिद्धिरिति संग्रहः[1] ॥

निमित्तोपादानैक्यवाक्यं यूपादित्यैक्यवाक्यवदिति चेत्; कथम्? लक्षणविरोधादिति चेत्; मैवम्। न हि उपादानासमवायिव्यतिरिक्तं निमित्तमिति निमित्तलक्षणम्। नापि निमित्तासमवायिव्यतिरिक्तकारणमुपादानमित्युपादानलक्षणम्, येनात्र विरोधः स्यात्। किं तर्हि? "उपादानकारणत्वञ्च परिणामास्पदत्वमेव" इति वेदार्थसङ्ग्रहानुसारादवस्थाश्रय उपादानम्। आगन्तुकोऽपृथक्सिद्धो धर्मोऽवस्था। विशेषतस्तूत्तरोत्तरावस्थाविशिष्टस्वरूपापेक्षया[2] तदनुगुणनियतपूर्वभाव्यव-

---

अनुमानैकशरणस्य साङ्ख्यस्य न तदभिमतस्वतन्त्रप्रधानकारणसिद्धिः। स्वातन्त्र्यरूपविशेषस्यानुमानान्तरविरोधादिति प्रदर्शने तात्पर्यादित्यर्थः। उक्तस्य सर्वस्यापि संग्रहमाह **आगमेश्वरादी**ति। अय भावः— उपादानत्वनिषेधकानुमाने किमागमसिद्धेश्वरः पक्षीक्रियते, उत अनुमानगम्य? नान्त्यः; आनुमानिकेश्वरपक्षीकारस्य दूषितत्वेन गगनारविन्दपक्षीकारतुल्यतया आश्रयासिद्धेः। न प्रथमः; **आगमेनो**पादानत्वेन निश्चितस्य पक्षीकरणे सन्देहघटितपक्षताविरहा**दाश्रयासिद्धि**रित्यर्थः ॥

**न ह्युपादानासमवायी**ति। तथात्वे ईश्वरघटसंयोगं प्रति ईश्वरस्योपादानत्वनिमित्तत्वे न स्यातामिति भावः। **उपादानकारणत्वञ्च** इत्यारभ्य **वेदार्थसङ्ग्रह**ग्रन्थः। **विशेषतस्त्व**ति। **अव**

---

**आगमेश्वरादी**ति। **हैरण्यगर्भा**द्यागमसिद्धेश्वरादीत्यर्थः। **आदिना साङ्ख्या**दिसिद्धोपादानपरिग्रहः। **तु**शब्दः पूर्वमदूषितत्वरूपवैलक्षण्यद्योतकः। **आश्रयासिद्धि**रिति। **शारीरके** तादृशागमाप्रामाण्यस्य व्यवस्थापिततया ततः ईश्वरादिसिद्ध्यसंभवादिति भावः। **सङ्ग्रह** इति। अस्मिन् विषये वक्तव्यबाहुल्यसत्त्वेऽपि ग्रन्थगौरवभियेह सङ्ग्रहेणाभिधानं कृतमित्यर्थः। **शारीरकादिषु** विस्तरोऽनुसन्धेय इति भावः ॥

**शङ्कते निमित्तोपादानैक्ये**ति। **यूपादित्यैक्यवाक्यव**दिति। गौणतया नेयमिति भावः। मुख्यार्थबाधविरहात् गौणत्वाश्रयणमनुपपन्नमित्यभिप्रायेण चोदयति **कथ**मिति। प्रतिवक्ति **लक्षणविरोधा**दिति। उपादानासमवायिभिन्नत्वं हि निमित्तलक्षणमिति भावः। **न ह्युपादानासमवायिव्यतिरिक्त**मिति। तथासति दण्डादेर्घटादिनिमित्तकारणत्वासंभवप्रसङ्गः, स्वगतरूपादिकं प्रति तस्योपादानत्वादिति भावः। **नापि निमित्ते**ति। तथासति दण्डादेः रूपाद्युपादानत्वानुपपत्तिप्रसङ्गादिति भावः। **उपादानकारणत्वञ्चे**त्यारभ्य **वेदार्थसङ्ग्रह**ग्रन्थः। **विशेषतस्त्व**ति। कार्यविशेषनिरूपितमित्यर्थः।

---

1 संग्रह इति। तत्त्वमुक्ताकलाप-अधिकरणसारावलि-तद्व्याख्यानादिकं द्रष्टव्यम्।

2 पृथिव्यप्सु प्रलीयत इत्येवं व्युत्क्रमेण प्रळये उत्तरं प्रति पूर्वस्य उपादानत्वापत्तिः स्यादिति तदनुगुणेत्युक्तम्। तादात्विकतदप्त्वावस्थादि प्रति तत्पृथिवीत्वाद्यवस्थायाः नियतपूर्वभावित्वेऽपि तदनुगुणत्वं नास्तीत्यर्थः। तदनुगुणत्वञ्च तदुद्देश्यककृतिसाध्यत्वम्; न हि प्रलयकालिकाप्त्वावस्थामुद्दिश्य सृष्ट्यारम्भे पृथिवीत्वावस्थापन्नं साध्यते। तदभावव्याप्याभावप्रतियोगित्वं वा; पृथिवीत्वावस्थापन्नस्याभावो यत्र, तत्राप्त्वावस्थापन्नस्याभाव इति सामान्यतो वक्तुमशक्यत्वात्। अनन्यथासिद्धत्वं वा; न हि नियतपूर्ववृत्तित्वेऽप्यन्यथासिद्धं कारणं भवति। आकाशाद्वायुरित्यादिरागम एवात्र कारणताग्राहकमानम्। लयदशायां पृथिव्याः कारणतया निर्देशो न श्रुत्या कृतः। किञ्च अप्सु प्रलीयत इति सप्तम्या अप्त्वावस्थापन्नस्य प्रागेव सद्भावावगमनात् पृथिवी विद्यमानात्वावस्थैकीभूतावस्थावती भवति इत्येव लयवाक्यार्थ इति अप्त्वावस्थापन्नकृत्स्नोत्पादकत्वस्य

स्थाविशिष्टं तदेव वस्तूपादानम्, यथा घटत्वावस्थाविशिष्टमृद्द्रव्यापेक्षया पिण्डत्वावस्थाविशिष्टं तदेव द्रव्यम्। तदनुगुणशब्देन प्रतिसर्गावस्थाव्यवच्छेदः। परिणामौन्मुख्यातिरिक्तेन आकारेणा-

---

किमुपादानमिति निरूपण इत्यर्थः। **तदेव द्रव्यमिति।** उपादानमिति शेषः। **प्रतिसर्गावस्थाव्यवच्छेद इति**—प्रतिसर्गः प्रलयः। तस्या अवस्थायाः सर्वकार्यविरोधित्वादिति भावः। इदमुपलक्षणम्। पिण्डत्वावस्थाप्राक्कालीनरेणुत्वावस्थाविशिष्टस्यापि घटं प्रति नोपादानत्वमिति द्रष्टव्यम्। **परिणामौ-**

---

**तदेव द्रव्यमिति।** उपादानमिति शेषः। **प्रतिसर्गावस्थाव्यवच्छेद इति।** प्रतिसर्गः प्रळयः, तदवस्थायाः महत्त्वाद्यवस्थाविशिष्टद्रव्यनियतपूर्वभावितया तद्विशिष्टस्य महत्त्वाद्यवस्थाविशिष्टोपादानत्वप्रसङ्गः। अतस्तद्वार-णाय तदनुगुणशब्दः। तदनुगुणत्वं च तत्कारणतावच्छेदकत्वम्। महत्त्वाद्यवस्थाविशिष्टं प्रति अव्यक्तत्वा-वस्थाविशिष्टस्यैव कारणतया अविभक्ततमस्त्वावस्थारूपप्रळयावस्थायास्तत्कारणतानवच्छेदकतया नातिप्रसङ्ग इति भावः। इत्थं च नियतपूर्वभावीत्येतत् स्वरूपाख्यानमात्रपरम्; न तु तदपि लक्षणघटकम्; प्रयोजना-भावात्, तत्कारणतावच्छेदकस्य तन्नियतपूर्वभावित्वनियमादिति बोध्यम्। अत्र च तत्कारणतावच्छेदका-वस्थावत्त्वं तदुपादानत्वमित्युक्तौ घटादेर्जलाहरणाद्युपादानत्वप्रसङ्गः घटत्वाद्यवस्थाया जलाहरणादि-कारणतावच्छेदकत्वात्। अतस्तत्तेव वस्तित्वत्युक्तम्। तथाच तादात्म्यापृथक्सिद्ध्यन्यतरसंबन्धावच्छिन्न-कार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणत्वमुपादानत्वमिति फलितम्। तेनावस्थायाः कारणता-विशेषरूपोपादानतात्मकत्वासंभवेऽपि न क्षतिः। अत एव, "यतो वा इमानि" इत्यादौ पञ्चम्या हेतु-तात्वेन रूपेण निमित्तत्वोपादानत्वयोरुभयोरभिधानमिति श्रुतप्रकाशिकादिग्रन्थः सङ्गच्छते। घटादे रूपा-द्युपादानत्वोपपत्तयेऽपृथक्सिद्धिनिवेशः। तादात्म्यसंबन्धेन घटादिकं प्रत्यपृथक्सिद्धिसंबन्धेन पिण्डनिष्ठतया हेतुभूतस्य चक्रसंयोगादेः; अपृथक्सिद्धिसंबन्धेन पाकजरूपादिकं प्रति अपृथक्सिद्धिसंबन्धेन हेतोरग्नि-संयोगस्य च वारणाय कारणतायां तादात्म्यसंबन्धावच्छिन्नत्वस्य निवेशः। कालिकविशेषणतासंबन्धेन कार्यमात्रं प्रति नित्यविभूत्यन्तर्गतकार्यं प्रति वा तादात्म्येन कारणस्य कालस्य वारणाय कार्यतायां संबन्धविशेषावच्छिन्नत्वनिवेशनम्। अत्र च तादात्म्येन घटत्वावच्छिन्नं प्रति तादात्म्येन पिण्डत्वाद्य-वच्छिन्नस्येव तादात्म्येन स्थूलचिदचिद्विशिष्टत्वावच्छिन्नं प्रति सूक्ष्मचिदचिद्विशिष्टब्रह्मणस्तादात्म्येन कारणतेत्येकः कार्यकारणभावः। अपृथक्सिद्धिसंबन्धेन रूपादिकं प्रति तादात्म्येन घटादिरिवापृथक्-सिद्धिसंबन्धेन कार्यसामान्यं प्रति तादात्म्येन ब्रह्मणः कार्यत्वमित्यपरः। अत्र कार्यतावच्छेदकसंबन्ध-भूतपृथक्सिद्धिः साक्षात्परम्परासाधारणी, तेन रूपरसादेर्ब्रह्मणि साक्षादपृथक्सिद्ध्यसंभवेऽपि न क्षतिः। कार्यद्रव्यत्वमेव वा कार्यतावच्छेदकमस्तु, सर्वथा ब्रह्मणो द्विविधमप्युपादानत्वमुपपद्यत इति बोद्धव्यम्।

---

पृथग्व्यामभावात् न कारणत्वमिति। तथाच तदवस्थानुगुणपूर्ववर्तित्वं नाम तदवस्थकृत्स्ननिरूपित-पूर्ववर्तिताकत्वम्। किञ्चानुगुणत्वम्, गुणाधिक्यप्रयोजकत्वम्। पूर्वपूर्वभूतापेक्षयोत्तरोत्तरकार्ये गुणाधिक्यं प्रसिद्धम्। प्रलये प्रत्युत तद्विरोधात् नानुगुणनियतपूर्ववृत्तित्वम्। वस्तुतस्तु कार्योत्पत्तेः कर्मफलभोगार्थत्वात् सृष्टिपरम्परायाः एव भोगहेतुतया कार्यता, प्रलयपरम्परायास्तु भोग-बाधकतया न कार्यतेति न व्युत्क्रमे उपादानोपादेयभाव इति सर्वार्थसिद्धौ ज्ञापितमपि द्रष्टव्यम्।

पेक्षितं कारणं निमित्तम् । असमवायीत्यवान्तरविभागस्तु नास्मदीयैरभ्युपगतः पारिभाषिकत्वात् । अन्यथा निमित्तकारणप्रत्यासन्नं कारणमनिमित्तमित्यादिविभागान्तरस्यापि परिभाषितुं शक्यत्वात् । पटाद्यसमवायितया तन्तुसंयोगादयस्तु असिद्धा एव; अवयविभङ्गात्, तावत एव तत्त्वात् । संयोगादिकारणतया नोदनादयस्तु सिद्धा अपि निमित्तकोटेर्न व्यतिरिच्यन्ते । ततश्च लक्षणद्वयमपि ईश्वरे सिद्धम्; अविभक्तनामरूपचिदचिच्छरीरकस्य विभक्तनामरूपचिदचिच्छरीरकत्वापेक्षयोपादानत्वसिद्धेः, अविभक्तचिदचिच्छरीरकत्वातिरिक्तेन कुलालादिसाधारणसङ्कल्पविशेषवत्त्वाद्याकारेण निमित्तत्वसिद्धेश्च । ईश्वरस्यैव क्वचिद्विषये कर्तृत्वमुपादानत्वञ्च परैरपि स्वीकार्यम् । सन्ति हि संयोगादयो घटादिभिरीश्वरस्य । ततश्चेश्वरस्तेषां समवायित्वात् स्वैकार्यकर्तृत्वाच्च उपादानम्, निमित्तञ्च । तत्कर्तृत्वानभ्युपगमे कार्यत्वात्सकर्तृकमित्यनुमानं दशमदशापन्नम् । एवमनी-

---

न्मुख्यातिरिक्तेनेति । अतिरिक्ताकारस्तदनुकूलकृतिमत्त्वाद्याकारः । किञ्च पटादौ तन्तुसंयोगादिरसमवायिकारणत्वेनाभिमतः, उत तद्धेतुभूतनोदनादिर्वेति विकल्प्य, आद्यं निराचष्टे पटाद्यसमवायितयेति । अवयविभङ्गादिति । अवयवातिरिक्तावयविनो दूषितत्वादित्यर्थः । तावत एव तत्त्वादिति । संयोगविशेषभाजां तन्तूनामेव पटत्वेन न तन्तुसंयोगपटयोर्हेतुहेतुमद्भावः; येन तस्यासमवायिकारणता स्यादिति भावः । द्वितीयं निराकरोति संयोगादिकारणतयेति । दशमदशापन्न-

---

परिणामोन्मुख्यातिरिक्तेनाकारेणापेक्षितं कारणमिति । उपादानावच्छेदकधर्मभिन्नधर्मावच्छिन्नकारणतावदित्यर्थः । उपादानताभिन्नकारणत्वं निमित्तकारणत्वमिति तु पर्यवसितोऽर्थः । तेन तद्व्यक्त्यपृथक्सिद्धसामान्यं प्रति तादात्म्येन तद्व्यक्तित्वेन हेतुत्वेऽपि प्रत्यक्षे विषयविधया तद्व्यक्तित्वेनैव निमित्तकारणस्य घटादेर्नासङ्ग्रहः; कार्यतावच्छेदकधर्मसंबन्धभेदभिन्नकार्यताभेदेन कारणतयोर्भेदात् । अत्र च पिण्डो घटस्योपादानमित्यत्र तादात्म्यापृथक्सिद्ध्यन्यतरसंबन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणतावान् उपादानपदार्थः । तदेकदेशकार्यतायां घटस्येति षष्ठ्यर्थाधेयत्वान्वयः । दण्डो घटस्य निमित्तमित्यत्र उपादानताभिन्नकारणतावान् निमित्तपदार्थः । घटस्येति षष्ठ्यर्थो निरूपितत्वं कारणत्वान्वयीत्यवधेयम् । नन्वेवंसति असमवायिकारणेऽतिप्रसक्तिः—उपादानताभिन्नकारणतासत्त्वादित्यत आह असमवायीति । अवान्तरविभाग इति । कारणावान्तरभेद इत्यर्थः । पारिभाषिकत्वादिति । तान्त्रिकसङ्केतरूपपरिभाषया असमवायिपदबोध्यत्वादित्यर्थः । तथाच शक्त्या बोध्यस्यैव सर्वसंप्रतिपन्नतया विभजनीयत्वं लक्षणीयत्वं च; न तु तान्त्रिकविशेषपरिभाषितस्येति भावः । अन्यथेति । पारिभाषिकस्यापि विभजनीयत्वादित्यर्थः । नन्वसमवायीत्यवान्तरविभागानभ्युपगमेऽपि पटकारणे तन्तुसंयोगे निमित्तकारणलक्षणस्यातिप्रसङ्ग इत्यतः अवयवातिरिक्तावयविनिराकरणेन संयोगविशेषविशिष्टतन्तूनामेव पटत्वात् तन्तुसंयोगस्य पटकारणताविरहान्नोक्तशङ्कावकाश इति परिहरति पटादीति । असिद्धा इति । असंप्रतिपन्ना इत्यर्थः । तावत एव=संयोगविशेषविशिष्टतन्त्वादेरेव तत्त्वात्=पटादित्वात् । ननु तथापि सर्वसंप्रतिपन्नक्रियायामतिप्रसङ्गो दुर्वार इत्याशङ्क्य तत्र निमित्तकारणताया एवाभ्युपगमात्तल्लक्षणसत्त्वं नातिव्याप्तिसंपादकमित्याह संयोगादीति । ततश्चेति । उक्तरीत्या निमित्तोपादानलक्षणसिद्ध्येत्यर्थः । परैरपि निमित्तोपादानभेदनियमो न वक्तुं शक्य इत्याह ईश्वरस्यैवेति । दशमदशापन्नमिति । मरणदशापन्न-

श्वरेष्वपि बुद्धिपूर्वकस्वज्ञानसुखाद्युत्पादने निमित्तोपादानत्वसमुच्चयः सिद्धः। ततः सिद्धं सूक्ष्मचिद्-चिद्वस्तुशरीरकं ब्रह्मैव स्थूलचिदचिद्वस्तुशरीरतया परिणमतीति वेदान्ताः प्रतिपादयन्तीति।

तेन च तद्व्यतिरिक्तस्य निखिलस्य आधाराधेयभावेश्वरेशितव्यत्वशेषशेषित्वशरीरशरीरि-भावकार्यकारणभावादयो यथाग्रहणं सम्बन्धाः ॥

**श्रिया[1] सह तु दाम्पत्यं शाश्वतं तत एव तु। तयोः साम्यैक्यशक्तित्वतद्वत्त्वादिगिरां गतिः॥**

---

मिति। ईश्वरघटसंयोगादौ व्यभिचारात् न साधकमनुमानमित्यर्थः। बुद्धिपूर्वकेति। अबुद्धिपूर्वकज्ञाने कर्तृत्वासम्भवेऽपि बुद्धिपूर्वकज्ञाने तदनुकूलज्ञानचिकीर्षादिमत्त्वेन निमित्तत्वं सम्भवतीत्यर्थः।

**यथाग्रहणं सम्बन्धा इति।** यथाप्रमाणं सम्बन्धा अभ्युपेया इत्यर्थः॥ **तयोः साम्येति।** "अस्येशाना जगतः", 'ईशानो भूतभव्यस्य' इत्युभयत्रापीशानत्वश्रवणात्, तथा, "विष्णुपत्नी", "श्रियः पतिः" इति परस्परं(?) पतिपत्नीशब्दोक्तस्य मिथुनदर्शनादुभयोरपि साम्यमेव; न गुणप्रधानभाव इति साम्यवाद इत्यर्थः। ऐक्येति। "नरनारीमयो हरिः", "नारायणात्मिकां देवीम्" इति ब्रह्माण्डकाश्यपीयपुराणवचनानुरोधात्, "त्वं यादृशोऽसि कमलामपि तादृशीं ते दारान् वदन्ति युवयोर्न तु भेदगन्धः। मायाविभक्तयुवतीतनुमेकमेव त्वां मातरश्च पितरश्च युवानमाहुः॥" इति श्रीविष्णुत्रैभववचनानुरोधाच्च, सत्तादिविशिष्टो भगवानेव श्रीरिति वा, स्त्रीरूपनित्यविग्रहान्तरविशिष्टः स एव श्रीरिति वा, दैत्यमोहनभूमिकापरिग्रहन्यायेन स्वयमेव भोगार्थं परिगृहीतकादाचित्ककान्ताविग्रहः स एव श्रीरिति वा, भगवत एव स्वरूपैकदेशः पृथगहन्तया परस्परभोक्तृत्वाय सर्वदा परिगृहीतश्री(स्त्री?)रूपः श्रीशब्दार्थ इत्यैक्यवादः। शक्तित्वेति। 'जगदुत्पादिका शक्तिस्तत्र प्रकृतिरिष्यते। सैव नामसहस्रेषु लक्ष्मीः श्रीरिति कीर्त्यते॥" इति वचनात् शक्तित्ववादः। तद्वत्त्वेति। "यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम।" "आक्रम्य सर्वां तु यथा त्रिलोकीं तिष्ठत्ययं देववरोऽसिताक्षि। तथा स्थिता त्वं वरदे तथापि"

---

मित्यर्थः। ईश्वरघटसंयोगे व्यभिचारात् प्रागुक्तरीत्या असाधकं भवेदिति भावः।

**यथाग्रहणं सम्बन्धा इति।** यथाप्रमाणं संबन्धाः स्वीकार्या इत्यर्थः॥

**श्रियासहत्विति।** उक्तसंबन्धाः सर्वेऽपि श्रिया सहैवेत्यर्थः.—अनेनाधारत्वेश्वरत्वशेषित्वशरीरित्वकारणत्वादयो द्वयोरपि सन्तीत्युक्तं भवति। श्रियासहेत्यस्य दाम्पत्येऽन्वयस्तु नोचितः; उभयपर्याप्तदाम्पत्यस्यैकविशिष्टापरनिष्ठत्वेन व्यवहारायोगात्। न हि घटपटयोर्द्वित्वमिति वक्तव्ये घटेन सह पटस्य द्वित्वमिति वक्तुं युज्यते तथा सति हि घटस्यापि द्वित्वं पटस्यापि द्वित्वमित्यर्थः प्रतीयेत; न तु घटपटयोर्द्वित्वमिति। तथा श्रिया सह भगवतो दाम्पत्यमित्युक्तौ श्रियोऽपि दाम्पत्यं भगवतोऽपि दाम्पत्य-

---

1 आधाराधेयभावादिसंबन्धेषु श्रीश्रीशयोः कस्कः संभवतीति सुज्ञानत्वाय तयोस्तादात्म्यं वा भेदो वेति विचारयितुं प्रवृत्तः दाम्पत्यं प्रामाणिकमिति भेदमेव समर्थयते। दाम्पत्यं दम्पतित्वम्। तत् उभयनिष्ठम्, अतः श्रियासहेति कथमुपसर्जनतया निर्देश इति चेत्—आधाराधेयभाव इत्यादावपि आधाराधेययोर्भाव इत्येवमेव विग्रहात् द्विष्ठत्वमेव। अथापि आधाराधेयभावस्तेनास्य संबन्धः इति प्रयोगो युज्यते चेत्, अत्राप्येवमस्तु। परंतु तेनेति पदमत्र नानुषक्तुमर्हति। ततस्तस्येत्यध्याहार्यं स्यात् दाम्पत्यान्वये। अर्थपुष्टिश्च द्वितीयव्याख्याने। श्रिया चैते निखिलस्य संबन्धा इति द्वयोः।

ज्ञानानन्दाद्यत्यन्तसाम्यात् जगज्जनकत्वशेषित्वशरण्यत्वप्राप्यत्वादिसाम्याच्च साम्यगिरां निर्वाहो

इत्यादितद्भावव्यपदेशः। एषां च निर्वाहः शाश्वतदाम्पत्यपक्षे सुकर इति भावः। तद्भावादीति आदिशब्देन, "विष्णोः श्रीरनपायिनी", "नानयोर्विद्यते परम्" इत्यादिव्यतिरेक–द्वित्वादिनिर्देशा द्रष्टव्याः।
जगज्जनकत्वेति। "आनीदवातं स्वधया तदेकम्" इति स्वधाशब्दितलक्ष्मीविशिष्टस्य परमात्मनः सृष्टिप्राक्काले, "आनीत्" इति सत्तायाः प्रतिपादिततया जगज्जनकत्वसिद्धेः; "स्वधा त्वं लोकपावनी" इत्युपबृंहणानुसारेण स्वधाशब्दस्य लक्ष्मीवाचकत्वादिति द्रष्टव्यम्। शेषित्वशरण्यत्वप्राप्यत्वादीति। "अस्या मम च शेषं हि विभूतिरुभयात्मिका", 'लक्ष्म्या सह हृषीकेशो देव्या कारुण्यरूपया। रक्षकः सर्वसिद्धान्ते वेदान्तेऽपि च गीयते ॥", "संसारार्णवतारिणीम्", "वाचः परं प्रार्थयिता प्रपद्ये नियतः श्रियम्।", "आत्मविद्या च देवि त्वं विमुक्तिफलदायिनी।", "यामालम्ब्य सुखेनेमं दुस्तरं हि गुणोदधिम्। निस्तरन्त्यचिरेणैव व्यक्तध्यानपरायणाः ॥", "शृणाति निखिलान् दोषान् श्रीणाति च

मित्यर्थः प्रतीयेत। न श्रीश्रीशयोर्दाम्पत्यमिति स्वरसतः प्रतीयेत। अतो यथोक्त एवार्थ उचितः।
दाम्पत्यं [1]शाश्वतमिति। अत्र तयोरित्यनुकर्षेणान्वयः। साम्येति। "तुल्या गुणवयोरूपैर्मत्प्रमथनैर्हरेः" इत्याद्याः साम्यगिरः। "नरनारीमयो हरिः", "नारायणात्मिकां देवीम्", "मायाविभक्तयुवती-तनुमेकमेव" इत्याद्या ऐक्यगिरः। "जगदुत्पादिका शक्तिस्तस्य प्रकृतिरिष्यते। सैव नामसहस्रेषु लक्ष्मीः श्रीरिति कीर्त्यते ॥ शक्तिर्नारायणी दिव्या सर्वसिद्धान्तसम्मता। देवाच्छक्तिमतो भिन्ना ब्रह्मणः परमेष्ठिनः" इत्याद्याः शक्तित्वशक्तिमत्त्वगिरः। आदिना, "एष चैषा च शास्त्रेषु धर्मधर्मिस्वभावतः। भवद्भावस्वरूपेण तत्त्वमेकमिवोदितौ" इत्याद्या भवद्भावत्वादिगिरो ग्राह्याः। एते सर्वे व्यवहारा नित्यदाम्पत्यनिबन्धना इत्यर्थः। एतदेव विशदयति ज्ञानेत्यादिना। जगज्जनकत्वेति। जगत्कारणत्वेत्यर्थः। "आनीदवातं स्वधया तदेकम्" (तै–ब्रा) इति स्वधाशब्दितलक्ष्मीविशिष्टस्य परमात्मनः सृष्टिप्राक्काले, "आनीत्" इति सत्ताप्रतिपादनात् देव्या अपि जगत्कारणत्वसिद्धिरिति भावः। "स्वधा त्वं लोकपावनी" इत्युपबृंहणानुरोधात् स्वधाशब्दो हि देवीपरः। "एषैव सृजते काले सैषा पाति जगत्त्रयम्। जगत् संहरते चान्ते तत्तत्कारणसंस्थिता" इत्यादिवचनान्यप्यत्र प्रमाणतया ग्राह्याणि। शेषित्वेति। "अस्या मम च शेषं हि विभूतिरुभयात्मिका", "उभयाधिष्ठानचैकं शेषित्वम्" इत्यादिना तत्सिद्धिरिति भावः। साम्याच्चेति। ज्ञानानन्दाद्यत्यन्तसाम्यादित्यत्रेवेह त्यन्तशब्दाप्रयोगो जगत्कारणत्वादिषु किञ्चिद्वैषम्यस्फुटीकरणाभिप्रायः। देवीनिष्ठं जगत्कारणत्वं हि स्वरूपयोग्यतामात्ररूपम्—न तु फलोपहितव्यापारात्मकम्; देव्या दण्डधरत्वविरहात्, नारकिजन्मस्थित्युपघातकव्यापारविरहात्, कर्यष्टिसंहारोपघातकव्यापारविरहाच्च। भगवन्निष्ठं तु तत् फलोपहितव्यापारात्मकमिति स्पष्टमिदं श्रीमच्छ्रीतत्त्वसिद्धाञ्जने। एवं भगवत एकोनसर्वशेषित्वम्; देव्या द्व्यूनसर्वशेषित्वम्। शरण्यत्व-प्राप्यत्वे अपि प्राधान्याप्राधान्यभेदभिन्ने। साम्यगिरां निर्वाहो व्यक्त इति। दाम्पत्यस्य नित्यतया

1 शाश्वतमिति। अतः स एव स्वेच्छया कदाचित् स्त्रीरूपमपि गृहीत्वा चेतनद्वयवद्भातीति नेत्यर्थः।

व्यक्तः। एकत्ववादा अप्येवं द्वन्द्वरूपेणात्यन्तसमतया प्रकारैक्येन, समस्तप्रपञ्चप्रतियोगिकैक-शेषित्वाश्रयत्वेन, महेन्द्राग्नीषोमादिवत् यथाविनियोगं श्रिया तद्वल्लभस्य वैशिष्ट्यात् समस्तात्म-

---

पूर्णं जगत्। श्रीयते चाखिलैर्नित्यं श्रयते च परं पदम्॥", श्रयन्तीं श्रीयमाणाञ्च शृणतीं शृण्वतीमपि।", "वैकुण्ठे तु परे लोके श्रिया सार्धं जगत्पतिः। आस्ते विष्णुरचिन्त्यात्मा भक्तैर्भागवतैः सह॥" इत्यादीनि द्वयोरखण्डश्च प्रमाणतयाऽवगन्तव्यानि॥ द्वन्द्वरूपेणेति। मिथुनरूपतयाऽत्यन्तसमतयेत्यर्थः। 'तुल्यशीलवयोवृत्तां तुल्याभिजनलक्षणाम्' इति द्वन्द्वरूपेऽत्यन्तसाम्यावश्यम्भावादिति भावः। ननु स्त्रीपुंसत्व-शेषशेषिभावशरीरशरीरिभावादिभेदकधर्मेषु जाग्रत्सु कथमत्यन्तसाम्यम्? अत्यन्तसाम्येऽपि वा कथमेकत्व-व्यपदेशस्योपपत्तिः; धर्मिणोरैक्याभावात्; धर्माणाञ्च ज्ञानानन्दादीनां साम्यसत्त्वेऽप्यैक्याभावादित्याशङ्क्य सर्वशेषित्वरूपैकधर्माश्रयत्वेन वा, महेन्द्राग्नीषोमादिवत् आत्महविः प्रति देवतात्वरूपैकधर्माश्रयत्व रूपेण वा प्रकारैक्येनैक्यमुपपद्यते इत्याह—प्रकारैक्येनेति। महेन्द्राग्नीषोमादिवदिति। यथा महेन्द्रदेवताके यागे नेन्द्रमात्रस्य देवतात्वम्; अपितु महत्त्वविशिष्टस्येति महत्त्वस्य विशेषणतया देवतात्वाश्रयत्वम्। यथा वाऽग्नीषोमीययागे न केवलस्याग्नेः, न वा केवलस्य सोमस्य देवतात्वम्; अपितु परस्परसहितयोः—तथेत्यर्थः। "अस्या मम च शेषं हि विभूतिरुभयात्मिका", "मकारस्तु तयोर्दासः" इत्यादिवाक्यपर्यालोचनायामुभयोरपि व्यासक्तदेवतात्वप्रतीतेरग्नीषोमनयः, द्वयपर्यालोचनायां लक्ष्मीविशिष्टस्य देवतात्वप्रतीतेर्महेन्द्रनय इत्यभिप्रेत्याह—यथाविनियोगमिति। यथा-

---

साम्योक्तिमात्रेण न गुणप्रधानभावपरित्याग इति भावः। एवमिति। ज्ञानानन्देत्याद्युक्तरीत्येत्यर्थः॥ प्रकारैक्येनेति। ज्ञानानन्दजगज्जनकत्वादिप्रकारैक्येनेत्यर्थः। महेन्द्राग्नीषोमादिवदिति। यथा महेन्द्रदेवताके यागे नेन्द्रमात्रस्य देवतात्वम्; अपि तु [1]महत्त्वविशिष्टस्येति विशेषणविशेष्योभयपर्याप्तमेकमेव देवतात्वम्, यथा वा अग्नीषोमीययागे केवलस्याग्नेः केवलस्य वा सोमस्य न देवतात्वम्; अपितु व्यासक्तमेकं देवतात्वम्—तथा आत्महविरुद्देश्यदेवतात्वं दम्पत्योर्व्यासक्तमेकमेवेत्यर्थः। यथाविनियोगमिति। तत्तन्मन्त्रविनियोगानुरोधेनेत्यर्थः। विनियोगः=अङ्गताबोधनम्। अयं भावः—"द्वयेन शरणं व्रजेत्" इत्यादिद्वयविनियोगानुरोधेन द्वयेनाऽऽत्मसमर्पणे श्रियो विशेषणतया महेन्द्रन्यायः, "ओमित्यात्मानं युञ्जीत" (तै. उ) इति प्रणवविनियोगानुरोधेन प्रणवेनात्मसमर्पणे प्रणवान्तर्गतोकारस्य, "उद्धृता विष्णुना लक्ष्मीरुकारेणोच्यते तथा" इति श्रुत्यनुरोधेन देवीपरत्वेऽग्नीषोमन्याय इति। अग्नीषोमादीति। आदिना पत्नीवद[ग्न्या]ग्नविष्ण्वादिसङ्ग्रहः। वैशिष्ट्यादिति। साहित्यादित्यर्थः। उद्देश्यैकदेवतात्वादीति आदिना उभयोरेकाभिप्रायतया फलप्रदत्वादिसङ्ग्रहः। निर्वाह्या इति।

---

1 महत्त्वविशिष्टस्येति। त्यज्यमानहविरुद्देश्यत्वरूपं देवतात्वमिन्द्र एव संभवति, न महत्त्वे, अचेतनत्वादिति शंकासद्भावेऽपि मीमांसकाः अचेतनेऽपि शब्दादौ देवतात्ववादिनः महत्त्वे इन्द्रे च देवतात्वं व्यासक्तमित्याहुः। एवं स्थिते यत्र विशेषणस्यापि चेतनत्वं तत्र व्यासक्ततायां कः संदेह इति भावेन द्वयमन्त्रानुरोधेन एतदुदाहरणम्। समप्रधानवत् उद्देश्यत्वप्रतीत्यविशेषेऽपि अप्राधान्यस्यापि ज्ञापनमत्र विशेषः।

हविः प्रति उद्देश्यैकदेवतात्वादिवेषेण वा निर्वाह्याः। शक्तित्ववादास्तु पत्नीत्वादिरूपेण विशेषणत्वाभिप्रायाः, सृष्ट्यादिव्यापारेषु समानलीलतया प्रेरकत्वेन सहकारित्वाभिप्राया वा। प्रयुज्यते च सर्वत्र स्त्रीपुंसात्मकेषु द्वन्द्वान्तरेष्वपि स्त्र्यंशे शक्तित्ववादः (शक्तिशब्दः?)। व्यूहवत् अवस्थाभेदवादास्तु अवतारादिविषयाः। सर्वस्य भगवदात्मकत्वेन तस्य स्वेच्छया परेच्छया वा कार्यदशापन्नस्यापि भगवदवस्थाभेदत्वात्। एवमिच्छासंविदहन्तादिव्यपदेशा अपि प्रणयानुविधेयत्वस्वयंप्रकाशत्व-

---

प्रमाणमित्यर्थः। **शक्तित्ववादास्त्विति**। कार्योपयोग्यपृथक्सिद्धविशेषणस्य शक्तिशब्दाभिधेयत्ववत् अपृथक्सिद्धत्वसाम्येन वा, कार्योपयोगित्वसाम्येन वा शक्तिशब्दप्रयोगोपपत्तिरित्यर्थः। यद्यपि लक्ष्म्याः कार्योपयोग्यपृथक्सिद्धविशेषणत्वात् शक्तिशब्दमुख्यार्थत्वमेव संभवति—तथाप्यद्रव्यस्यैव शक्तिशब्दाभिधेयत्वमभिप्रेत्य तथोक्तमिति द्रष्टव्यम्। **द्वन्द्वान्तरेष्वपीति**। पार्वत्यां शक्तिवादस्य, "शिवः शक्त्या युक्तो यदि भवति" इत्यादिप्रयोगेषु दर्शनात्, "शक्तिचक्रस्य नायिकाम्" इति स्त्रीषु शक्तिशब्दप्रयोगाच्चेति भावः। ननु लक्ष्म्या ईश्वराद्भिन्नत्वे तद्विग्रहस्य नित्यत्वे च सति भगवच्छास्त्रेषु भगवत्परिणामत्वोक्तिः कथमित्याशङ्क्याह—**व्यूहवदिति**। **अवतारादीति**। "राघवत्वेऽभवत् सीता रुक्मिणी कृष्णजन्मनि" इत्यादिवाक्यप्रतिपन्नसीताद्यवतारविषया इत्यर्थः। **तस्येति**। लक्ष्म्यवतारस्येत्यर्थः। **स्वेच्छयेति**। लक्ष्मीच्छयेत्यर्थः। **परेच्छयेति**। भगवदिच्छयेत्यर्थः। **भगवदवस्थाभेदत्वादिति**। लक्ष्म्या अपि भगवदात्मकतया तदवस्थात्वादिति भावः। **प्रणयानुविधेयत्वेति**। इच्छा हि विषय-

---

यथ स्वरूपेवयाभ्युपगमे नित्यदाम्पत्यविरोध इति भावः। **विशेषणत्वाभिप्राया इति**। कार्योपयोग्यपृथक्सिद्धविशेषणं हि शक्तिरित्यभिप्रायः। **सहकारित्वाभिप्राया वेति**। न अद्रव्यविशेषरूपशक्त्यात्मकत्वाभिप्राया इति भावः। उक्ताभिप्रायकतया शक्तिशब्दप्रयोगमन्यत्रापि दर्शयति **प्रयुज्यते चेति**। **द्वन्द्वान्तरेष्वपीति**। पार्वत्यां शक्तिशब्दप्रयोगस्य, "शिवः शक्त्या युक्तो भवति" इत्यादिषु दर्शनात्। शक्तिचक्रस्य नायिकाम्" इति स्त्रीषु प्रयोगाच्चेति भावः। ननु देव्या भगवतो भिन्नत्वे तद्विग्रहस्य नित्यदाम्पत्यव्यवहारानुरोधान्नित्यत्वे च सति व्यूहवत् (?) अवस्थाभेदवादाः कथं संघटेरन्नित्याशङ्क्याह **व्यूहवदिति**। वासुदेवसङ्कर्षणादिभगवद्व्यूहवदित्यर्थः। **अवतारादिविषया इति**। सीतारुक्मिण्यादिदेव्यवतारादिविषया इत्यर्थः। **आदिना** आगन्तुकसङ्कल्पादिविशिष्टदेवीस्वरूपपरिग्रहः। तस्यापि हि विशिष्टवेषेणाऽऽगन्तुकतया भगवदपृथक्सिद्धविशेषणतया चावस्थारूपत्वं संभवति। कथं देव्यवतारस्य भगवदवस्थारूपत्वं संभवतीत्यत आह **सर्वस्यापीति**। **भगवदात्मकत्वेन**=भगवदपृथक्सिद्धविशेषणत्वेन, **तस्य**=सर्वस्य। **स्वेच्छया**=यस्य कार्यदशा तदिच्छया। **परेच्छया**=तदतिरिक्तेच्छया। प्रकृतेऽवतारविग्रहविशिष्टवेषेण कार्यदशापन्नाया देव्याः कार्यदशा स्वेच्छाधीना, प्रकृत्यादेः कार्यदशा परेच्छाधीना। परेच्छा च भगवदिच्छा देवीच्छा च। **भगवदवस्थाभेदत्वादिति**। "आगन्तुरपृथक्सिद्धो धर्मोऽवस्थेति कीर्त्यते" इति तल्लक्षणादिति भावः। **प्रणयानुविधेयत्वेति**। प्रणयाधीनं यत् अनुविधानं=अभिप्रायानुसारेण प्रवृत्तिः तद्योग्यतेत्यर्थः। सृष्ट्यादिगोचरासु सर्वास्वपि प्रवृत्तिष्विच्छावत् अस्या हेतुत्वात् इच्छासादृश्यनिबन्धनोऽयमिच्छात्वव्यपदेश इति भावः। **स्वयमिति**। स्वयंप्रकाशत्वात् संवित्त्वव्यपदेशः; न

स्वरूपनिरूपकत्वविशेषरूपादिपरा द्रष्टव्याः। अत्र वक्तव्यमखिलं षडर्थसङ्क्षेपे दिव्यस्थाननिरूपणानन्तरं श्रीराममिश्रैरुक्तम्। अथ तत्रत्योऽयं ग्रन्थः—"समान[1]नयात् महिष्यादिसिद्धिश्च। ननु शेषित्वविशिष्टविधिरशक्यः; अन्यशेषस्य तदन्यशेषत्वायोगात्। न चानुवादः, अत एव। किञ्च महिष्यादिकं परस्य शरीरम्। अन्यथा एकमेवेति विरुध्यते। आनन्दादिवदपृथग्भावाभावात्। अतः समत्वान्न मिथःशेषशेषिता॥ मैवम्; पत्युः पत्न्या अपीति लोकसिद्धम्।

प्रणयप्राप्या, एवं श्रीरपि प्रणयप्राप्यतया इच्छेति, स्वप्रकाशतया संविदिति, स्वरूपनिरूपकतया अहन्तेति च व्यपदिश्यते इति भावः॥ **समाननयादिति**। स्थानादिन्यायसाम्यादिति भावः। तत्र ग्रन्थे तस्य प्राक् प्रस्तुतत्वात्। **शेषित्वविशिष्टविधिरिति**। "**अस्येशाना जगतः**" इति वाक्येन शेषित्वविशिष्टपत्नीविधिरित्यर्थः। **अन्यशेषस्येति**। भगवच्छेषभूतस्य प्रपञ्चस्य भगवद्व्यतिरिक्तलक्ष्मीशेषत्वायोगादित्यर्थः। ईश्वरधर्मभूतज्ञानवत् लक्ष्म्या ईश्वरशरीरत्वाभावेऽपि, "**एकमेव**" इति न विरुध्यते इत्याशङ्क्याह—**आनन्दादिवदिति**। केवलात्मस्वरूपधार्यस्याऽऽनन्दादेर्यादृशमपृथक्सिद्धत्वम्, तत् सङ्कल्पधार्यशरीरस्य नास्तीत्यर्थः। **अतः समत्वादिति**। "गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात् स्यात्" इति न्यायात् भगवच्छेषभूतस्य प्रपञ्चस्य न भगवच्छेषभूतलक्ष्मीशेषत्वमिति भावः। **पत्युः पत्न्या अपीति**। पत्युर्द्रव्यं पत्न्या अपीति लोके सिद्धमित्यर्थः। **अविभागस्मृतेरिति**। "धर्मे चार्थे च नातिचरितव्या", "पाणिग्रहणाद्धि सहत्वं कर्मसु तथा पुण्यफलेषु द्रव्यपरिग्रहे च" इत्यादिस्मृतेरित्यर्थः। इदमुपलक्षणम्—'पत्नी हि [2]पारीणह्यस्येष्टे(शे)' इति श्रिया

तु सविषयकज्ञानरूपत्वादिति भावः। **स्वरूपनिरूपकत्वविशेषेति**। देवतान्तरव्यावृत्तस्वरूपनिरूपकत्वरूपविशेषेत्यर्थः। अहन्ताव्यपदेश उक्तस्वरूपनिरूपकत्वाभिप्रायः; न स्वद्रव्यत्वाचेतनत्वादिपर इति भावः। **अहन्तादीति**। **आदिना** क्रियापरिग्रहः। **स्वरूपनिरूपकत्वविशेषरूपादीति**। **आदिना** भगवद्व्यापारहेतुत्वसङ्ग्रहः॥

**समाननयादिति**। स्थानादिसमानन्यायादित्यर्थः। **शेषित्वविशिष्टविधिरिति**। "अस्येशाना जगतो विष्णुपत्नी" (तै. सं. ४) इति वाक्येन भगवन्तमनूद्य जगच्छेषित्वविशिष्टपत्नीविधिरित्यर्थः। **अन्यशेषस्येत्यादि**। तथा च भगवच्छेषस्य प्रपञ्चस्य भगवद्व्यतिरिक्तदेवीशेषत्वायोगात् प्रपञ्चशेषित्वविशिष्टपत्नीविधानमशक्यमित्युक्तं भवति। **अनुवाद इति**। जगच्छेषित्वविशिष्टानुवाद इत्यर्थः। शेषित्वविशिष्टानुवादेन विष्णुपत्नीत्वविधानमिति भावः। **अत एवेति**। एकं प्रति शेषस्य तदन्यशेषत्वासंभवादेवेत्यर्थः॥ **अन्यथेति**। महिष्यादिकस्य शरीरत्वाभाव इत्यर्थः। **एकमेवेति विरुद्ध्यत इति**। अनेन ब्रह्मापृथक्सिद्धविशेषणतारहितवस्तुनिषेधादिति भावः। **आनन्दादिवदपृथग्भावाभावादिति**। आनन्दादीनामिवापृथग्भावे अपृथक्सिद्धविशेषणत्वे सति हि तद्विरोधो न (?) भवेदिति भावः। **अत इति**। शरीरत्वादित्यर्थः। **समत्वान्न मिथश्शेषशेषितेति**। शरीरत्वे शेषत्वावश्यम्भावाद्देव्याः प्रपञ्चस्य च तुल्यवद्भगवच्छेषतया, "गुणानाञ्च परार्थत्वादसंबन्धः समत्वात् स्यात्" इति न्यायेन परस्परशेषशेषिभावो न संभवतीत्यर्थः। **पत्युः**

1 दिव्यस्थाननिरूपणानन्तरमिति स्थलप्रदर्शनं स्मारणार्थं सुगमत्वाय। 2 पारीणह्यम् = गृहगतोप-

उभयाधिष्ठान[1]ञ्चैकं शेषित्वम् । अविभागस्मृतेः । तदुक्तं नीतिविद्भिः, "अन्यतरानिच्छायां त्याग एव न संवर्तेत" इति । न ह्यनिर्वृत्तिः पृथक्त्वे । एतन्न्यायसहकृतवाक्येन च शेषित्व-

---

अपि परिणयेन पतिधनस्वामित्वस्य श्रुत्याऽपि सूचितत्वादित्यपि द्रष्टव्यम् । न च, "भार्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः" इति स्त्रिया निर्धनत्वप्रतिपादकस्मृतिविरोध इति वाच्यम्; बहुश्रुतिस्मृति विरुद्धत्वेन तस्य वचनस्यास्वातन्त्र्यपरतया व्याख्येयत्वात् । इतरथा स्त्रिया निर्धनत्वेन, "लिङ्गविशेष निर्देशात् पुंयुक्तमैतिशायनः" इति स्त्रिया अपि यागाधिकारप्रतिपादकाधिकरणविरोधापत्तेः । तदुक्तं नीतिविद्भिरिति । षष्ठेऽधिकारलक्षणे 'दम्पती किं पृथक् यजेयाताम्, उत सह' इति विचार्य यजेतेत्याख्यातोपात्तायाः सङ्ख्याया गुणभूतोपादेयगतत्वेन विवक्षितत्वादेकैकशः प्रयोग इति प्राप्ते— यज्यर्थो हि त्यागात्मकः । स तु स्वद्रव्ये औदासीन्यबोधात्मा । तद्बोधस्तु पत्न्यनुमतिसम्पाद्यः । अन्यथा दम्पत्योरविभागादेकमेव स्वं तयोरिति तुल्यस्वाम्यतया पत्नीस्वाम्यानपाये सति पत्युः स्वाम्यमप्यनपेत मित्यौदासीन्यबोधात्मा त्याग एव न संवर्तेत इति त्यागस्वरूपसिद्ध्यर्थं पत्न्यनुमत्यपेक्षा । अनुमतिश्च त्यक्तुः प्रातिकूल्यरहिततयाऽवस्थानम्, तदानुगुण्याचरणं वा । ततश्च यजमानस्य पत्नीनिरपेक्षप्रयोगा- संभवात् दम्पत्योः सहैव प्रयोग इत्युक्तमिति भावः । न ह्यनिर्वृत्तिः पृथक्त्व इति । दम्पत्योर्विभक्त- द्रव्यत्वे त्यागस्यानिर्वृत्तिवचनं कथं घटेतेति भावः । ननु, "अस्येशाना" इति वाक्यं न्यायसिद्धार्था- नुवाद्येव स्यादित्याशङ्क्याह एतन्न्यायसहकृतेति । ईशानत्वविशिष्टविष्णुपत्नीविधौ गौरवादाह अनूद्य

---

पत्न्या अपीति । पत्युर्द्रव्यं पत्न्या अपीति लोकसिद्धमित्यर्थः । यत्र यत्र पतिस्वत्वं तत्र पत्नीस्वत्वमिति व्याप्तिर्लोकसिद्धेति फलितोऽर्थः । तथाचैकं प्रति शेषस्य तदन्यशेषत्वाभावनियमविरहात् शेषित्वविशिष्टविधिरुपपन्नत एव । गुणानाञ्चेति न्यायस्तु न वचनविरोधे प्रभवतीति भावः । तदुक्तं नीतिविद्भिरिति । "स्ववतोऽस्तु वचनादेककर्म्यं स्यात्" इति षाष्ठाधिकरणे शबरस्वामिभिरिति भावः । अन्यतरानिच्छायां=पत्युः पत्न्या वाऽनिच्छायाम् । त्याग एवेति । देवतोद्देशेन द्रव्यत्याग- रूपयाग एवेत्यर्थः । एवकारः प्रधानस्यैव लोप इत्येवमर्थः । न संवर्ततेति । न निर्वर्ततेत्यर्थः । उभयस्वामिकतया द्रव्यस्येतरानुमतिमन्तरेणैकेनान्योद्देशेन त्यक्तुमशक्यत्वादिति भावः । न ह्यनिर्वृत्तिः पृथक्त्व इति । शेषित्वस्य दम्पतिपर्याप्तत्वमन्तरेण प्रत्येकपर्याप्तत्वेऽन्यतरानिच्छायां त्यागस्यानिर्वृत्ति- रुच्यमाना नोपपद्येत हीत्यर्थः। ननु यत्रयत्र पतिशेषत्वम्, तत्र पत्नीशेषत्वमिति व्याप्त्या अनुमानेनैव पति- शेषत्वहेतुकेन जगति देवीशेषत्वसिद्ध्या, "अस्येशाना" इति वाक्यमनुमानसिद्धानुवादकमेव स्यात्; न तु शेषित्वविशिष्टपत्नीविधायकमित्याशङ्क्याह एतन्न्यायेति । उक्तव्याप्तिसिद्धसंभावनातर्करूपन्यायेत्यर्थः ।

---

करणादिसर्ववस्तु । पतिस्वामिकतद्दानं हि तस्या अपि स्वामित्वाभावे न भवतीत्यर्थः । अस्येशा- त्यर्थस्तु–विष्णुरिवेयमपि अस्य जगत ईशाना । अत एव विष्णोः पत्नी जगद्रक्षणयज्ञेऽन्वितेति ।

1 उभयाधिष्ठानमिति। इदं दिव्यदम्पतिलौकिकदम्पत्युभयसाधारणम्। "द्वौ च सदैकशेषी ।" विष्णु- मात्रे शेषित्वनिर्धारणं न पूर्वम्; सर्वेषामस्यास्तदन्तर्भावादेव पृथक्कथनात् उभयशेषत्वपरतात्पर्यात् ।

विशिष्टपत्नीविधिः । अनूद्य वा । न च लोके शरीरस्य अपत्नीत्वं नाम [1]मानान्तरागोचरे विरोधः । अचित्त्वाच्च अपत्नीत्वं लोके । स च स्वस्मिन् आत्माश्रयदोषः । शेषत्वमन्यत्रापि

---

वेति । विष्णुपत्नीमनूद्येशानात्वं विधीयते, ईशानां वाऽनूद्य विष्णुपत्नीत्वमित्यर्थः । न च लोक इति । स्वशरीरं स्वस्य पत्नी न भवतीति योऽयं विरोधः स मानान्तरागोचरे न भवति । धर्मिग्राहक-प्रमाणेन तथैवाभ्युपेतत्वादिति भावः । स्वशरीरत्वात् स्वपत्नीत्वाभावानुमाने अचित्त्वमुपाधिरित्याह अचित्त्वाच्चेति । ननु मा भूदचेतनस्य शरीरस्य पत्नीत्वम् । तद्विशिष्टस्यात्मनः स्वं प्रति पत्नीत्वं कुतो न स्यादित्याशङ्क्याह स च स्वस्मिन्निति । स्वस्मिन्नेव पतिपत्नीभाव आत्माश्रयदोषदुष्ट इत्यर्थः ।

---

अतीन्द्रियविषये अप्रयोजकत्वशङ्काकलङ्कितस्यानुमानस्य न साधकत्वं संभवतीति भावः । न चाविभाग-स्मृत्यादिभिरप्रयोजकत्वशङ्कानिरासः संभव इति वाच्यम्; कर्मवश्यविषय एवायं नियम इति वक्तुं शक्यत्वात् । हेतुघटकपतिपत्नीभावस्यागमेनैव साध्यतया तत एव शेषित्वस्यापि सिद्धेश्च । विशिष्टविधौ गौरवमालोच्याह अनूद्य वेति । तात्पर्यवशाद्विधिरिति सावैकदेशानुषङ्गः । तथा चैकदेशमनूद्यैकदेश-विधिर्वेत्यर्थः । विष्णुपत्नीमनूद्येशानत्वस्य वा ईशानामनूद्य विष्णुपत्नीत्वस्य वा विधिरिति फलितोऽर्थः । प्रथमपक्षे, ''ह्रीश्च ते लक्ष्मीश्च पत्न्यौ'' इति वाक्येन देव्या विष्णुपत्नीत्वसिद्धावनेन वाक्येनेशानत्व सिद्धिः, द्वितीयपक्षे, ''ईशाना देवी'' इत्यादिवाक्यान्तरेणेशानात्वसिद्धावनेन विष्णुपत्नीत्वविधिरिति भावः । ननु देवी भगवत्पत्नीत्वाभाववती–भगवच्छरीरत्वात्, यत्र यच्छरीरत्वम्, तत्र तत्पत्नीत्वा भावः; यथा अस्मदादिशरीर इत्यनुमानेन देव्यां पत्नीत्वाभावसिद्ध्या न श्रुत्या पत्नीत्वविधानं संभवति इत्याशङ्क्याह न चेति । शरीरस्यापत्नीत्वं=शरीरसामान्यस्य पत्नीत्वाभावः । मानान्तरागोचर इति । देवीस्वरूपस्य श्रुत्यैव साधनीयतया धर्मिग्राहकमानजातीयतया श्रुतेः प्राबल्येन न तद्विरुद्धानु-मानोदयः संभवतीति भावः । एवं विपक्षे बाधकविरहेणोक्तानुमानस्याप्रयोजकतेत्यपि बोद्धव्यम् । इदमपि मानान्तरागोचर इत्यनेनाभिप्रेतम् । उक्तानुमानस्य सोपाधिकत्वमप्याह अचित्त्वाच्चेति । अचित्त्वस्य पत्नीत्वाभाववत्सु घटादिषु सर्वेषु सत्त्वात् पक्षे असत्त्वाच्चेति भावः । यद्यपि पत्नीत्वाभाववति भगवत्यचित्त्वं नास्ति; तथापि साधनावच्छिन्नसाध्यव्यापकोपाधिरयम्, देव्यतिरिक्तचेतनभिन्नत्वरूप-पक्षधर्मावच्छिन्नसाध्यव्यापकोपाधिर्वेति भावः । ननु देव्यां पत्नीत्वं दुर्वचम् । तथाहि—न तावत् शेषत्वमात्रं तत्; सर्वसाधारणत्वात् । नापि चेतनत्वसहितम्; सर्वचेतनसाधारण्यात् । नापि विवाहजन्यसंस्काराश्रयत्वम्; नित्यत्वविरोधात्, शास्त्रवश्यताविरहाच्च इति चेत्—अत्रोच्यते; यथा लोके अनया सह कर्माण्याचरितव्यानि प्रजाश्चोत्पादनीयाः' इत्येवंविध सङ्कल्पविशेषस्य विवाहकाले पत्या करणात् पत्न्या तदभ्युपगमाच्च सङ्कल्पविशेषविषयत्वरूपं पत्नीत्वम्, तद्वदनया सह जगद्रक्षणयज्ञः कार्यः, जगच्चोत्पादनीयमित्येवं भगवत्सङ्कल्पात् देव्या च तदभ्युपगमात् तादृशसङ्कल्पविशेषविषय त्वरूपं पत्नीत्वं देव्यामप्यव्याहतम् । लोके उक्तसङ्कल्पविशेषस्यागन्तुकतया दाम्पत्यमागन्तुकम् । उक्त-भगवत्सङ्कल्पविशेषस्य तु नित्यतया दाम्पत्यं नित्यमिति विशेषः । न चोच्छृङ्खलस्य कस्यचित् दास्या

---

1 मानान्तरेति । भूमिनीलादीनाम् अवतारेषु अनेकस्त्रीणाञ्च परमात्मपत्नीत्वं हि स्पष्टम् ।

अविरोधात्" इति । अनेन च श्रीराममिश्रवचसा द्वन्द्वं प्रति जगतः शेषतैकरसत्वमुपपादितम् ।

श्रुतिश्च, "अकारेणोच्यते विष्णुः सर्वलोकेश्वरो हरिः । उद्धृता विष्णुना लक्ष्मीरुकारेणोच्यते तथा । मकारस्तु तयोर्दास इति प्रणवलक्षणम् ॥" इति । मन्त्रान्तरेष्विव प्रणवेऽपि बहवोऽर्था बहुषु प्रदेशेषु प्रतिपाद्यन्ते एव । न चार्थविरोधः, येनान्यपरता स्यात् । "अस्येशाना जगतो विष्णुपत्नी", "ईश्वरीं सर्वभूतानाम्" इत्यादिका च । अदित्यादिशब्दसामानाधिकरण्यात् आद्या श्रुतिर्भूविषयेति केचित्[1] । दिग्विषयेति तु कुदृष्टिः। श्रुतिलिङ्गादिविरोधात्। आह च भगवान्

भगवच्छेषभूतस्यापि प्रपञ्चस्य तच्छेषभूतलक्ष्मीं प्रत्यपि शेषत्वमुपपद्यते । प्रकरणादवगतक्रत्वङ्गभावानामपि प्रोक्षणादीनां श्रुत्यादिवशेन क्रत्वर्थव्रीह्याद्यर्थत्वस्यापि दर्शनादित्याशयेनाह शेषत्वमन्यत्रापीति । ननु प्रणवस्य, "अकारार्थो विष्णुर्जगदुदयरक्षाप्रलयकृत् मकारार्थो जीवस्तदुपकरणं वैष्णवमिदम् । उकारोऽनन्यार्हं नियमयति सम्बन्धमनयोः....." इत्यादावन्यथैवार्थप्रतिपादनात् कथमुकारस्य लक्ष्मीवाचकत्वमित्याशङ्क्याह मन्त्रान्तरेष्विवेति । ननु अन्यशेषस्यान्यशेषत्वविरोधात्, "अस्येशाना" इत्यादिश्रुतिरन्यपरेत्याशङ्क्य तस्य परिहृतत्वान्न दोष इत्याह न चार्थविरोध इति । इत्यादिका चेति । प्रमाणमिति शेषः । अदित्यादिशब्देति । "अस्येशाना जगतो विष्णुपत्नी । विश्वस्यव्यचा इषयन्ती

सह कर्माण्याचारत्व्यानि प्रजश्चोत्पादनीया इत्येवावधसङ्कल्पावशेषविषयतामादाय दास्यामतिप्रसङ्ग इति वाच्यम्; शास्त्रगम्यतादृशसङ्कल्पविशेषविषयताया विवक्षितत्वात् । शास्त्रगम्यत्वं च शास्त्रजन्यज्ञानीयाज्ञातज्ञाप्यत्वशब्दितविधेयतारूयविषयतया शास्त्रतात्पर्यविषयत्वम् । तेनोक्तदासीविषयकसङ्कल्पस्यापि तात्पर्यभ्रमाधीनशब्दबोधविधेयत्वसंभवेऽपि न क्षतिः । यद्यप्येवंविधसङ्कल्पविशेषविषयत्वं भूम्यादिषु नास्ति, तथाऽपि भोगविशेषादिविषयकसङ्कल्पविषयताया अपि लोके द्वितीयपत्न्यादिषु पत्नीत्वरूपतया दर्शनात् तादृशं भूम्यादिषु निर्बाधम् । अतिप्रसङ्गवारणं तु प्राग्वत् बोद्धव्यम् । ननु स्वस्मिन्नेव पत्नीत्वमस्तु; ततश्च न देव्या भेदसिद्धिरित्याशङ्क्याह स चेति । अपत्नीत्वञ्चेत्यर्थः । विधेयप्राधान्यात् पुंस्त्वम् । आत्माश्रयदोषः=आत्माश्रयदोषाधीनः, स्वस्य पत्नीत्वे आत्माश्रयदोषात् तदभावः आत्माश्रयदोषाधीन इति भावः। स चेत्यस्य पतिपत्नीत्वभावश्चेत्यर्थस्तु न स्वारसिकः; पूर्वं केनापि पदेन तद्रूपेण तस्यानभिधानात् । अथवा स चेत्यस्य पत्नीत्वविधिश्चेत्यर्थः । स्वस्मिन्नात्माश्रयदोष इति । स्वोद्देशेनैव स्वपत्नीत्वविधिरात्माश्रयदोषदुष्ट इत्यर्थः । स्वभेदव्याप्यधर्मस्य स्वस्मिन्नभ्युपगमे स्वस्मिन् स्वभेदापत्तिरूपात्माश्रयः स्यादिति भावः । भगवच्छेषभूतस्यापि प्रपञ्चस्य तच्छेषभूतदेवीं प्रत्यपि शेषत्वमुपपद्यते, प्रकरणादवगतक्रत्वङ्गभावानामपि प्रोक्षणादीनां श्रुत्यादिवशेन क्रत्वर्थव्रीह्याद्यर्थत्वस्यापि दर्शनादित्यभिप्रेत्याह शेषत्वमन्यत्रापीति । यद्वा, अन्यत्रापि=लोकेऽपीत्यर्थः । लोकेऽप्येकं प्रति दासस्य वेतनादिनान्यं प्रत्यपि दासत्वदर्शनादित्यर्थः । इतिशब्दः श्रीराममिश्रवाक्यपरिसमाप्तिबोधकः । भूविषयेति । "भूमिर्भूम्ना द्यौर्वरिणान्तरिक्षं महित्वा । उपस्थे ते देव्यदितेऽग्निमन्नादमन्नाद्यायादधे ॥" (तै.सं.१का.५प)

---

1 केचिदिति । बृहस्पत्यादिवत् अदित्याः प्रस्तावेऽपि प्रकृतवाक्ये श्रीप्रतीतिस्वारस्यं न भञ्जनीयम् । भूम्याः लक्ष्मीविभूतित्वात्खलु इदं सर्वमुपपाद्यमिति भावः ।

**पराशरः, "त्वयैतद्विष्णुना चाम्ब जगद्व्याप्तं चराचरम्", "यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम", "नानयोर्विद्यते परम्" इत्यादि। तथा च भगवच्छास्त्रवचनम्, "एकतत्त्वमिवोदितौ", "लक्ष्म्याः समस्तश्चिदचित्प्रपञ्चो व्याप्यस्तदीशस्य तु साऽपि सर्वम्। तथाऽपि साधारणमीशितृत्वं श्रीश्रीशयोर्द्वौ च सदैकशेषी" इत्यादि। अहिर्बुध्न्यसंहितालक्ष्मीतन्त्रादिषु च विस्तरेणायमर्थोऽवधार्यः॥**

---

सुमूतिः शिवा नो अस्त्वदितिरुपस्थे" (तै. सं. ४-४-१२) इति अदितिशब्दश्रवणाददितिशब्दस्य **भूविषये** प्रसिद्धत्वाच्चेति भावः। **इषयन्ती** यन्त्राकारपरिणामहेतुत्वादिकमादिपदग्राह्यम्। **दिग्विषयेति**। "ऊर्ध्वा दिशाम्" इत्युत्तर(इति पूर्वः?)मन्त्रवर्णात् **दिग्विषयेति** तदाशयः। **श्रुतिलिङ्गादिविरोधादिति**। ईशानश्रुत्या विष्णुपत्नीत्वादिलिङ्गेन विरुद्धत्वात्। **आदिपदेन** स्मृतिपुराणादि विवक्षितम्। शेषित्वस्योभयाधिष्ठानत्वे सम्मतिं दर्शयति **आह च भगवान् पराशर** इत्यादिना॥

---

इत्यादिष्वदितिशब्दस्य भूविषयतया प्रसिद्धत्वादिति भावः। **आदित्यादि** इति आदिपदग्राह्येषयन्तीपदसामानाधिकरण्यमपि तत्र हेतुः। **इषयन्तीशब्देन** यन्त्राकारपरिमाणहेतुत्वादिकमभिधीयते। **दिग्विषयेति तु कुदृष्टिरिति**। दिग्विषयेत्येवंविधज्ञानं कुत्सितज्ञानमित्यर्थः। भ्रान्तिरूपज्ञानमिति यावत्। कुत इत्यत्राह **श्रुतिलिङ्गादिविरोधादिति**। ईशानश्रुत्या विष्णुपत्नीत्वलिङ्गेन आदिपदग्राह्यस्मृतिपुराणादिना च विरोधादित्यर्थः। विभुत्वे सति चेतनत्वरूपेश्वरलक्षणलक्षिततया देव्या ईश्वरकोटित्वाभिप्रायेण विभुत्वे प्रमाणमाह **आह चेति**। **अहिर्बुध्न्यसंहितालक्ष्मीतन्त्रादिष्विति**। यथा अहिर्बुध्न्यसंहितायां द्वितीयेऽध्याये, "षाड्गुण्यं तत् परं ब्रह्म स्वशक्तिपरिबृंहितम्। बहु स्यामिति सङ्कल्पं भजते तत्सुदर्शनम्। तृतीये **नारदः**, "षाड्गुण्यं तत् कथं ब्रह्म स्वशक्तिपरिबृंहितम्। तस्य शक्तिश्च का नाम यया बृंहितमुच्यते" इति। **अहिर्बुध्न्यः**, "एवं भगवतस्तस्य परस्य ब्रह्मणो मुने। सर्वभावानुगा शक्तिर्ज्योत्स्नेव हिमदीधितेः। भावाभावानुगा तस्य सर्वकार्यकरी विभोः। स्वात्मशक्तिसमुन्मीलत्स्थावरजङ्गमस्थितिः॥ नित्या कालापरिच्छेदात् पूर्णाऽऽकारावियोगतः। व्यापिनी देशविभ्रंशरिक्ता पूर्णा च सर्वदा॥ जगत्तया लक्ष्यमाणा सा लक्ष्मीरिति गम्यते। श्रयन्ती वैष्णवं भावं सा श्रीरिति निगद्यते।"....
इत्यारभ्य, "उदधेरिव च स्थैर्यं महत्त्वं विहायसः। प्रभेव दिवसेशस्य ज्योत्स्नेव हिमदीधितेः॥ विष्णोस्सर्वाङ्गसंपूर्णा भावाभावानुगामिनी। शक्तिर्नारायणी दिव्या सर्वसिद्धान्तसंमता॥ देवाच्छक्तिमतो भिन्ना ब्रह्मणः परमेष्ठिनः। एष चैषा च शास्त्रेषु धर्मधर्मिस्वभावतः॥ भवद्भावस्वरूपेण तत्त्वमेकमिवोदितौ। स्वातन्त्र्येण स्वरूपेण विष्णुपत्नीयमद्भुता॥ नारायणस्स विश्वात्मा भावाभावमिदं जगत्। निष्कलेन स्वरूपेण यथा व्याप्य नियच्छति। सर्वभावात्मिका लक्ष्मीः अहन्ता परमात्मिका। तद्धर्मधर्मिणी देवी भूत्वा सर्वमिदं जगत्। निष्कलेन स्वरूपेण व्याप्य तत्त्वं नियच्छति"॥ इत्यादिकमुक्तम्। षष्ठेऽध्याये, "ताविमौ वेदशास्त्रोक्तौ भेदाभेदकभावतः। पृथक्त्वेन तु शास्त्रेषु जगद्धेतुतयोदितौ॥ नैव शक्त्या विना कश्चित् शक्तिमान् अस्ति कारणम्। न च शक्तिमतश्शक्तिः विना काप्यवतिष्ठते॥ तद्धर्मत्वमाश्रित्य तत्त्वभेदविवर्जितौ। जगद्धेतुतया देवावेकैकाविव दर्शितौ॥ **सप्तमाध्याये,**

र. पे. "एका शक्तिर्हरेर्विष्णोः सर्वभावानुगामिनी। देवी षाड्गुण्यपूर्णा सा ज्ञानानन्दक्रियामयी ॥ एकविंशेऽध्याये, "तद्धर्मधर्मिणीं शक्तिं ब्रह्मणोऽनपगामिनीम्। ज्ञानशक्तिबलैश्वर्यवीर्यतेजःप्रभावतीम् ॥ अनन्तानन्तरूपान्तामभेद्यां सर्वभेदिनीम् ।" इत्यादि ॥ लक्ष्मीतन्त्रे प्रथमेऽध्याये, "एषैव सृजते काले सैषा पाति जगत्त्रयम्। जगत् संहरते चान्ते तत्तत्कारणसंस्थिता। मातरं जगतामेनामनाराध्य महत् कुतः ॥" इत्यादि ॥ द्वितीयाध्याये श्रीरुवाच—"ज्ञानात्मकं परं रूपं ब्रह्मणो मम चोभयोः। शेषमैश्वर्यवीर्यादि ज्ञानधर्मः सनातनः ॥ अव्याहतिर्यदुत्पन्त्यास्तदैश्वर्यं परं मम। जगत्प्रकृतिभावो मे यस्सा शक्तिरुदीर्यते ॥ सृजन्त्या यच्छ्रमाभावो मम तत् बलमिष्यते। भरणं यच्च कार्यस्य बलं तच्च प्रचक्षते ॥ विकारविरहो वीर्यं प्रकृतित्वेऽपि मे सदा ।" इत्यादि ॥ तृतीयेऽध्याये, "नित्यनिर्दोषनिस्सीमकल्याणगुणशालिनी। अहं नारायणी नाम साऽहन्ता वैष्णवी परा ॥ देशात् कालात् यथा(तथा?)रूपात् परिच्छेदो न मे स्मृतः। संविदेव च मे रूपं सर्वैश्वर्यादिको गुणः ॥ अहं संविन्मयी पूर्णा व्यापिन्यपि पुरन्दर। अधिष्ठाय गुणान् सृष्टिस्थिति-संहारकारिणी ॥ निर्गुणाऽपि गुणानेतान् अधिष्ठायात्मवत्तया। चक्रं प्रवर्तयाम्येका सृष्टिस्थित्यन्तरूपकम् ॥ ईशो नारायणो ज्ञेय ईशता तस्य चाप्यहम्। ईशितव्यं च विज्ञेयं चिदचिच्च पुरन्दर" इति। तत्रैव, "ईशाऽहमीशितव्येन स च देवस्सनातनः। ईशितव्यं द्विधा प्रोक्तं चिदचिद्व्यतिरेकतः ॥ विभक्ते अपि ते एते शक्ती चिदचिदात्मिके। मत्स्वाच्छन्द्यवशेनैव मम रूपे सनातने" इति। चतुर्थेऽध्याये, "पूर्णषाड्-गुण्यरूपत्वात् साऽहं भगवती स्मृता। मतःप्रक्रियते विश्वं प्रकृतिश्चासि कीर्तिता" इत्यादि ॥ पञ्चमेऽध्याये, महन्नाम समारूयातो विकारः पूर्वतो बुधैः। महान्तमाविशाम्येनं प्रेरयामि ससृष्टये ॥ प्रेर्यमाणात् ततस्तस्मात् अहङ्कारश्च जज्ञिवान्। आविश्याशुमहंकारं सृष्टये प्रेरयाम्यहम्" इत्यादिना, "महदाद्या विशेषान्ता ह्यण्ड-मुत्पादयन्ति ते" इत्यन्तेन तन्मात्रादिसृष्टिक्रमेण विस्तरेण देव्या जगद्व्यापार उक्तः। अष्टमेऽध्याये, "एकधा च द्विधा चैव तैस्तैस्तत्त्वार्थपारगैः। व्यपदिश्यावहे शास्त्रे तावावां सर्वकारणम्", द्वादशे, "स्वतन्त्रा विश्वसिद्धीनां हेतुश्चास्मि महाद्भुता। शक्तिर्नारायणस्याहं नित्यदेवी सदोदिता ॥ तस्या मे पञ्च कर्माणि नित्यानि त्रिदशेश्वर! तिरोभावस्तथा सृष्टिः स्थितिः संहृतिरेव च। अनुग्रह इति प्रोक्तं मदीयं कर्मपञ्चकम् ॥" त्रयोदशेऽध्याये, "आत्मभित्तौ जगत् सर्वं स्वेच्छयोन्मीलयाम्यहम्। मयि लोकाः स्फुरन्त्येते जाले शकुनयो यथा ॥" सप्तदशे, "कान्तस्य तस्य देवस्य विष्णोस्सद्गुणशालिनः। दयिताऽहं सदा देवी नित्यं तद्धर्मधर्मिणी ॥ ईश्वरी सर्वभूतानां पद्माक्षी पद्ममालिनी। नायिका सर्वशक्तीनां सर्वलोकमहेश्वर(री?) ॥ महिषी देवदेवस्य सर्वकामदुघा विभोः। तुल्या गुणवयोरूपैर्मनःप्रमथनैर्हरेः ॥ करोमि सकलं कृत्यं नित्यं तद्धर्मधर्मिणी। साऽहमङ्कस्थिता विष्णोर्देवदेवस्य शार्ङ्गिणः ॥ ल(ला?)लिता तेन चात्यन्तं सामरस्यमुपेयुषी ॥" सप्तविंशे, "कर्मणा मनसा वाचा देवदेवं जनार्दनम्। प्रसन्नः शरणं गच्छ मां च तद्धर्मधर्मिणीम् ॥" अष्टाविंशे, "लक्ष्म्या सह हृषीकेशो देव्या कारुण्यरूपया। रक्षकः सर्वसिद्धान्ते वेदान्तेऽपि च गीयते ॥" इत्यादि ॥

यत् तावदुक्तं श्रीवचनभूषणमीमांसायां नवमेऽधिकारे, "देव्या उपायत्वप्रतिपादकवचनानां

भगवत्तुल्योपायपरत्वे विरोधोऽस्ति पुरुषकारत्ववचनानाम्" इति—तदयुक्तम्; विरोधगन्धाभावात्। तथाहि—भगवत उपायत्वं भरस्वीकारपूर्वकरक्षासङ्कल्पवत्त्वम्। तादृशोपायत्वस्य देव्यामङ्गीकारेऽपि न पुरुषकारत्वविरोधः—अधृष्यत्वधूननपूर्वकाभिगम्यताहेतुत्वरूपपुरुषकारत्वस्य मोक्षार्थभगवत्प्रपत्तिविरोधि निग्रहनिवृत्तिपूर्वकयथावस्थितभगवत्प्रपत्तिनिष्पत्तिहेतुसङ्कल्पात्मकस्य उक्तोपायत्वाभावतद्व्याप्यरूपत्व-विरहात्। न च रक्षासङ्कल्पस्य क्षमिष्यामि, क्षान्तमित्येवंरूपस्य कथमज्ञातनिग्रहायां देव्यां संभव इति वाच्यम्; त्रिगुणतिरस्करणीतिरोधाननिवृत्तिपूर्वकपरिपूर्णानुभवप्रदानसङ्कल्पस्यैव रक्षासङ्कल्प-रूपवत्त्वात्। उक्ततिरोधानसङ्कल्पस्य मोक्षातिरिक्तसकलपुरुषार्थहेतुतया निग्रहानात्मकत्वेन देव्यां तदविरोधात्। अतो देव्युपायत्वपरवचनानां न स्वारसिकार्थत्यागो युक्तः। अन्यथा सर्ववचनानामपि स्वस्वाभिमानानुरोधेन सङ्कोचप्रसङ्गेन सर्वव्यवस्थाविलोपप्रसङ्गात्॥ एतेन देव्याः साध्योपाय-तुल्योपायत्वमेवेति प्रत्युक्तम्; भरस्वीकारपूर्वकरक्षासङ्कल्पवत्त्वरूपस्य भगवदुपायत्वसमानयोगक्षेमस्य तस्य साध्योपायतुल्यत्वशङ्काया एवानवतारात्॥ अत एव देव्युपायत्वस्य विधावेद्यत्वं नास्तीत्यपि प्रत्युक्तम्। उत्तरखण्ड इव पूर्वखण्डेऽपि श्रीमच्छब्दार्थस्य विशेषणतायाः शब्दस्वारस्यसिद्धायाः परित्यागायोगात्। विशेषणत्वं हि विशेष्यान्वयिधर्मान्वयित्वम्। ततश्चोपायत्वाध्यवसायविशेष्यतायाः भगवतीव देव्यामपि सिद्ध्या कथं तदुपायत्वस्य विधावेद्यत्वाभावः। यदपि यथा भगवदुपायत्वं साध्योपायरहितविषयम्, तथा देव्युपायत्वमपीति—तदपि सर्वविषयत्वप्रसङ्गादिनाऽन्यत्र निरस्तम्। यदपि देव्या भगवत्तुल्यरक्षकत्वे मातृत्वप्रयुक्तसहजवात्सल्यादीनां पत्नीत्वप्रयुक्तपारतन्त्र्यादीनां च नाशापत्तिरिति—तदपि हास्यम्; देव्याः प्रमाणसिद्धभरस्वीकाररक्षासङ्कल्पादिमत्त्वरूपभगवत्तुल्योपायत्व-स्वीकारमात्रेण नित्यानामुक्तगुणानां नाशाप्रसक्तेः। यदपि, "युवत्वादौ तुल्येऽपि" इत्यादेः स्वाभिमतार्थ-प्रमाणतयोपन्यसनम्, तत् विपरीतम्; ऐच्छिकविभागप्रतिपादनेन भगवदत्यन्तसाम्यस्यैव तेनावगमात्। यदपि—अन्यत्र देवतयोः स्वतन्त्रत्वेन स्वतन्त्ररक्षणेऽपि अत्र विशेषणत्वेन हविरुद्देश्यत्वविशेष्यतुल्यरक्षकत्व-मनुपपन्नमिति—तदप्ययुक्तम्; बाधकाभावात्। विशेषणस्य विशेष्यान्वयिधर्मान्वयितया तौल्यावश्य-म्भावाच्च। शेषिणोः शेषशेषिभाववत् तत्कृत्ययोरपि शेषशेषिभावसत्त्वेऽपि शेषिणोरिव तौल्याविरोधात्॥

यदपि द्वयमेऽधिकारे—नात्र शरणशब्देन विशेष्य इव विशेषणेऽप्युपायत्वसंबन्धो बोद्ध्यते। तस्य शृणाति श्रीणातीति व्युत्पत्त्या श्रीशब्द एव बोधितत्वात्। न हि प्राप्तेऽर्थे पुनर्विधिसंभव इति—तदप्ययुक्तम्; श्रीशब्देन स्वरूपयोग्यतारूपस्यैवोपायत्वस्य बोधनात् शरणशब्देन फलोपधानरूपस्य तस्याभिधानेन पुनर्विध्यप्रसक्तेः। अन्यथा, "गतिरालम्बनं तस्य तेन नारायणः स्मृतः" इत्यादिना व्युत्पादितनारायणशब्देन भगवतोऽप्युपायत्वप्रतीत्या तत्राप्युक्तदोषप्रसङ्गात्। यदपि इहावयवार्थाविवक्षायां शास्त्रे तद्व्युत्पादनानर्थक्यमिति—तदप्ययुक्तम्; श्रीमन्त्रादिषु तदनुसन्धानार्थतया सार्थक्योपपत्तेः। यदप्येकेनैव शब्देन विशेष्यांशे विधानस्य विशेषणांशेऽनुवादस्य चासंभवादनुवादप्रयोजनाभावाच्च न श्रीशब्दप्राप्तोपायत्वानुवादकत्वं शरणशब्दस्य संभवतीति—तदप्ययुक्तम्; उक्तरीत्या उभयत्र विधाय

कत्वोपपत्तेः, स्वरूपयोग्यताया एव शरणशब्दार्थत्वे विशेष्येऽपि नारायणशब्दप्राप्तानुवादकताया एवावश्यकत्वात्। अनुष्ठेयार्थप्रकाशकस्य मन्त्रस्य विधिप्राप्तानुवादकतया किञ्चिदर्थविधायकत्वासंभवाच्च ॥ यदपि शृणातीत्यादिव्युत्पत्त्यवगतोपायत्वं किं सद्वारकम्, [उत]अद्वारकमित्यपेक्षायां तत्रैव श्रीयते श्रयते शृणोति श्रावयतीति व्युत्पत्तिचतुष्टयेन पुरुषकारत्वप्रतीत्या तत्प्रतीतमुपायत्वमर्थसामर्थ्यलिङ्गेन सद्वारकमवगतमिति-तदप्यनुपपन्नम्; श्रीशब्दप्रतिपन्नोपायत्वस्य पुरुषकारत्वपर्यवसाने, "शृणाति निखिलान् दोषान् श्रीणाति च गुणैः" इति व्युत्पत्तिद्वयवैयर्थ्यप्रसङ्गात्। शृणोतीत्यादिव्युत्पत्तिचतुष्टयेनैव पुरुषकारत्वसिद्धेः। अतः पुरुषकारत्वमुपायत्वमुभयमपि श्रीशब्देन बोद्ध्यत इत्याश्रयणीयम्। पुरुषकारत्वोपायत्वयोरविरोधश्च प्रागेव दर्शितः। न हि श्रीशब्दश्रुत्या प्रतिपन्नमुपायत्वमर्थसामर्थ्यरूपेण लिङ्गेन बाधितुं शक्यम्, न वा तादृशं किञ्चिदर्थसामर्थ्यमस्ति। किञ्च श्रीशब्देन पुरुषकारत्वमात्राभिधानेऽपि शरणशब्देनोपायत्वबोधनमुपपद्येत। पुरुषकारत्वोपायत्वयोरविरोधस्योक्तत्वात् ॥ एतेन—किं शरणशब्देन रक्षकत्वमात्रं विधीयत इत्युच्यते, उत रक्षकत्वस्याद्वारकत्वम्, आहोस्वित् विशिष्टमित्यादिविकल्पेन दूषणमपि प्रत्युक्तम्; श्रीशब्दप्रतिपन्नसद्वारकरक्षकत्वातिरिक्तस्याद्वारकरक्षकत्वस्य शरणशब्दावगतस्य तदविरुद्धतया प्रागेवोपपादितस्य विधानोपपत्तेः ॥ यदपि लक्ष्म्याः सद्वारकोपायत्वमद्वारकोपायत्वञ्च विरुद्धम्। पूर्वमेव द्वारेणान्यथासिद्धत्वात्। न ह्येककार्यं प्रति एकस्यान्यथासिद्धत्वमनन्यथासिद्धत्वञ्च संभवतीति-तदप्ययुक्तम्; उभयदेये धनेऽन्यतरस्यानभिमुखत्वेऽभिमुखेनेतरेण तदभिमुखीकरणपूर्वकं तेन सह तादृशधनप्रदानस्य लोके दर्शनेन तद्वदेव देवीभगवद्भ्यामुभाभ्यां देये मोक्षेऽनभिमुखभगवदाभिमुख्यसंपादनेन चेतनसमाश्रयणनिष्पादिकया देव्या सह भगवतो मोक्षप्रदाने प्रमाणावगते विरोधगन्धाभावात्। यथा घटं प्रति दण्डादेर्द्रव्यत्वेन कारणत्वेऽन्यथासिद्धत्वं दण्डत्वेन तथात्वेऽनन्यथासिद्धत्वम्; तद्वत् देव्याः पुरुषकारत्वरूपोपायविरोधिनिवृत्तिसङ्कल्पवत्त्वेन मोक्षं प्रति अन्यथासिद्धत्वेपि मोक्षप्रदानसङ्कल्पवत्त्वेनानन्यथासिद्धत्वोपपत्तेः। अनन्यथासिद्धनियतपूर्ववृत्तितावच्छेदकधर्मवत्त्वरूपकारणत्वशरीरे हि यत्रैकस्यैव केनचिदन्यथासिद्धत्वं केनचिदनन्यथासिद्धत्वमभिमतं तत्र धर्म एवान्यथासिद्धिनिरूपकभिन्नत्वं निवेशनीयमिति निरूपितं **नैयायिकशिरोमणिभिः**। ततश्च देवीनिष्ठस्य भरस्वीकारापरपर्यायसङ्कल्पविशेषस्य भगवन्निष्ठस्येवान्यथासिद्धिनिरूपकभिन्नतया देव्या अद्वारकोपायत्वमप्युपपद्यत एव। अन्यथा अखिलनिर्माणनिपुणस्य भगवतः सर्वनिदानत्वेन सद्वारकोपायत्वसत्त्वादद्वारकोपायत्वानुपपत्तिप्रसङ्गः। यदपि-व्रीहिद्वारा शेषभूतप्रोक्षणस्य व्रीहितुल्यययागशेषत्वं हि न संभवतीति—तदपि प्रकृतानुपयुक्तम्; प्रोक्षणस्य तथात्वविरहेऽपि देशकालादेः साङ्गप्रधानाङ्गस्य सद्वारकाद्वारकशेषत्वदर्शनात्। व्यवस्थापितं हि देशकालादेः प्रयोगान्वयिनः साङ्गप्रधानाङ्गत्वं तृतीयेऽध्याये सप्तमे पादे। एतेन पुरुषकारे रक्षकत्वस्यावगतत्वादप्राप्तं ब्रह्मोपायत्वमेव शरणशब्दो बोधयतीत्यपास्तम्; पुरुषकारत्वातिरिक्तस्य देव्युपायत्वस्याप्यनवगतत्वादनुष्ठेयार्थप्रकाशकस्योक्तमन्त्रस्य विधायकत्वाभावस्योक्तत्वाच्च।

अत्रेदं बोद्ध्यम्—रूपवद्घटं प्रमेयं जानातीत्यादौ रूपादावपि प्रमेयत्वप्रकारकज्ञानविशेष्यत्वं प्रतीयत

इत्यानुभाविकम्। तादृशवाक्यजन्यशाब्दबोधानन्तरं रूपादौ प्रमेयत्वप्रकारकज्ञानविशेष्यत्वसंशयानुदयात्। "नागृहीतविशेषणा बुद्धिर्विशिष्टे तूपजायते" इति हि न्यायविदः। अत एव जन्माद्यधिकरणश्रुतप्रकाशिकायाम्, "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यत्र ब्रह्मपदोपस्थाप्यविशेषणे ज्ञानत्वान्वयोऽनुगृहीतः। तत्र रूपवद्घटमित्यत्र द्वितीयार्थे विशेष्यत्वे घटस्येव तद्विशेषणतापन्नरूपस्याप्याधेयतासंबन्धेन धर्मिपारतन्त्र्येणान्वयः। यद्यपि घटनिष्ठायां विशेष्यतायां रूपाधेयत्वं बाधितम्; तथापि स्ववृत्तितावच्छेदकीभूतप्रमेयत्वप्रकारतानिरूपितविशेष्यतात्वकत्वसंबन्धेनैव तदन्वयान्न दोषः। वस्तुतस्तु रूपवान् घटः प्रमेय इति ज्ञाने प्रमेयत्वे रूपस्य धर्मिपारतन्त्र्येणाधेयतासंबन्धेन प्रकारतया रूपवद्घटं प्रमेयं जानातीत्यादौ शाब्दबोधे तादृशप्रकारतामानस्यैव वक्तव्यतया द्वितीयार्थविशेष्यतायां रूपस्य नाधेयतासंबन्धेनान्वयः; किंतु प्रमेयत्वनिष्ठविशेष्यतानिरूपिताधेयतासंबन्धावच्छिन्नप्रकारत्वावच्छिन्नस्वनिष्ठावच्छेदकताकत्वसंबन्धेन। 'रूपवान् घटः प्रमेयः' इति ज्ञाने हि रूपनिष्ठयोः प्रमेयत्वनिष्ठविशेष्यतानिरूपिताधेयतासंबन्धावच्छिन्नप्रकारत्व-प्रमेयत्वप्रकारतानिरूपितविशेष्यतावच्छेदकत्वयोरवच्छेद्यावच्छेदकभावः। ननु अवच्छिन्नत्वसंबन्धेन रूपस्य द्वितीयार्थविशेष्यतायामन्वयमात्रेणैव शाब्दबोधस्यौत्सर्गिकं विशिष्टविषयकत्वमुपपद्यते। अत एव रूपवन्तं घटं द्रव्यं जानातीत्यादौ रूपस्यापि विशेषणत्वोपपत्तिः। रूपशून्यं रूपवत्तया आहार्यं जानातीत्यादौ ह्युपलक्षणस्य रूपशून्यत्वस्य नावच्छिन्नत्वसंबन्धेनान्वयः। ततश्च प्रमेयत्वनिष्ठविशेष्यतानिरूपिताधेयतासंबन्धावच्छिन्नप्रकारत्वावच्छिन्नस्वनिष्ठावच्छेदकताकत्वसंबन्धेनान्वयो नोपगन्तव्य इति चेन्न—देवदत्तो रूपवद्घटं प्रमेयं जानातीति वाक्यजन्यशाब्दबोधदशायां देवदत्तस्य रूपे प्रमेयत्वज्ञानमस्ति न वेति संशयानुदयेनोक्तसंबन्धेनैवान्वयस्याऽऽवश्यकत्वात्। रूपवद्घटं द्रव्यं जानातीत्यादौ तथान्वयासंभवादेव केवलावच्छिन्नत्वसंबन्धेनान्वयः। तथा चेदृशस्थल उक्तसंबन्धेनान्वय एवौत्सर्गिकः। तद्बाधे परं केवलावच्छिन्नत्वसंबन्धेन; तस्यापि बाध उपलक्षणत्वमेवेति न्यायविदां सुगमम्। इत्थंच पूर्वखण्डे द्वितीयार्थविशेष्यतायां देव्याः शरणत्वनिष्ठविशेष्यतानिरूपिताधेयतासंबन्धावच्छिन्नप्रकारत्वावच्छिन्नस्वनिष्ठावच्छेदकताकत्वसंबन्धेनैवान्वयस्य वाच्यतया प्रपत्तेर्देव्यामुपायत्वावगाहित्वसिद्ध्या तस्यास्तदभावे प्रपत्तेरतत्त्वज्ञानत्वप्रसङ्गेन देव्या उपायत्वमावश्यकम्। गुणविग्रहादेरपि विशेषणत्वेऽपि शरणशब्दार्थस्य भरस्वीकारापरपर्यायोपायान्तरस्थानापन्नत्वरूपोपायत्वस्य तत्रासंभवात् केवलावच्छिन्नत्वसंबन्धेनान्वयः। उत्तरखण्डे तु निरतिशयानुकूलत्वप्रकारतानिरूपितविशेष्यताशाल्यनुभवजनितकैङ्कर्यरूपचतुर्थ्यर्थैकदेशविशेष्यतायां देवीवत् गुणविग्रहादेरपि निरतिशयानुकूलत्वनिष्ठविशेष्यतानिरूपिताधेयतासंबन्धावच्छिन्नप्रकारत्वावच्छिन्नावच्छेदकताकत्वसंबन्धेनैवान्वयः। वस्तुतस्तु तत्र देव्या आधेयतासंबन्धेनैवान्वयः। निरतिशयानुकूलत्वेनोभयविभूतिविशिष्टशेषितत्त्वानुभवस्यैव प्रातिरूपतया मिथुननिष्ठविशेष्यताया एकत्वात्। पूर्वोत्तरखण्डयोरीदृशवैषम्यमभिप्रेत्यैव कैश्चित् पूर्वखण्डे उपलक्षणत्वं व्यवहृतम्। मुख्यमुपलक्षणत्वं तु न संभवत्येव। विशेषणत्वस्यौत्सर्गिकत्वात् प्रमाणसंप्रदायाभ्यां देव्या अप्युपायभावस्य श्रीमच्छ्रीतत्त्वसिद्धाञ्जनादौ व्यवस्थापितत्वाच्चेति।

एतेन पूर्वखण्डे उपायत्वे लक्ष्मीसामानाधिकरण्यमात्रबोधनादुपलक्षणत्वमेव। विशेषणत्वेऽपि

गुणादिवत् प्रपत्तिविशेष्यतावच्छेदकत्वमात्रमेव सिद्ध्यति । न तूपायत्वमित्यपास्तम्——उक्तरीत्या देव्या विशेषणत्ववैलक्षण्यस्योक्तत्वात् । यदपि पुरुषकारत्वेनान्वितत्वात् उपायत्वाभावेऽपि मोक्षप्रदत्वकर्मणि नैकरस्यहानिरिति—तदप्ययुक्तम्; "लक्ष्म्या सह हृषीकेशो देव्या कारुण्यरूपया । रक्षकस्सर्वसिद्धान्ते वेदान्तेषु च गीयते", "सहधर्मचरी तव" इत्यादिभिर्मोक्षप्रदत्व एव देव्या ऐकरस्यप्रतीत्या पुरुषकारत्वमात्रेण तन्निर्वाहासंभवात् । अत्र हि सहशब्देन देवीकर्तृकरक्षणस्य भगवत्कर्तृकरक्षणसमानकालिकत्वमवगम्यते । तथा हि; समभिव्याहृतक्रियाकाल एव सहशब्दार्थः । यथा पुत्रेण सहागच्छति इत्यत्रागमनकालः सहशब्देन बोध्यते । तदेकदेशागमने तृतीयार्थकर्तृत्वान्वयः । कालस्याधेयतया धात्वर्थगमनेऽन्वयः । तथा च पुत्रकर्तृकागमनसमानकालिकागमनकर्तेत्यन्वयबोधः । सपुत्र आगच्छतीति समासस्थले तु सहशब्दार्थकालस्य प्रातिपदिकार्थ एवान्वयः । तद्विशिष्टे क्रियान्वयबलात् क्रियायां तदवच्छिन्नत्वभानम् । न चैवं सति पुत्रेण सहागच्छति देवदत्त इत्याद्यसमासस्थलेऽपि देवदत्तादिरूपप्रातिपदिकार्थ एव सहशब्दार्थकालान्वयसंभवेनैकरूप्यसिद्धौ किमर्थं क्रियायां तदन्वयस्वीकार इति वाच्यम्; पुत्रेण सहागच्छति, पुत्रेण सहागमनमित्येतावन्मात्रेणापि पुत्रकर्तृकागमनसमानकालिकागमनप्रतीतेरानुभाविकतया पुत्रेण सह नागच्छति देवदत्त इत्यादौ नञर्थान्वयबोधान्यथानुपपत्त्या चासमासस्थले क्रियान्वयस्यैवोपगन्तव्यत्वात् । न हि नञ्घटितोक्तवाक्यस्य पुत्रकर्तृकागमनकालाभावविशिष्टे देवदत्ते आगमनकर्तृत्वबोधकता संभवति; पुत्रमात्रागमनदशायामपि सर्वथाऽऽगन्तृत्वशून्येऽपि देवदत्ते पुत्रेण सह नागच्छति देवदत्त इति प्रयोगसत्त्वात् । इत्थं च देव्या सह रक्षक इत्यनेन देवीकर्तृकरक्षणसमानकालिकरक्षणकर्तृत्वमेव प्रतीयते । ततश्च न पुरुषकारत्वमात्रेण निर्वाहः । तस्य भगवत्कर्तृकरक्षणप्राक्कालिकत्वात् । न च स्थूलकालमादाय पुरुषकारत्वस्यापि समानकालिकत्वमुपपद्यते; समभिव्याहृतक्रियाकाले सहशब्दार्थे क्षणत्वानिवेशात् । अत एव, "प्रासोष्ट शत्रुघ्नमुदारचेष(चेष्ट)मेका सुमित्रा सह लक्ष्मणेन" इत्याद्युपपत्तिरिति वाच्यम्–तथा सति वत्सरादिव्यवधानस्थलेऽपि पुत्रेण सहागच्छतीति प्रयोगप्रसङ्गात्। देवदत्तः पुत्रेण सह नागतः; किन्तु पूर्वमेवाऽऽगत इत्यादेरनुपपत्तिप्रसङ्गाच्च । अतः समभिव्याहृतक्रियाक्षण एव सहशब्दार्थः । तद्बाधे परं क्वचित् स्थूलकालेऽन्वयः; यथा, प्रासोष्टेत्यादिस्थले । प्रकृते च बाधकाभावात् प्रमाणान्तरानुगुण्याच्च रक्षणद्वयस्यैकक्षणावच्छिन्नत्वमेव प्रतीयते । न हि शब्दैकसमधिगम्येऽर्थे स्वेच्छया तर्केण वा बाधो वक्तुं शक्यः। न चैवं सति भारमनुद्वहत्स्वपि पुत्रेषु, "सहैव दशभिः पुत्रैर्भारं वहति गर्दभी" इत्यादेरनुपपत्तिप्रसङ्ग इति वाच्यम्; तत्र गच्छन्तीत्यध्याहारस्य व्युत्पत्तिवादे दर्शितत्वात् । न चैवमपि, "त्वष्टारं तूपलक्षयेत् पानात्" इति तार्तीयीकाधिकरणे, "अग्न इ पत्नीवाः सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहा" इति मन्त्रे सहशब्दसमानार्थकसजूश्शब्देन साहित्यमात्रप्रतीतिवचनं विरुध्यत इति वाच्यम्; सहविद्यमानार्थकस्य सजूश्शब्दस्य सहशब्देनात्यन्तसमानार्थकत्वविरहात् त्वष्टुः पानकर्तृत्वाप्रत्ययोपपत्तेः, पात्नीवतमिति तद्धितेन पत्नीवतो निरपेक्षस्यैव देवतात्वप्रतीत्या त्वष्टुः पानकर्तृत्वान्वयासंभवेन सहविद्यमानार्थकताया आवश्यकत्वाच्च । एवं शब्दशक्तिप्रकाशि-

कायाम्, "पत्न्या सहाग्निमादध्यात्" इत्यादौ पत्नीकर्तृकस्याऽऽधानस्यालीकत्वेन तत्समानकालीनत्वस्य प्रापयितुमशक्यत्वात् सामानाधिकरण्यपर्यवसितं सहभावमात्रं तत्र सहस्यार्थ इति-तदयुक्तम्; 'क्षौमे वसानावग्नीन् आदधीयाताम्' इत्येतेन पत्न्या अप्याधाने कर्तृत्वावगमात् षष्ठे लिङ्गविशेषाधिकरणे स्त्रिया अप्यधिकारव्यवस्थापनात्। द्वयाधानाधिकरणे क्षौमे वसानौ इत्यत्र जायापत्योरेव कर्तृत्वप्रतीतेर्व्यवस्थापितत्वाच्च। अस्तु वा कचित् मुख्यार्थबाधे सामानाधिकरण्यमात्रं लक्षणया सहशब्दार्थः। नैतावता मुख्यार्थबाधविरहस्थलेऽपि तत्परित्यागो युक्तः। न हि गंगायां घोष इत्यत्र गंगाशब्दस्य तीरे लक्षणाश्रयणमात्रेण गंगायां रामणीयकमित्यत्रापि तदाश्रयणम्। तत् सिद्धं लक्ष्म्या सह रक्षक इत्यत्रानेन देवीकर्तृकभगवत्कर्तृकरक्षणयोः समानकालिकत्वप्रतीत्या पुरुषकारत्वमात्रेण तन्निर्वाहासंभवेन भरस्वीकार-रक्षासंकल्पादिकमपि देव्या आश्रयणीयमिति देव्या उपायत्वसिद्धिर्निष्प्रत्यूहेवेति।

यदपि यथाकथञ्चिदन्वयमात्रेणैकरस्यानुपपादने जगत्कारणत्वादौ गत्यभावप्रसङ्ग इति— तदपि न; नरकादिसृष्टिव्यतिरिक्ते सर्वत्र भगवत्सृष्टिकर्तृत्वेनैवैकरस्यात्। नरकादिसृष्टौ परमज्ञातनिग्रहत्वविरोधेन न साक्षादन्वयः। इह तु भरस्वीकाररक्षासंकल्पाभ्युपगमे न तादृशो विरोधोऽस्ति, येन तदनङ्गीकारः स्यादिति। यदपि अश्लेषविषयश्रुतेरीश्वरविषये क्षमिष्यामीत्येवंरूपार्थकत्वं लक्ष्मीविषये क्षमायुक्तं करोमीत्येवंरूपार्थकत्वञ्च वाच्यम्। तत्र संभवति; विरम्यव्यापारप्रसङ्गात्। एवं विनाशश्रुतेरपि क्षान्तम्, क्षमस्वेत्येवंविधार्थद्वयबोधकत्वं विरम्यव्यापारं विना न संभवति। अतो देव्यां भरस्वीकाररक्षासंकल्पयोरसंभव इति—तदपि न युक्तम्। तथाहि—**तदधिगमाधिकरणश्रुतप्रकाशिकायाम्**, "तत्र विनाशो भगवतः पूर्वोत्पन्नकर्मफलदित्सानिवृत्तिः। अश्लेषश्चोत्तरकर्मफलदित्साप्रतिबन्धः। तौ च यथार्थोपहितौ। यथयं प्रक्रान्तमुपासनं समापयेत्, पूर्वोत्तरयोः कर्मणोः फलं न दास्यामीति संकल्परूपौ हि तौ। समाप्ते तु कर्मफलं नैव दास्यामीति संकल्पो विधूननश्रुत्यभिप्रेतः।" इत्यनुगृहीततया यथयमित्याद्युपदर्शितसंकल्पविशेषयोरेवाश्लेषविनाशश्रुतिबोध्यतया तयोर्देव्यामपि संभवात् न विरम्यव्यापारशंकावकाशः। देव्यामपि हि निषिद्धकर्मफलभूतनरकादिप्रदित्साभावेऽपि विहितकर्मफलभूतस्वर्गादिप्रदित्साऽस्त्येव। ततश्च कर्मफलं न दास्यामीति संकल्पो देव्यामपि निर्बाध इति। यद्यपि तत्रैवाधिकरणे, 'उपासनारम्भप्रीतः परमात्मा तत्समाप्तावुत्तरागसकस्यार्थं क्षमिष्यामीति संकल्पयति; समाप्तौ तु क्षान्तमिति" इत्यनुगृहीतम्; तथापि तत्र क्षमिष्यामीत्यस्य निवृत्तकोपो भविष्यामीति नार्थः—तथासति अश्लेषासंग्रहप्रसङ्गात्; कोपानुदय एव ह्यश्लेषः। नाप्यनुत्पन्नकोपो भविष्यामीति; विनाशासंग्रहप्रसङ्गात्। उभयार्थकत्वं तु सकृदुच्चरितन्यायादनुपपन्नम्। न च, "समाप्तौ क्षान्तमिति" इत्यनेन विनाशाभिधानात् नात्र संग्रहावश्यकतेति वाच्यम्; तदधिगमसूत्रोक्तविनाशस्य तेनानवबोधनात्। विधूननश्रुत्यभिप्रेतस्यैव तस्य तेन बोधनात्। "समाप्तौ" इति ह्युच्यते। "समाप्ते तु कर्मफलं नैव दास्यामीति संकल्पो विधूननश्रुत्यभिप्रेतः" इति हि **श्रुतप्रकाशिका**। एतेन तदधिगमसूत्रोक्तविनाशस्य क्षान्तमित्याकारकसंकल्परूपत्वाभिधानं परास्तम्; किञ्च सुकृतासंश्लेषविनाशासंग्रहः। अतोऽयं क्षमिष्यामीत्यत्राघशब्दस्य कर्मसामान्यपरत्वं

क्षमिष्यामीत्यस्य फलप्रदित्साविरहवान् भविष्यामीत्यर्थकत्वं चावश्यमाश्रयणीयमिति नोत्तरग्रन्थविरोधः। न वा देव्यां तादृशसंकल्पानुपपत्तिः। क्षान्तमित्यस्यापि अप्रदित्सितफलमभवदित्यर्थान् न देव्यां तदनुपपत्तिः। अन्यथा अघशब्दोक्तपुण्यविषये तदनन्वयप्रसङ्गात्। किञ्च भवदभिहितरीत्या भगवत्संकल्पदेवीसंकल्पयोर्भिन्नाकारत्वाभ्युपगमेऽपि न विरम्यव्यापारप्रसङ्गः। उत्तरकर्मफलदित्साप्रतिबन्धकत्वरूपाश्लेषत्व-पूर्वोत्पन्नकर्मफलदित्सानिवृत्तित्वरूपविनाशत्वाभ्यामेव तयोः शाब्दबोधे भानात्। नहि इह घटाः सन्तीत्यनेन नानाकारनानाद्रव्यमयघटानां घटत्वेन बोधने विरम्यव्यापारप्रसङ्गो भवति। अपि च विरम्यव्यापारप्रसङ्गेनाश्लेषविनाशश्रुतेर्देवीसंकल्पप्रतिपादकत्वासंभवेऽपि, 'लक्ष्म्या सह' इत्याद्युपदर्शितवचनेनैव देव्यामश्लेषविनाशरूपसंकल्पविशेषः सिद्ध्यतीति न भरस्वीकाररक्षासंकल्पयोरनुपपत्तिः। तेन हि वचनेन न भगवदुद्देशेन देवीकर्तृकरक्षणसमानकालकत्वविशिष्टरक्षणकर्तृत्वं विधीयते, विशिष्टविधिगौरवप्रसङ्गात्। किन्तु भगवत्कर्तृकरक्षणोद्देशेन देवीकर्तृकरक्षणसमानकालकत्वमात्रं विधीयते। हृषीकेशो रक्षक इति यत्, तत् लक्ष्म्या सह इति हि तत्र वचनव्यक्तिः। न हि विशेषणमात्रविधिसंभवे विशिष्टविध्याश्रयणं न्याय्यम्। अत एव हि, "विकृतौ शब्दपूर्वत्वात्" इति दाशमिकाधिकरणे—"एकादश प्रयाजान् यजति" इत्यादौ नैकादशत्वादिविशिष्टप्रयाजादिविधानम्; किन्तु प्रयाजाद्युद्देशेनैकादशत्वमात्रविधानमेवेति राद्धान्तितम्। इत्थंच प्रतिप्रधानगुणावृत्तिन्यायसिद्धात् उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयात् भगवत्कर्तृकेषु सर्वेष्वपि रक्षणेषु देवीकर्तृकरक्षणसमानकालिकत्वावगत्या अश्लेषविनाशसंकल्परूपभगवत्कर्तृकरक्षणस्यापि तादृशदेवीकर्तृकरक्षणसमानकालिकत्वसिद्धिर्निष्प्रत्यूहैव। अन्यच्च; अश्लेषविनाशश्रुतेरुपासकविषये उपासनारम्भकालिकभगवत्प्रीतिविशेषप्रतिपादनमात्रपरतायाः श्रुतप्रकाशिकायामनुगृहीततया देव्याम् तादृशाश्लेषविनाशश्रुतिसिद्धप्रीतिविशेषात्मकसंकल्पविशेषाभावेऽपि भरस्वीकाररक्षासंकल्पयोर्नानुपपत्तिः—त्रिगुणतिरस्करणीतिरोधाननिवृत्तिसंकल्परूपरक्षासंकल्पस्य तथाविधरक्षणभरस्वीकारस्य च तत्र संभवादिति न किञ्चिदेतत्। यदप्युपायत्वं पारतन्त्र्याननुगुणमिति। तदपि न; देव्युपायत्वस्य प्रमाणसिद्धस्य भगवदत्यन्ताभिमततया भगवदनभिमतव्यापाराराहित्यरूपपारतन्त्र्याविरोधित्वात्। [यदपि शरणागतिविद्यायां तादर्थ्यवाचकशब्दाभावेन केवलभरस्वीकारप्रार्थनया शेषत्वानुसन्धानं नास्तीति— तदप्यनुपपन्नम्; नारायणशब्देन, "नरसंबन्धिनो नाराः" इति व्युत्पत्तौ शेषत्वरूपसंबन्धस्यापि बोधनात्। नारशब्देन वात्सल्यस्वामित्वादीनाम्, "நிகரில் புகழாய்" इत्यादिनाऽनुसंहितानामनुसंधेयत्वाच्च। निवृत्तिधर्ममात्रे स्वरूपफलसमर्पणावश्यम्भावस्य प्रमाणसिद्धत्वेन शेषत्वानुसन्धानावश्यकत्वाच्च। इत्थंच मिथुनस्यैव शेषत्वप्रतिसंबन्धितया रक्षणभरसमर्पणोद्देश्यतायाः देव्यामप्यावश्यकतया तत्र भरस्वीकाररक्षासंकल्पद्वयमप्यावश्यकमिति।] यदपि पञ्चाङ्गभरसमर्पणं नात्र प्रतिपाद्यमिति—तदपि प्रागेव परिहृतम्। यदपि देव्या भक्तितुल्योपायत्वाङ्गीकारेण न तस्य शरणशब्दार्थत्वेन वेद्याकारत्वमिति—तदप्यनुपपन्नम्; अकिञ्चनविषये भक्तिस्थानापन्नस्य भगवतोऽपि भक्तितुल्योपायत्वमेव शरणशब्दार्थ इति तस्यैव वेद्यतया देव्यामविशेष त्। श्रीशब्देन पुरुषकारत्वानुसंधानेऽपि उपायत्वस्य तदविरोधः प्रागुपपादित इति न

तदनुसन्धानानुपपत्तिः । तदेवमुपायत्वविषये बाधकतया परोद्भावितानां दुस्तर्काणां दूषितत्वात्, "लक्ष्म्या सह हृषीकेशो देव्या कारुण्यरूपया । रक्षकः सर्वसिद्धान्ते वेदान्तेषु च गीयते ॥" "संसारार्णवतारिणीम्", "विमुक्तफलदायिनीम्" इत्यादिप्रमाणसिद्धं देव्या उपायत्वं निष्कण्टकमिति ॥

यदपि दशमेऽधिकारे प्रणवस्थमकारेण, "माऽमाने" इत्यादितो निष्पन्नेन देव्या अणुत्वबोधात् देव्या विभुत्वबोधकानां, "त्वयैतत् विष्णुना चाम्ब जगद्व्याप्तं चराचरम् ॥", "जगच्चराचरमिदं विश्वं व्याप्य व्यवस्थिता", "लक्ष्म्यास्समस्तश्चिदचित्प्रपञ्चो व्याप्यः तदीशस्य तु साऽपि सर्वम् । तथाऽपि साधारणमीशितृत्वं श्रीश्रीशयोर्द्वौ च सदैकशेषी ॥", "तथा लक्ष्म्याः स्वरूपञ्च वक्ष्ये शृणु समासतः । गुणतश्च स्वरूपेण व्याप्तिः साधारणी मता ॥ यथा मया जगद्व्याप्तं स्वरूपेण स्वभावतः । तया व्याप्तमिदं सर्वम् नियन्त्री च तथेश्वरी ॥ मया व्याप्ता तथा साऽपि तया व्याप्तोऽहमीश्वरः । मम तस्याश्च सेनेश वैलक्षण्यमिदं शृणु ॥ मच्छेषभूता सर्वेषामीश्वरी वल्लभा मम । तस्याश्च जगतश्चाहमीश्वरो वेदविश्रुतः ॥ त(अ)स्या ममापि (मम च) शेषं हि विभूतिरुभयात्मिका । इति श्रुतिशिरस्सिद्धं मच्छास्त्रेष्वपि मानद ॥ तथा भूमिश्च नीला च शेषभूते मते मम । तथाऽऽत्मनां तु सर्वेषां ज्ञानतो व्याप्तिरिष्यते ॥ स्वरूपतस्तु न तयोर्व्याप्तिः वेदान्तपारग" इत्यादिवचनानां विरोधाधिकरणन्यायेन बाध इति—

तदप्यत्यन्तमनुपपन्नम्; देव्याः प्रणवगतमकारप्रतिपाद्यतायाः एवासिद्धेः । न च मकारवाच्यत्वाभावे लक्ष्म्या भगवच्छेषत्वासिद्धिप्रसङ्ग इति वाच्यम्; "अस्येशाना जगतो विष्णुपत्नी" इत्यादिभिः तत्सिद्धेः । यत्तु समस्तशब्दमूलप्रणवे तदसिद्धौ सर्वत्र तदसिद्धिप्रसङ्ग इति—तदसंबद्धम्; प्रणवे तदसिद्धेः प्रमाणान्तरेण तत्सिद्ध्यविरोधित्वात् । अन्यथा प्रकृत्यादेर्मकारावाच्यस्य भगवच्छेषत्वासिद्धिप्रसङ्गात् । यदपि लक्ष्म्या अपि भगवच्छेषत्वस्य प्रसिद्धतया तदाश्रयासङ्कोचाय तस्या अपि मकारार्थानुप्रवेशावश्यम्भाव इत्यन्यैरुक्तम्—तदप्यनुपपन्नम्; विकल्पासहत्वात् । तथा हि; अत्र तदाश्रयासङ्कोच इत्यनेन किं विवक्षितम्; शेषत्वस्य मकारप्रतिपाद्यशब्दान्वयित्वं वा, उत मकारस्य शेषत्वाश्रययावदर्थप्रतिपादकत्वं वा । नाद्यः; देव्या मकाराप्रतिपाद्यत्वेऽपि शेषत्वस्य मकारप्रतिपाद्ययावदन्वयित्वोपपत्त्या तस्य देव्या मकारप्रतिपाद्यत्वासाधकत्वात् । न द्वितीयः; असंभवात् । न हि शेषत्वाश्रयप्रकृत्यादिप्रतिपादकत्वं मकारस्य संभवति । न च शेषत्वस्याधिकाश्रयसंबन्धसिद्ध्यर्थमेव मकारेण देवीप्रतिपादनमावश्यकमिति वाच्यम्; तथासति उक्तप्रयोजनसिद्ध्यर्थमेव प्रकृत्यादेरपि तत्प्रतिपाद्यतापत्तेः । अणुचेतनवाचिनो मकारस्य मध्यमपरिमाणाचेतनप्रकृत्यादिप्रतिपादकत्वं न संभवतीति तुल्यम् । मकारप्रतिपाद्यत्वसिद्ध्यर्थमेव देव्या अणुत्वं स्वीक्रियत इति चेत्—तर्हि प्रकृत्यादीनामणुचेतनत्वमपि तदर्थमेव स्वीक्रियताम् ॥ प्रमाणविरोधात् प्रकृत्यादीनामणुचेतनत्वस्वीकारो न संभवतीति चेत्—तत एव देव्या अणुत्वस्वीकारोऽपि न संभवतीति तुल्यम् । देव्या विभुत्वग्राहकप्रमाणानां दर्शितत्वात् । अतीन्द्रियविषये स्वेच्छया कस्यचिदर्थस्य स्वीकर्तुमशक्यत्वाच्च । किञ्च न हि विशेष्याधिकाश्रयसंबन्धसिद्ध्यर्थं विशेष्यवाचिपदस्य प्रवृत्तिनिमित्ताश्रयतया असिद्धवस्तुबोधकत्वमपि संभवति

तथासति नीलमुत्पलमित्यादौ नैल्यस्याधिकाश्रयसंबन्धसिद्धये उत्पलशब्दस्य पटादिष्वप्युत्पलत्वबोधकता-प्रसङ्गात्। किं बहुना—प्रणवे मकारोपस्थाप्यज्ञानस्वरूप.ज्ञानगुणकाणुत्वावच्छिन्नोद्देशेन चतुर्थ्युपस्थाप्य शेषत्वं विधीयत इत्यविवादम्। ततश्च—उद्देश्यतावच्छेदकाश्रयत्वेन प्रमाणान्तरसिद्धस्यैवोद्देश्यत्वसंभवात् देव्याः प्रमाणान्तरेणाणुत्वसिद्धावेव प्रणवस्थमकारेण तद्बोधनं संभवति; प्रमाणान्तरे च क्वचिदपि देव्या अणुत्वं नावगम्यते; प्रत्युतोपदर्शितप्रमाणगणेन विभुत्वमेवावगम्यत इति कथं मकारस्याणुत्वेन देवीबोधकत्वम्, कथन्तरां विभुत्वग्राहकोक्तप्रमाणगणबाधकत्वमिति सुधियो विभावयन्तु। किञ्च, "अस्या मम च शेषं हि विभूतिरुभयात्मिका", "उभयाधिष्ठानं चैकं शेषित्वम्" इत्यादिप्रमाणसंप्रदाय-बलेन शेषत्वप्रतिसंबन्धिनि अकारार्थे देवीवैशिष्ट्यस्याप्यनुसन्धेयतया विशेषणविशेष्योभयनिरूपित-शेषत्वरूप-विशिष्टशेषत्वस्य देव्यामसंभवेन कथं मकारार्थे देव्यनुप्रवेशसंभवः। अतो मकारस्य देवीप्रतिपादकत्वमत्यन्ताप्रामाणिकमसंप्रदायिकं च। न हि **पूर्वाचार्यश्रीसूक्तौ** क्वचिदपि मकारस्य देवीप्रतिपादकत्ववर्णनं दृश्यते। अपिच **पञ्चरात्रवचनानां विरोधाधिकरण**न्यायेन बाधवर्णनं **पञ्चरात्राधिकरण**विरुद्धम्। तत्र कात्स्न्र्येन **श्रीमत्पञ्चरात्र**प्रामाण्यस्य व्यवस्थापनात्। **श्रुतप्रकाशिकायां** तस्य वेदतुल्यप्रामाण्यानुग्रहाच्च। न हि परमकारुणिकभगवत्प्रणीते **श्रीमति पञ्चरात्रे** अप्रामाण्य-हेतुभूतभ्रमादिकं संभवति; येन श्रुतिविरोधे स्मृतीनामिव तदप्रामाण्यं स्यात्। अतः श्रुतिपञ्चरात्रयो-र्विरोधेऽपि, श्रुतिद्वयविरोध इव विषयव्यवस्थैव, न तु **विरोधाधिकरण**न्यायेन बाध इति स्पष्टं **श्रीमत्सङ्कल्पसूर्योदयादौ**। अन्यच्च—दर्शितवचनानां श्रुत्यपेक्षया दौर्बल्याङ्गीकारेऽपि तेषां विशिष्य देव्या विभुत्वग्राहकतया, मकारस्य सामान्यत एवाणुत्वग्राहकतया च श्रुतिप्रमेयात् सामान्यात स्मृतिप्रमेयस्य विशेषस्येह प्रबलतया न तद्बाधसंभवः; प्रमाणबलाबलापेक्षा प्रमेयबलाबलप्राबल्यस्य **शिष्टाकोपाधिकरणे** व्यवस्थापितत्वात्। अत एव, "यज्ञकर्मण्यजपन्यूङ्खसामसु" इति स्मृतिविहितस्य तानस्वरस्य श्रौतत्रैस्वर्यबाधकत्वमुपवर्णितं **नवमे**। तदेवं साधकाभावेन बाधकसद्भावेन च प्रणवस्थमकारस्य देवीबोधकत्वासंभवात्, संभवे वा **श्रीमत्पञ्चरात्र**वचनानां श्रुतितुल्यत्वेन तत्प्रमेयस्य विशेषरूपतया प्राबल्येन च देवीविभुत्ववचनानां मकारेण बाधितत्ववचनमत्यन्तानुपपन्नमेवेति सिद्धम्। एवं नारशब्दार्थान्तर्भावोऽपि देव्या नाणुत्वसाधकः; न वा जीवत्वसाधकः। "नरसंबन्धिनो नाराः" इति व्युत्पन्ननारशब्देनाणुत्वजीवत्वयोरबोधनात्। "नाराश्चिदिति सर्वपुंसां समूहः परिकीर्तितः" इति व्युत्पन्ननारशब्दार्थे तु न देव्या अन्तर्भावः—"ज्ञानादयो गुणा रूपं लक्ष्मीर्नित्यानपायिनी" इति भवदुदाहृतनारशब्दव्याख्यानागमवचनेनैव गुणविग्रहसंग्राहकनारशब्दार्थमध्य एव देव्यन्तर्भावप्रतीतेः।

यदपि—सत्यज्ञानादिवाक्यविरोधः; लक्ष्म्या अनन्तत्वे तस्य लक्षणत्वायोगादिति—तदप्ययुक्तम्; त्रिविधपरिच्छेदराहित्यस्यैवानन्तपदार्थत्वेन देव्यां तदभावेन लक्षणत्वोपपत्तेः. "वस्तुपरिच्छेदो ह्यपकर्षः" इति **श्रुतप्रकाशिकादौ** स्पष्टम्। तद्राहित्यं च न देव्यामस्ति; देवीस्वरूपस्य भगवच्छेषत्वेन तदपेक्षयाऽपकृष्टत्वात्। यदपि—स्वरूपव्याप्तेरन्तर्व्याप्तिरूपत्वं न संभवति; ईश्वरस्वरूपान्तर्व्याप्तेरभावात्

न चेष्टापत्तिः; मध्यमपरिमाणत्वेनानित्यतापत्तेः-इति। तदप्यत्यन्तमसंबद्धम्; देव्याः परस्वरूपेऽप्यन्तर्व्याप्ति सत्त्वात्—"यथा व्याप्ता तथा साऽपि तया व्याप्तोऽहमीश्वरः" इति हि भगवतैवोच्यते। तदन्तर्व्याप्तिर्हि तदधिकरणवृत्त्यभावाप्रतियोगित्वमेव; न तु तदन्तःप्रदेशवर्तित्वम्—निरवयवद्रव्येषु भगवतोऽप्यन्तर्व्याप्त्यभावप्रसङ्गात्। इत्थञ्च भगवत्स्वरूपाधिकरणेषु कृत्स्नेष्वपि प्रदेशेषु विभुरूपदेवीस्वरूपस्यापि सत्त्वात् भगवत्स्वरूपं प्रत्यप्यन्तर्व्याप्तिर्देवीस्वरूपस्योपपद्यत एव। एवं मध्यमपरिमाणत्वेनानित्यतापादनं सैद्धान्तिकपद्धतिविरुद्धम्; परविग्रहादीनां मध्यमपरिमाणानां सिद्धान्ते नित्यत्वाभ्युपगमात्। यदप्यसङ्कुचितज्ञातृत्वयुक्तस्य देवीस्वरूपस्येश्वरस्वरूपेऽन्तर्व्याप्त्यभ्युपगमे तन्नियन्तृत्वप्रसङ्ग इति—तदपि न युक्तम्; आपादकाभावात्। उक्तविधान्तर्व्याप्तियुक्तस्यासङ्कुचितज्ञातृत्वस्य नियन्तृत्वानापादकत्वात्। यदपि—बहिर्व्याप्तिमात्राभ्युपगमेऽणुत्वश्रुतिविरोधः संसारस्य तन्निग्रहफलत्वानुपपत्तिश्चेति—तदप्ययुक्तम्; बहिर्व्याप्तिमात्रस्य केनाप्यनभ्युपगमात्। देव्यणुत्वश्रुतेः शशशृङ्गायमाणताया उक्तत्वात्। संसारे देवीनिग्रहफलत्वस्य केनाप्यनुपगमेनेष्टापत्तेश्च। अज्ञातनिग्रहाया अप्युपायत्वसंभवः प्रागुपपादितः। यदपि सर्वान्तरात्मत्वे नारायणशब्दवाच्यता स्यादिति—तदप्ययुक्तम्; स्वेतरसर्वनियन्तृत्वविरहेण तदप्रसक्तेः। भगवत एव हि तत्। न देव्या भगवन्नियन्तृत्वमस्ति।

यदपि देव्या विभुत्वेन नियन्तृतया सर्वात्मकत्वे चेतनाचेतनवाचकसर्वशब्दवाच्यता स्यात्। सा च, "अर्थो विष्णुरियं वाणी" इति निषिद्धेति-तदपि न; इष्टापत्तेः। 'अर्थो विष्णुरियं वाणी' इत्यादेः, "देवतिर्यङ्मनुष्येषु पुन्नामा भगवान् हरिः। स्त्रीनाम्नी लक्ष्मीर्मैत्रेय नानयोर्विद्यते परम्" इतिवत् अभिमानविशेषप्रतिपादकत्वेन देव्याः सर्वशब्दवाच्यतानिषेधपरत्वविरहात्। सकलजगदुपादानत्वेन श्रुत्यादिप्रतिपन्नाया देव्याः स्वापृथक्सिद्धविशेषणवाचिशब्दैरपर्यवसानवृत्त्या प्रतिपाद्यत्वावश्यम्भावेन तन्निषेधासंभवात्। एतेन देव्या अकारवाच्यत्वप्रसंगो निरस्तः। स्वापृथक्सिद्धविशेषणवाचिशब्दैरेवापर्यवसानवृत्त्या वाच्यत्वस्यांगीकृतत्वात् भगवतो देव्यपृथक्सिद्धिविरहेण तद्वाच्यकारवाच्यत्वाप्रसक्तेः। अकारस्य भगवन्मात्रवाचकताग्राहकप्रमाणबलेन देवीव्यावृत्तस्य भगवन्मात्रनिष्ठस्यैव धर्मस्य तत्प्रवृत्तिनिमित्तताभ्युपगमाच्च।

यदपि देव्या नियन्तृत्वाभ्युपगमे पुरुषोत्तमत्वापत्तिरिति—तदपि न; विकल्पासहत्वात्। तथा सति किमत्र स्वेतरसर्वावधिकोत्कर्ष आपाद्यते, आहोस्वित् सर्वजीवावधिकोत्कर्षः, अथवा पुरुषोत्तमशब्दवाच्यत्वम्? नाद्यः; आपादकाभावात्। न हि भगवदतिरिक्तत्वे सत्यसर्वनियन्तृत्वं तदापादकम्; भगवदपेक्षयोत्कर्षासंपादकत्वात्। न द्वितीयः; इष्टापत्तेः। न तृतीयः। पुरुषोत्तमशब्दस्य भगवति रूढत्वेन देव्यां तद्वाच्यत्वाप्रसक्तेः। अनुगृहीतं हि जिज्ञासाधिकरणश्रुतप्रकाशिकायां पुरुषोत्तमशब्दस्य योगरूढत्वम्। रूढ्यर्थतावच्छेदकञ्च श्रीपतित्वम्, तद्व्यक्तित्वमेव वेत्यन्यदेतत्। यदपि—देव्या विभुत्वे तत्तत्स्थलबहिर्भावापत्तिः; एकदेशलक्षणसत्त्वेऽपि पूर्णलक्षणाभावात्। तस्यैव तत्सत्त्वनियामकत्वात्। शेषत्वादीश्वरत्वाभाववत् अणुत्वे तत्तद्बहिर्भावापत्तेरव्यवस्थाऽऽपादिति—तदप्यसमञ्जसम्; देव्या

ईश्वरकोटित्वेन तत्त्वत्रयबहिर्भावाप्रसक्तेः । विभुत्वे सति ज्ञातृत्वस्यैव तल्लक्षणत्वेन पूर्णलक्षणसत्त्वात् । एतेन भोक्तेत्यादिश्रुतिविरोधोऽपि परास्तः । देव्याः प्रेरितृकोटयन्तर्गतत्वेन तत्त्वत्रयविभागव्याघात-विरहात् । तदेवं देव्याः विभुत्वे बाधकलेशविरहात् तर्कमात्रेण प्रमाणबाधासंभवाच्च न्यायनिरपेक्ष-प्रागुपदर्शितस्पष्टप्रमाणावगतं देव्याः विभुत्वं निर्बाधमेव । अन्यथा देव्यां महिष्यन्तरवैलक्षण्यस्य बहुप्रमाणसिद्धस्यानुपपत्तिप्रसंगात् ।

यत्तु—ईश्वरस्वरूपव्यापकस्य लक्ष्मीधर्मभूतज्ञानस्य भगवत्स्वरूपस्येव तद्गतजगत्कारणसर्वान्तरत्वसर्व-नियन्तृत्वादिसमस्तवैभवहेतुत्वात् व्यापकस्वरूपस्य यत् कार्यम्, तत् सर्वमनेन निर्वाह्यत इति तदेव लक्ष्मी-स्वरूपत्वेनोपचर्यते । यथा अजडत्वादिगुणसाम्यात् शुद्धसत्त्वे ज्ञानत्वव्यपदेशः, तद्वत् । तथा चेदृशवैलक्षण्यं महिष्यन्तरे नास्तीति—तन्न; कारणत्वनियन्तृत्वादिहेतुतायाः भगवद्ज्ञानशक्तिसाधारणतया तस्य स्वरूपत्वो-पचारनिमित्तत्वासंभवात् । पूर्वोदाहृतविष्वक्सेनसंहितावचने स्वरूपगतविभुत्वेन महिष्यन्तरवैलक्षण्यस्य स्पष्टमुक्तत्वेन तदन्यथाकरणस्याशक्यत्वाच्च । शुद्धसत्त्वे ज्ञानत्वव्यपदेशस्य मुख्यतया दृष्टान्तासामञ्जस्याच्च । न ह्यजडस्य स्वयम्प्रकाशस्य ज्ञानत्वं नास्तीति शक्यं वक्तुम्; धर्मिस्वरूपेऽपि तदभावप्रसंगात् ।

यदपि—देव्या जगन्नियन्तृत्वाभ्युपगमे, 'एकमेवाद्वितीयम्', 'ईशते देव एकः' इत्यादिविरोधः । अत्र हि धर्मिवाचिपदस्य दिव्यदम्पतिपरत्वे द्विवचनान्तता प्रसज्यते । अतो भगवन्मात्रपरतया अद्वितीयशब्देन एकशब्देन च भगवदतिरिक्ते नियन्तृत्वं निषिध्यत इति—तदपि न; अद्वितीयैक-शब्दयोः स्वतन्त्रनियन्त्रन्तरनिषेधपरत्वात् । देव्याः परतन्त्रतया निषेधागोचरत्वात् । "यथा चोलनृपः सम्राडद्वितीयोऽस्ति भूतले । इति तत्तुल्यनृपतिनिवारणपरं वचः" इत्यादिकमिहानुसंधेयम् । किञ्च, 'ईश्वरीं सर्वभूतानाम्', 'अस्येशाना जगतः' इत्यादिश्रुत्या देव्या जगन्नियन्तृत्वस्य विहिततया सामान्यनिषेधस्य न तद्गोचरत्वसंभवः । उत्सर्गापवादन्यायेन सामान्यनिषेधस्य विहितव्यतिरिक्तविषयत्वा-वश्यम्भावात् । यदपि—देव्याः सर्वजगत्कारणत्वाभ्युपगमे कारणवाचकाकारवाच्यत्वापत्तिरिति—तदपि न; सर्वकार्यनिरूपितफलोपधानात्मककारणत्वस्यैवाकारवाच्यतावच्छेदकत्वात् । न हि देव्यां नारकिजन्मस्थित्योर्व्यष्टिसंहारे च फलोपधानमस्ति । येन कार्यत्वव्यापकजन्यतानिरूपितफलोपधानरूप-जनकत्वरूपमकारवाच्यतावच्छेदकं भवेत् । यदपि जगज्जन्मादेरीश्वरलक्षणत्वाभावापत्तिरिति । तदप्य-युक्तम्; देव्या ईश्वरकोटित्वस्योक्तत्वेन स्वरूपयोग्यतारूपजनकतासंबन्धेन जगज्जन्मादेरीश्वरलक्षणत्वोपपत्तेः। प्रपञ्चितं चेदमन्यत्र । तदेवं देव्या विभुत्वकारणत्वनियन्तृत्वादीनि निर्बाधान्येवेति सिद्धम् ।

एतेन—विभुत्ववचनानामीश्वरस्वरूपानुबन्धित्वेन सकलवस्तुगतधर्मभूतज्ञानपरत्वम्, कारणत्वादि-पराणामन्तरङ्गसहकारिपरत्वम्, नियन्तृत्ववचनानां तदुपयोगिज्ञानशक्त्याद्युद्बोधकत्वञ्चोचितम् । श्रुति-विरोधे स्मृतीनामेव सङ्कोचस्येष्टत्वात्—इत्यपास्तम्; श्रुतिविरोधविरहस्य, सत्यपि विरोधे सङ्कोचासंभवस्य च सम्यगुपपादितत्वात् । प्रागुपदर्शितविभुत्वबोधकविष्वक्सेनसंहितावचने, भवद्भिरपि पूर्वपक्षोपपादक तयोपन्यस्ते स्वरूपव्याप्तेः कण्ठोक्ततया ज्ञानव्याप्तिपरतया नयनासंभवाच्च ।

यदपि—"क्षरात्मानावीशते देव एकः" इतीश्वरान्तरनिषेधकण्ठोक्त्या, "ईश्वरी सर्वभूतानाम्" इत्यादिश्रुतेरसङ्कुचितसर्वनियमनप्रतिपादकत्वं न संभवति। अतो बाह्यनियमनपरैव सा श्रुतिः, "अस्येशाना जगतो विष्णुपत्नी" इत्यत्र नियमनस्य पत्नीत्वोपाधिकत्वश्रवणात्–इति। तदप्यसमञ्जसम्; तदभाववद्वृत्तित्वरूपबहिर्व्याप्तिविशिष्टस्य तदधिकरणवृत्त्यभावाप्रतियोगित्वरूपान्तर्व्याप्त्यभावविशिष्टस्य वा नियन्तृत्वस्यैव बाह्यनियमनरूपतया तस्य ताद्रूप्येणेश्वरशब्दार्थत्वे लक्षणाङ्गीकारापत्तेः। नियन्तृत्वमात्रमेव हीश्वरशब्दमुख्यार्थः। मुख्यार्थबाधविरहे लक्षणाङ्गीकारश्च निषादस्थपत्यधिकरणविरुद्धः। सामान्यनिषेधेन विशेषविधिसङ्कोचश्चोत्सर्गापवादन्यायविरुद्धः। विशेषविधिबलेन सामान्यनिषेधसङ्कोचो हि तेन न्यायेन व्यवस्थाप्यते। यथा, "न हिंस्यात्" इति निषेधस्य, "अग्नीषोमीयं पशुमालभेत" इति विहितहिंसाव्यतिरिक्तविषयतया सङ्कोचो यागीयपशुविशसनस्य हिंसात्वपक्षे। यथा च निर्गुणश्रुतेर्विहितकल्याणगुणव्यतिरिक्तविषयतया संकोचः सिद्धान्ते। अतः, "एकमेवाद्वितीयम्", "ईशते देव एकः" इत्यादेरेव सामान्यतो भगवदतिरिक्तनियन्तृनिषेधकस्य नियन्तृतया विहितदेवीव्यतिरिक्तविषयतया सङ्कोच उत्सर्गापवादन्यायेनाश्रयणीयः। न तु विशेषविधिरूपायाः, 'ईश्वरी सर्वभूतानाम्' इत्यादिश्रुतेः लाक्षणिकत्वाश्रयणं युक्तमिति। यदि च—"एकमेवाद्वितीयम्", "ईशते देव एकः" इत्यादिभिर्भगवद्व्यतिरिक्ते अन्तर्व्याप्तिविशिष्टनियन्तृत्वमेव निषिद्ध्यते। ततश्च, 'ईश्वरी सर्वभूतानाम्" इत्यादिभिर्देव्यां विधीयमानं नियन्तृत्वमन्तर्व्याप्त्यभावविशिष्टनियन्तृत्वरूपे बाह्यनियमने पर्यवस्यति; विशेष्यवति विशिष्टाभावस्य विशेषणाभावपर्यवसानेनान्तर्व्याप्त्यभावावश्यम्भावादित्युच्यते—तदा देव्या विभुत्वग्राहकप्रागुपदर्शितप्रमाणविरोधः; तैरन्तर्व्याप्तिबहिर्व्याप्त्युभयबोधनात्। सर्वद्रव्यसंयोगित्वं हि विभुत्वम्। तच्चान्तर्व्याप्तिबहिर्व्याप्ती अन्तरा नोपपद्यते। अतः प्रमाणाविरोधाय, "एकमेवाद्वितीयम्", "ईशते देव एकः" इत्यादिभिर्भगवदतिरिक्ते स्वातन्त्र्यविशिष्टनियन्तृत्वमेव निषिद्ध्यत इत्याश्रयणीयम्। विभुत्वग्राहकप्रमाणानां श्रुत्यपेक्षया दौर्बल्याङ्गीकारेऽपि श्रुतिमुख्यार्थस्य तेनाविरोधान्न तद्बाधशङ्कावकाशः। "एकमेवाद्वितीयम्", "ईशते देव एकः" इत्यादिभिर्हि भगवदतिरिक्ते नियन्तृत्वसामान्याभावो बोध्यते। तस्य च न देवीविभुत्वग्राहकप्रमाणैर्विरोधः। तस्याः नियन्तृत्वाभावेऽपि कालादिवत् विभुत्वोपपत्तेः। किन्तु देव्या नियन्तृत्वग्राहकैः, "ईश्वरी सर्वभूतानाम्" इत्यादिभिरेव। तत्र चेश्वरीमित्यादेर्विशेषविषयतया उत्सर्गापवादन्यायेन प्राबल्यात्, "एकमेवाद्वितीयम्", "ईशते देव एकः" इत्यादेरेव सामान्यविषयस्य सङ्कोचः समाश्रयणीय इति स्थिते, अन्तर्व्याप्तिविशिष्टनियन्त्रन्तरनिषेधपरतया स्वातन्त्र्यविशिष्टनियन्त्रन्तरनिषेधपरतया वा सङ्कोच इति विशये, देवीविभुत्वग्राहकप्रमाणाविरोधाय स्वातन्त्र्यविशिष्टनियन्त्रन्तरनिषेधपरतयैव सङ्कोच आश्रयणीयः। प्रबलप्रमाणस्यापि दुर्बलप्रमाणविरुद्धाविरुद्धार्थद्वयसंभवे अविरुद्धार्थस्यैवाऽऽश्रयणीयत्वात्। अत एव, "एकधा ब्रह्मण उपहरति" इत्यत्र सकृत्त्वसहत्वसाधारणस्य एकधाशब्दस्य पक्षान्तरप्रापकचोदकाबाधाय सहत्वार्थकत्वमेवाश्रयणीयमिति व्यवस्थापितं दाशमिकाधिकरणे। शक्यार्थविषय एव तथा चेत्, कैमुतिकन्याय एव हि लक्ष्यार्थविषये। अतो देव्या विभुत्वस्य नियन्तृत्वस्य

वा न कश्चित् क्षुद्रोपद्रवः । नियन्तृत्वस्य विष्णुपत्नीत्वोपाधिकत्वश्रवणमात्रेण[1] विभुत्वाबाधात् । तथाचान्तर्व्याप्तिविशिष्टनियन्तृत्वसिद्ध्या देव्याः सर्वशरीरकत्वसिद्ध्या जगदुपादानत्वादिसिद्धिः । अनुगृहीतं हि भट्टारकैः, "अनन्याधीनकल्याणमन्यमङ्गळकारणम् । जगन्निदानमद्वन्द्वं द्वन्द्वं वन्दामहे महः" इति । विस्तरस्तु श्रीमच्छ्रीतत्त्वसिद्धाञ्जनेऽनुसन्धेयः ।

यदपि विभुत्वग्राहकवचनानामणुत्वश्रुतिविरोधकथनम्, तदप्यणुत्वश्रुतेरेव शशशृङ्गायमाणतया परिहृतम् । तत्त्वान्तरत्वापत्तिरपीश्वरकोटयन्तर्भावात् परिहृता । न चैवं सति देव्याः निग्रहकर्तृत्वप्रसङ्ग इति वाच्यम्; विभुत्वनियन्तृत्वयोः प्रत्येकम्, मिळितयोर्वा तदप्रयोजकत्वात् । अज्ञातनिग्रहत्वग्राहकप्रमाणविरोधाच्च । अन्तर्नियमने स्त्रीत्वाभावप्रसङ्ग इति त्वत्यन्तमसङ्गतम्; अन्तर्नियमनस्य स्त्रीत्वाविरोधित्वात् । स्त्रीत्वाश्रयविग्रहविशेषवत्त्वं हि स्त्रीत्वम् । तच्चान्तर्नियमनवत्त्वेपि भगवतो मोहिन्यवतारविग्रहवत् न विरुद्ध्यत इति । यदपि—चेतनाचेतनयोरन्तर्बहिश्च प्रत्येकं परिसमाप्य वर्तमाने ब्रह्मस्वरूपे अणुत्वपरिमाणं लक्ष्मीस्वरूपमपि तत्र तत्र वर्तत इति—तदप्ययुक्तम्; विचारासहत्वात् । तथा हि—किमिदं प्रत्येकं परिसमाप्य वर्तमानत्वम्? न तावत् तदितरावृत्तित्वे सति तद्वृत्तित्वम् । विभुरूपे ब्रह्मणि तदसंभवात् । बहिर्व्याप्तिविरोधाच्च । अघटितघटनासामर्थ्येन तन्निर्वाहस्तु विरुद्धसमुच्चयाभ्युपगन्तृपरमतप्रक्रियैव । सा च भाष्यादिषु सम्यग्दूषिता । नापि तत्तद्वृत्तित्वमात्रम्; परिसमाप्येत्यस्य नैरर्थक्यात् । प्रत्येकं तत्र तत्र वर्तमान इत्यनेनैव बहुत्वाद्यनेकपर्याप्तधर्मव्यावृत्तस्यैकमात्रवृत्तिधर्मावच्छिन्ननिरूपकताकवृत्तित्वस्य लाभात् । एवं तादृशब्रह्मस्वरूपे अणुरूपस्य देवीस्वरूपस्य किमिदं तत्रतत्र वर्तमानत्वम्? किं तत्तद्वस्तुवृत्तित्वविशिष्टे ब्रह्मणि वर्तमानत्वं तत्तद्वस्तुवृत्तित्वावच्छिन्नब्रह्मनिष्ठाधिकरणतानिरूपकत्वपर्यवसितम्, किं वा तत्तद्वस्तुवृत्तित्वोपलक्षितब्रह्मस्वरूपवृत्तित्वम् । नाद्यः; अणुरूपस्य देवीस्वरूपस्य ब्रह्मस्वरूपे घटाद्येकवस्तुवृत्तित्वावच्छेदेन सत्त्वे वस्त्वन्तरवृत्तित्वावच्छेदेन सत्त्वासंभवात् । अघटितघटनासामर्थ्येन निर्वाहस्तु न संभवतीत्युक्तप्रायम् । न द्वितीयः; जीवस्वरूपसाधारण्यात् भूम्यादिवैलक्षण्यानिर्वाहात् । अतो न किञ्चिदेतदिति ।

एतेन—'निरूपकत्वेन स्वरूपान्तर्गतत्वात् स्वरूपगतं कारणत्वादिकमपि लक्ष्मीस्वरूपगुण इत्युच्यते । निरूपकत्वं च नीळादीनां नास्तीति तद्व्यावृत्तिर्विभुत्वादिना प्रतिपाद्यते । निरूपकत्वं च, विग्रहस्य श्रीवत्सवत् अणुत्वेऽप्युपपद्यते । "यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम ।" इत्याद्यपि निरूप्यस्य सर्ववस्तुषु परिसमाप्य विद्यमानत्वादणुत्वेन तत्र तत्र विद्यमानत्वाभिप्रायं विग्रहव्याप्त्यभिप्रायं वा भवेत्' इत्यप्यपास्तम्; देवीविभुत्वग्राहकप्रमाणानां मुख्यार्थबाधस्य विना कारणमसंभवात् । अणुत्वग्राहकप्रमाणाभावस्य दर्शितत्वाच्च । तदेवं परोपदर्शितकुतर्काणामुन्मूलितत्वात् पूर्वोपदर्शितैः प्रमाणैर्देव्याः विभुत्वनियन्तृत्वादिसिद्धिर्निष्प्रत्यूहैवेत्यलम् ॥

---

1 मात्रेणेति । अत्र भूम्यादिविलक्षणायां लक्ष्म्यां पत्नीत्वप्रयुक्तनियन्तृत्वं न विवक्षितम्, किं तु स्वाभाविकमित्याशयोऽपि निगूढः ।

एतेन भूम्यादेरपि तदंशत्ववचनं निर्व्यूढम्। अनुप्रवेशादेव हि अनन्तविष्वक्सेनादेरपि सङ्कर्षणाद्यात्मकत्वमुच्यते। यथाविनियोगमुपासनावान्तरभेदात् ब्रह्मणः पत्नीपरिजनादिसाहित्य-राहित्यविकल्पः, न पुनर्भ्रान्तत्वशुद्धत्वकार्यकारणावस्थादिविषयत्वात्; प्रागेव तत्र दूषणाभिधानात्। व्यूहविभवादिषु हेतुकार्यभावं सर्वं विग्रहविषयं वक्ष्यामः। तत्तद्व्यूहाद्यनुरूपाश्च लक्ष्म्यादि-व्यूहादयः शास्त्रसिद्धाः। व्यूहादिषु मिथोऽङ्गाङ्गिभावादिकं स्वसंकल्पमात्रायत्तम्, ईश्वरस्य सर्वत्र, एकत्वात्। यत्तु यन्त्रविशेषादिषु लक्ष्मीसुदर्शनादीन् प्रति वासुदेवादेरङ्गत्वं क्वचित् क्वचित्

---

**एतेन भूम्यादेरपी**ति। लक्ष्म्या अपि ईश्वरकोटिनिविष्टत्वेन सर्वशरीरकतया जीवकोट्यनु-प्रविष्टभूम्यादेरपि तच्छरीरत्वात् लक्ष्म्यंशत्वमेव; न तु तदैक्यमिति मन्तव्यमिति भावः। एतदेवा-भिप्रेत्य, "अभिरत्वं स्तनबाहुदृष्टिभिरिव" इत्युक्तम्। **उच्यत** इति। ततश्च **विष्वक्सेनादेः संकर्षणा-द्यात्मकत्व**तुल्या भूम्यादेर्लक्ष्म्यंशत्वोक्तिरिति भावः। **पत्नीपरिजनादिसाहित्य**प्रतिपादकागमस्य तद्राहित्यप्रतिपादकागमेन विरोधमाशङ्कयाह **यथाविनियोग**मिति। **न पुनर्भ्रान्तत्वे**ति। भ्रान्तत्व-दशायां पत्नीपरिजनादिसाहित्यं शुद्धदशायां राहित्यमिति वा, कार्यावस्थायां पत्नीपरि-जनादिसाहित्यं कारणावस्थायां राहित्यमिति वा न वक्तव्यमिति भावः। **विग्रहविषयं वक्ष्याम** इति। नित्यविभूतिपरिच्छेदे इति शेषः। ततश्च वासुदेवात् सङ्कर्षणस्य, संकर्षणात् प्रद्युम्नस्य, प्रद्युम्नात् अनिरुद्धस्य चोत्पत्तिश्रवणात् संकर्षणादयो वासुदेवाद्भिद्यन्त इति न शङ्कनीयमिति भावः। **शास्त्रसिद्धा** इति। "राघवत्वेऽभवत् सीता,... अन्येषु चावतारेषु" इत्यादिशास्त्रसिद्धा इत्यर्थः। ननु व्यूहादीनामभेदे तेषां **मिथोऽङ्गाङ्गिभावः**, क्वचित् केषांचिद्गुणानामाविर्भावः, केषाञ्चिद्गुणानां तिरोभावः इत्यादिकं कथं घटेतेत्यत आह **व्यूहादिष्वि**ति। **यन्त्रे**ति। "वक्ष्ये सौदर्शनं मन्त्रम्"

---

एतेनेति। देव्याः सर्वव्यापकतया सर्वानुप्रवेशवचनेनेत्यर्थः। **अनुप्रवेशादेवे**ति। न त्वैक्यादिति भावः। **यथाविनियोग**मिति। पत्नीपरिजनादिसाहित्यविषयकत्वतदविषयत्वग्राहकप्रमाणानुरोधेनेत्यर्थः। **राहित्यविकल्प** इति। तथा च तद्राहित्यप्रतिपादकप्रमाणानां ब्रह्मोपासनविशेषस्य पत्नीपरिजनादि-साहित्यागोचरत्वे तात्पर्यात् न तद्विरोध इति भावः। अविरोधनिर्वाहान्तरं दूषयति **न पुन**रिति। **भ्रान्त-त्वे**ति। भ्रान्तत्वदशायां पत्नीपरिजनादिसाहित्यं शुद्धत्वदशायां तद्राहित्यमिति वा, कार्यावस्थायां पत्न्यादि-साहित्यं कारणावस्थायां तद्राहित्यमिति वा निर्वाहो न युक्त इत्यर्थः। **प्रागेव तत्र दूषणाभिधाना**दिति। ब्रह्माज्ञानपक्षस्य ब्रह्मस्वरूपपरिणामपक्षस्य औपाधिकभेदपक्षस्य च निरस्तत्वादिति भावः। ननु वासुदेवात् संकर्षणस्य सङ्कर्षणात् प्रद्युम्नस्य प्रद्युम्नादनिरुद्धस्य चोत्पत्तिश्रवणात् सङ्कर्षणादीनां वासुदेवाद्भिन्नत्वावश्यम्भावात् तेषामीश्वरस्वरूपत्वानुपपत्त्याऽनुप्रवेशासंभवेन कथमनन्तविष्वक्सेनादेरनुप्रवेशकृतसङ्कर्षणात्मकत्वोक्तिरित्या-शङ्कयाह **व्यूहे**ति। **विग्रहविषय**मिति। न तु विग्रहविशिष्टात्मविषयमिति सङ्कर्षणादीनामीश्वरत्वे न विरोध इति भावः। **वक्ष्याम** इति। नित्यविभूतिपरिच्छेदे इति भावः। ननु व्यूहादीनामीश्वरस्वरूपत्वे तेषां मिथोऽङ्गाङ्गिभावः, क्वचित् केषांचित् गुणानामाविर्भावः, क्वचित् केषाञ्चित् तिरोभाव इत्यादिकं कथमुप-पद्यतेत्यत आह **व्यूहादिष्वि**ति। ननु लक्ष्मीयन्त्रे वासुदेवस्य, सुदर्शनयन्त्रे नृसिंहस्य चाङ्गत्वेन प्रतिपादनात्

प्रतिपाद्यते, तत्र यथावस्थितब्रह्मात्मकत्वानुसन्धाने स्वात्मानं प्रत्येव स्वस्यैच्छिकमङ्गत्वमिति न कश्चिद्विरोधः। ब्रह्मदृष्ट्याऽनुसन्धाने तु तत्तत्फलविशेषार्थं तदङ्गकत्वेन प्राधान्यदृष्टिरिति वक्ष्यन्तोदितदृष्टिविध्यन्तरेष्विव न तत्त्वव्यवस्थाभङ्गः। न चैवमागमान्तरप्रतिपाद्यतत्त्वेष्वपि प्रसङ्गः; तेषामागमानामप्रामाण्यस्य वक्ष्यमाणत्वात्। पञ्चरात्रप्रामाण्यस्य आगमप्रामाण्ये, भाष्ये च श्रीपञ्चरात्राधिकरणे प्रपञ्चितत्वात्, अस्माभिश्च न्यायपरिशुद्धावुक्तत्वात्। न च यन्त्रादय एव सामान्यतो निर्मूला इति वाच्यम्; तापनीयोपनिषदादिषु तद्दर्शनात्, प्रत्यक्षतः फलोपलम्भाच्च। अतस्तत्त्ववैपरीत्यम्, तदुक्तिमूलशास्त्राप्रामाण्यं वा न शङ्कनीयम्।

---

इत्युपक्षिप्य, "स्थापयेत् सर्वमध्ये तु चक्रराजं सुविग्रहम्। अष्टदिक्षु नृसिंहञ्च स्थापयेत् सुसमाहितः॥" इत्यादिप्रतिपादनादिति भावः। **यथावस्थितब्रह्मात्मकत्वानुसन्धान इति।** लक्ष्मी-सुदर्शनात्मकब्रह्म प्रति वासुदेवात्मकब्रह्मण ऐच्छिकमङ्गत्वमस्तीति भावः। **ब्रह्मदृष्ट्याऽनुसन्धाने त्विति।** दृष्टिविधौ वस्तुसद्भावस्यानपेक्षितत्वादिति भावः। **दृष्टिविध्यन्तरेष्विति।** "मनो ब्रह्मेत्युपासीत" इत्यादिदृष्टिविधिष्विवेत्यर्थः। **न चैवमागमान्तरेति।** आगमान्तरप्रतिपाद्ये भगवतो रुद्रादिदेवतान्तरशेषत्वेऽप्यैच्छिकत्वादिनिर्वाह प्रसङ्गो न सम्भवतीति भावः। **अप्रामाण्यस्य वक्ष्यमाणत्वादिति।** यत्र प्रामाण्यं [सं?]प्रतिपन्नम्, तत्प्रतिपाद्यार्थे अविरोधस्य नेतव्यतया तत्र क्लिष्टगत्याश्रवणेन निर्वाहः कर्तव्यः। न त्वसंप्रतिपन्नप्रमाणभावप्रतिपादितेष्वपि कयाचिद् वृत्त्या अविरोधनिर्वाहः। इतरथा बौद्धागमाद्युक्तेष्वप्यविरोधनिर्वाहप्रसङ्ग इति भावः। **तत्त्ववैपरीत्यं तदुक्तिमूलशास्त्राप्रामाण्यं वेति।** सुदर्शनादेः पारम्यम्, भगवतोऽपारम्यमिति वा, परावरभाववैपरीत्योक्तिनिबन्धनं यन्त्रशास्त्राप्रामाण्यमिति वा न **शङ्कनीयमित्यर्थः॥**

इति श्रीमत्तातयार्यचरणनलिनचञ्चरीकस्य वात्स्यानन्तार्यसेवासमधिगतशारीरकमीमांसाभाष्यहृदयस्य परकालमुनिकृपालब्धपारमहंस्यस्य श्रीरङ्गरामानुजमुनेः कृतिषु न्यायसिद्धाञ्जनव्याख्यायां ईश्वरपरिच्छेदस्तृतीयः

---

तत्त्वव्यवस्थाभङ्ग इत्याशङ्क्याह **यत्त्विति। यथावस्थितब्रह्मात्मकत्वानुसन्धान इति।** लक्ष्मीसुदर्शनादीनामित्यादिः। ब्रह्मशब्दसमानाधिकरणतया लक्ष्मी-सुदर्शनादिबोधकपदघटितवाक्येषु लक्ष्मी-सुदर्शनादिपदानां तत्तच्छरीरकपरमात्मपरतयाऽनुसन्धान इति तु फलितोऽर्थः। **स्वात्मानं प्रत्येवेति।** लक्ष्मी-सुदर्शनादिशरीरकपरमात्मन एव तत्र प्रधानदेवतात्वादिति भावः। **ब्रह्मदृष्ट्यानुसन्धानेत्विति।** उक्तवाक्यस्य ब्रह्मदृष्टिपरत्वानुसन्धान इत्यर्थः। **तदङ्गकत्वेनेति।** वासुदेवाद्यङ्गकत्वेनेत्यर्थः। अभेदस्तृतीयार्थः। यन्त्रे वासुदेवाद्यङ्गकत्वरूपप्राधान्यदृष्टिरित्यर्थः। **दृष्टिविध्यन्तरेष्विति।** "नाम ब्रह्मेत्युपासीत" इत्यादिष्विवेत्यर्थः। **आगमान्तरेति।** शैवाद्यागमेष्वर्थः। तत्र प्रतिपाद्यमानस्य भगवतो रुद्राद्यपेक्षया शेषत्वस्योक्तरीत्या रुद्रादिशरीरकपरमात्मापेक्षया परमात्मन एवैच्छिकशेषत्वरूपतया वक्तुं शक्यत्वादिति भावः। **अप्रामाण्यस्येति।** प्रमाणत्वेन संप्रतिपन्नस्थल एवैवंविधनिर्वाहः; न त्वप्रमाणत्वेन स्थापितविषय इति भावः। **तत्त्ववैपरीत्यमिति।** सुदर्शनादेः पारम्यं भगवतोऽपकर्षश्चेत्यर्थः। **शास्त्राप्रामाण्यमिति।** यन्त्रशास्त्राप्रामाण्यमित्यर्थः॥

इति श्रीमहामहोपाध्यायश्रीकृष्णतातयार्यकृतिषु न्यायसिद्धाञ्जनव्याख्यायां रत्नपेटिकासमाख्यायां ईश्वरपरिच्छेदस्तृतीयः॥

अतः सिद्धमशेषचिदचित्प्रकारं ब्रह्म एकः श्रीमन्नारायण इति ॥

स्फारास्तीर्णभुजङ्गपुङ्गववपुःपर्यङ्कवर्यं गतौ
सर्गस्थित्यवसानकेळिरसिकौ तौ दम्पती नः पती ।
नाभीपङ्कजशायिनः श्रुतिसुखैरन्योन्यबद्धस्मितौ
डिम्भस्याम्बुजसंभवस्य वचनैर्गीतत्सदित्यादिभिः ॥ ९० ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु
न्यायसिद्धाञ्जने ईश्वरपरिच्छेदस्तृतीयः ॥

—०—०—

श्रीः

## न्यायसिद्धाञ्जने नित्यविभूतिपरिच्छेदः (४) ।

अथास्य नित्यविभूतिरुच्यते । त्रिगुणद्रव्यव्यतिरिक्तत्वे सति सत्त्ववत्त्वम्, स्वयम्प्रकाशत्वे सति सत्त्ववत्त्वम्, तमोरहितत्वे सति सत्त्ववत्त्वम्, निश्शेषाविद्यानिवृत्तिदेशविजातीयान्यत्वम् इत्यादि

---

त्रिगुणद्रव्यव्यतिरिक्तत्वे सतीति । जीवेश्वरादिव्यावृत्त्यर्थं सत्त्ववत्त्वमित्युक्तम् । एवम् उत्तरत्रापि द्रष्टव्यम्। निश्शेषाविद्येति; यद्देशप्राप्त्यनन्तरं निश्शेषाविद्यानिवृत्तिः, स देशो निश्शेषाविद्यानिवृत्तिदेशः । स च अमानवकरस्पर्शादिदेशः । न च निश्शेषाविद्यानिवृत्तिदेशत्वमेव तल्लक्षणमस्त्विति वाच्यम् ; तद्देशवृत्तिनित्यसूरिविग्रहादीनामसंग्रहप्रसङ्गात् । न च तद्देशसजातीयत्वमेव तल्लक्षणमस्त्विति वाच्यम् ; येनकेनचिदाकारेण साजात्यस्यातिप्रसक्ततया नित्यविभूतित्वादिना साजात्ये आत्माश्रयप्रसङ्गात्। अतो विजातीयान्यत्वमुक्तम् । न च विजातीयान्यत्वमित्यत्रापि नित्यविभूतित्वेन विजातीयत्वस्य वक्तव्यत्वेन आत्माश्रयदोषस्तदवस्थ एवेति वाच्यम् ; त्रिगुणद्रव्यकालजीवेश्वरधर्मभूतज्ञानाद्रव्यविलक्षणत्व-

---

त्रिगुणद्रव्यव्यतिरिक्तत्वे सतीति । त्रिगुणवारणाय सत्यन्तम् ; कालादिवारणाय विशेष्यम्। त्रिगुणद्रव्यव्यतिरिक्तत्वञ्च त्रिगुणद्रव्यनिष्ठतद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदवत्त्वम् । तेन त्रिगुणद्रव्य-प्रतियोगिकभेदविवक्षायां त्रिगुणकालोभयत्वावच्छिन्नप्रतियोगिताकभेदमादाय त्रिगुणेऽतिव्याप्तिः । त्रिगुणत्वावच्छिन्नप्रतियोगिताकभेदविवक्षायामपि तमोगुणवत्त्वावच्छिन्नप्रतियोगिताकभेदस्य वा रजोगुण-वत्त्वावच्छिन्नप्रतियोगिताकभेदस्य वा निवेशेनैव सामञ्जस्येऽधिकांशवैयर्थ्यमिति दूषणस्य नावकाशः । त्रिगुणद्रव्येत्यस्य तद्व्यक्तित्वविशेषपरिचायकमात्रतया लक्षणे तदनिवेशात् । तमोगुणरहितत्वे सति सत्त्ववत्त्वमिति च बोध्यम् । स्वयंप्रकाशत्वे सतीति । त्रिगुणवारणायेदम् । आत्मादिवारणाय विशेष्यम् । निश्शेषाविद्यानिवृत्तीत्यादि । यद्देशप्राप्त्यनन्तरं निश्शेषाविद्यानिवृत्तिर्भवति, स देशो निश्शेषाविद्यानिवृत्तिदेशः । निश्शेषाऽविद्यानिवृत्तिहेतुभूतसंयोगानुयोगिदेश इति फलितम् । तादृश-देशत्वमात्रस्य लक्षणत्वे नित्यसूरिविग्रहादिष्वव्याप्तिः । तत्सजातीयत्वस्य लक्षणत्वे द्रव्यत्वस्वयंप्रकाशत्वा-दिना तत्सजातीयात्मादावतिव्याप्तिः । अतस्तद्विजातीयान्यत्वमित्युक्तम् । तद्विजातीयत्वञ्च न

तल्लक्षणम् । "आदित्यवर्णं तमसः परस्तात्", "ते ह नाकम्", "क्षयन्तमस्य रजसः पराके", "योऽस्याध्यक्षः परमे व्योमन्", "तदक्षरे परमे व्योमन्", "सहस्रस्थूणे विमिते दृढ उग्रे" इत्यादिभि-

---

मित्यत्र तात्पर्यात्। आदिशब्देन चेतनधर्मभूतज्ञानान्यस्वप्रकाशत्वमित्यादि विवक्षितम् । आदित्यवर्णमिति। तमसः परस्तात्=प्रकृतेः परस्तात् । आदित्यवर्णमित्यप्राकृतशुद्धसत्त्वमयदिव्यमङ्गलविग्रहसिद्धिः । क्षयन्तमिति । रजसः त्रिगुणात्मकप्रकृतेः परस्तात् वसन्तमित्यर्थः । सहस्रेति । "सहस्रस्थूणे विमिते दृढ उग्रे यत्र देवानामधिदेव आस्ते" इति श्रुतिः। आदिशब्देन, "हिरण्मये परे कोशे(लोके) विरजं ब्रह्म निष्कलम्", "पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि", "ते ह नाकं महिमानः सचन्ते । यत्र पूर्वे साध्याः सन्ति देवाः", "यथा पादोदरस्त्वचा विनिर्मुच्यत एवं हैव स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकम्", "विज्ञानसारथिर्यस्तु मनःप्रग्रहवान् नरः। सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्॥", "स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते न च पुनरावर्तते", "रम्याणि कामचाराणि विमानानि सभास्तथा । आक्रीडा विविधा राजन् पद्मिन्यश्चामलोदकाः ॥ एते वै निरयास्तात ! स्थानस्य परमात्मनः ॥", "दिव्यं स्थानमजरञ्चाप्रमेयं दुर्विज्ञेयञ्चागमैर्गम्यमानम्(योगिगम्यम्) । गच्छ प्रभो रक्ष चास्मान् प्रपन्नान् कल्पे कल्पे जायमानः स्वमूर्त्या ॥", "देवाश्च यत्र पश्यन्ति दिव्यं तेजोमयं पदम् । अत्यर्कानलदीप्तं तत् स्थानं विष्णोर्महात्मनः ॥ स्वयैव प्रभया राजन् ! दुष्प्रेक्ष्यं देवदानवैः ।", "तदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसःपरस्तात्" इत्यादि गृह्यते । मुक्तगतौ, "शीर्षकपालं भिनत्ति, अण्डं भिनत्ति, अक्षरं भिनत्ति, तमो भिनत्ति" इत्यादिवाक्यमपि प्रकृतेः परत्वे प्रमाणमवगन्तव्यम्। ननु, "**तद्विष्णोः परमं पदम्**" इत्यनेन **सदापश्यदनेकद्रष्टृविशिष्टस्थानविशेषसिद्धि**रिति सिद्धान्तो न युज्यते ; "समस्तहेयरहितं विष्ण्वाख्यं परमं पदम् । यत्तदव्यक्तमजरमचिन्त्यमजमव्ययम् ॥ अनिर्देश्यमरूपञ्च पाणिपादाद्यसंयुतम् । विभुं सर्वगतं नित्यं भूतयोनिमकारणम् । व्याप्यं व्याप्तं यतः सर्वं तद्वै पश्यन्ति सूरयः ॥ यद्ब्रह्म तत्परं धाम तत् ध्येयं मोक्षकाङ्क्षिणाम् । श्रुतिवाक्योदितं सूक्ष्मं तद्विष्णोः परमं पदम् ॥ तदेव भगवद्वाच्यं स्वरूपं परमात्मनः ।" इति परमात्मस्वरूपाव्यतिरेकनिर्देशात्, "यत्तदद्रेश्यमग्राह्यम-

---

तदवृत्तिजातिमत्त्वम् ; नित्यस्य रावणगोपुरदेशावच्छेदेन तादृशदेशावृत्त्यवयवसंस्थानादिरूपजातिमत्तया अव्याप्त्यापत्तेः। अत एव न तदवृत्तिधर्मवत्त्वमपि। किं तु तदवृत्तिद्रव्यविभाजकोपाधिमत्त्वम् । द्रव्यविभाजकोपाधित्वञ्च त्रिगुणत्वाद्यन्यतमत्वम् । तथा च त्रिगुणत्वाद्यवच्छिन्नप्रतियोगिताकभेदपञ्चकवत्त्वे सति द्रव्यत्वम् शुद्धसत्त्वलक्षणमिति फलितम् । तेन त्रिगुणातिरिक्तसत्त्ववत्त्वादिरूपशुद्धसत्त्वत्वघटकधर्मषट्कान्यतमत्वेन द्रव्यविभाजकोपाधि निवेशयोक्तदेशावृत्तित्वेन शुद्धसत्त्वत्वव्यावृत्तिकरणं प्रकृत आद्धीति न्यायग्रस्तम् ; तद्घटकत्रिगुणातिरिक्तसत्त्ववत्त्वदेरेव लम्यकत्वेन शेषवैयर्थ्यञ्चेत्यपास्तम् । शुद्धसत्त्वाविषयकतदतिरिक्तसर्वविषयकज्ञानव्यक्तित्वद्व्यक्तित्वेनोपादायतद्व्यक्तित्वावच्छिन्नविषयतासंबन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदवत्त्वं वोक्तविजातीयान्यत्वमित्यनेन विवक्षितम् । इत्यादीति । आदिना ज्ञानतदाश्रयान्यत्वे सति स्वयंप्रकाशत्वं संगृह्यते । आदित्यवर्णमिति । तमसः=त्रिगुणद्रव्यात् परस्तात् ।

स्तत्सिद्धिः । एवञ्च सति, "तद्विष्णोः परमं पदँ सदा पश्यन्ति सूरयः" इत्यत्रापि व्यतिरेकनिर्देशबलात् स्वरूपाद्भेदे सिद्धे, पदशब्दस्वारस्यात्, सदा दृश्यत्वबलाच्च सदापश्यदनेकद्रष्टृविशिष्टस्थानविशेषसिद्धिः(विधिः) । अगत्या च विशिष्टविधिः, "यदाग्नेयोऽष्टाकपालः" इतिवत् । प्रपञ्चितश्चायं स्थानविशेषो मोक्षधर्मे, "एते वै निरयास्तात ! स्थानस्य परमात्मनः" इत्यादिभिः । सा च विभूतिः केनचित्प्रदेशेनानन्ता, केनचित्तु अवच्छिन्ना; आनन्त्यतमःपरत्वयोः श्रुतयोरवर्जनीयत्वात् । आनन्त्यमात्रसाम्येऽपि अनन्तत्रिगुणादपि इयमधिकतरा; न्यूनाधिकभाववचनात्, अनन्तेष्वेव मिथस्तार-

---

गोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम् । नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः ॥" इति श्रुत्यनुसारेण यत्सूरयः पश्यन्ति तद्विष्णोः परमं पदं परमस्वरूपमिति योजनाप्रतीतेरित्याशङ्क्याह इत्यत्रापि व्यतिरेकनिर्देशबलात् स्वरूपाद्भेदे सिद्ध इति । "अस्याध्यक्षः परमे व्योमन्", "सहस्रस्थूणे विमिते" इत्यादिवाक्यान्तरसहकृतेन, "विष्णोः परमं पदम्" इत्यनेन व्यतिरेकनिर्देशेन भिन्नतयैव सिद्धिसंभवात् सदापश्यदनेकद्रष्टृविशिष्टस्थानविधिपरत्वमुपपन्नमिति भावः । यदुक्तं परमात्मस्वरूपं विष्णोः परमं पदमिति, तदपि सत्यमेव । [अथापि?] परस्थाने परमात्मस्वरूपे मुक्ते च प्राप्यत्वेन, 'पद्यते=प्राप्यते' इति व्युत्पत्त्या पदशब्दस्य प्रयोगो मुख्य एवेति वेदार्थसंग्रहे स्थापितत्वेन प्रकृते, "तद्विष्णोः" इति वाक्ये स्वरससिद्धार्थपरित्यागे मानाभावादिति भावः । सदादृश्यत्वबलादिति । द्रष्टृदृश्यभावभेदप्रतीतेर्न पराभिमतस्वरूपमात्रपरत्वमिति भावः । विशिष्टस्थानविशेषसिद्धि(विधि)रिति । न तु मानान्तरसिद्धभगवल्लोकानुवादेन, "सदा पश्यन्ति" इति गुणमात्रविधिरिति भावः । यदाग्नेयोऽष्टाकपाल इतिवदिति । तत्र अप्राप्तद्रव्यदेवताविशिष्टयागविधानादिति भावः । केनचित्प्रदेशेनेति । अधःप्रदेशस्यावधिरस्ति, ऊर्ध्वप्रदेशस्यावधिर्नास्तीति पर्यवसितोऽर्थः । न्यूनाधिकेति । "पादोऽस्य विश्वा भूतानि । त्रिपादस्यामृतं दिवि" इति वचनादित्यर्थः । सिद्धत्वादिति । द्रव्यघटानन्त्यादिषु प्र... निदर्शितत्वादिति भावः । तद्विषयोऽपीति । देशविषयोऽपीत्यर्थः । एवं हि तत्रार्थः—दिवीत्यप्राकृतस्थानमुच्यते । त्रिपात्त्वञ्च अप्राकृतैर्भोग्यभोगोप-

---

एवं च सतीति । अनन्यथासिद्धस्पष्टप्रमाणबलेन स्थानविशेषे सिद्धे सतीत्यर्थः । व्यतिरेकनिर्देशबलादिति । भेदव्याप्यसंबन्धबोधकषष्ठीबलादित्यर्थः । स्वरूपादिति । विष्णुशब्दबोधितभगवत्स्वरूपादित्यर्थः । पदशब्दस्वारस्यादिति । "पदं व्यवसितत्राणस्थान...." इत्यादिनैस्वण्डुकपाठेन पदशब्दस्य स्थाने रूढत्वादिति भावः । सदापश्यत्त्वबलादिति । सदादर्शनं दृश्यस्य स्थानविशेषस्यापि नित्यत्वसाधकमिति भावः । अथवा पश्यतेः रूपसाक्षात्कार एव मुख्यतया नीरूपस्य भगवत्स्वरूपस्य न पश्यतिकर्मत्वं मुख्यमिति भावः । नन्वनेकार्थविधानात् वाक्यभेदः, विशिष्टविधौ तु गौरवमित्यत आह अगत्येति । अनेकेषामप्राप्तत्वादिति भावः । विशिष्टविधिरिति । भगवन्तमनूद्य सदापश्यदनेकद्रष्टृविशिष्टस्थानविधिरित्यर्थः । यदाग्नेयोऽष्टाकपाल इतिवदिति । तत्र द्रव्यदेवतादिविशिष्टयागविधानादिति भावः । केनचिदित्यादि । ऊर्ध्वमनवच्छिन्ना, अधः प्रकृतिपरिच्छिन्नेत्यर्थः ॥

तन्मयस्य सिद्धत्वात्। देशोऽपि निदर्शयामः। आदित्यादूर्ध्वमपि गगनदेशोऽनन्तः, भूमण्डलात् अनन्ततरः, पाताळादनन्ततम इति। पादत्रिपाद्व्यपदेशश्च तद्विषयोऽपि तद्देशतारतम्यस्यानुग्राहको भवति। अयञ्च विभागो न समचतुर्भागाभिप्रायः; "बुद्ध्यर्थः पादवत्" इत्युक्तत्वात्॥

अचेतना चेयम्; जीवेश्वरकोटिविलक्षणत्वात्, स्वयम्प्रकाशा च। "तत्रानन्दमया लोकाः भोगाश्चानन्दलक्षणाः", "आनन्दं नाम तं लोकं परमानन्दलक्षणम्", "तयोर्नौ परमव्योम निर्द्वन्द्वं सुखमुत्तमम्" "षाड्गुण्यप्रसरो नित्यस्वाच्छन्द्याद्देशतां गतः" इत्यादिसामर्थ्यात्। [1]तथा, "किमात्मिकैषा भगवतो व्यक्तिः" इति प्रश्ने, "यदात्मको भगवान्" इति च सामान्यत उत्तरे कृते, पुनः, "किमात्मको भगवान्" इति प्रश्ने, "ज्ञानात्मकः" इत्याद्युत्तरमुक्तम्। अतो दिव्यमङ्गळविग्रहस्य ज्ञानात्मकत्वात् तद्द्रव्यात्मिकायाः सर्वस्याः नित्यविभूतेर्ज्ञानात्मकत्वमुचितम्। ज्ञानात्मकत्वञ्चात्र स्वयम्प्रकाशत्वमेव। ज्ञानत्वेऽप्यात्मवत् अस्या निर्विषयत्वाकर्तृकत्वे युक्ते। परस्मैभासमानत्वाच्च धर्मभूतज्ञानवत् पराक्त्वमुपपन्नम्। सुषुप्त्यादिकाले धर्मभूतज्ञानवत् बन्धकाले सा न प्रकाशते।

---

करणभोगस्थानविशेषैर्वा, भूषणास्त्रादिरूपेण जगदन्तर्गतवस्त्वभिमानिभिर्नित्यैः भगवदनुभवमात्रपरैश्च नित्यसिद्धैः मुक्तैश्चात्मभिर्वा त्रिपादिति। तथैव व्याख्यातत्वात्। त्रिपात्त्वस्य देशाविषयत्वेऽपि तदाश्रयदेशादेरपि वैपुल्यं सिद्धमिति भावः। बुद्ध्यर्थः पादवदित्युक्तत्वादिति। अस्यार्थः—(श्रीभा-)योऽयम्, 'चतुष्पात् ब्रह्म षोडशकलम्', "पादोऽस्य विश्वा भूतानि" इत्युन्मानव्यपदेशः, स बुद्ध्यर्थः=उपासनार्थः। यथा, "वाक्पादः प्राणः पादः" इत्यादौ ब्रह्मणो वागादिपादव्यपदेश उपासनार्थः, तद्वदिति।

जीवेश्वरकोटिविलक्षणत्वादिति। न चैवम्, "षाड्गुण्यप्रसरो नित्यस्वाच्छन्द्यात् देशतां गतः" इत्यादिवचनानां नित्यविभूतेः षाड्गुण्याश्रयत्वप्रतिपादकानां का गतिरिति वाच्यम्; अगत्या तादृशवचनानामौपचारिकत्वादिति भावः। भगवतो व्यक्तिरिति। व्यक्तिः शरीरम्। उत्तरमुक्तमिति। श्रुताविति शेषः। ननु कथमस्य ज्ञानात्मकत्वम्? ज्ञातुर्ज्ञेयावभासो हि ज्ञानम्। ततश्च कर्मकर्तृशून्याया नित्यविभूतेः कथं ज्ञानात्मकत्वमित्याशङ्क्याह ज्ञानात्मकत्वञ्चेति। सुषुप्त्यादिकाले धर्मभूतज्ञानवदिति। यथा धर्मभूतज्ञानस्य विषयप्रकाशनदशायां स्वप्रकाशत्वम्, नान्यदा—तथा

---

षाड्गुण्यप्रसर इति। हेतुहेतुमतोरभेदोपचारात् षाड्गुण्यप्रकाशहेतुरित्यर्थः। नित्यस्वा-

---

1 ननु स एको मानुष आनन्द इत्यादौ अस्वयंप्रकाशेऽप्यानन्दशब्दः प्रयुज्यते। विशिष्य च नित्यविभूतिवस्तूनां तत्प्रत्यक्षकाले सदा अनुकूलत्वभाननियमात् स्वप्रत्यक्षत्वव्यापकस्वानुकूल्यभानकत्वमात्रेणाऽऽनन्दव्यपदेशो युज्यतेतराम्। षाड्गुण्यप्रसरशब्दमुख्यार्थस्तु तत्राचेतने न भवत्येव। नित्यविभूतौ परमात्मषाड्गुण्यस्य सर्वत्रासंकोचेनानुभव इत्याशयात्तथोक्तिरिति किं तेनेति शंकायां ज्ञानशब्दप्रयोगसाहित्यात् आनन्दपदावगतस्वयम्प्रकाशत्वमपि अनुपेक्ष्यमित्याशयेनाह तथेति। ज्ञाधातोः सकर्मकर्तृकावभास एव व्युत्पत्तावपि आत्मसु ज्ञानादिशब्दप्रयोगात् लाघवाच्च सामान्येन किञ्चित्प्रकाशकत्वं प्रवृत्तिनिमित्तमिति वा तत्र निरूढलक्षणेति वा भाष्यादितोऽवसायात् नित्यविभूतिविषयेऽपि तदर्थग्रहणमेव सरसमिति भावः।

तदा तु तद्वदेव ज्ञानविषयतयैव तत्सिद्धिः। बन्धरहितानां मतिवैभवे सत्यपि सा तन्निरपेक्षा; आत्मस्वरूपवत्। ज्ञानविषयत्वेऽपि स्वयम्प्रकाशत्वमपि अन्यत्राप्यभ्युपगतम्। एके तु निरतिशय दीप्तियोगात्[1] ज्ञानावारकत्वाभावादेश्च स्वयम्प्रकाशत्वज्ञानत्वादिव्यपदेशः. अत्यन्तानुकूलरूपरस-

---

नित्यविभूतेरपि स्वप्रकाशत्वं पुरुषविशेषं प्रति दशाविशेष एवेति भावः। तर्हि बन्धकाले तत्प्रकाशो न स्यादित्यत आह तदा त्विति। ज्ञानविषयतयैव तत्सिद्धिरिति। यद्यपि सुषुप्त्यवस्थायां ज्ञानविषयतया स्वाश्रयं प्रति न तत्सिद्धिः; तदानीं ज्ञानस्यैवानुदयात्—तथापि सुषुप्त्यवस्थस्य धर्मभूतज्ञानस्य कालान्तरीयः समानाधिकरणो वा, तत्कालीनो व्यधिकरणो वा प्रकाशः सर्वोऽप्यन्याधीन इत्यत्र तात्पर्यम्। ननु मुक्तानां ज्ञानस्य विभुतया तत एव नित्यविभूतिप्रकाशोपपत्तौ नित्यविभूतेः स्वप्रकाशत्वं मुधेत्याशङ्क्य नित्यविभूतेर्ज्ञानान्तरनिरपेक्षतयापि प्रकाशमानतया स्वप्रकाशत्वोपपत्तिरित्याह बन्धरहितानामिति। अन्यत्रापीति। आत्मस्वरूप इत्यर्थः। ननु आत्मस्वरूपस्य सुषुप्तिदशायामपि भासमानतया स्वप्रकाशत्वं युज्यते। नित्यविभूतौ तु कदापि ज्ञानान्तरविगमदशायां भानस्याभावेन ज्ञानान्तरनिरपेक्षप्रकाशत्वं नाभ्युपगन्तुं युक्तमित्यस्वरसात्* पक्षान्तरमाह एके त्वित्यादि। ज्ञाना

---

च्छन्द्यात्=भगवन्निरपेच्छावशात्। व्यात्कारेति। विग्रह इत्यर्थः। तदा त्विति। बन्धकाले इत्यर्थः। तद्वदेवेति। सुषुप्तिकालिकज्ञानवदेवेत्यर्थः। तत्सिद्धिरिति। नित्यविभूतिसिद्धिरित्यर्थः। सिद्धिः व्यवहारानुगुण्यं संशयाद्यगोचरत्वं वा। न च सुषुप्तिकालिकज्ञानस्य कथं ज्ञानविषयत्वम्; तदा ज्ञानप्रसरविरहादिति वाच्यम्; कालान्तरीयसमानाधिकरणज्ञानस्य तात्कालिकपुरुषान्तरीयज्ञानस्य विषयत्वसंभवात्। ननु बन्धरहितानां धर्मभूतज्ञानस्य सर्वविषयकत्वात् नित्यविभूतिविषयकत्वावश्यम्भावात् तत एव तद्व्यवहाराद्युपपत्तौ तस्याः स्वयंप्रकाशत्वाभ्युपगमो निरर्थक इत्याशङ्क्याह बन्धरहितानामिति। नित्यानां मुक्तानां ईश्वरस्य चेति भावः। सा तन्निरपेक्षेति। नित्यविभूतिर्नित्यादिज्ञानानधीनव्यवहारादिकेत्यर्थः। नित्यविभूतिनिष्ठव्यवहर्तव्यतासंबन्धेन बन्धरहितकर्तृकव्यवहारं प्रति तादात्म्येन नित्यविभूतेरेव हेतुत्वम्; न तु विषयितासंबन्धेन तदीयज्ञानस्येति भावः। तत्र दृष्टान्तमाह आत्मेति। यथा आत्मस्वरूपस्य नित्यादिज्ञानविषयत्वेऽपि तद्व्यवहारे तत्स्वरूपस्यैव तादात्म्येन हेतुत्वम्; न तु तद्विषयकज्ञानस्य—तद्वदित्यर्थः। तथा च स्वयंप्रकाशत्वग्राहकप्रमाणबलात् तद्व्यवहारे ज्ञानान्तरानधीनत्वसिद्धिः; ज्ञानान्तरनिरपेक्षव्यवहारवत्त्वस्यैव स्वयंप्रकाशत्वरूपत्वात्। तदभ्युपगमस्य प्रयोजनं तु स्वयंप्रकाशत्वव्यवहार एव। घटे घटत्वाभ्युपगमस्य घटत्वव्यवहार इवेति भावः। ननु ज्ञानान्तरवेद्यस्य स्वयंप्रकाशत्वानुपपत्तिरित्याशङ्क्याह ज्ञानेति। अन्यत्रेति। आत्मादिष्वित्यर्थः। न हि ज्ञानान्तराविषयत्वं स्वयंप्रकाशत्वम्; येन ज्ञानान्तरविषयत्वे तदनुपपत्तिस्स्यात्। किंतु ज्ञानान्तरनिरपेक्षप्रकाशत्वमेव। तच्च ज्ञानान्तरवेद्यत्वेऽप्यव्याहतमेवेति भावः। सयूथ्यमतान्तरमाह एके त्विति।

---

1 तत्रत्याकाशवायुवादीनामपि प्रभारूपदीप्तियोगो दुर्वचः। *रहस्यत्रयसारादौ प्रथमपक्ष एव नैर्भर्यप्रतीत्या एवमवतरणं न युक्तम्, 'स्वसत्ताभासकं सत्त्वम्' इति च कण्ठोक्तम्।

गन्धादियोगाच्च आनन्दसुखादिव्यपदेश इत्याहुः ॥

इयञ्च [1]पञ्चोपनिषत्प्रतिपाद्यपञ्चभूतेन्द्रियमयी नित्यमुक्तेश्वराणामिच्छानुरूपशरीरेन्द्रिय-(?)प्राण[2]विषयरूपेणावतिष्ठते। त्रिगुणवदियमपि चतुर्विंशतितत्त्वात्मिकेति केचित्। तथापि न तत्त्वानां प्रकृतिविकृतिभावः। दिव्यमङ्गळविग्रहादेर्नित्यत्वश्रवणात्। अप्राकृतानामपि महदादीनां सद्भाव आकाशादिवत्। न हि आकाशाद्युपात्तास्तत्र वाय्वादयः। तत्र च शरीरादीनां संस्थानादीनि प्रायशः प्राकृततुल्यानि। शरीराणां शुभाश्रयादीनां पाण्यादिमत्त्वश्रवणात् तत्रेन्द्रियसद्भावसिद्धिः। चक्षुरादिशब्दानाञ्च प्रयुक्तानां गोलकादावमुख्यत्वात्। "इन्द्रियच्छिद्रविधुरा द्योतमानाश्च सर्वशः" इत्यादिवचनमुत्सर्गापवादनयेन कर्मकृतेन्द्रियप्रतिक्षेपपरम्; "अशरीरं वाव सन्तम्" इत्यादिषु कर्मकृतशरीरादिप्रतिषेधवत्। "अभावं बादरिः" इत्याधिकरणे, "किं मुक्तस्य देहेन्द्रियाणि सन्ति" इति चिन्तितत्वात् भूतेन्द्रियरूपषोडशतत्फलसद्भावो भाष्यकारैरेव सूचितः। भट्टपराशरपादैश्च ईश्वरादीनां मनस्सद्भावो दर्शितः। यथा(?) "यद्यप्येवं तर्कः स्वातन्त्र्येण स्वान्तसमर्थनासमर्थः, तथापि आगमानुग्रहेण प्रभवति। सन्ति चागमाः, "मनसैतान् कामान् पश्यन् रमते", "मनोऽस्य दिव्यं चक्षुः", "सोऽन्यं कामं मनसा ध्यायीत", "मनसैव जगत्सृष्टिम्", "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इत्येवमादयः परावरप्रकरणेषु" इति स्वयमुक्तत्वात्। "बुद्धिरेवेदं मन इति मतान्तरमाचार्याणाम्; बुद्धिमान् मनस्वी इत्यविशेषनिर्देशात्। क्षुभितं मे मनः प्रशस्तं मे मन इति तदवस्थापरोक्ष्याच्च" इति मतान्तरमुक्तम्। विषयाश्चात्र भूषणायुधासनपरिवारायतनोद्यानवापिकाक्रीडापर्वतादयोऽतिविचित्रा नित्याः। केचित्तु कृतका अनित्याश्च। सन्ति हि तत्रापि तरुषु पल्लवकुसुमफलादयः परिणामाः, नदीषु फेनतरङ्गबुद्बुदादयः, विग्रहे च व्यूहविभवादयः। कालकृतकर्माधीनपरिणाममात्रं हि तेषु निषेध्यम्, न तु भगवत्सङ्कल्पमात्रकृतमपि।

वारकत्वाभावादे'रिति। त्रिगुणद्रव्यवत् ज्ञानसंकोचाहेतुत्वादे'रित्यर्थः। आदिशब्देन धीविकासहेतुत्ववेगसौक्ष्म्यादि विवक्षितम्॥ पञ्चभूतेन्द्रियेति। भूतानि पञ्च, इन्द्रियाण्येकादश, अतः षोडशैव तत्त्वानीति भावः। ननु तत्रत्यानां पदार्थानां नित्यतया तदुत्पादनार्थं महदादीनामनपेक्षितत्वात् तदभ्युपगमो मुधेत्याशङ्क्याह--अप्राकृतानामपीति। उपात्ता इति। भूताकाशोपादानका इत्यर्थः। शुभाश्रयादीनामिति। शुभाश्रयो भगवद्विग्रहः। तत्रेन्द्रियेति। पाण्यादिशब्दानां तत्तदिन्द्रियवाचित्वादिति भावः। इन्द्रियच्छिद्रविधुरा इति। इन्द्रियाधिष्ठानच्छिद्रविधुरा इत्यर्थः। तत्फलसद्भाव इति। "तन्वभावे सन्ध्यवदुपपत्तेः, भावे जाग्रद्वत्" इति सूत्रव्याख्यानदशायां भोगफलकत्वोक्तेरिति भावः। तदवस्थापरोक्ष्याच्चेति। मनःशब्दस्य मनइन्द्रियपरत्वे तस्यातीन्द्रियत्वेन क्षुभितं मन इति तदापरोक्ष्यं न स्यादिति भावः। केचित्त्विति। पदार्था इति शेषः। तदेवोपपादयति सन्ति हीति। व्यूह-

इयत्यास्वरससूचनाय। तट्टीजं तु—ज्ञानादिव्यपदेशस्य आत्मस्वरूपादिविषयतादृशव्यपदेशतुल्ययोगक्षेमस्य अन्यथानयनमयुक्तम्; बाधकाभावादिति।

आकाशाद्युपात्ता इति। आकाशाद्युपादानका इत्यर्थः। शुभाश्रयादीनामिति। भगवद्दिव्यमङ्गलविग्रहादीनामित्यर्थः। आदिना नित्यसूरिविग्रहपरिग्रहः। व्यूहविभवादय इति। व्यूहाः वासुदेवा-

1 पञ्चोपनिषच्छब्देन पञ्चमन्त्रविशेषोक्तिरिति आह्निकादौ प्रसिद्धम्। 2 प्र.णोपपादनं न कृतम्।

तदेवं शरीराण्यपि कानिचित् नित्यानामीश्वरस्य च नित्येच्छापरिग्रहात् नित्यानि। कानिचित् अनित्येच्छापरिग्रहादनित्यानि। मुक्तानां तु कृतकान्येवानित्यान्यपि। ते हि कदाचिदशरीराः कदाचिच्च सशरीरा इति भाष्यादिषु प्रदर्शितम्। इन्द्रियाणि तु तत्रत्यानि सर्वाण्यपि नित्यानि, तत्रत्यव्योमादिवद्देवोपादाननिरपेक्षत्वात्। तत्र कानिचित् नित्यैरीश्वरेण च नित्यपरिगृहीतानि, कानिचित् कदाचित् परिगृहीतानि। मुक्तैस्तु तत्परिग्रहः शरीरवत् कादाचित्क एव। नित्यमुक्तानां शरीरादिपरिग्रहो भगवदभिमततत्कैङ्कर्यरूपभोगाय। भगवतोऽपि स्वभोगाय, स्वशेषभूतनित्यमुक्तानन्दनाय, मुमुक्षूपास्यत्वसिद्धये च। स च भगवतः स्वसंकल्पादेव। मुक्तनित्यानां तु कदाचित् परमपुरुषमात्रसंकल्पात्, कदाचित् परमपुरुषसंकल्पानुविधायिस्वसङ्कल्पाच्च। तथा च सूत्रम्, [1]"तन्वभावे सन्ध्यवदुपपत्तेः, भावे जाग्रद्वत्" इति॥

विभवादय इति। व्यूहाः संकर्षणादयः, विभवा रामकृष्णादयः। भाष्यादिष्विति। "द्वादशाहवदुभयविधं बादरायणोऽतः" इति सूत्र इति शेषः। इन्द्रियाणि त्विति। न च शरीरेष्वप्ययं न्यायः कस्मात् न भवतीति वाच्यम्; मुक्तपरिगृह्यमाणशरीराणां मुक्तपरिग्रहात्प्रागपि सत्त्वे यावत्सत्त्वं धार्यत्वादेरभावेन शरीरत्वभङ्गप्रसङ्गादिति भावः। मुमुक्षूपास्यत्वसिद्धये चेति। विग्रहादिशून्यस्य दिव्यात्मस्वरूपस्य योगयुञ्जनोऽनालम्बनत्वादिति भावः। चकारेण दुष्कृद्विनाशादिकमभिप्रेतम्। तन्वभावे सन्ध्यवदुपपत्तेः। स्वेनैव सृष्टतनुप्रभृत्युपकरणाभावे परमपुरुषसृष्टैरुपकरणैर्भोगोपपत्तेः सत्यसंकल्पोऽपि स्वयं न सृजति यथा स्वप्ने, "अथ रथान् रथयोगान् पथः सृजते" इत्यारभ्य, "अथ वेशन्तान् पुष्करिण्यः स्रवन्त्यः सृजते। स हि कर्ता" इति, "य एष सुप्तेषु जागर्ति कामंकामं पुरुषो निर्मिमाणः। तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते। तस्मिन् लोकाः श्रिताः सर्वे तदु नात्येति कश्चन" इति च ईश्वरसृष्टैः रथाद्युपकरणैर्जीवो भुङ्क्ते, तथा लीलाप्रवृत्तेनेश्वरेण सृष्टैः पितृलोकादिभिर्लीलारसं भुङ्क्ते। भावे जाग्रद्वत्। स्वसंकल्पादेव सृष्टतनुप्रभृतिपितृलोकाद्युपकरणभावे जाग्रत्पुरुषवत् मुक्तो लीलारसं भुङ्क्ते। परमपुरुषोऽपि लीलार्थं दशरथवसुदेवादिपितृलोकमात्मनः सृष्ट्वा तैः मनुष्यधर्मलीलारसं यथा भुङ्क्ते, तथा मुक्तानामपि स्वलीलयैव पितृलोकादिकं स्वयमेव सृजति। कदाचिच्च मुक्ताः सत्यसंकल्पत्वात् परमपुरुषलीलान्तर्गतस्वपितृलोकादिकं सृजन्तीति॥ ननु इच्छासंकल्पानन्दादीनां ज्ञानावस्थाविशेषाणां कर्माधीनत्वावश्यम्भावात् कर्मसम्बन्धशून्यानां मुक्तादीनामप्राकृतविचित्रदेहादिपरिणामविषये तद्धेतुभूतेच्छाः सङ्कल्पा वा

दयः; विभवाः=रामकृष्णादयः। नित्येच्छापरिग्रहादिति। ईश्वरीयनित्येच्छासिद्धत्वादित्यर्थः। अनित्येच्छापरिग्रहादिति। अनित्येच्छाजन्यत्वादित्यर्थः। कृतकान्येवेति। जन्यान्येवेत्यर्थः। अनित्यान्यपीति। विनाशीन्यपीत्यर्थः। इन्द्रियाणित्विति। न च शरीरेष्वप्ययं न्यायः कुतो न भवतीति वाच्यम्; मुक्तपरिगृह्यमाणशरीराणां तत्परिग्रहात् पूर्वमपि तत्परित्यागानन्तरमपि च सत्त्वे तेषां तदपृथक्सिद्धविशेषणत्वासंभवेन शरीरत्वासंभवप्रसङ्गात्; यथेच्छसन्निवेशाद्यभावप्रसङ्गाच्च। मुमुक्षूपास्यत्वसिद्धये चेति। केवलदिव्यात्मस्वरूपस्य योगयुङ्मनोगोचरत्वासंभवादिति भावः। चकारेणानुक्तसमुच्चायकेन दुष्कृद्विनाशनादिकमभिप्रेतम्।

1 तन्वभावे='संकल्पादेवास्य पितरः...' इति पूर्वाधिकरणप्रसक्तस्वसंकल्पाधीनशरीराद्यभावे।

ननु नित्यस्यैकस्यैव ज्ञानस्य संसारदशायां कर्मणा संकोचविकासभेदात् सुखःदुखेच्छा-द्वेषादिरूपावस्थाभेद उपपन्नः; ईश्वरस्य विपाकदशापन्नजीवकर्मविषयसहकारितारतम्यात् विषम-त्रिगुणपरिणामहेतवः सन्तु नाम संकल्पाः, अप्राकृतविचित्रदेहादिपरिणामेषु कर्मकालाद्युपाधि-विधुराणां संकोचविकासरहितसमस्तवस्तुगोचरधियां मुक्तनित्येश्वराणां कथं कादाचित्केच्छा-सङ्कल्पतत्कृतानन्दादिज्ञानावस्थाविशेषा घटन्ते? उच्यते—

**उल्लेखभेदाः[1] क्रमशः सन्ति सर्वज्ञसंविदि। न चेत् कार्येषु भूतैष्यद्वर्तमानादिधीः कथम्॥९१**

---

तज्जन्यानन्दावस्थाविशेषा वा कथं घटन्ते इति चोदयति-ननु नित्यस्येत्यादिना। विपाकदशापन्नेति। परिपक्वेत्यर्थः। विषमत्रिगुणपरिणामेति। प्राकृतदेहादिपरिणामेत्यर्थः। परिणामेष्विति। हेतुभूता इति शेषः। उल्लेखभेदा इति। कर्महेतुका अपीति शेषः। न चेत् कार्येष्विति। भूततादशायामपि एष्यद्वर्तमाना(नता?)दिधीसत्त्वे भ्रान्तत्वप्रसङ्गात् भूततादशायां भूतत्वधीः वर्तमानतादशायां

---

विपाकदशापन्नेति। फलोपधानौपायिककालविशेषावच्छिन्नेत्यर्थः। विषमत्रिगुणपरिणामेति। देवमनुष्यादिशरीरात्मकत्रिगुणद्रव्यपरिणामेत्यर्थः। परिणामेष्विति। विषयसप्तमी। निरूपकता-संबन्धेनेच्छाद्यन्वयि विषयत्वं तदर्थः। अत्र किमीश्वरादिबुद्धीनामवस्थाभेद एव न संभवतीत्यभिप्रायः, उत तत्संभवेऽपि तस्य नियतकारणनियाम्यत्वासंभवात् कालान्तरेऽपि तत्प्रसङ्ग इत्यभिप्राय इति विकल्प्य क्रमेण दूषणमाह उल्लेखभेदा इति। विषयिताभेदा इत्यर्थः। क्रमशस्सन्तीति। क्रमेणोत्पद्यन्त इत्यर्थः। भूतैष्यद्वर्तमानादीति। कार्यस्य भूतत्वदशायामेव तत्र तद्विषयकत्वम्; न वर्तमानत्वदशायाम्, न वा भविष्यत्वदशायाम्। एवं भविष्यत्वविषयकत्वं तद्दशायामेव; नान्यदा, तथा वर्तमानत्वविषयकत्वमपि। अन्यथा भ्रान्तत्वप्रसङ्गात्। अत ईश्वरज्ञानस्यापि कादाचित्कविषयितावत्त्वमावश्यकमिति भावः। वर्तमानादीति। आदिना ध्वस्तत्वसङ्ग्रहः। ध्वस्तत्वञ्चातीतोत्पत्तिकध्वंसप्रतियोगित्वम्।

यद्यपि-प्रमाणसिद्धसर्वविषयकत्वमीश्वरबुद्धेरङ्गीक्रियते। तच्च सदातनमेव; न तु कादाचित्कम्. न चैवं सति घटादेर्वर्तमानत्वादिदशायामपि भूतत्वादिविषयकत्वं स्यादिति शङ्क्यम्; विकल्पासहत्वात्। तथाहि—भूतत्वं नाम[प्रकृत?] शब्दप्रयोगाधिकरणकालवृत्तिध्वंसप्रतियोगित्वम्। ततश्च भूतशब्दस्य स्वाधिकरणकाल-वृत्तिध्वंसप्रतियोगित्वमर्थ इति पर्यवसितम्। तेन कालान्तरीयभूतशब्दप्रयोगाधिकरणकवृत्तिध्वंसप्रति-योगित्वस्य अन्यकालिकभूतशब्देनाबोधनेऽपि न क्षतिः। एवं वर्तमानशब्दस्य स्वाधिकरणकालवृत्तित्वम्, भविष्यच्छब्दस्य च स्वाधिकरणकालवृत्तिप्रागभावप्रतियोगित्वमर्थः। इत्थञ्च वर्तमानत्वादिदशायामपि भूतत्वविषयकत्वं स्यादित्युक्तौ कोऽर्थः; किं वर्तमानत्वदशायां प्रयुज्यमानो यो भूतशब्दः

---

1 उल्लेखेति। सर्वविषयकविशदप्रत्यक्षात्मके नित्ये एकस्मिन्नेव ज्ञाने इन्द्रियलिङ्गादिकरण-प्रयोज्यतत्तद्विषयतानिरूपकत्वमपीष्यते। अन्यथेन्द्रियाद्यनपेक्षाप्रसंगात्। अक्षाणामलंकरणार्थत्वं हि गोलकाद्यतिरिक्ताक्षपक्षे न घटते। अन्यस्तदपलापः स्यादित्यादि बोध्यम्। अतस्ता किंकमत इत्येश्वरज्ञानस्यैव तद्गतविषयितानां सर्वासामपि नित्यत्वमिति नेति।

**कर्माद्युपाध्यभावेऽपि मुक्तादीनां प्रवर्तते । इच्छासंकल्पदेहादिरीश्वरेच्छाविशेषतः ॥ ९२ ॥**
**ईशेच्छायास्तु वैषम्यं व्यष्टौ कर्मविशेषतः । समष्टौ गुणवैषम्यात् तन्मूलात् कालतोऽपि वा ॥**
**कालस्य तादृशावस्था क्षणादीनां प्रवाहतः । सोऽप्युपाधिप्रवाहाद्वा यद्वा पूर्वक्षणादितः ॥ ९४**
**उपाधिभिः क्षणाद्यैर्वा पूर्वैरुपहितास्वतः । तेषूत्तरेषु हेतुः स्यादिच्छासन्तानतैश्वरी ॥ ९५ ॥**

---

वर्तमानत्वधीः इत्यत्र वक्तव्यमित्युल्लेखभेदानामागन्तुकत्वमवश्यम्भावीति भावः ॥ **व्यष्टौ**=अण्डादिसृष्टौ, **समष्टौ**=महदादिसृष्टौ । **गुणवैषम्यादिति**। सत्त्वरजस्तमसां वैषम्यादित्यर्थः । ननु प्रलये साम्यावस्थानां सृष्टिकाले वैषम्यावस्थाया अपि ईश्वरेच्छामूलकतया कथमीश्वरेच्छायास्तन्मूलकत्वम् ? अन्योन्याश्रयत्वप्रसङ्गात् इत्यस्वरसादाह—**तन्मूलादिति**। **गुणवैषम्यस्य मूलभूतात् कालादित्यर्थः**। **कालतोऽपि वेति**। स्वाभाविकैः क्षणादिलक्षणैः कालपरिणामैरित्यर्थः । **तादृशावस्थेति**। ईश्वरेच्छावैषम्यहेतुरवस्थेत्यर्थः । ननु प्रलये आदित्यगत्यादीनां क्षणलवाद्युपाधीनामभावात् तत्प्रवाहमूलकत्वमयुक्तमित्यस्वरसादाह—**यद्वेति** । ननु क्षणतदुपाधीनामेवेश्वरेच्छाहेतुत्वे सर्वकार्याणामीश्वरेच्छाहेतुकत्वं न स्यादित्याशङ्क्याह—**उपाधिभिरिति** । **पूर्वक्षणोपहिता, पूर्वक्षणोपाध्युपहिता वा इच्छा** उत्तरोत्तरेच्छादिषु **हेतुः** । अतश्च ईश्वरेच्छा हेतुः संभवेदित्यर्थः । **स्यादिति** । सम्भावनायां

---

तद्बोध्यतावच्छेदकं यत् तदधिकरणकालवृत्तिध्वंसप्रतियोगित्वम्, वर्तमानकार्ये तद्विषयकत्वं स्यादिति वा ; आहोस्वित् कालान्तरीयो यो भूतशब्दः, तद्बोध्यतावच्छेदकं यत् तादृशभूतशब्दाधिकरणकालवृत्तिध्वंसप्रतियोगित्वं कार्यनिष्ठम्, कार्यांशे तत्प्रकारकत्वं वर्तमानतादशायामपि स्यादिति वा । नाद्यः ; आपादकाभावात् । न ह्यस्माभिः कार्ये तदधिकरणकालवृत्तिध्वंसप्रतियोगित्वं स्वीक्रियते ; येनोक्तापत्तिः स्यात्। न द्वितीयः; इष्टापत्तेः । यदा कार्यमतीतं तत्कालवृत्तिध्वंसप्रतियोगित्वस्य कार्यनिष्ठस्य सर्वदेश्वरबुद्धिविषयत्वे कस्यचिदप्यनिष्टस्याप्रसक्तेः । अत उक्तयुक्त्येश्वरबुद्धेर्विषयित्वारूपावस्थाविभेदो दुस्साधः—

तथापि द्रव्येषु ज्ञानस्य संयोग एव विषयतेति वक्ष्यमाणतया कार्यद्रव्येषु संयोगस्य नित्यत्वासंभवादागन्तुकसंयोगरूपविषयतानिरूपकत्वात्मकावस्थाभेद ईश्वरबुद्धेरावश्यक एव । एवम्, "सोऽकामयत बहु स्यां प्रजायेयेति", "तदात्मानं स्वयमकुरुत" इत्यादिभिरपीश्वरबुद्धेरिच्छात्वस्य भेदाः स्वीकार्या इति बोध्यम्। **व्यष्टौ** पञ्चीकरणानन्तरभाविसृष्टौ, **समष्टौ** तत्पूर्वभाविसृष्टौ। **गुणवैषम्यात्** सत्त्वादिगुणवैषम्यात्। गुणवैषम्यस्यापीश्वरेच्छाधीनतया अन्योन्याश्रयप्रसङ्गेन तादृशेच्छायां गुणवैषम्यस्य हेतुत्वासंभवेन तदसाधारण्यायाह **तन्मूलादिति** । गुणवैषम्यस्य हेतुभूतात् कालादित्यर्थः । ननु प्रलये आदित्यगत्यादीनां क्षणलवाद्युपाधीनामभावात् तत्प्रवाहमूलकत्वमयुक्तमित्यस्वरसादाह **यद्वेति** । यद्यपि प्रलये आदित्यगत्यादीनामभावेऽपि सदृशपरिणामसन्तानसद्भावात् तादृशपरिणामानामेव क्षणलवाद्युपाधित्वं संभवति—तथापि कालस्यैव क्षणादिपरिणामस्य सिद्धान्तसिद्धतया तदभिप्रायेणैव यद्वेत्यभिधानमिति बोध्यम् । **पूर्वक्षणादित इति** । तादृशकालपरिणामादित्यर्थः । नन्वीश्वरेच्छाहेतुभूतक्षणतदुपाधीनामीश्वरेच्छाजन्यत्वासंभवात् सर्वकार्याणामीश्वरेच्छाजन्यत्वसिद्धान्तव्याकोपप्रसङ्ग इत्यत आह **उपाधिभिरिति** । पूर्वपूर्वक्षणोपाधिसहिता, तादृशक्षणात्मककालपरिणामसहिता वेश्वरेच्छा

अप्राकृतविचित्रार्थसिसृक्षा विषमा तु या । साऽपि प्रवाहानादित्वात् नोपाध्यन्तरमीक्षते ॥
इच्छासंकल्पसृष्टीनां चक्रवद्वा प्रवर्तनात् । स्यादीशबुद्ध्यवस्थानां तत्र बीजाङ्कुरक्रमः ॥ ९७ ॥
आगमैरैश्वरीं शक्तिमतर्क्यामुपगच्छताम् । ईशस्य तत्तत्सृष्ट्यादौ सहकार्यन्तरेण किम् ॥९८॥
अनित्यमपि विज्ञानमीशस्यास्तीति केचन । तदा त्वप्राकृताक्षादेस्तद्विकासोपयोगिता ॥९९

---

रिक्। प्रवाहानादित्वादिति। उत्तरोत्तरेच्छायां पूर्वपूर्वेच्छा हेतुरिति प्रवाहानादिरित्यर्थः। इच्छासंकल्पेति। प्रथमतः सामान्यत इच्छति, ततस्तु इदं कृत्वा साधयामी(नी?)ति संकल्पयति, तदनन्तरं सृजति; तदुत्तरक्षण एवान्यत् किञ्चिदिच्छति, पुनः तत् संकल्पयति, तत् अनन्तरं सृजति; पुनश्चान्यदिच्छति इत्येवं पूर्वकार्यसमाप्तिरुत्तरकार्ये(र्य?)प्रवाहहेतुरित्येवं चक्रवत् प्रवर्तनात् बीजाङ्कुरन्यायः। न तु पूर्वपूर्वेच्छैव उत्तरोत्तरेच्छाहेतुः; येन प्रवाहानादित्वरक्षान्तर्भावः स्यादिति भावः। सहकार्यन्तरेण किमिति। अप्राकृतपदार्थसृष्ट्यादौ कर्मादिकमनपेक्षितमित्यर्थः। अनित्यमपीति। पूर्वम्, ज्ञानं नित्यम्, तल्लेखभेदाः परं अनित्याः इत्युक्तम्; इदानीं तु ज्ञानमेवानित्यमित्युच्यत इति भेदः। तदा त्विति।

---

उत्तरोत्तरकार्येषु सर्वेषु तादृशेश्वरेच्छान्तरे च हेतुरित्यर्थः। प्रवाहानादित्वादिति। उत्तरोत्तरेच्छां प्रति पूर्वपूर्वेच्छाया हेतुत्वमित्येवमिच्छारूपहेतुप्रवाहस्यानादितया अप्राकृतविचित्रार्थसिसृक्षायां विषमायामपि तत्पूर्वेच्छा कारणम्, तत्रापि च तत्पूर्वेच्छेत्येवमनादिरपर्यनुयोज्यः प्रवाह इत्यर्थः। उपाध्यन्तरम् जीवकर्मादिरूपसहकार्यन्तरम्। ईक्षते=अपेक्षते। तथाच यथा समष्टिसृष्टौ जीवकर्मनिरपेक्षाः तत्तत्कालसहितेश्वरेच्छामात्राधीनास्तत्तत्सृष्टिहेतुभूतसंकल्पाद्यवस्था ईश्वरबुद्धौ भवन्तीत्यभ्युपगम्यते, तद्वदेव अप्राकृतविचित्रार्थसिसृक्षाऽपि तत्तत्कालसहितेच्छावशादेवोत्पद्यते। अतो न तस्या आकस्मिकत्वम्, न वा कालान्तरे तदापत्तिरिति भावः। (?) ननु, "कालं स पचते तत्र न कालस्तत्र वै प्रभुः" इत्यनेन नित्यविभूतिपरिणामेषु कालस्य हेतुत्वाभावप्रतिपादनात् कथं तादृशकार्येषु कालस्य सहकारित्वसंभव इत्यस्वरसात् कल्पान्तरमाह इच्छेति। इच्छा=इदं भवत्वित्याकारिका। संकल्पः इदं कृत्वा साधयानीत्याकारकेच्छाविशेषः। सृष्टिः=तत्तद्वस्तूत्पादिका कृतिः। चक्रवदिति। एकवस्तुविषयिण्येच्छया तत्संकल्पः, संकल्पेन च तत्सृष्टिः; तथा च वस्त्वन्तरेच्छा, तया तत्संकल्पः, तेन च तत्सृष्टिः; तथा चान्यवस्त्विच्छा इत्येवं चक्रवत् परिवर्तनादित्यर्थः। बीजाङ्कुरक्रम इति। कारणसजातीयस्य कार्यादुत्पत्तिः ततः कार्यसजातीयोत्पत्तिरित्येवं क्रमो बीजांकुरक्रमः। ननु कालस्यापि सहकारित्वविरहे कथं कार्योत्पत्तिसंभवः; सर्वथासहकारिरहितादेकस्मात् कारणात् कार्योत्पत्तेरदर्शनादित्यत आह आगमैरिति। सहकार्यन्तरेणेति। कालरूपेणापीति भावः। तथा च ईशशक्तेः सहकार्यन्तराद्यभावेऽप्यचिन्त्यशक्तेर्न तदावश्यकता। 'कालं स पचते' इत्युक्तप्रमाणबलाच्चैवमित्युक्तं भवति।

एतावतेश्वरज्ञानस्य नित्यत्वं तद्गतविषयितभेदादिरूपावस्थानामनित्यत्वमित्युक्तम्। इदानीमीश्वरस्यानित्यमपि ज्ञानान्तरमस्तीति सयूथ्यमतमेवाह अनित्यमपीति। तद्विकासोपयोगितेति। ज्ञाननित्यत्वपक्षे अप्राकृताक्षादेः केवलोल्लेखार्थत्वमेवेति भावः।

यथोक्तं वरदविष्णुमिश्रैः, "ईश्वरज्ञानस्यानित्यस्य सर्वविषयनित्यज्ञानगृहीतग्राहित्वात्" इति। अतः सिद्धं नित्यानित्येच्छाभेदात् ईश्वरादेर्नित्यानित्यशरीरादिमत्त्वम्।

ईश्वरशरीरे च सूक्ष्मव्यूहविभवादिभेदाः श्रीमत्पञ्चरात्रादिभिः प्रपञ्चिता अवगन्तव्याः। संग्रहस्तु—सूक्ष्मं केवलषाड्गुण्यविग्रहं वासुदेवाख्यं परं ब्रह्म पूर्वोक्तम्। परस्मिन्नेव शान्तोदित-नित्योदितविभागोऽपि भाव्यः। वासुदेवसंकर्षणप्रद्युम्नानिरुद्धरूपो व्यूहः। उत्तरोत्तरः पूर्वपूर्व-कारणकः। तत्र वासुदेवे ज्ञानादिगुणाः षडपि आविर्भूताः। संकर्षणादिषु त्रिषु शास्त्रप्रवर्तन-

---

ज्ञाननित्यत्वपक्षे अप्राकृताक्षादीनामलङ्कारार्थत्वमिति द्रष्टव्यम्॥

सूक्ष्मव्यूहविभवादिभेदा इति। "मम प्रकाराः पञ्चेति प्राहुर्वेदान्तपारगाः। परो व्यूहश्च विभवो नियन्ता सर्वदेहिनाम्॥ अर्चावतारश्च तथा" इत्यादिविष्वक्सेनसंहितावचनान्यनुसन्धेयानि। पूर्वोक्तमिति। "सहस्रस्थूणे विमिते दृढ उग्रे यत्र देव नामधिरेव आस्ते" इत्यादिभिः पूर्वमुक्त-मित्यर्थः। शान्तोदितेति। "नित्योदितात् सम्बभूव तथा शान्तोदितो हरिः" इत्याद्युक्तप्रकारेण मुक्तानुभाव्यनित्योदितसंज्ञकपरवासुदेवोत्पन्नः शान्तोदितसंज्ञको (?) व्यूहत्रयहेतुभूतो वासुदेव इत्यर्थः। शास्त्रप्रवर्तनसंहारादीति। "तत्र ज्ञानबलद्वन्द्वात् रूपं संकर्षणं हरेः। शास्त्रप्रवर्तनञ्चापि संहारञ्चैव देहिनाम्॥ बलेन हरतीदं स गुणेन निखिलं मुने। ज्ञानेन तनुते शास्त्रं सर्वसिद्धान्तगोचरम्॥ बलज्ञाने गुणौ तस्य स्फुटं कार्यवशान्मुने।" इति संकर्षणस्य, "ऐश्वर्यवीर्यसंभेदात् रूपं प्रद्युम्नमुच्यते। गुणा-वैश्वर्यवीर्याख्यौ स्फुटौ तस्य विशेषतः॥ ऐश्वर्येण गुणेनासौ सृजते तच्चराचरम्। वीर्येण सर्वधर्माणि

---

सूक्ष्मव्यूहेति। परव्यूहविभवहार्दार्चावतारभेदा इत्यर्थः। श्रीमत्पाञ्चरात्रादिभिरिति। "मम प्रकाराः पञ्चेति प्राहुर्वेदान्तपारगाः। परो व्यूहश्च विभवो नियन्ता सर्वदेहिनाम्। अर्चावतारश्च तथा" इत्यादिविष्वक्सेनसंहितावचनानि अन्यानि चैवंविधानीहानुसंधेयानि। षाड्गुण्यविग्रहमिति। षाड्गुण्यप्रकाशकविग्रहमित्यर्थः। संकर्षणादिषु गुणद्वन्द्वानामेव प्रकाशनात् तद्वैलक्षण्यसिद्धय इदमुक्तम्। पूर्वोक्तमिति। सहस्रस्थूणादिवाक्यैरुक्तमित्यर्थः। परस्मिन्नेवेति। वासुदेवाख्यपरविग्रह[1] एवेत्यर्थः। शान्तोदितनित्योदितविभाग इति। "नित्योदितात् संबभूव तथा

---

1 प्रथमव्याख्याने नित्योदितः परवासुदेवः, शान्तोदितो व्यूहवासुदेव इत्युक्तं पररूपात् व्यूहवासुदेवोत्पत्तेः प्रमाणसिद्धत्वात्। परं तु मूले परस्मिन्नेवेति पदस्वारस्यात् पररूप एव द्वैविध्यं प्रतीयते। पश्चादेव व्यूहप्रस्तावाच्च। स्तोत्ररत्नभाष्ये च चकासतमिति श्लोके पररूपं चतुर्भुजत्वं प्रति-ष्ठाप्य द्विभुजत्वाष्टभुजत्ववचसां संख्यातात्पर्यविरहमाकलय्य नृसिंहकृष्णादिमूर्तिषु उपासनार्थद्विभु-जत्वचतुर्भुजत्वादिवत् उपासनप्रतिष्ठापनाद्यर्थतया निर्वाहं विधाय, "परस्मिश्च नित्योदितशान्तो-दितविभागः संप्रतिपन्नः" इत्युक्तम्। अतो व्यूहवासुदेवादन्यः पररूपविशेष एव स्यात् शान्तोदि-तोऽपि। नित्योदितशान्तोदितेत्यविलिख्य शान्तोदितनित्योदितेति लेखनादपि जन्यजनकभावस्या-स्याविवक्षा लक्ष्यते। अतः परब्रह्मलोकनामानन्त्यात् अनेकेषु पररूपेषु व्यूहकारणभूतं पररूपमन्यत् अकारणमन्यत् इति जगत्सर्गादिव्यूहकार्यप्रवृत्तं सर्वं परमपदस्थमनादि परमिति रीत्या विमृश्यम्। परमेश्वरादौ द्विविधरूपव्यवहारो लक्ष्यते। प्रथमव्याख्याने वासुदेवात् शुभ्रवासुदेवाभिन्नश्याम-नारायणोत्पत्तिरप्युक्ता। केवलषाड्गुण्येत्यत्र केवलत्वं सिद्धक्षादिव्यापारराहित्यपरं स्यात्।

संहाराद्यौपयिकगुणद्वन्द्वत्रयोन्मेषेण चतुष्कमनाविर्भूतम्। सर्वे ते सर्वत्र सन्त्येव। एषाञ्च प्रत्येकमवान्तरावतारा अनन्ताः॥ पद्मनाभमत्स्यादिदशकादयो विभवभेदाः॥ स्वयंव्यक्त-दैव-आर्षादयस्तु अर्चावतारभेदाः। दैवादिष्वपि विशिष्टप्रतिष्ठानन्तरं प्रसादोन्मुखेश्वरसंकल्पाधीनमप्राकृतत्वमनुसन्धेयम्। प्राकृताप्राकृतसंसर्गोऽपि नानुपपन्नः। अन्यथा प्राकृतलोकेषु भगवदवताराः(रः?) परम-

प्रवर्तयति सर्वशः॥" इति प्रद्युम्नस्य, "शक्तितेजःसमुत्कर्षात् अनिरुद्धतनुर्हरेः। शक्तितेजोगुणौ तस्य स्फुटौ कार्यवशान्मुने॥ शक्त्या जगदिदं सर्वमद्भुताण्डं निरन्तरम्। बिभर्ति पाति च हरिर्मणिसानुरिवाणुकम्॥ तेजसा निखिलं तत्त्वं ज्ञापयत्यात्मनो मुने॥" इत्यनिरुद्धस्य च गुणप्रकाशोऽनुसन्धेयः। तथा अन्यत्रापि, "स वासुदेवो भगवान् सृष्टिस्थित्यन्तमुक्तिदः। आत्मानं स द्विधा चक्रे पुनः केनापि हेतुना॥ तयोरेको वासुदेवः शुद्धस्फटिकसन्निभः। नारायणो द्वितीयस्तु नीलाम्बुदसमप्रभः॥ सङ्कर्षणो वासुदेवात् तस्मात् प्रद्युम्नसंभवः। प्रद्युम्नादनिरुद्धोऽभूत् सर्वे एते चतुर्भुजाः॥ ज्ञानादिगुणवानेव वासुदेवः प्रकीर्तितः। षण्णां गुणानां वैषम्ये वक्ष्यन्ते मूर्तयः क्रमात्। ज्ञानाधिको भवेत् षण्णां संकर्षणसमाह्वयः॥ बलाधिकः; प्रद्युम्नः स्यादैश्वर्ये; चा(ऽथा?)निरुद्धकः॥" इत्यादीनि प्रमाणानि च अत्रानुसन्धेयानि। सर्वे त इति। सर्वे गुणाः सर्वत्र सन्तीत्यर्थः। विभवभेदा इति। वैखानसाहिर्बुध्न्यसंहितादौ, "पद्मनाभो ध्रुवोऽनन्तः शक्त्यात्मा मधुसूदनः। विद्याधिदेवः कपिलो विश्वरूपो विहङ्गमः। क्रोडात्मा बडबावक्त्रो धर्मो वागीश्वरस्तथा॥ देव एकार्णवशयः कूर्मः पातालधारकः। वराहो नारसिंहश्चाप्यमृताहरणस्तथा॥ श्रीपतिर्दिव्यदेहोऽथ कान्तात्माऽमृतधारकः। राहुजित् कालनेमिघ्नः पारिजातहरो महान्॥ लोकनाथस्तु शान्तात्मा दत्तात्रेयो महाप्रभः॥ न्यग्रोधशायी भगवान् एकशृङ्गतनुस्तथा। देवो वामनदेहस्तु सर्वव्यापी त्रिविक्रमः॥ नरो नारायणश्चैव हरिः कृष्णस्तथैव च। ज्वलत्परशुधृत् रामो रामश्चान्यो धनुर्धरः॥ वेदविद्भगवान् कल्की पातालशयनस्तथा। प्रादुर्भावगणा मुख्या इतीमे विभवाह्वयाः॥", "मत्स्यः कूर्मो वराहश्च नरसिंहश्च वामनः। रामो रामश्च रामश्च कृष्णः कल्की जनार्दनः" इत्यादिप्रमाणानि अत्रानुसन्धेयानि। अप्राकृतत्वमनुसन्धेयमिति। "बिम्बाकृत्याऽऽत्मना बिम्बे समागत्यावतिष्ठते। अर्चापि लौकिकी या सा भगवद्भावितात्मनाम्॥ मन्त्रमन्त्रेश्वरन्यासात् साऽपि षाड्गुण्यविग्रहा" इत्यादिप्रमाणानि अनुसन्धेयानि। उक्तञ्च गद्यव्याख्याने, "परव्यूहादिवत् तत्तद्विग्रहानुप्रवेशात् अर्चाऽपि षाड्गुण्यप्रकाशकशुद्धद्रव्यमयी इत्यर्थः।" इति। ननु अप्राकृतस्य भगवद्विग्रहस्य प्राकृतलोक(ह)संसर्गः कथमित्याशङ्क्य रामकृष्णादिवदुपपत्तेरिति परिहरति प्राकृतेति। परमपदेऽपीति। अत्र परमपदशब्दो विरजानदमभिप्रायः। विशा-

शान्तोदितो हरिः" इत्यादिकमिह भाव्यम्। सर्वे त इति। सर्वे गुणाः सर्वत्र सन्त्येवेत्यर्थः। एषामिति। वासुदेवादिव्यूहानामित्यर्थः। प्रत्येकमवान्तरावतारा इति। व्यूहवासुदेवादुत्पन्नाः केशवनारायणमाधवादयः, संकर्षणादुत्पन्नाः गोविन्दविष्णुमधुसूदनादयः, प्रद्युम्नादुत्पन्नाः त्रिविक्रमवामनश्रीधरादयः, अनिरुद्धादुत्पन्नाः हृषीकेशपद्मनाभदामोदरादयश्च व्यूहान्तरसंज्ञिताः अनन्ता इत्यर्थः। पद्मनाभेत्यादि। पद्मनाभश्च मत्स्यादिदशकश्चेति द्वन्द्वे ते आदी येषां ते इति विग्रहात् पद्मनाभादयो मत्स्यादिदशकादयश्चेत्यर्थः। परमपदेऽपीति। अत्र परमपदशब्देन विरजनादीरूपशुद्धसत्त्वद्रव्यं विवक्षितम्।

पदेऽपि अर्चिरादिमार्गेण सूक्ष्मशरीरस्य, वैदिकपुत्रादेर्वा गमनं कथं घटेत? ॥ हृत्पद्मकर्णिकामध्य-(?)[1]गतस्यान्तर्यामिणः परस्य विशेषतः सूक्ष्मान्तर्याम्यवतारः। विचित्रा च भगवत इव विग्रहस्यापि व्याप्त्यादिशक्तिः। तथैव धर्मिग्राहकसिद्ध्या विपरीततर्काणां प्रतिक्षेपः। श्रीमद्गीतैकादशाध्याये

---

माहात्म्यानुवृत्तसूक्ष्मशरीरस्य विरजा[2]स्नानानन्तरमेव निवृत्तिप्रतिपादनात्; विरजायाश्च शुद्धसत्त्वमयत्वात्, प्राकृताप्राकृतसंसर्ग इत्यर्थः। न तु वैकुण्ठलोकाभिप्रायः, सूक्ष्मशरीरस्य तत्र गमनाभावादिति द्रष्टव्यम्। वैदिकपुत्रादेरिति। अत्र र्चिरादिनेत्यस्य नान्वयः; परमपदसोपाने अर्चिरादिमार्गेण गमनात् पुनरावृत्तिरित्युक्तत्वादिति ध्येयम्। परस्य विशेषत इति। सर्वप्रपञ्चव्यापिभगवद्विग्रहातिरिक्त[:?]-तत्तद्धृदयपद्मवर्ती अन्योऽप्यन्तर्यामिविग्रहोऽस्तीत्यर्थः। विपरीतेति। देहत्वे परिच्छिन्नत्वविन शित्वादि-

---

सूक्ष्मशरीरस्य विरजानदीतरणविरहात् तत्स्नानानन्तरमेव तन्निवृत्तेश्च। वैदिकपुत्रादेरिति। अत्रार्चि-रादिनेत्यस्य नान्वयः; तस्यार्चिरादिना गमनविरहात्। अर्चिरादिगतेर्विद्याप्रकरणपठिततया तच्छून्यस्य तदसंभवात्। परमपदप्राप्तिस्तु वचनबलात् भगवत्स्वातन्त्र्यसिद्धा। न हि वैदिकपुत्राणामर्चिरादिना गमनमित्यत्र किञ्चित् प्रमाणमुपलभ्यते। न च परमपदप्राप्तिरेवार्चिरादिगमनमन्तरेणानुपपन्ना तत्कल्पिकेति वाच्यम्—मार्गान्तरेणापि परमपदप्राप्तिसंभवस्य श्रीमद्रहस्यत्रयसारेऽनुगृहीतत्वात्। अत एव तेषां पुनरावृत्तिः, "एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते" इत्यर्चिरादिना गतस्यैव पुनरावृत्त्य-भावप्रतिपादनात्। स्पष्टमिदं श्रीमत्परमपदसोपाने। यद्यपि, "विभवार्चनात् व्यूहं प्राप्य" इत्युक्त-मार्गान्तरेणापि परं ब्रह्म वासुदेवाख्यं सूक्ष्मं प्रपन्नानां पुनरावृत्तिर्नास्त्येव—तथापि[3] यादृशमार्गेण परमपदं प्राप्तानां पुनरावृत्तिर्नास्ति, तदतिरिक्तमार्गेणैव वैदिकपुत्राणां परमपदप्राप्तिरिति पुनरावृत्तिबलात् सिध्यतीति न काचिदनुपपत्तिः। परस्य विशेषत इति। [4]सर्वप्रपञ्चव्यापिभगवद्विग्रहातिरिक्तः तत्तद्धृदयपद्मवर्त्यन्योऽप्यन्तर्यामिविग्रहोऽस्तीति। अथवा हृत्पद्मकर्णिकामध्यगतस्यान्तर्यामिणः परस्येति दिव्यात्मस्वरूपमेव विवक्षितम्। सर्वगतत्वात् हृत्पद्मकर्णिकामध्यगतमपि। विशेषतस्सूक्ष्मा-न्तर्याम्यवतार इति। दिव्या[त्मस्वरूपस्य?] अनुप्रविश्य नियन्तृतयाऽन्तर्यामिव्यपदेशार्हत्वेऽप्यवतारविशेष

---

1 'अत्राशुद्धः पाठः। 'हृत्पद्मकर्णिकामध्यगतोऽस्यान्तर्यामिणः परस्य विशेषतः सूक्ष्मोऽन्तर्याम्यवतारः' इति स्यात्। रहस्यत्रयानुसाराच्च। अवतारशब्दश्चावतीर्णमूर्तिपरतया प्रसिद्धः' इत्यस्मदाचार्याः।

2 स्नानेति। तां मनसाऽत्येति इति विरजातिलंघनमेवोक्तम्; न तु स्नानमित्यन्ये। परमपदसोपाने शुद्धसत्त्वद्रव्यमिदं विरजाख्यं त्रिगुणशुद्धसत्त्वयोः सीमेति पक्षमुक्त्वान्यस्य पक्षान्तर-मुक्तम्, ब्रह्मलोके अरह्रदाद्यतिलंघनानन्तरमेव विरजाप्राप्तेः (कौषी.) श्रुत्युक्ततया विरजा दिव्यजनपद-सीमैवेति। एवञ्च जनपदात् पूर्वं वैकुण्ठभुवनं परमपदान्तर्गतं बहुदूरमतीतम्। तावत् सूक्ष्मशरीरमनु-वर्तत इति। रहस्यत्रयसारे अरह्रदप्रस्तावो नास्ति। 'विरजापारं प्रापय्य अप्राकृतशरीरं प्रदाय ऐरम्मदीयं सरः संगमय्य सोमसवनाख्यमश्वत्थमुपगमय्य मालाञ्जनादिहस्ता अप्सरसः प्रत्युद्गमय्य ब्रह्मालंकारे-णालंकार्य ब्रह्मगन्धरसतेजांसि प्रवेश्य" इति क्रमो दर्शितः। छान्दोग्ये च, "अरश्च ण्यश्चार्णवौ" इति।

3 तथापीति। इन्द्रलोकब्रह्मलोकादिगतानामिव संपूर्णार्चिरादिमार्गाभावेऽपि विभवादिप्राप्तिकृत-क्रममुक्तिस्थलेऽपि यथायथमर्चिरादिमार्गसंबन्धो नियमेनास्त्येव। नैवं वैदिकपुत्रविषय इति प्राहुः।

4 व्यापिभगवद्विग्रहस्यात्र वाक्येऽभिप्रेतत्वमुत्तरमूलवाक्यस्वारस्यात् ज्ञायत इति भावः।

च विग्रहस्य व्यापकत्वकारणत्वादिकं व्यक्तमेव भाष्यकारैः प्रतिपादितम्। "इहैकस्थं जगत् कृत्स्नं पश्याद्य सचराचरम्। मम देहे गुडाकेश! यच्चान्यद्द्रष्टुमिच्छसि॥" इति। "इह=मम एकस्मिन् देहे, तत्रापि एकस्थं=एकदेशस्थं सचराचरं कृत्स्नं जगत् पश्य। यच्चान्यत् द्रष्टुमिच्छसि, तदप्येकदेहैकदेश एव पश्य" इत्युक्तम्। तथा, 'तत्रैकस्थं जगत् कृत्स्नं प्रविभक्तमनेकधा। अपश्यत् देवदेवस्य शरीरे पाण्डवस्तदा॥" इति, "देवदेवस्य दिव्यशरीरेऽनेकधा प्रविभक्तं ब्रह्मादिविविधविचित्रदेवतिर्यङ्मनुष्यस्थावरादिभोक्तृवर्ग-पृथिव्यन्तरिक्षस्वर्गपातालातलवितलसुतलादिभोगस्थान-भोग्यभोगोपकरणभेदभिन्नं प्रकृतिपुरुषात्मकं कृत्स्नं जगत्" इत्युक्तम्। तथा, "सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम। देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः॥" इति, "ममेदं सर्वस्य प्रशासनेऽवस्थितं सर्वाश्रयं सर्वकारणभूतं रूपं यत् दृष्टवानसि, तत् सुदुर्दर्शं=न केनापि द्रष्टुं शक्यम्" इत्याद्युक्तम्। अस्त्रभूषणाध्यायोक्तश्च सर्वाश्रयत्वप्रकारोऽनुसन्धेयः। अन्यत्र चोक्तं भगवता पराशरेण, "समस्ताः शक्तयश्चैता नृप! यत्र प्रतिष्ठिताः। तत् विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत्॥ समस्तशक्ति रूपाणि तत् करोति जनेश्वर!। देवतिर्यङ्मनुष्याख्याचेष्टावन्ति स्वलीलया॥" इत्यादि।

एषु सर्वेषु भगवतो विग्रहेषु सांसारिकफलप्रदान एव मात्रया तारतम्यम्; निःश्रेयसं तु व्यापकानुसन्धायिनां सर्वत्र हस्तापचेयम्। यच्च, "विभवार्चनात् व्यूहं प्राप्य" इत्यादि, तत् व्यापकानुसन्धानविधुराधिकारिविशेषा[1]पेक्षयेति मन्तव्यमिति॥

---

प्रसङ्ग इत्यादिविपरीततर्काणामित्यर्थः। एकस्थमिति। अनेन विग्रहैकदेशस्यैव कृत्स्नजगद्व्याप्तत्वमुक्तं भवतीति भावः। अत्र शुद्धसत्त्वस्याघोवधिकथनं भगवद्विग्रहविशेषव्यतिरिक्तविषयं द्रष्टव्यम्। अस्त्रभूषणेति। "क्षराक्षरमयो विष्णुर्बिभर्त्यखिलमीश्वरः। पुरुषाव्याकृतमयं भूषणास्त्रस्वरूपवत्॥" इत्यादिवचनोक्तः सर्वाश्रयत्वप्रकार इत्यर्थः। समस्तेति। समस्तशक्ति तत् रूपाणि करोतीति योजना। मात्रयेति। वैप्रचमान्द्यादिभिरिति भावः। व्यापकानुसन्धायिनामिति। भगवत्स्वरूपे व्यापकत्वानुसन्धायिनामित्यर्थः। अथवा व्यापकमन्त्रानुसन्धायिनामित्यर्थः। यच्च विभवार्चनात् व्यूहं प्राप्येति। इदमुपलक्षणम्, "अर्चोपासनया क्षीणे कल्मषेऽधिकृतो भवेत्। विभवोपासने पश्चात् व्यूहोपास्तौ

---

एवान्तर्यामिक्रमात्स्वया निवेशयत इति भावः। व्याप्त्यादीति आदिना कारणत्वादिसंग्रहः। विपरीततर्काणामिति। देहत्वे परिच्छिन्नत्वविनाशित्वादिकं स्यादिति विपरीतसाधकतर्काणामित्यर्थः। एकस्थमिति। एकदेशस्थमित्यर्थः। अनेन विग्रहैकदेशस्यैव जगदाश्रयत्वमुक्तमिति भावः। अत्र शुद्धसत्त्वस्याघोवधिकथनं भगवद्विग्रहविशेषव्यतिरिक्तविषयं द्रष्टव्यमित्याचक्षते। अन्ये तु श्रीविश्वरूपविग्रहस्य न विभुत्वम्; तथा सति [हस्तपादादि?]व्यवस्थानुपपत्तिप्रसंगात्। नित्यविभूतेरधःपरिच्छिन्नत्वग्राहकप्रमाणबाधप्रसंगात्। श्री-द्रौतभाष्यादिषु व्यापकत्वाभिधानं तु अत्यन्तप्रचुरत्वाभिप्रायमित्याहुः। अस्त्रभूषणाध्यायोक्त इति। "क्षराक्षरमयो विष्णुर्बिभर्त्यखिलमीश्वरः। पुरुषाव्याकृतमयं भूषणास्त्रस्वरूपवत्" इत्याद्युक्तः सर्वाश्रयत्वप्रकारोऽप्यनुसंधेय इत्यर्थः। स्वरूपेणास्त्रभूषण.........

भगवद्विग्रहस्य सर्वाश्रयत्वमुक्तमिति भावः। मात्रया अल्पम्। तारतम्यमिति।..........भावः। व्यापकानुसंधायिनामिति। व्यापकमन्त्रानुसंधायिनामित्यर्थः।

---

[1] अधिकारिविशेषेति। क्रममुक्तिकांक्ष्यधिकार्यपेक्षयेत्यर्थः।

संवित् या निरवद्यनन्दथुमयी निष्कृष्टसत्त्वाकृतिः
स्वाच्छन्द्यात् कमलापतेर्भगवतो भोगाय लोकायते ।
चिन्तादूरतरा चिरन्तनतमोनिश्शेषमोक्षस्थली
चित्ते सन्निदधातु मे शुभतरस्वैरावतारात्मिका ॥ १०० ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु न्यायसिद्धाञ्जने नित्यविभूतिपरिच्छेदश्चतुर्थः ।

---

ततः परम् ॥ सूक्ष्मे तदनु शक्तः स्यादन्तर्यामिणमीक्षितुम् ।" इत्यादीनि अन्तर्यामिविग्रहमात्रोपासनस्य मोक्षसाधकत्वप्रतिपादकान्यपि वचनानि व्यापकानुसन्धानविधुराधिकारिविशेषापेक्षयेति द्रष्टव्यम् ॥

संविदिति । "तत्रानन्दमया भोगा लोकाश्चानन्दलक्षणाः", "षाड्गुण्यप्रसरो नित्यस्त्वाच्छन्द्यात् देशतां गतः" इत्यादिप्रमाणानुसारेण उत्कृष्टानन्दमयी शुद्धसत्त्वरूपा या अतवर्या संवित् भगवतो भोगाय लोकतां भजते, सा हृदि सन्निदधातु इत्यर्थः ॥

इति श्रीमत्तातयार्य........श्रीरङ्गरामानुजमुनेः कृतिषु
न्यायसिद्धाञ्जनव्याख्यायां नित्यविभूतिपरिच्छेदस्तुरीयः ॥

---

संविदिति । ज्ञानरूपेत्यर्थः । येति । "तद्विष्णोः परमं पदम्", "सदक्षरे परमे व्योमन्" इत्यादिप्रमाणप्रसिद्धिर्विवक्षिता । निरवद्यनन्दथुमयी अल्पत्वास्थिरत्वादिदोषरहितसुखरूपा....... दृशसुखरूपा वा । निष्कृष्टसत्त्वाकृतिः रजस्तमस्सामानाधिकरण्यशून्यसत्त्वगुणाधिकरणधर्मिक (णभूता?)। स्वाच्छन्द्यात् कमलापतेर्भगवत इति । तादृशभगवन्नित्येच्छावशादित्यर्थः । उभयेच्छाप्रयोज्यत्वबोधनाय कमलापतेरिति विशेषणोपादानम् । भोगायेति । कमलापतेर्भगवत इत्यस्यात्रापि संबन्धः । भोगस्योभयगतत्वबोधनायात्र कमलापतेरिति विशेषणम् । लोकायते लोकतां प्राप्नोति । वर्तमाननिर्देशो लोकत्वस्य[ स्थिरत्व ? ]बोधनाय । यत्तदोर्नित्यसंबन्धात् सेति आवश्यकम्। चिन्तादूरतरा= सावयवत्वादनित्यत्वं स्यादित्यादिचिन्ताया अत्यन्तदूरा । त्रिगुणस्य सावयवत्वपक्षे उक्तचिन्तायास्त [त्रात्यदूरता ?]....इयं त्वत्यन्तदूरेति भावः। अथवा विधिशिवादिभिरपि ध्यातुमशक्येत्यर्थः । चिरन्तनतमोनिश्शेषमोक्षस्थली= अनाद्यविद्यानिःशेषनिवृत्तिस्थानभूता । मे चित्ते तदेकभोगाध्यवसाययुक्तस्य मम ध्याने । संनिदधातु संनिधिं प्राप्नोतु । विषयीभवत्विति यावत् । शुभतरस्वैरावतारात्मिका आश्रिताभीष्टसिद्धौ चित्तालम्बनसौकर्यादिना स्वरूपादप्य[तिशयाय?] स्वेच्छाकृतावताररूपा । नित्यविभूतेरेव भगवदवताररूपत्वाभिप्रायमिदम् । अथवा शुभतरस्वैरावतारः आत्मा यस्येति विग्रहे यस्यात्मा यद्द्रव्यस्वरूपम्...भगवदवतारोपादानद्रव्यभूतेत्यर्थः । स्वैरावतारादिकेति पाठे आदिरेव आदिका(?) स्वैरावतारस्यादिकेति व्युत्पत्त्योक्तार्थ एव स्पष्टं प्रतीयत इति बोध्यम् ॥

इति श्रीमहामहोपाध्यायश्रीकृष्णतातयार्यकृतिषु न्यायसिद्धाञ्जनव्याख्यायां
रत्नपेटिकासमाख्यायां नित्यविभूतिपरिच्छेदश्चतुर्थः ।

—o—o—

श्रीः

# न्यायसिद्धाञ्जने बुद्धिपरिच्छेदः (५) ।

* * * * *

अथ मतिर्निरूप्यते । सकर्मकावभासत्वम् सकर्तृकावभासत्वम् इत्यादि तल्लक्षणम् । न्यायतत्त्वे तु प्रथमाधिकरणे लक्षणान्तराणि बहूनि दूषयित्वा, "अत्यन्तवेगिताऽत्यन्तसौक्ष्म्यं

---

## रङ्गरामानुजीयम्

**सकर्मकावभासत्वमिति** । अवभासत्वमात्रस्य आत्मस्वरूपेऽतिप्रसक्तत्वात् **सकर्मकेति** विशेषणम् । एवमुत्तरत्रापि **सकर्तृक**त्वविशेषणमिति द्रष्टव्यम् । **अत्यन्तवेगितेति** । यद्वशात् मुक्तिकाले धीसंकोचककर्मापगममात्रेण सकलब्रह्माण्डवर्तिपदार्थसंयोगः, सा **अत्यन्तवेगिता** । **अत्यन्त-सौक्ष्म्यमिति** । यद्वशात् मुक्तौ सर्वव्यापनशीलाया बुद्धेः संसारदशायां मशकदेहान्तर्मितत्वेऽपि न बुद्ध्यवयवानां परस्परप्रतिघातः, तदत्यन्तसौक्ष्म्यम् । **निर्भरतेति** । निर्भरत्वमत्यन्तलाघवम्,

---

## रत्नपेटिका

**अथ मतिर्निरूप्यत इति** । नित्यविभूतिनिरूपणानन्तरं धर्मभूतज्ञानं निरूप्यत इत्यर्थः । **सकर्मकावभासत्वमिति** । स्वभिन्ननिष्ठविषयतानिरूपकज्ञानत्वमित्यर्थः । धर्मिवारणाय निरूपकान्तम् । शक्तिवारणाय ज्ञानत्वम् । शक्तेरपि हि [सविषयत्वं(?)] सिद्धान्तसिद्धम् । स्वनिष्ठविषयतानिरूपके धर्मिणि तद्दोषतादवस्थ्यवारणाय स्वभिन्ननिष्ठेति । प्रत्यक्त्वादीनां धर्मिभास्यत्वपक्षे स्वापृथक्सिद्धधर्म-भिन्नत्वमपि निवेशनीयम् । **सकर्तृकावभासत्वमिति** । आश्रयतानिरूपकज्ञानत्वमित्यर्थः । जानातीत्यादौ कर्तरि ज्ञानाश्रयताया एव प्रतीत्या ज्ञधात्वर्थं प्रति तस्या एव कर्तृत्वरूपत्वात् । धर्मि(आत्म)वारणाय सकर्तृकेति । पाकादिवारणाय ज्ञानत्वम् । यद्यपीश्वरनिष्ठाश्रयतानिरूपकत्वं धर्मिण्यप्यक्षतम् । तस्य सर्वाधारत्वात् । न चेश्वरावृत्त्याश्रयतानिरूपकत्वमेवाभिमतमिति वाच्यम्, ईश्वरीयधर्मभूतज्ञाने अव्याप्ति-प्रसंगात्—तथापीश्वरीयधर्मभूतज्ञाननिष्ठा या आधेयताव्यक्तिः तद्व्यक्तिभिन्ना या ईश्वरनिरूपिताधेयता, तदतिरिक्ताधेयताया एव विवक्षिततया न दोषः । तादृशाधेयता च तत्तद्धर्मभूतज्ञाननिष्ठा जीवनिरूपिता ईश्वरनिरूपिता चाधेयतैव ; न तु जीवनिष्ठा ईश्वरनिरूपिता सेति तत्रातिप्रसक्त्यभावात् । आधेयता चापृथक्सिद्धिसंबन्धावच्छिन्ना ग्राह्या । तेन काले कालिकविशेषणतया [आत्मनो ?] वृत्तावपि न क्षतिः । **इत्यादीति** आदिना आत्मनित्यविभूत्यतिरिक्तस्वयम्प्रकाशत्वग्रहः । **अत्यन्तवेगितेति** । अपकर्षानाश्रयवेगवत्त्वमित्यर्थः । ज्ञानादतिशयितवेगवत् नास्त्येव । इतरगताः सर्वेऽपि वेगाः ज्ञानवेगादपकृष्टा एव । अत एव........कर्मापगममात्रेण क्षणादेव ब्रह्माण्डवर्ति.... .... .... .... .... .... ते, यद्वशान्मुक्तौ सर्वव्यापनशीलाया बुद्धेः संसारदशायामत्यन्तसंकुचितत्वेऽपि न बुद्ध्यवयवानां परस्पर-प्रतिघातः । **तथा निर्भरता=अत्यन्तनिर्भरता** । अपकर्षानाश्रयलाघवम् । पूर्वोक्तवेगातिशयोपयोगिनी

निर्भरता तथा । स्वसत्ताकालभाव्याप्तिर्ज्ञाने लक्ष्मचतुष्टयम् ॥" इति स्वोक्तलक्षणोपसंहारः कृतः । अत्र यावदपेक्षितं विशेषणमूह्यम् ॥ सा च विषयप्रकाशवेलायां स्वाश्रयस्यैव आत्मनः स्वयम्प्रभा । अन्यकालान्यपुरुषगा तु स्मृत्यनुमानादिविषयः संसारिणाम् । इतरेषां तु सर्वज्ञतया अन्यकालान्यपुरुषनिष्ठाऽपि स्वकीयेन प्रत्यक्षेण विषयीक्रियते । तथाच भाष्यम्, "यत्तु अनुभूतेः स्वयम्प्रकाशत्वमुक्तम्; तत् विषयप्रकाशनवेलायां ज्ञातुरात्मनस्तथैव; न तु सर्वेषां सर्वदा तथैवेति नियमोऽस्ति" इति। धियः स्वयम्प्रकाशत्वे वेद्मीत्याद्युपलम्भनम् । मानमाध्यक्षपक्षादेरपि मानमितीष्यताम् ॥

---

यद्वशात् पूर्वोक्तवेगसंपत्तिः । स्वसत्ताकालभाव्याप्तिरिति । स्वसत्ताकाले प्रकाशस्य व्याप्तत्वमित्यर्थः । यावदपेक्षितमिति । उक्तलक्षणेषु स्वसत्ताकालभाव्याप्त्यादीनामात्मस्वरूपत्वमादिषु अतिव्याप्तिसंभवे तद्वारणार्थं विशेषणानि देयानीत्यर्थः । ननु वेद्मीत्यनुपलम्भो मानसप्रत्यक्षरूपो वा, प्रयत्ल्य लिङ्गजन्यानुमितिरूपो वा स्यात् इत्याशङ्क्याह मानमाध्यक्षेति । मानमाध्यक्षपक्षादेरित्यहं वेद्मीत्यनुपलम्भनमेव स्वप्रकाशत्वे प्रमाणमित्यर्थः । मानमाध्यक्षपक्षादेरित्याकारश्चोत्तरत्र स्पष्टः ।

---

शक्तिः । तत्कार्यस्य वेगस्य सर्वोत्कृष्टतया साऽपि सर्वोत्कृष्टैवेति लक्षणसङ्गतिः । स्वसत्ताकालभाव्याप्तिरिति । स्वसत्ताकाले प्रकाशनियम इत्यर्थः । स्वाधिकरणकालत्वव्यापकस्वीयप्रकाशकत्वमिति यावत् । प्रकाशो ज्ञानविषयत्वम् । ननु नित्यविभुषु ईश्वरनित्यमुक्तज्ञानेषु प्रथमलक्षणाव्याप्तिः । तेषु हि क्रियैव नेति नतरां वेगप्रसक्तिः । अत एव तृतीयलक्षणमपि न तेषु वर्तते—कदाचिदपि तादृशवेगप्रसक्तिरहितेषु तच्छक्तेः दुर्वचत्वात् । चतुर्थमपि लक्षणमात्मन्यतिव्याप्तम्; अव्याप्तञ्च बद्धज्ञानेषु । सुषुप्त्यादिदशायां प्रकाशविरहादित्यत आह अत्रेति । यावदपेक्षितमिति । अयं भावः—प्रथमलक्षणमत्यन्तवेगवद्वृत्तिद्रव्यविभाजकोपाधिमत्त्वरूपं परिष्कार्यमिति नोक्ताव्याप्तिः । एवं तृतीयलक्षणमपि । चतुर्थलक्षणे तु परप्रकाशकत्वे सति नित्यविभूत्यन्यत्वं विशेषणं देयम् । तेनात्मनि नित्यविभूतौ च नातिव्याप्तिः। विशेष्ये च किञ्चिन्निष्ठस्वविषयताधिकरणकालत्वव्यापकत्वमेव प्रकाशे निवेश्यमिति नाव्याप्तिः । सुषुप्त्यादिदशायां धर्मभूतज्ञानस्य निर्विषयत्वादिति । यद्यपि सविषयकत्वनिवेशमात्रेण घटादिवारणं भवति, तथापि शक्तावतिव्याप्तिभिया उक्तगुरुभूतविशेष्यादरणम् ।

ननु ज्ञानस्य मानसप्रत्यक्षेण ज्ञाततालिङ्गकानुमित्या वा वेद्यत्वात् उत्पत्तिक्षणे तस्य ज्ञानविषयतारूपप्रकाशविरहात् बद्धज्ञानेष्वव्याप्तिरित्यत आह सा चेति। मतिश्चेत्यर्थः। विषयप्रकाशवेलायामिति। तेन मतेः स्वयंप्रकाशत्वे सुषुप्त्यादिदशायामपि भानं स्यादिति शङ्काया नावकाशः । स्वाश्रयस्यैवेति । तेन अन्यं प्रति भानं स्यादिति शङ्कानवकाशः । स्मृत्यनुमानादीति । तेन नातीतज्ञानादिव्यवहाराद्यनुपपत्तिरिति भावः। स्वयम्प्रकाशत्व इति । स्वनिरूपितविषयत्व इत्यर्थः। भक्षादेरिति आदिना ज्ञाततालिङ्गकानुमितिनिरास इत्यहः। मानमिति । मितिप्रयोजकमित्यर्थः। अयं भावः—वेद्मीत्युपलम्भेन ज्ञानस्य ज्ञानविषयता सिद्ध्यतीत्येतदविवादम् । तादृशविषयतानिरूपकं ज्ञानञ्च स्वभिन्नं मानसप्रत्यक्षरूपमिति नैयायिकाः। तादृशं ज्ञाततालिङ्गानुमितिरूपमिति भाट्टाः, स्वात्मकमेवेति प्राभाकराः। तत्र वेद्मीत्युपलम्भसिद्धां

किञ्च— स्वधीविशेषं सर्वज्ञोऽप्यध्यक्षयति वा न वा ।
आद्ये सिद्धा स्वतस्सिद्धिः अन्यत्रापवेदिता ॥ १०२ ॥
ज्ञानमस्तीति विज्ञानं स्वात्मानं साधयेन्न वा । पूर्वत्र स्वप्रकाशत्वं सर्वासिद्धिरतोऽन्यथा ॥

सर्वज्ञोऽपीति । अत्र अपिर्भिन्नक्रमः । 'धीविशेषमप्यध्यक्षयति वा न वा' इति विकल्पः । अन्यत्रा सर्ववेदितेति । ननु स्व-स्वेतर शेषगोचरज्ञानाभ्यां सार्वज्ञ्यमीश्वरस्य स्यादिति चेन्न ; तादृशज्ञानद्वयवान् ईश्वर इत्यत्र प्रमाणाभावात् । न च सर्वज्ञत्वान्यथानुपपत्तिरेव प्रमाणमिति वाच्यम् ; स्वज्ञानिर्वाह-कैकज्ञानेनैवोपपत्तेः । ननु ईश्वरस्य एकोनसर्वज्ञत्वमस्त्विति चेन्न ; स्वज्ञानमजानता सर्वज्ञेन स्वस्य तदाधारत्वम्, अन्येषां तदनाधारत्वम्, तद्विषयत्वतदन्यत्वादीनि च स्वज्ञानघटितानि सर्वाणि दुर्ज्ञानि स्युः । ततश्च अनन्तज्ञानवत्त्वमिवानन्ताज्ञानवत्त्वमपि स्यादिति भावः । सर्वासिद्धिरतोऽन्यथेति । ज्ञानमस्तीति विज्ञानस्य स्वात्मविषयकत्वाभावे अनिश्चितसत्ताकस्य तस्य ज्ञानस्यासत्त्वप्रसङ्गेन तद्विषयस्य सर्वज्ञानास्तित्वस्याप्यसत्त्वेन ज्ञानासत्त्वे विषयासत्त्वप्रसङ्गेन सर्वासत्त्वप्रसङ्गादिति भावः ॥

ज्ञाननिष्ठविषयतां पक्षीकृत्य स्वेतरानिरूपितत्वेन हेतुना स्वनिरूपितत्वं साधनीयम् । तत्र च मानसप्रत्यक्ष-मङ्गादिना स्वेतरानिरूपितत्वस्य, वेद्यान्तरानुपलम्भेन पक्षस्य किञ्चिन्निरूपितत्वस्य च सिद्धिरिति । अत्र यदितरानिरूपितत्वे सति किञ्चिन्निरूपितत्वं यत्र, तत्र तन्निरूपितत्वमिति सामान्यमुखव्याप्तौ घटादिनिरूपिताधिकरणत्वादिकं दृष्टान्तः । अथवा तज्ज्ञाननिष्ठायामुक्तविषयतायां तज्ज्ञानेतरानिरूपितत्वे सति किञ्चिन्निरूपितत्वेन हेतुना [1]तज्ज्ञाननिरूपितत्वे साध्ये घटादिनिष्ठा तज्ज्ञाननिरूपितविषयता दृष्टान्तः । सर्वज्ञोऽपीति अपिर्भिन्नक्रमः । स्वधीविशेषमपीति योज्यम् । स्वतः सिद्धिः स्वनिरूपित-विषयता । साधयेत्-विषयीकुर्यात् । सर्वासिद्धिरतोऽन्यथेति । ज्ञानमस्तीति विज्ञानस्य स्वात्मविषयकत्वा-भावे अनिश्चितसत्ताकस्य तस्य ज्ञानस्यासत्त्वप्रसङ्गेन तद्विषयस्य सर्वज्ञानास्तित्वस्याप्यसत्त्वेन ज्ञानासत्त्वे विषयासत्त्वप्रसङ्गेन सर्वासत्त्वप्रसङ्गादिति भावः । यद्वा अन्यथा=ज्ञानमस्तीति ज्ञानस्य स्वात्मविषयकत्वाभावे, अतः ज्ञानमस्तीति ज्ञानात् । सर्वासिद्धिरिति । सर्वेषां ज्ञानानां सिद्धिरिति न स्यादित्यर्थः । ज्ञानमस्तीति ज्ञानस्य सर्वज्ञानसाधकत्वं सर्वज्ञानविषयकत्वरूपं न स्यादिति यावत् । न चेष्टापत्तिः ; ज्ञाने उद्देश्यकास्तित्वविधेयकतादृशज्ञानस्योद्देश्यतावच्छेदकाक्रान्ते सर्वत्र विधेयावगाहित्वावश्यम्भावादिति भावः । एतेन ज्ञानविषयकज्ञानाभावेऽपि ज्ञानकार्यभूतव्यवहारा-देरुपपत्त्या ज्ञानासत्त्वेऽपि विषयसत्त्वोपपत्त्या च उक्तरीत्या सर्वासिद्ध्यसंभवेऽपि न क्षतिः ।

1 तज्ज्ञाननिरूपितत्वे इति । अत्र सर्वार्थसिद्धौ (४-१.), "यत्तु कैश्चिदुक्तम्, 'सर्वेषां बुद्ध्यादीनां स्वसंवेद्यत्वमस्ति; न तु स्वयंप्रकाशत्वम्' इति-तत् तेभ्य एव रोचेत । न ह्यत्र स्वात्मानं प्रति कर्मकर्तृत्वं स्वबोद्धृत्वं वा विधातुं युक्तम् । न च स्वगोचरधीनिरपेक्षव्यवहारानुगुण्यं निषेद्धुं शक्यम्" इत्युक्तम् । तद्विरोधश्चिन्त्यः । व्यवहारविषयत्वेऽपि स्वस्य स्वविषयत्वं नास्तीति । स्वतः सिद्धिः-स्वविषयकज्ञानमन्तरा व्यवहारयोग्यत्वं व्यवहारविषयत्वप्राक्क्षणसंबन्धः

प्राकट्यानुमेयत्ववादिनं प्रत्युच्यते—

**कल्प्यैव धीश्चेत् कल्प्येत तत्सामग्र्येव लाघवात्। प्रत्यक्षायास्ततोऽन्यत्वक्लृप्तौ नैवं प्रसज्यते ॥**
**ज्ञानयोगः प्रकाशोऽत्र तदसिद्धौ न सिध्यति । [1]कर्मकर्तृक्रियातन्त्रं ज्ञानं प्रत्ययभेदतः ॥**

---

**कल्प्यैव धीश्चेदिति** । प्राकट्यरूपकार्यलिङ्गेन तद्धेतुभूता धीः कल्प्या चेत्, "तद्धेतोरेव" इत्यादिन्यायेन प्राकट्याख्यकार्यहेतुतया ज्ञानसामग्र्येव कल्प्यताम्, किमन्तर्गडुना धिया ? उक्तञ्च तत्त्वमुक्ताकलापे[2]( ) "...बुद्धिर्यत उदयति ते स्यात् ततोऽर्थप्रकाशो मध्ये बुद्धिः किमर्था" इति। ननु त्वत्पक्षेऽपि ज्ञानकार्यस्य एवं सत्यपि ज्ञानहेतुनैव उपपत्तौ किं तज्जन्येन ज्ञानेनेत्यादिशङ्कायामाह— **प्रत्यक्षाया इति** । प्रत्यक्षसिद्धाया अपलपानर्हत्वादिति भावः । **ज्ञानयोग इति** । ज्ञानयोग व्यतिरेकेण अर्थगतस्य प्राकट्याख्यस्य प्रकाशस्याभावात्, ज्ञानासिद्धौ च ज्ञानविषयत्वस्य ज्ञातुमशक्य त्वात् तस्य न तल्लिङ्गत्वमुपपद्यत इति भावः । ननु सकर्मकसकर्तृकावभासलक्षणज्ञानस्यैव प्रकाश-शब्दार्थत्वे देवदत्तो घटं जानातीतिवत् देवदत्तो घटं प्रकाशते इत्यपि व्यवहारः स्यात्, देवदत्तेन घटो ज्ञायते इतिवत् देवदत्तेन घटः प्रकाश्यते इत्यपि प्रयोगः स्यात् इत्याशङ्क्य कर्मकर्तृक्रियातन्त्रे प्रकाशशब्दार्थे ज्ञाने कर्तृकर्मप्रत्ययभेदनिबन्धनव्यवहारो धातुभेदनिबन्धन इत्याह **कर्मकर्तृक्रियेति** ।

---

**कल्प्यैवेति** । एवकारेण प्रत्यक्षविषयत्वव्युदासः । **लाघवादिति** । ज्ञानकार्यतयाभिमतप्राकट्यस्य ज्ञानसामग्र्यैवोत्पत्तिसंभवात् मध्ये ज्ञानाकल्पनेन लाघवादित्यर्थः । "तद्धेतोरेव सत्त्व तद्धेतुत्वं मध्ये किं तेन" इति न्यायादिति भावः । **प्रत्यक्षाया इति** । अनेन लाघवमात्रेण ज्ञानापलापो न संभवति प्रत्यक्ष-विरोधादित्युक्तं भवति । **ततोऽन्यत्वक्लृप्ताविति** । सामग्र्यन्यत्वकल्पन इत्यर्थः । प्रत्यक्षत्वेनैव हेतुनेति आदिः । सामग्र्या अदृष्टादिघटिताया: प्रत्यक्षत्वासंभवादिति भावः । **नैवं प्रसज्यत इति** । लाघवमवलम्ब्य प्रत्यक्षविषयापलापे सर्वापलापप्रसङ्गादिति भावः । ननु प्राकट्याख्यस्य कस्यचित् ज्ञानजन्यस्यानुपगमेऽपि प्रकाशापरपर्यायविषयताया घटादिषु सर्वैरप्यभ्युपगन्तव्येन तस्याश्च ज्ञाना-धीनतया तयैव ज्ञानानुमानं संभवतीत्याशङ्क्याह **ज्ञानयोग इति** । ज्ञानसंबन्ध इत्यर्थः । **तदसिद्धाविति** । ज्ञानविषयकज्ञानाभावे इत्यर्थः । **न सिद्ध्यतीति** । न ज्ञायत इत्यर्थः । संबन्धज्ञाने संबन्धिद्वय ज्ञानस्य हेतुत्वादिति भावः । तथाच ज्ञानावगममन्तरेण तत्संबन्धरूपप्रकाशस्य ज्ञातुमशक्यतया न तेन ज्ञानानुमानसंभव इत्युक्तं भवति । ननु ज्ञानविषयताया: प्रकाशरूपत्वे प्रकाशते ज्ञायत इत्यन योरुभयोरपि धात्वोर्यथाकथञ्चित् ज्ञानबोधकत्वसत्त्वात् कर्तृक्रिया-कर्मक्रियाभेदो नोपपद्येतेत्याशङ्क्य धातुभेदनिबन्धनप्रत्ययभेदात् तदुपपत्तिरित्याह **कर्मकर्तृक्रियातन्त्रमिति** । कर्मप्रत्ययान्तधातुप्रतिपाद्यं कर्तृप्रत्ययान्तधातुप्रतिपाद्यञ्चेत्यर्थः । अयं भावः—प्रकाशत इत्यादौ धातोर्ज्ञानविषयत्वमेवार्थः ; न तु केवलं ज्ञानम् । ततश्च घटादौ तदाश्रयत्वबोधनाय कर्तृप्रत्यय एव । आश्रयत्वस्य कर्तृत्वरूपताया जानाती

---

1 सकर्तृकसकर्मकक्रियासामान्यान्तर्गतं ज्ञानम्, घटमहं जानामीति विभक्तिभेदादित्यर्थः ।
2 न्यायकुसुमाञ्जलावप्युक्तम (४) "ज्ञानहेतुनैव तदुपपत्तेः" इति, 'ज्ञानमेवापरोक्षमिष्यते" इति च

**प्रकाशते ज्ञायत इत्येतत् धातुविभेदतः । भिनत्तिपातयत्यादौ यथा करणकर्मणोः ॥ १०६ ॥**
**व्यवहारार्थनियतिप्रकाश्यत्वानि बुद्धितः ।**

---

ज्ञानमित्यनन्तरं प्रकाश [1]इति शेषः । **यथा करणकर्मणोरि**ति । यथा परशुना वृक्षं भिनत्ति, परशुं वृक्षे पातयति इत्यत्र एकस्मिन्नेव परशौ करणवाचि-कर्मवाचिप्रत्ययभेदो धातुभेदनिबन्धनः, तद्वदित्यर्थः । ननु घटज्ञानेन घटे प्राकट्यजननानभ्युपगमे घट इति व्यवहारः कथं स्यात् ? तथा घटज्ञानस्य घट एव विषय इति **अर्थनियति**शब्दितविषयनियमो वा कथं स्यात् ? न च येन ज्ञानेन यत् प्रकाश्यते, स एव तस्य विषय इति वाच्यम्; प्रकाश्यत्वव्यवस्थाया अपि ज्ञाततादीनत्वादित्याशङ्क्याह **व्यवहारार्थनियतीति** । ननु **बुद्धितो** व्यवहारार्थनियतिप्रकाश्यत्वानामुपपत्तौ अयं घट इति ज्ञानं पटे किमिति व्यवहारादिकं नोत्पादयेदित्याशङ्क्य प्राकट्याश्रयनियमेऽपि

---

त्यादौ दर्शनात् । ज्ञाधातोस्तु ज्ञानमात्रमेवार्थः, न तु ज्ञानविषयत्वम् । ततश्च विषयत्वप्रत्यायनाय कर्मप्रत्ययो भवति । सविषयकार्थकधातुसमभिव्याहारे विषयत्वस्य कर्मत्वरूपत्वात्, घटं जानातीत्यादौ तथैव दर्शनात् । प्रकाशत इत्यादौ धातुना ज्ञानबोधनेऽपि विषयत्वरूपकर्मत्वस्यापि धातुनैव बोधनेन तत्र कर्माकाङ्क्षाविरहात् अकर्मकत्वमिति । अत्यन्तार्थभेदविरहेऽपि प्रत्ययभेदे दृष्टान्तमाह **भिनत्ती**ति । परशुना वृक्षं भिनत्ति, परशुं वृक्षे पातयतीत्यनयोर्वाक्ययोरत्यन्तार्थभेदविरहेऽपि धातुभेदनिबन्धनः परशौ यथा करणत्वकर्मत्ववाचिप्रत्ययभेदः, तथेहापि धातुभेदनिबन्धनः प्रत्ययभेद उपपन्न इत्यर्थः । तथाच भिनत्तिपातयत्यादौ करणकर्मणोरिव धातुभेदनिबन्धनप्रत्ययभेदात् ज्ञानं [1]कर्मकर्तृक्रिया तन्त्रमित्यन्वयः । ननु ज्ञानेन घटादौ प्राकट्यजननानुपगमे घटव्यवहारानुपपत्तिः; व्यवहर्तव्यतासंबन्धेन व्यवहारं प्रति आश्रयतासंबन्धेन प्राकट्यस्य हेतुत्वात्, दर्शितकार्यकारणभावानुपगमे व्यवहारस्याऽऽकस्मिकत्वापत्तेः । एवं घटज्ञानस्य घट एव विषय इति विषयनियमोऽपि भवन्मते न संभवति; ज्ञानेन घटे प्राकट्याजनने घटस्य तदन्येषामविशेषात् । तथा घटं जानातीत्यादौ घटस्य कर्मत्वानुपपत्तिः; क्रियाजन्यफलशालित्वस्यैव कर्मत्वरूपत्वात् ज्ञानेन घटादौ प्राकट्याजनने तदसंभवादित्यत आह **व्यवहारे**ति । **अर्थनियतिः**=विषयनियतिः । **प्रकाश्यत्वं** प्रकाशयतिकर्मत्वम्; ज्ञानकर्मत्वमिति यावत् । **बुद्धित** इति । बुद्ध्यैवोपपद्यन्त इत्यर्थः । अयं भावः—व्यवहर्तव्यतासंबन्धेन व्यवहारं प्रति विषयतासंबन्धेन बुद्धेरेव हेतुत्वसंभवान्न प्राकट्यापेक्षा । एवं यत्संबन्धिनी बुद्धिः, स एव विषय इति न विषयनियमेऽपि प्राकट्यापेक्षा । एवं क्रियाजन्यफलशालित्वमेव सर्वत्र कर्मत्वमिति न नियमः । घटमिच्छति, देवदत्तं द्वेष्टीत्यादौ विषयताया एव कर्मत्वरूपत्वात् । अन्यथा तत्र कर्मत्वोपपत्तये इष्टत्व-द्विष्टत्वयोरप्यतिरिक्तयोरिच्छाद्वेषजन्यतया स्वीकारापत्तेः । अत ईदृशस्थले विषयत्वमेव कर्मत्वमिति बुद्धिविषयत्वस्यैव बुद्धिकर्मत्वरूपप्रकाश्यत्वात्मकतया न तदुपपत्त्यर्थमपि प्राकट्यमभ्युपगन्तव्यमिति । ननु प्राकाट्यस्य बुद्धिविषयत्वरूपत्वे, घटज्ञाने घटस्यैव विषयत्वमिति नियमो न स्यात्, नियामकाभावात् । बुद्धिजन्य-

---

1 द्वितीयव्याख्याने अध्याहारो न कृतः । * अर्थैक्येऽपि प्रयोगभेदे कारणमाह मूले प्रकाशत इति ।

**स्वभावनियमो ह्येष प्राकट्येऽपि न लङ्घ्यते ॥ तत्रैवैतत्करणवत् तस्यैवास्तु प्रकाशकम् ।**
**प्राकट्यजन्म भूतेष्वद्भावज्ञाततासु किम् ॥ १०८ ॥**

आत्मसिद्धौ प्रकाशपदार्थनिर्णयार्थं, "कस्तर्हि प्रकाशतेपदार्थः ?" इति प्रश्ने, "अनुभवादूरत्वं स्मृतिनिमित्तम्" इति न्यायतत्त्वग्रन्थस्मारणपूर्वकम्, 'संविद्दूरत्वं प्रकाशः' इत्यभिधाय, अदूरविकल्पं प्रति चाभिहितम्, "भवत्वनुभवादूरं दूरादन्यत् विरोधि वा । तद्भावश्च प्रकाशत्वं(शोऽत्र?) किमत्र

---

स्वभावविशेष एव शरणमित्याह **स्वभावनियमो ह्येष इति** । तदेवोपपादयति **तत्रैवेति** । **एतत्करणवदिति** । एतदुत्पादनवदित्यर्थः । घटज्ञानस्य घटीयतानियामकविशेषवत्त्वात् घट एव व्यवहारादिकमुत्पादयति, नेतरत्र । इतरथा घटज्ञानं पटे प्राकट्यं कुतो न जनयेदित्यादिव्यवस्थायाः प्राकट्याभ्युपगमेऽपि साम्यादिति भावः । **प्राकट्यजन्मेति** । **भूते**, भविष्यति, **अभावे**, **ज्ञाततायाश्च प्राकट्यजन्मास्ति किमित्यर्थः** । भूतभविष्यतोरसत्त्वेन प्राकट्यजन्मासम्भवः; अभावस्य भावधर्मानाश्रयत्वात् न प्राकट्यजन्मसम्भवः; ज्ञाततायां ज्ञातताभ्युपगमेऽनवस्थाप्रसङ्गात् । ततश्च तत्र ज्ञानानुमानासम्भवात् तद्दशस्थले संवेद्मीत्यादिव्यवहारो न स्यादिति भावः । **प्रकाशपदार्थनिर्णयार्थे इति** । एतत् प्रश्नविशेषणम् । **अनुभवादूरत्वं स्मृतिनिमित्तमिति** ; पथि गच्छतः काष्ठलोष्टादिज्ञानोत्पत्त्या काष्ठलोष्टादिषु सतोऽपि अनुभवादूरत्वस्य प्रकाशपदार्थत्वाभावात् स्मृतिनिमित्तमित्युक्तम् । **अदूरविकल्पं प्रतीति** । अदूरमित्यत्र नञस्तदन्य-तद्विरोधि-तदभावास्त्रयोऽप्यर्थाः सम्भवन्ति । तस्मादिह कोऽर्थो विवक्षित इति विकल्पवादिनं प्रतीत्यर्थः । **दूरादन्यद्विरोधि वेति** । अनुभवसन्निकृष्टत्वं

---

प्राकट्याश्रयत्वरूपत्वे तु नायं दोषः; घटज्ञानेन घट एव प्राकट्यजननादित्यत आह **स्वभावनियम इति** । घटचक्षुस्संयोगादिघटितज्ञानसामग्र्याः घटविषयताप्रयोजकत्वमेव स्वभावः; न तु पटविषयताप्रयोजकत्वमिति नियम इत्यर्थः । **प्राकट्येऽपि न लङ्घ्यत इति** । घटचक्षुस्संयोगादिजन्यज्ञानेन घट एव प्राकट्यं जन्यते; न तु पट इत्यभ्युपगमादिति भावः । फलितमाह **तत्रैवैतत्करणवदिति** । घटचक्षुस्संयोगादिजन्यज्ञानेन घट एव प्राकट्योत्पादनवदित्यर्थः । **तस्यैवास्तु प्रकाशकमिति** । तन्मात्रनिष्ठविषयतानिरूपकमस्त्वित्यर्थः । तथाचोक्तरीत्या सर्वनिर्वाहे अतिरिक्तप्राकट्याभ्युपगमो निरर्थक इति भावः । ज्ञानजन्यप्राकट्यवत्त्वमेव ज्ञानविषयत्वमित्यभ्युपगमे बाधकमाह **प्राकट्यजन्मेति** । भूते, भविष्यति, अभावे, ज्ञाततायाश्च प्राकट्यजन्म **किमस्ति ?** नास्त्येव हीत्यर्थः । भूतभविष्यतोर्ज्ञानकाले अभावात्र तत्र ज्ञानेन प्राकट्योत्पादनसंभवः । प्राकट्यं प्रति आश्रयस्य समवायिकारणताया एव भवद्भिरभ्युपगमादभावे न तदुत्पादनसंभवः । ज्ञाततायां ज्ञाततान्तराभ्युपगमेऽनवस्थाप्रसङ्गः । अत एतेष्वर्थेषु भवन्मते ज्ञानविषयत्वानुपपत्तिः । अस्मन्मते तु वक्ष्यमाणरीत्या ज्ञानसंबन्धसंभवात् नानुपपत्तिरिति भावः । **प्रकाशपदार्थनिर्णयार्थ इति** । इदञ्च प्रश्नविशेषणम् । **अनुभवादूरत्वं स्मृतिनिमित्तमिति** । स्मृतिप्रयोजकोऽनुभवसंबन्ध इत्यर्थः । वक्ष्यमाणायोग्यसंबन्धवारणाय **स्मृतिप्रयोजक इति** । **अदूरविकल्पं प्रतीति** । अदूरमित्यत्र नञस्तदन्य-तद्विरोधि-तदभावास्त्रयोऽप्यर्थाः संभवन्ति । तत्र कोऽर्थो विवक्षित इति विकल्प्येत्यर्थः । तद्विषय इति यावत् । **दूरादन्यदित्यादि** । दूरत्वं संबन्धाभावः;

बहु जल्प्यते ॥" इति। भाष्यञ्च, "प्रकाशश्च चिदचिदशेषपदार्थसाधारणं व्यवहारानुगुण्यम्" इति। तदेवं न बुद्धिः प्रकाशानुमेया ; किं तु स्वतःसिद्धैव ॥

प्रपञ्चितञ्चैतत् सर्वं तत्त्वरत्नाकरे भट्टपराशरपादैः। यथा, "धियः प्रत्यक्षभावत्वात् परतस्तदसम्भवात्। पारिशेष्यात् स्वतोभानं प्रमाणाच्च ततस्ततः॥ प्रतीतेर्व्याहरणतः सन्देहपरिवर्जनात्।

---

प्रकाशतेऽर्थः। सिद्धान्ते प्रत्यक्षस्थले इन्द्रियद्वारा ज्ञानस्य निर्गमादनुभवस्यानुत्कृष्टत्वं वस्तुन उपपद्यते इत्यर्थः। प्रकाशत्वम्=प्रकाशमानत्वमित्यर्थः। प्रकाशोऽत्र इति पाठः समीचीनः। प्रत्यक्षविषयार्थगतप्रकाशस्य इदं लक्षणम्। न तु अनुमेयपदार्थसंवित्साधारणम्। केचित्तु अनुभवादूरत्वं नाम व्यवहारानुगुण्यमेव; "प्रकाशश्च चिदचिदशेषपदार्थसाधारणं व्यवहारानुगुण्यम्" इत्युदाहरिष्यमाणभाष्यग्रन्थानुसारादिति वदन्ति ॥

धियः प्रत्यक्षभावत्वादिति। प्राकट्यानुमेयत्वभङ्गे प्रत्यक्षत्वस्यैव वक्तव्यत्वादित्यर्थः। भावशब्दो वस्तुपरः। प्रत्यक्षवस्तुत्वादित्यर्थः। अनेन प्राकट्यानुमेयत्वाभावादिति पर्यवसितोऽर्थः। परतस्तदसम्भवादिति। मानसाध्यक्षेण विषयीकरणासम्भवादित्यर्थः। प्रमाणाच्चेति। अनुभूतिः स्वयम्प्रकाशा। अनुभूतित्वादीश्वरज्ञानवदित्यनुमानादित्यर्थः। प्रतीतेर्व्याहरणत इति। प्रतीत्युत्पत्तिसमनन्तरक्षण एव संवेद्मीति व्यवहारदर्शनात् मध्ये ज्ञानान्तरविलम्बादर्शनादित्यर्थः। सन्देहपरिवर्जनादिति। ज्ञानोत्पत्त्यनन्तरम्, अहं वेद्मि न वा इति सन्देहादर्शनादित्यर्थः। इदमुपलक्षणम्;

---

तद्वदन्यत्वमदूरत्वम्; संबन्ध इति यावत्। दुर्निवारोधत्वमप्येतदेव। तथ च ज्ञानसंबन्धः प्रकाश इत्युक्तं भवति। स च द्रव्येषु संयोगः; द्रव्याश्रितेषु संयुक्ताश्रयणमित्यादि वक्ष्यमाणरीत्या बोद्धव्यम्। प्रकाशत्वम्=प्रकाशमानत्वम्। प्रकाशोऽत्रेति पाठः समीचीनः। व्यवहारानुगुण्यमिति। व्यवहारप्रयोजकज्ञानसंबन्ध इत्यर्थः। स च चिच्छब्दिते ज्ञाने तादात्म्यादिरूपः; अन्यत्र तु संयोगादिरूपः।

प्रत्यक्षभावत्वादिति। प्रत्यक्षविषयवस्तुत्वादित्यर्थः। प्रत्यक्षविरोधान्निरस्त इत्युक्तं भवति। परतस्तदसंभवादिति। मनःप्रभृतिकरणजन्यप्रत्यक्षविषयत्वासंभवादित्यर्थः। पारिशेष्यादिति। घटमहं जानामीति प्रत्यक्षनिरूपिता ज्ञाननिष्ठविषयता स्वनिरूपिता स्वेतरानिरूपितत्वे सति किञ्चिन्निरूपितत्वात्, घटादिनिष्ठतद्विषयतावदित्यनुमानेनेत्यर्थः। अत्र घटादिनिष्ठज्ञानविषयतायां व्यभिचारवारणाय सत्यन्तम्। घटे तद्वारणाय विशेष्यम्। प्रमाणाच्चेति। धीः स्वयंप्रकाशा धीत्वात्, ईश्वरधीवदित्यनुमानादित्यर्थः। प्रतीतेर्व्याहरणत इति। घटादिज्ञानोत्पत्तिमात्रेण ज्ञानविषयकज्ञानान्तरमन्तरेणैव ज्ञानव्यवहारदर्शनादित्यर्थः। ज्ञानस्यास्वयंप्रकाशत्वे कदाचित् ज्ञाने सत्यपि तद्विषयकज्ञानविलम्बात् तद्व्यवहारविलम्बः स्यादिति भावः। सन्देहपरिवर्जनादिति। ज्ञानोत्पत्त्यनन्तरं जानामि न वेति संशयस्य कदाप्यदर्शनादित्यर्थः। ज्ञानस्य स्वयंप्रकाशत्वाभावे कदाचित्, ज्ञाने सत्यपि तत्प्रकाशविरहदशायां तत्संशयः स्यादिति भावः। सत्तायां सिद्धवत्कारादिति। धारावाहिकज्ञानानन्तरम्, एतावन्तं कालमिदमहं पश्यन्नेवास्मीति धारावाहिकज्ञानपरामर्शदर्शनादित्यर्थः। ज्ञानस्य स्वयंप्रकाशत्वाभावे धारावाहिक-

सत्तायां सिद्धवत्कारात् ज्ञानं भातीति भावितम् ॥
परस्यादर्शनात् व्याप्तादन्वयिव्यतिरेकितः। अर्थापत्तेश्च युक्तेश्च वचनाच्च स्वदृङ्मतिः ॥" इति संग्रहः।
"व्याप्तादन्वयिव्यतिरेकिनः" इत्यस्य विवरणदशायाञ्चैवमुक्तम्, "विप्रतिपन्ना संवित् स्वगतव्यवहारं प्रति स्वाधीनकिञ्चित्कारे सजातीयसम्बन्धानपेक्षा व्यवहारहेतुत्वात् अर्थेन्द्रियप्रदीपादिवत्।

---

विपर्ययादेरदर्शनादित्यपि द्रष्टव्यम्। **सत्तायां सिद्धवत्कारादिति**। धारावाहिकज्ञानानन्तरं एतावन्तं कालमिदमहं पश्यन्नेवास्मीति धारापरामर्शदर्शनादित्यर्थः। ततश्च ज्ञानस्य अस्वप्रकाशत्वे धारावाहिकज्ञानानामननुभूतानामेव नष्टतया तदनुसन्धानानुपपत्तेरिति भावः। ननु मध्ये तत्तज्ज्ञानानुव्यवसायोत्पत्तिवशेन धारानुसन्धानं स्यादिति शङ्कां पराचष्टे—**परस्यादर्शनादिति**। धाराविच्छेदप्रसङ्गेन मध्ये अनुव्यवसायस्याभ्युपगमानर्हत्वादिति भावः। **व्याप्तादन्वयिव्यतिरेकित इति। अन्वयीनि व्यतिरेकीणि** अर्थापत्तियुक्त्यश्चोत्तरत्र स्पष्टीभविष्यन्ति। अन्वय्यनुमानानि दर्शयति—**विप्रतिपन्ने**त्यादिना। **स्वगतव्यवहारं प्रतीति**। स्वोत्पाद्यव्यवहारं प्रतीत्यर्थः। घटादिव्यवहारहेतोश्चक्षुषस्तद्व्यवहारे आलोकादिसजातीयापेक्षत्वाद्व्यभिचार इत्यतः साध्ये विशेषणमुक्तम्—**स्वाधीनकिञ्चित्कार** इति। ततश्च **स्वाधीनकिञ्चित्कारो** विषयेन्द्रियसंयोगलक्षणः; तत्र न सजातीयालोकाद्यपेक्षेति भावः। नन्वेवम्, **"न च चक्षुषः सजातीयतेजोपेक्षया अनैकान्त्यम्"** इत्युत्तरग्रन्थविरोधः, तत्र हि

---

ज्ञानानामननुभूतानामेव नष्टतया तदनुसन्धानं न स्यादिति भावः। **ज्ञानं भातीति भावितमिति**। ज्ञानं स्वत एव भातीति निश्चितमित्यर्थः। ननु मद्ध्ये मद्ध्ये तत्तज्ज्ञानानुव्यवसायाभ्युपगमान्न धाराविषयकपरामर्शानुपपत्तिरित्यत आह **परस्यादर्शनादिति**। अनुभवविरोधेन मद्ध्येऽनुव्यवसायाभ्युपगमासंभवादिति भावः। **व्याप्तादिति**। निश्चितव्याप्तिकादित्यर्थः। **अन्वयिव्यतिरेकित इति**। अन्वयिलिङ्गात् व्यतिरेकिलिङ्गाच्चेत्यर्थः। **अर्थापत्तेरित्यादि**। इदमग्रे स्पष्टीभविष्यति। **युक्तेरिति**। तर्कादित्यर्थः। इदञ्च न्यायपरिशुद्धिप्रदर्शितं तर्कस्यानुमानविशेषत्वपक्षमभिप्रेत्य **स्वदृगिति**। स्वयंप्रकाशेत्यर्थः। **विप्रतिपन्ने**ति। स्वयंप्रकाशत्वतदभावकोटिकसंशयविषयीभूतेत्यर्थः। उक्तसाध्यतदभावकोटिकसंशयविषयीभूतेति वा। इदञ्चेश्वरज्ञाने सिद्धसाधनवारणाय। **स्वगतव्यवहारं प्रतीति**। स्वप्रयोज्यव्यवहारं प्रतीत्यर्थः। **स्वाधीनकिञ्चित्कार इति**। स्वाव्यवहितजन्यव्यापार इत्यर्थः। **सजातीयसंबन्धानपेक्षे**ति। तथाच स्वसजातीयसंबन्धानधीनव्यवहारप्रयोजकव्यापारहेतुत्वं साध्यमिति फलितम्। व्यवहारप्रयोजकव्यापारो व्यवजिहीर्षारूपः। तत्र व्यवहर्तव्यस्यापि ज्ञानविषयतया व्यवजिहीर्षायाम्, तद्द्वारा व्यवहारे च हेतुत्वमभिप्रेतम्। अत एव घटादिरूपार्थस्य दृष्टान्ततयोपादानमुपपद्यते। ततश्च ज्ञानव्यवहारहेतुभूतां व्यवजिहीर्षां प्रति ज्ञानान्तरविषयतामन्तरेणैव ज्ञानस्य हेतुत्वसिद्धौ, व्यवहर्तव्यज्ञानस्य व्यवजिहीर्षां प्रति हेतुत्वस्य सर्वसंप्रतिपन्नतया ज्ञानस्य स्वविषयकत्वमन्तरा व्यवहर्तव्यज्ञानासंपत्त्या ज्ञानस्य स्वविषयकत्वरूपं स्वयंप्रकाशत्वं सिद्ध्यतीति ध्येयम्। अत्र च व्यवहारे स्वसजातीयसंबन्धानधीनत्वस्य निवेशे ज्ञानद्वारा व्यवहारहेतौ चक्षुरादीन्द्रिये स्वसजातीयवागिन्द्रियसापेक्षतया व्यभिचारः

न च चक्षुषः सजातीयतेजोपेक्षया अनैकान्त्यम्; तस्येन्द्रियत्वेन, आहङ्कारिकत्वेन वा, आलोकाद्भिन्नजातीयत्वात्। अन्यच्च—ज्ञानसंस्कारः स्वैकार्थसमवायिज्ञानानुभवानपेक्षः संस्कारत्वात् अन्यसंस्कारवत्, विषयसंस्कारो ज्ञानसंस्कारेण सहोत्पद्यते विषयसंस्कारत्वात् इदमहं जानामीति

---

स्वाधीनकिञ्चित्कारे आलोकापेक्षामभ्युपेत्य सजातीयत्वाभावेन परिहारदर्शनादिति चेत्—सत्यम्। तथापि परिहारः संभवतीत्यभिप्रेत्य तथोक्त्युपपत्तेः। **ज्ञानसंस्कार इति।** ज्ञानस्मृतिजनकसंस्कार इत्यर्थः। **स्वैकार्थसमवायीति।** स्वसमानाधिकरणेत्यर्थः। **ज्ञानानुभवेति।** ज्ञानकर्मकानुभवेत्यर्थः। इदञ्च ईश्वरानुभवसापेक्षतया बाधव्यावृत्त्यर्थमिति द्रष्टव्यम्। **अन्यसंस्कारवदिति।** घटादिस्मृतिहेतुभूतघटसंस्कारस्य स्वसमानाधिकरणघटकर्मकानुभवसापेक्षत्वेऽपि ज्ञानकर्मकानुभवनिरपेक्षत्वादिति भावः। **सहोत्पद्यते इति।** ततश्च विषयानुभव एव ज्ञानानुभव इति पर्यवस्यतीति भावः।

---

स्यादिति व्यवहारप्रयोजकव्यापारे तन्निवेशः। तथाच चक्षुराद्यव्यवहितव्यापारे ज्ञाने बाह्येन्द्रियानपेक्षतया न व्यभिचारः। चक्षुषस्तैजसत्वाभिमानेन नैयायिकः शङ्कते न चेति। **तेजोपेक्षयेति।** चक्षुषज्ञाने आलोकस्य कारणत्वादिति भावः। इन्द्रियाणां भूताप्यायितत्वेऽपि न भौतिकत्वम्; आहङ्कारिकत्वादित्यभिप्रायेण समाधत्ते **तस्येति। भिन्नजातीयत्वादिति।** ज्ञानत्वेन्द्रियत्वपृथिवीत्वाद्यन्यतमवत्त्वेन साजात्यं विवक्षितमिति भावः। **ज्ञानसंस्कार इति।** ज्ञानविषयकसंस्कार इत्यर्थः। **स्वैकार्थसमवायिज्ञानानुभवानपेक्ष इति।** स्वसमानाधिकरणज्ञानकर्मकानुभवाजन्य इत्यर्थः। ज्ञानकर्मकत्वञ्च स्वभिन्नत्वस्वविषयकत्वोभयसंबन्धेन ज्ञानविशिष्टत्वम्। घटादिविषयकसंस्कारस्य घटानुभवजन्यत्वेऽपि ज्ञानानुभवाजन्यत्वात् दृष्टान्ते साध्यसत्त्वोपपत्तिः। ज्ञानसंस्कारे उक्तसाध्यसिद्धौ तादृशसंस्कारे विषयभूतज्ञानजन्यताया एवावश्यकतया तद्विषयकसंस्कारस्य तद्विषयकानुभवजन्यत्वनियमबलात् ज्ञानस्य स्वविषयकत्वमन्तरा ज्ञानसंस्कारस्य तज्जन्यत्वासंभवात् ज्ञानस्य [1]स्वविषयकत्वरूपस्वयंप्रकाशत्वसिद्धिः। अतेश्वरानुभवमादाय बाधवारणाय **स्वसमानाधिकरणेति। विषयसंस्कार इति।** घटादिविषयकसंस्कार इत्यर्थः। **ज्ञानसंस्कारेण सहोत्पद्यत इति।** घटज्ञानविषयकसंस्कारोत्पत्तिक्षणोत्पत्तिक इत्यर्थः। **विषयसंस्कारत्वादिति।** घटादिविषयकसंस्कारत्वादित्यर्थः। **इदमित्यादि।** घटमहं जानामीति ज्ञानस्य घटादिविषयकसंस्कारवदित्यर्थः। उक्तानुमानेन घटादिसंस्कारत्वरूपपक्षतावच्छेदकावच्छेदेनोक्तसाध्यसिद्धौ घटाद्यनुभवस्यैव ज्ञानानुभवरूपत्वं सिद्ध्यति। अन्यथोक्तसाध्यानिर्वाहादित्यभिमतसिद्धिः। अत्रावच्छेदकावच्छेदेनैव साध्यसिद्धेरुद्देश्यतया पक्षतावच्छेदकस्य दृष्टान्तसाधारण्येऽपि न सिद्धसाधनम्। उक्तदृष्टान्तातिरिक्तघटादिसंस्कारत्वं वा पक्षतावच्छेदकम्। उक्तानुमाने सोपाधिकत्वं शङ्कते

---

1 यद्येवं स्वविषयकत्वमेव स्वयंप्रकाशत्वं सिद्धान्तीष्टम्, तर्हि प्रकाशपदार्थशोधनप्रयासः, व्यवहारानुगुणत्वमिति शिरोवेष्टनञ्च व्यर्थं स्यात्। अतः सिद्धान्ते स्वस्य स्वकर्मकत्वास्वीकारात् स्वविषयकत्वास्वीकार एव। अत एव ह्यत्रैव व्याख्याने ज्ञानस्य तादात्म्येन करणत्वमुक्तं प्राक्। अन्यथा स्वविषयकज्ञानत्वेनैव स्वस्य कारणत्वकथनसंभवादननुगत एव कार्यकारणभावः स्यात्।

ज्ञानप्रभवसंस्कारवत् । न च उभयविषयज्ञानपूर्वकत्वं प्रयोजकम्; ज्ञानपूर्वकत्वेन व्याप्तिसिद्धेर्व्यर्थविशेषणत्वात्" इत्यस्यानन्तरम्, "पुनश्च" इत्युक्त्वा, "संविदनन्याधीनस्वधर्मव्यवहारा" इत्यादिभाष्योपात्तमेवानुमानमुक्तम् । अत्र प्रयोगनिष्कर्षः स्वयमेव भाव्यः । "व्यतिरेकि चास्ति लिङ्गम्" इत्यभिधायाजडत्वज्ञानत्वादीनि प्रयुज्य समर्थितानि । प्रत्यक्षत्वानुपपत्तिः, व्यवहारविशेषकरत्वानुपपत्तिश्चार्थापत्ती समर्थिते । ज्ञानं न परप्रकाश्यम्, घटादिवदर्थप्रकाशकत्वप्रसङ्गादित्यादितर्काश्च प्रतिपादिताः । "वचनानि च" इत्युक्त्वा, "अत्रायं पुरुषः स्वयंज्योतिर्भवति", "आत्मैवास्य ज्योतिः", "स्वेन ज्योतिषाऽऽस्ते", "आत्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम्" इत्यादीनि ज्ञानपदवाच्यजीवस्य स्वयंज्योतिष्ट्वपराणि ज्ञानपदाभिधेयायां संवेद्येऽपि संभवलाघवाभ्यां स्वप्रकाशत्वं सम्भावयन्तीति,

ज्ञानप्रभवेति । ज्ञानप्रभवविषयसंस्कारवदित्यर्थः व्यर्थविशेषणत्वादिति । उभयविषयकत्वरूपविशेषणस्य व्यर्थत्वादित्यर्थः ज्ञानपूर्वकत्वमात्रस्य च साधनव्यापकत्वात् नोपाधित्वमिति भावः । अत्र प्रयोगनिष्कर्ष इति । अयमिह निष्कर्षप्रकारः—अनुभूतिः स्वजन्यपरगतधर्मात्यन्तसजातीयधर्ममात्रके स्वात्यन्तसजातीयापेक्षानियमरहिता स्वविजातीये स्वावश्यम्भ विषयात्यन्तसजातीयस्वसंबन्धपुरस्कालधर्महेतुत्वादिति । अत्र च विशेषणप्रयोजनानि [1]श्रुतप्रकाशिकायां द्रष्टव्यानि । प्रत्यक्षत्वानुपपत्तिरिति । मानसाध्यक्षादेर्निराकृततया स्वप्रकाशत्वस्यैव ज्ञानप्रत्यक्षत्ववादिना अभ्युपेयत्वादिति भावः । व्यवहारविशेषकरत्वानुपपत्तिश्चेति । स्वसम्बन्धादर्थान्तरे प्रकाशते इति व्यवहारविशेषहेतुत्वं न स्यादित्यर्थः । संभवलाघवाभ्यामिति । ज्ञानरूपस्य जीवस्य स्वप्रकाशत्ववत् धर्मभूतज्ञानस्यापि ज्ञानत्वात् स्वप्रकाशत्वम्

न चेति । उभयविषयकज्ञानपूर्वकत्वं घट-तज्ज्ञानोभयविषयकज्ञानजन्यत्वम् । प्रयोजकमिति । उपाधिरित्यर्थः । दृष्टान्ते साध्यव्यापकत्वात्, पक्षे साधनाव्यापकत्वाच्चेति भावः । व्यर्थविशेषणत्वादिति । ज्ञाने उभयविषयकत्वविशेषणस्य पक्षव्यावृत्तिमात्रफलकतया उपाधिशरीरे तस्य सार्थक्यासंभवात् । अन्यथा सर्वत्र पक्षेतरत्वस्योपाधित्वाप्रसङ्गेनानुमानमात्रोच्छेदप्रसङ्गादिति भावः । प्रयोगनिष्कर्ष इति । संवित् अनन्याधीनस्वधर्मा स्वसंबन्धादर्थान्तरे तद्धर्महेतुत्वात्, संवित् अनन्याधीनस्वव्यवहारा अर्थान्तरे तद्व्यवहारहेतुत्वादित्येवं प्रयोगद्वयरूपतया निष्कर्ष इत्यर्थः । अत्र वक्तव्यं सर्वं श्रुतप्रकाशिकायां प्रपञ्चितं तत्रैव द्रष्टव्यम् । प्रत्यक्षत्वानुपपत्तिरिति । अपरोक्षज्ञानविषयत्वानुपपत्तिरित्यर्थः । मानसाध्यक्षविषयतायाः निराकृततया स्वप्रकाशत्वेनैव तस्य निर्वाह्यत्वादिति भावः । व्यवहारविशेषकरत्वानुपपत्तिरिति । ज्ञानव्यवहारजनकत्वानुपपत्तिरित्यर्थः । व्यवहारे व्यवहर्तव्यज्ञानस्य कारणतया ज्ञानस्य स्वविषयकत्वरूपस्वप्रकाशत्वमन्तरा तदनिर्वाहादिति भावः । संभवलाघवाभ्यामिति । बाधकाभाव-लाघवाभ्यामित्यर्थः । स्वप्रकाशत्वे हि तद्विषयकज्ञानान्तराकल्पनेन

1 तत्त्वटीकायाम्—अनुभूतिः परगतस्वजन्यधर्मात्यन्तसजातीयावश्यम्भाविधर्मयोगे स्वात्यन्तसजातीयापेक्षानियमरहिता स्वविजातीये स्वानन्तरकालोत्तरकालानुवृत्तिरहितधर्महेतुत्वादिति प्रथमप्रयोगं परिष्कृत्य दलकृत्यानि च प्रदर्श्य द्वितीये, "अनुभूतिः स्वात्यन्तसजातीयापेक्षानियमरहितस्वव्यवहारेति पक्षसाध्यस्थितिः । हेतुस्तु हेतुत्वादित्येवालम्" इत्यादिकमुक्त्वा आत्मसिद्धिग्रन्थोक्तमप्यदर्शि ।

मणि-तरणि-दीप-तत्प्रभासाधर्म्येण जीव-तज्ज्ञानसमर्थनानि च, 'यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः। क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥' इत्येवंविधानि ज्ञानात्मनोः स्वयंप्रभावत्त्वेन सजातीयत्वं ज्ञापयन्ति; न च किञ्चिदनिष्टं प्रसज्यते" इत्युक्तम्। वेद्यत्वादिसाधकानि व्यवहार्यत्व-वस्तुत्वप्रमेयत्वक्रियात्वाद्यनुमानानि योग्यानुपलम्भसिद्धसाधनासिद्ध्यादिभिर्दूषितानि। अधीकर्मणः सिद्धिरपि, अज्ञातघटादिसद्भाववत् कदाचिद्धी(चिद्धी)कर्मत्वस्य ज्ञानेऽपि विद्यमानत्वात् अनुगु-

संभवोऽस्ति। ज्ञानविषयकज्ञानान्तराकल्पनात् लाघवञ्चेति भावः। स्वप्रकाशत्वं सम्भावयन्तीति। जीवस्वरूपस्वप्रकाशत्वप्रदर्शकवाक्यस्य तत्सजातीये धर्मभूतज्ञाने स्वप्रकाशत्वप्रदर्शकतया सम्भावकत्वमस्तीति भावः 'अत्रायं पुरुषः स्वयं ज्योतिः' इत्यारभ्य, 'न च किञ्चिदनिष्टं प्रसज्यते' इत्यन्तस्तत्त्वरत्नाकरग्रन्थः। योग्यानुपलम्भेति। स्वव्यतिरिक्तज्ञानवेद्यत्वं साध्यते, उत ज्ञानवेद्यत्वमात्रम्? आद्ये योग्यानुपलम्भः; सर्वत्र तद्व्यतिरिक्तस्य ज्ञानस्यानुपलम्भात्; द्वितीये सिद्धसाधनम्; क्रियात्वरूपहेतोरसिद्धिश्च, ज्ञानस्य परिस्पन्दत्वादिरूपक्रियात्वाभावादिति भावः ॥ अधीकर्मणः कथं सिद्धिरित्यत आह अधीकर्मण इति। अज्ञातेति। घटादेरपि कदाचिद्धीकर्मत्वादित्यर्थः। ननु कदाचिद्धीकर्मत्वं नासिद्ध्यापादकम्, किं तु सदा अधीकर्मत्वमेवेत्याशङ्क्याह कदाचिदिति। कदाचिद्धीकर्मत्वस्यैव ज्ञाने विद्यमानत्वेन सर्वदा अधीकर्मत्वस्याभावादित्यर्थः। कदाचिद्धीकर्मत्वस्येति पाठस्तु सुगम एवेति ध्येयम्। ननु

लाघवम्। संभावयन्तीति। ज्ञानपदवाच्यत्वे स्वयंप्रकाशत्वव्याप्तिज्ञानद्वारा निश्चाययन्तीत्यर्थः। उक्तवचनजातेन हि ज्ञानपदवाच्ये जीवे स्वयंप्रकाशत्वबोधनात् ज्ञानपदवाच्यत्वे स्वयंप्रकाशत्वव्याप्यत्वं गृह्यते। ततश्च ज्ञानपदवाच्यत्वहेतुकानुमानादुक्तसंभव-लाघवानुगृहीतात् स्वयंप्रकाशत्वं संविदि सिध्यतीत्यभिप्रायः। वेद्यत्वादीति। आदिना जडत्वपरिग्रहः। व्यवहार्यत्वम्=शब्दजन्यज्ञानविषयत्वम्। वस्तुत्वम्=कालसंबन्धित्वम्। आदिना वाच्यत्वादिपरिग्रहः। अत्र वेद्यत्वं किं ज्ञानविषयत्वमात्रम्; अथवा स्वभिन्नज्ञानविषयत्वमात्रम्; स्वसमानाधिकरणस्वव्यवहितोत्तरज्ञानविषयत्वं वेति विकल्पमभिप्रेत्य तृतीये योग्यानुपलब्ध्या बाध इत्याह योग्यानुपलम्भेति। अयं घट इति ज्ञानातिरिक्तद्वितीयज्ञानानुपलम्भादिति भावः। प्रथमद्वितीययोः सिद्धसाधनम्, ईश्वरज्ञानादिविषयत्वस्य संप्रतिपन्नत्वादित्याह सिद्धसाधनेति। स्पन्दत्वरूपक्रियात्वस्य ज्ञाने असत्त्वादसिद्धिः। स्वसमानाधिकरणस्वव्यवहितोत्तरज्ञानविषयत्वस्य साध्यत्वे घटादिषु व्यवहार्यत्वादेरनैकान्त्यमादिपदग्राह्यम्। ननु यत्र कालसंबन्धित्वं तत्र स्वभिन्नजन्यज्ञानविषयत्वमिति व्याप्तिसद्भावात् ज्ञानस्य स्वभिन्नजन्यज्ञानविषयत्वाभावे कालसंबन्धित्वाभावप्रसङ्ग इत्याशङ्क्याह अधीकर्मण इति। सिद्धिः=कालसंबन्धित्वरूपा सत्ता। अज्ञातघटादिसद्भाववदिति। असदाद्यज्ञातकुम्भविशेषादिगतकालसंबन्धित्ववदित्यर्थः। अस्य च समर्थितेत्यनेनान्वयः। तथाच, 'यत्र कालसंबन्धित्वम्' इत्यादिव्याप्तिरेवासिद्धेति नोक्तशंकावकाश इत्युक्तं भवति। उक्तव्याप्त्यभ्युपगमेऽपि न दोष इत्याह कदाचिद्धीकर्मत्वस्येति। ज्ञानेऽपि विद्यमानत्वादिति। भूतानुमितिस्मृत्यादिविषयत्वस्य ज्ञानेऽपि सत्त्वेन व्यापकाभावस्येदा-

ल्यग्रचोद्यस्य कर्मत्वाद्यनभ्युपगमेन परिहृतत्वाच्च समर्थिता। स्वयंप्रकाशत्वे सहोपलम्भनियमादभेद-भयमपि विरुद्धप्रत्यक्षावरुद्धसाध्यत्व-विरुद्धत्वाप्रयोजकत्वप्रभृतिभिरनुमानदूषणात् निश्शेषितम्। मानसप्रत्यक्षभङ्गसंग्रहे च एवमुक्तम्, "योग्यानवग्रहात् स्वेन सम्भवादनवस्थितेः। इति बाधकहेतुभ्यः साधनद्वितयस्य च॥ असिद्धिव्यभिचाराभ्यां वैकल्यात् साध्यसाधने। इत्यसाधनबाधाभ्यां न धीर्मानसगोचरः॥ इति स्वतः सिद्धिरेव संवित्सिद्धौ च पद्धतिः।" इति।

अखण्डवाक्यार्थखण्डनानन्तरञ्च प्राक्तन्यानसप्रत्यक्षभङ्गपूर्वकमेता एव युक्तयः पुनःप्रति-

---

अङ्गुल्यग्रं यथा स्वात्मानं न स्पृशति, कर्तृकर्मभावविरोधात्–तथा प्रकाशकत्वप्रकाश्यत्वलक्षणे कर्तृत्वकर्मत्वे अप्येकत्र न संभवत इत्याशङ्क्याह अङ्गुल्यग्रचोद्यस्येति। समर्थितेति। अस्य सिद्धिरपीति पूर्वेणान्वयः। अभेदभयमपीति। विषयज्ञानयोरिति शेषः। विरुद्धप्रत्यक्षेति। विरुद्धप्रत्यक्षं साध्याभावावगाहिप्रत्यक्षम्। तदवरुद्धसाध्यत्वं बाधितसाध्यकत्वमित्यर्थः। ज्ञानभेदकस्य विषयगतपृथुबुध्नोदराकारत्वादेः प्रत्यक्षे भानात् तस्य साध्याभावावगाहित्वमपि द्रष्टव्यम्। विरुद्धत्वेति। सहत्वस्य भेदगर्भत्वेन सहोपलम्भनियमस्य प्रत्युत भेदनियमसाधनत्वादित्यर्थः। निश्शेषितमिति। भयमिति पूर्वेणान्वयः। योग्यानवग्रहादिति तद्व्यतिरिक्तज्ञानान्तरस्य योग्यानुपलम्भादित्यर्थः। स्वेन सम्भवादिति। स्वेनैव स्वस्य प्रकाशसम्भवादित्यर्थः। अनवस्थितेरिति। ज्ञानान्तरग्राह्यत्वेऽनवस्थाप्रसङ्गादित्यर्थः। साधनद्वितयस्यासिद्धिव्यभिचाराभ्यां वैकल्यमुत्तरत्र स्पष्टम्। साध्यसाधन इति। अस्य साधनद्वितयस्येत्यनेनान्वयः। ततश्च साध्यसाधने प्रवृत्तस्य साधनद्वितयस्यासिद्धिव्यभिचाराभ्यां वैकल्याच्चेत्यर्थः। इत्यसाधनेति। उक्तप्रकारेण साधकाभावाद्बाधकसद्भावाच्चेत्यर्थः।

---

सिद्धया नोक्तदोषावकाश इत्याशयः। अङ्गुल्यग्रचोद्यस्येति। अङ्गुल्यग्रं यथा स्वात्मानं न स्प्रष्टुमलम्, तथा ज्ञानं न स्वात्मानं विषयीकर्तुमलमिति चोद्यस्येत्यर्थः। कर्मत्वाद्यनभ्युपगमेनेति। [1]स्वभिन्नत्वे सति स्वविषयत्वस्वरूपस्य स्वकर्मत्वस्य वा स्वाश्रयत्वरूपस्य स्वकर्तृत्वस्य वा स्वस्मिन्ननभ्युपगमेनेत्यर्थः। समर्थितेति। अस्य सिद्धिरपीत्यनेनान्वयः। अभेदभयमपीति। ज्ञानविषययोरित्यादिः। विरुद्धप्रत्यक्षावरुद्धसाध्यत्वेति। साध्याभावप्रत्यक्षप्रतिबद्धानुमितिकसाध्यकत्वेत्यर्थः। अनया वचनभङ्ग्या प्रत्यक्षबाध उक्तो भवति। घटं जानामीति प्रत्यक्षेण घटज्ञानयोः विषयविषयिभावादिरूपभेदस्यावगाहनादिति भावः। विरुद्धत्वेति। सहोपलम्भनियमस्य भेदनियमसाधकतायाः प्रागुक्तत्वादिति भावः। निश्शेषितमिति। भयमिति पूर्वेणान्वयः। योग्यानवग्रहादिति। स्वव्यतिरिक्तस्य स्वविषयकज्ञानस्य योग्यानुपलब्धेरित्यर्थः। स्वेनसंभवादिति। स्वेनैव स्वस्य प्रकाशसंभवादित्यर्थः। अनवस्थितेरिति। ज्ञानान्तरग्राह्यत्वे तस्यापि ज्ञानान्तरेण ग्रहणं स्यादित्यनवस्थाप्रसङ्गादित्यर्थ। साध्यसाधने साध्यसिद्धौ। अस्य साधनद्वितयस्येत्यनेनान्वयः। तथाच साध्यसिद्ध्युपयोगितयाऽभिमतस्य साधनद्वितयस्य वैकल्याच्चेत्युक्तं भवति। इत्यसाधनबाधाभ्यामिति। उक्तप्रकारेण साधकाभाव-बाधकसद्भावाभ्या-

---

1 स्वभिन्नत्व इति। मूलेऽनुक्तावपि स्वयं स्वस्य स्वविषयत्वस्वीकारात् स्वयं स्वस्यन्तनिवेशः।

पादिताः। तत्र क्षणिकात्मविशेषगुणत्वादिसाधनद्वितयम्। तत्र क्षणिकत्वादेरसिद्धिः, प्रायश्चित्तधर्मैरनैकान्तिकत्वमप्युक्तम्। एवं पराभिमतजीवनपूर्वकप्रयत्नेनापि द्रष्टव्यम्॥

यत्तु वरदविष्णुमिश्रैः, "सुखदुःखे ज्ञानरूपे एव" इत्युक्त्वा अनन्तरमुक्तम्, "इच्छाद्वेषप्रयत्ना मानसप्रत्यक्षाः" इति—तत् नूनमिच्छादिगुणान्तरसद्भावाभिमानमूलं वा, परमतमूलं वा। सुखदुःखयोर्ज्ञानरूपत्वे च इच्छादिषु को विशेषः?

**मिथस्संश्रयधीबाधमध्यावस्थोपलम्भनैः। न स्यान्न परस्पराभावमात्रता सुखदुःखयोः॥ १०९**

---

विशेषगुणत्वादीति आदिपदेन योग्यात्मविशेषगुणत्वं गृह्यते। असिद्धिरिति। क्षणिकत्वस्य मनोयोग्यत्वस्य च अनभ्युपगमादित्यर्थः। प्रायश्चित्तधर्मैरिति। प्रायश्चित्तजन्यो धर्मः प्रायश्चित्तधर्मः। स हि उत्पन्नमात्र एव सन् पापं विनाश्य स्वयमपि विनश्यतीति भावः। एवं...जीवनपूर्वकप्रयत्नेनापीति। अत्र अनैकान्तिकत्वमित्यनुषज्यते॥

इच्छादिगुणान्तरसद्भावाभिमानमूलत्वमेव विवृणोति सुखदुःखयोर्ज्ञानरूपत्व इति। सुखदुःखयोः परस्पराभावरूपत्वपक्षं प्रतिक्षिपति मिथस्संश्रयेति। सुखदुःखयोः परस्परविरहरूपत्वे अभावज्ञानस्य प्रतियोगिज्ञानसापेक्षत्वावश्यम्भावेन परस्परज्ञानसापेक्षज्ञानतया अन्योन्याश्रयप्रसङ्ग इत्यर्थः। धीबाधेति। भावत्वोल्लेखिधीबाधेत्यर्थः। मध्यावस्थेति। सुषुप्त्यादौ सुखदुःखोभयराहित्यावस्था

---

मित्यर्थः। क्षणिकात्मविशेषगुणत्वादीति। आदिना योग्यात्मविशेषगुणत्वसङ्ग्रहः। संवित् मानसप्रत्यक्षविषयः क्षणिकात्मविशेषगुणत्वात्, योग्यात्मविशेषगुणत्वाद्वा सुखादिवदिति साधनद्वयम्। अत्र धर्माधर्मयोर्व्यभिचारवारणाय क्षणिकत्वं योग्यत्वञ्च। शब्दे तद्वारणायाऽऽत्मेति। आत्ममनस्संयोगे तद्वारणाय विशेषेति। योग्यत्वञ्च प्रत्यक्षाविषयजातिशून्यत्वरूपतया आत्ममनस्संयोगेऽपि हि तदस्त्येव। क्षणिकत्वादेरिति आदिना गुणत्वस्य सङ्ग्रहः। असिद्धिरिति। संविदि क्षणिकत्वगुणत्वयोरनभ्युपगमादिति भावः। प्रायश्चित्तधर्मैरिति। प्रायश्चित्तजन्यपरमापूर्वरूपा धर्मा ह्युत्पन्नमात्राः पापं विनाश्य तत्क्षणमेव नश्यन्तीति क्षणिकाः, आत्मविशेषगुणाश्च। यद्यप्यपूर्वाणां कार्यविनाश्यत्वात् पापविनाशद्वितीयक्षण एव प्रायश्चित्तजन्यपरमापूर्वनाशो वाच्यः—तथापि परैः ज्ञानादीनामपि तृतीयक्षण एव नाशस्वीकारात् तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वरूपमेव क्षणिकत्वं निविष्टमिति न दोषः। अनैकान्तिकत्वमिति। इदञ्च क्षणिकत्वघटितहेतोरेव। योग्यत्वघटितहेतुसाधारण्यायाह एवमिति। जीवनपूर्वकप्रयत्नेनापीति। अनैकान्तिकत्वमित्यनुषङ्गेणान्वयः। यद्यपि जीवनपूर्वकप्रयत्नस्यापि न प्रत्यक्षविषयत्वरूपयोग्यत्वम्—तथापि योग्यताया इह प्रत्यक्षग्राह्यत्वरूपत्वे संदिग्धासिद्धिप्रसंगः; मानसप्रत्यक्षग्राह्यत्वसिद्धेः प्राक् तदसिद्धेः; अतः प्रत्यक्षाविषयजातिशून्यत्वमेवेह योग्यत्वं निवेश्यम्। इत्थं च जीवनपूर्वकप्रयत्ने तन्मात्रवृत्तिजातौ मानाभावेन, प्रयत्नस्य च प्रवृत्त्यादौ प्रत्यक्षविषयतयोक्तरूपयोग्यत्वं तत्राप्यक्षतमिति नानुपपत्तिः।

सुखदुःखयोः परस्पराभावरूपत्वं निरस्यति मिथस्संश्रयेति। अभावज्ञाने प्रतियोगिज्ञानस्य कारणतया सुखज्ञाने दुःखज्ञानस्य दुःखज्ञाने सुखज्ञानस्य चापेक्षितत्वादिति भावः। धीबाधेति। न हि तत्र दुःखं नास्तीत्येतावदेव; सुखमप्यस्ति। न हि तत्र सुखं नास्तीत्येतावदेव, दुःखमप्यस्तीत्येवं

इयं च प्रतिपुरुषनियता सर्वगोचरस्वभावाऽपि संसारावस्थायां कर्मणा संकुचिता तत्तत्कर्मानुगुणतारतम्यवती इन्द्रियाधीनप्रसरणा। तत एव तत्तत्प्रतिनियतविषया प्रसरणभेदाधीनप्रलयोदयभेदव्यपदेशवती च। तथा चोक्तं भाष्ये, "तमिममिन्द्रियद्वारा ज्ञानप्रसरमपेक्ष्य उदयास्तमयव्यपदेशः प्रवर्तते" इति। एतेन नित्यत्वेन कथमिन्द्रियाद्यपेक्षेति चोद्यं दत्तोत्तरम्॥

अत्र धारावाहिकविज्ञानं नीरन्ध्रनिर्गच्छद्युमणिमयूखवदेकरूपं वा, स्नेहदशादिसमवायसन्तन्यमानदीपवत् सन्ततिरूपं वेति चिन्तनीयम। तत्र वरदनारायणभट्टारकैः प्रथमः पक्ष उक्तः। तथा हि प्रज्ञापरित्राणे स्मृत्यप्रामाण्यप्रसंगेनोक्तम्—"धारावाहिकधीपङ्क्तिः स्वकालीनार्थभासिका। मेधातिरेकसद्भावात् नैरपेक्ष्यादपि प्रमा॥ स्तम्भः स्तम्भः स्तम्भ इति धीर्धारावाहिका मता। धारावाहिकविज्ञानमेकं ज्ञानं मतं हि नः॥ प्रतिबन्धांशमोक्षाद्यैर्नित्यं ज्ञानं हि जायते।

---

नोपलभ्येत परस्परविरहरूपत्वे अन्यतराभावेऽन्यतरावस्थितिनियमादित्यर्थः। तत्तत्कर्मानुगुणतारतम्यवतीति। "तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता। सर्वभूतेषु भूपाल तारतम्येन वर्तते॥" इति प्रमाणमनुसन्धेयम्। एतेनेति। प्रसरणस्येन्द्रियापेक्षत्वप्रतिपादनेनेत्यर्थः। मयूखवदेकरूपं वेति। दीर्घकिरणवदेकं वेत्यर्थः। स्वकालीनार्थेति—स्वाधारक्षणविशिष्टार्थभासिकेत्यर्थः। मेधातिरेकसद्भावादिति। अनधिगतार्थगन्तृत्वसद्भावादित्यर्थः। नैरपेक्ष्यादिति। स्मृतिवत् मूलभूतज्ञानान्तरसापेक्षत्वाभावादित्यर्थः। धीर्धारावाहिका मतेति। परेषामिति शेषः। परमतमुपन्यस्य स्वमतमुपन्यस्यति धारावाहिकविज्ञानमिति। प्रतिबन्धांशमोक्षाद्यैरिति। ततश्च अक्षादीनां ज्ञानप्रतिबन्धशान्तौ उपयोगः, न तु

---

परस्पराभावातिरिक्तत्वेन सुखदुःखयोरनुभवात् तेन बाधो धीबाधः। मध्यावस्थेति। सुखदुःखोभयरहितावस्थेत्यर्थः। जाग्रद्दशायामेव कदाचित् तादृशावस्थोपलभ्यते। यद्यपि सुषुप्तिदशायां तादृशावस्थाऽस्ति, तथापि न तस्याः प्रत्यक्षोपलभ्यसंभवः; तदा धर्मभूतज्ञानस्यात्यन्तसंकुचितत्वात्। अस्तु वाऽऽनुमानिकोपलम्भसाधारणप्रमितिमात्रमुपलम्भशब्दविवक्षितम्; सुखदुःखयोः परस्पराभावरूपत्वे एकासत्त्वेऽपरसत्त्वावश्यम्भावात् उभयरहितावस्था दुर्घटा स्यादिति भावः। इयमिति। संविदित्यर्थः। प्रतिपुरुषनियतेति। प्रतिपुरुषभिन्नेत्यर्थः। सर्वगोचरस्वभावेति। सर्वगोचरत्वस्वभावेत्यर्थः। एतेनेति। संसारदशायां संकोचस्येन्द्रियाधीनप्रसरणस्य च प्रतिपादनेनेत्यर्थः। एकरूपमिति। एकात्मकमित्यर्थः। प्रथमं परमतमुपन्यस्यति धारावाहिकेति। धीपंक्तिः धीसंततिः। स्वकालीनार्थभासिकेति। स्वाश्रयक्षणविशिष्टतयार्थभासिकेत्यर्थः। मेधातिरेकसद्भावादिति। गृहीतमात्रग्राहिज्ञानवैलक्षण्यसद्भावादित्यर्थः। पूर्वपूर्वज्ञानागृहीततत्तत्क्षणविशेषग्रहणसद्भावादित्यर्थः। नैरपेक्ष्यादिति। स्मृतिवत् मूलभूतज्ञानान्तरसद्भावापेक्षत्वाभावादित्यर्थः। मतेति। परेषामिति शेषः। परमतमुपन्यस्य स्वमतमाह धारावाहिकविज्ञानमिति। प्रतिबन्धांशमोक्षेति। चक्षुःसंयोगादीनां ज्ञानप्रसरणप्रतिबन्धकनिवृत्तावेवोपयोगः; न तु ज्ञानस्वरूपोत्पत्तौ। ज्ञानस्य नित्यत्वात् तत्प्रसरणस्य च स्वाभाविकत्वादिति भावः। अत्रेदं बोध्यम्—संविदः प्रसरणशक्तेः स्वाभाविकत्वेऽपि कर्मविशेषस्य भगवत्संकल्पविशेषरूपस्य प्रसरणप्रतिबन्धकतया तत्सत्त्वे न प्रसरणोत्पत्तिः; प्रतिबन्धकमणिसमवधानदशायां वह्निना दाहानुत्पत्तिवत्। चक्षुःसंयोगादेश्च

चिरमप्रतिबन्धेन चिरं तिष्ठति भासकम् ॥ चिरस्थितार्थधीरेव न धारावाहिका तु सा । न हीश्वरादिविज्ञानमागमादिक(मातिग)मिष्यते ॥ नित्यं हि तदतो नित्यं सर्वेषां ज्ञानमागमात् ।" इत्यादि ॥ उक्तं हि सन्मात्रब्रह्मप्रत्यक्षभङ्गे भट्टपराशरपादैः, "संकोचेऽपि करणसम्प्रयोगावधिकस्थैर्याभ्युपगमात्" इति । अस्मिन्नपि पक्षे यदा त्विन्द्रियसंयोगाः क्षणिकाः, तदा ज्ञानस्यापि क्षणिकत्वमेष्टव्यमेव । अन्ये तु ज्ञानस्य क्षणिकत्वे ध्यानस्य सन्ततिरूपत्वे च स्मृतिभाष्यादिदर्शनात् द्वितीयः पक्ष इति ॥

---

ज्ञानोत्पत्ताविति भावः । **चिरस्थितार्थधीरेवेति** । एकैव अर्थधीश्चिरस्थिता धारावाहिका इति व्यवह्रियते, न तु धारावाहिका धीपङ्क्तिः, धाराया एवाभावादित्यर्थः । **आगमादिकमिति** । आगमः आदिः कारणं यस्य तत् **आगमादिकम्** । **आगमशब्दः** प्रमाणान्तरस्याप्युपलक्षणम् । ततश्च आगमादिजन्यं नेष्यते इत्यर्थः । **आगमातिगमिति** पाठेऽपि आगमविरुद्धमनित्येश्वरज्ञानं नास्तीत्यर्थः । तत्र हेतुमाह **नित्यं हीति** । **सर्वेषां ज्ञानमिति** । एवं ज्ञानं नित्यं ज्ञानत्वात् ईश्वरज्ञानवदित्यनुमानात् सर्वज्ञाननित्यत्वसिद्धिरितीत्यर्थः । **"न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते"** इत्यागममपि ज्ञाननित्यत्वे प्रमाणयति **आगमादिति** । **करणसम्प्रयोगेति** । यावन्तं कालमुन्मीलितं चक्षुः, तावत्तिष्ठतीत्यर्थः । **स्मृतिभाष्यादिदर्शनादिति** । "तद्रूपप्रत्यये चैका सन्ततिश्चान्यनिस्पृहा" इति

---

तत्रत्योत्तेजकत्वम् । तथाच चक्षुस्संयोगाद्यभावविशिष्टकर्मविशेषस्यैव तत्तत्प्रसरणविशेषप्रतिबन्धकत्वं पर्यवसितम्; उत्तेजकाभावविशिष्टमणेर्दाहप्रतिबन्धकत्ववत् । इत्थञ्च चक्षुस्संयोगादेर्विशिष्टप्रतिबन्धकाभावसंपादकत्वमेव, न तु प्रसरणं प्रति हेतुत्वमिति **वरदनारायणभट्टारकाभिप्रायः** । प्रतिबन्धकसमवधानकालीनकार्योत्पत्तौ उत्तेजकानां हेतुत्वमिति पक्षे चक्षुस्संयोगादीनां चाक्षुषादिप्रसरणं प्रत्येव हेतुत्वम् । मण्यादिस्थले मणिमन्त्रादीनामननुगततया हेतुत्वासंभवेऽपि इह तद्दोषविरहेण, लाघवाच्च चक्षुस्संयोगत्वादिना हेतुत्वमेव च युक्तम् । इत्थञ्च प्रत्यक्षादीनां प्रमितिकरणत्वसमर्थनया प्रमाणत्वनिर्वाह इति । **चिरमप्रतिबन्धेनेति** । चिरं नाशकासमवधानेनेत्यर्थः । चाक्षुषप्रसरणनाशे चक्षुस्संयोगनाशस्यैव हेतुतया निश्चलचक्षुस्संयोगस्य चिरस्थायित्वसंभवात् तावत्पर्यन्तं चाक्षुषस्य स्थायित्वं संभवतीति भावः । **चिरस्थितार्थधीरेवेति** । यत्र परेषां धारावाहिनीः संमता, तत्र चिरस्थिता धीरेव प्रामाणिकी; न तु क्षणिकधीसंततिरूपा धारावाहिकेत्यर्थः । **आगमादिकमिति** । आगमः आदिः कारणं यस्य तत् **आगमादिकम्** । आगमजन्यमित्यर्थः । **आगमः** शब्दः । इदञ्च प्रमाणान्तरस्याप्युपलक्षणम् । तथाच प्रमाणजन्यं नेष्यत इत्युक्तं भवति । **आगमातिगमिति** पाठे आगमविरुद्धमनित्यं नेष्यत इत्यर्थः । **ईश्वरादीति आदिना**, "सदा पश्यन्ति" इत्युक्तनित्यसूरिसंग्रहः । तत्र हेतुमाह **नित्यं हीति** । **सर्वेषां ज्ञानमिति** । बद्धानामपि ज्ञानमित्यर्थः । तथाच ज्ञानं सर्वं नित्यं ज्ञानत्वादीश्वरज्ञानवदित्यनुमानेन सर्वस्यापि ज्ञानस्य नित्यत्वसिद्धिरिति भावः । "न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" इत्याद्यागमेनापि सर्वस्यापि ज्ञानस्य नित्यत्वसिद्धिरित्यभिप्रायेणाह **आगमादिति** । उक्तागमानुग्राहकसंभावनातर्करूपं वोक्तानुमानम् । सर्वथा सर्वस्यापि ज्ञानस्य नित्यत्वसिद्धिः । **करणसंप्रयोगावधिकेति** । चक्षुरादिसंयोगस्थितिपर्यन्तस्थैर्याभ्युपगमादित्यर्थः । **ज्ञानस्यापि क्षणिकत्वमेष्टव्यमिति** । इन्द्रियसंप्रयोगनाशस्य तन्नाशकत्वादिति भावः । **स्मृति-**

अस्याः स्वतःप्रत्यक्षस्वभावाया एव प्रत्यक्षानुमित्यादि-दृष्टिश्रुतिमत्यादिविभागोऽपि करण-भेदोपाधिकः। सर्वप्रसरणेऽपि स्वात्मनि प्रत्यक्षप्रकाशात्मिकैव। निरतिशयवेगित्वात् निरतिशय-सूक्ष्मत्वाच्च सहसैव विप्रकृष्टसंबन्धः, अप्रतिघातश्च॥ संयोगलक्षणश्चास्याः संबन्धः। तथोक्तं भाष्यादिषु, "संबन्धश्च संयोगलक्षणः, ज्ञानञ्च द्रव्यमेव" इत्यादिकण्ठोक्त्या॥

ननु (1) बुद्धेर्नित्यत्वे किं प्रमाणम्? (2) तथात्वे कथं जागरसुषुप्त्यादिभेदसिद्धिः? (3) किञ्च प्रमाणं प्रसरणे? (4) कथञ्च आत्मगुणभूताया बुद्धेर्द्रव्यत्वम्? (5) किञ्च द्रव्यत्वे प्रमाणम्? (6) कथञ्च आत्मधर्मभूतायास्तस्याः स्वाश्रयादन्यत्र गमनम्? (7) कथञ्च उपचयविरलभावाभावे परिमाणान्तरयोगः? (8) कथञ्च अतीतानागतैः संबन्धः संयोगः? (9) कथञ्च गुणादिभिः? (10) कथं वा मध्यस्थितानां सम्बद्धानामप्रकाशत्वम्? (11) कथञ्च मुक्तबुद्धेर्युगपत् क्रमेण वा अनन्तदेशसंयोगः? (12) कथञ्च व्याप्तायां स्वबुद्धिचन्द्रिकायां प्लवमानस्य स्वलालातन्तुविताने लगन्त्या लूतिकाया इव

---

स्मृतेः, "क्षणभङ्गिन्याः संविद आत्मत्वाभ्युपगमे" इत्यादिभाष्यस्य च दर्शनादित्यर्थः। स्वतः प्रत्यक्षस्वभावाया एवेति। न च स्वतःप्रत्यक्षस्वभावत्वं कुतोऽवसीयत इत्याशङ्क्यम्; मुक्तौ सर्वोपाध्यपगमदशायां प्रत्यक्षस्वरूपत्वस्यैव स्वाभाविकत्वादिति भावः। निरतिशयेति। वेगस्य विप्रकृष्टसम्बन्धे, सौक्ष्म्यस्य अप्रतिघाते च हेतुत्वादित्यर्थः। भाष्याद्युक्तिमेव दर्शयति संबन्धश्चेति। इदञ्च भाष्यम्, "नाभाव उपलब्धेः" इति सूत्रे द्रष्टव्यम्। कण्ठोक्त्येति। कण्ठोक्तत्वादित्यर्थः॥

ननु या बुद्धिर्यज्जीवसञ्चारान्वयव्यतिरेकानुविधायिसञ्चारा, सा तदीयेति निश्चेतुम् इत्याशङ्क्याह सञ्चाराधीनेति। सञ्चरन्नपि जीवो व्याप्तया स्वबुद्धेः प्रदेशान्तरेण परं संसृज्यते, न तु

---

भाष्यादिदर्शनादिति। "तद्रूपप्रत्यये चैका संततिश्चान्यनिःस्पृहा। तत् ध्यानं प्रथमैः षड्भिरङ्गैर्निष्पाद्यते तथा" इति स्मृतेः। "क्षणभङ्गिन्याः संविद आत्मत्वाभ्युपगमे" इत्यादिभाष्यस्य, संविदः कारणनाशनाश्यतया स्मृतिजनकसंस्कारनाशे स्मृतिनाशावश्यम्भावात् संस्कारस्य च स्मृतिरूपफलनाश्यत्वाच्च स्मृतीनां तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वरूपक्षणिकत्वमावश्यकमित्यादियुक्तेश्च दर्शनादित्यर्थः। स्वतः-प्रत्यक्षस्वभावाया इति। वैशद्याख्यविषयताविशेषप्रयोजकनित्यशक्तिमत्या इत्यर्थः। प्रत्यक्षत्वानुमितित्वादीति। स्वेतरनिष्ठवैशद्याख्यविषयतानिरूपकत्वरूपप्रत्यक्षत्वानुमितित्वादीत्यर्थः। आदिना शाब्दत्वस्मृतित्वादिसंग्रहः। करणभेदोपाधिक इति। संसारदशायामिति आदिः। नित्याया वैशद्यरूपप्रत्यक्षत्वशक्तेः कर्मविशेषेण प्रतिबद्धतया इदानीं करणायत्तमेव तदित्यभिप्रायः। स्वात्मनीत्यादि। स्वनिष्ठोक्तविषयताविशेषनिरूपिकैवेत्यर्थः। निरतिशयवेगित्वादिति। इदञ्च सहसैव विप्रकृष्टसंबन्धोपयोगितयोक्तम्। निरतिशयसूक्ष्मत्वाच्चेति। इदञ्चाप्रतिघातोपयोगितयोक्तम्। कण्ठोक्त्येति। तथोक्तमिति पूर्वेणान्वयः। न तु द्योतितमिति भावः।

उपचयविरलभावेति। अवयवान्तरसंयोग उपचयः। दृढसंयुक्तानामवयवानां प्रशिथिलसंयोगो विरलभावः। मृत्पिण्डादिषु प्रथमस्य, तूलपिण्डादिषु द्वितीयस्य च परिमाणान्तरहेतुत्वदर्शनादिति भावः। मध्यस्थितानां संबद्धानामिति। दूरस्थेन चन्द्रादिना संयोगदशायां मध्यस्थितानामपि

सञ्चाराधीनतत्तद्बुद्धिप्रदेशसंयोगस्य स्वबुद्ध्या सह बुद्ध्यन्तरव्यावृत्तः स्वाभाविकः सम्बन्धः ? इति।

(द्वादशचोद्यपरिहारः)

तत्र पूर्वस्मिन् आगम उत्तरम् । यथा, "न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते, न हि द्रष्टुर्दृष्टे-र्विपरिलोपो विद्यते, अविनाशित्वात्" इत्यादि । व्याख्यातञ्चैतत् आत्मसिद्धौ, "ज्ञातुरविनाशित्वादेव ज्ञानस्यापि अविनाशित्वमुपपादयन्ती श्रुतिरियं ज्ञातृस्वरूपप्रयुक्तं ज्ञानमिति दर्शयति" इति । अत्र स्मृतिरपि, "यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः। दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा ॥ यथोदपानकरणात् क्रियते न जलाम्बरम् । सदेव नीयते व्यक्तिमसतः संभवः कुतः ॥ तथा हेयगुणध्वंसादवबोधादयो गुणाः । प्रकाश्यन्ते न जन्यन्ते नित्या एवाऽऽत्मनो हि ते ॥' इत्यादि ।

सूत्रञ्च, "ज्ञोऽत एव" इति, "यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्" इति च ।

द्वितीये तु प्रतिबन्धकं तमः। यथा दाहकस्य वह्नेर्मण्यादिसन्निधावदाहकत्वम्, तदपगमे च हेत्वन्तर-निरपेक्षदाहकत्वम्, तद्वत् तमोविशेषसन्निधानासन्निधानाभ्यां स्वापादिसिद्धिः। उक्तञ्च, "पुंस्त्वादि-वत्त्वस्य सतोऽभिव्यक्तियोगात्" इति । अतो जागरादिदशानियतप्रसरणा विषयप्रकाशवेलायामेव बुद्धिः प्रकाशते, नान्यदेति सुस्थम्। यत्तु (।) षडर्थसंक्षेपे श्रीराममिश्रैरुक्तम्, "सत्यं स्वतः सिद्धिः। सा सुषुप्तावपि नास्फूर्तिः। स्वाश्रयायैव हि सा भाति । स एव विशेष इति स्वावसरे वक्ष्यामः

---

स्वबुद्धिं च लभ्यति । अत इतरव्यावृत्तः सम्बन्धविशेषो दुर्ग्रह इति भावः ।

द्वादशानां चोद्यानां क्रमेण परिहारमाह तत्र पूर्वस्मिन्नित्यादिना । दोषप्रहाणादिति । अविद्या-निवृत्तेरित्यर्थः। यथोदपानेति । न हि कूपखननात् तत्रत्यमाकाशं जलञ्चोत्पद्यते, अपि तु पूर्वमेव विद्यमान-मभिव्यज्यते इत्यर्थः । यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्=ज्ञानस्य यावदात्मस्वरूपभावित्वात् ज्ञानवाचिना शब्देन आत्मव्यपदेशो न दोषाय । यथा खण्डादिर्यावत्स्वरूपभाविगोत्ववाचिभिर्गवादिशब्दै-र्व्यपदिश्यमानो दृश्यते, तद्वदित्यर्थः । प्रतिबन्धकं तम इति । स्वापादिहेतुभूतस्तमोगुणविशेष इत्यर्थः । ननु सुषुप्त्यादिषु ज्ञानस्यानुपलब्धेर्न यावदात्मभावित्वमित्याशङ्क्याह पुंस्त्वादिवत्त्वस्य सतोऽभि-व्यक्तियोगात् । तुशब्दः शङ्कानिवर्तकः । सुषुप्त्यादिष्वपि सतो ज्ञानस्यानभिव्यक्तस्य जागरणा-दिष्वभिव्यक्तिसंभवात् । यथा बाल्येऽपि सतोऽनभिव्यक्तस्य स्मरस्य यौवनेऽभिव्यक्तिः, तद्वदित्यर्थः । अस्फूर्तिरिति । स्फूर्तिशून्या । सुषुप्तावपि नास्फूर्तिः; स्फूर्तिमतीत्यर्थः । ननु सुषुप्तौ विषयस्याभानात् निर्विशेषस्यैव ज्ञानस्य भानमभ्युपगन्तव्यं स्यादित्यत आह स एव विशेष इति । बुद्धेराश्रय एव विशेष इत्यर्थः । अत एव श्रुतप्रकाशिकायामुक्तम्, "धर्मेण धर्मी सविशेषः, धर्मिणा च धर्मः सविशेषः"

---

संयोगावश्यम्भावादिति भावः । अप्रकाशत्वमिति । अविषयत्वमित्यर्थः । अप्रकाशकत्वमिति पाठे अविषयीकरणमित्यर्थः । मध्यस्थितवस्तुनिष्ठविषयतानिरूपकत्वमिति फलितम् । युगपदिति । दूरसमीप-वर्तिभ्यां युगपत्संयोगासंभवादिति भावः । क्रमेणैवेति । सर्वसंयोगस्यानेकक्षणसाध्यत्वादिति भावः ।

उक्तानां द्वादशानामाक्षेपाणां क्रमेण परिहारमाह तत्रेत्यादिना । ज्ञातृस्वरूपप्रयुक्तमिति । स्वरूपव्यापकमित्यर्थः । व्याप्यव्यापकभावघटकसंबन्धश्च कालिकविशेषणता । तेन ज्ञातृस्वरूपाधिकरणेषु सर्वेष्वपि कालेषु तदीयज्ञानसद्भावसिद्ध्या तस्यागन्तुकत्वं व्यवच्छिद्यते । दोषप्रहाणादिति । ज्ञान-संकोचककर्मानिवृत्तेरित्यर्थः । नास्फूर्तिरिति । न स्फुरणशून्येत्यर्थः ।

अव्यवहारनियमस्तु करणोपरतिनियमात्" इति । एवम्प्रकारमेव ( ) विवरणेऽप्युक्तम्—तदेतत् वैभववाद इति मन्तव्यम् । अन्यथा, "पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्" इति सूत्रेण तद्भाष्येण च विरोधात् । सर्वविषयप्रकाशनशीलायाः संविदो यथा समस्तबाह्यविषयवैमुख्यं तथा आन्तरविषयविमुखत्वमपि भवतीति किमत्र चित्रम् ? यत्तु भाष्ये—"एवं हि सुप्तोत्थितस्य परामर्शः, सुखमहमस्वाप्समिति । अनेन प्रत्यवमर्शेन तदानीमेवाहमर्थस्यैवात्मनः सुखित्वं ज्ञातृत्वञ्च ज्ञायते" इत्युक्तम्, तत् स्वरूपानुकूल्यविवक्षया प्रत्यक्त्वविवक्षया चेति न विरोधः ॥

तृतीये तु भगवद्यामुनमुनिभिरेवमेवोक्तम्, यथा, "अत इन्द्रियेण सह चैतन्यमपि निस्सृत्य तेनतेनार्थेन सन्निकृष्यते हस्तादिनेव त्वगिन्द्रियम्" इत्याद्यभिधाय, 'व्योमवदमूर्तस्य न क्रियावत्त्वमिति चेत्" इत्याशङ्क्य, "केयं मूर्तिर्नाम, यद्विरहिणः क्रियाऽयोगः" इत्यादिना परिहृत्य, व्यवहितविप्रकृष्टसम्बन्धप्रकारञ्च प्रसाध्य, "यथाऽऽह भगवान्", "तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि" इति । मनुश्च, "इन्द्रियाणां हि चरतां यद्येकं क्षरतीन्द्रियम् ॥ तेनास्य क्षरति प्रज्ञा दृतेः पादादिवोदकम् ॥" इति ।

अस्ति चात्र श्रुतिः, "प्रज्ञा च तस्मात्प्रसृता पुराणी" इति ॥ अन्यपरत्वं श्रुतिस्मृत्योरिति चेत्—स्वरसप्रतीतेर्बाधकाभावात् । बाधितांशे हि तत् ॥ चतुर्थे निदर्शनं प्रभादि । यथोक्तं भाष्ये, "प्रभाद्रव्यस्य दीपगुणभूतस्येव ज्ञानस्यापि आत्मगुणभूतस्य द्रव्यत्वमविरुद्धम्" इति । प्रभायाश्च वक्तव्यं प्रागेवोक्तम्, प्रपञ्चितञ्च भाष्ये । क्वचिदाश्रितस्यैव द्रव्यस्य अन्याश्रयित्वमवयवित्वादिनां तु अवर्जनीयम् । किञ्च न तावदस्माकमद्रव्यमेव गुण इति वैशेषिकादिवत् निर्बन्धो विशेषणादिवत् ।

---

इति । आन्तरविषयविमुखत्वमपीति । आत्मस्वात्मांशप्रकाशनाविमुखत्वामित्यर्थः । स्वरूपानुकूल्येति । अनुकूलत्वमेव सुखित्वम्, प्रत्यक्त्वमेव ज्ञातृत्वमिति भावः । हस्तादिनेति । सहेति शेषः । ननु, "तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात्प्रसृता पुराणी" इति श्वेताश्वतरश्रुत्या परमात्मनो जीवज्ञानोत्मेषहेतुत्वमेव प्रतिपाद्यते, "इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते । तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि" इति गीतावचनम् उदाहृतमानववचनञ्च अविजितेन्द्रियाणां ज्ञाननाशपरम्; न तु इन्द्रियाधीनज्ञानप्रसरणे प्रमाणम् इत्याशङ्कते अन्यपरत्वमिति । स्वरसप्रतीतेरिति । "तदस्य हरति प्रज्ञाम्" इति वाक्ये विषयगतस्य मनसो ज्ञानाकर्षकत्वप्रतीतेः, "तेनास्य क्षरति प्रज्ञा" इत्यत्रापि तत्तद्विषयप्रवणेन्द्रियद्वारा बुद्धिर्निर्गत्य विषयप्रवणा भवतीत्यस्यार्थस्य प्रतीतेरिति भावः । निदर्शनं प्रभादीति । मणितरण्यादिगुणभूताया अपि प्रभाया द्रव्यत्वदर्शनादिति भावः । ननु विशीर्णदीपावयवानामेव प्रभात्वेन न दीपप्रभयोराश्रयाश्रयिभावनिदर्शनत्वमित्याशङ्क्याह प्रभायाश्चेति । प्रागेवेति । प्रथमपरिच्छेद एवेत्यर्थः । ननु गेहाश्रितायाः प्रभायाः कथं दीपाश्रितत्वम्, कथं वा ज्ञानद्रव्याननिष्ठस्य घटज्ञानादेरात्मनिष्ठत्वम् इत्याशङ्क्याह क्वचिदाश्रितस्यैवेति । अवयवित्वादिनामिति । भूतलाश्रितस्यैव घटस्य कपालावयवाश्रितत्वदर्शनादित्यर्थः । विशेषणादिवदिति । न हि अद्रव्यमेव

---

विमुखत्वमिति । राहित्यमित्यर्थः । स्वरूपानुकूल्येति । 'स्वरूपनिष्ठं यदानुकूल्यम्, तदेव सुखित्वमित्यनेन विवक्षितम्; प्रत्यक्त्वमेव ज्ञातृत्वमित्यनेन विवक्षितम्" इत्यर्थः । तृतीय इति । किञ्च प्रमाणं प्रसरणे इत्यत्रेत्यर्थः । हस्तादिनेति । सहेत्यनुषज्यते । चतुर्थं इति । कथञ्चात्मगुणभूताया बुद्धेर्द्रव्यत्वमित्यत्रेत्यर्थः । अवर्जनीयमिति । स्वावयवाश्रितस्यैव घटादेर्भूतलाद्याश्रितत्व

'यो यदाश्रितस्वभावः स तस्य गुणः' इति हि गुणलक्षणम्। न तु पारिभाषिकम्; सर्वव्यवहारविरोधात्। एवञ्च गुणेषु कश्चिद्विशेषः, द्रव्यात्मकगुणाः, केवलगुणाश्चेति। पूर्वे ज्ञानादयः, उत्तरे सत्त्वरजस्तमःप्रभृतयो दृश्यन्ते। तत्र, गुणैकरूपत्वमात्रादेव रूपादिषु गुणशब्दस्य मुख्यत्वम्, ज्ञानादिषु गौणत्वम्, "अस्याश्च" इति भाष्यस्य विवरणेऽप्युक्तम्, "नित्यपारतन्त्र्याद्गौणो गुणव्यपदेशः" इति [वदन्ति]। तस्मिंस्तु पक्षे गुणत्वानभ्युपगमात् न चोद्यावकाशः। अन्ये तु तस्यैव प्रवृत्तिनिमित्तत्वेन मुख्यत्वोपपत्तेः गौणत्वकल्पनं नानुमन्यन्ते। "अस्याश्च" इत्यादिभाष्यं तु साधारणम्। "प्रभाद्रव्यस्य" इत्यादिभाष्यम्, "यद्यपि प्रभा प्रभावद्द्रव्यगुणभूता, तथापि

---

विशेषणमपि निर्बाधोऽस्तीति भावः। सर्वव्यवहारविरोधादिति। दातृत्वादिष्वपि गुणत्वव्यवहारादित्यर्थः। तत्र गुणैकरूपत्वेति। अत्र तत्रेत्यनन्तरं केचित् इति शेषः, सत्त्वादिषु गुणशब्दस्येत्यस्यानन्तरं व्यपदेश इति शेषः(?), गौणो गुणव्यपदेश इतीत्यस्यानन्तरञ्च, "इति वदन्ति" इति शेषः पूरणीयः। न चोद्यावकाश इति। सत्त्वादिष्विव बुद्धावपि गुणत्वस्य[मुख्यत्वासंभवेऽपि?] औपचारिकत्वसम्भवात् कथञ्चात्मगुणभूताया बुद्धेर्द्रव्यत्वमिति चोद्यस्य नावकाश इत्यर्थः। ये तु बुद्ध्यादीनां द्रव्यत्वं गुणत्वञ्च, सत्त्वादीनां गुणैकरूपत्वमिति मन्यन्ते, तेषां मतमुपन्यस्यति अन्ये त्वित्यादिना द्रव्यत्वाप्रसिद्धेरित्यन्तेन। तस्यैवेति। यो यदाश्रितस्वभावः स तस्य गुण इति पूर्वोक्तस्येत्यर्थः। अस्याश्चेत्यादिभाष्यं त्विति। "अस्याश्च गुणत्वव्यवहारो नित्यतदाश्रयत्वतच्छेषत्वनिबन्धनः" इत्यहमर्थात्मसमर्थनप्रकरणगतं भाष्यं गुणशब्दस्य प्रभायां गौणत्वमुख्यत्वयोः साधारणम्; उभयथाऽपि भाष्यस्योपपन्नत्वादिति भावः। प्रभाद्रव्यस्येत्यादि भाष्यमिति। "नाभाव

---

दर्शनादिति भावः। यदाश्रितस्वभाव इति। यन्निरूपितापृथक्सिद्धसंबन्धावच्छिन्नाधेयताश्रय इत्यर्थः। यदनुयोगिकापृथक्सिद्धिसंबन्धप्रतियोगीति वा। गुणलक्षणम्—गुणशब्दप्रवृत्तिनिमित्तप्रतिपादकं वाक्यम्, तथाचापृथक्सिद्धिसंबन्धावच्छिन्नाधेयत्वमेव गुणशब्दप्रवृत्तिनिमित्तमिति फलितम्। पारिभाषिकमिति। तान्त्रिकसंकेतरूपपरिभाषया रूपादिद्रव्यमात्रप्रतिपादकमित्यर्थः। गुणपदमिति शेषः। सर्वव्यवहारविरोधादिति। घटपटादिव्यवहारवत् लौकिकतान्त्रिकादिसर्वव्यवहाराविरोधादित्यर्थः। पारिभाषिकत्वे हि तान्त्रिकमात्रव्यवहार्यत्वमेव स्यादिति भावः। लोके हि दातृत्वादिषु सर्वैरपि गुणव्यवहारः क्रियते ॥ अत्र केषाञ्चिन्मतमाह तत्रेति। गुणैकरूपत्वमात्रादिति। एकशब्देन द्रव्यत्वव्यवच्छेदः तथाचापृथक्सिद्धिसंबन्धप्रतियोगिद्रव्यत्वं गुणशब्दप्रवृत्तिनिमित्तमित्येतेषामभिप्रायः। नित्यपारतन्त्र्यात्-अपृथक्सिद्धिप्रतियोगित्वात्। गुणत्वानभ्युपगमादिति। अपृथक्सिद्धिप्रतियोगिद्रव्यत्वस्यैव गुणत्वरूपत्वादिति भावः। न चोद्यावकाश इति। कथञ्चात्मगुणभूताया बुद्धेर्द्रव्यत्वमिति चोद्यस्य नावकाश इत्यर्थः। तस्यैवेति। यो यदाश्रितस्वभावः, स तस्य गुणः इत्युक्तस्यापृथक्सिद्धिसंबन्धप्रतियोगित्वस्यैवेत्यर्थः। प्रवृत्तिनिमित्तत्वेनेति। गुणशब्दप्रवृत्तिनिमित्तत्वेनेत्यर्थः। मुख्य

शौक्ल्यादिवत् न गुणः" इत्यादिभाष्यञ्च मुख्यपक्षस्वरसम्; यत्तु सत्त्वादीनां द्रव्यत्वप्रतिक्षेपेण, "गुणा इत्येव च सत्त्वादीनां प्रसिद्धिः" इति भाष्यम्, तदपि। अवधारणस्वारस्यात् द्रव्यत्वाप्रसिद्धेः। एवं वरदनारायणभट्टारकपक्षेऽपि न चोद्यावकाशः, ज्ञाने द्रव्यशब्दस्यौपचारिकत्वात्। अयमेव गुणः केषाञ्चिद्विवक्षान्तरेण जातिगुणक्रियाद्रव्यरूपेणापि हि विकल्प्यते। यथा—अनेकेषां धर्मिणामन्तरङ्गो धर्मविशेषो जातिः; यन्निरूपिते वस्तुनि प्रायशो विशेषाकाङ्क्षाशान्तिः सोऽन्तरङ्गः। तदनुप्राणितस्य तस्य विशेषकः सिद्धो गुणः। तथाविधं साध्यं क्रिया। एतैर्विशिष्टं द्रव्यमिति। एवमेव हि जातिगुणक्रियाद्रव्यवाचित्वं शब्दानाम्। अत्र अवान्तरगुणशब्दः कथा-सामान्यविशेषयोर्वादशब्दवत्। अत्र च एकमेव वस्तु द्विधा, त्रिधा, चतुर्धा वा विकल्पयितुं

---

उपलब्धेः" इति भाष्ये (भूतेः) इति शेषः। न शौक्ल्यादिवद्गुण इत्यादिभाष्यञ्चेति। इदञ्च भाष्यम्, "अस्याश्च" इति भाष्यात् पूर्वभाष्यमिति द्रष्टव्यम्। यत्तु सत्त्वादीनामिति। "रचनानुपपत्तेश्च" इति सूत्रे इति शेषः। द्रव्यत्वाप्रसिद्धेरिति। सूचनादिति शेषः। ततश्चावधारणेन द्रव्यत्वप्रसिद्ध्यभावसूचनात् केवलगुणरूपत्वं सत्त्वादीनामिति भावः। एवमिति। केवलद्रव्यत्ववादिपक्ष इवेत्यर्थः। द्रव्यशब्दस्यौपचारिकत्वादिति। येषां मते ज्ञाने द्रव्यत्वं गुणत्वञ्च, उभयमपि मुख्यम्, तन्मत एव विरोधप्रसक्तेरिति भावः। अयमेव गुण इति। यदाश्रितस्वभावलक्षणो गुण इत्यर्थः। तदनुप्राणितस्येति। तया-जात्या, अनुप्राणितस्य—शान्तविशेषाकाङ्क्षस्येत्यर्थः। एवमेव हीति। अनुप्राणनहेतुभूतधर्मवाचकत्वं जातिवाचकत्वम्, अनुप्राणितविशेषकसिद्धधर्मवाचित्वं गुणवाचित्वम्, अनुप्राणितविशेषकसाध्यधर्मवाचकत्वं क्रियावाचित्वम्, एतत्त्रयविशिष्टवाचित्वं द्रव्यवाचित्वमित्यर्थः। ननु गुणशब्दस्य जात्यनुप्राणितविशेषकसिद्धधर्मवचनत्वे यो यदाश्रितस्वभावः इति पूर्वोक्तं जातिक्रियादिसाधारण्यं भज्येतेत्यत आह अत्रावान्तरगुणशब्द इति। अत्र=जात्यनुप्राणितविशेषकसिद्धधर्मे इत्यर्थः। जात्यनुप्राणितविशेषकसिद्धधर्मे प्रयुज्यमानो गुणशब्दोऽवा-न्तरगुणत्वप्रवृत्तिनिमित्तक इत्यर्थः। अत्र चैकमेव वस्त्विति। जातिगुणक्रियाद्रव्यस्वरूपेषु एवं व्यव

---

स्थोपपत्तेरिति। ज्ञाने गुणशब्दस्येति भावः। मुख्यपक्षस्वरसमिति। प्रथमपक्षे स्वरसमित्यर्थः। तदपीति। मुख्यपक्षस्वरसमित्यनुषज्यते। द्रव्यत्वाप्रसिद्धेरिति। सूचनादिति शेषः। ततश्चापृथक्सिद्धप्रतियोगिद्रव्यत्वमेव गुणत्वमित्यभिप्रायो व्यज्यते इति भावः। एवमिति। गुणत्वानुप-गमपक्ष इवेत्यर्थः। औपचारिकत्वादिति। द्रव्यशब्दस्य गुणशब्दस्य च यत्पक्षे ज्ञाने मुख्यत्वम्, तत्पक्ष एव चोद्यावकाश इति भावः। अयमेव गुण इति। अपृथक्सिद्धत्वप्रतियोगिरूपो गुण एवेत्यर्थः। यन्निरूपिते यत्प्रकारकनिर्णयविषयभूते। तदनुप्राणितस्य तन्निर्णयाधीनविशेषाकाङ्क्षा-विषयत्वाभाववतः। तस्य विशेषकः सिद्धो गुण इति। अपृथक्सिद्धत्वप्रतियोगिजात्यतिरिक्त-सिद्धधर्मत्वमित्युक्तं भवति। तथाविधेति। जात्यनुप्राणितस्य तस्य विशेषक इत्यर्थः। साध्यं क्रियेति। अपृथक्सिद्धत्वप्रतियोगिजात्यतिरिक्तसाध्यधर्मत्वं क्रियात्वमित्युक्तं भवति। एतैर्विशिष्टं द्रव्यमिति। जात्यादिविशिष्टत्वमवस्थात्रयमेव वा द्रव्यत्वमित्यर्थः। ननु कथं गुणशब्दस्य सामान्यवाचकत्वं विशेषवाचकत्वञ्चेत्यत्राह अत्रावान्तरगुणशब्द इति। विशेषवाचिगुणशब्द इत्यर्थः। विशेषेति।

शक्यम्। यथा ज्ञानमेव च संयोगादिमत्तया द्रव्यम्, तदेव आत्मनः प्रत्यक्त्वेन निरूपितस्वरूपस्य विशेषकतया गुणः, जानात्यादिनिर्देशे क्रिया। एवमन्यत्रापि चिन्त्यम्। "सत्त्वं द्रव्यम्, असत्त्वमद्रव्यम्", इति वदतां तु सर्वेषां गुणानां द्रव्यत्वं विवक्षितमित्यलं प्रसक्तानुप्रसक्त्या॥

पञ्चमे तु ब्रूमः—बुद्धिर्द्रव्यं प्रसरणादिमत्त्वात् सम्प्रतिपन्नवत्, अत्रैव साध्ये ज्ञानत्वादात्मवत् इत्यादि। वरदविष्णुमिश्रैस्तु एवमुक्तम्—"ज्ञानं द्रव्यं संयोगादृष्टान्यत्वे सति भावनाकारणत्वात् आत्मवत्" इति। षष्ठस्य चतुर्थ एव दत्तमुत्तरम्। यदि तु स्वाश्रयत्यागोऽभिमतः; स नेष्यते। उक्तं हि अत्रैव चोद्ये भगवद्यामुनमुनिभिः—"आत्मप्रहाणानभ्युपगमात् अविहायैवाऽऽत्मानं इन्द्रियद्वारेण चेतना इन्द्रियादिद्वारा निस्सरति। विच्छिन्नायाश्च तस्याः सन्धानासम्भवः शास्त्र एवोक्तः" इति। सप्तमस्य अहिकुण्डलदृष्टान्तेन निरासः। न च तावता बहळविरळत्वादिप्रसङ्गः; भिदुरभागवत्स्वेव

स्थितेषु सत्सु, एकस्यैव वस्तुनो जात्यादिवाचकस्वरूपकरणेन सुशकमिति भावः। सत्त्वं द्रव्य मिति वदतामिति। इदं तदिति निर्देशार्हत्वलक्षणं सत्त्वमिति वदतां शाब्दिकानामित्यर्थः॥

[संयोगेति। ?] भावन रूपसंस्कारकारणयोर्मनस्संयोगादृष्टयोर्व्यभिचारवारणाय सत्यन्तम्। रूपादिषु व्यभिचारवारणाय विशेष्यम्। कथं स्वाश्रयादन्यत्र गमनमित्यस्य कोऽर्थः? स्वाश्रयादन्यदेशवृत्तित्वं न सम्भवतीति वा, स्वाश्रयपरित्यागोऽनुपपन्न इति वेति विकल्प्य प्रथमं दूषयति दत्तमुत्तरमिति। प्रभादिनिदर्शनादिति भावः। द्वितीयं दूषयति यदित्विति। चेतनेति। इन्द्रियद्वारा चेतना निस्सरतीति योजना। ननु आत्मानं विहाय विषयेषु चरित्वा विच्छिन्ना चेतना पुनरपि आत्मानमाश्रयतु इत्याशङ्क्याह विच्छिन्नायाश्चेति। शास्त्र एवेति। न्यायतत्त्वशास्त्रे श्रीमन्नाथमुनिभिरिति भावः। अहिकुण्डलेति। अधिकपरिमाणस्यैव अहेः कुण्डलीभावे अल्पपरिमाणत्वदर्शनादित्यर्थः। बहळविरळत्वादिप्रसङ्ग इति। तूलपिण्डादौ प्रचयादियोगिपरिमाणोत्कर्षे विरलावयवत्वदर्शनादिति

तत्तद्वस्तु मुकथारूपकथाविशेषेऽर्थः। सत्त्वं द्रव्यमित्यादि। 'लिंगसंख्याकारकान्वययोग्यत्वं द्रव्यत्वम्, तदयोग्यत्वमद्रव्यत्वम्' इति वैयाकरणैरभिधीयते; तदभिप्रायमिदम्।

पञ्चमे त्विति। 'किञ्च द्रव्यत्वे प्रमाणम्' इत्यत्रेत्यर्थः। प्रसरणादीति आदिना संयोगपरिग्रहः। प्रसरणं=चलनात्मिका क्रिया; सा च संयोगातिरिक्तेति पक्षान्तरं वक्ष्यते। आदिशब्देन प्रसरणातिरिक्तावस्थासामान्यं विवक्षितम्। संयोगादृष्टान्यत्वे सतीति। इदञ्च मनस्संयोगे अदृष्टे च व्यभिचारवारणाय। रूपादिषु व्यभिचारवारणाय भावनाकारणत्वादिति। भावना स्मृतिहेतुः संस्कारः।

षष्ठस्येति। 'कथञ्चात्मधर्मभूतायास्तस्याः स्वाश्रयादन्यत्रगमनम्' इत्यस्येत्यर्थः। अत्र, 'स्वाश्रयादन्यत्र गमनम्' इत्यस्य कोऽर्थः? स्वाश्रयातिरिक्तसंयोगो वा स्वाश्रयपरित्यागो वेति विकल्पमभिप्रेत्य, आद्ये उत्तरमाह चतुर्थ एवेति। 'चतुर्थे तु निदर्शनं प्रभादि' इत्यत्रैवेत्यर्थः। द्वितीये तदाह यदित्विति। चेतनेति। बुद्धिरित्यर्थः। इन्द्रियद्वारेति। आदिना व्याप्तिज्ञानादिपरिग्रहः। सप्तमस्येति। कथञ्चोपचयविरलभावाभावे परिमाणान्तरयोग इत्यस्येत्यर्थः। बहलत्वविरलत्वादिप्रसंग इति। तूलपिण्डे परिमाणह्रासे बहुलत्वस्य, परिमाणाधिक्ये विरलत्वस्य च दर्शनादिति भावः। भिदुरेति।

तथाव्याप्तेः । अस्तु वा बहळत्वादि; तथापि न तथा द्रष्टुं स्प्रष्टुं वा शक्यम्; अतीन्द्रियत्वात् स्पर्शादिरहितत्वाच्च । न च विरळत्वे सम्बन्धानियमः; सर्वदेशनिरन्तरसंयोगयोग्यस्वरूपत्वात् ॥ कथं तत् अल्पदेशे पूर्णमिति चेत्—स्पर्शशून्यत्वेन प्रतिघाताभावात् । उक्तं हि निरतिशयसूक्ष्मत्वं न्यायतत्त्वे । एतेन एकस्य द्रव्यस्य कालभेदेऽपि नानापरिमाणत्वं नास्तीति वदन्तः प्रत्युक्ताः । कालभेदस्यैव विरोधशामकत्वात्, अन्यथानुपपत्त्यभावाच्च ॥ एवं तर्हि आत्मनस्तत्तद्देहानुरूपविविध-परिमाणवादिनो दिगम्बरान् प्रति, "अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः" इति सौत्रं चोद्यमत्रापि स्यादिति चेन्न; तत्र केवलयुक्त्यादिमूलार्थप्रतिक्षेपे तात्पर्यात् ।

अष्टमस्योत्तरमात्मसिद्धौ । तथा हि, "कथमतीतानागतयोरन्यतोश्चैतन्येन संप्रयोगः" इत्याशङ्क्य

---

भावः । भिदुरेति । यत्रावयवशैथिल्यं संपादयितुं शक्यते, तत्रेति भावः । ननु परिमाणान्तरयोगाङ्गीकारे भिदुरभागत्वमपि स्यादित्यस्वरसादाह अस्तु वेति । तर्हि बहळत्वादिकमुपलभ्येतेत्यत्राह तथापीति । कथं तदल्पदेश इति । मुक्तौ सर्वदेशनिरन्तरसंयोगयोग्यस्वरूपस्य अत्यल्पपरिमाण-मशकादिशरीरावच्छिन्नप्रदेशेऽवयवानां परस्परप्रतिघातकत्वप्रसङ्गेन मानस्यासम्भवदुक्तिकत्वादिति भावः । एतेनेति । परिमाणभेदस्थले पूर्वोऽवयवी नश्यति, अवयव्यन्तरमुत्पद्यते, एकस्मिन् वस्तुनि विरुद्धपरिमाणद्वयस्यासम्भवात् इति वदन्तो नैयायिकादयः प्रत्युक्ता इत्यर्थः । ननु न कालभेदेन एकत्र परिमाणद्वयसमावेशोऽभ्युपगन्तुं शक्यः; नामसङ्ख्याव्यवहारादिनिर्वाहकत्वेनावश्याभ्युपगन्तव्येऽवयविन्येव परिमाणभेदसमावेशोपपत्तेरित्याशङ्क्याह—अन्यथानुपपत्त्यभावादिति । अतिरिक्तावयविनोऽभावादित्यर्थः । दिगम्बरानिति । जैनान् प्रति, "अन्त्यावस्थितेः" इति सूत्रेण मुक्तिकालीनस्य परिमाणस्य सार्वदिकत्वमावश्यकमिति यद्दूषणमुपन्यस्तम्, तत् स्वमतेऽपि स्यादित्यर्थः ।

---

अवयवविश्लेषयोग्येत्यर्थः । भिदुरावयवत्वे सति परिमाणाधिक्यं यत्र तत्रैव प्रशिथिलावयवसंयोगवत्त्वरूपं विरलत्वम् । यत्र गाढत्वे सति परिमाणस्वल्पत्वम्, तत्र निबिडावयवसंयोगवत्त्वरूपं बहलत्वमिति व्याप्तिर्दृश्यते । न हि दीपप्रभादिषु संकोचविकासयोर्बहलविरलत्वम् । ततश्च बुद्धौ भिदुरावयवत्वविरहेणाऽऽपादकाभावात् नापत्तिसंभव इति । तदिति । सर्वदेशनिरन्तरयोग्यस्वरूपमित्यर्थः । कथमल्पदेशे पूर्णमिति । अवयवानां परस्परप्रतिघातकत्वप्रसङ्गेन मशकादिशरीरपरिच्छिन्नत्वासंभवादिति भावः । एतेनेति । उक्तरीत्या एकस्मिन् परिमाणद्वयसंभवोपपादनेनेत्यर्थः । कालभेदेऽपि नानापरिमाणत्वं नास्तीति । आश्रयनाशस्यैव परिमाणनाशकत्वादिति भावः । अत्र 'किं परिमाणद्वयविरोधादेकस्मिन् परिमाणद्वयं न संभवतीत्यभिप्रायः, अथवा पूर्वपरिमाणनाशमन्तरेण परिमाणान्तरासंभवात्, परिमाणनाशस्य चाश्रयनाशहेतुकतया तमन्तरेणानुपपत्तेरेकस्मिन् परिमाणद्वयासंभव इत्यभिप्रायः' इति विकल्प्य, आद्यं दूषयति कालभेदस्यैवेति; द्वितीयं दूषयति अन्यथानुपपत्त्यभावाच्चेति । तथा च असमवायिकारणतया नैयायिकाभिमतावस्थानाश एव परिमाणनाशे कारणम्; न तु द्रव्यनाशः; द्रव्यस्वरूपस्य नित्यत्वेन तन्नाशासंभवात् । ततश्चैकस्मिन् परिमाणद्वयोपपत्तिरिति भावः । अष्टमस्येति कथञ्चातीतानागतैस्सह संबन्ध इत्यस्येत्यर्थः ।

विषयविषयिभाव.प्रकाशमानत्व.संशयादियोग.दवीयोदेशवर्तिज्ञानशीघ्रसंयोगप्रतिबन्दीभिः परिहृतम्। तथा, "अतीतानागततया तावपि अद्यापि विद्येते इति तेन रूपेण बोधसंनिकर्षे नानुपपत्तिः" इति च तद्द्रव्यरूपतया संयोगोपपत्तिरुपपादिता। तत्रैवमाशयः—यथा कैश्चिदसतोरेव भूतभविष्यतोः सामान्यात्मना अद्यापि वृत्तेः प्राकट्याश्रयत्वमुपपादितम्, तथा तद्द्रव्यात्मनाऽपि वृत्तेः संयोगोऽप्युपपन्न एव। विशिष्टतासंयोगश्चेत्, विशेषाकारेण न प्राकट्यमिति तुल्यमिति।

नवमस्य तु अनभ्युपगम उत्तरम्। न हि गुणादिभिरपि संबन्धः संयोग एव; किं तु संयोगिनिष्ठता। यथा—परेषां संयुक्तसमवायादि। "संबन्धश्च संयोगलक्षणः" इत्यादिवचनानां संयोगावश्यम्भावे तात्पर्यम्। उक्तञ्च षडर्थसंग्रहे श्रीराममिश्रैः—'संयोगस्तदर्हेषु

---

विषयविषयिभावेति। यथा न्यायमतेऽतीतादिषु ज्ञानं प्रति विषयत्वम्। यथा वा भट्टमते प्रकाशमानत्वम्। न च तन्मते तत्र प्रकाशमानत्वानुपपत्तिः शङ्क्यशङ्क्या; ज्ञाततया ज्ञानानुमानाभावप्रसङ्गात्; यथा वातीतादिष्वेकत्वादिव्यवहारात् सङ्ख्यायोगः, यथा च सिद्धान्ते ब्रह्माण्डान्तरवर्तिनोऽपि देशविप्रकर्षेऽपि अण्डान्तरवर्तिपुरुषीयज्ञानेन शीघ्रसंयोगः—एवं कालविप्रकर्षेऽपि संयोग उपपद्यते इत्यर्थः। ननु अतीतानागततया तावप्यद्यापि विद्येते इत्ययुक्तम्; तस्य स्वपरमतसम्प्रतिपन्नत्वाभावादित्याशङ्क्य तस्य आशयमाह—तत्रैवमाशय इति। असतोरिति। स्वरूपेणेति शेषः। सामान्यात्मनेति जातिव्यक्त्योस्तन्मते भेदाभेदाभ्युपगमादिति भावः। तद्द्रव्यात्मनेति। अवस्थाश्रयद्रव्यस्य सिद्धान्ते नित्यत्वाभ्युपगमे संयोगस्य किम्पुनर्न्यायसिद्धत्वादित्यर्थः। विशिष्टेनासंयोगश्चेदिति। अवस्थाविशिष्टेन असंयोगश्चेदित्यर्थः। संबन्धश्च संयोगलक्षण इत्यादिवचनानामिति। "नाभाव उपलब्धेः"

---

विषयविषयिभावेति। यथा न्यायमतेऽतीतादिषु ज्ञानं प्रति विषयत्वम्, यथा वा भट्टमते ज्ञातताश्रयत्वरूपं प्रकाशमानत्वम्, यथा च नैयायिकमतेऽतीतादिष्वपेक्षाबुद्ध्या द्वित्वोत्पत्तिः, यथा वा सिद्धान्ते ब्रह्माण्डान्तरवर्तिनो देशविप्रकर्षेऽप्यण्डान्तरवर्तिपुरुषीयज्ञानेन शीघ्रसंयोगः—एवं कालविप्रकर्षेऽपि संयोग उपपद्यत इत्यर्थः। नन्वतीतानागतयोः कथं विद्यमानत्वम्—व्याघातादित्याशङ्क्याऽऽशयमाह तत्रेति। तद्द्रव्यात्मनेति। सिद्धान्ते द्रव्यस्वरूपस्य नित्यत्वादिति भावः। संयोगोऽप्युपपन्न एवेति। यादृशावस्थाविशिष्टत्वेनातीतत्वादि, तादृशावस्थोपलक्षिते द्रव्ये संयोगो नानुपपन्न इत्यर्थः। विशिष्टेनासंयोग इति। अतीतानागतावस्थाविशेषावच्छिन्नानुयोगिताकसंयोगाभाव इत्यर्थः। विशेषाकारेण न प्राकट्यमिति तुल्यमिति। भट्टैरतीतानागतव्यक्तिमात्रवृत्तिधर्मविशेषविशिष्टवेषेण प्राकट्याश्रयत्वानुपगमवत् अतीतानागतावस्थाविशेषविशिष्टवेषेण संयोगाश्रयत्वानुपगमे न दोष इति भावः। नवमस्येति। कथञ्च गुणादिभिरित्यस्येत्यर्थः। अनभ्युपगम इति गुणक्रियादिभिस्संयोगानुपगमात्, 'कथं तैः संयोगः' इति चोद्यस्य नावकाश इत्यर्थः। संयोगावश्यम्भाव इति ज्ञानस्य द्रव्यरूपतया द्रव्यान्तरेण संयोगोऽवश्यंभावीत्येवम्परत्वमित्यर्थः। तथा च तादृशवचनानां द्रव्यविषयत्वमेवेत्यद्रव्ये संबन्धान्तरस्य विषयतारूपस्याभ्युपगमो न विरुध्यत इति भावः।

विषयत्वाकारः। अनर्हेषु ततस्तदन्वयिषु।" इति। अस्यार्थः—संयोगार्हवस्तुनि वर्तमानत्वादिविशिष्टद्रव्यप्रकाशनं संयोगः। संयोगानर्हाणां तु रूपादीनां प्रकाशनं तदन्वयिषु आश्रयेषु कारणेषु कार्येषु च यथासंभवं संयोग इति। यत्तु—नैरन्तर्यपर्यायमत्यन्तसामीप्यमात्रञ्च संयोगः। स एव परतन्त्राश्रितः समवायपदाभिभाषाभूमिर्वैशेषिकाणामपीति नार्थान्तरत्वमुररीकृत्य विकल्पः सम्भवति" इत्यात्मसिद्धावुक्तम्—तदपि पराभ्युपगतसमवायानभ्युपगमात् स्वमते स्वरूपविशेषानतिरेकात् अतिरिक्तसम्बन्धाभावपरम्, न तु गुणगुणिनोः संयोगलक्षणसंबन्धपरम्। गुणगुणिनौ संयुक्ताविति यदि केचित् प्रयुञ्जीरन्, तदानीमौपचारिकोऽयं व्यवहार इति ज्ञापयितुम्, 'नैरन्तर्यपर्यायम्' इत्युक्तम्; निरन्तरत्वमात्रात् संयुक्तत्वव्यवहारः। तावति वैशेषिका युक्त्याभासैरर्थान्तरत्वं पर्यभाषन्तेत्युक्तं भवति। अन्यथा गुणस्य संयोगवत्त्वे तस्यापि द्रव्यत्वं स्यात्, द्रव्यलक्षणत्वात् तस्य। अवस्थायोगित्वं द्रव्यलक्षणमस्त्विति वचनेऽपि गुणानां ज्ञानसंयोगलक्षणावस्थायोगित्वात् द्रव्यत्वं दुष्परिहरम्। न च द्रव्याद्रव्यविभागो मा भूदिति वाच्यम्; भाष्यकारैरेव सत्त्वरजस्तमसामद्रव्यत्वसमर्थनात्। अतो यथोक्त एवार्थः। यद्वा नैरन्तर्यमात्रमङ्गीकृत्य संयोगमपि

---

इति सूत्रे, "सम्बन्धश्च संयोगलक्षणः" इति हि भाष्यम्। संयोगार्हेति। तदर्हेषु विषयत्वाकार इत्यस्य संयोगार्हेषु विषयत्वाकारः प्रकाशमानत्वमित्यर्थः। संयोगार्हप्रकाशः संयोग इति पर्यवसितार्थ इति भावः। कारणेषु कार्येषु चेति। यद्यपि संयोगासम्भवे संयुक्ताश्रितत्वमिति वक्तुं शक्यम्, यथा परेषां संयोगासम्भवे संयुक्तसमवायः—तथाऽपि अतिप्रसङ्गभङ्गार्थं साक्षाद्वा परम्परया वा संयोगोऽपेक्षित इत्यत्र तात्पर्यम्। परतन्त्राश्रित इति। स्वतन्त्र-परतन्त्राश्रित इत्यर्थः। अयुतसिद्धाश्रित इति यावत्। नार्थान्तरत्वमिति। संयोगसमवाययोर्भेदमङ्गीकृत्य, 'संयोगो वा; समवायो वा; संयोगश्चेत् गुणेषु ज्ञानसम्बन्धो न स्यात्; समवायश्चेत् द्रव्येषु न सम्भवति' इति विकल्पमुखेन यद्दूषणम्, तन्न सम्भवति; तयोरत्यन्तसामीप्यरूपतयाऽनतिभिन्नत्वात्। अत्यन्तसामीप्यस्य च गुणद्रव्यादिषु संभवात् तदतिरिक्तसम्बन्धो नास्तीति यदुक्तम्, तत् गुणगुणिनौ संयुक्तौ इत्यत्र गुणगुण्यादिष्वत्यन्तसामीप्यातिरिक्तसंयोगसमवायप्रत्याख्यानपरम्—न तु, 'द्रव्येष्वप्यत्यन्तसामीप्यमेव संयोगशब्दमुख्यार्थः; स च गुणगुणिनोरप्यस्ति' इत्येवमिति प्रघट्टार्थः। संयुक्तत्वव्यवहार इति। गुणगुणिनोरिति शेषः। अर्थान्तरत्वमिति। समवायत्वमित्यर्थः। अद्रव्यत्वसमर्थनादिति। "रचनानुपपत्तेश्च" इति सूत्र इति

---

अथवा संयोगावश्यम्भाव इत्यस्य, यस्य विषयत्वं वाच्यं तत्र तत्संबन्धिनि वा संयोगावश्यम्भाव इत्यर्थः। तथाच संयोगः संयुक्तनिष्ठतादिर्वा विषयतेति दर्शितभाष्यतात्पर्यमित्युक्तं भवति। विषयत्वाकारः=विषयत्वरूप आकारः। तत इति। संयोगानर्हत्वादित्यर्थः। तदन्वयिष्विति। तत्संबन्धिष्वित्यर्थः। संयोग इति, विषयत्वाकार इति चानुषज्यते। तथाच संयोगानर्हे तत्संबन्धिनिष्ठसंयोगो विषयतेत्युक्तं भवति। तत्संयुक्तसंबन्धित्वं विषयतेति तु फलितोऽर्थः। आश्रयेष्वित्यादि। रूपादिषु संयुक्तनिष्ठता, भविष्यद्द्रव्येषु संयुक्तजन्यता, भूतद्रव्येषु संयुक्तजनकता, भूतभाविद्रव्यगतरूपादिषु संयुक्तजनकनिष्ठत्वादिकमित्येवं यथासंभवं क्लृप्तसंबन्धानामेव विषयतारूपत्वम्—न तु विषयताख्यातिरिक्तसंबन्धकल्पना; यथा क्लृप्तभावान्तराणामेवाभावरूपत्वम्; न त्वभावाख्यातिरिक्तपदार्थकल्पना—तद्वदिति भावः।

केचिन्नेच्छन्ति, तन्मतेनोक्तमिति मन्तव्यम्।

दशमस्य नायनं तेजो निदर्शनम्। योग्यता अत्र नियामिकेति चेन्न; अत्रापि तुल्यत्वात्॥ ज्ञानसंयोगे सति का अपरा योग्यतेति चेत्—इन्द्रियसंयोगे सति का अपरेत्यपि सुवचत्वात्॥ ज्ञानायोग्यत्वे तस्य वस्तुनः केनचिदपि ज्ञानेनाप्रकाश्यत्वं स्यादिति चेन्न; ज्ञापकायोग्यत्वेऽपि तुल्यत्वात्। स्वभावादेव किञ्चित् ज्ञापकं क्वचिदेव शक्तमिति चेत्; तर्हि तत्रैव ज्ञानमिति॥

शेषः। तन्मतेनेति। न तु स्वमतेनेति भावः॥ नायनमिति। यथा सूर्यमण्डलपर्यन्तं प्रसृतनायनरश्मीनामान्तराळवर्तिपरमाण्वाकाशादिसंयोगे सत्यपि न तेषां भानम्, तथेत्यर्थः। योग्यतेति। योग्यमेव सन्निकृष्टं गृह्यते, नायोग्यमिति भावः। ज्ञापकेति। इन्द्रियरूपज्ञापकायोग्यत्वे सर्वस्यापि ज्ञापकस्य अयोग्यत्वं(अयोग्यं?) स्यादित्यर्थः। तत्रैव ज्ञानमिति। संयुक्तत्वाविशेषेऽपि योग्यमेव संयुक्तं विषयीकरोति, नान्यमिति भावः। न च संयोगातिरिक्तस्य विषयविषयिभावस्याभावात् संयुक्तमप्ययोग्यं न विषयीकरोतीत्युक्तिरयुक्तेति वाच्यम्; संयुक्तं विषयीकरोतीत्येवाभ्युपगमेन संयोगविषय[1]विषयिभावयोर्भिन्नत्वा-

परतन्त्राश्रित इति। अपृथक्सिद्धत्वघटितयौगिक इत्यर्थः। दशमस्येति। कथं वा मध्यस्थानां संबद्धानामप्रकाशकत्वमित्यस्येत्यर्थः। नायनमिति। यथा सूर्यमण्डलपर्यन्तं प्रसृतनायनरश्मीनां मध्यस्थितपरमाण्वाद्यनेकपदार्थसंयोगे सत्यपि न तादृशसंयोगस्य चाक्षुषजनकत्वम्, तथा मध्यस्थितवस्तुभिर्ज्ञानसंयोगस्य न व्यवहारप्रयोजकत्वमित्यर्थः। योग्यतेति। उद्भूतरूपादिरेवेति भावः। अत्रापि तुल्यत्वादिति। यन्निष्ठज्ञानसंयोगस्य व्यवहारप्रयोजकत्वं प्रामाणिकम्, तत्त्वमेव योग्यतेत्यभिप्रायः। कापरेत्यपि सुवचत्वादिति। उद्भूतरूपादिमन्निष्ठचक्षुःसंयोगस्यैव चाक्षुषजनकतया ह्युद्भूतरूपादेर्योग्यतारूपत्वमङ्गीक्रियते। तथा तत्तद्वस्तुनिष्ठज्ञानसंयोगस्यैव व्यवहारजनकतया तत्तद्वस्तुत्वमपि योग्यतारूपमिति वक्तुं शक्यमेव। यदि अस्य योग्यतारूपत्वं न स्वीक्रियत इति घट्टकुट्यादुच्यते, तदा उद्भूतरूपादेरपि योग्यतारूपत्वं न स्वीक्रियत इति वक्तुं शक्यमेवेति भावः। ज्ञापकायोग्यत्वेऽपि तुल्यत्वादिति। यथा(?) यस्य कस्यचित ज्ञानस्यायोग्यतामात्रेण सर्वस्यापि ज्ञानस्यायोग्यताप्रसङ्गे क्रियमाणे चक्षुरादिरूपयत्किञ्चिज्ज्ञापकायोग्यत्वमात्रेण इन्द्रियशब्दानुमानादिरूपज्ञापकायोग्यत्वं पि स्यादित्यापद्येतेत्यर्थः। तत्रैवेति। क्वचिदेवेत्यर्थः। ज्ञानमिति। शक्तमित्यनुषज्यते। व्यवहारजननशक्तमिति तदर्थः। अयं भावः—न हि सर्वस्यापि ज्ञानसंयोगादिरूपसंबन्धस्य विषयतारूपत्वम्—येनोक्तापत्तिः स्यात्। किन्तु यद्वस्तुनि यत्कालिकस्य यादृशस्य ज्ञानसंबन्धस्य व्यवहारादिप्रयोजकत्वं प्रामाणिकम्—तद्वस्तुनिष्ठतात्कालिकतादृशज्ञानसंबन्धस्यैव विषयतारूपत्वम्। यथा भावान्तरस्याभावत्वेऽपि न सर्वस्यापि भावान्तरस्य घटाभावरूपत्वम्, किन्तु यत्र यत्काले घटाभावव्यवहारः प्रमाणिकः, तन्निष्ठतत्कालावच्छिन्नधर्मविशेषस्यैव घटाभावरूपत्वम्—तद्वत्। विषयतत्वस्याखण्डो धर्मः। नैयायिकादिभिर्विषयता तन्निष्ठविषयतात्वप्रकारतात्वादिकञ्च तिरिक्ततयाऽङ्गीक्रियते—सिद्धान्ते तु क्लृप्तसंबन्धानामेव विषयतात्वाद्यङ्गीकाराल्लघवमिति। यत्र चित्रनिष्ठे न्द्रियेण उद्भूतं जन्यते – तद्वं नं

1 विषयीकरणं व्यवहारानुगुण्यापादनम्। विषयत्वं व्यवहारानुगुण्यम्।

अस्तु तर्हि सामग्रीस्वभावादेव ज्ञानस्य प्रतिविषयं प्रतिनियमः, किं सम्बन्धेनाधिकेनेति चेन्न; ईश्वरज्ञानस्य नित्यस्य तदभावात् निर्विषयत्वेन अज्ञानत्वप्रसङ्गादीश्वराभावप्रसङ्गात् ॥ अनित्येषु ज्ञानेष्वयं नियम इति चेत्—सत्यम्; तथापि संयुक्तसमवायाद्यविशेषेऽपि रसादिपरिहारेण रूपादौ वर्तमानस्य चक्षुरादेः स्वभावनियमे सत्यपि संयुक्तसमवायादिपरिग्रहवत् क्षन्तव्यम्। उक्तञ्च न्यायकुलिशे—‘संयोगस्तु प्रसरणवैभवादिप्रतिपादकशास्त्रबलादाश्रितः” इति ॥ योग्यतामात्रेण रूपान्तरादीनामपि ग्रहणप्रसङ्गात् तत्परिहाराय सम्बन्धविशेषाङ्गीकार इति चेत्—तर्हि अत्रापि योग्यतामात्रेण सर्वदा प्रकाशः स्यादिति तत्परिहाराय संबन्धपरिग्रहः ॥ सामग्र्येव

---

दिति ध्येयम्। सामग्रीति। तदर्थसंनिकृष्टेन्द्रियेण यत् ज्ञानं जन्यते, तत् ज्ञानं तद्विषयकमित्येवास्तु। तथा च बहिर्निर्गत्य विषयेण संयुज्यत इति विकल्पनं व्यर्थमित्यर्थः। ईश्वराभावेति। सर्वज्ञस्यैवेश्वरत्वादिति भावः। अनित्येष्विति। नित्यानां नियतविषयत्वादेव न तत्र विषयनियमप्रयोजकतया सामग्रीस्वभावो वा संयोगो वा अभ्युपगन्तव्य इति भावः। स्वभावनियम इति। संयुक्तसमवायकल्पनेऽपि अवश्याश्रयणीयेन स्वभावनियमेनातिप्रसङ्गपरिहारसंभवेऽपि यदि स्वमतश्रद्धामात्रात् संयुक्तसमवायाभ्युपगमः, तदा प्रसरणशास्त्रबलेन संयोगाभ्युपगमे का नः क्षतिरिति भावः। संयुक्तसमवायनिर्बन्धमसहमानश्चोदयति योग्यतामात्रेणेति। रूपान्तरादीनामिति। व्यवहितानामिति शेषः। निवारयेदिति। यदा यत्प्रकाशसामग्री, तदा तत् प्रकाशते इति, न सर्वदा प्रकाशप्रसङ्ग

---

तद्व्यवहारहेतुरित्यङ्गीकारात् ज्ञानविषययोस्संयोगादिरूपो विषयविषयिभावरूपो वा संबन्धो न स्वीकार्य इत्यभिप्रायेण शङ्कते अस्तु तर्हीति। प्रतिनियमः—प्रतिनियतत्वम्। तदभावादिति। सामग्र्यभावादित्यर्थः। निर्विषयत्वेनेति। विषयतानिरूपकत्वाभावेनेत्यर्थः। अज्ञानत्वप्रसङ्गादिति। विषयतानिरूपकत्वस्य ज्ञानत्वव्यापकत्वादिति भावः। ईश्वराभावप्रसङ्गादिति। “यस्सर्वज्ञः” इत्यादिना सर्वज्ञत्वस्य लक्षणत्वेनाभिधानादिति भावः। नित्यज्ञाने उक्तरीत्या विषयसंबन्धस्यावश्यकत्वेऽपि अनित्यज्ञानेषु सामग्रीस्वभावादेवोपपत्तिसंभवान्न तत्र विषयसंबन्धस्वीकारावश्यकतेत्यभिप्रायेण शङ्कते अनित्येष्विति। संयुक्तसमवायाद्यविशेषेऽपीति। रूपे रसादौ चेति भावः। रसादिपरिहारेण रूपादौ वर्तमानस्येति। रसाद्यविषयक-रूपादिविषयकचाक्षुषजनकस्येत्यर्थः। स्वभावनियमे सत्यपीति। रूपादिमात्र एव चाक्षुषजनकत्वस्वभावनियमे सत्यपीत्यर्थः। संयुक्तसमवायादिपरिग्रहवदिति। संयुक्तसमवायादेश्चाक्षुषादिहेतुत्वाङ्गीकारवदित्यर्थः। स्वभावनियमादेव चक्षुषो रूपादिचाक्षुषहेतुत्वोपपत्तौ संयुक्तसमवायहेतुत्वाभ्युपगमस्य स्वमतश्रद्धामात्रहेतुकत्वादिति भावः। क्षन्तव्यमिति। प्रसरणशास्त्रबलेनैव संयोगाभ्युपगमादिति भावः। रूपान्तरादीनामिति। चक्षुस्संयोगरहितद्रव्यनिष्ठरूपादीनामपीत्यर्थः। संबन्धविशेषाङ्गीकार इति। संयुक्तसमवायस्य हेतुत्वाङ्गीकार इत्यर्थः। सर्वदाप्रकाशस्स्यादिति। सर्वदा व्यवहारः स्यादित्यर्थः। योग्यतायास्सर्वदा सत्त्वादिति भावः। संबन्धपरिग्रह इति। संयोगादिरूपज्ञानसंबन्धतद्धेतुत्वयोरङ्गीकार इत्यर्थः। शङ्कते सामग्र्येवातिप्रसङ्गं निवारयेदिति। तत्तद्विषयकज्ञानोत्पादकत्वेनाभिमता सामग्र्येव तत्तद्विषयकव्यवहारहेतुत्वेनाङ्गीकृता सती सर्वदाव्यवहारापत्तिं वारयेदित्यर्थः। तथा च ज्ञानविषययोस्संबन्ध-तद्धेतुत्वयोरनभ्युपगमेऽपि न क्षतिरिति भावः।

अत्रातिप्रसङ्गं निवारयेदिति चेन्न ; तत्रापि तुल्यत्वात् ॥ संबन्धोऽपि तत्र सामग्रीनिविष्ट इति चेत् ; तस्यापि तत्र (तत्रापि तस्य) निवेशः किं न स्यात् ? तत्सम्बन्धसामग्र्यैव तन्नियमस्याप्युपपत्तेः। तत्रैव सम्बन्ध इत्यपि हि सामग्रीस्वभावादेव ।

एकादशे वेगातिशयः, शक्तिविशेषः, ईश्वरसंकल्पो वा प्रतिवक्तारः। दृष्टश्च विचित्रवेगित्वं नायन-तापनादिमहसाम्। तच्च काष्ठाप्राप्तं युगपत् विचतुरक्षणेन वा विश्वमास्कन्दते इति विश्वसिद्धिः।

द्वादशे तु स्वाभाविकं तदीयत्वं तदाश्रितत्वञ्चेति सञ्चारेऽपि न दोषः। यथा व्यापकात्म-

---

इत्यर्थः । तत्रापि तुल्यत्वादिति । व्यवहितरूपादौ तद्ग्रहसामग्र्यभावादेव न तद्ग्रह इति सुवचत्वेन संयुक्तसमवायानपेक्षणादिति भावः । सम्बन्धोऽपीति । संयुक्तसमवायोऽपीत्यर्थः । तस्यापि तत्रेति । ज्ञानसंयोगस्यापि प्रकाशसामग्र्यामित्यर्थः । तत्सम्बन्धेति । "तद्धेतोरेव" इति न्यायेन संयुक्तसमवाय-सामग्र्यैव संयुक्तसमवायसाध्यनियमस्योपपत्तौ किमन्तर्गडुना संयुक्तसमवायेन ? तत्रैवेति । तत्रैव संयुक्तसमवायः, नान्यत्रेति व्यवस्थायाः सामग्र्यैवोपपाद्यत्वेन तस्या आवश्यकत्वादिति भावः । काष्ठेति । निरतिशयमित्यर्थः । सञ्चारेऽपीति । ज्ञानसञ्चारमन्तरेण जीवसञ्चारेऽपि न विरोध इत्यर्थः । व्याप-

---

तत्रापि तुल्यत्वादिति। इन्द्रियसंयोगरहितद्रव्यनिष्ठरूपादिप्रत्यक्षप्रसङ्गविषयेऽपीन्द्रियसंयोगसामग्रीहेतुतया वारणस्य तुल्यत्वादित्यर्थः । तथाच संयुक्तसमवायहेतुत्वं नाभ्युपगन्तव्यमिति भावः । संबन्धोऽपीति । संयुक्तसमवायोऽपीत्यर्थः । तत्रेति । रूपप्रत्यक्ष इत्यर्थः। सामग्रीनिविष्ट इति । सामग्रीघटकत्वेनेष्ट इत्यर्थः। "आशंसायां भूतवत्" इति क्तप्रत्ययः । अयं भावः—रूपादौ चक्षुस्संयुक्तसमवायसंपादकतत्तद्घट-चक्षुस्संयोगहेतुभूततत्तद्घटक्रियादेरननुगतस्य रूपचाक्षुषं प्रति हेतुत्वस्वीकारे अनन्तकार्यकारणभाव-स्वीकारापत्त्या गौरवम् । अतो द्रव्यसमवेतवृत्तिलौकिकविषयतासंबन्धेन चाक्षुषं प्रति चक्षुस्संयुक्तसम-वायहेतुत्वमवश्यमभ्युपगन्तव्यमिति । तस्यापीति । व्यवहारसामग्र्यामपीत्यर्थः । तस्य निवेशः—ज्ञान-संबन्धनिवेशः। किन्न स्यादिति । अयं भावः-तत्तद्विषयकज्ञानोपधायकत्वेनाभिमतानां चक्षुस्संयोगादिघटित-नानासामग्रीणामननुगतानां व्यवहारं प्रति कारणत्वाङ्गीकारे गौरवात् व्यवहर्तव्यतासंबन्धेन व्यवहारं प्रति विषयतासंबन्धेन ज्ञानत्वेन हेतुत्वे लाघवात् तथैवाभ्युपगन्तव्यमिति विषये विषयतारूपो ज्ञानसंबन्ध आवश्यकः-स च ज्ञानस्य द्रव्यतया संयोग-संयुक्ताश्रयणादिरूप[1] एव भवितुमर्हतीति । ननु ज्ञानसंबन्धस्य नियामकाभावादनियमे तदधीनव्यवहारस्याप्यनियमप्रसङ्ग इत्याशङ्क्याह तत्संबन्धसामग्र्यैवेति । ज्ञानसंबन्धसामग्र्यैवेत्यर्थः । तन्नियमस्येति । संबन्धनियमस्येत्यर्थः । उपपत्तिमेव दर्शयति तत्रैवेति ।

एकादश इति । "कथञ्च मुक्तबुद्धेर्युगपत् क्रमेण वाऽनन्तदेशसंयोगः" इत्यत्रेत्यर्थः। काष्ठाप्राप्तम्—सर्वोत्कर्षं प्राप्तम् । द्वादशे त्विति । "कथञ्च व्याप्तायां स्वबुद्धिचन्द्रिकायां प्लवमानस्य स्वकालातन्तुविताने क्रमन्त्याः लूतिकाया इव सञ्चाराधीनतद्बुद्धिप्रदेशसंयोगस्य स्वबुद्ध्या सह बुद्ध्यन्तरव्यावृत्तः स्वाभाविकः संबन्धः" इत्यत्रेत्यर्थः । स्वाभाविकं तदीयत्वम्—स्वाभाविकस्तत्संबन्धः अपृथक्सिद्धिरूपः । तदाश्रितत्वम्—अपृथक्सिद्धिसंबन्धावच्छिन्नतन्निरूपिताधेयत्वम्। सञ्चारेऽपीति । ज्ञानसञ्चारमन्तरेण

---

1. रूप एवेति । पूर्वं संयोगाद्यपेक्षया विषयता भिन्नेत्युक्तम् । अत्र त्वेवम् ।

वादिनः शरीरेन्द्रियादीनाम्, यथैव ईश्वरमनुमन्यमानस्य तदीशितव्यानाम्, यथा वा लोके दासभृत्यादिद्वन्द्वानाम्, यथा च प्रभाप्रभावदादेः, यथा च वैशेषिकादीनां चलाचलत्वेऽपि अयुतसिद्धयोरवयवावयविनोः; यथा च अस्मत्पक्षे शरीरिणः पुरीतदादिसञ्चारेऽपि शरीराणाम् इति व्यपगत[चोद्य?]घनदुर्दिनो बोधभानुरौपनिषदानाम् ॥

बुद्धिरेव उपाधिभेदात् सुखदुःखेच्छाद्वेषप्रयत्नरूपा ; सुखादिजनकतयाऽभ्युपगतज्ञानातिरेके प्रमाणाभावात् । इच्छामि, द्वेक्ष्मीत्यादिव्यवहारस्य स्मरामीत्यादिवत् ज्ञानविशेषेणैवोपपत्तेः । वैषयिकसुखदुःखरूपत्वं ज्ञानस्य विषयाधीनमित्यनुकूलत्वप्रतिकूलत्वाविशेषात् विषयस्यापि

---

**कात्मवादिन** इति । आत्मसञ्चारमन्तरेणापि शरीरादीनां सञ्चारदर्शनेन तत्सञ्चारानुविधायिसञ्चारत्वाभावादिति भावः । एवमुत्तरत्रापि द्रष्टव्यम् । **द्वन्द्वानामि**ति । **द्वन्द्वं** मिथुनम् । दासदासीजनानामित्यर्थः । ततश्च दासदास्यादीनां शेषिसञ्चाराधीनसञ्चारत्वाभावादिति भावः । **चलाचलत्वेऽपी**ति । शाखायां चलन्त्यामपि वृक्षस्याचलत्वदर्शनादिति भावः । न च शाखावच्छेदेन वृक्ष एव चलनमस्त्विति वाच्यम्; तथापि अवयविनि वृक्षे चलति मूलाद्यवयवचलनादर्शनेन व्यभिचारतादवस्थ्यादिति द्रष्टव्यम् । **व्यपगते**ति । **व्यपगत**कुतर्कमेघाच्छादन इत्यर्थः । **औपनिषदानां** वेदान्तिनामित्यर्थः ॥

**सुखादिजनकतयाऽभ्युपगते**ति । [1]परेषां मते यत् ज्ञानजनकतयाऽभ्युपेतम्, तदेवास्माकं **सुख**मिति भावः । **स्मरामीत्यादिवदि**ति । इतरथा स्मरणमपि ज्ञानभिन्नं स्यादिति प्रतिबन्दी अभिप्रेता ।

---

जीवसञ्चारेऽपीत्यर्थः। **न दोष इति।** नोक्तसंबन्धहानिरित्यर्थः । परस्परसंबन्धिनोर्द्वयोरेकस्याचलत्वे अन्यस्य चलनेऽपि न संबन्धहानिरित्यत्र दृष्टान्तानाह **यथे**ति । **शरीरेन्द्रियादीनामि**ति । सञ्चारेऽपि न दोष इत्यनुषङ्गेणान्वयः । एवमुत्तरत्रापि बोद्धव्यम् । **दासभृत्यादिद्वन्द्वानामि**ति । दासभृत्यादिघटितद्वन्द्वानामित्यर्थः । आदिना पत्न्यादिपरिग्रहः । तथाच स्वामिदासयोः भर्तृभृत्ययोः पतिपत्न्योश्चेत्युक्तं भवति । स्वाम्यादीनामचलत्वेऽपि दासादीनां सञ्चारेऽपि, दासादीनामचलत्वेऽपि स्वाम्यादीनां सञ्चारेऽपि च यथा न संबन्धहानिः, तद्वदित्यभिप्रायः । **वैशेषिकादीनामि**ति । अवयवातिरिक्तावयविनमभ्युपगच्छताम् इति भावः । **चलाचलत्वेऽपी**ति । वृक्षरूपावयविनोऽचलत्वेऽपि शाखादिरूपावयवेषु चलनदर्शनादिति भावः । न च शाखादिचलनदशायां तदवच्छेदेन वृक्षेऽपि चलनसंभवात् कथमवयविनोऽचलत्वमिति वाच्यम्; तदा वृक्षश्चलतीति प्रतीतिविरहेण वृक्षचलनाभ्युपगमायोगात् । यावदवयवचलनदशायामेवावयविनि चलतीति प्रतीतेरनुभाविकत्वात् तदैवावयविनि चलनसंभवात् । **व्यपगतघनदुर्दिन इति ।** कुतर्कपराहतिरहित इति भावः । **औपनिषदानामि**ति । उपनिषदमेव प्रमाणयतामिति भावः ।

**सुखादिजनकतयाऽभ्युपगतेति ।** परमते यद् ज्ञानं सुखादिजनकतयाऽऽभ्युपगतं तदेवास्माकं सुखादिकमिति भावः । **वैषयिकसुखे**ति । यस्मिंज्ञानस्य स्वाभाविकसुखत्वं न विषयाधीनमिति **वैषयिके**त्युक्तम् । **अनुकूलत्वप्रतिकूलत्वाविशेषादि**ति । अनुकूलत्वप्रतिकूलत्वे शक्तिविशेषौ । **विषयस्यापि**

---

1 परेषामिति । तथा च वैशेषिकदर्शने (१०, १, ३, ४) "तयोर्निष्पत्तिः प्रत्यक्षलैङ्गिकाभ्याम्" "अभूदित्यपि" इति । तत्रैव ज्ञानात् भेदोऽपि प्रागुक्तः। शेषं तद्व्याख्याने अस्मदीये वैशेषिकरसायने ।

सुखदुःखशब्दवाच्यत्वमस्त्येव। प्रपञ्चितमिदं भूमाधिकरणे। तथा वेदार्थसंग्रहे—, "विषयायत्तत्वात् ज्ञानस्य सुखरूपताया ब्रह्मैव सुखम्" इत्युक्तम्। सुषुप्त्याद्यवस्थासु प्रयत्नो नास्त्येव; अनुपलम्भात्। अदृष्टादिवशाच्च निश्वसितादिसिद्धिः। परैरपि तत्रैव प्रयत्नकारणतयाऽदृष्टादिकमभ्युपगतम्। तत् निश्वासाद्यर्थमेव भवतु। अतो मध्ये प्रयत्नकल्पकप्रमाणं स्पन्दत्वादिहेतुरन्यथासिद्धः। उक्तञ्च, "अन्तरा भूतग्रामवत्" इत्याद्यधिकरणे भाष्ये, "प्रत्यगात्मनः सुषुप्तौ प्राणनं प्रति कर्तृत्वाभावात्" इत्यादि, 'तस्य सुषुप्तिमूर्छादौ प्राणनादेरकर्तृत्वात्" इत्यादि च। कर्तृत्वाभावेऽपि कृतिविजातीयकल्पनं प्रयत्नकृतिशब्दपर्यायत्वप्रसिद्धिगौरवाभ्यां प्रतिहतम्।

ननु आत्मगुणाः सुखादयो मा भूवन्; मनोवृत्तिभेदास्तु भविष्यन्ति। तथा च आत्मसिद्धावुक्तम्, "यत्तु सुखादिनिदर्शनेन आत्मविशेषगुणतया चितेरागन्तुकत्वमुपपादितम्, तदपि गुणवृत्तापरिज्ञानेन" इत्युपक्रम्य, "सुखदुःखे च नात्मधर्मौ इन्द्रियसौष्ठवनाशयोरेव तद्भावोपपादनात्। व्याकरिष्यते चैतत् अन्तिमपादार्थसमर्थनावसर इति साधनविकलता च निदर्शनस्य। रागद्वेषादयोऽपि मनो-

---

आत्मस्वरूपज्ञाने **सुखरूपत्वस्य** ज्ञानाधीनत्वादुक्तम् **वैषयिके**ति। **भूमाधिकरण** इति। "अनुभाव्यस्य सर्वस्य सुखरूपत्वादेव दुःखञ्च न पश्यति" इत्यादिना **प्रपञ्चना**दिति भावः। **ज्ञानस्य सुखरूपताया** इति। ब्रह्मविषयक**ज्ञानस्ये**त्यर्थः। ननु प्रयत्नस्यापि ज्ञानरूपत्वे सर्वज्ञानोपरतिलक्षण**सुषुप्त्याद्यवस्थासु** जीवनयोनिप्रयत्नो न स्यादित्याशङ्क्याह **सुषुप्त्याद्यवस्था**स्विति। **अन्तरा भूतग्रामव**दित्यादीति आदिशब्देन, "स्वात्मनोऽन्यथाभेदानुपपत्तिरिति चेन्नोपदेशवत्" इति सूत्रशेषो गृह्यते। **कृतिविजातीयकल्पन**मिति। **कृतिविजातीय**प्रयत्न**कल्पन**मित्यर्थः। **पर्यायत्वप्रसिद्धी**ति। ननु **प्रयत्नकृतिशब्दयोः पर्यायत्वप्रसिद्धौ न** विरोधः? जीवनयोनिप्रयत्नेऽपि कृतिशब्दवाच्यत्वाभ्युपगमात्। न चैवं कृत्याश्रयत्वेन कर्तृत्वप्रसङ्ग इति वाच्यम्; चिकीर्षाधीनकृतेरेव कर्तृत्वनिर्वाहकतया जीवनयोनिकृतेरतथात्वात् इति चेन्न—तथापि चिकीर्षानधीनकृतिशब्दवाच्यवस्त्वन्तरकल्पना**गौरव**रूपदोषानतिलङ्घनात्। तदिदमाह **पर्यायत्वप्रसिद्धिगौरवाभ्या**मिति। **गुणवृत्तापरिज्ञानेने**ति। अयमस्य गुण इति गुणस्वाभावापरिज्ञानेनेत्यर्थः। **इन्द्रिये**ति। **इन्द्रियशब्दो**ऽन्तरिन्द्रियपरः, तस्यैव प्रकृतत्वात्। तथाच अन्तःकरणप्रसादावसादयोरेव सुखत्वदुःखत्वव्यपदेशदर्शनात् तत्प्रसादावसादावेव सुखदुःखरूपावित्यर्थः। **इति साधनविकलते**ति। इतिशब्दो हेतुपरः। उक्ताद्धेतोः सुखादे**र्निदर्शनस्य आत्मविशेषगुण**त्वरूप-

---

**सुखदुःखशब्दवाच्यत्वमस्त्येवे**ति अनुकूलत्वप्रतिकूलत्वयोरेव सुखदुःखशब्दवाच्यतावच्छेदकत्वादिति भावः। **अदृष्टवशा**दिति। तेन निश्वसितादेर्नाकारणकत्वमिति भावः। अधिकादृष्टकल्पनाशङ्कां वारयति **परैरपी**ति। **अतो मध्य इति**। "तद्धेतोरेवास्तु तद्धेतुत्वं मध्ये किं तेन" इति न्यायादिति भावः। **गौरवे**ति। कृतिशब्दावाच्यचिकीर्षानधीनप्रयत्नकल्पनागौरवमिहाभिप्रेतम्। **सौष्ठवनाशयोरेवे**ति। प्रसादावसादयोरेवेत्यर्थः। **तद्भावोपपादनात्**—सुखदुःखत्वोपपादनात्। **अन्तिमपादार्थसमर्थनावसर इति।** न्यायतत्त्वशास्त्रान्तिमपादार्थसमर्थनसमय इत्यर्थः। वक्ष्यते हि, "न्यायतत्त्वशास्त्रप्रकरणं आत्मसिद्धिः" इति। **इती**ति। उक्ताद्धेतोरित्यर्थः। **साधनविकलते**ति। सुखादिरूपदृष्टान्तस्यात्मविशेषगुणत्वरूपहेतुविरहादिति भावः। ननु रागद्वेषादयो दृष्टान्ताः भविष्यन्तीत्याशङ्क्याह **रागे**ति। मनोगुणानामपि

वस्थाविशेषाः, न साक्षादात्मगुणाः। विज्ञायते हि, "कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरेतत् सर्वं मन एव" इति। गीयते च, "इच्छा द्वेषः दुःखं[1]?? सङ्घातश्चेतनाधृतिः। एतत् क्षेत्रं समासेन" इति गीताश्लोदाहृत्य (गीयते च, 'इच्छा द्वेषः सुखं दुःखम्' इतीति क्षेत्रधर्मत्व-मुक्त्वा चेतनाधृतिरिति गीताश्लोदाहृत्य?) तदर्थं शरीरलक्षणञ्चोपपाद्य, पुनः, "किमिदं धीः" इति धीशब्दसहपाठमाशङ्क्य, "उत्प्रेक्षाभिप्रायं तत्, न ज्ञप्तिविषयम्; तस्याः स्वाभाविकत्वस्य तस्यामेव श्रुतौ श्रूयमाणत्वात्। श्रूयते हि, "न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" इति" इत्यादि उक्तम्। तथा, "पञ्चवृत्तिर्मनोवद्व्यपदिश्यते" इति सूत्रे, "यथा न कामादिकं मनसस्तत्त्वान्तरम्, 'कामः

---

हेतुविकलत्वादित्यर्थः। ननु रागद्वेषादयो निदर्शनं भविष्यन्ति; अतो न साधनवैकल्यमित्यत आह रागद्वेषादयोऽपीति। मनोगुणानामपि आत्मपारतन्त्र्यलक्षणगुणसत्त्वादाह न साक्षादिति। आत्मगतगुणा न भवन्तीत्यर्थः। तदर्थं शरीरलक्षणञ्चेति। "इच्छा द्वेषः सुखं दुःखं संघातश्चेतनाधृतिः। एतत् क्षेत्रं समासेन सविकारमुदाहृतम्॥" इति [2]वचनप्रतिपाद्यार्थभूतम्, "इदं शरीरं कौन्तेय! क्षेत्रमित्यभिधीयते" इति पूर्वत्र क्षेत्रशब्दितत्वेन प्रस्तुतस्य शरीरस्य लक्षणञ्चोपपाद्येत्यर्थः। 'इच्छा द्वेषः' इत्यादिश्लोकस्य हि अयमर्थः-आधृतिराधारः। चेतनस्य आधृतिः चेतनाधारः[3]। सुखदुःखे भुञ्जानस्य भोगापवर्गौ साधयत-श्चेतनस्याऽऽधारतयोत्पन्नं भूतसंघातरूपमिच्छाद्वेषसुखदुःखविकारि शरीरम्" इति। अतः शरीरलक्षणस्य एतच्छ्लोकार्थत्वं संभवतीति भावः। ननु सुखदुःखादीनां क्षेत्राख्यशरीरधर्मत्वप्रतिपादकैतद्वचनोदाहरणं पूर्वोपक्षिप्ते सुखादीनां मनोधर्मत्वे कथमुपपादकं स्यादिति चेन्न; उदाहृतगीतावचनेनात्मधर्मत्वाभावे सिद्धे, "एतत् सर्वं मन एव" इति श्रुत्या मनोधर्मत्वसिद्धिः संभवतीत्यभिप्रायेण तच्छ्लोकोदाहरणोपपत्तिः(त्तेः?)। धीशब्देति। अनात्मधर्मभूतानां कामसंकल्पादीनामात्मधर्मभूतज्ञानेन सह पाठः कथमित्याशङ्क्य उत्प्रेक्षारूपमनोव्यापारविशेषाभिप्रायो धीशब्द इति समाहितमित्यर्थः। न कामादिकमिति। कामः,

---

मनोद्वारा आत्मगुणत्वसद्भावात् साक्षादित्युक्तम्। आश्रयतासंबन्धेन रागादीनामात्मवृत्तित्वं नास्तीति भावः। तदर्थमिति। "इच्छा द्वेषः" इत्याद्युक्त[2]गीतावचनाभिधेयमित्यर्थः। उक्तवचनप्रतिपाद्य-मिति यावत्। शरीरलक्षणञ्चेति। "इच्छा द्वेषः" इत्यादिवचनप्रतिपाद्यम्, "इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते" इति पूर्वत्र क्षेत्रशब्दितत्वेन प्रस्तुतस्य शरीरस्य लक्षणञ्चोपपाद्येत्यर्थः। यद्यप्यनेन श्लोकेन सुखदुःखादीनां शरीरविकारत्वमेव प्रतीयते—नान्तःकरणधर्मत्वम्, तथाऽप्यनेनाऽऽत्मधर्मत्वे निरस्ते, "एतत् सर्वं मन एव" इत्यनेन मनोधर्मत्वसिद्धिरित्यभिप्राय इत्याचक्षते। आत्मधर्म-त्वाभावसिद्धौ परिशेषान्मनोधर्मत्वं सिध्येदिति वाऽभिप्राय इति बोद्धव्यम्। धीशब्दसहपाठमा-शङ्क्येति। अनात्मधर्मभूतानां कामसङ्कल्पादीनामात्मधर्मभूतज्ञानेन सह पाठः कथमित्याशङ्क्येत्यर्थः

---

1 अत्र पाठः शोधनीयः। स्थितः पाठोऽनन्वितश्च। आत्मसिद्धौ, 'इच्छाद्वेषः सुखं दुःखम् इति' इति वाक्यसमाप्तिः। संघात इत्यादिकं न तत्र। अथ, चेतनाधृतिरिति क्षेत्रलक्षणमिति वाक्यारम्भः। 2 चेतनाधृतिः इति गीतास्थपदाभिधेयमित्यर्थः स्यात्। 3 पुंलिंगचेतनशब्दस्य आधृतिशब्दस्य च समास इति गीताभाष्यगमनिकेयम्। आत्मसिद्धौ चेतनया ध्रियमाणः संघात इति विग्रह-प्रदर्शनात्। धर्मभूतज्ञानं प्रतिशरीरं व्याप्य स्थितं धारकमिति सिद्धान्तरहस्यं ततो ज्ञायते।

संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरेतत् सर्वं मन एव" इति वचनात्—एवम्, "प्राणो व्यानोऽपान उदानस्समान इत्येतत् सर्वं प्राण एव" इति वचनादपानादयोऽपि प्राणस्यैव वृत्तिविशेषाः, न तत्त्वान्तरमित्यवगम्यते" इति भाष्यम्। तत् कथं सुखादीनामात्मगुणत्वम्?

अत्रोच्यते—अश्रुतसिद्धान्तस्य पुस्तकनिरीक्षणात् अयं दोषः। तथा ह्यात्मसिद्धौ तावत्—"यत्तु सुखादिनिदर्शनेन" इत्यस्यानन्तरम्, "स्वरूपोपाधयो धर्मा यावदाश्रयभाविनः। नैवं सुखादि बोधस्तु स्वरूपोपाधिरात्मनः॥ यथा च बोधोपाधिरात्मभावस्तथोपपादितम्" इति स्वाभाविकत्वास्वाभाविकत्वाभ्यां बोधमात्रस्य सुखादेश्च भेदमभिधाय, "सुखदुःखे च नात्मधर्मौ" इत्यादि तु वैभववादेन, मतान्तरेण वा अभिहितम्। अन्यथा कथमेवमुपसंहारारम्भे ब्रूयात्—"तदेवमात्मस्वभावभूतस्य चैतन्यस्य विषयसंश्लेषविशेषगोचर एव निश्चयसंशयादिव्यवहारभेदः, तद्विशेषभाजि चैतन्ये वा" इति। आगन्तुकत्वे इन्द्रियोपाधिकत्वाद्यविशेषात्। न च तथोक्तम्; अन्यथा चोक्तम्।

---

इच्छा। यद्यपि, "कामः संकल्पः" इति श्रुतौ न सुखादिकमुपात्तम्, तथापि तुल्यन्यायेन सुखादीनामपि मनोधर्मत्वं सिद्धमिति भावः। **नैवं सुखादीति**। सुखादि तु नैवम्, **स्वरूपोपाधि न** भवतीत्यर्थः। **बोधोपाधिरिति**। ज्ञानमात्मत्व [3]**उपाधिः** प्रयोजकमित्यर्थः। ततश्च यावत्प्रयोज्यं प्रयोजकावस्थानावश्यम्भावात् **बोधस्य स्वाभाविकत्वा**दि सिध्यतीति भावः। **स्वाभाविकत्वास्वाभाविकत्वाभ्यामिति**। नित्यत्वानित्यत्वाभ्यामित्यर्थः। **भेदमभिधाय सुखदुःखे नात्मधर्माविति तु यदभिहितं तद्वैभववादेन मतान्तरेण वेति** योजना। **वैभववादेनेति**। प्रौढिवादेनेत्यर्थः। **संशयादीति आदि**शब्देन सुखादिकं गृह्यते। अतश्च सुखदुःखादीनामिह नानुक्रमणमिति न चोदनीयम्। ननु विषयसंश्लेषविशेषाणां **निश्चयसंशयव्यवहार**विषयत्वमयुक्तम्; इदं ज्ञानं निश्चयरूपम्, इदं ज्ञानं संशयरूपम् इति ज्ञान एव **निश्चयत्वसंशयत्वव्यवहारा**दित्यत आह **तद्विशेषभाजीति**। **संश्लेषविशेषभाजी**त्यर्थः। **तद्विशेषभाजि चैतन्ये वा इति कथमुपसंहारारम्भे ब्रूया**दिति योजना। ननु काऽत्र कथन्ता इत्याशङ्क्याह **आगन्तुकत्व** इति। **आगन्तुक**मनोधर्मत्वे इत्यर्थः। **न च तथोक्तमन्यथा चोक्त**मिति। औपाधिकमिति नोक्तम्, अपितु, "**आत्मस्वभावभूतस्य...निश्चयसंशयसुखादिव्यवहारः**" इत्युक्तमिति भावः।

---

**उत्प्रेक्षाभिप्रायं तदि**ति। धीरित्येतत् मनोव्यापारविशेषरूपोत्प्रेक्षातात्पर्यकमित्यर्थः। **नैवं सुखादी**ति। सुखादिकं न स्वरूपोपाधिकमित्यर्थः। **बोधोपाधिरि**ति। ज्ञातृत्वप्रयोजक इत्यर्थः। **आत्मभावः**—आत्मत्वम्। तथाच ज्ञातृत्वस्य स्वाभाविकत्वं सिद्ध्यतीति भावः। **संशयादी**ति **आदि**शब्देन सुखादिकं गृह्यते; अतो न तदनुक्तिशङ्का। ननु विषयसंश्लेषविशेषगोचरत्वं न संशयादिव्यवहारस्य संभवति; इदं ज्ञानं संशयरूपम्, इदं ज्ञानं निश्चयरूपमिति ज्ञान एव तद्व्यवहारदर्शनादित्यत आह **तद्विशेषभाजी**ति। विषयसंश्लेषविशिष्ट इत्यर्थः। **चैतन्ये**=ज्ञाने। चैतन्ये वेति कथमुपसंहारारम्भे ब्रूयादिति योजना। काऽत्रासङ्गतिरित्यत्राह **आगन्तुकत्व इ**ति। **न च तथोक्तमन्यथाचोक्त**मिति। मनोधर्मत्वं नोक्तम्—अपित्वात्मस्वभावभूतस्य चैतन्यस्य निश्चयसंशयसुखादिव्यवहारविषयत्वमुक्तमित्यर्थः। ननु निश्चय-

---

3 बोधस्योपाधिरिति तत्पुरुषो द्वितीयव्याख्यासंमतः। पूर्वव्याख्याने च, 'स्वरूपोपाधि' इत्युक्तेः।

ननु अश्रुतसिद्धान्तस्येति भवत एव दोषः॥ न स्यात्। न्यायतत्त्वशास्त्रप्रकरणं ह्यात्मसिद्धिः। तत्र च शास्त्रे ज्ञाननिरूपणात्मकप्रथमपादषष्ठाधिकरणे सर्वं स्पष्टम्। सूत्रभाष्ययोश्चायं भावः—तत्तदवस्थज्ञानजनकत्वावस्थाभेदभिन्नं मनः तैस्तैर्व्यपदिश्यते इति। निर्व्यूढश्च तुल्यन्यायमन्यत्, "सप्त गतेः" इत्यधिकरणे, "अध्यवसायाभिमानचिन्तावृत्तिभेदात् मन एव बुद्ध्यहङ्कारचित्तशब्दैः व्यपदिश्यते" इति। उक्तञ्च वेदार्थसंग्रहे, "दुःखाज्ञानमला धर्माः प्रकृतेस्ते न चात्मनः" इत्यत्र प्रकृतिसंसर्गकृतकर्ममूलत्वात् नात्मस्वरूपप्रयुक्तधर्मा इत्यर्थः। प्राप्ताप्राप्तविवेकेन प्रकृतेरेव धर्माः इत्युक्तम्" इति। तथा तत्रैव, "भक्तिशब्दश्च प्रीतिविशेषे वर्तते। प्रीतिश्च ज्ञानविशेष एव" इत्युक्त्वाः, 'ननु च सुखं प्रीतिरिति नार्थान्तरम्। सुखञ्च ज्ञानविशेषसाध्यं पदार्थान्तरमिति हि लौकिकाः" इति चोद्यं कृत्वा, "नैवम्; येन ज्ञानविशेषेण तत् साध्यमित्युच्यते, स एव ज्ञानविशेषः सुखम्। एतदुक्तं भवति-विषयज्ञानानि सुखदुःखमध्यस्थसाधारणानि। तानि च विषयाधीनविशेषाणि तथा भवन्ति, येन विषयविशेषेण विशेषितं ज्ञानं सुखस्य जनकमित्यभिमतम्, तद्विषयज्ञानमेव सुखम्। तदतिरेकि पदार्थान्तरं नोपलभ्यते। तेनैव सुखितःवव्यवहारोपपत्तेश्च" इत्याद्युक्तम्। "इच्छा द्वेषः" इत्यादि-भगवद्गीतावचनं तु तत्रैव भाष्यकारैर्निर्व्यूढम्, "इच्छा द्वेषः सुखं दुःखमिति क्षेत्रकार्याणि क्षेत्रविकारा उच्यन्ते। यद्यपि इच्छाद्वेषसुखदुःखानि आत्मधर्मभूतानि, तथापि आत्मनः क्षेत्रसम्बन्ध-प्रयुक्तानीति क्षेत्रकार्यतया क्षेत्रविकारा उच्यन्ते। तेषां पुरुषधर्मत्वम्, 'पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते' इति वक्ष्यते" इति। उक्तञ्च श्रीरामिश्रैः षडर्थसङ्क्षेपे, "वेद्यभेदधीभेदः सुखम्, अन्याद्दष्टेः।" इत्यादि। उक्तञ्च श्रीवरदविष्णुमिश्रैरपि, "सुखदुःखे तावत् अनुकूलप्रति-कूलविषये ज्ञाने एवेति न गुणेष्वन्तर्भाव एव।" इत्यादि। उक्तञ्च सङ्गतिमालायां श्रीविष्णुचित्तैः, "एवं परमात्मनः पावकप्रकाशौष्ण्यादिस्थानीयं जीवस्वरूपमपि सुषुप्तिसंहारयोः परमात्मनो भेदक-

---

ननु निश्चयसंशयादिव्यवहारभेद इत्यत्र आदिशब्देन सुखदुःखयोरुपादाने किं प्रमाणम्? "सुखदुःखे च नात्मधर्मौ" इति ग्रन्थस्वारस्यानुसारादग्रहणमेव युक्तमिति शङ्कते नन्वश्रुतसिद्धान्त-स्येति। परिहरति न स्यादिति। तत्तदवस्थेति। कामत्वसंकल्पत्वाद्यवस्थाविशिष्टज्ञानजनकत्वावस्था भेदभिन्नं मन इत्यर्थः। तुल्यन्यायमन्यदेवोदाहरति सप्त गतेरित्यधिकरण इति। अध्यवसायेति। अध्यवसायाभिमानचिन्तावृत्तिजनकत्वावस्थाभेदादित्यर्थः। प्रकृतेरेव धर्मा इत्युक्तमिति। उपचारत इति शेषः। तत्रैवेति। वेदार्थसंग्रह एवेत्यर्थः। ननु ज्ञानविशेषः सुखमित्युक्तिर्न सम्भवति, विषयस्यैव ज्ञाने विशेषतया तस्यैव सुखत्वप्रसङ्गादित्यत आह एतदुक्तं भवतीति। सुखदुःखेति। कानिचित् सुखरूपाणि कानिचित् दुःखरूपाणि कानिचिदनुभयरूपाणीत्यर्थः। विषयाधीन-विशेषाणीति। तथा च विषयव्यतिरेकेणापि स्वरूपानतिरिक्तविशेषसद्भावात् ज्ञानविशेषस्य सुखत्वोक्तिर्न विरुद्धेति भावः। वेद्यभेदेति। विषयविशेषाधीनो बुद्धिविशेषः सुखमित्यर्थः। एवं परमात्मन इति।

---

संशयादीत्यत्र आदिशब्देन सुखदुःखादेर्ग्रहणे किं प्रमाणम्? प्रत्युत, 'सुखदुःखे च नात्मधर्मौ' इति ग्रन्थस्वारस्यपर्यालोचनायामग्रहणमेव प्रतीयत इत्याशङ्कते नन्वश्रुतसिद्धान्तस्येति। परिहरति नेति। तत्तदवस्थेति। कामत्वसङ्कल्पत्वाद्यवस्थेत्यर्थः। तुल्यन्यायमन्यन्निर्व्यूढमित्येतदेवोदाहरति सप्तगतेरिति। दुःखेत्यादि। दुःखाज्ञानमलाः प्रकृतेर्धर्माः; नात्मनः-ते=धर्मा इत्यर्थः। वेद्यभेदधीभेद इति। विषयविशेषाधीनविशेषविशिष्टं ज्ञानमित्यर्थः॥

संशयनिर्णयविपर्ययायथाज्ञानप्रत्यक्षानुमानागमरागद्वेषलोभमोहमदमात्सर्यधैर्यविचिकित्साश्रद्धा - लज्जाभयाद्यनन्तज्ञानप्रसरणरूपविकारभेदशून्यम्" इत्यादि। तत्सिद्धं सुखादयो बुद्धिविशेषा इति।

तर्हि नित्यसर्वविषयस्य ईश्वरज्ञानस्य कथमिच्छाद्याकारत्वमिति चेत्—उपाधिविशेषाद्वा, अनित्यज्ञानान्तरसद्भावाद्वा यथातथा वा भवतु। अभ्युपगतं हि इन्द्रियजन्म अनित्यमपि ज्ञानमीश्वरस्यास्तीति वरदविष्णुमिश्रादिभिः, यदुक्तम्, "ईश्वरज्ञानस्यानित्यस्य सर्वविषयनित्यज्ञानगृहीतग्राहित्वात्" इति, "अस्यापि इन्द्रियजत्वात्" इति च। प्रज्ञापरित्राणे स्वयंसिद्धिप्रकरण एवमुक्तम्—"सुखदुःखे च विज्ञानविशेषाविति केचन। तन्न साधु शरीरस्य पादादिषु हि ते अमू॥ तत्रतत्राऽऽत्मनस्तस्यासन्निधानादणुत्वतः। तद्धर्मभूतविज्ञानस्यापि नैवास्ति सन्निधिः॥" इत्युक्त्वा, अनन्तरं जीवस्य बन्धमोक्षावस्थयोर्द्वयोरपि अणुत्वमुपपाद्य—

"यावदाश्रयवर्त्यैव विगीतं ज्ञानमुच्यते॥ धर्मत्वे सति धीत्वेन ब्रह्मविज्ञानवत् ततः।

---

पावकस्थानीयस्य परमात्मनः प्रकाशौष्ण्यस्थानीयो जीवः सुषुप्तिप्रलययोः परमात्मन्यावर्तकरागद्वेषभयादिलक्षणज्ञानविशेषशून्यः इत्युक्त्या तेषां ज्ञानविकारत्वाविष्करणादित्यर्थः॥

तर्हीति। इच्छादीनां ज्ञानविकारत्वात् ईश्वरज्ञानस्य च निर्विकारत्वादिति भावः। उपाधिविशेषाद्वेति। तत्तत्कार्यसामग्रीसमवधानरूपोपाधिमहिम्ना स्वाभाविकविकारशून्येऽपि ऐश्वरनित्यज्ञाने सिसृक्षादिविकारा उत्पद्यन्ते इत्यर्थः। एवं तर्हि ऐश्वरनित्यज्ञानस्य अस्मदादिज्ञानाविशेष इत्यस्वरसादाह अनित्यज्ञानान्तरेति। ते अमू इति। सुखदुःखे इत्यर्थः। 'पादे मे सुखम्, [1]शिरसि मे वेदना, इति प्रतीत्या सुखदुःखयोः पाणिपादाश्रितत्वेन आत्मधर्मभूतज्ञानैक्यासम्भवादिति भावः। ननु शिरःपाणिपादाद्यवच्छिन्नात्मनि सुखादिकमस्त्वित्याशङ्क्याह आत्मनस्तत्रतत्रेति। ननु आत्मनोऽणुत्वेऽपि सुखदुःखाद्युपादानभूतधर्मभूतज्ञानस्य व्यापत्वात् सुखदुःखादीनामात्मधर्मत्वे नानुपपत्तिरित्यत आह तद्धर्मभूतेति। यावदाश्रयेति। आश्रयानधिकदेशवर्तीत्यर्थः। अयमत्र प्रयोगक्रमः—विप्रतिपन्नं ज्ञानमाश्रयानधिकदेशवर्ति धर्मत्वे सति ज्ञानत्वात् ईश्वरज्ञानवदिति। अत्र धर्मत्वमात्रस्य प्रभाबामतिप्रसक्ततया धीत्वेनेत्युक्तम्। धीत्वमात्रस्य आत्मस्वरूपेऽतिप्रसक्ततया तत्र स्वाश्रयस्यैवाभावेन तद्घटितसाध्यस्याभावाद्व्यभिचार इत्यत उक्तं सत्यन्तम्। ननु प्रभावत् ज्ञानस्यापि स्वाश्रयाधिकदेश-

---

तर्हीति। इच्छादीनां ज्ञानविकाररूपत्व इत्यर्थः। पादादिषु हि ते अमू इति। ज्ञानविशेषरूपतयाऽभ्युपगते सुखदुःखे पादादिष्वेव प्रतीयेते इति प्रसिद्धमित्यर्थः। पादे मे वेदना, शिरसि मे सुखमित्यादिप्रतीतेः सर्वसिद्धत्वादिति भावः। पादाद्यवच्छेदेनात्मन्येव सुखदुःखादिप्रतीतिरियं स्यादित्यत्राह तत्रेति। ननु धर्मभूतज्ञानद्वारा पादादिषु सर्वत्रात्मनः सन्निधिसद्भावान्नोक्तदोष इत्याशङ्क्याह तद्धर्मेति। यावदाश्रयवर्तीति। आश्रयानधिकदेशवर्तीत्यर्थः। अयमत्र प्रयोगः—विप्रतिपन्नं ज्ञानं स्वाश्रयासंयुक्तसंयोगशून्यं धर्मत्वे सति ज्ञानत्वात्, ईश्वरज्ञानवदिति। अत्र धर्मत्वस्य प्रभायां सत्त्वाद् व्यभिचार इति ज्ञानत्वनिवेशः। ज्ञानत्वस्य दिव्यात्मस्वरूपेऽपि सत्त्वात् व्यभिचार इति धर्मत्वनिवेशः।

---

1 सुखस्यात्मगतत्वेऽपि तस्य पादसंबन्धिकिञ्चिन्मूलकत्वात् विषयस्याप्यनुकूलस्य सुखत्वस्वीकाराच्च पादे सुखमित्युपपन्नमिति ध्येयम्।

गुणत्वमेव ज्ञानस्य न तु द्रव्यत्वसम्भवः॥ अतीतानागता अर्था अपि भान्ति च धीबलात्। संयोगमनपेक्ष्यैव सर्वेषाण्यर्थकृत्यकृत् ॥ तस्माद्विषयविषयिभावः सम्बन्ध एव हि। ज्ञानार्थयोस्तु सम्बन्धः सोऽखिलैरपि संविदः॥ स्वतस्सर्वार्थसम्बन्धिन्येषा धीः सर्वगोच्यते। अगत्वा सर्वसम्बन्धि सर्वग्राहि प्रचक्षते ॥ स्वाश्रयायुक्तवस्तुष्वप्यस्याः कार्यकरत्वतः। गुणवैरूप्यसद्भावात् द्रव्यता भाष्यभाषिता ॥ स्वाश्रयश्लिष्ट एवार्थे स्पर्शाद्याः कार्यकारिणः। दाहस्फोटादिकार्यं ते कुर्वते नेदृशी हि धीः॥ गुणवैरूप्यमेवास्या द्रव्यशब्देन लक्ष्यते। भावान्तरं तदा प्राप्तं शक्तिवत् ज्ञानमप्यतः॥ द्रव्यत्वपक्षे ज्ञानस्य परिणामानिरूपणात्। वैयर्थ्याच्च गुणो वा तद्भावान्तरमथापि वा ॥

---

वर्तित्वं भविष्यतीत्याशङ्क्य प्रभाया द्रव्यत्वेन स्वाश्रयाधिकदेशवर्तित्वसंभवेऽपि ज्ञानस्य गुणैकस्वभावतया स्वाश्रयाधिकदेशवर्तित्वं न संभवतीत्यभिप्रयन् आह **गुणत्वमेव ज्ञानस्येति**। ननु ज्ञानस्याद्रव्यत्वे विषयसंयोगाभावाद्विषयप्रकाशो न स्यादित्याशङ्क्य **अतीतादिवत् संयोग**मन्तरेणापि विषयप्रकाशः सम्भवतीत्यभिप्रयन् आह **अतीतानागता इति**। **अर्थकृत्यकृदिति**। सा धीः **संयोगमनपेक्ष्यैव** सर्वानप्यर्थान् प्रकाशयतीत्यर्थः। **सोऽखिलैरिति**। अतीतानागतैर्गुणादिभिश्चेत्यर्थः। **संयोगस्य** ज्ञानसंबन्धत्वेऽतीतादिभिः स न सेत्स्यतीति भावः। ननु बुद्धेरद्रव्यत्वे, "वेष्टिता नृप! **सर्वगा**" इत्याद्युक्तिः कथमित्याशङ्क्याह **स्वतस्सर्वार्थेति**। **स्वाश्रयेति**। उष्णगुणानां स्वाश्रयसंयुक्त एव आश्रयान्तरे दाहादिकार्यजनकत्वस्य दर्शनात् कुलालादिज्ञानस्य चातथाभूतेऽपि चक्रादौ भ्रम्यादिकार्यजनकत्वदर्शनेन **गुणवैरूप्यसद्भावाद्द्रव्यता भाष्योक्तेत्यर्थः**। **द्रव्यशब्देनेति**। भाष्यगतद्रव्यशब्देनेत्यर्थः। ननु ज्ञानस्य द्रव्यविलक्षणत्वे प्रसिद्धगुणविलक्षणत्वे च अङ्गीक्रियमाणे तस्य शब्दादिपञ्चकसंयोगसत्त्वरजस्तमश्शक्तिरूपेषु दशविधाद्रव्येषु कान्तर्भावः स्यादित्याशङ्क्याह **भावान्तरमिति**। **परिणामानिरूपणादिति**। कार्यभूतस्य द्रव्यत्वे यत्किञ्चित्परिणामत्वस्य अवश्यवक्तव्यत्वात् ज्ञानस्य च अव्यक्तकालजीवेश्वरशुद्धसत्त्वपरिणामत्वासम्भवात् न द्रव्यत्वं सुवचमिति भावः। **वैयर्थ्याच्चेति**। संयोगमन्तरेणापि विषयप्रकाशस्योपपादिततया संयोगार्थं द्रव्यत्वस्याकल्प-

---

ननु प्रभायामिव ज्ञानेऽपि स्वाश्रयासंबन्धिदेशसंबन्धः स्यादित्याशङ्क्याह **गुणत्वमेवेति**। प्रभावत् ज्ञानस्यापि द्रव्यत्वे स्वाश्रयासंयुक्तदेशसंयोगित्वमुपपद्येत ; न त्वेतदस्तीति भावः। ननु ज्ञानस्याद्रव्यत्वे विषयसंयोगासंभवाद् व्यवहारजनकत्वानुपपत्तिः। व्यवहर्तव्यतासंबन्धेन व्यवहारं प्रति विषयतासंबन्धेन ज्ञानस्य कारणतया विषयतायाश्च संयोगरूपतायाः पूर्वमुक्तत्वात् ज्ञानस्याद्रव्यत्वे कथं संयोगरूपविषयताप्रतियोगित्वसंभव इत्याशङ्क्य विषयतायाः संयोगरूपत्वे अतीतादिभिः सह संयोगासंभवात् ज्ञानस्य तद्विषयकत्वानुपपत्तिः। अतो विषयता अतिरिक्तपदार्थरूपैवेति सर्वैराश्रयणीयमिति तादृशविषयतानिरूपकत्वं ज्ञानस्याद्रव्यत्वेऽप्युपपद्यत इत्याह **अतीतेति**॥ **अर्थकृत्यकृदिति**। अर्थप्रकाशकृदित्यर्थः। **अखिलैरपीति**। अतीतादिभिर्गुणादिभिश्चेत्यर्थः। ननु बुद्धेरद्रव्यत्वे, "वेष्टिता नृप सर्वगा" इत्याद्युक्तिः कथमित्याशङ्क्याह **स्वतस्सर्वार्थसंबन्धिनीति**। उक्तरीत्या अतीतादिरूपसर्वार्थसंबन्धयोग्येत्यर्थः। ननु ज्ञानस्य द्रव्यविलक्षणत्वे प्रसिद्धगुणविलक्षणत्वे चाङ्गीक्रियमाणे द्रव्यगुणयोरनन्तर्भावेन भावान्तरत्वप्रसङ्ग इत्यत्रेष्टापत्तिमाह **भावान्तरमिति**। **प्राप्तं युक्तम्**। **वैयर्थ्याच्चेति**। संयोगमन्तरेणापि विषयप्रकाश-

देहदेशोत्थमप्येतत् सुखं दुःखञ्च देहिनः । आत्मनो धीमहिम्नैव भासेते ते तथातथा ॥
अनात्मकशरीरे तद्दृष्टेरात्मनो गुणौ । इति चेन्नाशरीरस्यासम्भवान्नात्मनो गुणौ ॥
सकर्मकात्तु देहस्य गुणौ ते आत्मनो गुणात् । ज्ञानाद्भात इति प्राज्ञैः परिकल्प्यमिति स्थितिः ॥
कर्मिणश्चेतनस्यानुभाव्यत्वेनैव सम्भवः । तयोरिति प्रकाशेनाव्यभिचारोऽन्यथा वृथा ॥
इच्छादयो न देहैकदेशवर्तिन इत्यतः । आत्मनः स्युर्गुणा ज्ञानविशेषाश्च प्रकीर्तिताः ॥
जलाधारेष्वनेकेषु भास्करस्योपलब्धिवत् । अणोरप्यात्मनोऽनेकदेहेष्वस्तूपलम्भनम् ॥

---

नीयत्वादित्यर्थः । देहदेशोत्थमपीति । अनात्मगुणभूतमपीति शेषः । तथातथेति । सुखदुःखत्वा दिनेत्यर्थः । शङ्कते अनात्मकेति । अशरीरस्येति । आत्मन इति शेषः । ततश्च अन्वयव्यतिरेकाभ्यां शरीरगुणावेव स्यातामिति भावः । सकर्मकादिति । सकर्मकादात्मगुणात् ज्ञानात् देहगुणभूते ते=सुखदुःखे भातः=भासेते इति प्राज्ञैरभ्युपगन्तव्यमित्यर्थः । अतः सकर्मकादित्येतत् हेतुगर्भविशेषणम् । तथाचाकर्मकयोः सुखदुःखयोः सकर्मकज्ञानविशेषरूपत्वं न संभवतीति भावः । ननु सुखदुःखयोर्ज्ञानरूपत्वाभावे प्रकाशाव्यभिचारो न स्यादित्याशङ्क्य तयोर्ज्ञानरूपत्वाभावेऽपि कर्मफलानुभवार्थमेव सृष्टत्वेन प्रकाशाव्यभिचारः संभवतीत्यभिप्रयन् आह कर्मिणश्चेतनस्येति । अन्यथेति । प्रकाशमानत्वाभावे सुखदुःखसृष्टिर्व्यर्थेत्यर्थः । इच्छादय इति । पादे मे वेदना, शिरसि मे सुखमितिवत्, पादे मे इच्छा, शिरसि मे द्वेष इति सुखवदिच्छादीनां शरीरगतत्वेनाप्रतीतेरात्मधर्मत्वमेवेति भावः । ननु आत्मनोऽणुत्वे, युगपदनेकदेहाधिष्ठानयोग्यस्य द्रव्यरूपस्य व्यापिनो धर्मभूतज्ञानस्य चानभ्युपगमे, योगिभिर्मुक्तैर्वा परिगृहीतेषु देहेषु आत्मवत्तोपलम्भोऽन्येषां न स्यात्; किञ्च तेषां देहानामात्मानधिष्ठितत्वात् प्रवृत्त्यादिकं न स्यात्; अपि च तेषुतेषु देहेषु योगिनां मुक्तानां वा स्थूलोऽहम्, कृशोऽहम् इति तत्तद्देहावच्छिन्नतया प्रतीतिर्न स्यात्, किञ्च निरात्मकदेहवर्तीन्द्रियाणामपि प्रवृत्तिर्न स्यात्; किञ्चानेकेषु मुक्तपरिग्रहव्यपदेशो निरालम्बनः स्यात्, तत्र मुक्तेन वा तद्धर्मज्ञानेन वा अधिष्ठानासम्भवेन परिग्रहशब्दार्थस्यैवाभावादित्याशङ्कां क्रमेण पराकरोति जलाधारेष्वि-

---

स्योपपादिततया संयोगसिद्ध्यर्थं ज्ञानस्य द्रव्यत्वाभ्युपगमवैयर्थ्याच्चेत्यर्थः । तथा तथेति । तत्तद्देहदेशस्थितत्वेनेत्यर्थः । ननु सुखदुःखयोर्ज्ञानविशेषरूपत्वाभावे कथं प्रकाशाव्यभिचार इत्याशङ्क्याह कर्मिण इति । प्रकाशाव्यभिचारः=विद्यमानदशायां सर्वदा भासमानत्वम् ॥

अन्यथेति । प्रकाशाव्यभिचारविरहे इत्यर्थः । वृथेति । तयोस्संभव इत्यनुषङ्गेणान्वयः । न देहैकदेशवर्तिन इति। पादे मे वेदना, शिरसि मे सुखमितिवत् पादे मे इच्छा, शिरसि मे द्वेष इत्येवंप्रतीतिविरहादिति भावः । नन्वात्मनोऽणुतया स्वतोऽनेकदेहसंबन्धासंभवात् धर्मभूतज्ञानस्याद्रव्यत्वे तस्यापि देहान्तरेण संबन्धायोगात् कथं योगिप्रभृतीनामनेकशरीरेषु ममेदं शरीरमित्यभिमानोपपत्तिरित्यत आह जलाधारेष्विति । उपलम्भनमिति । संबन्धप्रतीतिरित्यर्थः । जलाधारेषु सूर्यस्य संयोगविरहेऽपि तत्प्रतिबिम्बग्रहणवशेन तेषु सूर्यसंबन्धोपलब्धिवत् अनेकेष्वपि शरीरेषु संयोगरूपात्मसंबन्धविरहेऽपि

योगिनां शक्तिवैचित्र्यात् ईश्वरानुग्रहेण वा । बहुदेहाः प्रवर्तन्ते एकदेहवदञ्जसा ॥
अन्तराळाग्रहात्तेषां स्वात्मनश्च स्वयेच्छया । सन्निधानोपलब्धिः स्यात् तत्रतत्राहमित्यपि ॥
प्रतिदेहं विविक्तानि मनःप्रभृतिकान्यपि । इन्द्रियाणीश्वरेच्छाद्यैः प्रवर्तन्ते तु योगिनः ॥
मुक्तश्चानेकदेहान् संगृह्णाति स्वेच्छयैव तु । सर्वज्ञ एव कामान्नी कामरूप्यनुसञ्चरेत् ॥
प्रदीपः प्रभयेवाऽऽत्मा ज्ञानेनाखिलमाविशेत् । इत्यादिव्यवहारश्च प्रकाश्यत्वनिबन्धनः ॥
अतीतानागता नार्थाः प्रभया भान्ति जातुचित् । ते च ज्ञानेन भान्त्यातो न साम्यं सर्वथा मतम् ॥

त्यादिना । **अन्तराळाग्रहात्तेषामिति** । तेषां शरीराणाम् आत्मनश्च स्वेच्छया असन्निधानाग्रहात्, तदग्रहेऽपि इच्छया वा तत्तद्देहेषु स्थूलोऽहं कृशोऽहमिति तत्तद्देहावच्छिन्नत्वलक्षणसन्निधानप्रतीतिरुपपद्यते इत्यर्थः । **स्वेच्छयैव** त्विति । तथाच मदीयमित्यादीच्छाविशेषविषयत्वमेव परिग्रहशब्दार्थ इति भावः । "प्रदीपवदावेशस्तथाहि दर्शयति" इति सूत्रभाष्यविरोधं परिहरति **प्रदीप इति** । प्रभासाम्यं मुख्यमेवास्त्वित्याशङ्क्याह **अतीतानागता इति** । प्रभया मुख्यसाम्येऽङ्गीक्रियमाणे प्रभायाः संयुक्त मात्रप्रकाशकत्ववत् ज्ञानस्यापि तथात्वप्रसङ्गः । न चेष्टापत्तिः ; अतीतादिष्वसम्भवात् । अतो न सर्वांश

तत्तत्कर्मादिजन्यत्व-तत्सुखादिसाधनत्वरूपसंबन्धवशात् स्वीयत्वाभिमानं उपपद्यत इति भाव. । ननु तथाप्यात्मसंयोगस्य तद्धर्मभूतज्ञानसंबन्धस्य वाऽभावात् कथं देहान्तरेष्वेकदेहस्थात्मप्रयत्नवशेन चेष्टो त्पत्तिः? अत आह **योगिनामिति** । ननु तथापि योगिपरिगृहीतेष्वितरेषु देहेष्वात्मसन्निधिविरहात् कथं तत्र अहमिति व्यवहारोत्पत्तिः? अत आह **अन्तराळाग्रहादिति**। तेषां शरीराणां स्वात्मनश्च परस्परं विद्यमानो यः संबन्धाभावः तदग्रहादित्यर्थः । कथं विद्यमानस्य संबन्धाभावस्याग्रहसंभव इत्यत उक्तं **स्वयेच्छयेति** । अयं भावः—संबन्धाभावस्य विद्यमानत्वेऽपि तद्ग्रहो मा भूदितीच्छया तद्ग्रहप्रतिबन्धेनासंबन्धाग्रह संभवात् तत्सहितवस्तुद्वयज्ञानेन संबन्धज्ञानजन्यतयाभिमतकार्यमुपपद्यते, यथा पुरोवर्तिनि रजतसंसर्ग-ज्ञानजन्यतयाभिमतकार्यं पुरोवर्ति-रजतयोरसंसर्गाग्रहसहकृतग्रहणस्मरणाभ्यामुपपद्यत इत्युच्यते, तद्वत् । परन्तु अन्यथाख्यातिवादिभिः यत्र बाधकालीनेच्छाजन्यमाहार्यं विशिष्टज्ञानमङ्गीक्रियते, तत्राख्याति-वादिभिरिच्छाधीनासंसर्गाग्रहसहितं ज्ञानद्वयम् एकमेव वा, वस्तुद्वयविषयकं ज्ञानं तत्कार्यकारितयोच्यत इत्येतावान् विशेषः । अत इतरेष्वपि शरीरेष्विच्छाधीनासन्निधानाग्रहसहिताभ्यामात्मशरीरज्ञानाभ्याम् अहमिति व्यवहार उपपद्यत एवेति। **सन्निधानोपलब्धिस्स्यादिति** । सन्निधानोपलब्धिकार्यव्यवहारादिकं स्यादित्यर्थः । **प्रतिदेहंविविक्तानीति** । तेन देहभेदेन प्रवृत्त्यादिभेदाविघात इति भावः । **स्वेच्छयैवेति** । अत्रैवकारेण कर्मव्यवच्छेदः । एतदभिधानञ्च मुक्तानां कर्मफलभोगविरहात् कथं शरीरपरिग्रहः, कथन्तरामनेकशरीरपरिग्रह इति शङ्कावारणाय । अत्र तेषां शरीराणां तदिच्छाजन्यत्वमेव तदीयत्वम् । मुक्तस्यानेकशरीरपरिग्रहे प्रमाणज्ञापनाय **कामान्नीत्यादिकमुक्तम्** । प्रभासाम्यं मुख्यमेवास्त्वित्याशङ्क्याह **अतीतानागता इति** । प्रभया मुख्यसाम्याङ्गीकारे प्रभायास्संयुक्तमात्रप्रकाशकत्वात् ज्ञानस्यापि तथा-

स्वरूपेणाणुरात्माऽयं गुणद्वारेण सर्वगः । उभयव्यवहारोऽपि युज्यते प्रत्यगात्मनः ॥
परमात्मा स्वरूपेणाप्यशेषव्यापकः श्रुतेः । सर्वान्तर्याम्यनन्तश्च तथाऽतः सर्वगो मतः ॥
अक्षव्यापृत्यभावेन सुषुप्तौ नार्थभासनम् । धियो धीमांश्चात्मा च तदा स्वैरं प्रकाशते ॥
अस्वाप्सं सुखमेतावत्कालमित्युत्थितः पुमान् । परामृशंस्तदाऽप्यात्मभासनं विविनक्ति हि ॥
मामन्यञ्च न जानामीत्येवमादिनिषेधधीः । मानुष्यादिविशिष्टात्मपरागर्थैकगोचरा ॥

---

साम्यमिति भावः । आत इति । अत इत्यर्थः । युज्यत इति । सर्वविषयकत्वेन ज्ञानस्य सर्वगत्व-मौपचारिकमिति प्रागेवोक्तमिति भावः । अनन्तश्चेति । स्वरूपतो गुणतश्चाऽऽनन्त्यस्य विवक्षितत्वात् आनन्त्यश्रुत्या स्वरूपस्यापि सर्वगत्वसिद्धिरिति भावः । ननु आत्मगुणभूतस्य ज्ञानस्य नित्यत्वे स्वप्रकाशत्वे च अभ्युपगम्यमाने सुषुप्तावपि भानप्रसङ्गः । नचेष्टापत्तिः ; विषयावच्छिन्नज्ञानस्य भाने सुषुप्तिव्याघातप्रसङ्गादित्याशङ्क्याह अक्षव्यापृतीति । सुषुप्तिदशायां विषयेषु इन्द्रियव्यापाराभावात् ज्ञानेनार्थो न प्रकाशते, अपि तु ज्ञानमात्मा च । तथाच न सुषुप्तिव्याघात इति भावः । आत्म-भासनमिति । तथा च धर्मभूतज्ञानस्य नित्यत्वमुपपद्यते इति भावः । न च सौषुप्तिकमात्मभानं स्वरूप-ज्ञानमस्त्विति वाच्यम्, स्वभावसाक्षिणः स्वरूपज्ञानस्य प्रत्यक्त्वादिभासने सामर्थ्याभावेन सौषुप्तिक-प्रत्यक्त्वादिविषयकज्ञानस्य धर्मज्ञानत्वावश्यम्भावेन तन्नित्यत्वसिद्धिरिति भावः । ननु सुषुप्तावपि ज्ञान-सत्त्वे, न जानामीति धीर्न स्यादित्यत आह मामन्यमिति । मानुष्येति । मामित्यस्य मनुष्यत्वादि-

---

त्वप्रसङ्ग । ततश्च ज्ञानस्यातीतादिप्रकाशकत्वानुपपत्तिः । अतो न सर्वथा साम्यमभिमतमिति भावः । आतः=अतः । गुणद्वारेण सर्वग इति । सर्वविषयकत्वयोग्यज्ञानाश्रय इत्यर्थः । उभयव्यवहारोऽपीति । अणुत्वव्यवहारो व्यापित्वसर्वगत्वत्वादिव्यवहारश्चेत्यर्थः । युज्यत इति । व्यापित्वादि-व्यवहार औपचारिक इति भावः । स्वरूपेणाप्यशेषव्यापक इति । विभुस्वरूप इत्यर्थः । अनन्त इति । त्रिविधपरिच्छेदरहित इत्यर्थः । देशपरिच्छेदराहित्योक्त्या विभुत्वसिद्धिरिति भावः । नन्वात्म-गुणभूतज्ञानस्य नित्यत्वे स्वयम्प्रकाशत्वे चाभ्युपगम्यमाने सुषुप्तावपि ज्ञानभानप्रसङ्गः । न चेष्टापत्तिः ; ज्ञानभाने विषयभानावश्यम्भावेन सुषुप्तिव्याघातप्रसङ्गादित्याशङ्क्याह अक्षेति । सुषुप्तिदशायां विषये-ष्विन्द्रियव्यापाराभावात् ज्ञानेनार्थो न प्रकाश्यते ; ज्ञानात्मानौ तु स्वयंप्रकाशतया अक्षव्यापारनैरपे-क्ष्येणैव प्रकाशेते । घटादिरूपविषयप्रकाशदशायामेव ज्ञानस्य स्वयं भानमिति नियमस्तु नास्त्येवेत्येतेषा-मभिप्रायः । आत्मभासनमिति । प्रत्यक्त्वादिमत्तया भानमित्यर्थः । आत्मस्वरूपे प्रत्यक्त्वादिभानमिति यावत् । तेनात्मस्वरूपस्य स्वयम्प्रकाशत्वेन स्वयमेव भानेऽपि न क्षतिः ; धर्मिणः स्वभावभासकत्वेऽपि प्रत्यक्त्वादिभासकत्वासंभवेन धर्मभूतज्ञानेनैव तद्भानं वक्तव्यमित्याशयात् । तथाच सुषुप्तौ धर्मभूतज्ञान-मिष्टमेवेति तस्य नित्यत्वे नानुपपत्तिरिति भावः । ननु सुषुप्तावपि ज्ञानभाने, मामन्यं च न जानामीति परामर्शः कथं घटत इत्याशङ्क्याह मामिति । मामित्यस्य मनुष्यत्वादिविशिष्टात्मा विषयः, अन्यमित्यस्य परागर्थो विषय इति भावः । ननु परामर्शमानाभावे अहंशब्दानुविद्धप्रत्ययोऽपि न स्यादित्यत्राह

अहंशब्दानुविद्धा धीः सुषुप्तौ नास्ति तत्र तु। प्रत्यगर्थस्वरूपं तु भात्यर्थग्राहिधीगुणम् ॥"
इत्यस्यानन्तरमहमर्थत्वमात्मनः प्रतिपाद्य, ज्ञानस्यानुमेयत्वपक्षञ्च निरस्य, पुनरपि सुखदुःखे प्रयुज्य,

"प्रतिकूलानुकूले तु दुःखमन्यच्च कर्मिणः। भोक्तुर्भातोऽनयोस्तेन प्रकाशाव्यभिचारिता ॥
प्रकाशाव्यभिचारे तु तत्सत्त्वैव वृथा भवेत्। भोगार्थं तु तदुत्पत्तिर्भोगो न स्यादभासने ॥
इच्छाद्वेषप्रयत्नादिशब्दैर्धीरभिधीयते। अर्थभेदानुविद्धास्ते धीविशेषाः प्रकीर्तिताः ॥
न च देहैकदेशेषु प्रकाशन्ते सुखादिवत्। किन्त्वात्मस्था न हीच्छा मे पाद इत्यस्ति धीर्नृणाम् ॥
पादे दुःखं हस्तयोर्मे सुखमित्यादिकाऽस्ति धीः। धीभेदास्तत इच्छाद्याः सुखदुःखे तनोर्गुणौ ॥"

इत्युपसंहृतम्। पाणिपादादिदेहैकदेशवर्तितयोपलम्भेन सुखदुःखयोर्देहैकधर्मत्वम्, इच्छादेस्तु तथाऽनुपलम्भेन ज्ञानविशेषत्वोपपत्तिः, ज्ञानस्य स्वाश्रयादन्यत्रावर्तमानत्वम्, संयोगमनपेक्ष्य विषयविषयिभावेन प्रकाशकत्वम् अद्रव्यत्वम् इत्याद्यर्था भाष्यादिविरुद्धाः परतन्त्रदन्तिदन्तावृन्तिन्तन्द्रालुतया परिगृहीताः(परिहृताः)। न्यायसुदर्शने तु तैरेव सुखदुःखयोरात्मधर्मत्वञ्चोक्तम्। तथा हि, "भाष्ये मनुष्यादिपिण्डविशिष्टस्यात्मनः सुखित्ववचनं न विशेषणभूतशरीरस्यापि, आत्ममात्रस्यैव सुखाश्रयत्वात्। किंतु शरीरे वर्तमानस्यैवाऽऽत्मनो वैषयिकसुखादिमत्त्वमिति तद्विशिष्टात्मनस्तद्वत्त्वं अयमात्मा सुखीत्यनेनापि प्रतीयत इत्यर्थः" [इति।] ॥

---

विशिष्टात्मा विषयः। अन्यमित्यस्य पराग्थों विषय इति भावः। ननु कात्मस्वात्मांशव्यतिरिक्ताभाने अहंशब्दानुविद्धात्मप्रतीतिरपि न स्यादित्याशङ्क्य इष्टापत्त्या परिहरति अहंशब्देति। अर्थग्राहिधीगुणमिति। विषयानुकूलज्ञानगुणकमित्यर्थः। इदञ्च प्रत्यगर्थस्वरूपविशेषणम्। प्रयुज्येति प्रस्तुत्येत्यर्थः। अन्यच्चेति। सुखमित्यर्थः। भात इति। अवश्यमिति शेषः। वृथात्वमेवोपपादयति। भोगार्थमिति। इच्छादीनां सुखदुःखेभ्यो वैषम्यं दर्शयति इच्छाद्वेषेति। अर्थभेदेति। अननुकूलविषयं ज्ञानं द्वेष इत्यादि द्रष्टव्यम्। उपसंहृतमित्यन्तेनोपन्यस्तेष्वर्थेषु विरुद्धमनादरणीयमित्याह पाणिपादादीति। परतन्त्रेति। प्रत्यर्थिनिरसनासमर्थतयेत्यर्थः। आत्मधर्मत्वञ्चोक्तमिति। तथा च प्रज्ञापरित्राणेऽन्वारुह्योक्तमिति भावः। भाष्य इत्यारभ्य प्रतीयत इत्यर्थ इत्येतावत्पर्यन्तो न्यायसुदर्शनग्रन्थः। न विशेषणेति। विशेषणभूतशरीरस्य सुखाश्रयत्वमभिप्रेत्य न भवतीत्यर्थः। तत्र हेतुमाह आत्ममात्रस्यैवेति। किन्त्विति। इयान् विशेष इत्यर्थः ॥

ननु अदृष्टस्य ईश्वरप्रीतिकोपात्मकत्वे जीवानां सर्वेषां कर्मजन्यादृष्टानाश्रयत्वाविशेषात् कर्मफलाव्यवस्थाप्रसक्तिरित्याशङ्क्य तत्तत्पुरुषानुष्ठितेन कर्मणा जनिताभ्यां तत्तत्पुरुषविषयप्रीतिकोपाभ्यां

---

र्यात्तमाह अहंशब्दानुविद्धेति। वाच्यतासंबन्धेनाहंशब्दप्रकारकेत्यर्थः। अर्थग्राहिधीगुणमिति। विषयितया किञ्चिदर्थविशेषितधीविशेषणकमित्यर्थः। इदञ्च प्रत्यगर्थस्वरूपमित्यस्य विशेषणम्। प्रयुज्येति। प्रस्तुत्येत्यर्थः। अन्यच्चेति। सुखं चेत्यर्थः। परिगृहीता इति। अङ्गीकृता इत्यर्थः। परिहृता इति पाठे उपेक्षिता इत्यर्थः। तैरेव सुखदुःखयोरात्मधर्मत्वञ्चोक्तमिति। तथाच प्रज्ञापरित्राणोक्तिरन्वारुह्यवादरूपैवेति भावः। न विशेषणेति। विशेषणभूतशरीरस्यापि सुखाश्रयत्वप्रतिपादकं न भवतीत्यर्थः। तत्र हेतुमाह आत्ममात्रस्यैवेति। ननु तर्हि मनुष्यादिपिण्डविशिष्टत्वविशेषणवैयर्थ्यं स्यादित्यत्राह किं त्विति। प्रतीयत इत्यर्थ इत्यनन्तरमितिकरणं पूरणीयम् ॥

एवमदृष्टमपि ईश्वरप्रीतिकोपात्मकमेव । तद्विषयत्वप्रतिनियमादेव च क्षेत्रज्ञानां कर्मफल-नियमोपपत्तिः । शास्त्रगम्यत्वाच्चास्य तथात्वमवसीयते । तथा च द्रमिडाचार्यभाष्यम्—"फल-संविभक्तसया हि कर्मभिरात्मानं पिप्रीषन्ति" इत्यादि । भाष्यमपि—"शास्त्रैकसमधिगम्ये एव" इत्यादि । सूत्रकारैरेव एतद्विशदमुपपादितम्—"फलमत उपपत्तेः" इत्यादिभिः । यत्तु शरीरादिकं भोक्तृविशेषगुणप्रेरितभूतपूर्वकम्—तद्भोगसाधनत्वात् [1]स्रगादिवदिति सिद्धे, ज्ञानाद्य-

तत्तत्पुरुषेष्वेव फलोत्पत्तिरिति व्यवस्था सिध्यतीत्यभिप्रयन् आह तद्विषयत्वप्रतिनियमादिति । अस्य तथात्वमिति । अस्य अदृष्टस्य, तथात्वम् ईश्वरप्रीतिकोपात्मकत्वमित्यर्थः । फलसम्विभक्तसयेति, "फलसम्विभक्तसया [हि] कर्मभिरात्मानं पिप्रीषन्ति स प्रीतोऽलं फलायेति शास्त्रमर्यादा" इति द्रमिडाचार्यभाष्यवाक्यम् । "फलसम्बन्धेच्छया कर्मभिर्यागदानहोमादिभिरिन्द्रादिदेवतामुखेन तदन्तर्यामिरूपेणावस्थितमिन्द्रादिशब्दवाच्यं परमात्मानं भगवन्तं वासुदेवमाराधयिषन्ति । स हि कर्मभिराराधितस्तेषामिष्टानि प्रयच्छतीत्यर्थः" इति वेदार्थसंग्रहे भाष्यकृता व्याख्यातम् । शास्त्रैकसमधि-गम्ये एवेत्यादीति । "पुण्यापुण्यस्वरूपे हि शास्त्रैकसमधिगम्ये । शास्त्रञ्च अनादिनिधनाविच्छिन्न-सम्प्रदायानाघ्रातप्रमादादिदोषगन्धवेदाख्याक्षरराशिः । तच्च परमपुरुषाराधनतद्विपर्ययरूपे कर्मणी पुण्या-पुण्ये, तदनुग्रहनिग्रहायत्ते च तत्फले सुखदुःखे इति वदति" इत्यादि, "व्यतिरेकानवस्थितेश्चान-पेक्षत्वात्" इति सूत्रभाष्यमपीत्यर्थः । फलमत उपपत्तेः । अतः परमपुरुषात् कर्मणा समाराधितात् फलं भवति, कुतः ? उपपत्तेः । तस्यैव सर्वज्ञस्य सर्वशक्तेः फलदातृत्वोपपत्तेरित्यर्थः । अत्र आदि-पदेन, 'श्रुतत्वाच्च" इत्यादिसूत्रं विवक्षितम् । स्रगादिवदिति । तन्निर्मितायां तद्भोगसाधनस्रजि

तद्विषयत्वेति । ईश्वरप्रीतिकोपविषयत्वेत्यर्थः । क्षेत्रज्ञानां कर्मफलनियमोपपत्तिरिति । तत्तत्क्षेत्रज्ञानुष्ठितसदसत्कर्मभिः तत्तत्क्षेत्रज्ञविषयकावेवेश्वरप्रीतिकोपौ जायेते । ताभ्याञ्च तत्तत्क्षेत्रज्ञेष्वेव सदसत्फलोत्पत्तिरिति न कर्मफलानामाकस्मिकत्वम्, न वा आशुतरविनाशिनां कर्मणां कालान्तर-भाविफलसाधनत्वानुपपत्तिः । नाप्यतिप्रसङ्गः; विषयतासंबन्धेन तत्तत्फलप्रादित्सारूपप्रीतिकोपौ प्रति तत्तत्कर्मणां स्वानुकूलकृतिमत्त्वसंबन्धेन हेतुत्वात्, आश्रयतासंबन्धेन तत्तत्फलं प्रति विषयतासंबन्धेनोक्त-प्रीतिकोपयोर्हेतुत्वाच्चेति भावः । अस्य तथात्वमिति । अदृष्टस्येश्वरप्रीतिकोपात्मकत्वमित्यर्थः । फल-संविभक्तसयेति 'फलसंविभक्तसया [हि] कर्मभिरात्मानं पिप्रीषन्ति स प्रीतोऽलं फलायेति शास्त्रमर्यादा' इति द्रमिडाचार्यभाष्यवाक्यम् । फलसम्बन्धेच्छया, कर्मभिः=यागदानहोमादिभिः, आत्मानं=परमात्मानम्, पिप्रीषन्ति=प्रीतं कर्तुमिच्छन्ति । स प्रीतोऽलं फलायेति परमात्मा प्रीतस्सन् फलं प्रयच्छतीत्यर्थः । शरीरादि-कमिति आदिना इन्द्रियादिसङ्ग्रहः । भोक्तृविशेषगुणप्रेरितभूतपूर्वकमिति । भोक्तृनिष्ठविशेषगुणाधीन-व्यापारवद्भूतजन्यमित्यर्थः । स्रगादिवदिति । तन्निर्मितायां तदुपभोगसाधनस्रजि तदीयप्रयत्नजन्यव्यापार-वत्पुष्पादिजन्यत्वदर्शनादिति भावः । ज्ञानाद्यनुपपत्तेरिति । शरीरात्पूर्वं ज्ञानादेरसंभवादित्यर्थः ।

1 इदमनुमानं न्यायकुसुमाञ्जलौ । तन्निर्मितस्रगादित्येव तत्र दृष्टान्तनिर्देशः, अन्यनिर्मितस्रजि तदीयगुणपूर्वकत्वाभावात् । उपपादितश्चेदमिह व्याख्ययोः ।

नुपपत्तेः परिशेषात् जीवसमवेतादृष्टसिद्धिरिति वैशेषिकादिभिः स्वीक्रियते—तदसत्; अस्मदुक्तादृष्टादेव नियमोपपत्तौ विपक्षे बाधकाभावात्। न चान्यत्र भोगप्रसङ्गः; नियामकस्येच्छादेः प्रत्यक्षत्वात्। एवञ्च सति अग्नीन्द्रादिदेवताप्रीत्यादेरपि श्रुतिसिद्धत्वेनैवादृष्टतया स्वीकारे न दोषः। तेषामपि फलप्रदातृत्वमीश्वराधीनम्। सर्वत्र साधारणमीश्वरप्रीत्यात्मकमदृष्टम्।

---

तदीयज्ञानेच्छादिरूपविशेषगुणप्रेरितपुण्यादिपूर्वकत्वस्य दृष्टत्वादिति भावः। ज्ञानाद्यनुपपत्तेरिति। शरीरात् प्राक् ज्ञानादेरसम्भवात् अदृष्टमेव शरीरारम्भकभूतप्रेरकविशेषगुणतया सिध्यतीति भावः। नियामकस्येति। ईश्वरेच्छात्मकपुण्यपापरूपनियामकस्यानतिप्रसक्ततया व्यवस्थापकत्वादित्यर्थः। ननु तत्तत्कर्मजन्यातिशयरूपतया ईश्वरप्रीतेरदृष्टत्वाभ्युपगमे तत्तत्कर्माराध्येन्द्रादिदेवताप्रीतेरप्यदृष्टत्वप्रसङ्ग इत्याशङ्क्य इष्टापत्त्या परिहरति एवञ्च सतीति। "तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति" इति श्रुतेरिति भावः। तर्हि ईश्वरप्रीतेः किं वैषम्यमित्याशङ्क्याह तेषामपीति। ईश्वराधीनमिति। "परात्तु तच्छ्रुतेः" इति न्यायादिति भावः। सर्वत्रसाधारणमिति। अग्नीन्द्रा-

---

परिशेषादिति। शरीरारम्भकभूतव्यापारे तदीयज्ञानाद्यजन्यत्वे सति तदीयविशेषगुणजन्यत्वेन हेतुना ज्ञानाद्यतिरिक्ततदीयविशेषगुणजन्यत्वासिद्धिरिति भावः। अन्यत्रभोगप्रसङ्ग इति। अदृष्टस्य जीवसमवेतत्वविरहेणादृष्टाश्रयत्वस्य भोगनियामकत्वासंभवादिति भावः। नियामकस्येच्छादेः प्रत्यक्षत्वादिति। आश्रयतासंबन्धेन भोगं प्रति विषयतासंबन्धेन हेतुभूतेश्वरप्रीतिविषयतासंपादनद्वारा भोगनियामकस्य जीवगतेच्छादेः प्रत्यक्षसिद्धत्वादित्यर्थः। आदिना कृतिकर्मणोः परिग्रहः। तथाच विषयतासंबन्धेन तत्तत्फलप्रदित्सारूपेश्वरप्रीतिं प्रति स्वानुकूलकृतिमत्त्वसंबन्धेन तत्तत्कर्मणां हेतुतया प्रीतिविषयत्वस्य तदधीनफलस्य वा नातिप्रसङ्ग इति भावः। ननु कर्मजन्यातिशयरूपत्वाविशेषादिन्द्रादिदेवताप्रीतेरप्यदृष्टरूपत्वं स्यादित्यत्रेष्टापत्तिमाह एवञ्चसतीति। कर्मजन्यतया प्रमाणसिद्धस्यादृष्टरूपत्वे सतीत्यर्थः। श्रुतिसिद्धत्वेनेति। तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयतीत्यादिश्रुतिसिद्धत्वेनेत्यर्थः। नन्विन्द्रादिदेवताप्रीतेः कथमदृष्टरूपत्वसंभवः; अदृष्टं हि कर्मणा फले जननीयेऽवान्तरव्यापाररूपम्। न हीन्द्रादिप्रीतेस्तथात्वं संभवति; एककल्पानुष्ठितस्य कर्मण आतत्कल्पं प्रबलकर्मान्तरप्रतिबन्धे सति कल्पान्तर एव फलजनकताया वाच्यत्वेन तदा पूर्वकल्पाधिकृतेन्द्रादेरधिकारविलयेन तदातनतत्प्रीतेः फलजनकत्वासंभवादित्यत आह तेषामपीति। फलप्रदातृत्वं फलजनकप्रीत्याश्रयत्वम्। ईश्वराधीनमिति। ईश्वरप्रीत्यधीनमित्यर्थः। फलाव्यवहितहेतुभूतेश्वरप्रीतिजनकप्रीत्याश्रयत्वरूपमिति यावत्। तथाच कर्मजन्येन्द्रादिप्रीत्या तदैवेश्वरप्रीतेर्जननात् तयैव सर्वत्र फलोत्पत्त्या इन्द्राद्यधिकारविलयेऽपि तया फलोत्पत्त्युपपत्तिरिति भावः। ननु केवलेन्द्राद्याराधनरूपकर्मणा इन्द्रादिप्रीत्युत्पत्तौ कथं तथा भगवत्प्रीतिसंभवः। तस्य कर्मणो भगवदाराधनरूपत्वविरहादित्यत आह सर्वत्रेति। केवलभगवदाराधने, इन्द्रादिशरीरकभगवदाराधने, केवलेन्द्राद्याराधने चेत्यर्थः। साधारणमिति। अयं भावः—चार्वाकसैनकेन, देहः प्रीयतामिति बुद्ध्या राजशरीरे स्रक्चन्दनादिप्रयोगेऽपि तच्छरीरविशिष्टात्मनः

तथा च स्वयमेवाह—"अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च" इति । ईश्वरज्ञानस्य कोपाद्यात्मकत्वं विविधकर्मोपाधिकम् । न चैष दोषः; स्वाज्ञापरिपालनानुरूपगुणत्वात् । एवं सौशील्यवात्सल्यसौहार्दप्रभृतयोऽपि बुद्धिविशेषाः ॥ भरतादिपठिताश्च रत्यादयः स्थायिभावाः

---

दीनां सर्वकर्माराध्यत्वाभावेन तत्प्रीत्यात्मकादृष्टस्य सर्वत्र साधारणत्वाभावादिति भावः । प्रभुरेव चेति फलप्रदश्चेत्यर्थः । तथैव वेदार्थसंग्रहे भाष्ये च प्रपञ्चितत्वात् । अत्र, "स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः" इत्यादिकमप्युदाहार्यम् । दोष इति । कोपस्य दोषेषु परिगणनादिति चोद्याभिप्रायः । सौशील्येति । महतो मन्दैस्सह नीरन्ध्रसंश्लेषानुकूलबुद्धिविशेषः सौशील्यम् । वात्सल्येति । वात्सल्यं दोषदर्शनविरोधिज्ञानविशेषः । सौहार्दमपि अनुकूलत्वबुद्धिविशेष एवेत्यादि द्रष्टव्यम् ॥

**रत्यादयः स्थायिभावा इति ।** "प्रकाशानन्दचिद्रूपां रसतां प्रतिपद्यते । प्रकृष्यमाणो यो भावः स स्थायीति निगद्यते ॥ प्रकृष्यमाणो यो भावो रसतां प्रतिपद्यते । स एव भावः स्थायीति भरतादिभिरुच्यते ॥' इति भावप्रकाशाद्युक्तरीत्या काव्येन वा, अभिनयेन वा निवेद्यमानरामादिसुखाद्यनुभवजनितवासनारूपसंस्कारापरपर्यायसामाजिकमनोविकारो रत्यादिलक्षणः शृङ्गारादिस्थायिभावो नायकादिलक्षणैरालम्बनविभावैः, वसन्तकोकिलकापादिभिरुद्दीपनविभावैः, कटाक्षभुजाक्षेपादिभिः कार्यरूपैरनुभावैः, सहकारित्वेनाभिमतैर्निर्वेदादिसञ्चारिभावैः प्रकर्षं नीतो ब्रह्मानन्दसब्रह्मचारिसंविदानन्दात्मकरसरूपेण परिणमत इत्यालङ्कारिका वदन्ति । तथा चोक्तं दशरूपके "विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः । आनीयमानः स्वादुत्वं स्थायिभावो रसः स्मृतः ॥" इति । भावस्य स्थायित्वं नाम सजातीयविजातीयानभिभूततया यावदनुभवमवस्थानम् । तथा चोक्तं दशरूपके—"सजातीयैर्विजातीयैरतिरस्कृतमूर्तिमान् । यावद्रसं वर्तमानः स्थायी भाव उदाहृतः ॥" इति । तत्र च शृङ्गारहास्यकरुणरौद्रवीरभयानकबीभत्साद्भुतशान्ताख्यानां रसानां रतिहासशोकक्रोधोत्साहभयजुगुप्साविस्मयशमाः क्रमेण स्थायिभावाः प्रकीर्तिताः । सम्भोगविषयेच्छाविशेषो रतिः । विकृतदर्शनादिजन्यो मनोविकारो हास इत्यादि द्रष्टव्यम् ।

---

प्रीतिजननवत् परमात्मज्ञानविधुरैः केवलेन्द्रादिप्रीत्युद्देशेन कर्मानुष्ठानेऽपीन्द्रादिशरीरकपरमात्मनः प्रीत्युत्पत्तिरुपपद्यते । गीयते हि, "येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयाऽन्विताः । तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ।" इति । अतः केवलेन्द्राद्याराधनरूपतयाऽनुष्ठितकर्मस्थलेऽपीश्वरप्रीतिरुपपद्यत इति । सर्वयज्ञानामिति । अत्रत्यसर्वशब्देन केवलेन्द्राद्याराधनस्यापि सङ्ग्रहादिति भावः । प्रभुः फलप्रदः । "यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति । तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् । स तया श्रद्धया युक्तः तस्याराधनमीहते । लभते च ततः कामान् मयैव विहितान् हि तान्" इत्यादिकमप्यत्र बोध्यम् । सौशील्येति । महतो मन्दैः सह नीरन्ध्रसंश्लेषानुकूलबुद्धिविशेषः सौशील्यम्, वात्सल्यम्= दोषानादरहेतुभूतो बुद्धिविशेषः, सौहार्दमप्यनुकूलत्वबुद्धिविशेष इत्यादिकं द्रष्टव्यम् ।

**रत्यादय इति** आदिनाहासादिसङ्ग्रहः । **स्थायिभावा इति** स्थायित्वञ्च सजातीय-

[1]तत्परिणामरूपाः। सञ्चारिभावेषु च निर्वेदादयः स्वावमाननादिरूपबुद्धिविशेषा एव। ग्लान्यादयस्तु शरीराद्यवस्थाविशेषाः। स्वप्नशब्दस्यापि स्वप्नदर्शनाभिप्रायत्वे बुद्धिविशेषविषयत्वं व्यक्तम्। सुषुप्त्यभिप्रायत्वेऽपि अमूर्च्छितस्य जीवतः समस्तज्ञानप्रसररहितावस्थाविषयत्वम्। एवं जाड्यादिष्वपि

सञ्चारिभावेष्विति। व्यभिचारिणो निर्वेदादयः सहकारिण एव सञ्चारिभावा उच्यन्ते। ते च, "निर्वेदग्लानिशङ्काख्यास्तथाऽसूयामदश्रमाः। आलस्यञ्चैव दैन्यञ्च चिन्ता मोहः स्मृतिर्धृतिः॥ व्रीडा चपलता हर्ष आवेगो जडता तथा। गर्वो विषाद औत्सुक्यं निद्राऽपस्मार एव च॥ सुप्तिर्विबोधोऽमर्षश्चाप्यवहित्थमथोग्रता। मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च॥ त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः। त्रयस्त्रिंशदमी भावा रसस्य सहकारिणः॥" इत्युक्तास्त्रयस्त्रिंशदपि निर्वेदादयो भावा ज्ञानविशेषा इत्यर्थः। निर्वेदादय इति। दुःखेर्ष्यातत्त्वबोधादिप्रयुक्ता निष्फलत्वधीर्निर्वेद इत्यर्थः। स्वावमाननादिरूपेति। "अहो मे महती याता निष्फला जन्मसन्ततिः। अनाराधितगोविन्दचरणाम्भोरुहद्वया॥" इत्यादिस्वन्यकारानुकूलबुद्धिविशेष इत्यर्थः। एवं जाड्यादिष्वपीति। "जाड्यमप्रतिपत्तिः स्यादिष्टानिष्टागमोद्भवा"। आदिपदेन गर्वादिकम्, उत्कृष्टजनतिरस्कारहेतुरुत्कृष्टदेहेऽहम्बुद्धिरित्यादि। येषां ज्ञानेऽन्तर्भावस्तेषामेवात्मधर्मत्वम्,

विजातीयानभिभूततया रसत्वावस्थापर्यन्तमवस्थायित्वम्। तदुक्तम्, "सजातीयैर्विजातीयैरतिरस्कृतमूर्तिमान्। यावद्रसं वर्तमानः स्थायी भाव उदाहृतः" इति। अयमर्थः—विभावानुभावसात्त्विकभावव्यभिचारिभावसमुल्लसितस्थायिभावत्वं हि रसत्वम्। तत्र विभावो द्विधा, आलंबनोद्दीपनभेदात्। नायकादय आलंबनविभावाः। "आलम्बनगुणश्चैव तच्चेष्टा तदलङ्कृतिः। तटस्थश्चेति विज्ञेयाश्चतुर्धोद्दीपनक्रमाः" इत्युक्ता उद्दीपनविभावाः। तटस्था मलयानिलचन्द्राद्याः। कार्यभूताः कामिनीकटाक्षादयोऽनुभावाः। स्तंभपुलकरोमाञ्चादयः सात्त्विकभावाः। निर्वेदादयः सहकारिणः सञ्चारिभावशब्दिताः व्यभिचारिभावाः। एभिश्च विभावादिभिः काव्येनाभिनयेन वा दर्शितैः रत्यादयः उत्कर्षं प्रापिता ब्रह्मानन्दसब्रह्मचार्यानन्दतामापद्यन्त इति त एव रसा इत्युच्यन्ते। अधिकमलङ्कारग्रन्थेष्वनुसन्धेयम्। तथाच यावद्रसत्वावस्थाप्राप्ति इतरानभिभूततयावस्थायित्वं स्थायित्वमिति। तत्र संभोगेच्छा रतिः, विकृतवेषादिदर्शनजन्यो विकारो हास इत्यादिकं द्रष्टव्यम्। तत्परिणामरूपा इति बुद्धिपरिणामरूपा इत्यर्थः। निर्वेदादय इति। तत्र, "दुःखेर्ष्यातत्त्वबोधादेर्निर्वेदो निष्फलत्वधीः" इत्युक्तलक्षणो निर्वेदः। आदिना निर्वेदग्लानिशङ्काख्या" इत्यादिनोक्तेषु, "अनिष्टाभ्यागमोत्प्रेक्षाशङ्कारोषादिकारणम्" इत्याद्युक्तलक्षणशङ्कादिसङ्ग्रहः। स्वावमाननादिरूपेति। 'अहो मे महती याता निष्फला जन्मसन्ततिः" इत्याद्याकारेति भावः। ग्लान्यादय इति। ग्लानिः, "ग्लानिर्बलस्यापचयो वैवर्ण्यारतिकारणम्" इत्युक्तलक्षणा। आदिना, "धृतिश्चित्तस्य नैस्पृह्यं ज्ञानाभीष्टागमादिभिः" इत्याद्युक्त-

1 तत्परिणामेति। जीवब्रह्मैक्यस्वीकारेण आनन्दात्मकब्रह्मरूपरस इति वा, भेदेऽपि जीवरूपरस इति वा न वक्तव्यम्; अपितु तत्तद्धर्मभूतज्ञानपरिणामा एव ते इत्यर्थः। तथाच आलंकारिकवचनजालमात्म-ब्रह्म-ज्ञानानामभेदभ्रमविलसितमिति भावः।

चिन्त्यम् ॥ निद्रा तर्हि कस्यावस्था? चिन्तालस्य क्रमादिभिः संमीलतो मनसः, ज्ञानस्यैव वा। सैव च सुषुप्त्यादिकारणम् ॥ कथं तर्हि, "अभावप्रत्ययालम्बना वृत्तिर्निद्रा" इति पारमर्षं सूत्रम्? इत्थम्। समाधिमधिगच्छतो वृत्त्यन्तरवत् निरोद्धव्यत्वाभिप्रायम्, निरोधपरत्वात् प्रकरणस्येत्ययमर्थं आत्मसिद्धावुक्तः।

बुद्धेश्च निर्विषयत्वनिराश्रयत्वनिर्धर्मकत्वादिगोचरा दुरूहाः शून्यवादवत् उपलम्भविरोधादिभिर्दूषणीयाः। असत्ख्यात्यात्मख्यात्यनिर्वचनीयख्यात्यादयश्च न्यायपरिशुद्धावस्माभिर्दूषिताः। [1]तथा प्रमाणप्रमेयादिकं व्यवहारौपयिकमखिलमपि तत्रैव प्रपञ्चितमिति नेह प्रस्तूयते। वैशेषिकशैलीमनुसृत्य यथावस्थितपदार्थस्वरूपं हि अत्र विशोध्यते इति ॥

---

इतरेषां शरीरधर्मत्वमिति भावः। सैव च सुषुप्त्यादीति। अत एव निद्रातिरेकः सुषुप्तिरित्यालङ्कारिकाः। वृत्तिर्निद्रेति। ततश्च निद्राया अपि अभावप्रत्ययविषयकमनोवृत्तिरूपत्वाभिधानात् संमीलतोऽवस्थेति व्यापाररहित्यावस्थारूपत्वकथनं कथं युक्तमिति भावः। अभावप्रत्ययालम्बनेत्युक्त्या व्यापाररहित्यावस्थारूपत्वाविष्करणात् वृत्तिव्यवहार औपचारिक इति परिहरति इत्थमित्यादिना। बुद्धिपरिच्छेदे निराकरणीयानां केषाञ्चिदनिराकरणहेतुमाह बुद्धेश्चेत्यादिना। उपलम्भविरोधादिभिरिति। इदमहं संवेद्मीत्युपलम्भविरोधः। तथा, "ज्ञातृज्ञेयविहीनं ते ब्रह्म ज्ञानात्मकं यदि। भोज्यभोक्तृविहीनाऽपि भवेत् तर्हि भुजिक्रिया ॥" इत्यादिभिर्दूषणीया इत्यर्थः। वैशेषिकशैलीमिति। तत्कृतप्रमाणादिव्यवस्थामुपजीव्येत्यर्थः[2] ॥

---

लक्षणधृत्यादिसङ्ग्रहः। शरीरादीति आदिना मनःपरिग्रहः। अमूर्च्छितस्येति। इदञ्च मूर्च्छितवारणाय। जीवत इति। इदञ्च मृतवारणाय। समस्तज्ञानप्रसररहितेति। इदञ्च जाग्रतो वारणाय। एवं जाड्यादिष्वपीति। जाड्यम्—"जाड्यमप्रतिपत्तिः स्यादिष्टानिष्टागमोद्भवा" इत्युक्तलक्षणम्। आदिना, "विषादश्चेतसो भङ्ग उपायाभावचिन्तनैः" इत्याद्युक्तलक्षणविषादादिसङ्ग्रहः। चिन्त्यमिति। जाड्यं ज्ञानसङ्कोचरूपं सङ्कुचितज्ञानवत्त्वरूपं वा ज्ञानस्य ज्ञातुर्वाऽवस्थारूपम्; विषादो मनोवस्थारूप इति भावः। ज्ञानस्यैव वेति मनस्संमीलनाधीनज्ञानसङ्कोच एव निद्रेत्यभिप्रायेणेदम्। सैवेति। निद्रैवेत्यर्थः। सुषुप्त्यादिकारणमिति। "सुप्तिर्निद्रासमुद्रेकः" इति ह्यालङ्कारिका इति भावः। तर्हीति। निद्राया उक्तरूपत्व इत्यर्थः। अभावप्रत्ययालम्बना वृत्तिरिति। तथाच वृत्तिराहित्यरूपसंमीलनस्य निद्रात्वाभिधानमयुक्तमिति भावः। पारमर्षं=परमर्षिणा पतञ्जलिना प्रणीतम्। निरोद्धव्यत्वाभिप्रायमिति। तथाचेह वृत्तिशब्देन समाधिविरोध्यवस्थाया एव विवक्षिततया निद्राया अपि तथात्वमक्षतमिति भावः। दुरूहाः दुस्तर्काः। उपलम्भविरोधादिभिरिति। इदमहं संवेद्मीत्याद्युपलंभविरोधादिभिरित्यर्थः। आदिना निर्विषयत्वे ज्ञानत्वं न स्यादित्यादितर्कविरोधादिकं गृह्यते। वैशेषिकशैलीमनुसृत्येति। वैशेषिकसूत्रे यथा पदार्थस्वरूपशोधनमेव कृतम्। न तु न्यायसूत्रवत् प्रमाणादिनिरूपणम्, तद्वदिति भावः[1]।

---

1 भ्रान्तिप्रमितिभेददूषणे व्यवहारनिर्वाहः कथमित्यत्राह तथाप्रमाणेति।

2 उपजीव्येति। तद्वदिति च। नात्र वैशिषिकसिद्धान्त एव स्वसिद्धान्त इत्याशयः। किंतु यथा

माहाभाग्यवशंवदीकृतयतिक्षोणीशवाणीशता भूयाद्भोगसमेधकश्रुतिशिरः[1]प्रासादमासेदुषी ।
नित्यानन्दविभूतिसन्निधिसदासामोददामोदरस्वैरालिङ्गनदौर्ललित्यलर्लिलतोन्मेषा मनीषा मम ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु न्यायसिद्धाञ्जने
बुद्धिपरिच्छेदः पञ्चमः ।

---

माहाभाग्येति । भाग्यविशेषकरतलीकृतयतीश्वरविविधप्रबन्धा परमात्मभोगसंवर्धकवेदान्तविषया आनन्दमयविभूतिनित्यसांनिध्यशालिनित्यानन्दभगवद्विग्रहगाढावगाहनौत्सुक्यायत्तनवनवोन्मेषशालिनीमतिः भूयादित्यर्थः। दौर्ललित्यम्=औत्सुक्यम्। अत्र समासोक्त्या स्वाधीनपतिकराजमहिषीवृत्तान्तोऽपि स्फुरति-"विश्वम्भराधिपत्यं यत् तन्माहाभाग्यमुच्यते" इत्यालङ्कारिकोक्तेः माहाभाग्यवशंवदीकृतक्षोणीशेन वाणीशतेन युक्ता दिव्यभोगवर्धकप्रासादाधिरूढा नित्यैश्वर्यसान्निध्यसदासामोदा दृढालिङ्गनोत्सुका चेति। यद्वा श्रुतिशिरसः प्रासादत्वरूपणेन तमासेदुष्या उत्तमस्त्रीत्वरूपणं गम्यते इत्येकदेशविवर्तिरूपकम् ॥

इति श्रीरङ्गरामानुजमुनेः कृतिषु न्यायसिद्धाञ्जनव्याख्यायां बुद्धिपरिच्छेदः पञ्चमः ॥

---

माहाभाग्येति । अतिशयितभाग्येन वशंवदीकृतं यतिक्षोणीशवाणीशतं यस्याः तथोक्ता, भोगसमेधकम् भगवदनुभवानन्दवर्धकम्, श्रुतिशिर एव प्रासादं आसेदुषी, नित्यायां अकालकाल्यायां आनन्दरूपायां विभूतौ सन्निधिर्यस्य तथोक्तः, अथवा नित्यानन्दविभूतेः सन्निधिना संबन्धेन, सदासामोदस्य दामोदरस्य-आश्रितपरतन्त्रस्य स्वैरालिङ्गने=यथाभिमतालिङ्गने यत् दौर्ललित्यम् औत्सुक्यं तत्र ललितोन्मेषा=उत्तरोत्तरमतिशयेन प्रवर्तमाना, अथवा उत्कौत्सुक्येन ललितोन्मेषा नानाविधमनोरथाकारपरिणामशालिनी । नित्यानन्देत्यादिविशेषणयुक्ता मे मनीषा माहाभाग्यवशंवदीकृतयतिक्षोणीशवाणीशता सती भोगसमेधकश्रुतिशिरःप्रासादमासेदुषी भूयादित्यन्वयः । नानाविधभगवदनुभवभोगमनोरथशालिनी तथाविधभोगसंवर्धकानेकपरिजनसहितं प्रासादमासाद्य तादृशभोगमनुभूयादिति नायिकावृत्तान्तपरिस्फूर्तिरप्यत्र बोध्या ।

इति महामहोपाध्याय श्रीकृष्णतातयार्यकृतिषु रत्नपेटिकायां बुद्धिपरिच्छेदः पञ्चमः ।

---

जगदन्तर्गतसर्वपदार्थपरीक्षणमागमादिस्वीकारेण तत्कृतम्, तथा कुतर्कदूरीकरणेनास्माभिरत्र क्रियत इत्यभिमतम्। आत्मानात्मविवेकार्थतया लोकव्यवहारारोपयोगिजगदन्तर्गतपदार्थजातविभागलक्षणपरीक्षणानि यथा वैशेषिके तथा वेदान्तानुसारेणास्मभिरन्यथा पदार्थविभागलक्षणपरीक्षणानि कृतानीत्यर्थः। 1. लीलाविभूतौ मनीषया लम्भनीयः श्रुतिशिरःप्रासादः; तत्र निश्श्रेणिकाभूतं प्रधानोपबृंहणं यतिक्षोणीशवाणीशतम्। तत्फलं नित्यानन्दविभूतिविशिष्टवासुदेवपूर्णानुभवः। तदौत्सुक्यात् पूर्वार्धोक्तार्थे प्रवृत्तिः। यतिराजसप्ततौ अयं श्लोकः किञ्चिदन्यथा। तत्रेहापेक्षितं यत् तस्य सिद्धिरुक्ता। तत्राऽऽसीदतीति क्रियासमाप्तिदर्शनात् अत्र आसेदुषी भूयादित्यन्वयो विवक्षित इति ज्ञायते। तत् द्वितीयव्याख्यानं श्रेयः।

* * * * *

श्रीः

# न्यायसिद्धाञ्जने अद्रव्यपरिच्छेदः ॥ (६) ॥

* * * * *

अथाद्रव्यम् । संयोगरहितमद्रव्यम् । तत्र च त्रिगुणे सदृशविसदृशरूपोऽवस्थासन्तानः। कालेऽपि क्षणलवनिमेषत्वादिपरार्धपर्यन्तः। बुद्धौ प्रत्यक्षत्वानुमितित्वश्रौतत्वादिरूपः। शुद्धसत्त्वेऽपि केचित् त्रिगुणसमा इति अनन्तप्रकारो यथाप्रमाणमनुसन्धेयः। एतदपेक्षया च वरदविष्णुमिश्रैरुक्तम्—"गुणाश्चानन्ताः" इति । तेषाञ्च अनन्तवैषम्यस्य विविच्य निर्देष्टुमशक्यत्वात् शक्यांशस्य च द्रव्यनिरूपणेनैव निरूपितप्रायत्वात्, तथाऽतिरिक्तनिरूपणस्य च लोकव्यवहारादृष्टाद्युपयोगाभावात् [1]अन्यानि स्फुटपरिगणनीयानि अद्रव्याणि निरूप्यन्ते । तानि—सत्त्वरजस्तमांसि, शब्दादयः पञ्च, संयोगः, शक्तिः इति दशैव । एवंविधेष्वेव अद्रव्येषु गुरुत्वद्रवत्वस्नेहसंस्कारसङ्ख्यापरिमाणपृथक्त्वविभागपरत्वापरत्व-कर्म-सामान्य-सादृश्य-विशेष-समवायाभाववैशिष्ट्यादीनां यथासम्भवमन्तर्भावः। एष्वपि केषाञ्चिदनन्तर्भावः सयूथ्यसम्मतस्तत्रतत्र वक्ष्यते । सयूथ्याङ्गीकृतैः कैश्चित्सह

श्रीः । रङ्गरामानुजीयम्

अथाद्रव्यमिति । निरूप्यते इति शेषः । अवस्थाया अपि अद्रव्यत्वाविशेषात् तद्विधाभेदाः कुतोऽस्मिन् न निरूप्यन्ते इत्याशङ्क्य तत्र हेतुमाह तत्रचेत्यादिना । सदृशविसदृशेति । त्रिगुणपरिच्छेदे, 'समविषमविकारसन्तानांश्च कालभागभेदाभ्यामारभते' इति वाक्यार्थनिरूपणे एतद्वाक्यार्थः प्रपञ्चितो द्रष्टव्यः । परार्धपर्यन्त इति । अत्र अवस्थासन्तान इत्यनुषज्यते । एवमुत्तरत्रापि द्रष्टव्यम् । श्रौतत्वादिरूप इति । शाब्दज्ञानत्वादिरूप इत्यर्थः । त्रिगुणसमा इतीति । सततविकारास्पदत्वेन समाः भगवद्विग्रहगोपुरादिव्यतिरिक्ताः केचित् पदार्था इत्यर्थः । अत्र च इतिर्हेतौ । तत्र च शुद्धसत्त्वेऽपि केषाञ्चित् पदार्थानां त्रिगुणसमत्वात् तत्रापि अनन्तप्रकारोऽवस्थाविशेषो यथाप्रमाणमनुसन्धेय इत्यर्थः । एतदपेक्षयेति । एतदभिप्रायेणेत्यर्थः । शक्यांशस्येति । महदहङ्कारतन्मात्राद्यवस्थांशस्येत्यर्थः । अदृष्टाद्युपयोगाभावादित्यनन्तरं तान्यनिरूप्यैवेति शेषः पूरणीयः । समवायेति । अयुतसिद्धयोर्नित्यसम्बन्धः समवायः । घटाभाववत् भूतलमित्यादिप्रतीत्यनुरोधात् भावाभावयोः सम्बन्धस्य वक्तव्यत्वात् संयोगसमवाय

श्रीः । रत्नपेटिका

अद्रव्यनिरूपणं प्रतिजानीते अथेति । द्रव्यनिरूपणानन्तरमित्यर्थः। अद्रव्यमिति । निरूप्यत इति-शेषः । अद्रव्यस्य दशधा विभागं वक्ष्यन् अधिकप्रकारसंभवात् तथा विभागोऽनुपपन्न इति शङ्कां वारयितुमाह तत्रचेति । परार्द्धपर्यन्त इति । अवस्थासन्तान इत्यनुषज्यते । एवं श्रौतत्वादिरूप इत्यत्रापि बोद्धव्यम् । श्रौतत्वम्—शाब्दत्वम् । केचिदिति । नित्यभगवद्विग्रह दिव्यतिरिक्ता इति भावः। त्रिगुणसमा इति । साम्यमिह विविधविकारास्पदत्वेन । त्रिगुणसमा इतीत्यत्र इतिर्हेतौ । नित्यविभूतावपि केषाञ्चित् त्रिगुणसमत्वात् तत्राप्यनन्तप्रकारोऽवस्थासन्तानो यथाप्रमाणमनुसन्धेय इत्यर्थः । एतदपेक्षयेति । एतदभिप्रायेणेत्यर्थः । शक्यांशस्येति । महदहङ्काराद्यवस्थांशस्येत्यर्थः । उपयोगाभावादिति तदुपेक्षयेति

1 अन्यानीत्यनेन परिच्छेदेऽस्मिन्ननिरूपितानां कालत्रिगुणधर्मभूतज्ञानाद्यवस्थारूपाणामद्रव्याणामनन्तानां प्राय एतद्दशकान्यत्वं कण्ठोक्तम् ।

एकत्वादयस्तत्त्वमुक्ताकलापे अद्रव्यभेदा अस्माभिरुक्ताः ॥

तत्र प्रकाशसुखलाघवादिनिदानमतीन्द्रियं शक्त्यतिरिक्तमद्रव्यं सत्त्वम् । तत् द्विधा—शुद्धमशुद्धञ्चेति । रजस्तमश्शून्यद्रव्यवृत्ति सत्त्वं शुद्धसत्त्वम्, तत् नित्यविभूतौ । रजस्तमस्सहवृत्ति सत्त्वमशुद्धसत्त्वम्, तत् त्रिगुणे । सत्त्वलक्षण एव लोभप्रवृत्त्यादिनिदानम्, प्रमादमोहादिनिदानम् इति विशेषणविनिमयेन रजस्तमसोर्लक्षणे । त्रीण्यप्येतानि यावत्प्रकृतिव्याप्तानि अनित्यानि नित्यसन्तानानि । तानि प्रळयदशायामत्यन्तसमानि, सृष्ट्यादौ विषमाणि, क्रमात् सृष्टिस्थितिसंहारोपयुक्तानि । ईश्वरसङ्कल्पादिसहकारिभेदात् परस्पराभिभवोद्भवसहकारित्वादिमन्त्येतानि । [1]तत्तददृष्टोपष्टब्धपुरुषभेदादुद्भवसमत्वादिभावात् । यथोक्तं भगवता पराशरेण, "वस्त्वेकमेव"

योश्चासम्भवात् वैशिष्ट्याख्यसम्बन्धं मीमांसका अभ्युपगच्छन्तीति भावः । तत्त्वमुक्ताकलापे इति—

"कैवल्यं नैकसंख्या परविरहतया नापि मुख्यान्यभावौ
संघातैक्यं तु राशिक्रममवयवि तु प्राङ् निरस्तं ततोऽन्यत् ।
तेनासङ्घातरूपे क्वचन निरुपधिः स्यादसावेकसंख्या
स्वाधारैकायुरेषा परमुपचरिता सेयमद्रव्यवर्गे ॥"

इत्यादौ एकत्वादीनां पृथगभिधानं सयूथ्याङ्गीकृतत्वादिति भावः ॥

प्रकाशसुखलाघवादीति । आद्यं विशेषणं रजस्तमोव्यावृत्त्यर्थम्, द्वितीयं शब्दादिपञ्चकव्यावृत्त्यर्थम्, तृतीयं शक्तिव्यावृत्त्यर्थमिति ध्येयम् । सत्त्वलक्षण एवेति । प्रकाशसुखलाघवादि निदानमिति विशेषणस्थाने लोभप्रवृत्त्यादिनिदानमिति विशेषणप्रक्षेपे रजोलक्षणम्, प्रमादमोहादिनिदानमिति विशेषणप्रक्षेपे च तमोलक्षणं सिध्यतीत्यर्थः । क्रमात्सृष्टीति । क्रमिकेषु सृष्टिस्थितिसंहारेषु उपयुक्तानीत्यर्थः; न तु सत्त्वरजस्तमांसि सृष्टिस्थितिसंहारेषु यथाक्रमं कारणानीत्यर्थ इति मन्तव्यम् । तादृशक्रमाभावात् । एतानि इति च्छेदः । ततश्च एतानीश्वरसङ्कल्पादिसहकारिभेदात् परस्पराभिभवोद्भवसहकारित्वादिमन्ति इति योजना । तत्र हेतुं वक्ति तत्तददृष्टेति । एकस्यैव

शेषः । वैशिष्ट्येति । अभावसंबन्धोऽतिरिक्त इति मीमांसकाः; तदभिप्रायेणेदम् । कैश्चिदिति । स्नेहद्रवत्वादिभिरिति भावः । एकत्वादय इति । आदिना कर्मपरिग्रहः ।

प्रकाशेति । प्रकाशकारणत्व-सुखकारणत्वादिकं प्रत्येकमेव लक्षणषट्कम्; न तु समुदायकारणत्वं कारणत्वसमुदायो वा; प्रयोजनविरहात् । तत्र रजस्तमोवारणाय आद्यं विशेषणम्; शब्दादिवारणाय द्वितीयम्; शक्तिवारणाय तृतीयम्; द्रव्यवारणाय विशेष्यम् । नचैवमिन्द्रियसंयोगादिष्वतिव्याप्तिरिति वाच्यम्; अस्मदादिप्रत्यक्षविषयावृत्तिद्रव्यविभाजकोपाधिमत्त्वस्यातीन्द्रियाद्रव्यपदाभ्यां विवक्षितत्वात् । एतानीति छेदः । सहकारित्वादिमन्तीति पूर्वेणान्वयः । तत्र हेतुमाह तत्तददृष्टेति । अयं भावः—एकस्यैव योषित्पिण्डस्य भर्तारं प्रति सुखहेतुत्वस्य, सपत्नीजनं प्रति दुःखहेतुत्वस्य, कामुकान्तरं प्रति मोहहेतुत्वस्य च दर्शनेन सुखादिहेतुत्वस्य तत्तद्विषयस्वरूपप्रयुक्तत्वासंभवात् तत्तत्सुखादि-

1 अदृष्टवशादिति वक्तव्ये ईश्वरसंकल्पवशादिति कथमुच्यते इति सांख्यो मा शंकिष्ट; अदृष्टपरमात्मसंकल्पयोरभेदादिति भावः ।

इत्यादि, "तदेव प्रीतये भूत्वा" इत्यादि च। भगवद्गीतायां तद्भाष्ये च एतत् विशदमनुसन्धेयम्। सात्त्विकराजसतामसकार्यं-गति-कर्माहार-दानादिविभागोऽपि तत्रैव प्रपञ्चेन द्रष्टव्यः॥

एषाञ्चाद्रव्यत्वं शारीरकभाष्ये व्यक्तम्। "रचनानुपपत्तेश्च" इत्यादिसूत्रे, "चकारादन्वयस्य

---

योषित्पिण्डस्य भर्तारं प्रति सुखहेतुत्वस्य, सपत्नीजनं प्रति दुःखहेतुत्वस्य, कामुकान्तरं प्रति मोहहेतुत्वस्य च दर्शनेन सत्त्वरजस्तमसां उद्भवाभिभवसमत्वदर्शनादिति भावः। वस्त्वेकमेवेत्यादीति। "वस्त्वेकमेव दुःखाय सुखायेर्ष्यागमाय च। कोपाय च यतस्तस्मात् वस्तु वस्त्वात्मकं कुतः॥" इत्यादिकमित्यर्थः; पुरुषभेदेनाव्यवस्थाप्रतिपादकं वचनमुदाहृत्य एकस्मिन्नेव पुरुषे कालभेदेनाव्यवस्थाप्रतिपादकं वचनमुदाहरति तदेवेति। "तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते। तदेव कोपाय यतः प्रसादाय च जायते॥ तस्माद्दुःखात्मकं नास्ति न च किञ्चित् सुखात्मकम्।" इत्यादिकमित्यर्थः। भगवद्गीतायां तद्भाष्ये चेति। "सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत!। ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत॥ रजस्तमश्चाभिभूय सत्त्वं भवति भारत। रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा॥" इत्यादिगीतायाम्, "प्राचीनकर्मवशात् देहाप्यायनभूताहारवैषम्याच्च सत्त्वादयः परस्परमुद्भवाभिभवरूपेण वर्तन्ते। रजस्तमसी कदाचिदभिभूय सत्त्वमुद्रिक्तं वर्तते। तथा तमस्सत्त्वे अभिभूय रजः कदाचित्। कदाचिच्च रजस्सत्त्वे अभिभूय तमः" इत्यादितद्भाष्ये चेत्यर्थः। तत्रैव प्रपञ्चेनेति। "सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते। ज्ञानं यदा तदा विद्यात् विवृद्धं सत्त्वमित्युत॥ लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा। रजस्येतानि जायन्ते विवृद्धे भरतर्षभ!॥ अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च। तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन!॥", "ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः। जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः॥", "यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः। प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः॥", "आयुस्सत्त्वबलारोग्यसुखप्रीतिविवर्धनाः। रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः॥ कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः। आहारा राजसस्येष्टा दुःखशोकामयप्रदाः॥ यातयामं गतरसं पूतिपर्युषितञ्च यत्। उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम्॥", "दातव्यमिति यद्दानं दीयतेऽनुपकारिणे। देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम्॥ यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः। दीयते च परिक्लिष्टं तद्राजसमुदाहृतम्॥ अदेशकाले यद्दानमपात्रेभ्यश्च दीयते। असत्कृतमवज्ञातं तत् तामसमुदाहृतम्॥" इत्यादिनेत्यर्थः। "रचनानुपपत्तेश्च" इत्यादिसूत्रार्थं ईश्वरपरिच्छेदे वर्णितः। चकारादिति। सौत्रचकारादित्यर्थः। अन्वयस्येति।

---

हेतुभूतादृष्टविशेषविशिष्टपुरुषीयसत्त्वाद्युद्भवनिबन्धनत्वमेवाश्रयणीयम्। सत्त्वादेश्च पुरुषसंबन्धस्तदीयशरीरादिसंबन्ध एव। सत्त्वादिष्टद्भवश्च तत्तत्कार्योपधायकशक्तिविशेष एव। अद्रव्येषु शक्त्यनभ्युपगमे तत्तद्द्रव्यनिष्ठतादृशशक्तिसामानाधिकरण्यम्, तत्तत्कार्योपधायकत्वप्रकारकभगवदिच्छाविषयत्वमेव वा उद्भवपदार्थः। अनुद्भवश्च उद्भूतगुणान्तरसामानाधिकरण्यम्। साम्यञ्च उद्भवरहितत्वे सति उद्भूतगुणान्तरसामानाधिकरण्याभाव इति। प्रपञ्चेनेति। "सर्वद्वारेषु" इत्यादिनेत्यर्थः। चकारादिति।

अनैकान्त्यं समुच्चिनोति" इत्युपक्रम्य, "यतः सत्त्वादयो द्रव्यधर्माः, न तु द्रव्यस्वरूपम्। सत्त्वादयो हि पृथिव्यादिगतलघुत्वप्रकाशादिहेतुभूतास्तत्स्वभावविशेषा एव। न तु मृद्धिरण्यादिवत् द्रव्यतया कार्यान्विता उपलभ्यन्ते। गुणा इत्येव च सत्त्वादीनां प्रसिद्धिः" इति। तथा दीपे च— "चकारात् सत्त्वादीनां द्रव्यगुणत्वेन शौक्ल्यादेरिव उपादानकारणत्वासम्भवं समुच्चिनोति। सत्त्वादयो हि कार्यगतलाघवादिहेतवः कारणभूतपृथिव्यादिगतास्तत्स्वभावविशेषाः" इति।

यत्तु, "द्रव्यं षड्विंशतिविधम्......सत्त्वरजस्तमांसि" इत्यादिना सत्त्वरजस्तमसां द्रव्यत्वमुक्तं वरदविष्णुमिश्रैः, तत् सांख्याधिकरणसूत्रभाष्यादिविरोधाच्चासङ्गतम्॥

शब्दोऽस्मदादिश्रोत्रग्राह्यः पञ्चभूतवर्ती। स द्विधा वर्णात्मकोऽवर्णात्मकश्चेति।

अकचटतपयादिप्रकाराभावसमुदायशून्यो वर्णात्मकः। स एव देवमनुष्यादिताल्वादिव्यङ्ग्यः[1]। तस्यैव पूर्वोक्तवाचकत्वादिविचारः। स च क्षकारेण सह एकपञ्चाशत्प्रकारः। मातृकापाठे ळळयोरभेदात् क्वचित् पञ्चाशत्प्रकारतैवोच्यते। यरलादेरेव भेदभिन्नः कयक्षादिः। सन्ध्यक्षराणां ह्रस्वाः सन्तीत्येव प्रयुज्यन्ते प्राकृतादिभाषासु, निबध्नन्ति च मातृकायां द्रमिडादयः। संस्कृते

---

सुखदुःखमोहात्मसत्त्वरजस्तमःसङ्घातात्मकमव्यक्तं जगत्कारणम् कार्यभूते जगति सुखदुःखमोहदर्शनेन कार्यान्वितत्वादिति कार्यान्वयरूपहेतोरित्यर्थः। **अनैकान्त्यमिति**। कार्यान्वयरूपहेतुमति अथ च अकारणभूते शौक्ल्यादौ अनैकान्त्यमित्यर्थः। "न ह्यन्वितं शौक्ल्यगोत्वादि कारणत्वव्याप्तम्" इति हि अनैकान्तिकत्वोपपादकमुत्तरभाष्यम्। कारणत्वव्याप्तमिति भाष्यस्य कारणत्वाधिकरणमित्यर्थः। **सांख्याधिकरणेति**। समनन्तरोदाहृतभाष्यविरोधादित्यर्थः॥

शब्दस्य केचिदाकाशमात्रवर्तित्वमाहुः, तन्मतं प्रतिक्षिपति—**पञ्चभूतवर्तीति**। शङ्खो नदति, भेरी ध्वनति, समुद्रो गर्जति इत्यादिलोकप्रतीतेरिति भावः। **अकचटतपयादिप्रकारेति**। वर्णेषु अत्वकत्वादिप्रकारान्यतमवत्त्वसत्त्वेन अत्वकत्वादिप्रकाराभावसमुदायशून्यत्वमस्तीति भावः। पश्वादिताल्वव्यङ्ग्यत्वाभावात् देवमनुष्यादीत्युक्तम्। **पूर्वोक्तवाचकत्वादिविचार इति**। पूर्वकाल— कृतग्रन्थेषु कृतो वाचकत्वस्फोटाभिव्यङ्ग्यत्वप्रमाणत्वनित्यत्वानित्यत्वादिविचारः कृत्स्नोऽपि तद्विषय इत्यर्थः। यद्वा त्रिगुणपरिच्छेदे शरीरवाचिशब्दानां शरीरिपर्यन्तत्वप्रदर्शनाभिप्रायेण वैव(णैवैव?)मुक्तमिति द्रष्टव्यम्। **मातृकापाठ इति**। धूळ्यक्षरशिक्षाप्रवृत्तानां मातृकाक्षरपाठ इत्यर्थः। ननु कथं पञ्चाशत्प्रकारता; मातृकायां कयक्षादीनामपि पाठादित्याशङ्क्याह—**यरलादेरेव भेदभिन्नः कयक्षादिरिति**। भेदभिन्नः=संयोगवशेन भेदभिन्न इत्यर्थः। **सन्ध्यक्षराणामिति**। ए ओ ऐ औ इत्येतानि

---

"रचनानुपपत्तेश्च" इति सूत्रस्थचकारादित्यर्थः। **अनैकान्त्यमिति**। कारणत्वशून्ये शौक्ल्यगोत्वादौ कार्यान्वयरूपहेतुसत्त्वादिति भावः।

**पञ्चभूतवर्तीति**। न त्वाकाशमात्रवर्ती; भेर्याः शब्द इत्यादिप्रतीतेरागमाच्चेति भावः। **अकचटतेति**: कत्वाद्यभावकूटशून्यत्वं वर्णलक्षणमित्यर्थः। **पूर्वोक्तवाचकत्वादिविचार इति**। जडद्रव्यपरिच्छेद उक्तः शरीरवाचिशब्दानां शरीरिपर्यन्तवाचकत्वादिविचार इत्यर्थः। **मातृकापाठ इति**। अक्षरशिक्षा-

---

1. शब्दस्य भूतोत्पत्तिकाल एवोत्पत्तेर्वक्ष्यते। ततस्ताल्वादीनां व्यञ्जकत्वमेव, न तु जनकत्वम्।

वाचकत्वाभावात् मातृकाबहिष्कारः । एवमेषामेव यथाकथंञ्चित् त्रिषष्टिवर्णता मोक्षधर्मादौ गीयते । परमव्योम्नि च सहस्राक्षरत्वाम्नानं तु तत्रैव वर्णान्तरसद्भावेन वा, तेषामेव वर्णानां सन्दर्भसंयोगादिविशेषेण सहस्राक्षरत्वायुताक्षरत्वादिभेदेनोपपत्तेर्वा ।

अकचटतपयादिसमस्तप्रकाराभावसमुदायवान् अवर्णात्मकः। स च वादित्रवारिधरमारुतविभागा-

---

सन्ध्यक्षराणि । प्राकृते—"आयान्ति श्वेतानिलाः" इत्यस्मिन्नर्थे, आअन्ति खेताणिळा", "तथा स्नुषया प्रलोकितः" इत्यर्थे, "तह सोण्णाए पलोइओ" इत्यादौ ह्रस्वतया पाठादिति भावः । मातृकाबहिष्कार इति । द्रमिडमातृकायामिव संस्कृतमातृकायां न पठन्तीत्यर्थः । सहस्राक्षरत्वाम्नानमिति । "सहस्राक्षरा परमे व्योमन्" इत्याम्नानादि(नमि?)त्यर्थः । अत्र परमव्योमशब्देन नित्यविभूतिर्विवक्षितेति केचित् । केचित्तु—

"आधारं तु चतुर्दळारुणलसद्वासान्तवर्णात्मकं स्वाधिष्ठानमनेकवैद्युतनिभं बाकान्तषट्पत्रकम् ।
रत्नाभं मणिपूरकं दशदळं डाद्यं फकारान्तकं पत्रैर्द्वादशभिस्त्वनाहतमिदं हैमं कटान्तावृतम् ॥
मालाभिर्दशषोडशस्वरयुतं ज्योतिर्विशुद्धाम्बुजं हक्षेत्यक्षरबीजयुग्मदळयुक्स्फाभ माज्ञाम्बुजम् ।
तस्मादूर्ध्वगतं प्रभासितमिदं पद्मं सहस्रच्छदं नित्यानन्दपदं सदा हरिपदं नित्यं नमस्येतराम् ॥"

इति मातृकाध्यानश्लोके आधार-स्वाधिष्ठान-मणिपूरक-अनाहत-विशुद्धाम्बुज-आज्ञाम्बुजशब्दप्रतिपादित-गुद-लिङ्ग-नाभि-हृदय-तालु-भ्रूमध्यसहपठितस्य द्वादशान्तस्यैव सहस्राक्षरत्वाम्नानात् तत्परमेवेदं वचनमिति वदन्ति । अत्राधारशब्दोक्ते गुदे व श ष साश्चत्वारो वर्णाः । स्वाधिष्ठानशब्दिते लिङ्गे ब भ म य र लाः षड्वर्णाः । मणिपूरकाख्यनाभौ ड ढ ण त थ द ध न प फा [इति] दश वर्णाः । अनाहतसंज्ञितहृदये क ख ग घ ङ च छ ज झ ञ ट ठ इति द्वादश वर्णाः । विशुद्धाम्बुजशब्दिते तालुनि अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ अं अः इति षोडश वर्णाः । आज्ञाम्बुजशब्दिते भ्रूमध्ये ह क्ष इत्यक्षरयुग्मम् । एवंप्रकारेण उक्तस्थानेषु पञ्चाशन्मातृकाः । तत ऊर्ध्वस्थिते द्वादशान्ते परमव्योमशब्दिते सहस्राक्षरत्वमिति श्लोकार्थः । ततश्च द्वादशान्तस्यैव परमव्योमशब्देन ग्रहणमिति वर्णयन्ति । सन्दर्भेति । मृदुपरुषाक्षरसमभिव्याहारविशेषः सौकुमार्योद्धतत्वादिलक्षणः सन्दर्भः । संयोगादिविशेषेणेति । एकस्यैव ककारस्य यरलवादिसंयोगभेदेन, तत्रापि पौर्वापर्यभेदेन अनेकविधत्वसम्भवादिति भावः । भेदेनोपपत्तेर्वेति । भेदसम्भवेन उपपत्तेर्वेत्यर्थः । ततश्च, "शताक्षरा सहस्राक्षराऽर्बुदाक्षरा तां रक्षत्व" इति श्रुतिरपि व्याख्याता । विभागेति । वंशपाटनादिशब्दो दलद्वय विभाग-

---

प्रवृत्तानां मातृकाक्षरपाठ इत्यर्थः । ए ऐ ओ औ एतानि सन्ध्यक्षराणि । प्राकृतादिभाषासु एकार-ओकारयोर्ह्रस्वत्वमपि दृश्यत इत्याह प्रयुज्यन्त इति । एकैकस्येत्यर्थे एक्कक्स्सेति, मोक्षणमित्यर्थे-मोक्खणमिति च ह्रस्वतया प्रयोगादिति भावः। सहस्राक्षरत्वाम्नानमिति । "सहस्राक्षरा परमे व्योमन्" इत्याम्नानमित्यर्थः । सन्दर्भेति । मृदुपरुषसमभिव्याहारविशेषः सौकुमार्योद्धृतत्वादिलक्षणः सन्दर्भः, संयोगः क्यक्रादिरूपः । आदिना उदात्तत्वादेर्मन्द्रत्वादेश्च संग्रहः । विभागेति । वंशपाटनदशायां

दिव्यङ्ग्यः । द्विविधोऽपि श्रोत्रदेशसन्निहित एव मारुतव्यङ्ग्य इति पक्षे नभोनिष्ठस्यैव तस्य ग्राह्यत्वम् । वादित्रादिस्थित एव गृह्यत इति पक्षे पञ्चभूतवर्तिनोऽपि ग्राह्यत्वमुपपद्यते ।

तत्र दूरस्थशब्दग्रहणे श्रोत्रव्यापृतिरेव वरदनारायणभट्टारकैरुक्ता—"दूरे शब्दः समीपे च प्राच्याञ्चेत्यादिदर्शनात् । गत्वा श्रोत्रेन्द्रियं तत्र तत्र शब्दग्रहक्षमम् ॥ आगता दूरतः शब्दमाला श्रोत्रेण गृह्यते । समवायाद्यदि तदैवं न (तदा नैवं ?) गृह्येत दूरजा ॥ शब्दमान्द्यादिभिर्दूरोत्थत्वादिग्रहसम्भवे । [1]अपि प्राच्यां प्रतीच्याञ्चेत्येवं न ग्रहसम्भवः ॥" इति ।

स चायं शब्द आकाशेन सहोत्पद्यते, तद्विलये च विलीयते । वाय्वादीनामपि आकाशभागत्वात् न भूतान्तरोत्पत्तिविनाशयोरस्योत्पत्तिविनाशौ । यद्वा आकाशनिष्ठस्याकाशेन सहो-

---

जन्य इति भावः । **मारुतव्यङ्ग्य इति ।** अत्र श्रोत्रेण गृह्यते इति शेषः पूरणीयः । **मारुतग्रहणञ्च** ताल्वोष्ठपुटव्यापारादीनामप्युपलक्षणम् । **नभोनिष्ठस्यैवेति ।** भेर्यास्तदवयवानां वा तत्रागमनकल्पनस्य क्लिष्टत्वात् आकाशसमवेत एव शब्दो गृह्यते इत्यभ्युपेयमित्यर्थः । **पञ्चभूतवर्तिनोऽपीति ।** क्षितिपटहपयोनिधिगतस्यापीत्यर्थः । **श्रोत्रव्यापृतिरिति ।** श्रोत्रस्य गमनमित्यर्थः । **शब्दग्रहक्षममिति ।** शब्दग्राहकमित्यर्थः । **एवं न गृह्येतेति ।** दूरे शब्दः, समीपे शब्दः, प्राच्यां शब्दः इत्येवं न गृह्येत, श्रोत्रदेशस्थितस्यैव शब्दस्य ग्रहणादित्यर्थः । **शब्दमान्द्यादिभिरिति ।** अयं शब्दो दूरप्रभवशब्दसन्ततिप्रभवो मन्दशब्दत्वादिति प्रायशो दूरप्रभवजातीयत्वग्रहणसंभवेऽपि **प्राच्यां शब्दः,** प्रतीच्यां शब्द इति प्राचीनत्वादिग्रहो न संभवतीत्यर्थः । न च प्राचीनशब्दसंततिप्रभवत्वानुमापकजातिविशेषग्रहणात् प्राचीनत्वमपि सुग्रहमिति वाच्यम् ; तथा सति अयं शब्दः प्राचीनशब्दसन्तानप्रसूत इत्येव प्रतीतिः स्यात् ; नत्वसौ प्राचीन इति प्रतीतिरिति भावः ॥ ननु भूतान्तरैः सहोत्पादविनाशौ कुतो न स्यातामित्याशङ्क्याह **वाय्वादीनामपीति ।** **आकाशभागत्वादिति ।** **आकाशकार्यत्वादिति** भावः । तथा च **आकाशसमसमयोत्पत्तिकस्य** शब्दस्य आकाशकार्यकोट्यनुप्रविष्टभूतचतुष्टयसमसमयोत्पत्तिकत्वायोगादिति भावः । स्वाभिमतं पञ्चभूतवर्तित्वपक्षमवलम्ब्याह—**यद्वेति ।** ननु **आकल्प-**

---

दलद्वयादिविभागेत्यर्थः **मारुतव्यङ्ग्य इति ।** मारुतजन्यसाक्षात्कारविषय इत्यर्थः । **श्रोत्रव्यापृतिरिति ।** श्रोत्रस्य गमनमित्यर्थः । **एवञ्च गृह्येतेति ।** दूरे शब्दः प्राच्यां शब्द इत्यादिरूपेण न गृह्येतेत्यर्थः, श्रोत्रदेशवर्तिन एव शब्दस्य ग्रहणादिति भावः । **शब्दमान्द्यादिभिरित्यादि ।** मन्दशब्दत्वादिहेतुना दूरोत्थशब्दकार्यत्वानुमानसंभवेऽपि प्राच्यत्वाद्यनुमापकलिङ्गादर्शनेन तदनुमानं न संभवतीत्यर्थः । ननु शब्दमात्रस्यैवाविशेषादाकाशेन सहोत्पत्तिविनाशाभिधानमयुक्तम् ; वाय्वादिगतशब्दानां तैरेव सहोत्पत्तिविनाशयोर्वाच्यत्वादित्यत आह **वाय्वादीनामिति ।** **आकाशभागत्वादिति ।** आकाशैकदेशत्वादित्यर्थः । आकाशैकदेश एव हि आकाशत्वावस्थानाशपूर्वकवायुत्वावस्थापात्तिः । तत्राकाशत्वावस्थानाशेऽपि न शब्दनाशः स्वीक्रियते—वायावपि शब्दसद्भावाभ्युपगमेन पूर्वशब्दविनाशपूर्वक-

1 अपिशब्दोऽयं पूर्वार्धेऽन्वेति, संभवेऽपीति ।

त्पत्तिविनाशौ वाय्वादिनिष्ठस्यापि तत्तद्भूतैस्सहेति। अत्यन्ततीव्रतायापन्नेषु शब्देषु [1]विरुद्धधर्मविरुद्धप्रत्यभिज्ञानात् स्थिरत्वम्। "वेणुरन्ध्रविभेदेन भेदः षड्जादिसंज्ञितः। अभेदव्यापिनो वायोस्तथाऽसौ परमात्मनः॥" इत्यादिभिः षड्जादीनां तीव्रत्वादिभेदानां व्यञ्जकवायुधर्मत्वं श्रूयते। अत एव आकल्पवर्तिनां सर्वगकाराणामैकत्वम्, एवमन्येषामपि। यत्तु श्रीविष्णुचित्तैरुक्तम्— "श्रोत्रमपि इतरेन्द्रिय[विषय]वत् शब्दत्वगततीव्रमृदुत्वपरुषत्वमन्दत्वमध्यमत्वाद्यनन्तविशेषात्मकवस्तुग्राहकम्" इति, तदपि निर्विशेषवस्तुग्रहणनिराकरणाभिप्रायम्। उपनिषद्व्याख्याने "त्वमेव

---

स्थायिना आकाशेन सह वर्णानामुत्पादविलयावित्ययुक्तम्, इदानीमुत्पन्नो गकारः, इदानीं नष्टो गकारः इत्युत्पादविनाशप्रतीतेः। न च स एवायं गकार इत्यभेदप्रत्यभिज्ञाबलादुत्पादविनाशप्रतीतेरभिव्यञ्जकविषयत्वमिति वाच्यम्; पूर्वोत्तरगकारयोस्तारत्वमन्दत्वरूपविरुद्धधर्माध्यस्तत्वेन प्रत्यभिज्ञाया जात्यभेदविषयत्वस्यैव वक्तुमुचितत्वादित्याशङ्क्याह अत्यन्ततीव्रतायापन्नेष्विति। विरुद्धधर्मविरुद्धेति। विरुद्धधर्माश्रयत्वव्युदासकेत्यर्थः। ननु तारत्वादीनां विरुद्धधर्माणां का गतिरित्याशङ्क्याह वेणुरन्ध्रेति। यथा वेणोरनेकरन्ध्रवर्तिनां वायवंशानां वायुत्वेन एकाकाराणां रन्ध्रभेदनिष्क्रमणकृतः षड्जादिसंज्ञाभेदः, एवमात्मनां ज्ञानैकाकाराणां देवादिदेहप्रवेशकृतो देवादिव्यवहारः— न तु तादृरूप्यकृतः। अभेदव्यापिनः=अभेदेन वायुत्वाकारेण व्यापिनः। अत्र परमात्मशब्देनात्मैवोच्यते, "परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः", "य एवं वेत्ति पुरुषं प्रकृतिञ्च गुणैः सह। तैरेव विगतः शुद्धः परमात्मा निगद्यते" इत्यादिदर्शनादिति। वायुधर्मत्वं श्रूयते इति। ततश्च तीव्रत्वमन्दत्वादीनां गकारधर्मत्वाभावात् न गकारादिभेदकत्वमिति भावः। तीव्रत्वमन्दत्वादीनां शब्दधर्मत्वप्रतिपादकश्रीविष्णुचित्तग्रन्थविरोधं परिहरति यत्तु श्रीविष्णुचित्तैरिति। इतरेन्द्रियविषयवदिति। सप्तम्यर्थे वतिः। यथा इतरेन्द्रियविषये रूपादौ इतराणीन्द्रियाणि शुक्लत्वादीन् अनन्तान् धर्मान् गृह्णन्ति, तद्वत् श्रोत्रमपि तीव्रत्वमन्दत्वाद्यनन्तविशेषविशिष्टं स्वयं गृह्णातीत्यर्थः। इतरेन्द्रियवत् इति पाठस्तु सुगम एव। निर्विशेषेति। न तु मृदुत्वपरुषत्वमन्द-

---

शब्दान्तरोत्पत्त्यभ्युपगमे गौरवात्। अतः क्वचित् प्रदेशेऽवस्थान्तरप्राप्त्यर्थमाकाशत्वाद्यवस्थानाशेऽपि शब्दस्तत्रैवावतिष्ठत इत्यभ्युपगमाच्छब्दस्याकाशेनैव सहोत्पत्तिविनाशावित्येतदुपपद्यत एवेति भावः। नन्वाश्रयनाशे गुणस्थित्यसंभवात् कथमाकाशत्वावस्थानाशे शब्दस्थितिसंभवः; आकाशत्वावस्थानाशस्यैवाकाशनाशरूपत्वात्। आश्रयनाशे सत्यपि गुणस्थित्यभ्युपगमे हि सत्त्वरजस्तमसां नित्यत्वप्रसङ्गः; त्रिगुणद्रव्येषु सर्वत्र तत्सत्त्वेन पूर्वद्रव्यगतगुणनाशगुणान्तरोत्पत्त्योस्स्वीकारे भवदुक्तरीत्या गौरवात्। अत आकाशत्वावस्थानाशे शब्दनाशावश्यम्भावात् वाय्वादिगतशब्दानां वाय्वादिभिः सहैवोत्पत्तिनाशौ स्वीकरणीयावित्यत्रस्तथैवाह यद्वेति। इतरेन्द्रियविषयवदिति सप्तम्यन्ताद्वतिः। यथा इतरेन्द्रियविषये रूपादौ तानीन्द्रियाणि शुक्लत्वादीन् अनन्तान् धर्मान् गृह्णन्ति, तद्वत् श्रोत्रमपि तीव्रत्वमन्दत्वानन्त-

---

1 विरुद्धेति। सकृत् पुरुषोक्तं किञ्चिद्रूपवाक्यमेव तीव्रमन्दध्वनिकरयन्त्रसांनिध्यावसरभेदेन भिन्नरूपं गृह्यते, एकत्वप्रत्यभिज्ञाऽप्यस्तीति। 2 संज्ञितः=संजातसंज्ञः।

प्रत्यक्षं ब्रह्मासि" इत्यत्र [1]वायोर्व्यञ्जकत्वस्यैवाभिधानात् ॥

"नमस्ते वायो त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि" इति श्रुतिवशात्, "वेणुरन्ध्र" इत्युपबृंहणवशात्, कल्पनालाघवाच्च व्यञ्जकत्वेन परैरभिमतो वायुविशेष एव तत्तद्द्रव्यविशेषघट्टनसंस्कारवशोत्पन्नतत्तच्छब्दगुणविशिष्ट उपलभ्यत इति[च?] भावयन्ति ॥

त्वादीनां तद्धर्मत्वाभिप्रायमित्यर्थः व्यञ्जकत्वास्यैवाभिधानादिति। "नमस्ते वायो त्वमेव प्रत्यक्षं ब्रह्मासि" इति वायोः प्रत्यक्षब्रह्मशब्दितवेदाभेदोपचारेण तद्व्यञ्जकत्वस्यैवाभिधानादिति भावः । एवकारेण उत्पादकत्वं व्यवच्छिद्यते । ततश्च नित्यत्वस्यैव सूचिततया तारत्वादिधर्माणामतद्धर्मत्वाविष्करणादिति भावः ॥ एवं वर्णनित्यत्वमुपपाद्य, नाभिदेशान्निर्गतो वायुस्ताल्वादिविशेषस्थानसंघट्टनात् तत्तच्छब्दरूपेण परिणमते, अतः शब्दोऽपि वायुपरिणामभूतद्रव्यान्तर(?)मिति पक्षमाह नमस्ते वायो इत्यादिना । उपबृंहणवशादिति । षड्जादिसंज्ञितशब्दधर्मस्य वायुनिष्ठतयैव प्रतीतेरिति भावः । कल्पनालाघवाच्चेति । व्यञ्जकातिरिक्तोत्पादककल्पने गौरवादित्यर्थः । द्रव्यविशेषघट्टनसंस्कारेति । ताल्वादिस्थानविशेषघट्टनञ्च संस्कारश्चेत्यर्थः । संस्कारश्च पूर्वपूर्वोच्चारणजन्यो वासनाविशेषाभ्यासो विवक्षितः । शब्दगुणविशिष्ट इति । शब्दत्वरूपपरिणतिविशिष्ट इत्यर्थः । यद्वा शब्दगुणः तारत्वादिः ; तद्विशिष्टः। शब्दरूपः परिणमत इति फलितोऽर्थः । केचित्तु ताल्वादिव्यापारात् वायावेव शब्दरूपगुण उत्पद्यते इति पक्ष एवायमित्यपि वदन्ति ॥

विशेषविशिष्टं शब्दं गृह्णातीत्यर्थः । निर्विशेषेति । न तु मृदुत्वपरुषत्वमन्दत्वादीनां शब्दधर्मत्वाभिप्रायमित्यर्थः ; अन्यदीयधर्मारोपेण ग्रहणेऽपि निर्विशेषग्रहणनिराकरणसंभवादिति भावः । व्यञ्जकत्वस्यैवाभिधानादिति । "नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि" इति वायोः प्रत्यक्षब्रह्मशब्दितवेदाभेदोपचारेण तद्व्यञ्जकत्वस्यैवाभिधानादिति भावः । एवकारेणोत्पादकत्वाभिधानव्यवच्छेदः । तीव्रत्वादीनां शब्दधर्मत्वाभिप्राये वायोस्तादृशशब्दोत्पादकत्वमेव हि वक्तव्यमिति भावः । वायुपरिणामविशेषरूपद्रव्यात्मक एव शब्द इति वदतां मतमाह नमस्त इत्यादिना । वेणुरन्ध्रेति । "वेणुरन्ध्रविभेदेन भेदष्षड्जादिसंज्ञितः । अभेदव्यापिनो वायोस्तथाऽसौ परमात्मनः" इत्युपबृंहणेन वायोरेव षड्जादिरूपत्वोक्त्या शब्दात्मकत्वमेव हि प्रतीयत इति भावः । कल्पनालाघवाच्चेति । वाय्वतिरिक्तशब्दरूपधर्मिकल्पनापेक्षया वायावेव शब्दत्वरूपधर्मकल्पने लाघवाच्चेत्यर्थः । द्रव्यविशेषघट्टनसंस्कारेति । ताल्वादिस्थानविशेषाभिघातसंयोगवशात् संस्कारवशाच्चेत्यर्थः । संस्कारश्च पूर्वपूर्वोच्चारणजन्यवासनाविशेषः । घट्टनरूपो यः संस्कारः तद्वशेनेति वा तदर्थः । इह संस्कारशब्देन विलक्षणधर्मसंपादकव्यापारो विवक्षितः । शब्दगुणविशिष्ट इति । शब्दत्वरूपपरिणतिविशेषविशिष्ट इत्यर्थः । शब्दगुणशब्दोऽत्र शब्दनिष्ठशब्दत्वगतत्वतारत्वादिधर्मपरः । अथवा ताल्वादिक्रियापारात् वायावेव शब्दरूपगुण उत्पद्यते । ततश्च वायोरेव शब्दाश्रयत्वम् ; न त्वाकाशस्य, न वा भूतान्तराणामिति मताभिप्रायमेवेदम् ।

1 अनेनोपनिषद्व्याख्यानमपि श्रीविष्णुचित्तकृतमिति ज्ञायते ।

**संग्रहस्तु—अव्यक्तपरिणामविशेषशरीरकपरमात्मोपादानकाः सर्वे शब्दाः। न पुनः पृथग्द्रव्यतया गुणतया वा [1]भट्टप्राभाकरमतवत् नित्याः; न चानुपादानकाः।**

**वर्णानां स्फोटाद्युपादानकत्वञ्च आगमाध्यक्षविरुद्धम्। स्फोटे च नास्मदाद्यध्यक्षं प्रमाणम्।**

---

ननु ईदृशानां पक्षाणां परस्परविरुद्धत्वात् न कोऽपि पक्षः प्रतितिष्ठतीत्याशङ्क्याह **संग्रहस्त्विति**। **परिणामविशेषे**ति। स **परिणामविशेषो** वायुर्वा, आकाशो वेत्यत्र नाऽऽग्रह इति भावः। **पृथग्द्रव्यतये**ति। स्वतन्त्रद्र**व्यतये**त्यर्थः "अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्। विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥" इति शाब्दिकाः जगन्निदानं स्फोटात्मानं जगद्विवर्ताधिष्ठानं निरवयवं शब्दमामनन्ति। अतो वर्णानां **स्फोट एव उपादानम्**; अकारादिषु वर्णेषु कण्ठ्यत्वताल्व्यत्वादिप्रसिद्धेः कण्ठादय एवोपादानमिति च ये मन्यन्ते, तन्मतं प्रतिक्षिपति **वर्णानां स्फोटाद्युपादानकत्वञ्चे**ति। **आगमाध्यक्षविरुद्ध**मिति। **"नमस्ते वायो त्वमेव प्रत्यक्षं ब्रह्मासि"** इत्यादिवाय्वाद्युपादानत्वप्रतिपाद**कागम**विषयकप्रत्यक्ष**विरुद्ध**मित्यर्थः। प्रत्यक्षश्रुतिविरुद्धमिति यावत् यद्वा **आगमाश्चाध्यक्षञ्च आगमाध्यक्षे** तदुभयविरुद्धम्। योग्यानुपलब्ध्या स्फोटाभावनिश्चयात् प्रत्यक्षविरुद्धमित्यर्थः। न केवलं विरोधमात्रम्; साधकञ्च नास्तीत्याह **स्फोटे चे**ति। वक्ष्यमाणरीत्या गौरित्येकं पदमिति प्रत्यक्षस्य एकोपाध्यवच्छिन्नवर्णसमुदायविषयतयाऽप्युपपत्तेरिति

---

**सङ्ग्रह इति**। आकाशस्यैव शब्दाश्रयत्वम्, अथवा पञ्चानामपि भूतानाम्, यद्वा वायुपरिणामात्मकद्रव्यरूप एव शब्दः, यद्वा वायुमात्रस्यैव शब्दाश्रयत्वमिति प्रागुपदर्शितानेकमतपर्यालोचनसिद्धार्थसङ्ग्रह इत्यर्थः। **अव्यक्तपरिणामविशेषे**ति। स च परिणामविशेषो वायुर्वा आकाशो वेत्यत्र नाऽऽग्रह इति भावः। **परमात्मोपादानकास्सर्वे शब्दा इति**। उक्तेषु सर्वेष्वपि पक्षेषु सर्वेषां शब्दानां परमात्मोपादानकत्वरूपप्रधानार्थविरोधविरहादन्यतमपक्षनिर्धारणं नात्यन्तमावश्यकमिति भावः। **न पुनरि**ति। नित्यत्वस्योक्तप्रधानार्थविरोधित्वादिति भावः। **पृथग्द्रव्यतये**ति। स्वतन्त्रद्रव्यतयेत्यर्थः। ईश्वरापृथक्सिद्धविशेषणतारहितद्रव्यतयेति यावत्। **न चानुपादानका इति**। उत्पत्तिमत्त्वेऽपि नैयायिकाभिमतप्रध्वंसवत् नानुपादानका इत्यर्थः।

"अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्। विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥" इति जगन्निदानं स्फोटात्मानं जगद्विवर्ताधिष्ठानं निरवयवं शब्दं शाब्दिका वदन्ति। अतो वर्णानां स्फोट एवोपादानमित्येतन्निरस्यति **वर्णानामि**ति। **स्फोटादी**ति **आदिना** सूक्ष्मावस्थशब्दपरिग्रहः। स्थूलावस्थशब्दं प्रति सूक्ष्मावस्थशब्द एवोपादानमिति हि केचिद्वदन्ति। **आगमाध्यक्षविरुद्ध**मिति। आगमविरुद्धं प्रत्यक्षविरुद्धञ्चेत्यर्थः। "नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि" इत्यादिभिर्वाय्वाद्युपादानकत्वावगमात् योग्यानुपलब्धिसहकृतप्रत्यक्षेण स्फोटाभावप्रतीतेश्चेति भावः। शब्दत्वे हि श्रावणप्रत्यक्षयोग्यताया आवश्यकतया योग्यानुपलब्धिसंभवः। साधकाभावादपि न तत्सिद्धिरित्याह **स्फोटे चे**ति। **नास्मदाद्यध्यक्ष**मिति। गौरित्येकं पदमिति प्रत्यक्षस्य एकोपाध्यवच्छिन्नवर्णसमुदाय

---

1 कुमारिलभट्टमते शब्दस्य द्रव्यत्वम्; प्रभाकरमते आकाशगुणत्वम्। आदिरत्नार्थो विमृश्यः।

योगिप्रत्यक्षं तु सन्दिग्धम्। न चाऽऽगमः। कल्पकास्तु अन्यथासिद्धाः। प्रत्येकसमुदायादि[1]विकल्पाः वाचकत्व इव स्फोटाभिव्यक्तावपि समाः। कल्पनं तु भवतामधिकम्। एतेन वाक्यस्फोटोऽपि स्फुटितः। शब्दादर्थं प्रतीम इत्यपि न निरंशैकत्वविषयकमेकवचनम्; विपरीतोपलम्भात्। ब्रह्मण

भावः। नचागम इति। न च, "स्फोटस्त्वं वर्णजुष्टः" इति भारतवचनं प्रमाणमिति वाच्यम्; स्फोटयते अर्थोऽनेनेति व्युत्पत्त्या तत्र स्फोटशब्दस्य अर्थप्रकाशनवर्णशक्तिपरत्वेन त्वदभिमतार्थासाधकत्वादिति भावः। ननु वर्णानां प्रत्येकवाचकत्वे वर्णान्तरवैयर्थ्यप्रसङ्गात्, आशुतरविनाशिक्रमिकवर्णानां समुदायभावासम्भवेन तस्यापि वाचकत्वासंभवात् वर्णाभिव्यङ्ग्यः स्फोटोऽभ्युपेय इत्याशङ्क्य अतिरिक्तस्फोटाभ्युपगमेऽपि किं प्रत्येकवर्णानां स्फोटाभिव्यञ्जकत्वम्, उत समुदायस्येति विकल्पप्रासात्, "यश्चोभयोः समो दोषः परिहारोऽपि वा समः" इति न्याय आपततीत्याह प्रत्येकेति। ननु न स्फोटाभिव्यञ्जकत्वपक्षे दूषण साम्यम्, तथा हि-अभिव्यञ्जको हि प्रथमध्वनिः स्फोटमस्फुटमभिव्यनक्ति। उत्तरोत्तरो व्यञ्जकस्तु स्फुटतरम्, स्फुटतमम्। यथा हि स्वाध्यायः सकृत्पठ्यमानो नावधार्यते, अभ्यासेन तु स्फुटावसेयः; यथा वा रत्नतत्त्वं प्रथमप्रतीतौ स्फुटं न चकास्ति, पुनःपुनरीक्षणे यथावदभिव्यज्यते-तथा। "नादैराहितबीजायामन्त्येन ध्वनिना सह। आवृत्तपरिपाकायां बुद्धौ शब्दोऽवधार्यते" इति भर्तृहरिणाऽभिहितत्वात्—इति चेन्न; एतादृश्याः कल्पनाया वर्णसमुदायात् अर्थप्रतिपत्तिस्थलेऽपि संभवेन स्फोटकल्पनस्याप्रामाणिकत्वात्। कल्पनं त्विति। सम्प्रतिपन्नवर्णातिरिक्तस्फोटरूपार्थान्तरपरिकल्पनमित्यर्थः। एकं वाक्यमित्यादेरपि पदसमुदायेनैव निर्वाहसंभवात् वाक्यस्फोटोऽप्यप्रामाणिक इत्याह एतेन वाक्यस्फोटोऽपीति। स्फुटित इति। भग्न इत्यर्थः। ननु शब्दादर्थं प्रत्येमीत्येकत्वप्रतीतिः न समुदायैक्यपरा, अपितु अखण्डस्फोटैक्यपरा इत्याशङ्कामनुभवविरोधात् प्रत्याचष्टे शब्दादर्थमिति। विपरीतोपलम्भादिति। अंशनानात्वप्रती

विषयतयाऽप्युपपत्तेरिति भावः। नचागम इति। "स्फोटस्त्वं वर्णजुष्टः" इति भारतवचनगतस्फोटशब्दस्य स्फोटयते अर्थोऽनेनेति व्युत्पत्त्या अर्थप्रकाशनशक्तिपरत्वादिति भावः। ननु वर्णानां प्रत्येकं वाचकत्वे वर्णान्तरवैयर्थ्यप्रसङ्गः; आशुतरविनाशिक्रमिकवर्णानां समुदायभावासंभवेन वर्णसमुदायस्यापि वाचकत्वं न संभवति। अतो वर्णाभिव्यङ्ग्यः स्फोट एव वाचक इत्याश्रयणीयमित्यत आह प्रत्येकसमुदायादीति। आदिना चरमवर्णमात्रस्य वाचकत्वेऽपि वर्णान्तरवैयर्थ्यतादवस्थ्यमित्यस्य सङ्ग्रहः। स्फोटाभिव्यक्तावपीति। प्रत्येकं वर्णानां स्फोटव्यञ्जकत्वे वर्णान्तरवैयर्थ्यम्, समुदायभावस्य चोक्तरीत्या असंभवाच्च समुदायस्य व्यञ्जकत्वसंभवः, चरमवर्णस्य तथात्वेऽपि वर्णान्तरवैयर्थ्यतादवस्थ्यमिति दोषसाम्यमित्यर्थः। तर्हि स्फोटपक्ष एव परिगृह्यतामित्यत आह कल्पनंत्विति। संप्रतिपन्नवर्णातिरिक्तस्फोटरूपार्थान्तरकल्पनं त्वित्यर्थः। एकं वाक्यमिति प्रतीतेरपि पदसमुदायेनैव निर्वाहसंभवात् वाक्यस्फोटोऽप्यप्रामाणिक इत्याह एतेनेति। स्फुटित इति। निरस्त इत्यर्थः। ननु शब्दादर्थं प्रतीम इत्येकत्वप्रतीत्या अखण्डैकस्फोटसिद्धिरित्यत आह शब्दादिति। विपरीतोपलम्भादिति। अंशनानात्व-

1 वर्णानां भूतैकदेहैकत्वोत्पत्त्या स्थिरत्वात् समुदायसिद्धिश्चेत्, क्रमिकत्वभंग इति भाविप्रकाश्यम्।

एव स्फोटशब्दवाच्यत्वे न नो विरोधः । अध्यासादयस्तु अद्वैतमतवत् दूष्याः । शाब्दस्मृतिः स्फोटाभावेऽपि सिध्यति । न च तैः सर्वं समञ्जसं वाच्यम् । न च पाणिन्यादिभिस्तथोक्तम् । इतरे तु नीरन्ध्र(निरर्थ)कायासिनोऽनादरणीयाः । उक्तञ्च भट्टपराशरपादैः—"प्राक्प्रयोगानुसारेण प्रकृतिप्रत्ययस्वरान् । प्रकल्प्य वैयाकरणैर्व्युत्पाद्या पदपद्धतिः ॥" इति ॥

सत्त्वादिगुणोक्तनयाच्च शब्दानामद्रव्यत्वसिद्धिः ॥

ननु शब्दस्य अद्रव्यत्वव्यञ्जयत्वे सिद्धान्तयितुं न शक्यम्; द्रव्यत्वकार्यत्वादेः श्रुत्यादिसिद्धत्वात् । तथा हि, "यद्वेदादौ स्वरः प्रोक्तः" इत्यादिभिर्वर्णानां वर्णान्तरोपादानत्वमुच्यते । न च अद्रव्यस्योपादानत्वम्, निमित्तत्वमात्रविवक्षायां [1]उपादानप्रकृतिलीनादिस्वारस्यभङ्गः । निमित्तस्य प्रकृतिलयस्थानत्वाभावात् । न चायमुपचारः; बाधाभावात्, भाष्यकारवचनविरोधाच्च । तथा च वेदार्थसंग्रहे, "वेदाद्यन्तरूपतया वेदबीजभूतप्रणवस्य" इत्युपक्रम्य, "सर्वस्य वेदजातस्य

---

तैरिति भावः । अद्वैतेति । स्फोटस्य ब्रह्मवत् निर्विशेषतया निरंशतया च ज्ञाताज्ञातांशाभावादेव स्फोटस्य नाध्यासाश्रयत्वमिति भावः । स्फोटाभावेऽपीति । न हि शब्दसाधुत्वव्युत्पादने स्फोट उपयुज्यते इति भावः । शाब्दिकोक्तत्वात् सामञ्जस्यमभ्युपगन्तव्यमित्यत आह न च तैरिति । शाब्दिकैरित्यर्थः । इतरे त्विति । वाक्यपदीयादिप्रवर्तका भर्तृहरिप्रभृतय इत्यर्थः । नीरन्ध्रकायासिन इति । निरन्तरायासिन इत्यर्थः । प्राक्प्रयोगेति । प्राचीनप्रयोगानुसारेण पदव्युत्पादनमात्राधिकृतानां तेषां प्रमाणविरुद्धस्फोटादिकल्पने न प्रभुत्वमिति भावः ।

अद्रव्यत्वव्यञ्जयत्वे इति । अद्रव्यत्वव्यञ्जयत्वे तुमुन्नन्तापेक्षया कर्मणी । शक्यमिति । भावे यत्प्रत्ययः । यद्वेदादाविति । "यद्वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः । तस्य प्रकृतिलीनस्य यः परस्य महेश्वरः" इत्यादिभिरित्यर्थः । वर्णान्तरोपादानत्वमुच्यते इति । वेदादौ वेदान्ते च प्रतिष्ठितः स्वरः प्रणवः । तस्य स्वप्रकृतावकारे लीनस्य=मकारात्मकतां प्राप्तस्य; मकारस्येति यावत् । यः परः—यो वाच्य इत्यर्थः । इदम्परः, तत्परः, इत्यादौ परशब्दस्य वाच्येऽपि प्रयोगदर्शनात् । ततश्च वेदप्रकृतिप्रणवप्रकृतिभूताकारवाच्यो महेश्वर इत्यभिधानादिति भावः। उपादानप्रकृतिलीनादिति । उपादानार्थवाचिप्रकृतिपदस्य लीनपदस्य च स्वारस्यभङ्गप्रसङ्ग इत्यर्थः । प्रणवस्येत्यु-

---

प्रतीतेरिति भावः । अद्वैतेति । स्फोटस्याद्वैत्यभिमतब्रह्मवत् निर्विशेषतया निरंशतया चाभ्युपगमात् तत्र ज्ञाताज्ञातांशभेदस्य दुर्वचतया स्फोटस्य नाध्यासाश्रयत्वसंभव इति भावः । ननु स्फोटानुपगमे शाब्दस्मृतिविरोध इत्यत आह शाब्देति । शाब्दस्मृतिः पाणिनिसूत्रादिरूपा शब्दसाधुत्वव्युत्पादनपरा स्मृतिः। स्फोटाभावेऽपि सिद्ध्यतीति । शब्दसाधुत्वव्युत्पादनस्य स्फोटाधीनत्वविरहादिति भावः । ननु शाब्दिकैरुक्तत्वात् प्रामाणत्वमित्यत आह न च तैरिति । तैः-शाब्दिकैः । इतरे-भर्तृहरिप्रभृतयः । नीरन्ध्रकायासिन इति । निरन्तरायासिन इत्यर्थः । निरर्थकायासिन इति क्वचित् पाठः । प्राक्प्रयोगः—प्राचीनप्रयोगः । व्युत्पाद्या पदपद्धतिरिति । पदव्युत्पादनानुपयुक्ताप्रामाणिकस्फोटादिव्युत्पादने तेषां न स्वातन्त्र्यमिति भावः ।

---

1 उपादानविषयकं यत् प्रकृतिलीनादिपदस्वारस्यं तद्भङ्ग इत्यर्थः ।

प्रकृतिः प्रणवः। प्रणवस्य च प्रकृतिः अकारः। प्रणवविकारो वेदः स्वप्रकृतिभूते प्रणवे लीनः। प्रणवोऽपि अकारविकारः स्वप्रकृतौ अकारे लीनः। तस्य प्रणवप्रकृतिभूताकारस्य यः परः= वाच्यः स एव महेश्वर इति। सर्ववाचकजातप्रकृतिभूताकारवाच्यः सर्ववाच्यजातप्रकृतिभूतो नारायणो यः स महेश्वर इत्यर्थः" इत्युक्त्वा, "अकारो वै सर्वा वाक्" इति चोपादाय, "वाचकजातस्याकारप्रकृतित्वं वाच्यजातस्य ब्रह्मप्रकृतित्वञ्च सुस्पष्टम्" इत्युक्तम्। तथा श्रीमद्गीताभाष्ये, "अक्षराणामकारोऽस्मि"—अक्षराणां मध्ये, 'अकारो वै सर्वा वाक्' इति श्रुतिप्रसिद्धः सर्ववर्णानां प्रकृतिः अकारोऽहम्" इति। तथा परिणामत्वञ्च शब्दस्योक्तं भाष्ये। "प्राकृतप्रळये स्रष्टुः प्रजापतेर्भूताद्यहङ्कारपरिणामशब्दस्य च विनष्टत्वात्" इति। तथा दीपेऽपि, "अव्याकृतपरिणामशब्दमयेषु वेदेषु" इत्यादि। तथा, "यस्य वेदाः शरीरम्" इत्यादिभिरपि द्रव्यत्वं सिद्धम्। द्रव्यस्यैव हि शरीरत्वं शरीरलक्षणसिद्धम्। आत्मसिद्धावपि—"दृश्यन्ते गुणा अपि शब्दगन्ध सूर्यालोक-रत्नप्रभादयो गतिमन्तो धर्म्यतिवर्तिनश्च। अतिसूक्ष्मो दूरगमनधर्मा भौतिको हि शब्दः। स खलु शङ्खमुखादेर्दवीयसोऽपि दशां(दिशां) नोदनविशेषेण लोष्टादिरिव यावद्वेग-

---

पक्रम्येति। "वेदबीजभूतप्रणवस्य प्रकृतिभूताकारत्वं च तस्य महेश्वरत्वं प्रतिपाद्य दहरपुण्डरीकान्तःस्थाकाशवर्तितयोपास्यत्वमुक्तम्। अयमर्थः—"सर्वस्य वेदजातस्य प्रकृतिः प्रणवः" इति वेदार्थसंग्रहग्रन्थे इत्यर्थः। शब्दस्योक्तं भाष्य इति। "समाननामरूपत्वाच्च" इति सूत्रावतारभाष्य इत्यर्थः। भूताद्यहङ्कारेति। भूतादिनामकतामसाहङ्कार इत्यर्थः। दीपेऽपीति। तत्रैव सूत्र इति भावः। ततश्च परिणामित्वात् द्रव्यत्वं सिद्धमिति भावः। शरीरलक्षणसिद्धमिति। 'यस्य चेतनस्य यत् द्रव्यं सर्वात्मना स्वार्थे नियन्तुं धारयितुञ्च शक्यम्' इति हि शरीरलक्षणमिति भावः। एवमद्रव्यत्वं सिद्धान्तयितुं न शक्यमित्युपपाद्य अद्रव्यत्वव्यञ्जयत्वयोर्विरुद्धमात्मसिद्धिवचनमुदाहरति आत्मसिद्धावपीति। गुणा अपीति। विशेषणभूता अपीत्यर्थः। भौतिको हि शब्द इत्यनेन द्रव्यत्वमाविष्कृतम्। तथा गतिमन्तो धर्म्यतिवर्तिन इत्युक्त्या क्रियावत्त्वाविष्करणाच्च द्रव्यत्वं सिध्यतीति द्रष्टव्यम्। न च गन्धस्यापि द्रव्यत्वमभिमतं स्यात्, तस्यापि गतिमत्त्वाभिधानादिति वाच्यम्; गन्धशब्दस्य तदाधारद्रव्य[1]परत्वसम्भवात्। 'उच्चारणानन्तरभावित्वं व्यञ्जकपक्षदूषणानि' इत्युक्त्या व्यङ्ग्यत्वं सिद्धान्तयितुं न शक्यमित्युक्तं भवति दवीयसोऽपि दशां नोदनेति। दशां दवीयस इति योजना।

---

प्रकृतिलयस्थानत्वाभावादिति प्रकृतित्वलयस्थानत्वयोरभावादित्यर्थः। उक्तमिति। वेदार्थसङ्ग्रह इत्यन्वयः। दीपेऽपीति। तत्रैव सूत्र इति भावः। ततश्च परिणामित्वात् द्रव्यत्वं सिद्धमित्याशयः। द्रव्यस्यैव हि शरीत्वं शरीरलक्षणसिद्धमिति। शरीरलक्षणाधीनं शरीरपदवाच्यत्वं द्रव्यस्यैवेत्येतत् प्रसिद्धमित्यर्थः। चेतनापृथक्सिद्धविशेषणद्रव्यत्वस्यैव शरीरलक्षणत्वादिति भावः। भौतिको हि शब्द इत्यनेन भूतपरिणामत्वोक्त्या द्रव्यत्वमाविष्कृतम्। गतिमन्त इति क्रियावत्त्वोक्त्या च तथा। तत्र गन्धशब्दस्तदाधारद्रव्यपरः। दशांदवीयस इति योजना। दशामत्यन्तदूरवर्तिनः शङ्खमुखादेरित्यर्थः। दिशामिति पाठे दिशशब्दात् द्वितीया दिशामभिप्रतिष्ठत इति योजना। काल्पनिक

---

1 द्रव्यपरत्वेति। अयं ते गन्धः, अमी वो गन्धाः इत्यादिव्यवहारादिति भावः।

मभिप्रतिष्ठते, स्पर्शरहितोऽपि" इत्यारभ्य, "शब्दस्य नभोगुणत्वप्रतिक्षेपो वायवीयत्वमुच्चारणानन्तरभावित्वं व्यञ्जकपक्षदूषणानि च विशदमुपपादितानि" इति ॥

[1]एवं स्थिते वर्णानामुपादानत्वादिर्यथार्थ एवेति वा, काल्पनिक इति वा, दृष्टिविधिरिति वा, औपचारिक इति वा निर्वाहः स्यात् ।

तत्र न प्रथमः ; वर्णनित्यत्ववादिनां मते उपादानोपादेयभावाभावात् । नैयायिकमते तु असमवायित्वाद्यभ्युपगमात्, सदनारम्भाच्च । भगवद्यामुनमुनिपक्षेऽपि वायोरेव वर्णोपादानत्वात् । भाष्यकारैरपि अहङ्कारपरिणामत्वमात्राभिधानात् अव्यक्तपरिणामवचनवत् आरम्भपर्यायाभ्युपगमज्ञापकाभावात् । वचनेषु च वर्णानामनियतोपादानत्वोपादेयत्वदर्शनात्, विरुद्धोपादानो-

---

दशामतिवर्तिनः शङ्खमुखादेरित्यर्थः । दिशामिति पाठे दिशाशब्दात् टाबन्तात् द्वितीया । दिशामभिप्रतिष्ठते इति योजना । एवंस्थित इति । अद्रव्यत्वशब्दगुणत्वयोः सिद्धान्तयितुमशक्यत्वे स्थितेऽन्याऽपि चिन्ता प्रस्तूयते इत्यर्थः । काल्पनिक इति वेति । जरद्गवादिवाक्यवदयथार्थ इति वेत्यर्थः । दृष्टिविधिरिति । "मनो ब्रह्मेत्युपासीत" इतिवदिति भावः । औपचारिक इति । सिंहो माणवक इतिवत् अप्रकृतौ प्रकृतित्वोपचार इत्यर्थः । असमवायित्वादीति । असमवायिकारणत्वादेरेवाभ्युपगमेन उपादानत्वानभ्युपगमादित्यर्थः । सदनारम्भाच्चेति । नैयायिकादिमते शब्दस्य गुणत्वेन कदापि कस्यापि अनारम्भकत्वादित्यर्थः । ननु यथा जगतोऽव्यक्तपरिणामत्ववादः सद्वारकतया समर्थ्यते, एवं वर्णोपादानकस्य शब्दस्य अहंकारपरिणामत्ववादोऽपि शब्दद्वारकतयैव उपपद्यतामित्याशङ्क्याह अव्यक्तपरिणामवचनवदिति । ननु वर्णोपादानकत्ववचनमेव सद्वारकाहङ्कारपरिणामत्वज्ञापकमित्याशङ्क्याह वचनेषु चेति । इदञ्च उत्तरत्र केषुचित् ग्रन्थेषु इत्यत्र स्पष्टीभविष्यति । विरुद्धेति ।

---

इति । बाधित इत्यर्थः । तथाच जरद्गवादिवाक्यवत् बाधितार्थकमेव तद्वाक्यमिति भावः । दृष्टिविधिरिति । "नाम ब्रह्मेत्युपासीत" इतिवत् आहार्यारोपरूपोपासनविधानपर इत्यर्थः । औपचारिक इति । सिंहो माणवक इत्यादौ सिंहशब्दवदुपादानादिशब्दस्तत्सदृशलाक्षणिक इत्यर्थः । असमवायित्वाद्यभ्युपगमादिति । असमवायिकारणत्वाद्यभ्युपगमादित्यर्थः । आदिना अद्रव्यत्वपरिग्रहः । तथाच समवायिकारणत्वरूपमुपादानत्वं तत्र न संभवत्येवेति भावः । सदनारम्भाच्चेति । [शब्दस्य?] भावकार्यनिरूपिततादात्म्यसंबन्धावच्छिन्नकारणतानाश्रयत्वाच्चेत्यर्थः । प्रतियोगितासंबन्धेन ध्वंसं प्रति तादात्म्येन शब्दस्यापि हेतुत्वाभ्युपगमात् भावकार्यार्थकं सत्पदम् । ननु जगतोऽव्यक्तपरिणामत्ववचनवत् सद्वारकपरिणामपरतया अहङ्कारपरिणामत्ववचनमुपपद्यते ; शब्दानामहङ्कारपरिणामभूताकाशपरिणामत्वाभ्युपगमादित्यत आह अव्यक्तपरिणामेति । आरम्भपर्यायः—आरम्भपरम्परा । ज्ञापकाभावादिति । स्वरसतः साक्षादारब्धत्वस्यैव प्रतीतेरिति भावः । ननु शब्दानामकारोपादनकत्ववचनमेव सद्वारकाहङ्कारपरिणामत्वज्ञापकमित्याशङ्क्याह वचनेषु चेति । अनियतोपादानत्वोपादेयत्वदर्शनादिति । इदञ्चो-

---

1 उक्तशब्दद्रव्यत्वपक्षनिरसनाय तत्पक्षे उपादानत्ववचननिर्वाहं विकल्पयति ।

पादेयभावदर्शनात्। सिद्धे च विकल्पायोगात्। गोमयवृश्चिकादिनये च गौरवात्, भेदादृष्टेश्च॥ उपादानावच्छेदकतयोपादानत्वमिति चेन्न; तथात्वेऽपि मृत्पिण्डगतपिण्डत्वादिवत् अनुपादानत्वम्, विशिष्टस्योपादानत्वेऽपि विशेषणानां विशिष्टत्वाभावेन तदभावात्। रूपवत्त्वाभिधानञ्चात्यन्तदुस्स्थम्; तेजःप्रभृतिष्वेव रूपोत्पत्तेः, घटादिवत् चाक्षुषत्वप्रसङ्गात्, स्पर्शवत्त्वादिप्रसङ्गाच्च, सर्वत्रोपलभ्यमानस्य स्थानविशेषानुपपत्तेश्च।

---

क्वचिदकारस्य सर्ववर्णप्रकृतित्वमुच्यते। "अकारो वै सर्वा वाक्" इति। क्वचिच्च अकारस्य व्याहृतिप्रकृतिकत्वमुच्यते। "तेभ्योऽभितप्तेभ्यस्त्रयो वर्णा अजायन्त। अकार उकार(रो) मकार इति" इति। अतः परस्परविरुद्धोपादानोपादेयभावदर्शनात् न व्यवस्थितत्वमिति भावः। **विकल्पायोगादिति।** अनुष्ठाने विकल्पसम्भवेऽपि सिद्धस्य वस्तुनः परस्परविरुद्धत्रिक(?)द्व्याश्रयत्वायोगादित्यर्थः। ननु वृश्चिकस्य गोमयवृश्चिकादिनानोपादानत्ववत् वर्णानामपि नानोपादानत्वमस्त्वित्याशङ्क्याह **गोमयेति। भेदादृष्टेश्चेति।** गोमयप्रभववृश्चिकापेक्षया वृश्चिकप्रभववृश्चिके वैजात्यवत् प्रकृते कारणत्ववैजात्यनिर्वाहककार्यवैजात्यस्याभावात् न कारणवैजात्यं कल्पयितुमुचितमिति भावः। ननु नानोपादानकत्वं वर्णानां नाभ्युपगम्यते, येनायं दोषः स्यात्। अपितु अव्यक्तमुपादानम्, वर्णादि तु तदवच्छेदकं भविष्यतीत्यविरोध इत्याशङ्क्य, तथात्वेऽपि अवच्छेदकीभूतस्य पिण्डत्वस्थानीयस्य उपादानत्वाभावेन उपादानत्वप्रतिपादकवचनासाङ्गत्यं तदवस्थमेवेत्याह **उपादानावच्छेदकतयेत्यादिना।** ननु इतरावच्छिन्नमितरदुपादानं नोच्यते, येनावच्छेदकीभूतस्य पिण्डत्ववत् उपादानत्वं न स्यात्। अपितु इतरविशिष्टस्य इतरस्य कारणत्वम्, ततश्च विशेषणस्यापि कारणत्वं सिध्यति, नानोपादानकत्वञ्च नाश्रयणीयमित्याशङ्क्याह **विशिष्टस्येति। विशिष्टत्वाभावेनेति।** विशेषणसम्बन्धावच्छिन्नस्य विशेष्यस्यैव विशिष्टतया विशेषणस्यातथात्वेनोपादानत्वाभावात्। इतरथा चिदचिद्विशिष्टस्योपादानत्वे विशेषणानामुपादानत्वप्रसङ्ग इति भावः। **रूपवत्त्वाभिधानञ्चेति।** "श्वेतं श्यामञ्च पीतञ्च पिङ्गळं नीललोहितम्। नीलं कनकवर्णञ्च वर्णान्येतान्यनुक्रमात्॥" इत्यादिभिर्व्याहृत्यादिषु नीलपीतादिरूपविशेषाभिधानञ्चेत्यर्थः। कुत इत्यत आह **तेजःप्रभृतिष्वेवेति।** ततश्च अव्यक्तादिपरिणामवादोऽसङ्गत इति भावः। **स्पर्शवत्त्वादीति।** रूपवतः स्पर्शवत्त्वनियमादिति भावः। आदिपदेन त्वगिन्द्रियग्राह्यत्वादि गृह्यते। न च प्रभावदनुद्भूतस्पर्शवत्त्वमस्त्विति वाच्यम्; स्पर्शतदनुद्भूतत्वादिकल्पनस्य गौरवपराहतत्वादिति भावः। **स्थानविशेषेति।** "आधारं तु चतुर्दळारुणलसत्"

---

त्रल केषुचित् ग्रन्थेष्वित्यत्र स्पष्टीभविष्यति। **उपादानावच्छेदकतयेति।** उपलक्षणत्वेनोपादानव्यावर्तकयेत्यर्थः। नन्वितरोपलक्षितस्येतरस्योपादानत्वं नोच्यते, येनावच्छेदकीभूतस्योपादानत्वं न स्यात्; अपि त्वितरविशिष्टस्येतरस्योपादानत्वम्। ततश्च विशेषणस्याप्युपादानत्वञ्च सिध्यति। नानोपादनकत्वञ्च न; प्रधानोपादानस्यैकत्वात्। प्रधानोपादानत्वञ्च उपादानतानवच्छेदकत्वे सत्युपादानत्वमित्यत आह **विशिष्टस्येति। विशिष्टत्वाभावेनेति।** उपादानत्वोपयुक्तावस्थाविशिष्टत्वाभावेनेत्यर्थः। **तदभावादिति।** उपादानत्वासंभवादित्यर्थः। **स्थानविशेषेति।** "आधारं तु चतुर्थकारुणलसद्वासान्तवर्णात्मकं

नापि द्वितीयः; स हि सर्वस्य वा; प्रपञ्चस्य वा; वर्णानामेव वा? नाद्यौ; स्ववचनविरोधादिभिः शून्याद्वैतादिमतभङ्गात्। नेतरः; आगमिकत्वाविशेषेण प्रकृत्यादावपि प्रसङ्गात्। अनुपपत्तेश्च सर्वत्र सुहृत्वात्; आगमिकस्योपपत्तिबाध्यत्वाभावात्, तत्प्रामाण्यस्य च स्थितत्वात्। अनुपलम्भस्य चायोग्ये बाधकत्वाभावात्, अन्यथाऽतिप्रसङ्गाच्च।

अस्तु तर्हि तृतीयः पक्षः। तथा हि—केषुचित् ग्रन्थेषु प्रणवांशभूताकारोकारादिविका-

---

इत्यादिस्थानविशेषो वा नोपपद्येत। तस्य चोपादानत्वार्थकत्वे तत्सहपठितरूपादिकमपि तथैव स्यात्। न चेष्टापत्तिः; तृतीयपक्षाविशेषप्रसङ्गादिति भावः। सहीति। काल्पनिकत्वरूपोऽर्थ इत्यर्थः। स्ववचनेति। सर्वस्य मिथ्यात्वे शून्यवादः, ब्रह्मव्यतिरिक्तप्रपञ्चस्य मिथ्यात्वे अद्वैतवादः। उभयमपि स्वप्रतिपाद्यमिथ्यात्वपर्यवसिततया स्ववचनविरोधादिभिर्दूषितमिति भावः। आगमिकत्वेति। आगमिकस्यापि वर्णोपादानत्वस्य काल्पनिकत्वे प्रकृत्याद्युपादानत्वमपि काल्पनिकं स्यादित्यर्थः। ननु वर्णानां रूपस्पर्शादिशून्यत्वात् कृत्स्नैकदेशपरिणामविकल्पानुपपत्तेश्च वर्णोपादानत्वं काल्पनिकमेवेत्याशङ्क्याह अनुपपत्तेश्चेति। सर्वत्रेति। प्रकृत्यादावपीत्यर्थः। उपपत्तिबाध्यत्वाभावादिति। आगमविरुद्धतर्काणामनादरणीयत्वादिति भावः। तत्प्रामाण्यस्येति। आगमप्रामाण्यस्य स्थितत्वादित्यर्थः। ननु वर्णानामुपादानत्वानुपलम्भात् नोपादानत्वमित्याशङ्क्याह अनुपलम्भस्य चेति। योग्यानुपलम्भस्यैव अभावग्राहकत्वादिति भावः। अन्यथेति। अनुपलब्धिमात्रस्याभावग्राहकत्वे अत्येकसमधिगम्यार्थानां परित्यागप्रसङ्गादिति भावः। परस्परविरुद्धनानाप्रकारस्य श्रुतिस्मृतिषु दर्शनात् दृष्टिविधिमन्तरेण नान्या गतिरस्तीति दृष्टिविधिपक्ष एवाभ्युपेय इति तृतीयं पक्षमुपक्षिपति अस्तु तर्हीति।

---

स्वाधिष्ठानमनेकवैद्युतनिभं बालान्तषट्स्वकम्। रत्नाभं मणिपूरकं दशदलं डाद्यं फकारान्तकं पत्रैर्द्वादशभिस्त्वनाहतमिदं हैमं [1]कठान्तावृतम्। मात्राभिर्दशषोडशस्वरयुतम् ज्योतिर्विशुद्धांबुजं हक्षेत्यक्षरबीजयुक्तदलयुक्रक्ताभमाज्ञांबुजम्। तस्मादूर्ध्वगतं प्रभासितमिदं पद्मं सहस्रच्छदं नित्यानन्दपदं सदा हरिपदं नित्यं नमस्येतराम्" इति मातृकाध्यानश्लोके [पूर्वमेव प्रथमव्याख्योदाहृते] आधार-स्वाधिष्ठान-मणिपूरक-अनाहत-विशुद्धांबुज-आज्ञांबुज-द्वादशान्तशब्दितेषु गुद-लिङ्ग-नाभि-हृदय-तालु-भ्रूमध्य-मूर्द्धरूपस्थानेषु तत्तद्वर्णानां स्थितिबोधनादिति भावः। मन्त्रशास्त्रेषु तत्तन्मन्त्राणां क्षेत्रशब्दितस्थानविशेषप्रतिपादनं दृश्यते; तदभिप्रायं वेदम्। सहीति। काल्पनिकत्वरूपोऽर्थ इत्यर्थः। सर्वत्र सुहृत्वादिति। प्रकृत्याद्युपादानत्वविषयेऽप्यूहितुं शक्यत्वादित्यर्थः। तेनानुपपत्त्युपपत्तिभ्यामपि वैषम्यं न वक्तुं शक्यमिति भावः। उपपत्तिबाध्यत्वाभावादिति। तर्कबाध्यत्वाभावादित्यर्थः। आगमविरुद्धतर्काणामनादरणीयत्वादिति भावः। तत्प्रामाण्यस्येति। आगमप्रामाण्यस्येत्यर्थः। स्थितत्वादिति। संप्रतिपन्नत्वादित्यर्थः। ननु मृत्पिण्डादेर्घटाद्युपादानत्ववत् वर्णानामुपादानत्वस्यानुपलम्भान्नोपादानत्वसंभव इत्याशङ्क्याह अनुपलम्भस्य चेति। योग्यानुपलम्भस्यैवाभावग्राहकत्वादिति भावः। तर्हीति। प्रथमद्वितीयपक्षयोरनुपपन्नत्व इत्यर्थः।

---

1 अत्र श्लोके पूर्वपुटे चतुर्थकेत्यत्र चतुर्दलेति, (447) पुटे कटान्तेत्यत्र कठान्तेति च शोध्यम्।

त्वं वर्णानामुच्यते, केषुचित् हृल्लेखांशभूतहकारादिविकारत्वम् । तथा च प्रक्रियान्तरेण श्रुतिः, "भूरित्येव ऋग्वेदादजायत । भुव इति यजुर्वेदात् । सुवरिति सामवेदात् । तानि शुक्रियाण्यभ्यतपत् । तेभ्योऽभितप्तेभ्यस्त्रयो वर्णा अजायन्त । अकार उकार मकार(रो) इति । तानेकधा समभरत्तदेतदोमिति" इति । स्मृतिश्च—"अकारञ्चाप्युकारञ्च मकारञ्च प्रजापतिः । वेदत्रयान्निरदुहत् भूर्भुवः स्वरितीति च" इति । तथा सर्वमन्त्राणां प्रणवबीजत्वं साधारणमुक्त्वा प्रतिमन्त्रं बीजाक्षराणि च कल्पैरुच्यन्ते । तथा प्रळये मन्त्रं सङ्ग्राह्य रक्षति इति छन्दांसि च वर्ण्यन्ते, तथा तत्तदक्षराणां सितरक्तपीतकृष्णादयो रूपविशेषाश्चाभिधीयन्ते । एकस्यैवाक्षरस्य विनियोगभेदेन मन्त्रभेदेन रूपभेदः प्रकीर्त्यते । एवं नियतानियतस्थानविशेषादयोऽपि । न च परमार्थतो रूपस्थानादिभेदो वर्णानाम्, किंतु तादृशानुसन्धानेनादृष्टविशेषो भवतीत्येतदेवाभिप्रेतम्, यन्त्रवृत्तान्तवत् । अन्यथा व्याकुलोपादानोपादेयभाव-रूप-स्थानाद्युपदेशेन तेषामप्रामाण्यप्रसंगः । अतो दृष्टिविधानमेवात्रोचितमिति ।

अयमपि पक्षो विलक्षितः, तथा हि—"ओमित्येतदक्षरमुद्गीथमुपासीत" इत्यादिवत् प्रणवं सर्वाक्षरोपादानमुपासीतेत्येवमादिरूपेण विधिर्न दृश्यते ; किंतु तत्त्वोपदेशपरवचनव्यक्तिः । तथापि दृष्टिविधित्वे ब्रह्मणो जगत्कारणत्वादावपि प्रसङ्गात् ॥ तत्त्वतर्कप्रतिपादकभाष्यकारवचसि च दृष्टिविधित्वं दूरापेतम् ॥ अकारावच्छिन्नाकाशांशे वर्णोत्पत्तिरित्यादिकुशकाशावलम्बेन प्रकृतिविकृतिभाव इति चेत्, तर्हि तद्विशिष्टस्य प्रकृतित्वं तस्मिन्नुपचरितं स्यात् । दृष्टिविधिश्च गतः ॥

अस्त्वेवमेवात्रेति चेत्—तर्हि वाचकजातप्रकृतिभूताकारस्य वाच्यजातप्रकृतिभूतपरमात्म-

तथा च प्रक्रियान्तरेणेति । सर्ववर्णानामकाराद्युपादानकत्वप्रकारं विहाय अकारादिवर्णत्रयस्यैव भूराद्युपादानकत्वं श्रूयत इत्यर्थः । शुक्रियाणीति । शुक्रः=तेजिष्ठः परमात्मा, स एषां देवतेति तानि शुक्रियाणीत्यर्थः । कल्पैरुच्यन्त इति । तत्तन्मन्त्रकल्पैरित्यर्थः । तथा प्रळय इति । ततश्च प्रळयकालेऽपि अवस्थानप्रतिपादनात् नित्यत्वं प्रतीयत इति विरोध इत्यर्थः । विलक्षित इति । तिरस्कृत इत्यर्थः । तथापि दृष्टिविधित्वे इति । विध्यश्रवणेऽपि तद्विधिपरत्व इत्यर्थः । तत्त्वतर्केति । तत्त्वनिर्णयोपयुक्ततर्कप्रतिपादकेत्यर्थः । उपचरितमिति । अकारावच्छिन्नस्य प्रकृतित्वमकार उपचरितमिति स्यात्, ततश्च चतुर्थपक्षः परिगृहीतः स्यादित्यर्थः । चतुर्थपक्ष एवास्त्विति शङ्कते अस्त्वे

हृल्लेखेति । ह्रीमिति मन्त्रस्य हृल्लेखेति मन्त्रशास्त्रप्रसिद्धा संज्ञा । प्रक्रियान्तरेणेति । प्रकारान्तरेणेत्यर्थः । शुक्रियाणीति । शुक्रः=तेजिष्ठः परमात्मा, स एषां देवतेति तानि शुक्रियाणि । समभर इति । संभृतवानित्यर्थः ; एकीकृतवानिति यावत् । प्रळय इति । अनेन नित्यत्वोक्त्या विरोध इति भावः । विलक्षितः—तिरस्कृतः । तत्त्वतर्केति । तत्त्वनिर्णयोपयुक्ततर्केत्यर्थः । कुशकाशावलम्बेन अनुकल्पावलम्बेन । कुशाभावे काशग्रहणं ह्यनुकल्पावलम्बनरूपम् । वाचकत्वाभिधानमयुक्तमिति । अकारे सर्ववर्णप्रकृतित्वस्य वास्तवस्याभावेन, "अकारेणाखिलाधारः परमात्माऽभिधीयते । समस्तशब्दमूलत्वादकारस्य स्वभावतः । समस्तवाच्यमूलत्वात् ब्रह्मणोऽपि स्वभावतः । वाच्यवाचकसंबन्धस्तयोरर्थात् प्रतीयते" इति वचने तत्र समस्तशब्दमूलत्वहेतुना परमात्मवाचकत्वाभिधानमयुक्तं स्यादित्यर्थः ।

वाचकत्वाभिधानमयुक्तम् । अतः प्रशंसापरतया तत्तत्कार्यशक्त्यादियोगेन वा प्रकृतिविकृतिभावरूपविशेषाद्व्यपदेश औपचारिको गुणत्रयादौ लोहितशुक्लकृष्णादिव्यपदेशवदिति ।

एवं स्थिते पञ्चमः पक्ष उच्यते—क्वचित् याथार्थ्यम्, क्वचिद् भ्रान्तिः, क्वचित् दृष्टिविधिः, क्वचिदुपचारश्चेति । अबाधिते प्रथमः । बाधिते निर्मूले च द्वितीयः । ध्यानविधौ प्रायशः तृतीयः । बाधिते समूले सम्बन्धशालिनि चतुर्थ इति ॥

ननु एवमपि न कश्चित् सिद्धान्तः, तथाहि—शब्दो द्रव्यम्, अद्रव्यं वा? द्रव्यत्वे च किं कस्योपादानम्? रूपादिसम्बन्धश्च कीदृशः? अद्रव्यत्वे तु कथमुपादानत्व-रूप-सम्बन्धादिरिति ॥

अत्रोच्यते—सयूथ्यमतभेदेन द्रव्यम्, अद्रव्यश्च शब्दः । द्रव्यत्वपक्षेऽपि वायवीयोऽवायवीयश्चेति । अत्रायवीयत्वेऽपि दीपादिधर्मभूतप्रभावत् भेर्यादिधर्मभूतः प्रहारप्रकाश्य इत्येकः पक्षः । व्यजनेन पवनवत् प्रहारेण जातः प्रसरतीत्यपरः । पक्षद्वये चायं स्पर्शरहितः ।

---

वमेवात्रेति चेदिति । वाचकत्वाभिधानमयुक्तमिति । अकारे सर्ववर्णप्रकृतित्वस्य औपचारिकत्वे तस्य वस्तुतः सर्ववाचकजातप्रकृतित्वाभावात्, "अकारेणाखिलाधारः परमात्माऽभिधीयते । समस्तशब्दमूलत्वादकारस्य स्वभावतः ॥ समस्तवाच्यमूलत्वात् ब्रह्मणोऽपि स्वभावतः ।" इति वचनमसङ्गतं स्यादित्यर्थः । चतुर्थपक्षस्य दुष्टत्वमुपसंहरति । अतः प्रशंसेति । विशेषाद्व्यपदेश इति । भाष्यकारीयव्यपदेश औपचारिकः स्यात्, अतः सोऽपि पक्षो न संभवतीत्यर्थः । क्वचिद्याथार्थ्यमिति । विरुद्धार्थप्रतिपादकानाममीषां प्रमाणानां मध्ये क्वचिदित्यर्थः । निर्मूल इति । आप्तोक्तत्वादिशून्य इति भावः । ध्यानविधाविति । संनिहित इति शेषः । बाधिते समूल इति । मुख्यार्थे बाधिते सति वक्तृवाक्यार्थप्रमारूपमूले च सति मुख्यार्थसम्बन्धिन्युपचार इति भावः ॥

उपादानत्वरूपसम्बन्धादिरिति । उपादानत्वस्य रूपस्य च कथं सम्बन्ध इत्यर्थः प्रभावदिति । यथा प्रभा दीपाविनाभूता, एवं भेर्याद्यविनाभूतस्तु ध्वनेन भेर्यवयवैः सह प्रसरतीत्यर्थः व्यजनेन पवनवदिति । यथा व्यजनचालनेन तदानीमेवोत्पन्नो वायुर्विहायैव व्यजनं प्रसरति,

---

चतुर्थपक्षस्य दुष्टत्वमुपसंहरति अत इति । प्रशंसापरतयेति । असदर्थवादन्यायेन यथाश्रुतार्थतात्पर्यविरहेण प्रशस्त्यमात्रपरतयेत्यर्थः । तत्तत्कार्यशक्त्यादियोगेनेति । लोकसिद्धस्वप्रत्यक्षादितत्तत्कार्यानुकूलशक्ति-तदुपधायकत्वयोगेनेत्यर्थः । प्रकृतिविकृतिभावरूपविशेषाद्व्यपदेश औपचारिक इति । स्यादिति शेषः । तथाच लोकसिद्धाकारकर्थेषु सर्ववर्णत्वोपचारः, तन्निमित्तकारणतायाश्चोपादानकारणतात्वोपचार इति भावः । आदिना प्रकृतिविकृतिभावरूपविशेषहेतुकपरमात्मवाचकत्वपरिग्रहः । तेन हेतुभूतसर्ववाचकप्रकृतित्वव्यपदेशस्यौपचारिकतया तन्मूलकपरमात्मवाचकत्वव्यपदेशोऽप्यौपचारिक एव स्यादित्युक्तं भवति । तथाचोक्तदोषात् चतुर्थपक्षो हेय इति भावः ।

क्वचिद्याथार्थ्यमिति । विरुद्धार्थप्रतिपादकोक्तप्रमाणानां मध्य इत्यादिः । भ्रान्तिरिति । वक्तुरिति आदिः । निर्मूल इति । वक्तृप्रमारूपमूलरहित इत्यर्थः । वक्तुराप्तत्वसंप्रतिपत्तिरहितस्थल इति भावः । बाधिते समूल इति । यत्र मुख्यार्थबाधः वक्तुश्चाप्तत्वसंप्रतिपत्तिः, तादृशस्थल इत्यर्थः । रूपसंबन्धादिरिति आदिना

"स्पर्शरहितोऽपि" इति वचनात् । वायवीयत्वेऽपि अनुपलम्भात् स्पर्शाभावः । भेरीशब्द इत्यादिव्यवहारस्वारस्यात् प्रथमः पक्षः । तरङ्गमारुतादिवत् तथाव्यवहारोपपत्तौ अन्वयव्यतिरेकात् तदानीमेवोत्पत्तिरित्यपरः । व्यञ्जकस्य कारकस्य वा वायोरागमनावश्यम्भावात् तद्व्यङ्ग्यस्य तदुत्पाद्यस्य वा शब्दान्तरस्याभ्युपगमे गौरवात् वाय्वन्तरादृष्टव्यञ्जकत्वादिशक्तिकल्पनवत् शब्दत्वमेव श्रावणत्वनिबन्धनं वायोरस्त्विति वायवीयत्वमिच्छतामभिमानः । तत्र चोपादानादिवाग् दृष्टिविध्यादय एव । अवायवीयद्रव्यत्वे तु यथोपदेशं कल्पभेदेन अण्डभेदेन वा उपादानानियमः । तत एव रूपस्थानाद्यनियमोऽपि । अनुपलम्भस्तु रूपादीनामयोग्यत्वात् । अनुपलम्भबाधितांशे वा दृष्टिविधित्वादिस्वीकारः ॥

अथाद्रव्यत्वपक्ष उच्यते—तत्र तावत् सत्त्वरजस्तमसामद्रव्यत्वाय भाष्यकारोक्ता युक्तयः शब्दस्यापि समानाः । अव्याकृताहङ्कारपरिणामव्यपदेशोऽपि आगन्तुकधर्मत्वाभिप्रायेण घटते ।

---

तथेत्यर्थः । **स्पर्शरहितोऽपीति वचनादिति** । आत्मसिद्धिवचनादित्यर्थः । **व्यवहारस्वारस्यादिति** । **भेरीगतः शब्द इति व्यवहारस्वारस्यात्** भेर्यवयवसमवेतशब्दग्रहणमेवोचितमिति **भेर्यादिधर्मभूत** इति पक्ष एवोचित इति भावः । **तरङ्गमारुतेति** । न हि मारुतः प्रभावत् तरङ्गनिष्ठः, तरङ्गाविनाभूतो वा, अपि तु उत्पत्तिमात्रम्—तथेत्यर्थः । **शब्दान्तरस्येति** । वाय्वतिरिक्तशब्दान्तरस्येत्यर्थः । **वाय्वन्तरादृष्टेति** । भेर्यादिसम्बन्धिवाय्वन्तरादृष्टेत्यर्थः । **श्रावणत्वनिबन्धनमिति** । श्रावणत्वमपि भेर्यादिसम्बन्धिवायोरेव कल्प्यते । तन्निबन्धनं शब्दत्वमपि तस्यैव कल्प्यत इत्यर्थः । **तत्र चेति** । वायवीयत्वपक्षे शब्दस्य वायूपादानकत्वात् वर्णानां वाय्वतिरिक्तवर्णान्तराद्युपादानत्ववादाः दृष्टिविध्युपचारपक्षपातिन इत्यर्थः । **अवायवीयत्वपक्ष इति** । तदानीमुपादाननियमस्यावक्तव्यत्वादिति भावः । **रूपस्थानेति** । वायवीयत्वपक्षे रूपविधिर्दृष्टिविधिरेवेति भावः । सर्वथाऽनुपलब्धायोग्यरूपादिस्वीकारेऽतिप्रसङ्गमाशङ्क्याह **अनुपलम्भबाधितांशे वेति** । **भाष्यकारोक्ता युक्तय इति** । "रचनानुपपत्तेश्च" इति सूत्र इति शेषः । **आगन्तुकेति** । आगन्तुकत्वमेव परिणामत्वम्, न तु तस्यैव द्रव्यस्य

परिमाणपरिग्रहः । **वचनादिति** । आत्मसिद्धिवचनादिति भावः । **भेरीशब्दइत्यादिव्यवहारस्वारस्यादिति** । भेर्याः शब्दो भेरीशब्द इति व्युत्पत्त्या शब्दस्य भेरीनिष्ठत्वसिद्धेरिति भावः । **तरङ्गमारुतादिवदिति** । न हि मारुतः प्रभावत् तरङ्गधर्मः—अपितु तरङ्गोत्पादक इति भावः । वायवीयत्वं वदतामभिप्रायमाह **व्यञ्जकस्येति** । व्यञ्जकत्वं मीमांसकादिमते । **कारकत्वमुत्पादकत्वं नैयायिकमते** । **शब्दान्तरस्येति** । वाय्वतिरिक्तशब्दस्येत्यर्थः । **वाय्वन्तरादृष्टेति** । भेर्यादिसंबन्धिवाय्वदृष्टेत्यर्थः । **तत्र चेति** । वायवीयत्वपक्ष इत्यर्थः । **दृष्टिविध्यादय एवेति** । वायुरूपाणां सर्वेषां वर्णानामाकाशोपादानकत्वं स्पर्शतन्मात्रोपादानकत्वं वा; न त्वकाररूपवायुविशेषोपादानकत्वम् । रूपवत्त्वञ्च न संभवत्येव । अतो दृष्टिविधित्वमौपचारिकत्वं वा समाश्रयणीयमिति भावः। **अवायवीयद्रव्यत्वे त्विति** । वायुव्यतिरिक्तपृथिव्यादिरूपद्रव्यत्वे, अतिरिक्तद्रव्यत्वे वेत्यर्थः । सर्वथानुपलब्धायोग्यरूपादिस्वीकारेऽतिप्रसङ्गमाशङ्क्याह **अनुपलम्भेति** ॥ **भाष्यकारोक्ता इति** । "रचनानुपपत्तेश्च" इति सूत्र इति भावः । **आगन्तुकधर्मत्वाभिप्रायेणेति** । आगन्तुकत्वमेव परिणामशब्देन विवक्षितम्; न तु तस्यैव

आत्मसिद्धिवचनं तु परमतेन एकदेशिमतेन वा घटते । भट्टपराशरपादैः वाक्यनिरूपणे शब्दस्य गगनगुणत्वमेवाभिहितम् । "गगनगुणशब्दादिस्वरूपस्थितीः प्रवर्तयता भगवतैव योग्यार्थैदमर्थ्येन वाक्यप्रवाहस्य पूर्वमेवोपात्तत्वात्" इति । "यस्य वेदाः शरीरम्" इत्यादि तु देवताविशेषविषयत्वेनोपपन्नम् । एवमेवोपादान-रूप-स्थानादिव्यवहारोऽपि । एवम्, "तस्य प्रकृतिलीनस्य" इत्यादि उपपन्नं भवति । तत्तद्देवताक्षरेषु तत्तदुपादानत्वादिव्यवहारः उपचार-दृष्टिविध्यादिना तत्प्रयोगानुकूलमुपपाद्यः । अनियतोपादानत्वादिकं तु तत्त्वेष्वेवानियतोपादानत्ववदागमतदाभासयोः प्रामाण्याप्रामाण्याभ्यां निर्वाह्यम् । [1]आगमेषु न्यायतो नेयम् ।

एतेन अकारहकारविवादो निरस्तः । तत्र च न विरोध इत्येके । तथा हि—अकार एव

अवस्थान्तरसम्बन्धः ; येन द्रव्यत्वप्रत्युपगन्तव्यमिति भावः । आत्मसिद्धिवचनं त्विति । "दृश्यन्ते च" इत्यादि पूर्वोदाहृतवचनमित्यर्थः । योग्यार्थैदमर्थ्येनेति । प्रत्यक्षाबाधितार्थस्वभावतयैव वाक्यस्य सर्वप्रवर्तकेन भगवता सङ्कल्पितत्वात् शब्दस्य तादृशस्वभाव एव । न तत्स्वभावातिलङ्घनं कर्तुं सुशकमिति भावः । अत्र गगनगुणेत्यस्यैवांशस्योपयोगः । देवताविशेषविषयत्वेनेति । वेदाभिमानिनी देवता शरीरमिति तदर्थ इति भावः । एवमेवेति । तत्तदभिमानिदेवताया उपादानं रूपं स्थानविशेषश्च अभिमन्तव्यमन्त्रवर्णनिष्ठतया तेषु तेष्वागमेषु उपदिश्यन्त इत्यर्थः । तस्य प्रकृतिलीनस्येति । प्रणवाभिमानिदेवताया अकाराभिमानिदेवतायां विलीनत्वात् अकारे प्रणवो लीन इत्युच्यत इत्यर्थः । तत्तद्देवताक्षरेष्विति । तत्तद्देवताबीजाक्षरेषु तत्तद्देवतोपादानत्ववाद इत्यर्थः । तत्त्वेष्वेवेति । जगतः स्वतन्त्रप्रकृत्युपादानत्वपरमात्मोपादानत्वपरमाणूपादानत्ववादवदित्यर्थः । आगमेष्विति । द्वयोरपि प्रामाण्ये युक्तिसहमुपादेयमित्यर्थः । एतेनेति अकारः सर्वोपादानमिति क्वचन श्रूयते । क्वचित् हरिरोमित्युपक्रमात् हकारः सर्वोपादानमिति । तयोर्विरोधे आगमतदाभासविवेचनेन वा न्यायादिना वा निर्णयमित्यर्थ. । षोडश-

द्रव्यस्यावस्थान्तरापत्तिरिति भावः । आत्मसिद्धिवचनं त्विति, "दृश्यन्ते च" इत्यादि पूर्वोदाहृतवचनं त्विति भावः । योग्यार्थैदमर्थ्येनेति । प्रत्यक्षाबाधितार्थबोधकत्वतात्पर्येणेत्यर्थः । तथाच वेदवाक्यार्थबोधे वेदप्रवर्तकभगवत्तात्पर्यप्रमाया एव हेतुतया तादृशतात्पर्यविरोधेन प्रत्यक्षविरुद्धार्थबोधकत्वं वेदवाक्यानां न संभवत्येवेति भावः । देवताविशेषविषयत्वेनेति । वेदशब्दो वेदाभिमानिदेवतापर इति भावः । एवमेवेति । तत्रतत्र तत्तद्वर्णवाचकशब्दानां तत्तदभिमानिदेवतापरतया तत्तद्विग्रहतोपादानत्वरूपयोः तत्तद्देवतस्थानादेश्च प्रतिपादनान्नानुपपत्तिरिति भाव. । तस्य प्रकृतिलीनस्येति । प्रणवाभिमानिदेवताया अकाराभिमानिदेवतायां लीनत्वात् अकारे प्रणवो लीन इत्युच्यत इत्यर्थः । तत्तद्देवतेत्यादि । तत्तद्देवताबीजाक्षरेषु तत्तद्देवतोपादानत्ववाद इत्यर्थः । तत्त्वेष्वेवेति जगतः स्वतन्त्रप्रकृत्युपादानत्वपरमात्मोपादानत्वादिवदित्यर्थः । आगमेष्वित्यादि । द्वयोरपि प्रमाणत्वे न्यायानुरोधेन द्वयोरप्यविरोधः संपाद्य इत्यर्थ. । अकार-हकारविवादोऽपीति । "केषुचिद्ग्रन्थेषु" इत्यादिना प्रागुक्तः प्रणवांशभूताकारविकारत्व-हृल्लेखांशभूतहकारविकारत्वविवादोऽपीत्यर्थः । निरस्त

1 आगमेष्विति। वाय्वादेराकाशोपादानत्व-तन्मात्रोपादानत्व परमात्मोपादानत्वबोधकेष्विति भावः।

पूर्वतया परतया वा स्थित्वा षोडशवर्णमुपलक्षयति । स एवोपादानम् । अत एव च अचां हलाञ्च मध्ये द्व्यात्मकस्य तस्य पाठः । अनुभवसिद्धश्च प्रथमषोडशयोर्विपर्यस्तसंहितायां हत्वम् । यथा इकारादीनां यत्वादिकमिति । उक्तञ्चैतत् लक्ष्मीतन्त्रे । अत एव, "अ इति ब्रह्म" इति षोडश[क]-शिरस्क एव अकार आम्नायते । अन्ये तु एवं मन्यन्ते—न तावत् प्रणवे तस्य श्रवणमस्ति । नापि 'अःकारो वै सर्वा वाक्' इत्याम्नातम् । नापि ओकारादेशः सविभक्तिकतया घटते । विष्णुरेव सर्वकारणमिति प्रमाणनिर्णीतम् । तस्य प्रथम एव वाचकतया प्रसिद्धः । यद्यपि कचित् प्रमाणभूते

---

वर्णमिति षोडशो वर्णो विसर्जनीय तश्च अकारः सर्वोपादानमित्यत्र विसर्जनीयपूर्वो वा, विसर्जनीयपरो वा अकारः सर्वोपादानमित्यर्थः । न तु केवलकारमात्रम् । ततश्च अः ह इत्यनयोरुपादानत्वं सिध्यतीति भावः । स एवेति । षोडशवर्णात्मको योऽयमकारः स एवेत्यर्थः । द्व्यात्मकस्येति । अज्झल्रूपस्य विसर्जनीयस्य षोडशवर्णस्य पाठ इत्यर्थ । विपर्यस्तसंहितायामिति । व्युत्क्रमेण अव्यवधानोच्चारण इत्यर्थः । यथेकारेति । दधि×अत्र इत्यत्र संहितायां दध्यत्रेति प्रतीतेरिति भावः । अ इति ब्रह्मेतीति । शुद्धाकारमात्रनिर्देशे एति ब्रह्मेति निर्देशः स्यादिति भावः ॥ तस्येति । षोडशवर्णोपलक्षितस्येत्यर्थः । नापीति । अःकारो वै सर्वा वाक् इति नाम्नातम् इति योजना । सविभक्तिकतयेति । सविभक्तिकस्य अः इति प्रथमैकवचनान्तस्य षोडशवर्णस्य प्रणवान्तर्गतत्वे ओमिति रूपं न सिध्यतीति भावः । प्रथम एवेति । न तु षोडश इति भावः । तर्हि अकारहकारप्रकृतित्ववादविरोधः कथं परिहर्तव्य इत्याशङ्क्य, यथा अकारस्य सर्वकारणभूतपरमात्मवाचकत्वादकारे सर्ववर्णप्रकृतित्ववादः, एवं परमात्मवाचक[1]हरिशब्दैकदेशभूतस्यापि हकारस्य परमात्मवाचकत्वाभिमानात् कारणत्ववाद उपपद्यत इत्याह यद्यपीत्यादिना । ननु अकारस्य प्रकृतित्वे, "ओङ्कारप्रभवा वेदाः",

---

इति । आगमतदाभासरूपतया, द्वयोरप्यागमत्वे न्यायेन वा निर्णयादिति भावः । षोडशवर्णमिति । षोडशो वर्णो विसर्जनीयः । ततश्चाकारः सर्वोपादानमित्यत्र विसर्जनीयपूर्वो वा विसर्जनीयपरो वा अकारः सर्वोपादानमित्यर्थः ; न तु केवलाकारमात्रम् । इत्थञ्च अः ह इत्यनयोः सर्वोपादानत्वं सिद्ध्यतीति भावः। स एवेति । अकारोत्तरत्वाकारपूर्वत्वान्यतरविशिष्टः षोडशवर्ण एवेत्यर्थः । उपादानमिति । अकारस्योपादानतानियामक इत्यर्थः । द्व्यात्मकस्येति । अज्झल्रूपस्येत्यर्थः । तस्य षोडशवर्णस्य । विपर्यस्तसंहितायामिति । व्युत्क्रमेणाव्यवहितोच्चारण इत्यर्थः यथेकारादीनामिति । आदिना उकारादिपरिग्रहः। दधि अत्र, मधु अत्रेत्यादिषु संहितायां दध्यत्र मध्वत्रेति यकारवकारादिप्रतीतेरिति भावः । सविभक्तिकतयेति । अः इति प्रथमैकवचनान्तस्य प्रणवान्तर्गतत्वे ओमिति रूपं न सिध्येदिति भावः। तर्हि अकार-हकारप्रकृतित्वविवादः कथं परिहर्तव्य इत्याशङ्क्य, यथा अकारस्य सर्वकारणभूतपरमात्मवाचकत्वादकारे सर्ववर्णप्रकृतित्ववादः, एवं परमात्मवाचकशब्दैकदेशभूतस्यापि हकारस्य परमात्मवाचकत्वाभिमानात् कारणत्ववाद उपपद्यत इत्याह यद्यपीत्यादिना । नन्वकारस्य सर्ववर्णप्रकृतित्वे

---

1 हरीति । विधाधिदैवतवाचिहयग्रीवादिशब्दैकदेशेऽप्यपि भाव्यम् ।

तन्त्रे हकारपरिग्रहोऽप्यस्ति, तथापि तस्य परमात्माक्षरत्वमभ्युपगम्येति मन्तव्यम्। प्रणवात् सर्वोत्पत्तिप्रकारस्तदंशद्वारेति श्रुत्यादिभिरनुसन्धेयः। तत्र त्रिवेदीप्रसङ्गे मकारपर्यन्तनिरूपणम्; अथर्वादिविवक्षायां तु नादशिरस्त्वम्। तदेवमकार गार्हपत्य-गायत्री-प्रथमपाद-ऋग्वेद-स्वर्लोकादि-प्रकारेण अवान्तरगर्भभेदोऽनुसन्धेयः॥ अकारात् प्रणवोत्पत्तिः कथमिति चेत्—अकारवाच्यात् परमात्मनः प्रणवाधिष्ठातृदेवताया वा तदंशदेवतादीनां वोत्पत्तेरिति सुस्थम्।

तदेवमद्रव्यत्वपक्ष एव शब्दस्य स्वभावः। एवञ्च सति श्रोत्रवृत्तिर्वा, व्यञ्जकवाय्वागमनं वा, शब्द-

---

"प्रणवाद्यास्तथा वेदाः", "ओङ्कारेण सर्वा वाक् संतृण्णा", "ओङ्कार एवेदँ सर्वम्" इति प्रणवप्रकृतित्वस्य का गतिरित्याशङ्क्याह तदंशद्वारेति। प्रणवांशभूताकारस्य प्रकृतित्वात् प्रणवस्य प्रकृतित्वोक्तिरिति भावः। प्रणवे वेदत्रयात्मकत्ववेदचतुष्टयात्मकत्वोक्त्योर्विरोधं परिहरति तत्र त्रिवेदीप्रसङ्ग इति। नादेति। अर्धमात्रात्मको मकारादुत्तरो नाद इति मन्त्रशास्त्रप्रसिद्धिः। ततश्च नादेन सह चतुरक्षरत्वाद्वेदचतुष्टयात्मकत्वोक्तिरविरुद्धेति भावः। तदेवमिति। "तस्य ह वै प्रणवस्य या पूर्वा मात्रा पृथिव्यकारः स ऋग्भिर्ऋग्वेदो ब्रह्मा वसवो गायत्री गार्हपत्यः सा साम्नः प्रथमः पादो भवति। [या] द्वितीयाऽन्तरिक्षं स उकारः स यजुर्भिर्यजुर्वेदो विष्णू रुद्रास्त्रिष्टुप् दक्षिणाग्निः सा साम्नो द्वितीयः पादो भवति। [या] तृतीया द्यौः स मकारः स सामभिः सामवेदो रुद्र आदित्या जगत्याहवनीयः सा साम्नस्तृतीयः पादो भवति। याऽवसानेऽस्य चतुर्थी अर्धमात्रा, स सोमलोक ओङ्कारः स आथर्वणैर्मन्त्रैरथर्ववेदः संवर्तकोऽग्निर्मरुतो विराडेकर्षिर्भास्वति सा साम्नश्चतुर्थः पादो भवति" इत्येवम् अकारादेरेकैकस्य गार्हपत्य-गायत्री-प्रथमपाद-ऋग्वेद-स्वर्लोकादिप्रकारेण योऽयमवान्तरभेदः स सर्वोऽपि उपास्यत्वविवक्षया अभिहित इत्यनुसन्धेय इति भावः। ननु अकारस्यापि प्रणवांशत्वात् अकारात् प्रणवोत्पत्ति(त्तिः कथमिति?) शङ्कते अकारात् प्रणवोत्पत्तिरिति। ननु प्रणवाधिष्ठातृदेवताया अपि परमात्मस्वरूपतया तत्स्तदुत्पत्तिरयुक्तेत्यस्वरसादाह तदंशेति। प्रणवाधिष्ठातृदेवतांशभूतसंकर्षणादिदेवतानामित्यर्थः। [यद्वा] प्रणवांशभूताकारोकारमकाराधिष्ठातृदेवतानामिति वाऽर्थः। श्रोत्रवृत्तिर्वेति। चक्षुरादिवत् श्रोत्रेन्द्रियस्य विषयदेशगमनमित्यर्थः। व्यञ्जकेति। ततश्च व्यञ्जकवायुसंबन्धवशेन विप्रकृष्टमपि शब्दं श्रोत्रेन्द्रियं गृह्णातीत्यर्थः। शब्दवद्धेत्याद्य-

---

प्रणवात् सर्वोत्पत्त्यभिधानं कथं संघटेतेत्याशङ्क्याह प्रणवादिति। तदेकदेशद्वारेति। प्रणवांशभूताकारस्योक्तरीत्या सर्वप्रकृतित्वात् प्रणवस्य सर्वप्रकृतित्वाभिधानमित्यर्थः। प्रणवे वेदत्रयात्मकत्ववेदचतुष्टयात्मकत्वोक्त्योः कथमविरोध इत्याशङ्क्याह तत्रेति। नादेति। अर्द्धमात्रात्मको मकारादुत्तरो नाद इति मन्त्रशास्त्रप्रसिद्धिः। तदंशदेवतादीनामिति। प्रणवांशभूताकाराद्यधिष्ठातृसंकर्षणादीनामित्यर्थः। अत्र विग्रहाद्विग्रहोत्पत्तिमादायैव जन्यजनकभावो बोद्धव्यः। श्रोत्रवृत्तिर्वेति। चक्षुरादिवत् श्रोत्रेन्द्रियस्य विषयदेशगमनमित्यर्थः। व्यञ्जकेति। शब्दसाक्षात्कारहेतुभूतवायुविशेषस्य भेर्याघातादिजन्यस्य श्रोत्रेन्द्रियसंबन्धादेव शब्दसाक्षात्कारोपपत्त्या तादृशवायुविशेषागमनेन श्रोत्रसंबन्धाद् दूरस्थशब्दसाक्षात्कार इत्यर्थः। शब्दवदित्यादि। शब्दवतां भेर्याद्यवयवानामागमनमित्यर्थः। इदञ्च शब्दस्य भेर्याद्या-

वद्भेर्याद्यवयवागमनं वा, शब्दवद्वाय्वागमनमेव वा यथाप्रतीति भाव्यमिति ॥ इति शब्दो निरूपितः।

असदादिस्पर्शनेन्द्रियग्राह्यविजातीयव्यावृत्ताद्रव्यं स्पर्शः। स त्रिविधः—शीतोष्णानुभयात्मकभेदात्। अप्सु शीतः; तेजस्युष्णः; क्षितिपवनयोरनुष्णाशीतः। भूतान्तरसंसर्गात् सर्वत्र स्पर्शसङ्करावभासः; न तत्त्वतः; तथाऽन्वयव्यतिरेकात्। एवं क्वचित् स्पर्शानवभासोऽपि। तत एव च त्वचा रत्नालोकाद्यग्रहणम्। तदुक्तमन्वयाधिकरणे भेदाभेदविरोधनिदर्शने त्रिवरणकारैः— "यथा शीतं न कदाचिदप्युष्णम्। वाय्वौष्ण्यं तु तत्स्थाग्नेः, न तु तत्स्वाकारात्। पाकजो हि गुणः पाकादपैतीति हि तत्त्वविदः। वह्निरूपानुपलम्भस्तुल्यरूपाभिभवात्, तत्स्पर्शोपलम्भस्तु अन्य-

---

वयवागमनमिति। शब्दवतां भेर्याद्यवयवानां आगमनमित्यर्थः। इदञ्च शब्दो भेर्याद्याश्रित इति पक्षेणेति ध्येयम्। शब्दवद्वाय्वागमनमेव वेति। शब्दवतो वायोरागमनमित्यर्थः। इदञ्च शब्दस्य वायुगुणत्वपक्ष इति ध्येयम्। अद्रव्यत्वपक्षेऽपि वीचीतरङ्गकदम्बगोळन्यायो नाश्रयणीय इति तात्पर्यम् ॥

असदादीति। विजातीयव्यावृत्तेत्यस्य प्रयोजनं नित्यविभूतिलक्षणे उक्तम्। उष्णा पृथिवी, उष्णं जलम् इत्यादिप्रतीतिव्यवहारौ कथमित्याशङ्क्याह भूतान्तरसंसर्गादिति। तथाऽन्वयव्यतिरेकादिति। अग्न्यातपादिसम्बन्धे सत्येव उष्णत्वादिव्यवहारादित्यर्थः। स्पर्शानवभासोऽपीति। वाय्वौष्ण्योपलम्भस्थले तद्गतानुष्णाशीतस्पर्शानवभासोऽपि तत्स्थाग्निसम्बन्धकृत इत्यर्थः। तत एव चेति। अनुद्भूतत्वेन स्पर्शस्याग्रहणात् त्वचा रत्नालोकस्याग्रहणम्; त्वगिन्द्रियस्य स्पर्शपुरस्कारेण प्रवृत्तेरिति भावः। पाकजो हीति। वायवीयानुष्णाशीतस्पर्शस्याप्यपाकजतया तस्य पाकविनाश्यत्वाभावेन पूर्वस्पर्शविनाशपूर्वकस्पर्शान्तरोत्पत्त्यसम्भवादिति भावः। वह्निरूपानुपलम्भ इति। वायुस्थ-

---

श्रितत्वमभिप्रेत्य। शब्दवद्वाय्वागमनमिति। शब्दवतो वायोरागमनमित्यर्थः। इदञ्च शब्दस्य वायुगुणत्वाभिप्रायेण। इत्थञ्च द्रव्यत्वपक्षेऽपि वीचीतरङ्गन्यायः कदम्बमुकुलन्यायो वा नाश्रयणीय इति भावः ॥

असदादिस्पर्शनेन्द्रियग्राह्यविजातीयव्यावृत्ताद्रव्यमिति। रूपादिवारणाय व्यावृत्तान्तम्। पृथिव्यादिवारणायाद्रव्यत्वनिवेशः। असदादिस्पर्शनेन्द्रियग्राह्यत्वोक्तौ यादृशस्पर्शविशेषोऽसदादिस्पर्शनेन्द्रियेणागृहीत एव विनष्टः तत्राव्याप्तिः स्यात्, अतो विजातीयव्यावृत्तेत्युक्तम्। रूपादिभेदकूटवत्त्वं तदर्थः। स्पर्शसङ्करावभास इति। पृथिवीजलवायुषूष्णस्पर्शावभासः, पृथिवीवायुषु(ष्वोः?) शीतस्पर्शावभासश्चेत्यर्थः। न तत्त्वत इति। न अनारोपितरूपेणेत्यर्थः, न अनारोपितस्पर्शप्रकारक इत्युक्तं भवति। जलादावुष्णस्पर्शप्रतीतिदशायां तदीयशीतस्पर्शानवभासोऽपि तदवभासप्रतिबन्धकीभूततेजस्संसर्गप्रयुक्त एवेत्याह एवमिति। तत एवेति। स्पर्शानवभासादेवेत्यर्थः। त्वचा रत्नालोकाद्यग्रहणमिति। त्वाचप्रत्यक्षस्य स्पर्शप्रकारत्वनियमात् रत्नालोकसंसृष्टपृथिवीभागगतस्पर्शस्याप्यनुद्भूततया भानासंभवादिति भावः। वस्तुतस्तु दीपप्रभाया इव रत्नालोकस्याप्यनुद्भूतस्पर्शवत्त्वादेव न त्वाचप्रत्यक्षम्—द्रव्यवृत्तिलौकिकविषयतासंबन्धेन त्वाचप्रत्यक्षं प्रति उद्भूतस्पर्शस्य हेतुत्वात्। अतो न रत्नालोकस्पर्शस्याभिभवः स्वीकार्यः। पाकजो हीति। वायवीयानुष्णाशीतस्पर्शस्यापाकजतया तस्य पाकविनाश्यत्वाभावेन पूर्वस्पर्शनाशपूर्वकस्पर्शान्तरोत्पत्तिर्न संभवतीति भावः। वह्निरूपानुपलम्भ इति। वायुस्थ-

स्पर्शानभिभवात् (तत्स्पर्शानुपलम्भोऽन्यस्पर्शाभिभवात्) इत्युपलब्धिव्यवस्थाप्यम्'' इति । अनुष्णाशीतोऽपि स्पर्श एव; न तु शीतोष्णविरहमात्रम्; आकाशादावपि तथोपलम्भप्रसङ्गात्। वायुपृथिव्योः स्पर्शवत्त्वस्य श्रुत्यादिसिद्धत्वाच्च। न च स्पर्शसामान्यं तदिति वाच्यम्; निर्विशेषसामान्याभावात्॥ [1]अनुपलब्धशीतोष्णविशेषं तदेवेत्यपि न वाच्यम्; अत्यन्तानुपलब्धस्य विशेषस्य कल्पकाभावात्, आगमाभावाच्च॥ केचित्तु सजातीयवृद्धिहेतुत्वस्य सामान्यतो दर्शनात् शीतस्य वातवृद्धिहेतुत्वात् वातोऽपि शीत इति वर्णयन्ति॥ तदसत्; रसादिसाम्ये प्रभावादिवैषम्यवत् अत्रापि स्वभाववैचित्र्योपपत्तेः विपक्षे बाधकाभावात्। न च वायोः शैत्यानुपलम्भप्रसङ्गो बाधकः;

---

वह्निरूपानुपलम्भ इत्यर्थः। **तुल्यरूपाभिभवादिति**। अत्र अभिभावकं पार्थिवाऽऽप्यादिरूपं वायुसंपृक्तसम्भावितं द्रव्यम्। ननु वायुस्थाग्निरूपस्य केनचित् वायुसंसृष्टेनाभिभवे तत्स्पर्शस्यापि अनुपलम्भप्रसङ्ग इत्यत आह **तत्स्पर्शोपलम्भस्तु अन्यस्पर्शानभिभवादिति**। ननु रूपस्याभिभवः, न स्पर्शस्येति कथमित्यत आह **उपलब्धीति**। तत्स्पर्शानुपलम्भोऽन्यस्पर्शाभिभवादिति पाठे वायुस्पर्शानुपलम्भ इत्यर्थः। **तथोपलम्भेति**। वायुवदुपलम्भेत्यर्थः। **श्रुत्यादिसिद्धत्वाच्चेति**। "शब्दैकगुण आकाशः शब्दस्पर्शगुणोऽनिलः" इत्यादिप्रमाणसिद्धत्वादित्यर्थः। **अनुपलब्धशीतोष्णविशेषमिति**। निर्विशेषसामान्यस्याभावेन विशेषसत्त्वेऽपि स विशेषो नोपलभ्यते, कोलाहलेकत्वानुपलम्भवदिति भावः। **अत्यन्तानुपलब्धस्येति**। शीतोष्णत्वविशेषस्येत्यर्थः। **सामान्यत इति**। "वृद्धिः समानैः सर्वेषां विपरीतैर्विपर्ययः" इति वैद्यशास्त्रे लोके च प्रसिद्धत्वादित्यर्थः। **वातवृद्धीति**। शीतद्रव्यस्य वायुवर्धकत्वं वैद्यशास्त्रसिद्धम्। येन च यत् संवर्ध्यते तत् तत्सजातीयमित्यपि सिद्धम्। अतः शीतद्रव्यसंवर्ध्यमानवातस्य शीतद्रव्यसाजात्यमवश्यमभ्युपगमनीयमित्यर्थः। **रसादिसाम्य इति**। खर्जूरपनसफलादीनां मधुररसादिसाम्येऽपि पनसफलस्य यादृशो वातधातुवर्धकत्वप्रभावः, न तादृशः खर्जूररसस्येति ईदृशप्रभाववैषम्यस्य स्वभावनिबन्धनत्ववत् इदमपि स्वभावनिबन्धनमेवेत्यर्थः। **विपक्षे बाधकेति**।

---

वह्निरूपानुपलम्भ इत्यर्थः। **तुल्यरूपाभिभवादिति**। अत्राभिभावकं रूपं वायुसंयुक्तपार्थिवभागस्य आप्यभागस्य वा ज्ञेयम्। वस्तुतस्तु वायुसंयुक्तवह्निविशेषरूपस्यानुद्भूतत्वादेव न तदुपलम्भ इति ध्येयम्। एतेन वायुसंयुक्तपार्थिवभागगतस्य रूपस्योद्भूतत्वे प्रत्यक्षविषयत्वप्रसङ्गः; अनुद्भूतत्वेऽन्यदीयरूपाभिभावकत्वानुपपत्तिरित्यपास्तम्। **अन्यस्पर्शानभिभवादिति**। उद्भूतत्वादित्यपि बोद्धव्यम्। **स्पर्श एवेति**। उष्णस्पर्शशीतस्पर्शविलक्षणस्पर्श एवेत्यर्थः। **तथोपलम्भेति**। वायुवदुपलम्भेत्यर्थः। **अनुपलब्धशीतोष्णविशेषमिति**। अनुपलब्धशीतस्पर्शत्वोष्णस्पर्शत्वरूपवैलक्षण्यकमित्यर्थः। **तदेवेति**। स्पर्शसामान्यमेवेत्यर्थः। स्पर्शत्वरूपसामान्यधर्ममात्रेण भासमानमिति तात्पर्यम्। उष्णस्पर्शस्य शीतस्पर्शस्य चोष्णस्पर्शत्वशीतस्पर्शत्वरूपविशेषभानविरहे स्पर्शत्वरूपसामान्यधर्ममात्रभानम्, न तूष्णस्पर्शशीतस्पर्शविलक्षणः कश्चन स्पर्शविशेष इत्युक्तं भवति। **विशेषस्येति**। शीतस्पर्शत्वोष्णस्पर्शत्वरूपविशेषस्येत्यर्थः। **दर्शनादिति**। "वृद्धिः समानैः सर्वेषां

---

1 अनुपलब्धेति। तत्र सामान्ये शीतत्वरूप उष्णत्वरूपो वा विशेष एवानुपलभ्यतयाऽस्तु इति शंका। तत्र मानाभावादिव क्लृप्तयोर्विनिगमनाविरहादपि कल्प्योऽन्यो विशेष इति ध्येयम्।

हिमाद्यनुपहितदशायामातपाद्युपहितदशायाञ्च प्रसङ्गस्येष्टत्वात्। हिमाद्युपहितदशायां तु शीतोपलम्भस्य औपाधिकतया अन्यथासिद्धत्वात्। अन्यथा उष्णानुपलम्भप्रसङ्गादुष्णस्य कल्प्यत्वात्। [उष्णस्याकल्पकत्वात्] किं तत्रानुग्राह्यमिति चेत्, उष्णारम्भकत्वम्। न हि अनुष्णमुष्णद्रव्योपादानमस्ति; उष्णस्य च तेजसो वायुरुपादानमिति। तदेवमनुष्णाशीतो वायुः। पृथिवी च॥

स्पर्शः पुनर्द्विधा—पाकजोऽपाकजश्चेति॥ पृथिव्यां पूर्वः, इतरेषु त्रिषु परः। तत्र अमृतगरळकपिकच्छूतूलोपलगोब्राह्मणचण्डाळादिस्पर्शविशेषाः पाकजभेदाः।

अनुष्णाशीतस्पर्शवत्त्व-शीतत्वानभ्युपगम इत्यर्थः। उष्णस्य कल्प्यत्वादिति। यदि शीतानुपलम्भप्रसङ्गात् शीतत्वं कल्प्यते, तर्हि उष्णानुपलम्भप्रसङ्गात् उष्णस्यापि कल्प्यत्वप्रसङ्गादित्यर्थः। उष्णस्याकल्पकत्वादिति पाठे [1]अकल्पकत्वादित्यस्य कल्पकशून्यत्वादित्यर्थः। अकल्प्यत्वादिति यावत्। उष्णानुपलम्भप्रसङ्गाद् बाधकात् उष्णस्पर्शकल्पनानङ्गीकारादिति भावः। किं तत्रानुग्राह्यमितीति। किमुष्णत्वसाधकमनुग्राह्यम्? [2]उत शीतत्वसाधकमिति भावः। उष्णारम्भकत्वमिति। उष्णारम्भकत्वरूपमुष्णत्वसाधकमित्यर्थः। अनुग्राह्यमिति शेषः। तत्र हेतुमाह नहीति। वायुरुपादानमिति। ततश्च औष्ण्योपलम्भात् उष्णद्रव्यारम्भकत्वयुक्त्यनुगृहीतादुष्णत्वमेव कल्पयितुमुचितम् न सर्वदा त्वदभिमतं शीतत्वमिति भावः॥

अमृतगरळेति। अमृतस्पर्शो जीवनहेतुः। अन्यो विपरीतः। कपिकच्छूरिति। कण्डूतिजनक ओषधिविशेषः। "कपिकच्छूश्च मर्कटी" इत्यमरः। तत्र च दुस्स्पर्शः स्पर्शः। अत एव वक्ष्यति, "विषामृतदुस्स्पर्श" इति। गोब्राह्मणस्पर्शः शुद्धिहेतुः; अन्यस्तु न तथेति भावः।

विपरीतैर्विपर्ययः" इति वैद्यशास्त्रे लोके च दर्शनादित्यर्थः। प्रभावः धातुवर्धकत्वादिरूपः। विपक्षे बाधकाभावादिति। शीतत्वानुपगमे बाधकाभावादित्यर्थः। किं तत्रानुग्राह्यमिति। उष्णस्पर्शानुपगमे वायावुष्णानुपलम्भप्रसङ्गरूपतर्कस्यानुग्राह्यमुष्णत्वसाधकं प्रमाणमित्यर्थः। यथा शीतस्पर्शानुपगमे शीतानुपलम्भप्रसंगरूपतर्कस्यानुग्राह्यं, 'वातः शीतस्पर्शवान् शीतसंबन्धित्वात् श्लेष्मवत्' इत्यनुमानमस्ति, तथोष्णस्पर्शसाधकस्य कस्यापि प्रमाणस्यादर्शनात् तर्कमात्रेण वस्तुसिद्ध्यसंभवात् नोक्तप्रतिबन्धकाश इति भावः। उष्णारम्भकत्वमिति। अनुग्राह्यमित्यनुषङ्गेणान्वयः। वायुरुष्णस्पर्शवान् उष्णस्पर्शवदारम्भकत्वात् महाभ्रारम्भकाप्यादिवदित्यनुमानमेवानुग्राह्यमिति भावः। तथाचोष्णोपलम्भस्यान्यथासिद्धत्वात् विपक्षे बाधकाभावादेव [एतदनुमानेन?] वायावुष्णस्पर्शसिद्ध्यसंभवस्य वक्तव्यतया तथैव शीतस्पर्शसिद्ध्यसंभव इत्युक्तं भवति। व्याप्तिं दर्शयति नहीति। उष्णद्रव्योपादानमनुष्णं न ह्यस्तीत्यन्वयः। उष्णद्रव्योपादानमुष्णमेव ह्यस्तीति तदर्थः। द्वौ नञावितिन्यायात्। तेन च उष्णत्वे उष्णद्रव्योपादानत्वसमानाधिकरणाभावाप्रतियोगित्वरूपव्यापकत्वं लभ्यत इति उक्तवाक्यस्य व्याप्तिप्रदर्शनपरत्वमुपपद्यते। पक्षधर्मतां दर्शयति उष्णस्य चेति।

अमृतगरळेति। अमृतस्पर्शो जीवनहेतुः, गरळस्पर्शस्तु विपरीतः। कपिकच्छूरिति—कंडूतिजनकौषधिविशेषः। "कपिकच्छूश्च मर्कटी" इत्यमरः। गोब्राह्मणस्पर्शः शुद्धिहेतुः, अन्यस्त्वशुद्धिहेतुः। अत्रेदं बोध्यम्—शरीरे अमृतादिसंयोग एव जीवनादिहेतुः; न त्वमृतादिनिष्ठस्पर्शः; वैयाधि-

1 अयं पाठः पूर्ववाक्यस्थाने वाऽधिकपाठो वेति विचार्यम्। 2 इदमधिकम्। द्वितीयव्याख्यानं शुद्धम्।

मात्रेण प्रथममङ्कुरः पृथिव्युत्पत्तिः। परस्तात् पाकभेदाद्भेदोऽन्वयव्यतिरेकादिसिद्धः। मृदुकठिनभावादयोऽपि स्पर्शविशेषा एव; स्पर्शनेनैव तदुपलब्धेः। चक्षुषा तु तदविनाभूतरूपादिग्रहणद्वारा स्पर्शमात्रस्येव तेषामपि यथायथमनुमानमेव। करकादिकाठिन्यं पृथिवीयोगात्। मृदुपवनादिव्यवहारो वेगमान्द्यादिना। केचित्तु तेषां संयोगविशेषत्वमातिष्ठन्ते॥ गोब्राह्मणचण्डा-

परस्तादिति। न च पाकभेदेन रूपरसादिभेदवत् स्पर्शभेदो नोपलभ्यते इति वाच्यम्; पाकेन मार्दवादिदर्शनादिति भावः। ननु मृदुकठिनभावादयः संयोगविशेषा एवेत्याशङ्क्याह मृदुकठिनभावादय इति। तत्र हेतुमाह स्पर्शनेनैवेति। स्पर्शनेन्द्रियग्राह्यत्वस्यैव स्पर्शशब्दप्रवृत्तिनिमित्तत्वादिति भावः। ननु चक्षुषाऽपि वस्तुमार्दवादिकमुपलभ्यमानं दृश्यते इति न स्पर्शनेन्द्रियमात्रग्राह्यत्वं मार्दवादीनामित्याशङ्क्य मृदुत्वादिव्याप्तरूपविशेषात् तत्रानुमेयत्वमेवेत्याह चक्षुषा त्विति। स्पर्शमात्रस्यैवेति। यदि चक्षुस्सन्निकर्षानन्तरमेव मृदुत्वाद्युपलम्भात् तस्य चाक्षुषत्वमुच्येत, तर्हि पुरोवर्तिनि शीतोष्णादेः स्पर्शस्याप्युपलम्भात् स्पर्शोऽपि चाक्षुषः स्यात्। यदि चक्षुषो रूपग्रहण एवोपक्षयः, स्पर्शस्तु रूपादनुमीयते इति मतम्—तर्हि प्रकृतेऽपि समानमिति भावः। ननु मार्दवकाठिन्यादेः पाकजत्वे पाकजस्पर्शानाधारवायुकरकादौ तत्प्रतीतिः कथमित्याशङ्क्य भूतान्तरसंसर्गेणेत्याह करकादीति। तेषामिति। मार्दवादीनामित्यर्थः। संयोगविशेषत्वमिति। अवयवसंयोगगतविशेषरूपत्वमातिष्ठन्ते इत्यर्थः।

करण्येनान्यनिष्ठकार्यं प्रति हेतुत्वासंभवात्। न च स्वाश्रयसंयोगसंबन्धेनैव स्पर्शस्य हेतुत्वाभ्युपगमात् नोक्तदोषावकाश इति वाच्यम्; लाघवेनाश्रयतासंबन्धेनामृतादिसंयोगस्यैव हेतुत्वौचित्यात् स्वाश्रयसंयोगसंबन्धेनामृतरूपादेर्हेतुतामादाय विनिगमनाविरहप्रसङ्गाच्च ब्राह्मणादिस्पर्शस्य पवित्रताबोधकागमादौ स्पर्शशब्दस्यापि संयोगपरत्वमेव। स्पृशतेस्सकर्मकत्वानुरोधेन संयोगावच्छिन्नव्यापारार्थकत्वावश्यम्भावेन ब्राह्मणेन स्पृष्टं शुचीत्यादौ ब्राह्मणव्यापाराधीनसंयोगवत् शुचीत्येवार्थात्। अस्तु वा ईदृशस्थले स्पृशतेः [1]संयोगमात्रार्थकत्वम्—सर्वथा न त्वगिन्द्रियमात्रग्राह्यगुणविशेषपरत्वम्; अमृतेन स्पृष्टम्, विषेण स्पृष्टमित्यादिव्यवहारासंभवप्रसङ्गात्। न ह्यमृतादिगतस्पर्शाश्रयत्वं वस्त्वन्तरस्य संभवति। अतोऽमृतादिषु त्वङ्मात्रग्राह्यगुणविशेषवैषम्यं मृदुत्वादिरूपमेव ग्राह्यम्। गोब्राह्मणादिषु तादृशस्पर्शवैलक्षण्यानुपलम्भे तु नास्त्येव तद्वैलक्षण्यम्। एतदभिप्रायेणैव [2]यद्वेत्यादि वक्ष्यत इति। परस्तादिति। न च पाकभेदात् रूपरसादिभेदवत् न स्पर्शभेदोपलब्धिरिति वाच्यम्; पाकेन मार्दवादिदर्शनात्। स्पर्शविशेष एवेत्येवकारेण संयोगविशेषरूपत्वव्यवच्छेदः। तत्र हेतुमाह स्पर्शनेनै

1 संयोगमात्रेति। तावतैव धातुविशेषनिबन्धनं सकर्मकत्वमिति भावः।

2 प्रभां स्पृशामीत्यादिव्यवहाराभावात् स्पृशतेः सामानाधिकरण्यसंबन्धेन स्पर्शविशिष्टसंयोग एव मुख्यार्थः। अतः संयोगस्येव स्पर्शस्यापि कारणत्वमंगीकर्तव्यमिति स्पर्शे अवान्तरभेदस्वीकारेण प्रथमपक्षः। किञ्चिद्दूरमेव अग्निसमीपे स्पर्शविशिष्टावयवप्रसरणवत् चण्डालादिशरीरीयस्पर्शविशिष्टावयवप्रसरणमेष्टव्यमिति तादृशसंयोगः शास्त्रगम्य इति। संयोगरूपार्थमात्रे पर्यवसानविवक्षया यद्वेति पक्षान्तरमित्याशयः।

ळादिषु कथं स्पर्शभेद इति चेत्—तदधीनशुद्ध्यशुद्ध्यादिभेदात्॥ जातिभेदादेव तदुपपत्तिरिति चेत्—जातिभेद एव कुतः॥ मातापितृसंबन्धप्रकारभेदादिति चेन्न; मानसब्राह्मणादिषु तदभावात्। यद्वा धर्माधर्मतारतम्याधीनसत्त्वरजस्तमस्तारतम्यात् शक्तितारतम्याद्वा शुद्ध्यादिसिद्धिरिति

---

कथं स्पर्शभेद इति चेदिति। शीतोष्णमार्दवादित्वगिन्द्रियग्राह्याकारविशेषातिरिक्ते स्पर्शविशेषे किं प्रमाणमित्यर्थः। कार्यवैषम्यं प्रमाणयति तदधीनेति। जातिभेदादिति। ब्राह्मणत्वजातिसमानाधिकरणस्पर्शः शुद्ध्यापादकः चण्डालत्वसमानाधिकरणस्पर्शोऽशुद्ध्यापादक इति ब्राह्मणत्वादिजातिविशेष एव प्रयोजकः, न तु स्पर्शावान्तरविशेषः कल्प्यते इति भावः। मातापितृसम्बन्धेति। ब्राह्मण्यां ब्राह्मणात् जातत्वमेव ब्राह्मणत्वजातिनिबन्धनमित्यर्थः। मानसेति। ब्रह्मणा मनोमात्रसृष्टे, "स मानसान् सप्त पुत्रानसृजत" इति श्रुतिसिद्धे आद्ये ब्राह्मणे, तपोबलार्जितब्राह्मण्ये विश्वामित्रादौ च तदभावात्। अतो ब्राह्मणत्वजातेः दुर्निरूपत्वात् स्पर्शे स्वाभाविक एव विशेष इति भावः। ननु सर्वैरपि वैदिकैर्ब्राह्मणव्यवहारालम्बनस्य कस्यचित् वक्तव्यतया तत्खण्डनमनुचितमित्यभिप्रयन् आह यद्वेति। सत्त्वरजस्तमस्तारतम्यादिति। तथाच तारतम्यविशेष एव तद्व्याप्तमन्यद्वा ब्राह्मणत्वादिकं स्पृश्यत्व(त्वादि?)-

---

वेति। संयोगविशेषरूपत्वे चक्षुषापि तदुपलब्धिप्रसङ्ग इति भावः। कथं स्पर्शभेद इति। प्रत्यक्षतो वैलक्षण्यानुपलब्धेरिति भावः। कार्यवैलक्षण्यादनुमेयं तद्वैलक्षण्यमित्यभिप्रायेणाह तदधीनेति। जातिभेदादेव तदुपपत्तिरिति। ब्राह्मणत्वादिजातेरेव स्वाश्रयसंयोगसंबन्धेन स्पर्शविशेषस्येव शुद्ध्यादिहेतुत्वसंभवान्न स्पर्शविशेषः परिकल्पनीय इति भावः। कुत इति। जातिभेदनियामकस्यैव दुर्निरूपतया न तस्य शुद्ध्यादिहेतुत्वसंभव इति भावः। मातापितृसंबन्धेति। ब्राह्मण्यां ब्राह्मणाज्जातत्वमेव ब्राह्मणत्वनियामकमित्यादिरीत्या जातिभेदनियामकं सुनिरूपमेवेत्यर्थः। मानसेति। ब्रह्मणो मनोमात्रसृष्टे, "स मानसान् सप्त पुत्रानसृजत" इत्यादिश्रुतिसिद्धे आद्ये ब्राह्मणे व्यभिचारेण ब्राह्मणमातापितृ[जात?]त्वस्य ब्राह्मण्यनियामकत्वासंभवादिति भावः। इदमुपलक्षणम्—ब्राह्मणत्वस्यैव दुर्निरूपतया उक्तरूपस्य ब्राह्मणत्वनियामकत्वाभिधानं न संभवतीत्यपि बोद्धव्यम्। तथाच स्पर्श एव किञ्चिद्वैलक्षण्यमभ्युपगम्य विलक्षणस्पर्शस्यैव स्वाश्रयसंयोगसंबन्धेन शुद्ध्यादिहेतुत्वमनायत्या वाच्यमित्यभिप्रायः। ननु (?) सर्वैरपि वैदिकैर्ब्राह्मणादिव्यवहारालम्बनधर्मविशेषाणां तन्नियामकानाञ्चावश्यं वाच्यतया तेषां दुर्निरूपत्वाभिधानानौचित्यं प्रागुक्तरीत्या स्पर्शविशेषस्य शुद्ध्यादिहेतुत्वासंभवञ्चाभिप्रेत्याह यद्वेति। सत्त्वेत्यादि। अयमर्थः— उद्रिक्तसत्त्वगुणवत्त्वं ब्राह्मणत्वम्, उद्रिक्तरजोगुणवत्त्वं क्षत्रियत्वम्, उद्रिक्ततमोगुणवत्त्वं शूद्रत्वम्, अल्पोद्रिक्तरजस्तमोगुणवत्त्वं वैश्यत्वम्। "तमश्शूद्रे रजः क्षत्रे ब्राह्मणे सत्त्वमुत्तमम्" इत्यादिभिस्तथावगमादिति। शक्तितारतम्याद्वेति। शक्तिविशेषरूपाणां ब्राह्मणत्वादीनामुत्कर्षापकर्षाभ्यां वेत्यर्थः। शुद्ध्यादिसिद्धिरिति। उद्रिक्तसत्त्वगुणवत्त्वरूपस्य शक्तिविशेषरूपस्य वा ब्राह्मणत्वस्य स्वाश्रयसंयोगसंबन्धेन उक्तब्राह्मणत्वाश्रयसंयोगस्यैव वाऽऽश्रयतासंबन्धेन शुद्धिहेतुत्वम्; एवमुद्रिक्ततमोगुणवत्त्वरूपस्य शक्ति-

---

1 ननु इति पदं मा भूत्। अनन्वयात्।

न स्पर्शभेदास्ते । अपाकजस्पर्शेषु तु तारतम्यं संसर्गादिभेदात् ॥ पवनसलिलयोरपि पाकज-स्पर्शः किं न स्यादिति चेत्—औष्ण्यशान्तौ स्पर्शान्तरस्य पाकजस्य पृथिवीवत् अननुवृत्तेः ॥ औष्ण्यमेव हि तर्हि पाकजं तत्र स्यादिति चेन्न; वायुशैत्यवत् औपचारिकत्वोपपत्तेरिति । एवं पृथिव्यामपि शीतोष्णस्पर्शोपलम्भ औपाधिकः; उपाधिसन्निधिमन्तरेण कदाचिदप्यनुपलम्भात् । पाकजत्वे तु पश्चादपि रूपादिवत् अनुवृत्तिः स्यात् ॥ निर्मृष्टेऽपि सलिले, निर्वाणेऽपि शिखिनि पार्थिवेषु शीतोष्णस्पर्शावुपलभ्येते इति चेत्, सूक्ष्म संश्रयणात्। क्षणान्तरे तु तावतोऽपि निवृत्तेरिति ।

अस्मदादिचक्षुरिन्द्रियैकग्राह्यविसजातीयव्यावृत्तमद्रव्यं रूपम् । तच्च सितरक्तकृष्णपीतभेदम् । सितादिप्रतिपत्तिव्यवहारास्तल्लक्षणानि । तत्र सलिलकलधौतशङ्खशुक्तिशशाङ्कादीनां रूपविशेषाः सितभेदाः । हुतवहजपादाडिमबन्धुजीवविद्रुमपद्मरागादीनां रक्तभेदाः । काञ्चन-काञ्चनार-हरिताळ-हरिद्रादीनां पीतभेदाः । मरकतमधुकरजलधरतिमिरतमालदूर्वादीनां कृष्णभेदाः ॥ पीतरू-

---

प्रयोजकमित्यर्थः । ननु पाकजस्पर्शेषु पाकात् तारतम्यसंभवेऽपि अपाकजस्पर्शेषु शीतत्वशीततरत्वलक्षण-तारतम्यं कथमुपपद्येतेत्याशङ्क्याह अपाकजे ति । संसर्गादिभेदादिति । शीतद्रव्यस्य जलस्य वाय्वादि-द्रव्यसंपर्कात् शीततरत्वमुपपद्यते इति भावः । पवनसलिलयोः पाकजस्पर्शं वदन् वक्तव्यः (प्रष्टव्यः ?) किं पाकेन पृथिव्यादिषु औष्ण्यशान्त्यनन्तरमुपलभ्यमानमार्दवादिस्पर्शवत् पाकजमौष्ण्यव्यतिरिक्तमनु-वर्तमानं पाकजं स्पर्शान्तरमभ्युपेयते, उत पाकजं नतमौष्ण्यमेव वेति [इति ?] विकल्प्य दूषयति औष्ण्य शान्ताविन्यादिना । ननु उपाधिविगमानन्तरमुपलभ्यमानस्य पाकजत्वे पृथिव्यामुपाधिविगमानन्तरमुपल-भ्यमानयोः शीतोष्णस्पर्शयोः पाकजत्वप्रसङ्ग इत्याशङ्कां निराकरोति निर्मृष्टेऽपीति । निर्वाणेऽपि शिखिनीति । शान्तेऽपि वह्नावित्यर्थः । सूक्ष्मसंश्रयणादिति । सूक्ष्मजलाग्न्यवयवानां संक्रमणादि-त्यर्थः । सूक्ष्मजलाग्न्यवयवसंक्रमणापेक्षया पाकजस्पर्श एव कल्प्यतामित्याशङ्क्याह क्षणान्तरे त्विति । तावतोऽपीति । कृत्स्नस्यापि स्पर्शस्येत्यर्थः । इति स्पर्शः ।

तल्लक्षणानीति । सितत्वेन प्रतिपत्तिव्यवहारविषयत्वादीनि सितादीनां लक्षणानीत्यर्थः । काञ्चनारः—कोविदारः । हरिताळो धातुविशेषः । पीतिम्नो रक्ताद्वान्तरत्वे युक्तिमाह रोहितशुक्ल-

---

विशेषरूपस्यैव वा शूद्रत्वस्य, तादृशशूद्रत्वविशिष्टसंयोगस्यैव वा अशुद्धिहेतुत्वमित्यर्थः ।

ननु पाकजस्पर्शेषु पाकभेदात् तारतम्यसंभवेऽप्यपाकजस्पर्शेषु शीतत्व-शीततरत्वलक्षणतारतम्यं कथमुपपद्येतेत्याशङ्क्याह अपाकजेति । संसर्गादिभेदादिति । शीतद्रव्यस्य जलस्य वाय्वादिद्रव्यसंपर्क रूपशैत्यव्यञ्जकतारतम्यान्छैत्यतारतम्यप्रत्यय इत्यर्थः । संसर्गादीति । आदिना शैत्यप्रतीतिप्रतिबन्धक तेजस्संयोगविगमसंग्रहः पृथिवीवदननुवृत्तेरिति । यथा पृथिव्यां पाकानन्तरमौष्ण्यशान्तौ मार्दवादि रूपस्पर्शान्तरमननुवर्तमानमुपलभ्यते, तथा जलेऽनुपलम्भान्न तत्र पाकजस्पर्शसंभव इत्यर्थः । ननु जले तेजस्संयोगेनौष्ण्योपलब्ध्या तस्यैव पाकजत्वं स्यादिति शङ्कते औष्ण्यमेवेति । औपचारिकत्वोपपत्तेरिति । तथाचान्यथासिद्धतया न तादृशोपलम्भस्य पाकजस्पर्शसाधकत्वमिति भावः ।

सितादिप्रतिपत्तिव्यवहारा इति । सितत्वादिप्रकारकप्रमाविषयत्व-सितादिपदवाच्यत्वानि

पमपि रक्तावान्तरभेदं केचिदिच्छन्ति; रोहितशुक्लकृष्णानामेव तेजोबन्नेषु श्रवणात् ।

प्रकारान्तरेण रूपं द्विधा—भास्वरमभास्वरञ्चेति । तेजोगतं भास्वरम् । क्षितिसलिलगतमभास्वरम् । तेजसि रूपं रक्तभास्वरम् । सलिले तु शुक्लमभास्वरम्, पृथिव्यां बहुविधमभास्वरम् । अत्रापि संसर्गात् अनियतभासादि ॥ चित्रं नाम पञ्चमं[1] रूपमिति वैशेषिकादयः । तदसत्; एषामेव एकसङ्घातवर्तिनां समुदायविशेषतस्तत्प्रतीतिव्यवहारयोरुपपत्तेः । नानावर्णचूर्णपुञ्जरञ्जितस्थलादिविलक्षणप्रतीत्यभावात् । अवयविरूपारम्भकतया भवद्भिस्तेषामेवाभ्युपगतत्वात् । अवयव्य-

कृष्णानामेवेति । श्रवणादिति । "यदग्नेरोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य त्रीणि रूपाणीत्येव सत्यम्" इति रूपत्रयस्यैव श्रवणेन अतिरिक्तरूपाश्रवणादित्यर्थः । यमुनाजलादौ नैल्याद्युपलम्भात् कथं व्यवस्थेत्याशंक्याह अत्रापि संसर्गादिति । अनियतभासादीति । अनियतरूपप्रतिभासव्यवहारावित्यर्थः । चित्रं नामेति । नानावर्णैस्तन्तुभिरारब्धस्य पटस्य चाक्षुषत्वनिर्वाहार्थं रूपवत्त्वस्यावश्यवक्तव्यत्वात् रूपस्य च संयोगादिवत् अव्याप्यवृत्तित्वाभावेन नानारूपसमुदायस्य चैकस्मिन् वस्तुन्यसम्भवात् चित्रं नाम पञ्चमं वैशेषिकादयोऽभ्युपगच्छन्तीत्यर्थः । एषामेवेति । अवयवसङ्घातलक्षणैकद्रव्यनिष्ठतया समुदायविशेषभावमापन्नेषु सम्प्रतिपन्नेष्वेव नीलपीतादिषु चित्रप्रतीतिव्यवहारयोरुपपत्तेरिति भावः । विलक्षणप्रतीत्यभावादिति । यदि चित्रपटे संप्रतिपन्ननीलादिविलक्षणं चित्रं रूपमभ्युपेयते, तर्हि नानावर्णचूर्णकल्पितरङ्गवल्लीष्वपि तदभ्युपेयं स्यात्, उभयत्र चित्रप्रतीतेरविशिष्टत्वादित्यर्थः । "लद्धेनोः" इति न्यायादपि तेषामेव रूपाणां चित्रप्रतीतिविषयत्वमित्याह अवयवीति । तेषामेवेति । येषामिदानीं चित्रप्रतीतिविषयत्वमपलप्यते तेषामेवेति एवकाराभिप्रायः । ननु चूर्णपुञ्जरञ्जितस्थले अवयव्यभावात् न चित्ररूपोत्पत्तिः, पटादौ न तथेत्याशङ्क्याह अवयव्यभ्युपगम

सितादिलक्षणानीत्यर्थः । ननु यमुनाजलादौ नैल्याद्युपलम्भात् कथं व्यवस्थेत्याशङ्क्याह अत्रापीति । रूपविषयेऽपीत्यर्थः । अनियतभासादीति । जलादौ नैल्यादिप्रतीतिव्यवहारावित्यर्थः । अवयव्यनभ्युपगमपक्षे रूपान्तरानारम्भादवयवरूपाणामेव चित्रप्रतीतिविषयत्वावश्यम्भावाच्चित्ररूपाभिधानं रूपान्तरमप्रामाणिकमेवेत्याह अवयवीति । तेषामेवेति । न त्वतिरिक्तचित्ररूपस्येत्येवकारार्थः, अवयवेषु चित्ररूपस्य भवद्भिरप्यनभ्युपगमादवयविनश्चाप्रामाणिकत्वात् क्व चित्ररूपमिति भावः । नन्वतिरिक्तावयव्यनभ्युपगमे चित्ररूपस्यानावश्यकत्वेऽपि अवयव्यभ्युपगमपक्षे रूपस्य व्याप्यवृत्तित्वनियमेनावयविन्यव्याप्यवृत्तिनानारूपोत्पत्त्यसम्भवात्, नीरूपत्वे चाक्षुषत्वासंभवाच्चावयविनि अतिरिक्तचित्ररूपस्वीकार आवश्यक इत्यतः अतिरिक्तावयविपक्षेऽपि चित्ररूपस्यानावश्यकतामाह अवयव्यभ्युपगमेऽपीति । नानारूपाश्रयत्वस्येति । अव्याप्यवृत्तिनानारूपाश्रयत्वस्येत्यर्थः । प्रतीतिव्यवस्थाप्यत्वादिति । व्याप्यवृत्तित्वे अव्याप्यवृत्तित्वे वा प्रतीतेरेव नियामकतया नानारूपवदवयवारब्धावयविनि तत्तदवयवावच्छेदेन तत्तद्रूपस्य अवयवान्तरावच्छेदेन तदभावस्य च प्रतीयमानतया न रूपस्य व्याप्यवृत्तित्वनियमसम्भव इति भावः । ननु नानारूपवदवयवारब्धावयविस्थलेऽपि अवयव

1 पञ्चममिति स्वमताभिप्रायेण । तत्पक्षे आधिक्यात् । कल्पतातिरिक्तमिति तु विवक्षितार्थः ।

भ्युपगमेऽपि नानारूपाश्रयत्वस्य प्रतीतिव्यवस्थाप्यत्वात् । संयोगतदभावादिवत् भागभेदस्य उपलभ्यमानस्य नियामकत्वात् । व्याप्यवृत्तिरूपान्तरजातीयरूपारम्भकतया बाधे तु गुणत्वादिमात्रेण संयोगादावपि प्रसज्यते । एवमेव चित्र[1स्पर्श?]रसगन्धानामपि निर्वाहः ॥

असदादिजिह्वैकग्राह्यविसजातीयेतरो रसः । स षोढा—मधुराम्ललवणतिक्तोष्ण2कषायभेदात् । एषां लक्षणं पूर्ववत् । तत्र इक्षुक्षीरगुडादिरसा मधुरभेदाः । चूतचिञ्चामलकादिरसाः अम्लभेदाः । सैन्धवलवणाब्धिकारादिरसाः लवणभेदाः । किम्पाकनिम्बादिरसास्तिक्तभेदाः । शुण्ठीमरीचिसर्षपादिरसा उष्णभेदाः । हरीतकीविभीतकचूताङ्कुरादिरसाः कषायभेदाः ॥ तिक्तावान्तरभेद एवोष्णादिरिति केषाञ्चित् प्रतिभासः । आयुर्वेदतश्चैते विशदमनुसन्धेयाः ॥

---

इति । व्याप्यवृत्तिरूपान्तरेति । अवयवगतरूपाणां लोकदृष्टव्याप्यवृत्तिरूपान्तरसजातीयरूपारम्भकत्वमेव वक्तव्यम्, न तु तद्विलक्षणव्याप्यवृत्तिरूपारम्भकत्वमिति युक्त्या प्रत्यक्षसिद्धस्यापि अव्याप्यवृत्तित्वस्यापलापे संयोगादिष्वपि गुणत्वादिहेतुना अव्याप्यवृत्तित्वमपलप्येतेत्यर्थः। चित्ररसगन्धेति । ननु रसगन्धेषु चित्रप्रतीतिरवयवगतनानारसगन्धविषयैव ; न तु अवयविगतचित्ररसगन्धविषया ; नानागन्धरसावयवारब्धावयविनो निर्गन्धतया नीरसतयाऽप्युपपत्तेः, रूपस्पर्शहीनत्वे चाक्षुषत्वस्पार्शनत्वविरोधेन चित्ररूपस्पर्शाभ्युपगमेऽपि रसगन्धयोस्तादृशानुपपत्त्यभावेन नीरसस्य निर्गन्धस्यैवावयविन उत्पत्तिरिति नैयायिकैरप्यङ्गीकृतत्वात् । ततश्च रूपरसगन्धानां कथं साम्यव्यवहार इति चेन्न ; प्रतीत्यैकरूप्ये सति कचिदवयवगतनानागुणसमुदायः, कचिदन्यः इति कल्पनाया निष्प्रमाणत्वात् । रूपस्पर्शैकसमवायित्वमात्रेण चाक्षुषत्वस्पार्शनत्वोपपत्तेरुपलम्भानुसारेणाव्याप्यवृत्तिनानारूपवत्वस्याप्युपपत्तेरिति भावः ॥

एषामिति । मधुरत्वादिप्रतीतिव्यवहारविषयत्वमेव तल्लक्षणमित्यर्थः । चिञ्चा=तिन्त्रिणी । किम्पाकः=विषवृक्षः । प्रतिभास इति । भ्रान्तिरित्यर्थः । आयुर्वेदः=वैद्यशास्त्रम् ॥ इति रसः ॥

---

रूपाणि व्याप्यवृत्तिरूपारम्भकाणि अवयवरूपत्वात्, श्वेतपटाद्यारम्भकतन्तुरूपवदित्यनुमानेनाव्याप्यवृत्तित्वबाध इत्याशङ्क्य, 'अनुमानस्य प्रत्यक्षबाधकत्वासम्भवान्नोक्तानुमानेन व्याप्यवृत्तित्वसिद्धिसम्भवः । अन्यथा संयोगादेरपि गुणत्वादिहेतुना रूपादिदृष्टान्तेन व्याप्यवृत्तित्वसिद्धिप्रसङ्गः' इत्याह व्याप्यवृत्तीति । एवमेवेति । नानारसगन्धविषयतयैवेत्यर्थः । चित्ररसगन्धानां - चित्ररसगन्धप्रतीतीनाम् । अयं भावः—चित्ररूपाभ्युपगमपक्षेऽपि चित्ररसादिप्रतीतिर्नानारसादिविषयिण्येवेति स्वीक्रियते ; न त्वतिरिक्तचित्ररसादिविषयिणी ; नानारसगन्धवदवयवारब्धावयविनो नीरसत्वादौ बाधकाभावेन भवद्भिरपि चित्ररसाद्यनभ्युपगमात् । ततश्च तथैव चित्ररूपप्रतीत्युपपत्तौ चित्राकारप्रतीतिमात्रेण नातिरिक्तचित्ररूपस्वीकार आवश्यक इति । पूर्ववदिति मधुरत्वादिप्रमाविषयत्वं मधुरादिपदवाच्यत्वं वा लक्षणमित्यर्थः। चिञ्चा=तिन्त्रिणी । किंपाकः=विषवृक्षः। विभीतक=अक्षः। प्रतिभासः=भ्रान्तिः। आयुर्वेदः=

---

1 गन्धानामिति बहुवचनात् स्पर्शेति पाठ ऊह्यते। वैशेषिकमते वायोस्त्वाचप्रत्यक्षविषयत्वाभावात् द्रव्यप्रत्यक्षं प्रति रूपस्येव स्पर्शस्य समवायेन कारणत्वकल्पनाविरहात् चित्ररूपस्वीकारेऽपि चित्रस्पर्शास्वीकारात् तस्य चित्ररसादितुल्यत्वात् । 2 कटुस्थाने उष्णपदम् ।

अस्मदादिघ्राणग्राह्यविसजातीयेतरो गन्धः। स च द्विविधः—सुरभिः असुरभिश्चेति। तयोरपि लक्षणादिकं पूर्ववत्। पटीरमृगमदघुसृणचम्पकादिगन्धाः सुरभिभेदाः। पूतिविस्रादिगन्धा असुरभिभेदाः। अयञ्च गन्धः पृथिव्येकवृत्तिः। अयो दहतीतिवत् सलिलपवनादिषु चम्पकपाटलादिसंसर्गात् तदुपलम्भः। तत्संसर्गाधीनत्वस्यान्वयव्यतिरेकसिद्धत्वात्॥ स्यादेतत्—पञ्चीकरणादेव पञ्चभूतेषु स्पर्शादिसङ्करः प्रागेव सिद्धः। ततश्चेदानीं व्यञ्जकविशेषवशात् क्वचित् क्वचित् गुणो व्यक्तरूप उपलभ्यतां मृगजलादिवदिति चेत् – अस्त्वेवम्। किमेतावता भूतान्तरेषु गुणानां स्वाधारसंसर्गमन्तरेण वृत्तिरुपपादिता? संसर्गस्तु प्राक्तनः इदानीन्तनो वेति विचार्यम्। तत्र यथायथं द्वयमपि। पूर्वस्याऽऽगमसिद्धत्वात्, पाटलादिसंसर्गस्य चेदानीमध्यक्षसिद्धत्वात्॥

अथौपनिषदानां पाकजगुणप्रक्रिया। उत्पत्तिदशायां कृष्णरूपा पृथिवी-"यत् कृष्णं तदन्नस्य" इति श्रुतिस्वारस्यात्, भाष्यकारैश्च आकाशनैल्यस्य पञ्चीकरणलभ्यपृथिव्यंशनिबन्धनत्वाभिधानात्, पञ्चीकरणात् प्राक्च पाकजत्वायोगात्॥ प्रथममेव विशेषयोगिनी कथं सा जातेति चेत्—सलिलदहनरूपस्पर्शविशेषानालोक्य सन्तोष्टव्यम्। अस्त्वेवं प्रथमं कृष्णा पृथिवी, स्पर्शरसगन्धास्तदानीं तत्र किम्प्रकाराः? उच्यते—स्पर्शस्तावत् वायाविव अनुष्णाशीतमात्रः तद्वदेवापाकजश्च। विषामृतदुस्स्पर्श(दुष्परिमर्श)दिस्पर्शविशेषा एव पाकाधीनाः। अनुष्णाशीतमात्रं हि सर्वेष्वपि पार्थिवेषूपलभ्यते। अतस्तावन्मात्रस्य स्वाभाविकत्वमुचितम्। रसोऽपि मधुर एव प्राथमिकः-विशेषादर्शने

---

**पटीरम्** = श्रीगन्धः। **घुसृणम्**=कुङ्कुमम्। **पूतिविस्रादी**ति। "पूतिगन्धस्तु दुर्गन्धो विस्रं स्यादामगन्धि यत्"। ननु विवेकिनामपि सुरभि जलमिति व्यपदेशो दृश्यत इत्याशङ्कयाह **अयो दहतीतिवदि**ति। **मृगजले**ति। मरीचिकाजलेत्यर्थः। **किमेतावते**ति। **उपपादिता किम्?** इति योजना। **यथायथं द्वयमपी**ति। अभ्युपेयमिति शेषः। यत्र मात्रयाऽपि भूतान्तरसंसर्गो दर्शनवशात् नोपलभ्यते, तत्र **पञ्चीकरण**प्रक्रियाऽपि शरणमिति भावः। इति **गन्धः**।

विलक्षणत्वमेवोपपादयति **उत्पत्तिदशायामि**ति। ननु प्रथमतो नीरूपायां पृथिव्यामुत्पन्नायां पश्चात् पाकेन नीलरूपे जनिते पश्चात् **पञ्चीकरण**सम्भवेन भाष्यस्याप्युपपत्तेः, **उत्पत्तिदशायामेव** कृष्णायाः पृथिव्या उत्पत्तौ भाष्यं प्रमाणं कथं भवेदित्याशङ्कयाह **पञ्चीकरणादि**ति। अपञ्चीकृतस्य तेजसो रूपजननासमर्थत्वेन **पाकजत्वायोगादि**त्यर्थः। **कथं सा जाते**ति। पृथिव्यां साक्षाद्वा परम्परया वा पाकानपेक्षरूपं कथं भवेदिति **वैशेषिकश**स्त्रवासनावासितचेतसः शङ्कितुरभिमानः। **विशेषादर्शन इति**। असति विनिगमकान्तर **इत्यर्थः**।

---

वैद्यशास्त्रम्। पटीरम्=चन्दनम्, घुसृणम्-कुङ्कुमम्। पूति=दुर्गन्धम्। विस्रम्=आमगन्धि। मृगजलं= मरीचिका जलं। **यथायथं द्वयमपी**ति। अभ्युपेयमिति **शेषः**। यत्र मात्रयापि भूतान्तरसंसर्गः प्रत्यक्षेण नोपलभ्यते तत्र पञ्चीकरणप्रक्रियाप्याश्रयणीयेति भावः।

**पाकजत्वायोगादि**ति। अपञ्चीकृतस्य तेजसो रूपजननासमर्थत्वादिति भावः। दुस्पर्श.—कण्डूत्यादिजनको गुणविशेषः। "पासो यवासो दुस्पर्शो धन्वयासः कुनाशकः" इत्यमरः। दुष्परिमर्शेति पाठेऽप्ययमेवार्थः। **विशेषादर्शन इति**। असति विनिगमकान्तर **इत्यर्थः**।

कारणभूतजलगतमाधुर्यानुविधानस्योचितत्वात् । स्पर्शवत् अस्यापि प्राचुर्योपलम्भात् । महापृथिवी सर्वा प्रायशो मधुरैव ह्युपलभ्यते । अम्ललवणादयः कादिचित्का रसविशेषाः पाकाधीनाः । तथा मधुरविशेषा अपि ; अन्वयव्यतिरेकाविशेषात् । गन्धोऽपि सुरभिरेव प्राथमिकः । अस्यैव महापृथिव्यां पूर्ववत् प्राचुर्यात् । पूतिविस्रप्रभृतयोऽसुरभिविशेषाश्च पूर्ववत् पाकाधीनाः । एवमनुष्णाशीतकृष्णमधुरसुरभिस्वभावा प्रथमं पृथिव्युत्पन्ना । अतः पाकभेदेन, अनुष्णाशीतस्यैव भेदैर्दुस्परिमर्शादिस्पर्शैः, कृष्णभेदैश्च मरकतहरिततमालकुवलयादिरूपैः, अकृष्णैश्च सितरक्तादिभिः, मधुरभेदैश्च इक्षुक्षीरगुडादिरसैः, अमधुरैश्चाम्ललवणादिभिः, सुरभिभेदैश्च चम्पकमृगमदादिगन्धैः, असुरभिभिश्च पूतिविस्रादिभिः सम्बध्यते । अस्याञ्च गन्धरसरूपस्पर्शशब्दाः कचित् सहैव उत्पद्यन्ते, सहैव च विनश्यन्ति । कचिच्च अन्यतमानुवृत्तिः, अन्यतमनिवृत्तिश्च । यथोपलम्भं पाकवैषम्यस्याङ्गीकर्तव्यत्वात् ॥

अत्र च एकेनाग्निसंयोगेन पूर्वसमुदायनिवृत्तिः, अन्येनोत्तरसमुदायोत्पत्तिरित्येके । एकेनैव पूर्वनिवृत्तिरुत्तरोत्पत्तिरपीति वयं वदामः । यथा एकयैव सामग्र्या उत्पत्स्यमानप्रागभावमात्रभेदभिन्नयाऽनेककार्योत्पत्तिर्निर्व्यूढा, तद्वत् प्रध्वंसमानतत्तत्स्वरूपसहकारिभेदभिन्नयाऽनेकप्रध्वंसोऽप्युपपन्नः ; उभयविधप्रागभावादिभेदभिन्नया च तथैव (तयैव) पूर्वसमुदायनिवृत्तिरुत्तरसमुदायो-

---

**मधुरविशेषा इति** । मधुररसमात्रं सहजम्, मधुरतरत्वमधुरतमत्वादिविशेषाः पाकाधीना इत्यर्थः । **कचिच्चान्यतमानुवृत्तिरिति** । कचित् पृथिव्यां पाकादिकारणवशेन रूपरसगन्धस्पर्शानां मध्ये केचन निवर्तन्ते, केचन अनिवर्तमाना यावद्धर्मिसत्तमनुवर्तन्ते इत्यर्थः । **पूर्वसमुदायनिवृत्तिरिति** । रूपस्पर्शादिसमुदायनिवृत्तिरित्यर्थः । ननु एका सामग्री एकं कार्यं जनयतीति नियमात् कथमेकस्याः सामग्र्याः अनेककार्योत्पादकत्वमित्याशङ्क्याह **यथैकयैवेति** । यथा रूपरसगन्धस्पर्शप्रागभावभेदभिन्ना एका पाकघटिता सामग्री रूपरसगन्धादि अनेककार्यं जनयति, [1]तद्वदित्यर्थः । **निर्व्यूढे**त्यस्यानन्तरं **यथा वा** इत्येव पठितव्यम्, **तद्वत्** इत्येतत्तु **उपपन्न** इत्यनन्तरं पठितव्यम्, लेखकवशात् व्यत्यस्तमिव

---

**पूर्वसमुदायनिवृत्तिरिति** । प्राग्विद्यमानस्य रूपरसगन्धस्पर्शचतुष्टयस्य निवृत्तिरित्यर्थः । नन्वेकया सामग्र्या एकमेव कार्यं जन्यत इति नियमात् कथमेकया सामग्र्या अनेककार्योत्पत्तिरित्याशङ्क्याह **यथैकयैवेति** । यथा रूपरसगन्धस्पर्शप्रागभावभेदभिन्ना एका पाकादिघटिता सामग्री रूपरसगन्धादि अनेककार्यं जनयतीत्यर्थः । **तद्वदित्यत्र यथेत्यस्यानुषङ्गः** । तद्वदिति च न पूर्वोक्तस्य **यथेत्यस्य** प्रतिनिर्देशः ; किन्तु एकं विषयमभिधाय तत्सदृशविषयान्तराभिधाने एवमित्युक्तिवत् अयं निर्देशः। पूर्वोक्तस्य **यथेत्यस्य**, अत्रानुषक्तस्य च प्रतिनिर्देश उत्तरत्र विद्यमानः **तथैवेत्ययमेव** । **तयैवेति** पाठे सामग्र्येत्यर्थः । तदा तथेत्यध्याहारः ; अतो न वाक्यासंगतिः । **उभयविधप्रागभावेति** । पूर्वरूपादिध्वंसप्रागभाव-

---

1 यथेत्यादेः, वयं वदाम इत्युक्तांशोपपादनपरत्वात् एके इति पक्षोक्तमुभयं दृष्टान्तीकर्तव्यमित्याशयेन व्याख्ययोर्योजना । तदा वाक्यस्वारस्यहानिः स्यात् । तयैवेति पाठे तु सुतराम् । अतो यथाश्रुतरीत्यादरणे, ननु ध्वंसरूपकार्ये ध्वंसमानसहकारिभेदात् सामग्रीभेदः सिद्धः । अतो न सर्वध्वंसस्यैकजन्यत्वम् । अत्र एव ध्वंसानां रूपाद्युत्पत्तेश्च नैकजन्यत्वम् । भावकार्यसमुच्चयस्त्वेकजन्यः स्यादिति तटस्थशंकायां यथेत्यारम्भ इत्यादिरीत्या अवतरणं चिन्तनीयम् ।

त्पत्तिश्चोपपन्ना। निवृत्तेश्च उत्तररूपमात्रतया अस्माभिरभ्युपगमात् परमार्थतो न कार्यद्वैविध्यमस्ति। प्रतियोगिभेदभेदतो व्यपदेशभेद एव केवलम्। यत्तु प्राकट्यनिरासप्रसङ्गेन भट्टपराशरपादैरुक्तम्, "न खलु पूर्वरूपविनाशिकैव व्यक्तिरुत्तरोत्पादिका—पाकलक्षणाग्निसंयोगानां भिन्नत्वात्" इति, तत् परमतानुसारेणेति मन्यामहे—एकस्यैव अनेककार्यहेतुत्वोपपादनादिति। पाकावान्तरभेदाच्च गन्धाद्यवान्तरभेदसिद्धिः॥

पाके च पीलुपिठरपाकभेदात् विप्रतिपद्यन्ते। तत्र नोभयमप्यस्माकम्; परमाण्ववयविनोरभावात्।

---

भाति। उभयविधेति। उत्तरगुणप्रागभावप्रध्वंसप्रागभावरूपोभयविधेत्यर्थः। सिद्धान्तरहस्यमाह निवृत्तेश्चेति। प्रतियोगिभेदभेदत इति। पाकजं रक्तं रूपं पूर्वरूपापेक्षया ध्वंस इति व्यवह्रियते, धर्म्यन्तरापेक्षया भेद इति व्यवह्रियते, प्रतियोग्यविवक्षायां रक्तत्वेन स्वेन रूपेण व्यवह्रियत इति व्यपदेशभेदमात्रमित्यर्थः। परमतानुसारेणेत्यत्र हेतुमाह एकस्यैवेति। पीलुपिठरेति। पीलुः परमाणुः; पिठरः स्थाली। विप्रतिपद्यन्त इति। नैयायिकादय इति शेषः। तत्र तेजस्संयोगे सति नोदनात् अभिघाताद्वा घटादिद्व्यणुकपर्यन्तानां समवायिकारणेषु कर्म; तेन च तत्तदारम्भकसंयोगनाशे सति द्व्यणुकपर्यन्तावयवविनाशे परमाणव एव पच्यन्ते। तदनन्तरं भोजकादृष्टवशात् पुनर्द्व्यणुकादिक्रमेण घटोत्पत्तिः। कारणगुणक्रमेण च रूपाद्युत्पत्तिः कालसौक्ष्म्येण विळम्बाननुभवः, एकदा शतपत्रपत्रशतं छिन्नमित्यादिवदिति केचित्। अपरे तु घटादेरविनाशेऽपि तेजस्संयोगेन रूपादेरेव नाशस्वीकारे दोषाभावः। न चाभ्यन्तरवर्तिभागे तेजोगमनासम्भवेन पूर्वरूपविजातीयरूपाद्यनुपलब्धिप्रसङ्गात् पीलुपाकोऽङ्गीकर्तव्य इति वाच्यम्; घटाभ्यन्तरवर्तिघृततैलादिप्रस्रवणदर्शनेनावयविन एव सच्छिद्रत्वदर्शनात्। अत एव सच्छिद्राण्येवावयविद्रव्याणीति सुप्रसिद्धम्। तथाऽपि अत्यन्तमहत्तराभ्यन्तरवर्तिघृततैलादिस्रावादर्शनात् तद्भागे कथं पाक इति सुहृद्भावेन पृच्छ्यत इति चेत्—अतितप्तकटाहान्तःस्थितानां तन्तुतिलादीनां भस्मीभावात् कल्प्या तेजोगतिः केनापि प्रकारेण प्रतिरोद्धुमशक्येति। एवं च सति पाकानन्तरं घटे स एवायं घट इति प्रत्यभिज्ञा रेखोपरेखादिकञ्च समर्थितं स्यात्। न च अवयवैकदेशनाशेन नष्टेऽपि घटे यथा स एवेति कूटसाक्षिणी प्रत्यभिज्ञा

---

उत्तररूपादिप्रागभावात्मकोभयविधप्रागभावेत्यर्थः। सिद्धान्ते भावान्तरस्यैवाभावतया पूर्वरूपादिध्वंसस्योत्तररूपाद्यात्मकतया न कार्यभेद इत्यभिप्रायेणाह निवृत्तेश्चेति। प्रतियोगिभेदभेदत इति। प्रतियोगिविशेषरूपभेदादित्यर्थः। व्यपदेशभेद एव केवलमिति। पाकजं रक्तं पूर्वरूपापेक्षया ध्वंस इति व्यवह्रियते, धर्म्यन्तरापेक्षया भेद इति व्यवह्रियते, प्रतियोग्यविवक्षायां रक्तत्वेन स्वरूपेण व्यवह्रियत इत्यर्थः। पीलुः परमाणुः। पिठरः—स्थाली, अवयवीति यावत्। विप्रतिपद्यन्त इति। नैयायिकादय इति शेषः। तत्र तेजस्संयोगे सति नोदनादभिघाताद्वा घटादिद्व्यणुकान्तानां समवायिकारणेषु कर्म, तेन च तत्तदारम्भकसंयोगनाशे सति द्व्यणुकपर्यन्तावयविनाशे स्वतन्त्राः परमाणव एव पच्यन्ते, तदनन्तरं भोक्त्रदृष्टवशात् पुनर्द्व्यणुकादिक्रमेण घटोत्पत्तिः, कारणगुणक्रमेण च रूपाद्युत्पत्तिरिति केचित्[1]। अपरे तु घटादेरविनाशेऽपि तेजस्संयोगेन रूपादेरेव नाशस्वीकारे बाधकाभावः। न

[1] केचित्—वैशेषिकाः। अपरे—नैयायिकाः।

अतः संहितावस्थायां पाकः विभक्तावस्थायां वेति चिन्ता परिशिष्यते । तत्र यथासम्भवमुभयमपि । प्रथमं तावत् घटादीनामशिथिलानामेव पाकभेदेन रूपभेदोपलम्भात् । उपलम्भस्तावत् वैशेषिकाणामपि समः । किन्तु अवयविरूपादीनां यावदाधारभावित्वनियमाभ्युपगमात् अवयवविशेषगुणैरवयविविशेषगुणारम्भनियमाभ्युपगमाच्च पूर्वावयविनः परमाणुपर्यन्तो नाशः द्व्यणुकादिक्रमेण पुनरन्यस्यादृष्टवशादारम्भ इति कल्पितम् । द्वितीयमपि दहनसन्निकर्षमात्रेण विलयविशरणादीनामेव मधूच्छिष्टानां पाक उपलम्भादिति । एतेन एकदेशपाकोऽप्युपपन्न इत्युक्तं भवति ॥

संयुक्तप्रत्ययनिमित्तं संयोगः । स च स्वरूपमात्रस्वरूपो नैरन्तर्यमात्रस्वरूपो वेति केचित् ।

---

तथाऽत्रापि अस्त्विति वाच्यम् ; तत्रासमवायिकारणनाशेन, परिमाणनाशस्य द्रव्यनाशैकसाध्यत्वेन च घटादिनाशस्यावश्याभ्युपगन्तव्यत्वात् । अतः स्वाश्रयपरपर्यायपिठर एव पाकसिद्धिरिति मन्यन्त इति भावः । **अतः संहितावस्थायामिति** । पाकदशायां घटावयवाः शिथिलीभवन्ति, उत नेति चिन्ता परिशिष्यत इत्यर्थः । **प्रथममिति** । **संहितावस्थायामिति** मतमित्यर्थः । युज्यत इति शेषः । तर्हि पीलुपाकः किमिति वैशेषिकैराद्रियते इत्याशङ्क्य पीलुपाकवादिवैशेषिकाभिमतयुक्त्याभासमाह **किन्त्ववयविरूपादीनामिति** पार्थिवपरमाणुगतरूपस्पर्शादीनां **यावदाधारभावित्वनियमाभावात्** अवयविरूपादीनामित्युक्तम् । **यावदाधारभावित्वनियमे** सति धर्मिणि घटे विद्यमान एव रूपान्तरोत्पत्त्यसम्भवात् पीलुपाकप्रक्रियैव शरणमिति भावः । **कल्पितमिति** । वैशेषिकैरिति भावः । **द्वितीयमपीति** । **विभक्तावस्थायामिति** मतमपीति भावः । अत्रापि युज्यते इति शेषः । **एकदेशेति** । यथाप्रमाणं केषुचिदवयवेषु शैथिल्यं केषुचिच्चाशैथिल्यमित्यर्थः ॥ इति **पाकजगुणप्रक्रिया** ॥

---

चाभ्यन्तरवृत्तिभागे तेजोगमनासंभवेन पूर्वरूपनाशाद्यसंभव इति वाच्यम् ; घटाभ्यन्तरवृत्तिघृततैलादिप्रस्रवणदर्शनादवयविन एव सच्छिद्रत्वात् । अत एव स एवायं घट इति प्रत्यभिज्ञाऽप्युपपद्यत इति वदन्ति । **अतस्संहितावस्थायामिति** । पाकदशायामुक्तरीत्या परमाणवः स्वतन्त्रा भवन्ति, नेति विचारः परिशिष्यत इत्यर्थः । **प्रथममिति** । संहितावस्थायां पाक इति प्राथमिकमतमित्यर्थः । **उपलम्भादिति** । उपलम्भमूलकमित्यर्थः । द्वितीयमतमूलयुक्तिमाह **किन्त्विति** । पार्थिवपरमाणुरूपस्य यावदाधारभावित्वविरहादवयवीति । **द्वितीयमपीति** । विभक्तावस्थायां पाक इति मतमपीत्यर्थः । **एतेनेति** । अवयवविशरणपूर्वकमेव पाकाभ्युपगमेनेत्यर्थः । **एकदेशेति** । एकदेशविशरणस्यापि संभवादिति भावः । अवयवविशरणमन्तरेण पाकस्वीकारे ह्येकदेशपाको नोपपद्यते ; एकदेशाग्निसंयोगमात्रेणावयविरूपनाशासंभवात् । तस्य व्याप्यवृत्तित्वाभ्युपगमात् । पूर्वरूपनाशमन्तरेण रूपान्तरोत्पत्त्यसंभवात् । तस्यापि व्याप्यवृत्तित्वेन एकदेशाग्निसंयोगेन तदुत्पादायोगाच्च ।

**संयुक्तप्रत्ययेति** । वाच्यवाचकसंबन्धेन संयुक्तत्वप्रकारकप्रत्यक्षेत्यर्थः । यद्यपि प्रत्यक्षसामान्यं तत्प्रकारकत्वनियमो नास्ति, तथापि कांचित्कं तत्प्रकारकत्वमनुभूयमानं नापह्नोतुं शक्यमिति तावता लक्षणसमन्वयसंभवः । यद्यपीमौ संयुक्ताविति प्रत्यक्षे विषयविधया द्रव्यमपि कारणं भवति, तथाऽपि तादृशकारणत्वे सति अद्रव्यत्वं विवक्षितमिति नोक्तदोषावकाशः न चोक्तप्रत्यक्षस्य चाक्षुषत्वपक्षे रूपविषय

तत्र न स्वरूपमात्रम्; स्वरूपयोः सतोरेव पूर्वोत्तरकालयोः संयुक्तप्रत्ययाभावात्। नापि द्वितीयः; भावान्तराभाववादिनं प्रति अविवादादेव। सोऽपि हि आसन्नदेशसंयोग एव हि अस्मन्मते स्यात्॥ देशेनापि नैरन्तर्यमेव स्यादिति चेन्न; तत्रापि उक्तविकल्पानतिक्रमात्। तत्रापि हि स्वरूपातिरिक्तस्य नैरन्तर्यस्य भिन्नदेशविशेषसंयोगाभावरूपतया सिद्ध एव संयोगः। अस्य च स्वाभावसादेश्यमुपलभ्यमानमंशभेदप्रयुक्ततया न विरोधावहम्। निरवयवेष्वपि संयोगहेतुरौप-

---

पूर्वोत्तरकालयोरिति। संयोगात् पूर्वोत्तरकालयोरित्यर्थः। सोऽपि हीति। घटस्य पटनैरन्तर्यं पटदेशसन्निहितदेशसंयोग इति भावः। देशेनापीति। आसन्नदेशेन संयोगो हि आसन्नदेश नैरन्तर्यमेवेत्यर्थः। ननु नैरन्तर्यं न स्वरूपमात्रम्; येन उक्तदोषः स्यात्। नाप्यासन्नदेशसंयोगः; येन संयोगाभ्युपगमः स्यात्। अपि तु अभावरूप इत्याशङ्क्याह तत्रापीति। अभावरूपपक्षान्तरेऽपीत्यर्थः। भिन्नदेशेति। विप्रकृष्टदेशेत्यर्थः। न विरोधावहमिति। एकांश एव हि सामानाधिकरण्यं विरुद्धमिति भावः। ननु निरवयवेष्वंशभेदस्याप्यभावात् कथमिदमित्याशङ्क्याह औपाधिकोऽंश इति। उपाध्यवच्छिन्नप्रदेशे संयुज्यत इत्यौपाधिकांशभेदसद्भावात् स्वाभावसामानाधिकरण्यमुपपद्यते

---

कत्वस्य, स्पार्शनरूपत्वे स्पर्शविषयकत्वस्य चावश्यकतया रूपस्पर्शयोरतिव्याप्तिरिति वाच्यम्; संयुक्तपदप्रकारकचाक्षुषस्पार्शनोभयहेतुत्वस्य विवक्षितत्वात्। अतिरिक्तपरिमाणाभ्युपगमे तत्रातिप्रसक्तिवारणाय संयुक्तपदप्रकारकेति, परिमाणान्यत्वनिवेशतात्पर्यमाहकम्। तेनेमौ संयुक्ताविति चाक्षुषस्पार्शनयोरेव यत्र परिमाणस्यापि विषयता। तत्र तादृशचाक्षुषस्पार्शनविषयतामादाय परिमाणेऽतिप्रसक्तिशङ्का परास्ता। परिमाणस्यापि संयोगविशेषरूपत्वे तु संख्यावारणाय संख्यातिरिक्तत्वतात्पर्यग्राहकं तद् बोद्धव्यम्। अथवा संयुक्तप्रत्ययेत्यनेन संयुक्तव्यवहारो विवक्षितः। तथा च संयुक्तव्यवहारहेतुत्वं संयोगलक्षणं फलितम्। व्यवहर्तव्यतासंबन्धेन व्यवहारं प्रति व्यवहर्तव्यतावच्छेदकस्याऽऽश्रयतासंबन्धेन हेतुतया लक्षणसङ्गतिः। व्यवहर्तव्यतावच्छेदकस्य च ज्ञायमानत्वेनैव हेतुतया न तद्ज्ञानविरहदशायां व्यवहारप्रसङ्गः। बुद्धिपूर्वकव्यवहारत्वस्यैव कार्यतावच्छेदकतया न शुकादिकर्तृकव्यवहारे व्यभिचारः। व्यवहर्तव्यतावच्छेदकप्रकारकव्यवहर्तव्यज्ञानस्यैव व्यवजिहीर्षादिद्वारा कारणत्वपक्षे तु उक्तव्यवहारजनकज्ञानप्रकारत्वम्, उक्तव्यवहारजनकतावच्छेदकज्ञानीयप्रकारत्वं वा लक्षणमिति बोध्यम्।

पूर्वोत्तरकालयोरिति। संयोगोत्पत्तेः प्राक् तन्नाशानन्तरञ्चेत्यर्थः। सोऽपि हीति। घटस्य पटनैरन्तर्यं पटदेशसन्निहितदेशसंयोग इति भावः। देशेनापीति। आसन्नदेशनैरन्तर्यमेवेत्यर्थः। ननु नैरन्तर्यस्यातिरिक्ताभावविशेषरूपतया नोक्तदोषावकाश इत्याशङ्क्याह तत्रापीति। अतिरिक्ताभावात्मकनैरन्तर्यरूपत्वेऽपीत्यर्थः। भिन्नदेशेति। विप्रकृष्टदेशेत्यर्थः। सिद्ध एवेति। नैरन्तर्यरूपाभावप्रतियोगितया विप्रकृष्टदेशसंयोगाभ्युपगमावश्यम्भावादिति भावः। स्वाभावसादेश्यम्—स्वाभावाधिकरणवृत्तित्वम्। अंशभेदप्रयुक्ततया—स्वाभावावच्छेदकभिन्नावच्छेदकावच्छिन्नतया। न विरोधावहमिति। एकावच्छेदेनैव तत्—तदभावयोर्वृत्त्यसंभवादिति भावः। ननु निरवयवेष्ववयवरूपांशभेदासंभवात् कथं तत्र

घिकोंऽशः । न च उपाधावप्येवमित्यनवस्था ; ज्ञप्तौ उपाधिसंश्लेषमात्रातिरिक्तानपेक्षणात् । उत्पत्तौ अन्येनावच्छेदेऽपि बीजाङ्कुरानवस्थावत् अदोषात् । यद्वा निरवयवेष्वभिदुरतया पृथङ्निर्देशायोग्यत्वात् स्वाभाविकोंऽशभेदो भवतु । न चैवं सति एकत्वानेकत्वमवयवित्वं सङ्घातत्वं वा प्रसज्यत इति वाच्यम् ; तादृशस्यांशस्य भेदव्यपदेशहेतुत्वाभावात् । एतावदेकानेकत्वं

---

इत्यर्थः । **अनवस्थेति** । निरंशे वस्तुनि उपाधिसंयोगस्य स्वाभाविकप्रदेशभेदाधीनत्वाभावेन उपाध्यन्तर संयोगाधीनप्रदेशभेदाधीनतया तत्राप्येवमेवेत्यनवस्थेत्यर्थः । **अतिरिक्तानपेक्षणादिति** । उपाधिसंयोग ज्ञाने उपाधिसंयोगमात्रस्यापेक्षितत्वेऽपि संयोगहेतोरुपाध्यन्तरसंयुक्तांशस्य ज्ञानमनपेक्षितमेव । न हि कारण विज्ञानं कार्यविज्ञानकारणमिति भावः । **अन्येनावच्छेदेऽपीति** । **अन्येनावच्छेदेऽ**पेक्षितेऽपीत्यर्थः । ननु बीजाङ्कुरादिवत् प्रमाणप्रतिपन्नत्वाभावात् **अनवस्था** दोषायैवेति वदन्तं प्रत्याह **यद्वेति** । ननु स्वाभाविकांशभेदसद्भावे भिदुरतया पृथक्करणयोग्यत्वं स्यादित्याशङ्क्याह **अभिदुरतयेत्यादि** । **नचैवं सतीति** । स्वाभाविकांशभेदाभ्युपगमे भेदाभेदवादो वा ; अवयवेष्वनेकत्वमवयविन्येकत्वमिति **अवयवि**वादो वा ; [यद्वा] वनसेनादिवत् **सङ्घात**त्वमात्रमेवेति वा अभ्युपेयमिति शङ्कार्थः । **तादृशस्यांशस्येति** ।

---

संयोगस्य स्वाभावसामानाधिकरण्यसंभव इत्यत आह **निरवयवेष्विति** । **औपाधिकोंश इति** । वस्त्वन्तररूपोपाध्यवच्छिन्नात्मकोंश इत्यर्थः । निरवयवाकाशपक्षे भेर्यवच्छिन्नाकाशे शब्दोत्पत्तिवत् वस्त्वन्तरावच्छिन्न ईश्वरकालादौ घटादिसंयोगोत्पत्तिरिति भावः । **उत्पत्ताविति** । उपाधिसंबन्धोत्पत्तेरन्यावच्छिन्नत्वेऽपीत्यर्थः । तथाचान्यसंबन्धस्यापि तदन्यावच्छिन्नत्वावश्यम्भावादनवस्थेत्यभिप्रायः । लाघवमभिसन्धायाह **यद्वेति** । **अभिदुरतया**—पृथक्करणायोग्यतया । **स्वाभाविकोंशभेदो भवत्विति** । उपाधिसंबन्धनिरपेक्ष एवांशभेदो भवत्वित्यर्थः । अयं [1]भावः— स्वसामग्रीबलान्निरवयवे उत्पद्यमानः संयोगः स्वाभावसमानाधिकरणस्सन्नेवोत्पद्यते । ततश्च निरवयवे संयोगः स्वावच्छेदेनैव वर्तते, संयोगाभावोऽपि तथैव । आत्माश्रयस्त्वगत्या लाघवादङ्गीकार्य इति व्यक्तमधस्तात् । **एवं सतीति** । स्वाभाविकांशभेदे सतीत्यर्थः । **एकत्वानेकत्वमिति** । एकत्वसहितमनेकत्वमित्यर्थः । भेदाभेद इति यावत् । संयोगावच्छिन्ने तस्मिन् संयोगाभावावच्छिन्नाद्भेदस्यावश्यकत्वादिति भावः । **अवयवित्वमिति** । भेदाभेदानुपगमे संयोगावच्छिन्न-तदभावावच्छिन्नाभ्यामवयवाभ्यामारब्धेऽवयविन्येकत्वम् अवयवयोस्त्वनेकत्वमित्येवमवयविवादः स्यादित्यर्थः । **संघातत्वमिति** । सेनावनादिवत् सङ्घातत्वमात्र मेव स्यादित्यर्थः । **तादृशस्यांशस्य भेदव्यपदेशहेतुत्वाभावादिति** । संयोगतदभावरूपस्यावच्छेदकस्य भेदाप्रयोजकत्वादित्यर्थः । अयं भावः—न ह्यत्र वृक्षे मूलाग्रावयवयोरिव संयोग-तदभावावच्छेदकयोरवयवयोः स्वीकारः ; येनोक्तदोषः स्यात् । किन्तु संयोग-तदभावयोरेव तत्तदवच्छेदकत्वं स्वीक्रियते । ततश्च यथा वृक्षरूप एकस्मिन्नवयविनि संयोगतदभावयोरवच्छेदकभेदेन स्वीकारेऽपि, वृक्षो न संयोगीति वा, न संयोगाभाववानिति वा, संयोगाभाववान्न संयोगीति वा प्रतीतिविरहात् भेदस्य व्यवहृतितया

---

1 अयं भाव इत्यादिकं स्वाभाविकाभिदुरांशभेदास्वीकारपक्ष एव युज्यते ; न त्वन्यत्रेत्यवधेयम् ।

प्रमाणबलात् दुरपह्नवमभ्युपगतं वा भवतु। [1]यद्वा यन्निरवयवं तत् नैयायिकाद्यभिमतजातिवत् सर्वत्र संयोगिनि संपूर्णं वर्तताम्। तदेतत् सूत्रकारैरेव आशङ्क्य परिहृतम्। "कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा" इत्यादिना। तत्र च दीपः—"सकलेतरविसजातीयं श्रुत्येकसमधिगम्यं सर्वशक्तियुक्तं ब्रह्म निरवयवमपि कार्यञ्च भवति अनन्तञ्च भवतीति परिमितशक्तिवस्तुचोद्यं न तत्र प्रसज्यते, यथा जातिवादिनो जातिरेव अमूर्ता खण्डमुण्डादिषु अत्यन्तविलक्षणेष्वनन्तेष्वपि [2]परिसमाप्यैव वर्तते; न तत्र इतरवस्तुचोद्यम्-इति जगत्कारणत्वं संभवति" इति। तत्रैवाधिकरणे, "स्वपक्षदोषाच्च" इति सूत्रे, "प्रधानादिकारणपक्षे दोषाच्च ब्रह्मैव कारणम्। तत्रैव लौकिकवस्तुविसजातीयत्वेन प्रधानादेरुक्तदोषा नैव प्रसज्येरन्" इत्युक्तम्। एतेन प्रधान-परमाणु वासना-

---

अभिदुरतया पृथक्करणायोग्यस्वाभाविकांशभेदस्येत्यर्थः। ननु संयोगादिनियामकस्य स्वाभाविकांशभेदस्य सद्भावे भेदव्यपदेशो दुरपह्नवः, भिन्नाभिन्नत्वमपि दुरपह्नवमित्यत्रसरसादाह एतावदेकानेकत्वमिति। दुरपह्नवमभ्युपगतमिति दुरपह्नवत्वात् अभ्युपगतमित्यर्थः। यद्वा यन्निरवयवमिति। निरवयवं स्वसंयोगिनि कार्त्स्न्येन संयुज्यते, संयोगो निरवयवे व्याप्य एव वर्तत इति फलितोऽर्थः। न च घटसंयोगस्य आकाशव्यापित्वे आकाशस्य घटापेक्षया न्यूनपरिमाणत्वप्रसङ्ग इति वाच्यम्; तस्य सावयवत्वादिति द्रष्टव्यम्। सूत्रकारैरिति। सावयवेषु प्राक्शङ्का निरवयवेषु नावतरतीति परिहृतमित्यर्थः। तत्रेति।

---

भेदासंभवेन न भेदाभेदप्रसक्तिः—तथेहापि निरवयव एकस्मिन् वस्तुनि भेदासंभवेन न भेदाभेदप्रसङ्गः। अवयविसंघातवादयोः कथंचिदपि न प्रसक्तिरिति। ननु मूले वृक्षो न कपिसंयोगीति प्रतीतिसद्भावात् भेदस्याव्याप्यवृत्तित्वमस्त्येव। ततश्च निरवयवेऽपि वस्तुनि संयोगाभावावच्छेदेन संयोगिभेदावश्यम्भावाद्भेदाभेदो दुर्वार इत्यत आह एतावदेकानेकत्वमिति। भिन्नावच्छेदकावच्छिन्नभेदाभेदवत्त्वमित्यर्थः। दुरपह्नवमिति हेतुगर्भम्। दुरपह्नवत्वादभ्युपगतं भवत्वित्यर्थः। अवच्छेदकभेदमन्तरेण भेदाभेदस्वीकार एव भेदाभेदमतावतारादिति भावः। स्पष्टश्चेदं मणिग्रन्थे। मणिकृता हि वृक्षे कपिसंयोगतद्भेदौ स्वीकृत्य, "न चैवं भेदाभेद" इति भेदाभेदमतमापाद्य, "अवच्छेदकभेदाभ्युपगमात्" इत्यनेनोक्तमतापत्तिः परिहृता। तथाच भेदाभेदमतमवच्छेदकभेदनिरपेक्षमिति प्रतीयत इति। निरवयवे संयोग-तदभावयोः स्वस्वावच्छेदेन वृत्त्युपगमे आत्माश्रयमभिसन्धायाह यद्वेति। सर्वत्रेति सावयवे निरवयवे चेत्यर्थः। संपूर्णं वर्तताम्—कार्त्स्न्येन संयुज्यताम्। निरवयवनिष्ठः सावयवनिष्ठो वा कालादिनिरवयवप्रतियोगिकः संयोगः, कालादिनिरवयवनिष्ठो निरवयवप्रतियोगिकः सावयवप्रतियोगिको वा संयोगश्च व्याप्यवृत्तिर्भवत्विति फलितोऽर्थः। न च कालादिनिष्ठघटादिसंयोगस्य व्याप्यवृत्तित्वे घटादेः कालात् न्यूनपरिमाणत्वं कालादेर्वा घटाद्यनधिकपरिमाणत्वं प्रसज्यत इति वाच्यम्; [3]प्रसञ्जकाभावात्। कालादिनिष्ठे घटादिसंयोगे हि आश्रयस्य निरवयवतया अवच्छेदकभेदेन विरोधपरिहारासंभवेन स्वाभावसामानाधिकरण्यासंभवात् स्वाभावासामानाधिकरण्यरूपमवच्छिन्नवृत्तिकान्यत्वरूपमनवच्छिन्नवृत्तिकत्व-

---

1 स्वाभाविकांशभेदपक्षं सूत्रविरोधात् त्यजन् संयोगे स्वाभावसामानाधिकरण्यनियमञ्च त्यजन् आह यद्वेति। 2 प्रथमव्याख्यायां विहायान्यथा समाधत्ते प्रसञ्जकेति। परिसमाप्यैवेति। अन्यत्रावर्तमानतयेति नार्थः; किंतु अव्याप्यवृत्तितयेति, एकत्वेऽपि सर्वगतविजातीयावर्तितयेति च।

संविद्ब्रह्मप्रभृतीनां निरंशानामेव यथा भागपरिणामावरणानावरणानेकविषययोगादिरुपपद्यते इत्युपगम्यते, तद्वदेव संयोगस्य संयोगिनो वा पूर्णस्य नानेकसम्बन्धोऽनुपपन्नः। क्षणिकपरमाणुवादिनाऽपि पुञ्जदशायामेकस्य परमाणोरंशभेदमन्तरेण अनेकनैरन्तर्यमभ्युपगतम्। विज्ञानवादिनामेकस्यानेकाकारत्वम्। माध्यमिकस्य तु संयोगे को विशेषप्रद्वेषः? इदमेव शून्यत्वद्वारं

---

प्रधानकारणत्ववाद इत्यर्थः। उपसंहरति एतेनेति। भागपरिणामेति। एकदेशविकारेत्यर्थः। **आवरणानावरणेति।** मृषावादिमते इत्यर्थः। अथवा परमाणूनामेव अंशभेदेन वृतत्वावृतत्वेत्यर्थः। **अनेकविषययोगादिरिति।** **वासनासंविदोः अनेकविषययोग**त्वादित्यर्थः। **वासना** अनुभवजन्यसंस्कारः। **संयोगस्य संयोगिनो वेति।** यथा द्वयोर्वर्तमानोऽपि **संयोगः** प्रत्येकं पूर्ण एव वर्तते; न तु एकदेशेन; निरवयवत्वात्—तथा निरवयवोऽपि **संयोगी पूर्ण** एवानेकैः सम्बध्यते इत्यर्थः। **क्षणिकपरमाणुवादिनाऽपीति।** वैभाषिकादिनेत्यर्थः। **नैरन्तर्यमभ्युपगतमिति।** तन्मते **नैरन्तर्या**तिरिक्तसंयोगाभावादिति भावः। **विज्ञानवादिनामिति।** योगाचाराणामित्यर्थः। तन्मते ज्ञानस्यैव अर्थाकारत्वादिति भावः। **विशेषप्रद्वेष इति।** सर्वशून्यत्ववादिनः संयोगेऽपि सर्वसाधारणद्वेष एवोचितः; न तु विशिष्येति भावः। **शून्यत्वद्वारमिति।** संयोगासत्त्वे साधिते कार्यकारणवस्तुसम्बन्धखण्डनमुखेन

---

रूपं वा अव्याप्यवृत्तित्वमङ्गीकृतम्। नैतावता परमाणोरधिकन्यूनत्वयोः किञ्चित् प्रसञ्जकं भवति; व्याप्त्यदर्शनात्। नन्वेवं सति परमाणुद्वयसंयोगस्यापि अव्याप्यवृत्तित्वापत्त्या द्व्यणुकस्यैकपरमाण्वविशेषप्रसङ्गेन तस्य द्व्यणुकारम्भकत्वानुपपत्तिरिति चेत्; त्यज्यतां तर्हि परमाणुकारणतावादः, परमाणुद्वयसंयोगस्याव्याप्यवृत्तित्वे परमाणोः सावयवत्वप्रसङ्गस्याऽऽत्माश्रयदोषप्रसङ्गस्य वा जागरूकत्वात्। स्वीक्रियतां वा अव्याप्यवृत्तेरपि परमाणुद्वयसंयोगस्य द्व्यणुकारम्भकत्वम्, द्व्यणुकव्यवहारस्य त्र्यणुकस्य द्व्यणुकाद्विशेषोपपत्तेः, द्व्यणुकस्य सावयवतया तत्संयोगस्याव्याप्यवृत्तित्वात्। **भागपरिणामेति।** निरंशाया एव प्रकृतेरेकदेशविकारेत्यर्थः। **आवरणानावरणेति।** निरंशस्यापि परमाणोः परमाण्वन्तरसंयोगरूपावृतत्व-तदभावरूपानावृतत्वेत्यर्थः। **अनेकविषययोगादिरिति।** निरवयवयोरेव वासनासंविदोरनेकविषययोगादिरित्यर्थः। **वासना** अनुभवजन्यसंस्कारः। **संयोगस्य संयोगिनो वेति।** यथा द्वयोर्वर्तमानोऽपि संयोगः प्रत्येकं पूर्ण एव वर्तते, न त्वेकदेशेन; निरवयवत्वात्, तथा निरवयवोऽपि संयोगी पूर्ण एवानेकैस्संबध्यते, न त्वेकदेशेन। एतदुक्तं भवति—संयोगनिष्ठस्य द्रव्यद्वयसंबन्धस्य यथा अव्याप्यवृत्तित्वमेव; न तु स्वाभावसामानाधिकरण्यम्, तथा निरवयवद्रव्यनिष्ठानां तत्तद्द्रव्यसंयोगानामपि व्याप्यवृत्तित्वमेवेति। क्षणिकपरमाणुवादी=वैभाषिकः। **नैरन्तर्यमिति।** तन्मते तस्यैव संयोगरूपत्वादिति भावः। विज्ञानवादिनः=योगाचाराः। **अनेकाकारत्वमिति।** अनेकार्थाकारत्वमित्यर्थः। नीलो घटः, नीलपीतौ घटपटावित्यादिज्ञानानामनेकार्थविषयकत्वादिति भावः। तत्तदर्थतादात्म्यरूपतत्तदर्थाकारत्वमेव हि तन्मते तत्तदर्थविषयित्वम्। **विशेषप्रद्वेष इति।** सर्वशून्यत्ववादिनः संयोगेऽपि सर्वसाधारणद्वेष एवोचितः, न तु विशिष्येति भावः। **शून्यत्वेति।** संयोगासत्त्वे साधिते कार्यकारणवस्तु-

वस्त्विति (द्वारमस्त्विति?) चेन्न; शून्यत्वसदसत्त्वयोरुक्तौ विरोधात्॥ द्विष्ठं न किञ्चित् दृष्टमिति चेन्न; अस्यैव [1]दृष्टत्वात्। न चान्यस्य तथात्वादर्शनात् अ[न्य]स्यापि तथात्वाभावः; प्रत्येकं प्रतिनियतासाधारणस्वभावानां भङ्गप्रसङ्गादिति।

स चायं संयोगो द्विधा—कार्योऽकार्यश्चेति। पूर्वः परिमितानां परिमितापरिमितानाञ्च[।] उभयप्रेरणात् अन्यतरप्रेरणाद्वा। यथा मेषयोः; स्थाणुश्येनयोर्वा। संयोगजमपि संयोगं वैशेषिका वर्णयन्ति। तदसत्; अवयव्यभावात्। अवयवसंयोग एव हि सङ्घातस्य संयोगः। उपलम्भोऽपि इदानीमेकदेशेन संयुक्तमित्येव। अस्तु वा अवयवि। तथाऽपि येन हेतुना यदैवावयवः संयुज्यते, तेनैव तदैव अवयव्यपि संयुज्यताम्; न हि हस्तपुस्तकसंयोगानन्तर्यं देवदत्तपुस्तकसंयोगस्योपलभ्यते। हस्तस्पन्देनैव कारणकारणवर्तित्वात् असमवायितामापन्नेन देवदत्तपुस्तकसंयोगस्यो-

---

शून्यत्वं सिध्यतीति संयोगे माध्यमिकस्य विशेषद्वेष इति चेदित्यर्थः। उक्तौ विरोधादिति। शून्यत्वस्य सत्त्वाभ्युपगमे न सर्वशून्यत्वसिद्धिः, असत्त्वाभ्युपगमे शून्यत्वस्यैवापलाप इत्यर्थः। परिमितानामिति। मूर्तानामित्यर्थः। अपरिमितानाञ्चेत्यनन्तरं स चेति शेषः। संयोगजमपीति। कारणाकारणसंयोगात् कार्याकार्यसंयोगः, यथा हस्तलक्षणस्यावयवस्य पुस्तकेन संयोगात् अवयविनः कायस्य पुस्तकेन संयोग इति वैशेषिका वर्णयन्तीत्यर्थः। अवयव्यभावादिति। सङ्घातातिरिक्तावयव्यभावादित्यर्थः। नन्वस्तु सङ्घातसंयोग एव अवयवसंयोगजन्य इत्याशङ्क्याह अवयवसंयोग एव हीति। संहन्यमानातिरिक्तसङ्घातस्याभावात् तत्संयोग एव तत्संयोगः; न तु तज्जन्य इति भावः। संयुक्तमित्येवेति। न तु सङ्घातस्य संयुक्त इत्युपलम्भोऽस्तीत्यर्थः। ननु हस्तस्पन्दासमवायिकारणकः संयोगो हस्त एव भवितुमर्हतीत्याशङ्क्याह हस्तस्पन्देनैवेति। कारणकारणवर्तित्वादिति।

---

सर्वापलापखण्डनमुखेन सर्वशून्यत्वं सिद्ध्यतीति प्रथमं संयोग एव शून्यत्वप्रवेश आवश्यक इति संयोगे माध्यमिकस्य विशेषद्वेष इति चेदित्यर्थः। विरोधादिति। शून्यत्वस्य सत्त्वाभ्युपगमे सर्वशून्यत्वासिद्धिः, असत्त्वाभ्युपगमे शून्यत्वस्यैवापलाप इत्यर्थः।

परिमितानामिति। परिमितत्वं=परिच्छिन्नपरिमाणवत्त्वम्। उभयप्रेरणादन्यतरप्रेरणाद्वेति। इदञ्च पूर्वं इत्यनेन संबद्ध्यते। यद्वा उभयेत्यतः पूर्वं स चेत्यध्याहार्यम्। तथाच कार्यस्संयोगः उभयकर्मजन्योऽन्यतरकर्मजन्यश्चेति द्विधेत्युक्तं भवति। संयोगजमपीति। कारणाकारणसंयोगात् कार्याकार्यसंयोगः; यथा हस्तपुस्तकसंयोगात् कायपुस्तकसंयोग इति रीत्या संयोगजन्यमपि सयोगमित्यर्थः। अवयव्यभावादिति। अवयवसंघातातिरिक्तावयव्यभावादित्यर्थः। नन्वस्तु संघात एवावयवसंयोगजन्य इत्याशङ्क्याह अवयवसंयोग एव हीति। संहन्यमानातिरिक्तसंघाताभावादिति भावः। एकदेशेन संयुक्तमित्येवेति। न तु सङ्घातेनापि संयुक्तमित्युपलम्भ इति भावः। ननु हस्तस्पन्दासमवायिकारणकस्संयोगो हस्त एव भवितुमर्हतीत्याद्याशङ्क्याह हस्तस्पन्देनैवेति। कारणकारणवर्तित्वादिति।

---

माध्वास्तु, 'न द्विष्ठ एकः संयोगः। किं तु कार्यकारणभावादिवत् संयोग एकनिष्ठः अन्यप्रतियोगिकः। एवं संयोगद्वयं संयुक्ताविति प्रतीतिविषयः' इत्याहुः। तन्न। एक एव त्वनुभूयते इति भावः।

ष्युत्पत्तिरुपपद्यते । हस्तस्पन्दे च–तदवच्छिन्नशरीरस्यापि स्पन्दसिद्धेस्ततो वा तत्संयोगः । कर्मणोऽपि संयोगादिवत् यथोपलम्भं स्वाभाव्यादव्याप्यत्वमङ्गीकर्तव्यम् । यदा च अन्यानीतपुस्तकेन देवदत्तहस्तः संयुज्यते, तदा देवदत्तेनापि कथं न युज्येत ; हस्तस्य तस्य च निष्पन्दत्वाविशेषात् । आभिमुख्यस्याप्युभयोरविशेषात् । एतेन विभागजविभागोऽपि निराकृतः । विभागञ्चान्तर्भावयिष्यामः ।

अकार्यस्तु संयोगो निरन्तरयोर्निष्पन्दयोर्द्रव्ययोः । स नास्तीति वैशेषिकादयः । विभवो मिथस्संयुक्ताः निरन्तरद्रव्यत्वात् संप्रतिपन्नवत् । असंयुक्तत्वे सान्तरत्वप्रसङ्गः । यश्च विभूनां नैरन्तर्यमात्रमिच्छेत् , तेनापि तत्रायमपरिहार्यः । अस्मन्मते नैरन्तर्यस्य समासन्नदेशसंयोगरूप-

---

समवायिकारणसमवायिकारणप्रत्यासन्नस्यापि तन्तुरूपस्य पटरूपं प्रति असमवायिकारणत्वादिति भावः । ननु हस्तावच्छेदेन शरीरेऽपि स्पन्द इत्ययुक्तम् ; तथा सति क्रियाया अव्याप्यवृत्तित्वप्रसङ्गात् । अतो हस्तसमवेतैव क्रियेत्याशङ्क्याह **कर्मणोऽपीति** । **यदा चान्यानीतेति** । तत्र असमवायिकारणसदसद्भाववैषम्यस्यापि वक्तुमशक्यत्वादिति भावः । ननु हस्तस्य निष्पन्दतास्थले हस्तशरीरयोरविशेषेण संयोगोत्पत्तिसम्भवेऽपि हस्तस्पन्दस्थले असमवायिकारणसदसद्भावाभ्यां विशेषसत्त्वात् हस्त एव संयोग इति चेन्न ; पुस्तकगतक्रियायाः शरीरसंयोगहेतुत्वस्य ; न हस्तक्रियाया इत्यत्र नियामकाभावादिति भावः । ननु **अन्यानीतपुस्तकस्थले** पुस्तकक्रियाया हस्तशरीरनिरूपितसंयोगद्वयजनकत्वं सम्भवति ; द्वयोरपि संयोगयोः पुस्तकसमवेतत्वात् । हस्तस्पन्दस्य तु स्वाश्रयसमवेतहस्तपुस्तकसंयोगजनकत्वेऽपि स्वाश्रयासमवेतशरीरपुस्तकसंयोगजनकत्वं न युक्तम् । न च एक एव संयोगः शरीरतदवयवपुस्तकात्मकद्रव्यत्रयसमवेत एवोत्पन्नतामिति वाच्यम् ; अवयवावयविसमवेतसंयोगासम्भवादिति चेन्न—हस्तक्रियायाः समवायिकारणसमवायिकारणप्रत्यासन्नत्वेन शरीरपुस्तकसंयोगासमवायिकारणत्वसम्भवस्य हस्तावच्छेदेन शरीरक्रियासम्भवस्य च प्रागेवोपपादितत्वेन दोषाभावात् । **अन्तर्भावयिष्याम इति** । संयोगध्वंसरूपमेदादिति शेषः । यस्तु संयोगसाधने नैरन्तर्यं प्रयोजकमिति मन्यते, तन्मतेऽपि नैरन्तर्याविनाभूततया संयोग आपततीत्याह **यश्च विभूनामिति** । **अयमपरिहार्य इति** । संयोगोऽपरिहार्य इत्यर्थः । इतरथा सान्तरत्वप्रसङ्गादिति भावः । **अस्मन्मत इति** । भावातिरिक्ताभावाभावादिति भावः । **देशसंयोगरू-**

---

पटरूपं प्रति तन्तुरूपवदिति भावः । ननु हस्तावच्छेदेन शरीरेऽपि स्पन्द इत्ययुक्तम् ; क्रियायाः व्याप्यवृत्तित्वनियमादित्याशङ्क्याह **कर्मणोऽपीति** । **यदा चान्यानीतेति** । तत्रासमवायिकारणभूतक्रियासदसद्भाववैषम्यस्यापि वक्तुमशक्यत्वादिति भावः । **विभव इत्यादि** । ईश्वरः कालसंयुक्तः, कालनैरन्तर्यात् घटवत् ; यत्र नैरन्तर्यं तत्र तत्संयोगः, यथा सूर्याद्यालोके चाक्षुषालोकनिरन्तरे तत्संयोग इति भावः । कालनैरन्तर्यञ्च कालनियोगिकसंयोगानवच्छेदकावच्छिन्नसंयोगप्रतियोगिताशून्यत्वम् , स्वप्रतियोगिकसंयोगानवच्छेदकावच्छिन्नसंयोगप्रतियोगितासंबन्धावच्छिन्नप्रतियोगिताककालाभावपर्यवसितम् । तेन कालसंयोगानवच्छेदकावच्छिन्नसंयोगाप्रसिद्धावपि न क्षतिः। **सान्तरत्वप्रसङ्ग इति ।** ईश्वरे कालसंयोगानवच्छेदकावच्छिन्नसंयोगप्रतियोगित्वप्रसङ्गः—तदसंयुक्तद्रव्ये नियमेन तत्संयोगानवच्छेदकावच्छिन्नसंयोगप्रतियोगित्वदर्शनादिति भावः । **अयमिति** । परस्परसंयोग इत्यर्थः । **समासन्न-**

त्वात्। गुणादिषु तु निरन्तरत्वबुद्ध्यभावात्। न च हेत्वभावात् संयोगाभाव इति वाच्यम्; ज्ञापकस्योक्तत्वात्। कारणस्य निवृत्तौ कार्यमात्रस्य निवृत्तिरिति ईश्वरज्ञानचिकीर्षाप्रयत्नेषु भवद्भिरेव प्रतिपादनात्। विभूनामपि स्वकार्यजननादेरीश्वरानुप्रवेशनिबन्धनत्वात्। औपनिषदश्चायमर्थः—तथा च श्रुतयः, "सर्वव्यापी च भगवान्", "अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः" इत्यादिकाः। न च, "बहिश्च" इति वचनात् ईश्वर-ज्ञानव्यतिरिक्तानां सर्वेषामप्यविभुत्वमिति वाच्यम्; बाह्यदेशवत्स्वेव बहिर्व्यपदेशेऽपि [1]मुख्यान्वयत्वात्। अन्यथा ईश्वरधर्मभूतज्ञानस्याप्यविभुत्वप्रसङ्ग इति। अनुमानान्तराणि च—विगीतं विभुद्रव्यं विभुद्रव्यसंयोगवत् द्रव्यत्वात् घटवत्। न च व्याप्तिबलात् स्वेन संयोगप्रसङ्गः; विभुद्रव्याणामनेकत्वात् स्वेतरविभुद्रव्यसंयोगेन साध्यसिद्ध्युपपत्तेः। तथा विगीतं ईश्वरसंयुक्तम्, द्रव्यत्वात् घटवत्; ईश्वरो

---

पत्वादिति। न च आसन्नदेशसंयोगमात्रेण कथं विभ्वोः परस्परसंयोगसिद्धिरिति वाच्यम्; आसन्नदेशसंयोगस्य परस्परसंयोगाविनाभूतत्वमस्तीत्यत्र तात्पर्यात्। ननु नैरन्तर्यस्य समासन्नदेशसंयोगरूपत्वमनुपपन्नम्, गुणगुणिनोर्नैरन्तर्याभावप्रसंगादित्याशङ्क्याह गुणादिष्विति। हेत्वसम्भवादित्यस्य किं ज्ञापकहेत्वभावादित्यर्थः, उत कारकहेत्वभावादिति [इति?] विकल्प्य दूषयति ज्ञापकस्येत्यादिना। कार्यमात्रस्येति। न तु अकार्यस्य नित्यस्यापीत्यर्थः। ततश्च कारणाभावेन नित्यविभूनां नित्यसंयोगाभावो दुस्साध इति भावः। ईश्वरानुप्रवेशनिबन्धनत्वादिति। ईश्वरव्याप्तिनिबन्धनत्वादित्यर्थः। ततश्च संयोगाभावेऽनुप्रवेशो न संभवतीति भावः। सर्वेषामप्यविभुत्वमिति। तद्रहितप्रदेशस्यैव बहिर्देशत्वादिति भावः। बाह्यदेशवत्स्विति। सम्भवद्बहिःप्रदेशवद्वस्तुविषय एव बहिर्व्याप्तिप्रतिपादनमात्रेण तस्य वाक्यस्य मुख्यान्वयत्वादित्यर्थः। साध्यसिद्ध्युपपत्तेरिति। सर्वविभुद्रव्यसंयोगित्वस्य असाध्यत्वात् विभुद्रव्यसंयोगित्वमात्रस्य च यत्किञ्चिद्विभुद्रव्यसंयोगित्वमात्रेणाप्युपपत्तेरिति भावः।

देशसंयोगरूपत्वादिति। तत्संयोगावच्छेदकावच्छिन्नसंयोगप्रतियोगित्वरूपत्वादित्यर्थः। भावातिरिक्ताभावानुपगमादिति भावः। न चोक्तसंयोगप्रतियोगित्वसिद्धावपि कथं परस्परसंयोगसिद्धिरिति वाच्यम्; उक्तसंयोगप्रतियोगित्वरूपनैरन्तर्यस्य परस्परसंयोगव्याप्यतायामविवादेन तत्सिद्धेरवश्यम्भाव इत्याशयात्। नन्वेवं सति गुणादिषु संयोगप्रतियोगित्वासंभवात् नैरन्तर्यानुपपत्तिरित्यत आह गुणादिष्विति। कार्यमात्रस्येति। न तु नित्यस्यापीत्यर्थः। ततश्च कारणाभावेन कार्यसंयोगाभावसाधनसंभवेऽपि नित्यसंयोगाभावसाधनं न संभवतीति भावः। ईश्वरानुप्रवेशनिबन्धनत्वादिति। संयोगप्रयोजकसङ्कल्पस्यैवानुप्रवेशरूपत्वादिति भावः। अत्र च विभुषु नित्यसंयोगप्रयोजकनित्येच्छैवानुप्रवेशः। सर्वेषामप्यविभुत्वमिति। तत्संयोगरहितद्रव्यस्यैव बहिःपदार्थत्वादिति भावः। बाह्यदेशवत्स्विति। संभवद्बहिर्देशवस्तुविषय एव बहिर्व्याप्तिप्रतिपादनमात्रेण तस्य वाक्यस्य मुख्यान्वयत्वादित्यर्थः। अन्यथेति। बहिर्व्याप्तिः सर्ववस्तुविषयत्व इत्यर्थः। साध्यसिद्ध्युपपत्तेरिति। न ह्यत्र सर्वविभुद्रव्यसंयोगित्वं साध्यते; येनोक्तदोषः स्यात्। किंतु विभुद्रव्यसंयोगित्वमात्रमेव। तच्च यत्किञ्चिद्विभुद्रव्यसंयोगित्वमादायाप्युप-

1 बहिरिति। यथा पूर्वार्धस्य परमात्मसाधारण्यस्वारस्येऽपि 'तत् सर्व'मित्यस्यानन्वयात् तद्ग्रहणम्, तथा बहिःपदानन्वयात् अविभुमात्रग्रहणमिति भावः।

वा कालादिसंयुक्तः द्रव्यत्वात् घटवत् । न च कालसंयोगे कालविकार्यत्वप्रसङ्गः; तस्यापि तदधीनविकारत्वात्; "कालं स पचते तत्र न कालस्तत्र वै प्रभुः" इत्यादिविशेषवचनाच्चेति । यत्तु भट्टपराशरपादैर्मनोणुत्वसमर्थनदशायामजसंयोगो निरस्तः—तदपि, "युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्", "आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्य भावोऽभावश्च मनसो लिङ्गम्" इत्यक्षपादकणभक्षसूत्रोपादानप्रसङ्गेन तत्तत्सिद्धान्तसंस्कारोन्मेषवशादिति मन्यामहे। अत एव हि तत्र कालस्वरूपाप्रत्यक्षत्वमप्युक्तम् । यत्तु तत्र, " न च अजसंयोगमन्तरेण किञ्चिदनुपपन्नम्" इत्युक्तम्, यच्च, "स्तम्भादेर्विभुसंयोगे किं मानम्? न प्रत्यक्षम्; प्रत्यक्षाप्रत्यक्षसंयोगत्वात् । न चानुमानम्; मूर्तद्वयाश्रयनियमादिति चेत्" इत्यत्र, "परत्वापरत्वशरीरगतितद्विकारोर्ध्वज्वलनादीनां संभवार्थं विभुसंयोगावश्यम्भावात्" इति—तत्र पूर्वमेव दत्तमुत्तरम् । यथा च मूर्तमतविकार-

---

तदधीनविकारत्वादिति । तद्विकार्यस्य कालस्य तद्विकारहेतुत्वाभावादित्यर्थः । युगपदिति । रूपरसगन्धस्पर्शेषु युगपदिन्द्रियसन्निकृष्टेष्वपि युगपज्ज्ञानानुदयस्य मनस्सन्निकर्षव्यतिरेकायत्तत्वादिति सूत्रार्थः। आत्मेन्द्रियार्थसन्निकर्ष इति । अविशिष्टेऽपीति शेषः। भावोऽभावश्चेति। कस्यचित् विषयस्य ज्ञानं कस्यचिन्न ज्ञानमिति [1]सूत्रार्थः । संस्कारोन्मेषवशादिति । स्वसिद्धान्तविस्मरणेन कथितमिति भावः । कालस्वरूपेति । स्वसिद्धान्ते कालस्य प्रत्यक्षत्वात् स्वसिद्धान्तविस्मरणाभावे कालाप्रत्यक्षत्वं कथं ब्रूयादिति भावः । यत्तु तत्रेति । मनोणुत्वनिर्णयदशायामित्यर्थः । नचाजेति । अजसंयोगाभावेऽनुपपत्तिर्नास्तीत्यर्थः । प्रत्यक्षाप्रत्यक्षेति । स्तम्भस्य प्रत्यक्षत्वात्, विभूनामप्रत्यक्षत्वात्, संयोगप्रत्यक्षे संयोगि[द्वय?]प्रत्यक्षस्य कारणत्वात् [प्रत्यक्षा?]प्रत्यक्षनिरूपितः संयोगो न प्रत्यक्ष इति भावः । परत्वापरत्वेति । परत्वापरत्वयोर्दिक्कालसंयोगासमवायिकारणकत्वादिति भावः । शरीरगतितद्विकारेति । शरीरचेष्टोर्ध्वज्वलनादीनां प्रयत्नवदात्मसंयोगादृष्टवदात्मसंयोगासमवायिकारणकत्वादिति भावः। तनश्च मूर्तामूर्तद्रव्यसंयोगमात्रस्य साधकोपन्यासात् अमू[र्त?]संयोगाभावस्याभिमतत्वं प्रतीयते इति भावः । पूर्वमेवेति । परसिद्धान्तसंस्कारोन्मेषवशात् इत्युत्तरमुक्तमित्यर्थः । किञ्च "परत्वापरत्वशरीरगति" इत्यादेर्मूर्तामूर्तसंयोगसाधकग्रन्थस्य न विभुसंयोगविरोधित्वम्; प्रत्युत न्यायतौल्यात्

---

पन्नमिति भावः । संस्कारोन्मेषेति । तथाच तत्सिद्धान्तानुसारेणैवेदम्; न तु स्वसिद्धान्तानुसारेणेति भावः । कालस्वरूपाप्रत्यक्षत्वमिति । स्वसिद्धान्ते कालस्य प्रत्यक्षत्वादिति भावः । नचाजेति । अजन्यसंयोगाभावेऽनुपपत्तिर्नास्तीत्यर्थः । प्रत्यक्षाप्रत्यक्षेति । विभूनामप्रत्यक्षत्वात् संयोगप्रत्यक्षे च यावदाश्रयप्रत्यक्षस्य हेतुत्वादिति भावः । परत्वापरत्वेत्यादि । परत्वापरत्वयोर्दिक्कालसंयोगासमवायिकारणकत्वात् शरीरचेष्टोर्ध्वज्वलनादीनां प्रयत्नवदात्मसंयोगादृष्टवदात्मसंयोगासमवायिकारणकत्वादिति भावः । तथा च मूर्तामूर्तद्रव्यसंयोगसाधकमात्रोपन्यासात् अमूर्तद्रव्यसंयोगाभावस्याभिमतत्वं प्रतीयत इति भावः। पूर्वमेवेति। परसिद्धान्तानुसारेणेत्युक्तमित्यर्थः। किञ्च, "परत्वापरत्वशरीरगति" इत्यादेर्मूर्तामूर्तसंयोगसाधकग्रन्थस्य न विभुसंयोगविरोधित्वम्; प्रत्युत तुल्यन्यायतया साधकत्वमेवेत्याह यथा

---

1 अत एव श्रुतिः, अन्यत्रमना अभूवं नादर्शम्; अन्यत्रमना अभूवं नाश्रौषमिति।

विशेषसिद्ध्यर्थं विभुसंयोग उक्तः, तथैव कालादिगतविकारसिद्ध्यर्थमपि ईश्वरसंयोगोऽवश्याभ्युपेत्यः। अन्यथा ईश्वरशरीरत्वमपि कालादेर्न स्यादिति ॥

अथ शक्तिः—सर्वकारणानां कारणत्वनिर्वाहकः कश्चित् अद्रव्यविशेषः शक्तिः; तर्कागमाभ्यां तत्सिद्धेः। प्रतिबन्धकमणिमन्त्रादिसन्निधौ स्वरूप-सहकारिवैकल्याभावेऽपि यदुपरोधात् दहनो न दहति, सा हि अतीन्द्रिया शक्तिः। अयस्कान्त-दुन्दुभिस्वनादिवृत्तिः। तेषु चैषा

---

तत्साधकत्वमेवेत्याह **यथा चेति**। **कालादेर्न स्यादिति**। तच्छरीरत्वे तत्संयोगासमवायिकारणक क्रियाश्रयत्वस्य (?) वक्तव्यत्वादिति भावः। **इति संयोगः** ॥

तर्कमेव प्रदर्शयति। **प्रतिबन्धकेति**। **अयस्कान्तेति**। **अयस्कान्तस्य** अयआकर्षकत्वलक्षणः, **दुन्दुभेश्च** बहुदेशव्यापिशब्दजनकत्वलक्षणोऽद्रव्य**विशेषो** विशदमुपलभ्यते इत्यर्थः। ननु **मणि**-**मन्त्रादि**समवधाने वह्नेः दाहशक्तिर्नश्यति, अथवा यावद्द्रव्यभावित्वात् शक्तेः दाहानुकूलः कश्चित् **धर्मो** विघट्यते, अथवा दाहविरुद्धा काचन शक्तिरुत्पद्यते, यद्वा प्रागेवसिद्धाया दाहविरुद्धायाः शक्तेर्दाहप्रतिबन्धानुकूलः कश्चित् धर्म उत्पद्यते इत्येवंरूपाश्चत्वारः पक्षाः सम्भवन्ति। तत्र नाद्यद्वितीयौ; शक्तेस्तद्धर्मस्य वा विनाशे उत्तेजकसमवधानेऽपि दाहादिकार्यानुत्पादप्रसङ्गात्। न च कारणान्तरवशात् पुनस्तदुत्पत्तिः; अनियतहेतुकत्वप्रसङ्गात्। पूर्वं शक्तिमदुत्पादकेनैव तयोरुत्पन्नत्वात्। नापि तृतीयचतुर्थौ; विरुद्धधर्मा-

---

**चेति**। **अन्यथा**—कालादावीश्वरसंयोगानुपगमे। **ईश्वरशरीरत्वमपि कालादेर्न स्यादिति**। चैतन्यावच्छिन्नानुयोगिताकापृथक्सिद्धिसंबन्धप्रतियोगिताया एव शरीरत्वरूपत्वात्, द्रव्ययोश्चापृथक्सिद्धिसंबन्धस्य संयोगविशेषातिरिक्तस्याप्रामाणिकत्वादिति भावः।

**कारणत्वनिर्वाहक इति**। कारणतावच्छेदक इत्यर्थः। अथवा कारणव्यवहारविषयतावच्छेदक इत्यर्थः; कारणतारूप इति यावत्। शक्तिवादिभिर्हि तस्याः कारणतावच्छेदकत्वं कारणतारूपत्वमेवे(त्वं वे?)त्यभिधीयते। **तर्कागमाभ्यामिति**। अनुमानागमाभ्यामित्यर्थः। अनुमानं दर्शयति **प्रतिबन्धकेति**। **स्वरूप-सहकारिवैकल्याभावेऽपीति**। वह्न्यात्मककारणस्वरूपस्य दाह्यसमवधानादिरूपसहकारिणो वा अभावरूपस्य दाहाभावप्रयोजकस्य विरहेऽपीत्यर्थः। **यदुपरोधात् दहनो न दहतीति**। वह्निनिष्ठदाहोपधायकत्वाभावो यदभावप्रयोज्य इत्यर्थः। अयमत्रानुमानप्रयोगः—मण्यादिसमवहितवह्निनिष्ठो दाहोपधायकत्वाभावो दाहकारणतावच्छेदकाभावप्रयुक्तः—सहकार्यभावाप्रयुक्तदाहोपधायकत्वाभावत्वात्; यत्र सहकार्यभावप्रयुक्त यत्कार्योपधायकत्वाभावत्वम्—तत्र तत्कार्यकारणतावच्छेदकाभावप्रयुक्तत्वम्; यथा दण्डादिनिष्ठपटोपधायकत्वाभावे इति। एवं शक्तेः कारणतारूपत्वे कारणत्वाभावप्रतियोगितया सिद्ध्यन् धर्म एव शक्तिशब्दाभिधेयः। स च मण्यादिसमवधानात्पूर्वं विद्यमानस्तत्समवधानदशायामविद्यमानश्च सिद्ध्यतीति। **अतीन्द्रियेति**। तथाच न योग्यानुपलम्भबाध इति भावः। **अयस्कान्त-दुन्दुभिस्वनादिवृत्तिरिति**। अयस्कान्ते अयआकर्षणानुगुणा शक्तिः दृष्टा। दुन्दुभिस्वने च भयकम्पाद्यनुगुणा। आदिना, "सर्पाभिसारौषधिभिर्युक्ता भेरीव सा भीमतरं ररास" इति यादवाभ्युद

**विशदमेवगम्यते । प्रतिबन्धकाभावपर्यवसायिनां शक्तितद्धर्मनाशःतदुत्पत्त्यनुत्पत्त्यादिप्रसङ्गानामन्ततः आगमेन प्रतिहतिरिति । ननु अस्तु तत्सिद्धिः, तथाऽपि सा प्रतिबन्धकेन नाश्यते वा, तद्धर्मो**

---

भावस्यैव हेतुत्वप्रसङ्गेन **प्रतिबन्धकाभाव** एव पर्यवसितत्वादित्याशङ्क्याह **प्रतिबन्धकाभावपर्यवसा**

---

योक्तमेतो विशेषशब्दादिलक्ष्मह । **प्रतिबन्धकाभावपर्यवसायिनामिति ।** प्रतिबन्धकाभावस्य वह्निनिष्ठ-दाहकारणतावच्छेदकत्वे तत्कारणत्वे वा सामग्रीघटकत्वे वा पर्यवसायिनामित्यर्थः **शक्तितद्धर्मनाशेत्यादि।** अयं भावः—प्रतिबन्धकमणिमन्त्रादिसमवधाने वह्निना दाहवारणाय मण्यादिना वह्निनिष्ठदाहानुकूल-शक्तेस्तदृशशक्तिनिष्ठस्य दाहानुकूलधर्मान्तरस्य वा नाशाभ्युपगमे उत्तेजकसमवहितप्रतिबन्धकेनापि तन्नाशप्रसङ्गः । यदि च शक्तिनाशं प्रति उत्तेजकाभावविशिष्टमणेरेव हेतुत्वाभ्युपगमात्, उत्तेजकाभावस्य पृथगेव हेतुत्वाभ्युपगमाद्वा, शक्तिनाशकसामग्र्यन्तर्भावाभ्युपगमाद्वा न तदापत्तिरित्युच्यते-तदा दाहं प्रत्येव मण्याद्यभावविशिष्टवह्नेः [पृथक् मण्यभावस्य वा?] हेतुत्वाभ्युपगमाद्वा दाहसामग्र्यन्तर्भावाभ्युपगमाद्वा मण्यादि-समवधानदशायां दाहवारणसंभवात् तथाभ्युपगम एव युक्तः; अन्यथा शक्ति तद्धर्मतन्नाशादिकल्पनाप्रसङ्गात् एवं प्रतिबन्धकमण्यादिना वह्निनिष्ठशक्तेस्तद्धर्मस्य वा नाशेऽपि शक्त्यन्तरस्य तद्धर्मस्य वोत्पत्तिप्रसङ्गः वह्न्यादिरूपकारणसत्त्वात् । यदि च वह्न्यादेस्तत्र कारणत्वं नाभ्युपगम्यत इत्युच्यते; तदा मण्यपसरणेऽपि शक्तितद्धर्मानुत्पत्तिप्रसङ्गः । न चेष्टापत्तिः; दाहानुत्पत्तिप्रसङ्गात् । यदि च मण्याद्यभावविशिष्टवह्नेर्मण्याद्य भावस्यापि वा स्वातन्त्र्येण शक्तितद्धर्महेतुत्वम्, शक्तितद्धर्मसामग्र्यां वा मण्याद्यभावस्यान्तर्भावः स्वीक्रियत इति नोक्तदोषावकाश इत्युच्यते; तदा दाहं प्रत्येवोक्तरीत्या हेतुत्वादिस्वीकारसंभवात् गौरवग्रस्तशक्त्याद्यभ्युपगमोऽनुपपन्न इति । **अनुत्पत्त्यादीति** आदिना उक्तदाहानुत्पत्तिलक्ष्मह । **अन्ततः आगमेन प्रतिहतिरिति ।** "शक्तयः सर्वभावानाम्" इति वक्ष्यमाणागमेनैव शक्तिसिद्ध्या न तत्रोक्त गौरवं दोषः—कल्पनायामेव तस्य तथात्वादिति भावः । उत्तेजक(का?)समवहितप्रतिबन्धकेन शक्त्यादि-नाशेऽप्युत्तेजकेन शक्त्याद्यन्तरोत्पादादेव दाहोपपत्त्या नोत्तेजकाभावविशिष्टमणित्वादिना शक्तिनाश-कत्वं स्वीकार्यम्— प्रतिबन्धकसमवधानकालीनशक्त्युत्पत्तावुत्तेजकत्वेन हेतुत्वाभ्युपगमात् । अभावस्य कारणतावच्छेदकतायाः कारणत्वस्य वा कारणव्यतिरिक्तानां सामग्र्यन्तर्भावस्य वा क्वचिदप्यदर्शनाच्च । अत एव प्रतिबन्धकाभावस्य कारणतावच्छेदकत्वं कारणत्वं वा सामग्र्यन्तर्भूतत्वं वा न युज्यत एव । अस्तु वा अभावस्य कारणतावच्छेदकत्वादिकम्; तथापि तस्य शक्तिमत्त्वेनैव तथात्वमुचितम्—उत्तेज-काभावविशिष्टप्रतिबन्धकाभावत्वापेक्षया लाघवात् । उत्तेजकबलात् प्रतिबन्धकदशायां कार्योपपत्तये प्रतिबन्धके उत्तेजकाभाववैशिष्ट्यनिवेशनस्यावश्यकत्वात् । न चाभावे शक्त्यसंभव इति शङ्क्यम्; तस्यापि भावान्तरत्वेनाविरोधात् । किञ्च प्रतिबन्धकमण्यादिसमवधानकालीनदाहोत्पत्तौ मणिमन्त्रादि-रूपाणामुत्तेजकानामननुगतानामप्येकशक्तिमत्त्वेनैव हेतुत्वसंभवान्न तत्तदुत्तेजकाभावकूटविशिष्टमण्याद्य-भावत्वेन हेतुत्वाभ्युपगमो युक्तः—अभावकूटस्यैकविशिष्टापरत्वेनैव निवेशनीयतया: पक्षताग्रन्थे गदाधरेण व्यवस्थापिततया अनेकाभावानां मिथोविशेषणविशेष्यभावे विनिगमनाविरहेण गुरुधर्मा

वा नाश्यते, विरोधिनोः शक्त्यन्तरधर्मान्तरयोर्वा उत्पत्तिः, अविशिष्टाऽपि वा कार्यं न करोति इति पञ्चसु पक्षेषु कोऽभ्युपगम्यते इति सौहार्देन पृच्छाम इति चेत्—अस्त्वेषामन्यतमः। तर्हि पुनश्शक्त्युत्पादानियतकारणत्वप्रसङ्गपरिहारः कथमिति चेत्—इत्थम्। प्रतिबन्धकाभावसहितात् वह्निस्वरूपात् तदुत्पादः, अप्रतिबद्धा शक्तिश्च कार्यकरी इत्यादिभवन्निर्वाहस्यैव शक्तौ सुवचत्वात्॥ सा तर्हि किमर्थं कल्प्यते इति न च वाच्यम्; दत्तोत्तरत्वात्। ननु शक्तिः

---

यिनामिति। अविशिष्टाऽपि वेति। न किञ्चिदप्युत्पाद्यते नाश्यते वा; अपि तु पूर्वावस्थैव सती कार्यं न करोतीत्यर्थः। इदञ्च सम्भावनामात्रेणोपन्यस्तमिति द्रष्टव्यम्। प्रबन्धकाभावसहिताद् वह्निस्वरूपादिति। उत्तेजकाभावविशिष्टस्य मणेः प्रतिबन्धकतया उत्तेजकसत्त्वे अप्रतिबद्धवह्निस्वरूपसत्त्वेन पुनः शक्त्युत्पत्त्युपपत्तेः प्राथमिकशक्त्युत्पत्तेरपि वह्निस्वरूपोत्पत्त्यनन्तरमाविरत्वाभ्युपगमात् तत्रापि अप्रतिबद्धस्वरूपस्यैव हेतुतया नानियतहेतुकत्वप्रसङ्ग इति भावः। शक्तेर्धर्मिविधर्मिमाविभ्यमवलम्ब्याह अप्रतिबद्धेति। भवन्निर्वाहस्येति। यथा त्वन्मते अप्रतिबद्धस्याग्नेर्दाहजनकत्वम्, एवमस्मन्मतेऽपि अप्रतिबद्धशक्तेर्दाहादिकार्यजनकत्वम्, अप्रतिबद्धवह्नेर्वा शक्तिजनकत्वं कल्प्यत इत्यर्थः। प्रतिबन्धकाभावहेतुत्वांशसाम्यमात्रात भवन्निर्वाहस्येत्युक्तिः। सा तर्हि किमर्थमिति। प्रतिबन्धकाभाव

---

वच्छिन्नानन्तकारणतास्वीकारप्रसङ्गात्। एवं तृणारणिमणीनां कारणतावच्छेदकसंकोचेन कारणतात्रयस्वीकारापेक्षया त्रयाणामेकशक्तिमत्त्वेनैकहेतुत्वाभ्युपगम एव युक्त इत्यादिरीत्या आगममन्तरेणापि शक्तिः सिद्ध्येदित्यभिप्रायेण अन्ततः इत्युक्तम्। तत्सिद्धिरिति। शक्तिसिद्धिरित्यर्थः। तद्धर्मो वेति। वह्न्यादिनिष्ठशक्तिगतो दाहानुकूलः कश्चन धर्म इत्यर्थः। इदञ्च शक्तेर्धर्मवदाश्रयभावित्वाभिप्रायेण। विरोधिनोः शक्त्यन्तरधर्मान्तरयोरिति। दाहविरोधिशक्त्यन्तरस्य, पूर्वमेव विद्यमाने दाहविरोधिशक्त्यन्तरे दाहप्रतिबन्धानुकूलस्य कस्यसिद्धर्मान्तरस्य वोत्पत्तिरित्यर्थः। अविशिष्टापीति। प्रतिबन्धकनाश–तादृशधर्मनाश–विरोधिशक्त्यन्तरतद्धर्मोत्पत्तिसाहित्यरहिताऽपीत्यर्थः। कार्यं नकरोतीति। मण्यादिरूपप्रतिबन्धकाभावविशिष्टाया एव वह्न्यादिनिष्ठशक्तेर्दाहोपयोगित्वादिति निगूढाभिप्रायः। पुनश्शक्त्युत्पादेति। अयं भावः—प्रतिबन्धकेन शक्तिधर्मनाशपक्षे वह्न्यादिरूपकारणसद्भावात् पुनरपि शक्त्याद्युत्पत्त्यापत्त्या दाहजननं स्यात्। विरोधिनोः शक्त्यन्तरधर्मान्तरयोरुत्पत्तिरिति पक्षे वह्न्यादिरूपसामग्रीबलात् दाहोत्पत्तिप्रसङ्गः; सत्यां सामग्र्यां कार्योत्पत्त्यवश्यम्भावादिति। पञ्चमपक्षेऽप्यभिप्रायापरिज्ञानात् तदापत्तिः क्रियते। तदुत्पत्तिरिति। शक्त्युत्पत्तिरित्यर्थः। तथाच मण्यभावविशिष्टवह्निरूपकारणविरहान्न पुनश्शक्त्युत्पत्तिः, प्राक्तनशक्तिश्च प्रतिबन्धकेन नष्टेति शक्तिमद्वह्निरूपकारणविरहान्न दाहोत्पत्तिरिति भावः। तृतीयादिपक्षेऽप्याह अप्रतिबद्धा शक्तिर्वेति। विरोधिशक्त्यन्तराभावविशिष्टा तादृशधर्मान्तराभावविशिष्टा वा शक्तिरित्यर्थः। कार्यकरीति। दाहादिकार्यजनिकेत्यर्थः। आदिना मण्याद्यभावस्यापि शक्तिं प्रति हेतुत्वस्य, शक्तिसामग्रीघटकत्वस्य च सङ्ग्रहः। भवन्निर्वाहस्येति। दाहविषये भवद्भिः क्रियमाणस्य निर्वाहस्येत्यर्थः। तार्किकैर्हि मण्यभावविशिष्टवह्नेः दाहकारणत्वं मण्यभाव-

शक्ता वा, न वा? पूर्वत्र, शक्तियोगात् शक्तौ, सा च शक्तिस्तथेत्यनवस्था। उत्तरत्र, तस्याः कारणत्वं न स्यात् अशक्तत्वात्। अन्यथा सिकताभ्योऽपि तैलमुत्पद्येत, शिलाशकलादिभ्यश्च अङ्कुरादिकमिति चेत्—न—[1]शक्त्यन्तराभावेऽपि कारणानां कार्यानुगुण्यरूपतया तस्याः सिद्धत्वात्। अन्यथा उष्णत्वं उष्णम्, न वा? पूर्वत्र, अनवस्था; उत्तरत्र, कार्यं न जनयेत् शीतवत् इत्यादि-

हेतुत्वाभ्युपगमे किं शक्त्येति भावः। दत्तोत्तरत्वादिति। अन्तत आगमेन प्रतिहतिरिति पूर्वमेवोक्तत्वादिति भावः। शक्तियोगाच्छक्ताविति। शक्तौ शक्तत्वनिर्वाहार्थं शक्त्यन्तरयोगस्याभ्युपगन्तव्यत्वात् तस्यामपि शक्तौ शक्तिरभ्युपेयेत्यनवस्थेति भावः। कार्यानुगुण्यरूपतयेति। कार्यानुगुण्यं कारणतेत्यर्थः। न हि कारणतायां कारणतान्तरमपेक्षितमिति भावः। उष्णत्वमिति। उष्णस्पर्श

स्यापि वा स्वात्मरूपेण तत्कारणत्वमभ्युपगम्य मणिसमवधानदशायां दाहो वार्यते। अन्यैश्च कैश्चित् मण्याद्यभावस्य दाहकारणतावच्छेदकत्वं तत्कारणत्वं वाऽनभ्युपगम्यैव दाहोपघायकसमग्रीशरीरे मण्याद्यभावमप्यन्तर्भाव्य मणिसमवधानदशायां दाहोत्पत्तिर्वार्यते। तादृशनिर्वाहः शक्तिविषयेऽस्माकमपि संभवतीति भावः। किमर्थमिति। मण्यादिसमवधानदशायां दाहकारणस्य शक्तिमन्तरेणैव दाहादिकं प्रति मण्याद्यभावकारणतावच्छेदकत्वादिनैव निर्वाहादिति भावः। दत्तोत्तरत्वादिति। अन्तत आगमेन प्रतिहतिरित्यनेनेति भावः। शक्तियोगाच्छक्ताविति। शक्तिसंबन्धाधीनकार्यप्रयोजकत्व इत्यर्थः। सा च शक्तिस्तथेत्यनवस्थेति। कार्यप्रयोजकतायाः शक्तियोगाधीनत्वे कारणतावच्छेदिकायाः शक्तेः कार्यप्रयोजकतया तत्र शक्त्यन्तरं कारणतावच्छेदकतावच्छेदकतयाऽवश्यमङ्गीकार्यम्। ततश्च कारणतावच्छेदकतावच्छेदकतया कार्यप्रयोजिकायां शक्तिनिष्ठशक्तावपि तादृशकार्यप्रयोजकतानिर्वाहकतया शक्त्यन्तराभ्युपगम आवश्यक इत्येवमनवस्थेत्यर्थः। कारणत्वं न स्यादिति। कार्यप्रयोजकत्वं न स्यादित्यर्थः। अशक्तत्वादिति। कार्यप्रयोजकतायाः शक्त्यधीनत्वादिति भावः। अन्यथेति। शक्तिशून्यस्यापि कार्यप्रयोजकत्व इत्यर्थः। कार्यानुगुण्यरूपतयेति। कारणतावच्छेदकरूपतया कारणतारूपतया वेत्यर्थः। न तु कारणरूपतया शक्त्यभ्युपगमः। अशक्तस्य तु कारणत्वमेव न संभवति। न तु कारणतावच्छेदकत्वादिकमपि अतो नोक्तदोषावकाश इति भावः। उक्तमर्थं प्रतिबन्द्या साधयति अन्यथेति। कारणतानियामकत्वेनाभिमतस्य प्रयोजकतानियामकत्वमङ्गीकृत्य दोषाभिधान इत्यर्थः। उष्णत्वमुष्णं न वेति। उष्णस्पर्श उष्णस्पर्शवान् न वेत्यर्थः। पूर्वत्रानवस्थेति। स्फोटादिकारणतानियामकत्वेन संमतस्योष्णस्पर्शस्य स्फोटादिप्रयोजकतानियामकत्वमङ्गीकृत्योष्णस्पर्शस्याप्युष्णस्पर्शवत्त्वस्वीकारे उष्णस्पर्शनिष्ठोष्णस्पर्शस्यापि प्रयोजकत्वाविशेषेणोष्णस्पर्शवत्त्वावश्यम्भावादनवस्थेत्यर्थः। कार्यं न जनयेदिति। स्फोटादिकार्यप्रयोजकं न भवेदित्यर्थः। ततश्च यथा स्फोटादिकार्यजनकतायामेवोष्णस्पर्शस्य नियामकत्वम्, न तु तत्प्रयोजकतायामिति नोक्तदोषावकाश इति परिह्रियते—तथा प्रकृतेऽपि दाहादिजनकतायामेव शक्तेर्नियामकत्वम्, न तु तत्प्रयोजकतायामपीति नोक्तदोषावकाश इति भावः।

1 वादिहंसाम्बुवाहविरचिते न्यायकुलिशे न्यायकुसमाञ्जलिकृत-शक्तिनिरासप्रकारनिरासो द्रष्टव्यः।

प्रसङ्गस्यापि दुर्वारत्वात् । उक्तञ्चैतत् भगवता पराशरेण, "शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः । यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः । भवन्ति तपतां श्रेष्ठ ! पावकस्य यथोष्णता" इत्यादि । प्रमाणसिद्धस्वभावा न कथञ्चिदपि परित्यागमर्हन्तीत्यर्थः । एवमहिर्बुध्न्यसंहितायामपि, "शक्तयः सर्वभावानामचिन्त्या अपृथक्स्थिताः" इत्यादि । एवं सर्वत्रानुसन्धेयम् ।

---

उष्णस्पर्शाश्रयो वा न वेत्यर्थः । **शक्तयः सर्वभावानामि**ति । यतः सर्वेषामपि वस्तूनामतर्क्यप्रमितिसिद्धाः **शक्तयः** सन्ति । अतो ब्रह्मणोऽपि जगत्सर्गाद्यनुकूला **भावशक्तयः**=स्वाभाविकशक्तयः सन्तीत्यर्थः । **अचिन्त्यज्ञानगोचरा** इत्यस्यार्थमाह **प्रमाणसिद्धे**ति ।

ब्रह्मणो भिन्नाभिन्ना सत्ताज्ञानानन्दादिशब्दिता स्वतो निर्विकारा अचिद्विशिष्टवेषेण जगदुपादानभूता, "जगदुत्पादिका शक्तिस्तव प्रकृतिरिष्यते", "ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्" इत्यादिप्रमाणप्रतिपन्ना जक्षणाद्यभिव्यङ्ग्यवैषयिकानन्दाभिन्ना शैवी चिच्छक्तिर्जगत्प्रकृतिरिति

---

शक्तिसाधकमागममाह **उक्तञ्चे**ति । ननूक्तागमेन न शक्त्याख्यातिरिक्तद्रव्यसिद्धिः ; वह्नित्वादिरूपकारणतावच्छेदकधर्मस्य, अनन्यथासिद्धनियतपूर्ववृत्तित्वरूपकारणताया वा शक्तिपदेनाभिधानसंभवादिति चेत्-अत्रोच्यते । न तावत् अनन्यथासिद्धनियतपूर्ववृत्तित्वरूपं कारणत्वम् ; तथा सति, "यजेत स्वर्गकामः" इत्यादितो यागादेः स्वर्गकारणत्वासिद्धिप्रसङ्गात् । तथाहि —नियतपूर्ववृत्तित्वं हि कार्याव्यवहितप्राक्क्षणावच्छिन्नकार्याधिकरणनिरूपिताधेयतावदभावनिरूपित-कारणतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितानवच्छेदककारणतावच्छेदकवत्त्वरूपम् । ततश्च स्वर्गाव्यवहितप्राक्क्षणे यागाभावसत्त्वेन यागत्वस्योक्तानवच्छेदकत्वानुपपत्तिः । न च स्वजन्यव्यापारसंबन्धेनैव यागस्य कारणत्वाभ्युपगमान्नोक्तदोषावकाश इति वाच्यम् ; श्रुतिबोधितकारणत्वान्यथानुपपत्त्यैव व्यापारस्य कल्पनीयतया कारणताबोधात् पूर्वं व्यापारज्ञानासंभवेन तद्घटितकारणताबोधासंभवात् । स्वर्गाव्यवहितप्राक्क्षणे यागसंबन्धविरहेणावच्छेद्याधिकरणासंबन्धिनोऽवच्छेदकत्वासंभवेन तादृशक्षणस्य स्वर्गाधिकरणनिरूपितायां यागवृत्तावच्छेदकत्वासंभवेन स्वजन्यव्यापारसंबन्धावच्छिन्नप्रतियोगिताकयागाभावस्यापि स्वर्गाव्यवहितप्राक्क्षणावच्छेदेन स्वर्गाधिकरण आवश्यकत्वात् । प्रतियोगिवृत्त्यनवच्छेदकस्याभाववृत्त्यवच्छेदकत्वावश्यम्भावात् । वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितावच्छेदकत्वानुपगमे तत्संबन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धेश्च । न च कार्यनियतपूर्ववृत्तित्व-कार्यनियतपूर्ववृत्तिनिरूपितनियतपूर्ववृत्तित्वान्यतरवत्त्वमेव कारणत्वमिति नोक्तदोषावकाश इति वाच्यम् ; स्वर्गाव्यवहितपूर्ववृत्तिपरमापूर्वं प्रत्यपि यागस्याव्यवहितपूर्ववृत्तित्वविरहात् । उदीच्यचरमाङ्गसमनन्तरमेव परमापूर्वोत्पत्तेः । एवं गङ्गास्नानादिजन्यस्वर्गाव्यवहितप्राक्क्षणावच्छेदेन यागस्य तज्जन्यापूर्वस्य वा अभावेन न तत्रोक्तनियतपूर्ववृत्तित्वसंभवः । न च स्वर्गत्वव्याप्यवैजात्यावच्छिन्नं प्रति नियतपूर्ववृत्तित्वसंभव इति वाच्यम् ; तादृशवैजात्योपस्थापकप्रमाणाभावात् ; कार्यकारणभावबोधानन्तरमेव कार्यतावच्छेदकतया तस्य कल्पनीयतया ततः प्राक् तदुपस्थित्यसंभवाच्चेत्यादि नव्यनैयायिकग्रन्थेषु विस्तरः । तत् सिद्धं कारणत्वशब्दितं शक्त्यभिधानमद्रव्यान्तरमिति ।

इतरे त्वेवं वदन्ति—सर्वकारणानां सन्निधिमात्रोपकारिणी शक्तिः। तामन्तरेण निस्सारमखिलम्; अशक्तत्वात्। तथाऽन्वयव्यतिरेकात्। अत एव सा विशेषणतया स्फुरन्त्यपि वस्तुतः प्रधानभूता। सर्वत्रैका; कल्पनालाघवात्। तदुक्तम्—“एकैव तु परा शक्तिर्ज्ञानानन्दक्रियामयी” इति। निर्विकारा; तत्सम्बन्धिगतत्वात् विकाराणाम्। न शक्त्यन्तरमपेक्षते; शक्तत्वादनवस्थानाच्च। अत एवानुयोगवैभवा चेयम्; अघटितघटकतया धर्मिग्राहकसिद्धेः। एकत्वादेव देशकालापरिच्छिन्ना। तदुक्तम्—“व्यापिका तु परा शक्तिर्व्याप्यं विश्वमिदं जगत्” इति। सर्वाकारोल्लासिनीत्वात् वस्तुपरिच्छेदरहिता। अचिच्छक्तिरूपेण सकला। निष्कृष्टचिच्छक्तिरूपेण निष्कला। तां कार्यकारणरूपप्रपञ्चकञ्चुकितां प्रपञ्चप्रलयवतीमेव तत्परतो भावयेदिति।

तदन्ये न मन्यन्ते। तथाहि—न तावत् प्रधानभूता; तद्विशिष्टस्यैव तत्त्वात्। अत एव नोपादानत्वादिकमप्यस्याः। प्रागुत्तरावधिव्यतिरिक्तपरिणामस्तु नेष्यत एव। नापि सर्वत्रैका; प्रतिवस्तुनियततयैव तत्सिद्धेः। नापि सर्वत्र नित्या; अनित्येषु नित्यत्वे प्रमाणाभावात्। नाप्यनादिः;

---

शैवानां मतमुपक्षिपति इतरे त्वित्यादिना। निस्सारमिति। अत एवोक्तम्, “शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि” इति। वस्तुतः प्रधानभूतेति। घटोऽस्ति पटोऽस्तीत्यादौ सत्तायाः घटविशेषणतया स्फुरणेऽपि अधिष्ठानतया प्रधानत्ववत् शक्तमिति शक्तेर्विशेषणतया स्फुरणेऽपि सर्वोपादानत्वात् प्राधान्यमस्तीति भावः। एकत्वादेवेति। एकत्वेऽपि देशकालपरिच्छिन्नत्वे सार्वत्रिकसार्वदिककार्योपलम्भो न स्यादिति भावः। सर्वाकारोल्लासिनीत्वादिति। अचिद्विशिष्टवेषेण सर्वविधपरिणामाश्रयत्वादिति भावः। अचिच्छक्तिरूपेणेति। अचिद्विशिष्टवेषेण सावयवेत्यर्थः। प्रपञ्चप्रलयवतीमेवेति। मुक्तिकाले इति शेषः। तत्परतो भावयेदिति। तात्पर्येण; भक्त्येत्यर्थः। अथवा तत्परतः प्रपञ्चापेक्षया परत्वेन भावयेदित्यर्थः। तद्विशिष्टस्यैवेति। शक्तिविशिष्टस्यैव प्रधानत्वादित्यर्थः। अत एवेति। उपसर्जनत्वादेवेत्यर्थः। ननु उपादानत्वाभावे शक्तेः परिणामो न स्यादित्याशङ्क्य इष्टापत्त्या परिहरति प्रागुत्तरावधीति। उत्पत्तिविनाशव्यतिरिक्त-

---

शैवमतमाह इतरे त्विति। सन्निधिमात्रेति। न तु ज्ञाता सतीत्यर्थः। अतस्तज्ज्ञानाभावेऽपि न कार्यविरोध इति भावः। निस्सारमिति। अकार्यकारीत्यर्थः। विशेषणतया स्फुरन्त्यपीति। शक्तमित्यादाविति भावः। वस्तुतः प्रधानभूतेति। सर्वोपादानत्वादिति भावः। एकत्वादेव देशकालापरिच्छिन्नेति। अन्यथा सर्वदेशकालव्यापिकार्योपलम्भो न स्यादिति भावः। सर्वाकारोल्लासिनीत्वादिति। अचिद्विशिष्टवेषेण सर्वविधपरिणामाश्रयत्वादित्यर्थः। अचिच्छक्तिरूपेण सकलेति। अचिद्विशिष्टवेषेण सावयवेत्यर्थः। प्रपञ्चप्रलयवतीमेवेति। मुक्तिकाल इति शेषः। तत्परत इति। तात्पर्येणेत्यर्थः। भक्त्येति यावत्। अथवा, तत्परतः—प्रपञ्चापेक्षया परत्वेन भावयेदित्यर्थः। तद्विशिष्टस्येति। शक्तिविशिष्टस्येत्यर्थः। तत्त्वात्—प्रधानत्वात्। एवकारेण शक्तेः प्राधान्यं व्यवच्छिद्यते। अत एवेति। अप्रधानत्वादेवेत्यर्थः। उपादानत्वाभावे परिणामो न स्यादित्याशङ्क्येष्टापत्तिमाह प्रागुत्तरावधिव्यतिरिक्तेति। प्रागभावप्रतियोगित्वध्वंसप्रतियोगित्वव्यतिरिक्तेत्यर्थः। प्रागुत्तरावध्योस्तु नोपादानत्वव्याप्यत्वम्; संयोगादिसाधारण्यादिति भावः। नियततयैवेति। कार्यादिभेदभिन्नतयैवेत्यर्थः।

कारणैः सहैव स्वरूपलाभात्। नाप्यपर्यनुयोज्यवैभवा; प्रतिनियतविषयत्वात्। एवं तु वस्तुपरिच्छेदद्वयमपि सिद्धम्। ननु ब्रह्मशक्तिरेव सर्वेषां शक्तिः। तद्विषयतया शक्तत्वं नियतविषयत्वञ्चान्येषामस्तु। किं सर्वत्र शक्तिभेदाभ्युपगमेनेति चेन्न; प्रत्येकं शक्त्याश्रयत्वव्यपदेशस्वारस्याबाधात्। यद्यपि ब्रह्मशक्तिस्तु न शक्त्यन्तरवत्, तथाऽपि तच्छक्तिरित्येव सिद्धेः[।] तत्प्रधानत्वसमत्ववचनान्यपि विवक्षया घटन्ते। अधिकत्ववचनानि तु न सन्त्येव। यामळादितन्त्रं तु पाशुपताधिकरणेनैव निराकृतम्। संविदद्वैतदूषणानि च सर्वाणि अत्राप्यनुसन्धेयानि।

इयञ्च द्रव्येष्वेव वर्तते अद्रव्येष्वपि वेति स्वयूथ्यवादः। आत्मसिद्धौ भगवद्यामुनमुनिवचनम्, "सर्वद्रव्येषु तत्कार्यसमधिगम्यस्तत्प्रतियोगिशक्त्याख्यो गुणः साधारणः" इति। अत्र सर्वद्रव्येष्वित्यस्य द्रव्येष्वेवेत्यवधारणं केचिदिच्छन्ति। सर्वेषु द्रव्येष्वस्त्येवेत्यन्ये। उक्तञ्च वरदविष्णुमिश्रैः, "शक्तेर्गुणत्वेऽपि गुणकर्मणोस्तत्सम्भवः" इति। पूर्वस्मिन् पक्षे द्रव्यगतयैव शक्त्या समानाधिकरणया रूपरसादीनां शक्तत्वम्; इतरस्मिंस्तु पक्षे रूपादिष्वपि शक्तिरस्ति। एवं द्रव्यमात्रे, रूपादिष्वपीति वृत्तिस्तावत् यथाकथञ्चिदस्तु; शक्तिमात्रं साम्प्रदायिकमिति स्थितम्। भाष्यकारैरपि शक्तिः शरीरनिरूपणेऽभिहिता, "अग्न्यादेः शक्तिप्रतिबन्धात् औष्ण्याद्यनुदयः।" इति।

---

विकारो नास्तीत्यर्थः। **सहैवेति**। स्वाश्रयेण सहैवेत्यर्थः। **प्रतिनियतविषयत्वादिति**। **अपर्यनुयोज्यवैभवत्वे** विषयव्यवस्था न स्यादिति भावः। **एवंत्विति**। उत्पत्तिमत्त्व-**नियतविषयत्वयोः** सिद्धावित्यर्थः। **तद्विषयतया शक्तत्वमिति**। न तु तदाश्रयतयेत्यर्थः, येन तत्तद्वस्त्वाश्रितशक्तिभेदोऽभ्युपगन्तव्यः स्यादिति भावः। **अन्येषामस्त्विति**। ब्रह्मण एव शक्त्याश्रितत्वात् सर्वकार्यकरत्वमिति भावः। ननु सर्वनिर्वाहिकाया **ब्रह्मशक्तेः शक्त्यन्तर**विलक्षणत्वात् प्राधान्यं किं न स्यात् इत्याशङ्क्य शक्त्यन्तरविलक्षणत्वेऽपि ब्रह्मापेक्षयोपसर्जनत्वेन प्रमाणप्रतिपन्नत्वेन शक्तिप्राधान्यवादोऽनुपपन्न इत्याह **यद्यपि ब्रह्मशक्तिरिति**। **समत्ववचनानीति**। ब्रह्मसमत्ववचनानीत्यर्थः। **विवक्षयेति**। प्रशंसापरतयेत्यर्थः। **संविदद्वैतदूषणानीति**। एकस्यैवानन्दस्य सर्वजीवानुभूयमानवैषयिकानन्दरूपत्वे मृषावादिपक्षोक्तभोगसाङ्कर्यादिदोषाः प्रसज्येरन्नित्यर्थः। **तत्कार्यसमधिगम्य इति**। फलबलकल्प्य इत्यर्थः। **तत्प्रतियोगीति**। तद्विषयक इत्यर्थः। **समानाधिकरणयेति**। शक्त्येकार्थसमवायात् **शक्तत्व**व्यवहार इत्यर्थः। **शरीरनि-**

---

**कारणैस्सहैवेति**। कारणोत्पत्तेः प्राक् तदाश्रितशक्त्यवस्थानासंभवादिति भावः। **प्रतिनियतविषयत्वादिति**। अपर्यनुयोज्यवैभवत्वे विषयव्यवस्था न स्यादिति भावः। **एवमिति**। उत्पत्तिविनाशशालित्वप्रतिनियतविषयत्वसिद्धावित्यर्थः। **तद्विषयतया शक्तत्वमिति**। न तु तदाश्रयतयेत्यर्थः। तेन न वस्तुभेदाच्छक्तिभेद इति भावः। **प्रत्येकं शक्त्याश्रयत्वव्यपदेशेति**। वह्निर्दाहे शक्त इत्यादिव्यपदेशेत्यर्थः। **समत्ववचनानीति**। ब्रह्मसमत्ववचनानीत्यर्थः। **विवक्षयेति**। प्रशंसापरतयेत्यर्थः। शक्तिभेदविरहस्य संविद्भेदविरहतुल्ययोगक्षेमतया तद्दूषणानि सर्वाण्यत्रातिदिशति **संविदिति**। संविद्भेदविरहे चैत्राद्यनुभूतस्य मैत्रादिना प्रतिसन्धानप्रसङ्गवत् शक्तिभेदविरहे जलादिनापि दाहादिप्रसङ्ग इति भावः। **तत्कार्यसमधिगम्य इति**। फलबलकल्प्य इत्यर्थः। **तत्प्रतियोगीति**। कार्यविषयक इत्यर्थः। **शक्तत्वमिति**। शक्तमिति व्यवहार इत्यर्थः। रूपं चाक्षुषजनने शक्तमित्यत्र शक्तपदेन सामानाधि-

ननु, "स्वशक्त्या वस्तु वस्तुताम्" इत्यत्र शक्तिशब्दः सहकार्यर्थतया स्थापितो भाष्यकारैः, यथा, "स्वशक्त्या = स्वकर्मणैव देवादिवस्तुताप्राप्तिः" इति। तथा, "अघस्य विनाशकरणमुत्पन्नाया-स्तच्छक्तेर्विनाशकरणम्; शक्तिरपि परमपुरुषाप्रीतिरेव" इत्युक्तम्। तथा भगवता पराशरेणापि, "विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथाऽपरा। अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते॥ यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप! सर्वगा", "समस्ताः शक्तयश्चैता नृप! यत्र प्रतिष्ठिताः॥ तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत्", "परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत्" इत्यादिषु शक्तिशब्दो हि अपृथक्सिद्धविशेषणमात्रे प्रयुक्तः। तथा वेदार्थसंग्रहे, "शक्तयः सर्वभावानामचिन्त्य..." इत्यस्य व्याख्याने, "अतो विचित्रानन्तशक्तियुक्तं ब्रह्मेत्यर्थः" इत्युक्त्वा, 'तदाह—जगदेतन्महाश्चर्यं रूपं यस्य महात्मनः। तेनाश्चर्यव(प)रेणाहं भवता कृष्ण! सङ्गतः॥' इति" इत्युदाहृतम्। तत्र च शक्तिशब्दार्थतया, "जगदेतन्महाश्चर्यं रूपं यस्य" इत्युक्त्या नातिरिक्ता शक्तिरिष्यते इत्यवगम्यते—

स्यादेवम्; नैतावता शक्तिलक्षणधर्मविशेषस्यानभिमतत्वसिद्धिः; मणिमन्त्रादिप्रतिबन्धार्हतया दाहादिकार्यहेतुभूतायाः शक्तेः साक्षादुक्तत्वात्। गौण्या लक्षणया वा वृत्त्या तत्रतत्र शक्तिशब्दप्रयोगास्तु न तद्वस्तूनां शक्तिरूपत्वप्रतिपादनपराः। कर्मणां [1]जीवशक्तित्वव्यपदेशः परमपुरुषप्रीत्यप्रीत्योः कर्मशक्तित्वव्यपदेशश्च तत्तदधीनोत्पत्तित्वेन तत्तत्पारतन्त्र्यमात्रात्। अत एव क्षेत्रज्ञाविद्यादीनां जगतश्च परब्रह्मशक्तित्वव्यपदेशोऽपि। निरतिशयशक्तिमूलत्वाद्वा। अत्र

रूपण इति। "न तु दृष्टान्तभावात्" इति सूत्रभाष्ये इति शेषः। ननु शक्त्याख्यातिरिक्तपदार्थाभ्युपगमः कर्मणां जीवशक्तित्वप्रतिपादकेन, "वैषम्यनैर्घृण्ये न सापेक्षत्वात्" इति सूत्रभाष्येण, परमपुरुषप्रीत्यप्रीत्योः कर्मशक्तित्वप्रतिपादकेन, "तदधिगम उत्तरपूर्वाघयोः" इति सूत्रभाष्येण, क्षेत्रज्ञाविद्यादीनां शक्तित्व प्रतिपादकश्रीविष्णुपुराणवचनेन, जगतः शक्तित्वप्रतिपादकवेदार्थसंग्रहवचनेन च विरुद्ध इत्याक्षिपति ननु स्वशक्त्येत्यादिना। विष्णुशक्तिरिति। विष्णोर्मुक्तात्मरूपा शक्तिरित्यर्थः। अत एव हि भाष्यम्, "परस्य ब्रह्मणो विष्णोः शक्तिशब्दाभिधेयं रूपद्वयं मूर्तामूर्तविभागेन प्रतिपाद्य तृतीयशक्तिरूप-कर्माख्याविद्यावेष्टितमचिद्विशिष्टं क्षेत्रज्ञं मूर्ताख्यविभागं भावनात्रयान्वयात् अशुभमित्युक्त्वा" इत्यादि। समस्ताः शक्तयश्चैता इति। "विष्णुशक्तिः परा प्रोक्ता" इत्यादिना प्रतिपादितास्तिस्रोऽपि शक्तय इत्यर्थः। परिहरति स्यादेवमिति। साक्षादुक्तत्वादिति। "अग्न्यादेः शक्तिप्रतिबन्धात् औष्ण्याद्यनुदयः" इत्युक्तत्वादित्यर्थः। अत एवेति। पारतन्त्र्यादेवेत्यर्थः। "ब्रह्मविष्णुशिवा

करणसंबन्धेन शक्तिविशिष्टमेव बोध्यत इति भावः। ननु शक्त्याख्यातिरिक्तपदार्थस्वीकारे कर्मादीनां जीवादिशक्तित्वप्रतिपादकभाष्यादिविरोध इति शङ्कते नन्विति। विष्णुशक्तिरिति। विष्णोर्मुक्तात्म-रूपा शक्तिरित्यर्थः। क्षेत्रज्ञाख्या—बद्धात्मरूपा। परिहरति स्यादेवमिति। साक्षादुक्तत्वादिति। "अग्न्यादेश्शक्तिप्रतिबन्धात्" इत्यादिनेति भावः। अत एवेति। पारतन्त्र्यादेवेत्यर्थः। "ब्रह्मविष्णु-

1 कर्मणामिति। न हि शक्तेश्शक्तिर्लोके प्रसिद्धा। अत्र तु क्षेत्रज्ञशक्तेः कर्मशक्तिरुच्यते। अतो गौणत्वम्। सहकारिषु शक्तित्ववादः प्रतिबन्धकाभाववत् कारणत्वादिति कुसुमाञ्जलिः।

विष्णोः[2] शक्तित्वव्यपदेशस्तु शक्तिशक्तिमतोरभेदोपचारात् । यत्तु, "विचित्रानन्तशक्तियुक्तम्" इत्यत्र, "जगदेतन्महाश्चर्यम्" इति वचनोदाहरणम्, तत्र(तच्च?) विचित्रजगत्स्रष्टृतया विचित्रशक्तियुक्ततोपपादनार्थम् । अतो न कश्चिद्विरोध इति । अतः शक्तिर्नाम धर्मविशेषः सिद्धः ॥

स्वतःपतनहेतुस्वभावो गुरुत्वम् । तच्च सलिलपृथिवीगतम् । पतनकल्प्यम् । तोलनादिदशायां स्पार्शनप्रत्यक्षमपीति केचित्; तोलनादेश्च सहकारित्वात् पर्यन्तोर्ध्वभागस्पर्शे तदनुपलम्भो न दोषः। अन्यथा मातापितृसम्बन्धग्रहणसापेक्षे ब्राह्मणत्वादौ अप्रत्यक्षत्वापातादिति । अन्ये त्वाहुः— आहुः नास्ति पृथिवीसलिलस्वरूपातिरिक्तं गुरुत्वम् । स्वरूपादेवाप्रतिबद्धात् तयोः पतनसिद्धिः । स्वभावादेव हि अधिकगुरुत्वस्यापि पतनहेतुत्वम् । स च स्वभावः स्वरूपस्यैवास्तु; लाघवात् । पतनतारतम्यफलादिनियमोऽप्यवयवाधिक्यन्यूनतानिबन्धनः। तदनुगुणतयैव हि फलादिनियमं स्मर्तारोऽपि

ब्रह्मन् ! प्रधाना ब्रह्मशक्तयः" इत्यत्र गतिमाह अत्र विष्णोः शक्तित्वव्यपदेश इति । विचित्रशक्तित्वोपपादनार्थमिति । न तु तस्यैव शक्तित्वोपपादनार्थमित्यर्थः इति शक्ति ॥

अतिरिक्तगुरुत्ववादिपक्षमुपक्षिपति स्वतःपतनेति । पतनहेतुगुणो गुरुत्वमित्यर्थः । [अ ति रिक्तत्व मुक्त्वा?] पक्षान्तरमुपन्यस्यति तोलनादिदशायामिति । गुरुत्वपरिज्ञानार्थं हस्तेनोन्नय(म)नदशायामित्यर्थः। ननु गुरुत्वस्य स्पार्शनप्रत्यक्षत्वे ऊर्ध्वमध्यप्रदेशस्पर्शेऽपि तत्प्रत्यक्षापत्तिरित्याशङ्क्याह तोलनादेश्चेति । अन्यथेति । सहकारिसापेक्षत्वमात्रेण प्रत्यक्षत्वापलापे इत्यर्थः । अप्रत्यक्षत्वेति अप्रत्यक्षत्वप्रसङ्गादित्यर्थः । अतिरिक्तगुरुत्वं दूषयति अन्ये त्वाहुरिति । अप्रतिबद्धादिति । शिक्यादिनिहितदधिभाण्डाद्यपतने शिक्यादिरेव प्रतिबन्धक इति भावः । तयोरिति । पृथिवीसलिलयोरित्यर्थः । अधिकगुरुत्वस्यापीति । अतिरिक्तगुरुत्वस्यापीत्यर्थः । स्मर्तारोऽपीति "त्रसरेण्वष्टकं रेणुस्तत्त्रयं

शिवा ब्रह्मन् प्रधाना ब्रह्मशक्तयः" इत्यत्र गतिमाह विष्णोरिति । विचित्रशक्तियुक्तोपपादनार्थमिति । न तु तस्यैव शक्तित्वोपपादनार्थमित्यर्थः ।

गुरुत्वस्य क्लृप्तेष्वन्तर्भावं वक्तुं तदतिरिक्तत्वनिरसनाय तत्पक्षमुपक्षिपति स्वत इति । अन्यसंयोगानधीनेत्यर्थः । इदञ्च ज्वालासंयुक्तकाष्ठादिपतनदशायां ज्वालायामपि काष्ठसंयोगाधीनपतनदर्शनेन तादृशपतनहेतौ काष्ठसंयोगेऽतिप्रसङ्गवारणाय । स्वभाव इति । गुण इत्यर्थः । इदञ्च पतनसमवायिकारणे द्रव्येऽतिप्रसङ्गवारणाय । यद्यपि द्वितीयादिपतनेषु वेगोऽपि कारणम्; तथापि स्वत इत्यनेन वेगानधीनत्वस्यापि विवक्षिततया न दोषः। तोलनादिदशायामिति । गुरुत्वपरिज्ञानार्थं हस्तेनोन्नय(म)नादिदशायामित्यर्थः । आदिना अन्याहितभारवहनदशासङ्ग्रहः । अन्यथेति । सहकारिसापेक्षतामात्रेण प्रत्यक्षत्वानुपगम इत्यर्थः । ब्राह्मणत्वादावप्रत्यक्षत्वापातादिति । इदञ्च परमतानुवादरूपतया तन्मतानुसारेण । सिद्धान्ते तु ब्राह्मणत्वादेरप्रत्यक्षत्वमेव । स्पष्टमिदं सेश्वरमीमांसायाम्, "शास्त्रदृष्टविरोधाच्च" इति सूत्रे । अतिरिक्तगुरुत्वपक्षं दूषयति अन्येत्वाहुरिति । अप्रतिबद्धादिति । शिक्यादिना प्रतिबन्धात्र दधिभाण्डादिपतनमिति भावः । अधिकेति । अतिरिक्तेत्यर्थः । स्मर्तारोऽपीति ।

2 विष्णोरिति। विष्णुशक्तिः परेति प्रकृतवाक्ये विष्णोः शक्तित्वानुक्तेः स्थलान्तरं दर्शितं व्याख्याने।

निबध्नन्ति । उक्तञ्च न्यायतत्त्वे प्रमेयपादसप्तमाधिकरणे, "अधःपतनस्वभावात् स(त्म)[1]गुरुत्वम् । तदभावो लघुत्वम्" इति । यदि च पतनात् किञ्चित् स्वरूपातिरिक्तं कल्प्यते, तर्हि ऊर्ध्वज्वलनतिर्यक्पतनाभ्यां दहनपवनयोरपि द्वयमपि स्यात् ॥ स्वभावात् अदृष्टात् ईश्वरसङ्कल्पात् शक्तिविशेषाद्वा तत्सिद्धिरिति चेत्; तर्हि अत्रापि तथा स्यात् अविशेषात् । एतदभिप्रायेण तत्रैवोक्तम्, "त्रिविधं गुरुत्वम् ऊर्ध्वतिर्यगधोभेदेन । वाय्वग्निजलानि तिर्यगूर्ध्वाधोगुरूणि" इति ॥ भूतद्वयनिष्ठत्वं तेषामनुपपन्नमिति चेत्, भवदभिमतस्य वा कथमुपपद्यते? स्वभावादिति चेत्, तुल्यम्। यथा च ऊर्ध्वज्वलनस्य एकभूतावान्तरव्यक्तिषु बह्वीषु वृत्तिः—तथाऽत्रापीति भाव्यम् ।

---

राजसर्षपः । तेऽष्टौ यवष्षोडश तु यवा माषोऽथवा त्रिभिः ॥ रूप्यं माषो द्विगुञ्जो वा धरणं षोडशैव ते । शतमानं तु दशभिर्धरणैः पलमेव च ॥" इत्यादिक्रमेण स्मरणादिति भावः । ननु यदि **स्वरूपातिरिक्तं गुरुत्वमनभिमतम्**, तर्हि, **"त्रिविधं गुरुत्वं तिर्यगूर्ध्वाधोभेदेन"** इति गुरुत्वत्रयाभ्युपगमेन प्रवृत्तं न्यायतत्त्वशास्त्रं विरुध्येतेत्याशङ्क्याह **एतदभिप्रायेणे**ति । **स्वभावादृष्टाद्यभिप्राये**णेत्यर्थः । ननु स्वभावादृष्टादीनां तत्तदसाधारणानामनेकभूतनिष्ठत्वमनुपपन्नमिति शङ्कते । **भूतद्वयनिष्ठत्व**मिति । **भवदभिमतस्ये**ति अतिरिक्तगुरुत्वस्येत्यर्थः । यथा **चोर्ध्वज्वलनस्ये**ति । यथा ऊर्ध्वज्वलनानु-

---

"गवाक्षगतमार्तण्डरश्मिमध्ये प्रदृश्यते । त्रसरेणुप्रमाणं तु रज इत्युच्यते बुधैः । त्रसरेण्वष्टकं लिक्षा तत्त्रयं राजसर्षपम् ॥ गौरसर्षपसंज्ञं स्यात् तत्त्रयं तत्त्रयं यवः । यवत्रयं कृष्णलं स्यात् माषः स्यात् तत्त्व पञ्चकम् ॥ तद्द्वयं रूपकं प्रोक्तं निष्कं तत्पञ्चकं विदुः । माषषोडशमानं तु सुवर्णमिति कथ्यते । पलं सुवर्णाश्चत्वारस्तानि चत्वारि वै ध्रुवः । चत्वारिंशत् ध्रुवाणाञ्च भार इत्युच्यते बुधैः" इत्यादिस्मरणादिति भावः । **स्वभावादी**ति । दहनत्वादिरूपसाधारणधर्मादित्यर्थः । **एतदभिप्रायेणे**ति । दहनपवनगतोर्ध्वज्वलनतिर्यग्गमनाविशेषाभिप्रायेत्यर्थः । तथा च पतनार्थमतिरिक्तगुणस्वीकारे ऊर्ध्वज्वलनतिर्यग्गमनाद्यर्थमप्यतिरिक्तगुणस्वीकारप्रसङ्ग इति द्योतनायैव न्यायतत्त्वशास्त्रे तथाऽभिधानमिति भावः । ननु ऊर्ध्वज्वलनतिर्यग्गमनवत् पतनस्यापि स्वभावादिभिरेवोपपत्तिरित्यङ्गीकारे तस्य भूतद्वयनिष्ठत्वानुपपत्तिः; ऊर्ध्वज्वलनादिहेतुस्वभावविशेषस्य तथात्वादर्शनादिति शङ्कते **भूतद्वये**ति । **भवदभिमतस्ये**ति । अतिरिक्तगुरुत्वस्येति भावः । **कथमुपपद्यत इति** । शीतस्पर्शादेर्भूतद्वयनिष्ठत्वादर्शनादिति भावः । **स्वभावादिति चेदि**ति । शीतस्पर्शस्य भूतद्वयनिष्ठत्वाभावेऽपि रसस्य भूतद्वयनिष्ठत्वदर्शनात् पृथिवीत्वजलत्वयोरुभयोरेव तत्प्रयोजकस्वभावरूपत्वाङ्गीकारात् यथा तस्य भूतद्वयनिष्ठत्वोपपत्तिः—तथा अतिरिक्तगुरुत्वेऽपि पृथिवीत्वजलत्वयोरुभयोः प्रयोजकत्वाङ्गीकारात् तस्य भूतद्वयनिष्ठत्वोपपत्तिरिति भावः । **तुल्यमि**ति । तद्धेतोरेवेति न्यायेन पतनं प्रत्येव पृथिवीत्वजलत्वयोः प्रयोजकत्वाङ्गीकारासम्भवात् पतनप्रयोजकस्वभावस्य भूतद्वयनिष्ठत्वोपपत्तिरिति भावः । ननु पतनप्रयोजकस्य पृथिवीत्वस्य जलत्वस्य वा भूतद्वयनिष्ठत्वासंभवात् कथं पतनप्रयोजकस्वभावस्य भूतद्वयनिष्ठत्वमित्याशङ्क्याह **यथा चे**ति । **एकभूतावान्तरव्यक्तिष्वि**ति । ऊर्ध्वज्वलनं प्रति वह्निव्यक्तीनां तत्तद्व्यक्तित्वेनैव हेतुत्वेऽपि ऊर्ध्वज्वलनप्रयोजक-

---

1 गुरूणि तत्स्वभावसत्त्वात् सः—स्वभावः स्वरूपमेव गुरुत्वमित्यर्थः। प्रथमवाक्यमप्येतदर्थकं स्यात् ।

सलिलमेव चास्माकमवस्थान्तरापन्नं पृथिवीत्यतोऽपि न दोषः। तोलनादावपि प्रत्यक्षत आक्रमणमुपलभ्यते, यथा वाय्वादिभिरभिघातादिः। तावतैव तत्रापि च गुरुत्वव्यवहारः। उपलभ्यते चैतत्; बलवता पुरुषेणाक्रम्यमाणेऽतिगुरुत्वप्रत्ययात्, तस्मिन्नेव च मन्दमाक्रामति मान्द्यव्यवहारात्। अतोऽनुमानतः प्रत्यक्षतो वा न भवदभिमतगुरुत्वसिद्धिः॥ अस्तु तर्हि सलिलपृथिवीसाधारण उपलभ्यमानो रसादिरेव पतनहेतुरिति चेन्न; तत्रानुविधानात् पतनतारतम्यस्य; वैपरीत्योपलम्भाच्च।

किं तर्हि वस्तुतो गुरुत्वम्? श्रूयताम्। शक्त्यनभ्युपगमपक्षे विलक्षणं स्वरूपमेव। तदभ्युपगमपक्षे तद्विशेष एव; सर्वत्र हेतुत्वनिर्वाहकतया अभ्युपगतायास्तस्या एवात्रापि स्वीकर्तुमुचितत्वादिति। यत्तु[1] सांख्यैस्तमःकार्यतया पृथिवीजलयोः पतनहेतुर्गुरुत्वलक्षणो गुणविशेषोऽभ्युपगम्यते—तैस्तेजःपवनयोरूर्ध्वतिर्यग्गमनहेतुतया सत्त्वकार्यो लघुत्वलक्षणो गुणविशेषोऽभ्युपगन्तव्यः। [2]किं तु हेतुना येन पृथिव्यादिषु गुरुत्वलघुत्वयोर्नियमं वदसि। अनेनैव हेतुना पतनादिकार्यनियमोऽस्तु; मध्ये गुणान्तरकल्पनं गुरुतरम्। अतो गुरुत्वगुणकल्पनं गुरुत्वपराहतमिति॥

---

कूलस्वभावविशेषस्य तत्तद्द्रव्यक्तिस्वरूपानतिरिक्तत्वेऽपि एकजातीयानेकव्यक्तिवृत्तित्वम्, एवमितरेषामपि स्वरूपानतिरिक्तत्वेऽपि अनेकभूतनिष्ठत्वमुपपद्यत इति भावः। **सलिलमेव चेति**। ततश्च **भूतद्वयनिष्ठ**त्वमपि नास्तीति भावः। ननु **तोलनदशायां प्रत्यक्षत** उपलम्भादतिरिक्तगुरुत्वसिद्धिरित्याशङ्क्याह **तोलनेति**। **यथा वाय्वादिभिरिति**। यथा गुरुत्वहीनेनापि **वायुना अभिघात**मात्र**मुपलभ्यते**, एवं हस्तेन **तोलनदशायामु**त्पतितस्य वस्तुनो हस्ते पुनःपातेऽभिघातमात्र**मुपलभ्यते**, नाधिकमिति भावः। **तावतै**वेति। **आक्रमण**मात्रेणेत्यर्थः। **उपलभ्यते चैतदिति**। **आक्रमणे** गुरुत्व**मुपलभ्यते** इत्यर्थः। तदेवोपपादयति

---

धर्मत्वेनाकारेणानेकव्यक्तिवृत्तित्वम्; तथाऽत्रापीति भावः। **सलिलमेव चेति**। तथाच साक्षाद्वा परम्परया वा तेजोजन्यद्रव्यत्वमेव पतनप्रयोजकस्वभावरूपमिति तस्य भूतद्वयनिष्ठत्वं निष्प्रत्यूहमेवेति भावः। एतावता अतीन्द्रियमतिरिक्तं गुरुत्वमिति वदतां मतं निरस्तम्। अतिरिक्तं गुरुत्वं स्पार्शनप्रत्यक्षवेद्यमिति न तदपलापः शक्यते कर्तुमिति वदन्तं निरस्यति **तोलनादावपीति**। **आक्रमणमुपलभ्यत इति**। प्रतिबन्धविरहे सति अन्यत्र क्रियाजननसमर्थो यत्संयोगविशेषः स एवोपलभ्यत इत्यर्थः। न तु तदतिरिक्तो गुण इति भावः। ननु गुरुत्वमन्तरेणाऽऽक्रमणमेव न संभवतीत्यतिरिक्तगुरुत्वाभ्युपगम आवश्यक इत्यत आह **यथेति**। **वाय्वादिभिरिति**। आदिना ज्वालाविशेषपरिग्रहः। **अभिघातादिरिति** आदिना नोदनपरिग्रहः। तथाच गुरुत्वरहिततया संप्रतिपन्नवाय्वाद्यभिघातादिदशायामप्याक्रमणप्रतीतेरानुभाविकतया न तत्रातिरिक्तगुरुत्वापेक्षेति भावः। ननु तोलनसमनन्तरमिदं गुर्विति व्यवहारो दृश्यते। यदि तोलनादौ आक्रमणमात्रमेवोपलभ्येत, तर्हि तत्र गुरुत्वव्यवहारानुपपत्तिः। यदि च गुरुत्वव्यवहारे आक्रमणमेव विषय इत्युच्यते; तदा वाय्वादावपि गुरुत्वव्यवहारापत्तिरित्यत आह **तावतैवेति**। आक्रमणमात्राभिप्रायेणेत्यर्थः। **तत्रापीति**। वाय्वादिष्वपीत्यर्थः। **गुरुत्वव्यवहार इति**। "वाय्वग्निजलानि तिर्यगूर्ध्वाधोगुरूणि" इति श्रीमन्न्यायतत्त्वशास्त्र इति शेषः। तथाचाक्रमणमात्राभिप्रायेण वाय्वादावपि गुरुत्वव्यवहार इष्ट एवेति भावः। तावतैवेत्यनेन स्वतःपतनप्रयोजकधर्माभिप्रायेण गुरुत्वव्यवहार एव वाय्वादौ नास्तीति

---

1 यत्तु इत्यत्र यैस्तु इति स्यात्। न स्याद्वा किमपि। 2 किंतु इत्यस्य तत्रेत्यर्थे पर्यवसानम्।

द्रवत्वप्रत्ययविषयो द्रवत्वम्। तच्च स्यन्दननिदानम्। न जलमात्रवृत्ति; पार्थिवतैजसेष्वपि क्षीर[1]काञ्चनादिद्रव्येषु तदुपलम्भात्। द्विधा चेदम्, सांसिद्धिकपाकजभेदात्। सलिले सांसिद्धिकम्; पृथिवीतेजसोः पाकजमिति। यद्वा सलिल एव द्रवत्वम्। [क्षीर?]काञ्चनादिद्रव्येषु सलिलनिष्ठमेव तदुपलभ्यते। पञ्चभूतमयत्वात् सर्वेषां कदाचित् तदंशोद्भवसिद्धेः। तदिदं मृगसलिलवृत्तान्ते भगवता भाष्यकारेण दर्शितम्। तथाऽप्येतत् न जलत्वमात्रम्; तस्य करकाद्यवस्थायां काठिन्योपलम्भात्। अन्ये त्वाहुः—सलिलनिष्ठमेव द्रवत्वमिति यदुक्तं तत् साधूक्तम्। सलिलत्वमात्रातिरिक्तमिति कुतः सिद्धम्? स्यन्दनहेतुतया तत्कल्पनमिति चेत्, तदपि तत एव किं न स्यात्? अग्निरुष्ण इत्यादिवत्

---

बलवतेति। वैपरीत्योपलम्भादिति। रसाधिक्येऽपि पतनाधिक्यादर्शनादिति भावः। इति गुरुत्वम्॥

क्षीरकाञ्चनादीति। क्षीरं पार्थिवम्, काञ्चनं तैजसम्। सांसिद्धिकम् स्वाभाविकमित्यर्थः। पृथिवीतेजसोः पाकजमिति। ननु कथं पार्थिवे तैले सांसिद्धिकद्रवत्वमिति चेत्, तस्योपष्टम्भकजलांशगतत्वात्। कथं तर्हि तस्य दहनानुकूलतेति चेत्; तस्य पार्थिवभागमाहात्म्यायत्तत्वादिति भावः। ननु काञ्चनादिद्रव्येषु द्रवत्वस्य सलिलांशनिष्ठत्वेऽग्निसंयोगात् प्रागपि द्रवत्वमुपलभ्येतेत्याशङ्क्याह कदाचित्तदंशोद्भवसिद्धेरिति। दर्शितमिति। यथार्थख्यातिसमर्थनावसरे इत्यर्थः। करकाद्यवस्थायामिति। द्रवत्वाभानेऽपि जलत्वप्रत्ययात् तयोर्नैक्यमिति भावः। तदपि तत एवेति। स्यन्दनमपि

---

बोध्येते। किञ्च भवदभिमतगुरुत्वतारतम्यविरहेऽप्याक्रमणतारतम्यमात्रेण गुरुत्वतारतम्यप्रतीत्या आक्रमणमेव गुरुत्वमित्यवश्याश्रयणीयमित्याह उपलभ्यते चैतदिति। आक्रमणतारतम्यानुगुण्येनेति शेषः। एतदेवोपपादयति बलवतेति। अनुविधानात् पतनतारतम्यस्येति। रसतारतम्यानुगुण्येन पतनतारतम्यादर्शनादित्यर्थः। वैपरीत्योपलम्भाच्चेति। रसाधिक्येऽपि पतनमान्द्यदर्शनादित्यर्थः। विलक्षणम्—तेजस्त्वादिभिन्नम्। स्वरूपम्—पृथिवीत्वजलत्वरूपोऽसाधारणो धर्मः। तस्यैव पतनजनकतावच्छेदकतया पतनप्रयोजकत्वादिति भावः। तद्विशेष एवेति। शक्तिविशेष एवेत्यर्थः। अस्मिन् पक्षे पृथिवीत्वजलत्वयोरुभयोरपि शक्तिविशेषविशिष्टतया एकमेव हेतुत्वमिति बोध्यम्। हेतुत्वनिर्वाहकतया कारणतावच्छेदकतया, कारणव्यवहारव्यवहर्तव्यतावच्छेदकतया वा। मध्ये गुणान्तरकल्पनं गुरुतरमिति। 'तद्धेतोरेवास्तु तद्धेतुत्वम्; मध्ये किं तेन' इति न्यायादिति भावः।

पृथिवीतेजसोः पाकजमिति। नन्विदमनुपपन्नम्, पार्थिवे तैले सांसिद्धिकद्रवत्वदर्शनादिति चेन्न; तस्योपष्टम्भकजलांशगतत्वात्। न चैवं सति दहनानुकूलत्वं न स्यादिति वाच्यम्; स्नेहप्रकर्षेण पार्थिवशक्तिविशेषाद्वा तदुपपत्तेः। ननु काञ्चनादिषु द्रवत्वस्य सलिलांशनिष्ठत्वे अग्निसंयोगमन्तरेणैव तदुपलब्धिः स्यादित्यत आह कदाचित्तदंशोद्भवसिद्धेरिति। मृगसलिलम्—मरीचिकाजलम्। करकाद्यवस्थायां काठिन्योपलम्भादिति। जलत्वोपलम्भेऽपि द्रवत्वानुपलम्भान्न जलत्वद्रवत्वयोरैक्यमिति भावः। तदपीति। स्यन्दनमपीत्यर्थः। तत एवेति। जलत्वादेवेत्यर्थः। शङ्कते अग्निरुष्ण इत्यादि-

---

1 क्षीरेति। क्षीरे अंशतो जलसद्भावेऽपि तदन्यजलातिरिक्तांशस्यैव क्षीरेति नाम। जलांशं निष्कास्य क्षीरचूर्णमपि हि संप्रति निष्पाद्यते।

(अग्नेरौष्ण्यादिवत्) द्रवं जलमिति विशेषणतया स्फुरणादतिरिक्तत्वमिति चेत्, अस्त्वेवमतिरेकः। तथाऽपि जलत्वपर्यवसितसंस्थानविशेषोऽयमिति यथोपलम्भमङ्गीक्रियताम्, यथा काठिन्यम्। स्पर्शविशेषः काठिन्यमिति चेत्, अत्रापि तथाऽस्तु; अविशेषात्। न च केवलं स्पर्शविशेषः काठिन्यम्; संयोगविशेषसापेक्षः पृथिवीत्वैकार्थसमवायी स्पर्शविशेषः। द्रवत्वं तु निम्नोन्नतिलेशरहितसंयोगविशेषः। उक्तञ्च न्यायतत्त्वे प्रमेयपादसप्तमाधिकरणे, "विरळसंयोगप्रयुक्तस्पर्शो मृदुः। निर्विरळसंयोगप्रयुक्तस्पर्शः कठिनः" इति॥ निम्नोन्नतिलेशरहितसंयोग एव किन्निबन्धनः इति चेत्, जलत्वनिबन्धन एवेति मन्वीथाः। जलत्वं नाम किमिति चेत्, हन्त किं द्रवत्वाभिलाषेण जलत्वमपलपितुमिच्छसि, किं वा जलत्ववत् द्रवत्वसिद्धिरिति मन्यसे? न चोभयमपि(चोभयं) युज्यते।

---

जलत्वादेव किं न स्यादिति भावः। शङ्कते अग्निरुष्ण इत्यादिवदिति। जलत्वपर्यवसितेति। जलत्वनियतेत्यर्थः। यथा कथञ्चिदुक्तादद्रव्यदशकान्तर्भावस्यैव सिषाधयिषितत्वादिति भावः। स्पर्शविशेष इति। ततश्च न काठिन्यस्य संस्थानविशेषत्वम्; संयोगस्यैव संस्थानरूपत्वादिति भावः। अत्रापि स्पर्शविशेषत्वेऽपि उक्तादद्रव्यदशकान्तर्भावस्यासदिग्धस्य सिद्धेरिति भावः। वस्तुगतिमभिप्रयन् आह न च केवलमिति। संयोगविशेषसापेक्ष इति। न च केवलः संयोगविशेष एव काठिन्यमस्त्विति वाच्यम्; त्वगिन्द्रियग्राह्यतया स्पर्शरूपत्वस्यैवावश्यम्भावात्। न च द्रवत्वमपि कठिनत्ववत् संयोगविशेषप्रयुक्तस्पर्शपर्यन्तमेवास्तु; न तु निम्नोन्नतिलेशरहितसंयोगविशेष एवेति वाच्यम्—तद्वत् त्वगिन्द्रियमात्रग्राह्यत्वाभावेन स्पर्शरूपत्वासम्भवात्। अतः संयोगविशेषमात्रपर्यवसितत्वमेव वक्तव्यमिति भावः। द्रवत्वाभिलाषेणेति। संयोगविशेषातिरिक्तद्रवत्वलोभेनेत्यर्थः। हन्त किमिति। यथति-

---

वदिति। अग्नेरौष्ण्यादिवदिति पाठे औष्ण्यादिवदित्यस्य औष्ण्यादेरिवेत्यर्थः। विशेषणतयेत्यस्य जलं प्रति द्रवत्वस्येत्यादिः। जलत्वपर्यवसितेति। जलत्वसमनियतेत्यर्थः। यथा काठिन्यमिति। काठिन्यं यथा संस्थानविशेष एव, न त्वतिरिक्तमद्रव्यम्—तथेत्यर्थः। शङ्कते स्पर्शविशेषः काठिन्यमिति। न संस्थानविशेष इत्यर्थः। संयोगस्यैव संस्थानरूपत्वमित्यभिप्रायेणेदम्। अत्रापीति। स्पर्शविशेषरूपत्वेऽप्युक्तादद्रव्यदशकान्तर्भूतत्वस्यासदिग्धस्याविघातादिति भावः। वस्तुवृत्तिमनुरुध्याह न च केवलमिति। संयोगविशेषसापेक्ष इति। सामानाधिकरण्यसंबन्धेन संयोगविशेषविशेषित इत्यर्थः। संयोगविशेषप्रयुक्त इति वा। पृथिवीत्वैकार्थसमवायीति। अपृथक्सिद्धिसंबन्धेन पृथिवीवृत्तिरित्यर्थः। न च संयोगविशेष एव काठिन्यमस्त्विति वाच्यम्; त्वगिन्द्रियमात्रग्राह्यतया संयोगविशेषरूपत्वासंभवात् स्पर्शविशेषरूपतया एवावश्यकत्वात्। द्रवत्वं तु न स्पर्शविशेषरूपमिति शक्यं वक्तुम्; त्वगिन्द्रियमात्रग्राह्यत्वविरहात्। अतस्तस्य संयोगविशेषरूपसंस्थानात्मकत्वमेव युक्तम्। शङ्कते निम्नोन्नतिलेशरहितसंयोग एव किन्निबन्धन इति। तस्य द्रवत्वनिबन्धनताया एव वक्तव्यतया अतिरिक्तद्रवत्वमावश्यकमिति शङ्कितुरभिप्रायः। द्रवत्वाभिलाषेणेति। अतिरिक्तद्रवत्वसाधनेच्छयेत्यर्थः। जलत्वमपलपितुमिच्छसीति। अतिरिक्तद्रवत्वानुपगमे जलत्वमपि नाङ्गीकर्तव्यमित्यभिप्रैषीत्यर्थः। जलत्ववत् द्रवत्वसिद्धिरिति। अतिरिक्तजलत्वस्येवातिरिक्तद्रवत्वस्यापि सिद्धिरित्यर्थः। न चोभयमपि

तथापि किमिदं जलत्वमिति चेत्; जातिविशेषः। किं तस्य व्यञ्जकमिति चेत्, तादृशसंयोग-[विशेषरूप]विशेषादि। तर्हि तदभ्युपगमेन जलत्वमपि परित्यज्यतामिति चेत्—अस्तु; नैतावता द्रवत्वस्य बहिर्भावः॥ यदि द्रवत्वं न स्यात्, क्षितितल इव सलिलेऽपि दुष्प्रवेशत्वं स्यादिति चेन्न; आकाशादिभिर्व्यभिचारात्॥ स्पर्शवत्त्वे सतीति चेन्न; पवनातपादिभिर्व्यभिचारात्॥ तेषां प्रशिथिलस्वभावत्वादिति चेत्, तदेव कथम्?॥ सावकाशत्वात् तेषामिति चेन्न; अनुपलम्भात्। न हि मध्यन्दिनातपे मात्रयाऽप्यवकाशमुपलभामहे। तथाऽपि तदुपगमे अत्रापि तदभ्युपगम्यताम्, अविशेषात्॥ प्रवेशादियोग्यः समसंयोगविशेष एव किन्निबन्धन इति चेन्न; पवनातपादिभिः समाधानम् (नात्?)। यत्तु करकाद्यवस्थायां काठिन्योपलम्भात् जलत्वातिरिक्तं द्रवत्व-

---

रिक्तद्रवत्वं नाङ्गीक्रियते, तर्हि जलत्वमपि नाङ्गीकर्तव्यमित्यभिप्रायः, जलातिरिक्तजलत्वाभ्युपगमवत् अतिरिक्तद्रवत्वमभ्युपगन्तव्यमित्यभिप्रायः इत्यर्थः। **न चोभयमिति**। नचोभयमपीत्यर्थः। यद्वा (?)नचोभयमित्येतत् युज्यत इत्यर्थः। सौहार्देन पृच्छति **किमिदमिति**। **नैतावतेति**। न हि अतिरिक्तजलत्वपरित्यागमात्रेण भवदभिमतातिरिक्तद्रवत्वसिद्धिरिति भावः। **व्यभिचारादिति**। अद्रवत्वे सत्यपि दुष्प्रवेशत्वाभावादिति भावः। ननु अप्रशिथिलस्वभावत्वे सति स्पर्शवत्त्वे सति द्रवत्वं दुष्प्रवेशत्वहेतुः; अतः पवनातपादिषु हेतोरेवाभावात् न व्यभिचार इति शङ्कते **तेषां प्रशिथिलस्वभावत्वादिति**। अत्र न व्यभिचार इति शेषः पूरणीयः। वाय्वादीनां प्रशिथिलस्वभावत्वमेव **कथमिति** पृच्छति **तदेव कथमिति**। उत्तरमाह **सावकाशत्वादिति**। **तथाऽपीति**। उपलम्भाभावेऽपि पवनातपयोरवकाशाभ्युपगमे जलेऽपि तथाऽभ्युपगम्यतामित्यर्थः। **प्रवेशादियोग्य इति**। तथाच जले प्रशिथिलावयवसंयोगविशेषप्रयोजकतया द्रवत्वमङ्गीक्रियतामिति भावः। **यत्तु करकाद्यवस्थायामिति**।

---

**युज्यत इति**। जलत्वस्य प्रत्यक्षसिद्धतया अतिरिक्तद्रवत्वानुपगमेऽपि तेन जलत्वानपलापसंभवात्, अतिरिक्तद्रवत्वे तथा प्रत्यक्षविरहेण जलत्वसिद्धिवत् द्रवत्वसिद्ध्यसंभवाच्चेति भावः। **व्यभिचारादिति**। यत्र द्रवत्वाभावस्तत्र दुष्प्रवेशत्वमिति व्याप्तौ द्रवत्वाभाववत्सु आकाशादिषु दुष्प्रवेशत्वविरहेण व्यभिचारादित्यर्थः। तथाच द्रवत्वाभावस्य दुष्प्रवेशत्वव्याप्यत्वविरहात् न द्रवत्वाभावेन तदापादनसंभव इति भावः। **शङ्कते स्पर्शवत्त्वे सतीति**। स्पर्शवत्त्वे सति द्रवत्वाभावो दुष्प्रवेशत्वव्याप्य इति भावः। **प्रशिथिलस्वभावत्वादिति**। प्रशिथिलसंयोगवत्त्वादित्यर्थः। न दुष्प्रवेशत्वमिति शेषः। तथाच स्पर्शवत्त्वे सति प्रशिथिलसंयोगाभावे च सति द्रवत्वाभावो दुष्प्रवेशत्वव्याप्य इति भावः। पृच्छति **तदेव कथमिति**। प्रशिथिलस्वभावत्वमेव कथमित्यर्थः। उत्तरयति **सावकाशत्वादिति**। मध्येऽवकाशसद्भावादित्यर्थः। **मात्रया** अल्पम्। **तथापीति**। अनुपलम्भेऽपीत्यर्थः। **तदुपगमे**—अवकाशोपगमे। **अत्रापि** जलेऽपि। **तत्** सावकाशत्वम्। **अभ्युपगम्यतामिति**। तथा च द्रवत्वाभावेऽपि न दुष्प्रवेशत्वप्रसङ्ग इति भावः। **समसंयोगविशेष इति**। निम्नोन्नतिरहितसंयोगविशेष इत्यर्थः। **किन्निबन्धन इति**। उक्तप्रशिथिलसंयोगस्यापि द्रवत्वनिबन्धनत्वात् एव वाच्यतया तदभ्युपगम आवश्यक इति भावः। **यद्विवति**। यद्यपि जलत्वजातिव्यञ्जकसंयोगविशेष एव द्रवत्वमिति वदतां जलत्वातिरिक्तं द्रवत्वमित्ये-

मित्युक्तम्, तदपि न ; उपष्टम्भकभेदादेव तदानीं काठिन्योपलब्धेः—यथा काञ्चनादितेजसाम्। न हि तेजसः स्वतोऽन्यतो वा काठिन्यमस्ति। न च करकाद्यवस्थासु कस्यचित् जलप्रतीतिः। नापि विद्रुतावस्थायां जलत्वद्रवत्वयोरन्यतराप्रतीतिः। येन व्यतिरेकोपलम्भः स्यात्॥ अपर्यायत्वं कथमिति चेत्; संयोगविशेषाद्युपाधिभेदादित्युक्तमेव। एतदेव वैशेषिकाद्यभिमतं द्रवत्वम्॥

अथ स्नेहो निरूप्यते। स्नेहप्रत्ययविषयः स्नेहः। स जलैकवृत्तिः। घृतादिषु संसर्गात् दृश्यते। न चासौ द्रवत्वमात्रम्; शातकुम्भादिद्रवाणां पांसुसंग्राहकत्वाभावात्। नापि तोयत्वमात्रम्; स्निग्धं तोयमिति पृथग्व्यवहारात्; जलप्रत्ययमन्तरेणापि मधूच्छिष्टादिषु स्निग्धमिति

---

यद्यपि द्रवत्वं जलत्वव्यञ्जकसंयोगविशेष इति वदतो नेदमनिष्टम्, तथाऽपि उक्तखण्डनार्थमनूद्य दूष्यते इति द्रष्टव्यम्। **उपष्टम्भकभेदादिति**। उपष्टम्भकविशेषादेवेत्यर्थः। ननु अस्तु काठिन्यमुपष्टम्भकगतम्; ततस्तव किमिष्टं सिद्धमित्यत आह **न च करकाद्यवस्थास्विति**। **येन व्यतिरेकोपलम्भः स्यादिति**। व्यतिरेको भेदः। **येन** द्रवत्वजलत्वयोर्भेद उपलभ्येतेत्यर्थः। **संयोगविशेषाद्युपाधिभेदादिति**। जलत्वं जातिरिति पक्षे द्रवत्वस्य संयोगविशेषस्पर्शविशेषादिरूपत्वेन न पर्यायत्वम्; संयोगविशेषात्मकसंस्थानविशेषस्यैव जलत्वात्मकत्वेऽपि सास्नादिसंस्थानविशेषवान् गौरितिवत् भाषया भेदसद्भावात् **अपर्यायत्व**मिति भावः। उपसंहरति **एतदेवेति**। **वैशेषिकाभिमतं द्रवत्व**मुक्तादस्मात् नातिरिच्यते इत्यर्थः। इति द्रवत्वम्॥

**मधूच्छिष्टादिष्विति**। न च मधूच्छिष्टादिषु स्नेहसद्भावे तस्य जलमात्रवृत्तित्वं भज्येतेति

---

तन्नानिष्टम्; तथापि सिद्धान्ते तादृशसंयोगविशेषरूपसंस्थानस्यैव जलत्वजातिरूपतया वस्तुतो न जलत्वातिरिक्तं द्रवत्वमित्यभिप्रायेणेदम्। अत्र द्रवत्वाभावेऽपि जलत्वसद्भावात् द्रवत्वं जलत्वाद्भिन्नमिति विवक्षितं वा, आहोस्वित् द्रवत्वाप्रत्ययेऽपि जलत्वप्रत्ययसद्भावादिति विकल्पमभिप्रेत्याऽऽद्यं दूषयति **तदपि नेति**। **उपष्टम्भकभेदादेवेति**। तथाच काठिन्यस्य जलान्तरत्वाभावात् न तत्र द्रवत्वाभावसिद्ध्येदिति भावः। काठिन्याभावेऽप्युपष्टम्भकभेदात् तदुपलब्धिसंभवे दृष्टान्तमाह **यथेति**। द्वितीये किं करकाद्यवस्थासु द्रवत्वाप्रत्ययेऽपि जलत्वप्रतीत्या भेदसिद्धिरित्यभिप्रायः, उत विलीनावस्थायामन्यतराप्रत्ययेऽप्यन्यतरप्रतीत्या तत्सिद्धिरितीति विकल्पमभिप्रेत्य प्रथमं दूषयति **न चेति**। द्वितीयं दूषयति **नापीति**। **व्यतिरेकोपलम्भः स्यादिति**। जलत्वद्रवत्वयोर्भेदोपलम्भः स्यादित्यर्थः। **संयोगविशेषाद्युपाधिभेदादिति**। अयं भावः—सास्नादिसंस्थानविशेषवान् गौरितिवदेकस्यैव धर्मस्याऽऽकारभेदेन बोधनान्न पर्यायत्वम्—गोशब्देन हि सास्नादिसंस्थानविशेषस्यैव स्वरूपतः, स्वरूपतो भासमानसौसादृश्यरूपवैजात्यपुरस्कारेण वा प्रकारतया बोधनम्, सास्नादिमच्छब्देन तु तद्रूप्येण—तथा प्रकृतेऽपीति। उपसंहरति **एतदेवेति**। **वैशेषिकाद्यभिमतमिति**। वैशेषिकादिभिरतिरिक्तत्वेनाङ्गीकृतमित्यर्थः। वैशेषिकादिभिरतिरिक्तत्वेनाङ्गीकृतं द्रवत्वमेतदेवेत्यन्वयात् तेषामतिरिक्तत्वाभिधानमनुपपन्नम्; उक्तरीत्या क्लृप्तेष्वन्तर्भावादित्युक्तं भवति।

**मधूच्छिष्टादिष्विति**। न च मधूच्छिष्टादिषु स्नेहसत्त्वे तस्य जलमात्रवृत्तित्वं भज्येतेति

प्रत्ययदर्शनाच्च । तदेवं प्रत्यक्षसिद्धः सलिलैकवर्ती पांसुसंग्रहणहेतुः स्नेहाख्यो गुणोऽस्तीति वैशेषिकानुसारिणोऽस्मदीयाः । अन्ये त्वाहुः—स्निग्धमिति प्रत्ययस्तावदस्त्येव । स तु रूपस्पर्शविशेषादिष्वेव । न हि अन्यो गुणो विविच्योपलभ्यते । मासृण्यमात्रेण सलिलेऽपि स्निग्धप्रत्ययः । स काञ्चनादिद्रव्येष्वपि समः । यद्वा—न कश्चिदपि सलिलं स्निग्धमिति जानाति । मृदादिरेव हि तथोपलभ्यते । पांसुसंग्रहणमपि सलिलत्वप्रयुक्तं सलिलत्वैकार्थसमवायिशक्तिविशेषप्रयुक्तं वा । अतः काञ्चनादिद्रव्याणामसंग्राहकत्वोपपत्तिः । किञ्च यदि संग्राहकत्वात् सलिले स्नेहाख्यो गुणः स्वीक्रियते, विश्लेषकत्वादग्नौ रौक्ष्याख्यं गुणान्तरमपि किं न कल्प्यते ? यदि तत्र औष्ण्यादिभिरेव विश्लेषादिसिद्धिः, तर्हि अत्रापि शैत्यादिभिरेव संग्रह इति किं न स्वीक्रियते ? उक्तञ्च न्यायतत्त्वे प्रमेयपादसप्तमाधिकरणे, "दुष्करवियोगस्वभावसंयोगस्पर्शत्वं पिच्छिलत्वम्, सुकरवियोगस्वभावसंयोगस्पर्शत्वं विश्लिष्टत्वम्" इति । यदि च संग्रहात् स्नेहसिद्धिः, तर्हि पनस-निर्यासादिष्वपि स कल्प्येत । संग्रहातिरेकात् तेषामेव वा तत्कल्पतिरुचिता । यद्वा चुम्बकशिलाया इव शक्तिविशेषात् संग्राहकत्वमस्तु । न च सलिलं संग्राहकमित्येव नियममुपलभामहे । शुष्कमृत्पिण्डादीनां सलिलसेकेन विलयस्यापि दर्शनात् । तस्मात् सलिलस्वरूपमेव सहकारिविशेषमासाद्य संग्राहकं विभेदकञ्चेति यथोपलम्भमङ्गीकार्यम् । चेतनानां तु स्नेहः प्रीतिः उपादित्सा वा, रौक्ष्यमपि दुःखं जिहासा क्रोधो वा । अतो न गुणान्तरसिद्धिरिति ॥

अनुभवजा स्मृतिहेतुर्वासना । सा कार्यकल्प्या । न तावत् अनुभवहेतुः स्मृतिः (अनु-

शङ्क्यम् ; मधूच्छिष्टोपष्टम्भकजलगतस्य स्नेहस्य जलत्वप्रतीतिमन्तरेणाप्युपलभ्यमानस्य जलत्वव्यतिरिक्तत्वमस्तीत्यस्य तात्पर्यात् । स्वाभिमतं पक्षमुपन्यस्यति अन्ये त्विति । मासृण्यमात्रेणेति । दुष्करवियोगस्वभावसंयोगविशेषप्रयोजकश्लक्ष्णपिच्छिलत्वापरपर्यायमसृण्यमात्रेणेत्यर्थः । दुष्करवियोगस्वभावेति । यस्य हस्तेन स्पर्शे तत्संयोगो दुर्मोचः, तत् पिच्छिलम्, यथा पनसनिर्यासादीति भावः । चुम्बकशिलाया इति । अयस्कान्तावान्तरभेदः चुम्बकशिला । उक्तञ्च वैजयन्त्याम्, "अयस्कान्तस्तद्भेदाश्चुम्बकभ्रामकादयः" इति । इति स्नेहः ॥

वासनेति । संस्कार इत्यर्थः । ननु अनुभवादिभिरेव स्मृत्युपपत्तौ किमिति तद्धेतुत्वेनातिरिक्ता वासना कल्प्यते इत्यत्राह न तावदनुभवहेतुः स्मृतिरिति । अनुभवहेतुकेत्यर्थः । न तावदनु-

शङ्क्यम् ; मधूच्छिष्टोपष्टम्भकजलगतस्य स्नेहस्य जलत्वप्रतीतिमन्तरेणाप्युपलभ्यमानतया तत्र जलत्वव्यतिरेकसिद्धिरित्यभिप्रायात् । स्वाभिमतं मतमाह अन्ये त्विति । मासृण्यमात्रेणेति । दुष्करवियोगस्वभावसंयोगविशेषप्रयोजकेन पिच्छिलत्वापरपर्यायेण स्पर्शविशेषेणेत्यर्थः । काञ्चनादिद्रव्येष्वपि सम इति । तथाच स्निग्धं जलमिति प्रत्ययस्य नातिरिक्तस्नेहसाधकत्वमिति भावः । सलिलत्वैकार्थसमवायीति । सलिलवर्तीत्यर्थः । शक्तिविशेषेति । तथाच तादृशशक्तिविशेष एव स्नेह इत्युक्तं भवति । शैत्यादिभिरेवेति । उक्तपिच्छिलत्वरूपस्पर्शविशेषादिभिरित्यर्थः । आदिना शक्तिविशेषसङ्ग्रहः ।

अनुभवजेति । अनुभवजन्यत्वे सति स्मृतिहेतुत्वं संस्कारलक्षणम् । अनुभवेऽतिव्याप्तिवारणाय सत्यन्तम् । अनुभवध्वंसवारणाय विशेष्यम् । वासनेति । संस्कार इत्यर्थः । नन्वनुभवेनैव स्मृतिसंभवे किं वासनयेत्याशङ्क्याह न तावदिति । अनुभवहेतुरिति । बहुव्रीहिः । तावदनुभव

भवः स्मृतिहेतुः) चिरध्वस्तत्वात् । नापि तदुपलक्षित आत्मादिः; प्रध्वस्तस्यापि अज्ञायमानस्योपलक्षणतयाऽपि कारणत्वासम्भवात् (प्रध्वस्तस्य ज्ञायमानस्योपलक्षणतायामपि हेतुत्वासंभवात्) । नापि तद्ध्वंसः; संस्कारप्रमोषाभावप्रसङ्गात् । नापि सदृशदर्शनादि; केवलस्यातिप्रसङ्गित्वात्, विशिष्टस्यासिद्धेः ॥ अनुभवजनितादृष्टविशेष इति चेत्; तर्हि सिद्धा वासना । सा पुण्यापुण्यरूपा वा ततोऽन्या वेति विशयः (विशेषः) । तत्र न पूर्वा ।

---

भवः स्मृतिहेतुरिति पाठस्तु सुगम एव । प्रध्वस्तस्यापीति । काकादेर्ज्ञायमानस्य इतरव्यावृत्तदेवदत्तगृहरूपोपलक्ष्यधीजनकत्वेन उपलक्षणत्वदर्शनादाह अज्ञायमानस्योपलक्षणतयाऽपि कारणत्वासम्भवादिति । ततश्च प्रध्वस्तस्याज्ञायमानस्य अनुभवस्य स्मृतिहेतुभूतेतरव्यावृत्तात्मरूपोपलक्ष्यप्रतीत्युपायत्वाभावात् नोपलक्षणत्वमिति भावः । प्रध्वस्तस्य ज्ञायमानस्योपलक्षणतायामपि हेतुत्वासम्भवात् इति पाठे ज्ञायमानस्य उपलक्षणत्वसम्भवेऽपि अज्ञायमानस्य तदसम्भवादित्यर्थः । प्रमोषाभावप्रसङ्गादिति । स्मृतिहेतुविनाशाभावप्रसङ्गादित्यर्थः । किं केवलं सदृशदर्शनं स्मृतिहेतुः, उत अनुभवविशिष्टमिति विकल्प्य आद्यं दूषयति केवलस्येति । प्रसङ्गित्वादिति । स्मृतिजनकत्वप्रसङ्गादित्यर्थः । अतिप्रसङ्गित्वात् इति पाठस्तु सुगम एव । द्वितीयं दूषयति विशिष्टस्या-

---

हेतुकेत्यर्थः । चिरध्वस्तत्वादिति । कार्याव्यवहितपूर्ववृत्तित्वशून्यस्य व्यापारमन्तरेण कारणत्वासंभवादिति भावः । तदुपलक्षित इति । यदाकदाचिदनुभवसंबन्धवानित्यर्थः । आत्मादिरिति । आदिना मनःपरिग्रहः । अत्र चोक्तानुभवसंबन्धस्य स्वरूपसत उपलक्षणतया कारणतावच्छेदकत्वं वा, उत ज्ञायमानतयेति विकल्पमभिप्रेत्य प्रथमे यदाकदाचिदनुभवसंबन्धिन आत्मादेः स्मृतिहेतुत्वमिति पर्यवसानात् अनुभूतस्यापि संस्कारप्रमोषेणास्मरणस्यानुभवसिद्धस्यानुपपत्तिप्रसङ्ग इति दूषणं स्पष्टमित्यालोच्य, द्वितीयेऽप्यनुभवसंबन्धितया यदाकदाचित् ज्ञायमानत्वं कारणतावच्छेदकं किं; उत स्मृत्यव्यवहितप्राक्क्षण इति विकल्पमभिप्रेत्य, प्रथमे पूर्वोक्तदोषानिस्तार एवेत्यालोच्य द्वितीये दूषणमाह प्रध्वस्तस्येति । अज्ञायमानस्य=स्मृत्यव्यवहितप्राक्क्षणवृत्तिज्ञानाविषयस्य । उपलक्षणतयापि कारणत्वासंभवादिति । कारणतावच्छेदकत्वासंभवप्रसङ्गादित्यर्थः । स्मृत्यव्यवहितप्राक्क्षणे अनुभवसंबन्धितयाऽऽत्मादेर्ज्ञानविरहेऽप्यनुभूयमानायाः स्मृतेरनुपपत्तिप्रसङ्गादिति भावः । "प्रध्वस्तस्य ज्ञायमानस्योपलक्षणतायामपि हेतुत्वासंभवात्" इति पाठस्त्वृजुः । प्रध्वस्तस्य ज्ञायमानतया उपलक्षणत्वेन धर्मिव्यावर्तकत्वसंभवेऽपि प्रकृते कारणतावच्छेदकत्वासंभवादिति तदर्थः । अनुभवोपलक्षितात्मादेः कारणत्वाङ्गीकारे कदाचिदनुभूतस्यापि संस्कारप्रमोषेणास्मृतेस्सर्वसंप्रतिपन्नाया अनुपपत्तिप्रसङ्ग इति तद्भावः । प्रमोषाभावप्रसङ्गादिति । कदाचिदनुभूतस्यापि संस्कारप्रमोषेणास्मृतेरनुभवसिद्धतयाऽत् नेष्टापत्तिः संभवतीति भावः । किं केवलं सदृशदर्शनं स्मृतिहेतुः; उतानुभवविशिष्टमिति विकल्पमभिप्रेत्याऽऽद्ये दूषणमाह केवलस्येति । अतिप्रसङ्गित्वादिति । अननुभूतस्यापि स्मृतिप्रसञ्जकत्वादित्यर्थः । द्वितीयं दूषयति विशिष्टस्येति । असिद्धेरिति । स्मृत्यव्यवहितप्राक्क्षणेऽनुभवविरहादिति भावः। अदृष्टविशेषः प्रत्यक्षागोचरो धर्मविशेषः।

विधिनिषेधागोचरेषु तद्योगात् । अतो द्वितीयैव परिशिष्यते । साऽपि आधेयशक्तिर्वा ततोऽन्या वा । कार्यकारणादिप्रक्रिया सर्वा समा । सा च आत्मनिष्ठा ज्ञानद्रव्यनिष्ठा वेत्येकदेशिविवादः । तत्रानुभवस्मृत्यन्तरङ्गत्वात् ज्ञानद्रव्यनिष्ठत्वमेवोचितम् । यत्तु वन्दविष्णुमिश्रैरुक्तम्, "भावनाकल्पकप्रमाणेनैव स्थिरात्माश्रयत्वकल्पनात् अस्थिरज्ञानाश्रयत्वस्य प्रमाणाभावात्" इति, तन्नूनं परमताभिप्रायेणोक्तम्; स्वेनैव ज्ञानस्य द्रव्यत्वनित्यत्वयोः समर्थनात् । यदुक्तं समन्वयाधिकरणे भेदाभेदिमतदूषणप्रसङ्गेन विवरणकारैः—"न हि उपाधिः प्रतिसन्धाता । प्रदेशभेदस्तु तुल्यः। न हि अन्यगतः संस्कारोऽन्यत्र प्रतिसन्धिहेतुः । यदि स्यात्, तर्ह्यनियमः । अनुभवसमानाधिकरणश्च संस्कारः" इति; तत् नूनं धर्मभूतज्ञानस्य द्रव्यत्वमनभ्युपगच्छतां मतेनोक्तम् । अस्मन्मते तु अनुभवसंस्कारस्मृतीनां ज्ञानावस्थाविशेषरूपत्वात् न कश्चिद्दोषः । एतेन "वासनारेणुकुण्ठितः"

---

**सिद्धे**रिति । स्मृत्युत्पत्तिदशायामनुभवावनाशादिति भावः । **विधिनिषेधे**ति । अनुभवस्याविहिततया अप्रतिषिद्धतया च पुण्यपापजनकत्वायोगादिति भावः । **प्रक्रिया सर्वा समे**ति । कार्यं स्मृतिः कारणमनुभव इत्येतत् द्वयोरपि समानमिति भावः । **अनुभवस्मृती**ति । अनुभवस्मृत्योर्ज्ञानद्रव्यावस्थाविशेषत्वेन तन्निष्ठत्वात् अनुभवजन्यस्य स्मृतिजनकस्य संस्कारस्यापि तदुभयसामानाधिकरण्यमेवोचितमिति भावः । **भावनाकल्पके**ति । अस्थिरस्य पूर्वानुभवस्य स्मृतिहेतुतानिर्वाहकत्वेन तद्व्यापारतया कल्प्यमानस्य संस्कारस्य अस्थिराश्रयत्वे स्वस्याप्यस्थिरत्वप्रसङ्गेन अनुभवहेतुतानिर्वाहकत्वाभावादिति भावः । किमन्तःकरणाद्युपाधिः पूर्वानुभूतं प्रतिसन्धत्ते, उत तदवच्छिन्नचित्प्रदेशः ? नाद्यः; उपाधेरचेतनत्वेन अप्रतिसन्धातृत्वात् । न द्वितीयः; देवदत्तयज्ञदत्तयोः प्रदेशभेदवदेकस्यैवोपाधेः सञ्चारे प्रदेशभेदावश्यम्भावादननुसन्धातृत्वप्रसङ्गात् अनुभवितृचैतन्यप्रदेशगतसंस्कारस्य प्रदेशान्तरगतस्मृतिजनकत्वायोगादित्याह **नह्युपाधि**रित्यादिना । **"न ह्यन्यगतः संस्कारः"** इति ग्रन्थे संस्कारस्याऽऽत्मगतत्वसिद्धवत्कारप्रतीतेर्विरोध इति भावः । ननु वासनाया ज्ञानगतत्वे, "अनेकजन्मसाहस्रीं संसारपदवीं व्रजन् । मोहश्रमं प्रयातोऽसौ वासनारेणुकुण्ठितः ॥" इत्यात्मनो वासनाश्रयत्वप्रतिपादकं वचनं विरुध्यते इत्याशङ्क्य स्वाश्रयत्वं ज्ञानद्वारकमित्यभिप्रयन् आह **एतेने**ति ॥

---

**तद्योगा**दिति । पुण्यापुण्यायोग्यादित्यर्थः । यतः अनुभवस्याविहितत्वादप्रतिषिद्धत्वाच्चेति भावः । **सर्वा समे**ति । संस्कारं प्रति अनुभवस्य साक्षात् कारणत्वम्, स्मृतिं प्रति तु संस्कारद्वारा, संस्कारस्य तु स्मृतिं प्रति साक्षादेव कारणत्वमित्यादिकं सर्वं संस्कारस्याऽऽधेयशक्तिरूपत्वे अतिरिक्तत्वे च तुल्यमित्यर्थः। **अनुभवस्मृत्यन्तरङ्गत्वा**दिति । अनुभवत्वावस्थास्मृतित्वावस्थाभ्यां समानाधिकरणत्वसंभवादित्यर्थः । शक्तिविशेषरूपसंस्कारस्य ह्यात्मनिष्ठत्वाभ्युपगमे तं प्रति अनुभवत्वावस्थायाः स्वाश्रयाश्रयत्वसंबन्धेनैव कारणता वाच्या, तस्य च स्मृतित्वावस्थां प्रति स्वाश्रयाश्रितत्वसंबन्धेनेति गौरवं स्यात् । ज्ञानद्रव्यनिष्ठत्वे स्वाश्रयतासंबन्धस्यैव कारणताद्वयेऽप्यवच्छेदकत्वं संभवतीति लाघवमिति भावः। ननु वासनायाः ज्ञानगतत्वे, "अनेकजन्मसाहस्रीं संसारपदवीं व्रजन् । मोहश्रमं प्रयातोऽसौ वासनारेणुकुण्ठितः" इत्यात्मनो वासनाश्रयत्वप्रतिपादकं वचनं विरुध्येतेत्याशङ्क्य स्वाश्रयत्वं ज्ञानद्वारकम्, ज्ञानगतायाः

इत्याद्यपि गतार्थम् ॥

वेगो भावना स्थितस्थापक इति त्रिविधः संस्कार इति वैशेषिकाः । तदनुपपन्नम् ; वेगस्य कर्मविशेषव्यतिरेके प्रमाणाभावात्, शीघ्रं गच्छतीत्याद्युपलम्भस्यापि कर्मातिशयमात्रेण चरितार्थत्वात् । कर्मातिशयस्य चोभयसिद्धत्वात् । उक्तञ्च न्यायतत्त्वे प्रमेयपादे कालनिरूपणप्रसङ्गे—"संयोगकालसामीप्यं हि वेगः" इति । वेगेन गच्छतीत्यादौ प्रयत्नहेतुकर्मण्यपि वेगशब्दप्रयोगात् । वेगस्य शरादिधर्मत्वेन प्रतिभासस्य मान्द्यप्रतीतिनिरस्तत्वात् । संस्कारत्वं स्पन्दजनक-

---

ननु **शीघ्रं गच्छतीति** शैघ्र्यस्य गमननिष्ठतयैव प्रतीयमानतया क्रियागतातिशय एव शैघ्र्यम् ; न त्वतिरिक्तो वेगाख्यो गुण इति भावः । **संयोगकालसामीप्यं वेग इति** । इषुप्रयोग–लक्ष्यसंयोगमध्यकालाल्पत्वविशेषो वेग इत्यर्थः । **प्रयत्नहेतुकर्मणीति** । पुरुषप्रयत्नहेतुकगमनक्रियायां वेगेन गच्छतीति शब्दप्रयोगादित्यर्थः । ततश्च तत्र प्रयत्नस्यैव हेतुतया त्वदभिमतवेगस्याप्रसक्तेर्वेगशब्दो गमनक्रियातिशयवाच्येवेत्यर्थः । ननु शरो वेगेन गच्छतीत्यादौ वेगस्य शरधर्मत्वेन प्रतीतेर्न गमनक्रियातिशयरूपत्वं वेगस्येत्याशङ्क्य, तर्हि मान्द्येन गच्छतीति प्रतीतिबलात् मान्द्यमपि गुणान्तरं स्यादिति प्रतिबन्द्या परिहरतीत्याह **वेगस्येत्यादिना** । यथा मान्द्यं क्रियागतविशेषरूपम् ; तथा वेगोऽपीति भावः । **स्पन्दजनकवृत्तीति** । ततश्च स्पन्दक्रियाहेतुभूतवेगाख्यसंस्कारासिद्धिरिति भावः । **संस्कारजा-**

---

वासनायाः स्वाश्रयाश्रयत्वसंबन्धेनात्मसंबन्धित्वादित्यभिप्रयन् आह **एतेनेति** ।

ननु शीघ्रं गच्छतीति गमनव्यतिरेकेण शरादौ शैघ्र्यशब्दितवेगप्रतीतेः सोऽभ्युपगन्तव्य इत्याशङ्क्याह **शीघ्रमिति** । **कर्मातिशयमात्रेणेति** । शीघ्रं गच्छतीत्यत्र क्रियाविशेषणेन शीघ्रशब्देन शैघ्र्यस्य गमननिष्ठतयैव प्रतीतेः क्रियागतातिशय एव शैघ्र्यम् ; न त्वतिरिक्तो वेगाख्यो गुण इति भावः । **संयोगकालसामीप्यं वेग इति** । इषुप्रयोग–लक्ष्यसंयोगयोर्मध्यकालाल्पत्वविशेषो वेग इत्यर्थः । ननु वेगेन गच्छतीत्यादौ गमनहेतुतया प्रतीयमानस्य वेगस्य न गमनक्रियाविशेषरूपत्वसंभव इत्याशङ्क्याह **वेगेनेति** । **प्रयत्नहेतुकर्मण्यपीति** । प्रयत्नहेतुकगमनक्रियायामपीत्यर्थः । तथाच तत्र पुरुषप्रयत्नस्यैव हेतुतया वेगस्य न हेतुत्वसंभव इति वेगेनेति तृतीया न करणतृतीया ; न वा हेतुतृतीया ; किं तु प्रकृत्यादितृतीयैव ; वैशिष्ट्यमेवार्थः । ततश्च कर्मगतातिशयबोधकत्वमेव तस्येति भावः । **वेगशब्दप्रयोगादिति** । तृतीयान्तवेगशब्दस्य विशेषणतया प्रयोगादित्यर्थः । नन्वयं शरो वेगवानिति प्रतीतेः सर्वसिद्धतया वेगस्य शरनिष्ठत्वमेव प्रतीयत इति न तस्य कर्मातिशयरूपत्वसंभव इत्याशङ्कां प्रतिबन्द्या निरस्यति **वेगस्येति** । **मान्द्यप्रतीतिनिरस्तत्वादिति** । यदि अयं शरो वेगवानिति प्रतीत्या वेगाख्यगुणान्तरस्वीकारः, तर्हि अयं शरो मन्द इति प्रतीत्या मान्द्यमपि गुणान्तरं स्वीकार्यम् । यदि पुनः क्रियागतमेव मान्द्यं स्वाश्रयाश्रयत्वसंबन्धेन शरादिनिष्ठतया भासत इत्येतावतैव सामञ्जस्ये, न मान्द्यरूपं गुणान्तरं स्वीकार्यमित्युच्यते, तदा कर्मातिशयरूपे वेगेऽपि तत् तुल्यमिति भावः । **संस्कारत्वं स्पन्दजनकवृत्ति संस्कारजातित्वादिति** । संस्कारनिष्ठजातित्वादित्यर्थः । गुणत्वादिकं दृष्टान्तः । तस्य

वृत्ति संस्कारजातित्वादित्यादेरतिप्रसङ्ग-असिद्ध्यादिदुष्टत्वात् । श्रीविष्णुचित्तार्यैः क्रिया वेगार्थत्वेन पठिता । (क्रियावेगावेकार्थत्वेन पठितौ ।) तथा हि—ईश्वरानुमाननिराकरणे—"सर्वा क्रिया कृतिपूर्विका क्रियात्वात् गमनवत् इति चेन्न ; शरवेगजलस्पन्दनादौ व्यभिचारात् तेषां स्वभावत्वकल्पने हेतुमत्त्वकल्पनाविरोधात्" इत्युक्तम् ॥

स्थितस्थापकोऽपि संस्थानविशेष एव । संस्थानविशेषतारतम्यानुरोधेन हि प्रतिगमनतारतम्यं

---

तित्वादिति । **संस्कारनिष्ठजातित्वादित्यर्थः** । सत्तादिकं दृष्टान्तः ; तत्र स्पन्दक्रियाहेतुभूतप्रयत्नादिनिष्ठत्वादिति द्रष्टव्यम् । **अतिप्रसङ्गासिद्ध्यादी**ति । संस्कारनिष्ठजातित्वात् रूपजनकवृत्तीत्यपि साधनसम्भवाद**तिप्रसङ्गः**, जातित्वस्यासम्मतेऽसिद्धिः, भावनात्वजातौ स्पन्दजनकावृत्तित्वात् व्यभिचारः, स्पन्दजनकस्थितस्थापकसंस्कारवृत्तित्वेन सिद्धसाधनमित्यादि द्रष्टव्यम् । **वेगार्थत्वेने**ति । **वेगशब्दार्थत्वेनेत्यर्थः**। **कृतिपूर्विके**ति । ततश्च भूकम्पादिक्रियाहेतुकृतिमान् ईश्वरः सिद्ध्यतीति भावः। **शरवेगे**ति । ततश्च **शरवेगजलस्पन्दनादौ क्रियात्वरूपहेतुसद्भावमङ्गीकृत्य** व्यभिचारमुद्भावयता शरवेगस्य क्रियात्वमाविष्कृतमिति भावः । ननु वेगस्पन्दनादिषु न व्यभिचारः, तेषां स्वभावत्वेनाक्रियारूपत्वात् , न हि स्वभावे कर्त्रपेक्षाऽस्ति ; स्वभावत्वविरोधादित्याशङ्क्य तथात्वे स्वभावत्वादेव कर्त्रपेक्षाभाववत् हेत्वन्तरापेक्षाऽपि न स्यादित्याह **तेषा**मित्यादिना ।

ननु शाखादावाकर्षणे सति कुतश्चित् कारणविशेषात् भूयः स्वस्थानगमनं दृश्यते । स तु कारणविशेषः स्थितस्थापकाख्यः संस्कार इत्याशङ्क्याह **स्थितस्थापकोऽपी**ति । **संस्थानविशेष एवे**ति । यादृशसंस्थानविशेषविशिष्टे स्थितस्थापकसंस्कारोऽस्तीत्युच्यते, तादृश**संस्थानविशेष एवे**त्यर्थः । ननु

---

स्पन्दजनकप्रयत्नादिवृत्तित्वात् । **इत्यादे**रिति **आदि**ना संस्कारत्वं भावनास्थितस्थापकोभयातिरिक्तवृत्ति भावनात्वस्थितस्थापकत्वोभयातिरिक्तजातित्वात् , गुणत्ववदित्यादेः सङ्ग्रहः । **अतिप्रसङ्गासिद्ध्यादी**ति । अतिप्रसङ्गः—संस्कारत्वं रूपजनकवृत्ति, संस्कारनिष्ठजातित्वात् , गुणत्ववदित्याभाससाम्यम् । जातित्वस्य नित्यानेकसमवेतत्वरूपस्यासम्मतेऽसिद्धिः, भावनात्वजातौ स्पन्दजनकावृत्तित्वात् व्यभिचारः, स्पन्दजनकस्थितस्थापकसंस्कारवृत्तित्वेन सिद्धसाधनमित्यादिकं द्रष्टव्यम् । **आदि**पदग्राह्यानुमाने असिद्ध्यप्रयोजकत्वे बोध्ये । **क्रिया वेगार्थत्वेन पठिते**ति । अत्र वेगार्थत्वेनेत्यस्य वेगशब्दार्थत्वेनेत्यर्थः । **क्रियावेगावेकार्थत्वेन पठिता**विति पाठो दृश्यते । अत्र **क्रियावेगा**वित्यस्य क्रियावेगशब्दावित्यर्थः। **कृतिपूर्विके**ति । ततश्च भूकम्पादिक्रियाहेतुकृतिमान् ईश्वरः सिद्ध्यतीति भावः । **शरवेगे**ति । ततश्च शरवेग-जलस्पन्दनादौ क्रियात्वहेतोर्व्यभिचारप्रदर्शनेन वेगस्यापि क्रियात्वाङ्गीकारप्रतीत्या अतिरिक्तगुणत्वं नास्तीत्यवगम्यत इति भावः । यद्यपि वेगशब्दः क्रियागतातिशयपरः, तथापि प्रकृतेऽतिशयविशिष्टक्रियापरतया प्रयुक्त इति बोध्यम् ।

**स्थितस्थापकोऽपी**ति । शाखादौ कर्षणे सति पुनस्स्वस्थानगमनहेतुरपीत्यर्थः **संस्थानविशेष एवे**ति । अवयवसंयोगविशेष एवेत्यर्थः । एवकारेणातिरिक्तो गुणो व्यवच्छिद्यते । यादृशसंस्थान-

दृश्यते । सर्वदा क्रियोत्पत्तिप्रसङ्गः कर्षणमोक्षणादिसहकारिसाहित्येन परिहारश्च समौ । अतिरिक्तस्यापि स्थितस्थापकस्य तादृशतारतम्यं संस्थानतारतम्याधीनमिति वक्तव्यम् । तद्वरमदृष्टगुणान्तरकल्पनात् तेनैव संस्थानविशेषेण स्वस्थानगमनसिद्धिः । परिशुद्धिरतिरिक्तवत् अत्रापि चिन्त्या । ये पुनर्ज्ञानसंस्कारः कर्मसंस्कार इति द्वैविध्यमाहुः—तेषां कोऽयं कर्मसंस्कार इष्टः ? न तावत् वेगस्थितस्थापकरूपः ; तस्य निराकृतत्वात् । नापि पुण्यापुण्यरूपक्रियाप्रवृत्तिहेतुः ; तस्या अपि पूर्वपूर्वादृष्टस्वस्वातन्त्र्यादिभिरेव निर्वाहात् । नापि मृदङ्गवादनादौ पूर्वपूर्ववादनादिभिराहित

---

संस्थानविशेषस्यैव क्रियाहेतुत्वे **सर्वदाक्रियोत्पत्तिप्रसङ्ग** इति चेत् ; स्वपक्षेऽपि समत्वात् ॥ आकृष्य मोचनादिकं सहकारीति यदि, तर्हि संस्थानविशेषपक्षेऽपि समानमित्याह **सर्वदा क्रियोत्पत्तीति** । **तादृशतारतम्यमिति** । गमनतारतम्यानुगुणं **तारतम्य**मित्यर्थः । ननु संस्थानातिरिक्तस्य आगमापायशालिनः कस्यचित् स्थितस्थापकसंस्कारस्यानभ्युपगमे रज्ज्वादिना चिरकालमाकृष्य बध्वा विमुक्ते आन्दोलिकादण्डादौ पूर्वदेशप्रतिगमनप्रसङ्गः ; संस्थानविशेषस्य सत्त्वात् । अतः पूर्वदेशप्रतिगमनाभावस्य संस्कारशान्तिलक्षणपरिशुद्धिनिबन्धनत्वमेव वक्तव्यमित्यकामेनापि संस्कारोऽभ्युपगन्तव्य इत्याशङ्क्य, तत्रापि पूर्वविलक्षणसंस्थानविशेषोत्पत्त्या प्रतिगमनाभावोपपत्तिरित्यभिप्रयन् आह **परिशुद्धिरिति** । **अतिरिक्तवदिति** सप्तम्यर्थे वतिः । **अतिरिक्त**पक्ष इवेत्यर्थः । **कर्मसंस्कार इति** । यथा ज्ञानेन भावनाख्यसंस्कार उत्प(त्पा?)द्यते, एवं पूर्वपूर्वकर्मणापि कश्चन वासनाख्यसंस्कार आधीयते । अत एव पूर्वकर्मवासनावशादिदं कर्मानुतिष्ठतीति लोकव्यवहार इति भावः । **तस्या अपीति** । पुण्यपापरूपक्रियाप्रवृत्तेरित्यर्थः । **मृदङ्गवादनादौ** किं हस्तलाघवादिहेतुतया संस्कारोऽभ्युपेयते, उत पुरुषगतहस्तप्रेरकशैघ्र्यहेतुतयेति

---

विशेषविशिष्टे स्थितस्थापकसंस्कारः स्वीक्रियते, तादृशसंस्थानविशेषस्यैवम्पुनस्स्वस्थानगमनादौ हेतुत्वसंभवात् नात्यन्तादृष्टोऽतिरिक्तः स्थितस्थापकाख्यो गुणः स्वीकार्य इति भावः । **तारतम्यमिति** । तादृशगमनतारतम्यानुगुणं तारतम्यमित्यर्थः । **संस्थानतारतम्याधीनमिति वक्तव्यमिति** । कारणान्तरासंभवादिति भावः । तथाच तादृशगमनतारतम्यस्य संस्थानतारतम्याधीनत्व एव पर्यवसानात् मध्ये गुणान्तरस्वीकारो विफल एवेति फलितम् । तदेवाह **तदिति** । ननु संस्थानातिरिक्तस्याऽऽगमापायिनः कस्यचित् स्थितस्थापकाख्यसंस्कारविशेषस्यानुपगमे रज्ज्वादिना चिरकालमाकृष्य बध्वा विमुक्ते आन्दोलिकादण्डादौ पूर्वदेशं प्रति गमनप्रसङ्गः ; संस्थानविशेषस्य सत्त्वात् । अत पूर्वदेशं प्रति गमनाभावस्य संस्कारशान्तिलक्षणपरिशुद्धिनिबन्धनत्वमेवाऽऽवश्यकमित्यतिरिक्तस्थितस्थापकाख्यसंस्कारोऽवश्यमङ्गीकार्य इत्याशङ्क्याह **परिशुद्धिरिति** । **अतिरिक्तवदिति** सप्तम्यन्तात् वतिः । अतिरिक्तसंस्काराङ्गीकारपक्ष इवेत्यर्थः । **अत्रापि चिन्त्येति** । पूर्वविलक्षणसंस्थानविशेषोत्पत्त्या सिद्धान्तेऽपि तादृशगमनाभावोपपत्तिरिति भावः । **तस्या अपीति** । क्रियाप्रवृत्तेरपीत्यर्थः । **अदृष्टस्वातन्त्र्यादिभिरिति** । पूर्वपूर्वादृष्टेन तदधीनसदसत्कर्मफलविषयकोत्कटेच्छारूपरुच्या बुद्धिपूर्वप्रवृत्तिशक्तिरूपस्वातन्त्र्येण ज्ञानचिकीर्षाभ्यांश्चेत्यर्थः । मृदङ्गवादनादौ किं हस्तलाघवादिहेतुतया संस्कारः स्वीक्रियते ; उत पुरुषगत प्रेरणशैघ्र्यहेतुतयेति विकल्प्य,

उत्तरोत्तरक्रियासु हस्तलाघवादिहेतुः; तत्र हस्तलाघवादेः पूर्वपूर्ववादनाकृतकाठिन्यविशेषाभावादिप्रयुक्तत्वात्। हस्तप्रेरणादिशैघ्र्यस्य पूर्वपूर्ववादनाधिकृतसंस्कारजनितप्रेरणस्मृतिशैघ्र्यप्रयुक्तत्वात्। यानि पुनः, "अघस्याश्लेषकरणं वैदिककर्मायोग्यता-वासना-प्रत्यवायहेतुशक्त्युत्पत्तिप्रतिबन्धकरणम्", "एतदुभयकार्यकारणभूतानादिविपरीतवासनाबद्धोऽपि" इत्यादिभाष्यकारवचनानि, तेषामप्यनुभववासनातिरिक्तसंस्कारकल्पननिर्बन्धाभावात्। "अघस्य" इत्यादिवाक्यानन्तरञ्चैवमुक्तम्—"अघानि हि कृतानि पुरुषस्य वैदिककर्मायोग्यतां सजातीयकर्मान्तरारम्भरुचिं प्रत्यवायञ्च कुर्वन्ति। अघस्य विनाशकरणमुत्पन्नायास्तच्छक्तेर्विनाशकरणम्। शक्तिरपि परमपुरुषाप्रीतिरेव" इति। एवं पापकर्मणः परमपुरुषाप्रीतिद्वारा सजातीयकर्मान्तरारम्भरुचिजनकत्वमिति सिद्धत्वात् न तत्र वासनान्तरमस्तीति गम्यते। "अनारब्धकार्ये एव तु" इत्यधिकरणे च व्यक्तमभाषयत्; यथा—"न च पुण्यापुण्यजन्यभगवत्प्रीत्यप्रीतिव्यतिरेकेण शरीरस्थितिहेतुभूतसंस्कारसद्भावे प्रमाणमस्ति" इति। अन्यत्राप्येतत्तुल्यन्यायमिति बोद्धव्यम्।

एवं श्रीमद्गीताभाष्येऽप्युक्तम् (भाष्येऽपि?), "त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा। सात्त्विकी राजसी चैव तामसी चेति तां शृणु॥" इत्यस्य व्याख्याने, "स्वभावः—स्वासाधारणो

---

विकल्प्य दूषयति तत्र हस्तलाघवादेरिति। काठिन्यविशेषाभावादिति। पूर्वपूर्ववादनावशेन हस्ते शीघ्रवादनाप्रतिबन्धककाठिन्यविशेषापनयपूर्वको मार्दवविशेष उत्पद्यते। स च उत्तरोत्तरवादनोपयोगी भवतीति भावः। वादनाधिकृतेति। वादनानुभवकृतेत्यर्थः। प्रेरणस्मृतीति। हस्तप्रेरणानुकूलस्मृतीत्यर्थः। यानि पुनरिति। अत्र यानीत्यस्य भाष्यकारवचनानीत्युत्तरग्रन्थेनान्वयः। अघस्याश्लेषकरणमित्यादि। "तदधिगम उत्तरपूर्वाघयोः" इति सूत्रे इति शेषः। वैदिककर्मायोग्यतेति। वैदिककर्मायोग्यतायाश्च वासनायाश्च प्रत्यवायस्य च हेतुभूता या शक्तिः, तदुत्पत्तिप्रतिबन्धकरणमेव अघस्याश्लेषकरणमित्यर्थः। एतदुभयेत्यादि गद्यवाक्यम्। अत्र एतदुभयेत्यनेन अहङ्कारासह्यापचारौ गृह्येते; "अनन्तासह्यापचारयुक्तोऽपि, एतदुभयकार्यकारणभूतानादिविपरीताहङ्कारविमूढात्मस्वभावोऽपि" इति तत्पूर्ववाक्ये तयोः प्रस्तुतत्वात्। तयोः कार्यभूता कारणभूता च या वासना तद्बद्धोऽपीत्यर्थः। निर्बन्धाभावादिति। अस्यानन्तरं नातिरिक्तसंस्कारसिद्धिरिति शेषः पूरणीयः। ननु अनेनोदाहृतभाष्येण अतिरिक्तवासनाभावः कथं सिद्धः इत्याशङ्क्याह—एवमिति। पूर्वनिर्दिष्टवासनापदस्थाने कर्मान्तरारम्भरुचिपदप्रयोगात् सजातीयकर्मान्तरारम्भरुचिपरमपुरुषाप्रीतिव्यतिरिक्तं सजातीयकर्मान्तरारम्भहेतुभूतं पूर्वकर्मजन्यं न वासनान्तरमतिरिक्तमस्तीति गम्यते इति भावः। ननु शरीरस्थितिहेतुसंस्कारप्रमाणाभावमात्रोपन्यासेन कथं पुण्यापुण्यप्रवृत्तिहेतुवासनाभावः प्रदर्शितो भवतीत्याशङ्क्याह—अन्यत्रापीति। एवमिति। अतिरिक्तसंस्काराभाव उक्त इत्यर्थः। कुत्रोक्तमित्यत्राह त्रिविधेति। इत्यस्य व्याख्यान इति। अस्य वक्ष्यमाणेन इत्युक्तमित्य-

---

विकल्प्य, आद्ये दूषणमाह तत्रेति। द्वितीये दूषणमाह हस्तप्रेरणेति। एतदुभयेत्यनेनासह्यापचाराहंकारौ गृह्येते। ननूक्तभाष्यकारवचनगतवासनाशब्देन स्वरसतोऽतिरिक्तवासनैव प्रतीयत इत्यत आह अघस्येत्यादीति। अन्यत्राप्येतत्तुल्यन्यायमिति। शरीरस्थितिहेतुभूतातिरिक्तसंस्कारसद्भावे प्रमाणा-

भावः प्राचीनवासनानिमित्तस्तत्तद्रुचिविशेषः। यत्र रुचिस्तत्र श्रद्धा जायते। श्रद्धा हि स्वाभिमतं साधयत्येतदिति विश्वासपूर्विका साधने त्वरा। वासना रुचिश्च श्रद्धा चात्मधर्माः गुणसंसर्गजाः, तेषामात्मधर्माणां वासनादीनां जनका देहेन्द्रियान्तःकरणविषय(विशेष)गता धर्माः कार्यैकनिरूपणीयाः सत्त्वादयो गुणाः सत्त्वादिगुणयुक्तदेहाद्यनुभवजा इत्यर्थः" इत्युक्तम्। यच्चात्मसिद्धौ—"[अ]निर्धूतनिखिलकरणकळेबरज्ञानकर्मवासनानुबन्धस्य अ[न]पवृक्तस्य न खलु स्वपरसंवेदनोदयनिबन्धनं किञ्चित् सम्भाव्यते" इति भगवद्यामुनमुनिभिर्ज्ञानकर्मवासनयोर्भेदेनोपादानम्, तदपि भाष्यकारवचनवत् निर्वाह्यम्। यत्तु कैश्चित्[1] कार्पासबीजे लाक्षारागरूषिते सति तद्रक्ततापगमेऽपि तत्कुसुमफलादौ रक्तादर्शनात् वासनानुवृत्तिरङ्गीकार्येति—तत्र विचारणीयम्—किं तत्कार्येष्वंकुरादिषु वासनोदयः, क्रमेण पुष्पाद्यात्मना परिणममानेषु बीजावयवेषु वा? नाद्यः; वैयधिकरण्येन आश्रयाभावाच्च वासनोदयानुपपत्तेः। अन्यथाऽतिप्रसङ्गात्। बीजावयवेषु तु लाक्षावयवानुवृत्तिस्यूतिबलेनैव रक्ततोपपत्तौ वासना निष्प्रयोजना। यत्तु गारुडमन्त्राद्यभिमृष्टेषु जलादिषु विषनिर्हरणादिदर्शनात् कश्चित् संस्कारोऽङ्गीकार्य इति—तदनुपपन्नम्; मन्त्रबलाहित-

---

नेनान्वयः। **साधयत्येतदिति**। एतत् कर्मास्मदभिलषितं प्रयच्छतीति **विश्वासपूर्वकवत्** तत्कर्मानुष्ठान**त्वरा श्रद्धे**त्यर्थः। ननु वासनायामनुभवसाध्यायां कथं **देहेन्द्रियान्तःकरणगतसत्त्वादिगुणानां** जनकत्वमित्याशङ्क्याह **सत्त्वादिगुणयुक्ते**ति। अत्र वासनाया अनुभवजन्यत्वप्रतिपादनात् अनुभववासनातिरिक्तसंस्कारो नास्तीति गम्यते इति भावः। **अपवृक्तस्ये**ति। मुक्तस्येत्यर्थः। **स्वपरसंवेदने**ति। **स्वपर** साक्षात्कारनिमित्तं **किञ्चिदपि न सम्भाव्यते** मुक्तिदशायाम्, "यत्र त्वस्य सर्वमात्मैवाभूत्" इति सर्वस्य ब्रह्मात्मकत्वज्ञानेन स्वत्वपरत्वादिज्ञानानवकाशादिति भावः। **अनिर्धूतकरणकळेबरज्ञानकर्मवासनानुबन्धस्यानपवृक्तस्य** इति पाठे स्वपरमात्मसाक्षात्कारहेतुभूतं किमपि नास्तीत्यर्थः। **ज्ञानकर्मवासनयो**रिति। ज्ञानवासनाव्यतिरेकेण **कर्मवासनाया भेदेनोपादान**मित्यर्थः। **भाष्यकारवचनव**दिति। "**अनादिविपरीतवासनाबद्धोऽपि**" इत्यादिवत् परमपुरुषप्रीतिपरतया **निर्वाह्य**मित्यर्थः। **वैयधिकरण्येने**ति। **बीजगतस्य लाक्षारञ्जनस्य** अङ्कुरादिगतस्वव्यधिकरणवासनाजनकत्वसम्भवादित्यर्थः। **आश्रयाभावाच्चे**ति। लाक्षारञ्जनदशायामिति शेषः। **अन्यथे**ति। अन्यनिष्ठलाक्षारञ्जनस्यान्यनिष्ठवासनाजनकत्वे इत्यर्थः। **संस्कारोऽङ्गीकार्य इति**। **संस्कारा**ख्यगुणोऽ**ङ्गीकार्य** इत्यर्थः। **न हि सजाती**-

---

भावकथनात् तत्तुल्यन्यायतया सजातीयकर्मान्तरारम्भहेतुभूतातिरिक्तसंस्कारसद्भावेऽपि प्रमाणाभावस्सिद्ध्यतीति भावः। **अनुभवजा इत्यर्थं इत्युक्त**मिति। **अत्र** वासनाया **अनुभवजन्यत्वो**क्त्या **अनु**भववासनातिरिक्तसंस्कारो नास्तीति गम्यत इति भावः। **अपवृक्तस्य**—**मुक्तस्य**। **स्वपरे**ति। **मुक्ति दशायां सर्वस्य ब्रह्मात्मकत्वज्ञा**नेन स्वत्वपरत्वादिभेदज्ञानानवकाशादिति भावः। **वैयधिकरण्येने**ति। बीजगतस्य लाक्षारसरञ्जनस्याङ्कुरादिगतवासनां प्रति **व्यधिकरणतया** जनकत्वासंभवादित्यर्थः। **आश्रया-भावाच्चे**ति। लाक्षारञ्जनदशायामिति भावः। **अन्यथे**ति। **अन्यत्र** लाक्षारञ्जनस्यान्यत्र वासनाजनकत्वे इत्यर्थः। **अतिप्रसङ्गादि**ति। **अरञ्जित**बीजनिष्पन्नपुष्पादौ वृक्षान्तरपुष्पादावेव वा वासनोत्पत्तिप्रसङ्गादि

---

1. **यस्मिन्नेव हि संताने आहिता कर्मवासना। फलं तत्रैव बध्नाति कार्पासे रक्तता यथा इति बौद्धाः।**

शक्तिविशेषेणैव तत्तत्कार्योपपत्तेः । न हि सजातीयकार्यनिष्पादकतया नियतस्य संस्कारस्य एतादृशकार्यहेतुत्वं युज्यते । यस्तु मीमांसकैः, "व्रीहीन् प्रोक्षति" इत्यादिविहितकर्मसु व्रीह्यादिद्रव्यनिष्ठः कश्चित् संस्कारोऽङ्गीक्रियते-"संस्कारः कर्तुरे(पुंस ए)वेष्टः प्रोक्षणाभ्युक्षणादिषु(भिः)[1]" इति तस्य कर्तृसंस्कारत्वमभ्युपगम्यते नैयायिकैः । तत्र किमयं भावनाख्यः संस्कारः, उत अदृष्टरूप इति विवेचनीयम् । नाद्यः ; तस्यानुभूतिजन्यत्वेन क्रियाजन्यत्वानुपपत्तेः । न द्वितीयः ; द्रव्येषु किञ्चित्कारमनाधाय केवलात्मसमवेतादृष्टजनकत्वे प्रयाजादिवत् आरादुपकारकत्वप्रसङ्गात् ।

येति । संस्कारस्य स्वजनकानुभवसजातीयस्मृतिजनकत्वदर्शनात् इहापि मन्त्रजनितसंस्कारस्य तत्सजातीयजनकत्वमेवोचितम् ; न तु तद्विजातीयविषनिर्हरणजनकत्वमिति भावः । ननु स्मृतिस्थलेऽनुभवजन्याधेयशक्तिव्यतिरिक्तसंस्कारस्यानभ्युपगमात् तस्याश्च शक्तेः स्वोत्पादकसजातीयजनकत्वस्यैव दृष्टतया विषनिर्हरणस्थले कथं तद्विलक्षणशक्तिकल्पनं सिद्धान्तेऽपि युज्यते इति चेन्न ; तत्राऽऽधेयशक्तिरेव वा ततोऽन्या वेति पक्षद्वयाभ्युपगमात्, तत्र च अतिरिक्तभावनाख्यसंस्काराभ्युपगमपक्षे **न हि सजातीयकार्यनिष्पादकतया** इत्युक्तिसंभवादिति ध्येयम् । **यस्त्विति । यस्तु व्रीह्यादिनिष्ठः संस्कार इष्यते तस्य कर्तृसंस्कारत्वं नैयायिकैरिष्यते** इति योजना । **अभ्युक्षणं** (?) सम्प्रोक्षणम् । आदिपदेनावोक्षणं गृह्यते । भूमिविषयकं प्रोक्षणमवोक्षणम् । नैयायिकमतं मीमांसकमुखेन दूषयति **तत्र किमयमिति** । **आरादुपकारकत्वप्रसङ्गादिति** । अङ्गं हि द्विविधं सन्निपत्योपकारकमारादुपकारकञ्चेति । यागसाधनभूतद्रव्यदेवताद्यतिशयोत्पत्तिमुखेन उत्पत्त्यपूर्वनिष्पादकं सन्निपाति ; यथाऽवघातादि ; उत्पत्त्यपूर्वेण परमापूर्वनिष्पत्तौ व्याप्रियमाणं **आरादुपकारकम्**, यथा प्रयाजादि । ततश्च **प्रयाजादिवत्** द्रव्यदेवतातिशयजननमुखेनापूर्वोपकारकत्वाभावात् **आरादुपकारकत्वप्रसङ्ग** इत्यर्थः । अस्तु को दोषः ? इत्यत्राह

त्यर्थः । **संस्कारोऽङ्गीकार्य इति** । कर्मजन्यसंस्कारोऽव्यतिरिक्तोऽङ्गीकार्यः । **मन्त्रबलाहितशक्तिविशेषेणैवेति** । तथाचाऽऽधेयशक्त्यतिरिक्तः कर्मजन्यसंस्कारो नाम कश्चिन्नास्त्येवेति भावः । **न हि सजातीयेति** । कर्मसंस्कारवादिभिर्हि तस्य स्वजनककर्मसजातीयकर्मनिष्पादकत्वनियमः स्वीक्रियते । ततश्च प्रकृते कर्मसंस्कारस्वीकारे तस्य स्वजनककर्मविलक्षण-विषहरणादिकार्यनिष्पादकत्वं कथं संभवेत् ? अतोऽत्र आधेयशक्तिविशेष एव ; न तु कर्मसंस्कार इति भावः । **यस्त्विति** । यस्तु व्रीह्यादिनिष्ठसंस्कारो मीमांसकैरङ्गीक्रियते तस्य कर्तृसंस्कारत्वं नैयायिकैरभ्युपगम्यत इति योजना । **अभ्युक्षणम्** (?) सम्प्रोक्षणम् । **आदिपदेनावोक्षणं गृह्यते** । भूमिविषयं प्रोक्षणमवोक्षणम् । नैयायिकमतं मीमांसकमुखेन दूषयति **तत्र किमयमिति** । **आरादुपकारकत्वप्रसङ्गादिति** । अङ्गं हि द्विविधम् ; सन्निपत्योपकारकम्, आरादुपकारकञ्चेति । यागसाधनभूतद्रव्यदेवताद्यतिशयजननमुखेनाङ्गिनिष्ठोत्पत्त्यपूर्वानुकूलशक्तिजनकं सन्निपत्योपकारकम्, यथाऽवघातादि ; आत्मगतादृष्टजननमुखेनोत्पत्त्यपूर्वनिष्ठस्वाव्यवहितकार्यानुकूलशक्तिजनकमारादुपकारकम्, यथा प्रयाजादि । ततश्च प्रयाजादिवत् प्रोक्षणस्याप्यात्मगतादृष्टजनकत्वे द्रव्यदेवतातिशयजननमुखेनापूर्वोपकारकत्वाभावान्न सन्निपत्योपकारकत्वसंभवः ; किन्त्वारादुपकारकत्वमेव स्यादि-

1 "संस्कारः पुंस एवेष्टः प्रोक्षणाभ्युक्षणादिभिः" इति न्यायकुसुमाञ्जलिकारिका ।

ततश्च नैवारादिचरुयुक्तायां विकृतौ व्रीहीणामेव प्रोक्षणं स्यात्, न तु नीवाराणाम्; तत्प्रोक्षणस्य प्रकृतावविहितत्वेन आत्मसमवेतादृष्टासिद्धेः। ततो व्रीह्यादिष्वेव संस्कारोऽभ्युपगन्तव्य इति।

---

ततश्चेति। व्रीहीणामेवेति। यदि प्रोक्षणं प्रोक्ष्यमाणगतातिशयाधायकं स्यात्, तदा नैवारचरावपि नीवारातिशयसिद्ध्यर्थं व्रीहिस्थानापन्नेषु नीवारेषु प्रोक्षणं सिद्ध्यति यदि च प्रकृतौ प्रोक्षणं न हविस्संस्कारकम्, अपि तु प्रयाजादिवत् आरादुपकारकम्, तदा आज्यसाधनकप्रयाजादिवदेव व्रीहिसाधनकप्रोक्षणमेव यथाप्रकृति प्राप्नुयात्; व्रीहिसाधनकप्रोक्षणस्यैव प्रकृतौ विहितत्वेन नीवारसाधनकप्रोक्षणस्य प्रकृतौ अविहितत्वेन अविहितेन तेन आत्मसमवेतादृष्टस्याप्रसक्तेरिति भावः। वस्तुतस्तु प्रोक्षणस्य आरादुपकारकत्वे द्वितीयाप्रतिपादितं व्रीहीणां शेषित्वं पीड्येतेत्यपि द्रष्टव्यम्। सत्यं व्रीहिगत एव संस्कारः, अथा-

---

त्यर्थः। अस्तु को दोष इत्यत्राह ततश्चेति। व्रीहीणामेवेति। यदि प्रोक्षणमात्मगतादृष्टमेव जनयेत्, न व्रीह्यादिगतम्—तदा व्रीह्यादीनां प्रोक्षणाङ्गत्वमेव स्यात्; न तु प्रोक्षणस्य व्रीह्यङ्गत्वम्। ततश्च, "प्रधानं नीयमानं हि तत्राङ्गान्यपकर्षति" इति न्यायेन नैवारचरुयुक्तविकृतौ प्रकृतिवच्छब्देन प्रोक्षणातिदेशे तदङ्गभूतानां व्रीहीणामपि प्राप्त्यवश्यम्भावेन व्रीहीणामेव प्रोक्षणं कर्तव्यं स्यादित्यर्थः। न तु नीवाराणामिति। प्रोक्षणस्य प्रकृतौ व्रीहिगतादृष्टजनकत्वे हि हविस्साधनसंस्कारार्थत्वं प्रोक्षणस्येति सिद्ध्या विकृतावपि हविस्साधनेषु व्रीहिस्थानापन्नेषु नीवारेषु संस्कारसिद्ध्यर्थं नीवारप्रोक्षणमावश्यकं स्यात्—न त्वात्मगतादृष्टजनकत्व इति भावः। तत्प्रोक्षणस्य=नीवारप्रोक्षणस्य। प्रकृतावविहितत्वेनेति। नीवारप्रोक्षणस्य प्रकृतौ विधाने हि तस्याविनियुक्तनीवारसंस्कारत्वासंभवेनात्मगतादृष्टजनकतया आरादुपकारकत्वमेव स्यात्; नीवाराणाञ्च प्रोक्षणसाधनत्वमेव स्यात्, आज्यस्येव प्रयाजादिसाधनत्वम्। ततश्च विकृतावपि नीवारसाधनकप्रोक्षणं यथाप्रकृति प्राप्नुयात्, आज्यसाधनकप्रयाजादिवदिति भावः। आत्मसमवेतादृष्टासिद्धेरिति। आत्मसमवेतादृष्टजनकत्वासिद्धेरित्यर्थः। तत्सिद्धौ हि विकृतावप्यात्मगतादृष्टार्थं नीवारसाधनकप्रोक्षणमनुष्ठेयं भवेदिति भावः। तत इति। आत्मगतादृष्टजनकत्वे उक्तदोषादित्यर्थः। इदमुपलक्षणम्; प्रोक्षणादेरात्मगतादृष्टजनकत्वस्वीकारे, "व्रीहीन् प्रोक्षति" इति द्वितीयाश्रुत्यवगतं व्रीहीणां प्रोक्षणं प्रति शेषित्वं [1]बाध्येतेत्यपि बोद्धव्यम्। यत्तु प्रोक्षणादिजन्यादृष्टस्य समवायसंबन्धेनात्मनिष्ठत्वेऽपि स्वरूपसंबन्धेन व्रीह्यादिनिष्ठत्वाङ्गीकारात्तस्य व्रीह्यादिसंस्कारत्वोपपत्त्या नोक्तदोषावकाश इति—तन्न; व्रीह्यादिनिष्ठत्वावश्यम्भावे आत्मनिष्ठत्वाभ्युपगमे प्रयोजनाभावात्, प्रमाणाभावाच्च। व्रीहीनिति द्वितीयया हि व्रीहीणां क्रियाजन्यफलशालित्वरूपं कर्मत्वं बोध्यते, आत्मगतादृष्टजनकत्वे तु न किमपि प्रमाणं दृश्यते। न च समवायेनादृष्टत्वावच्छिन्नं प्रति तादात्म्येनात्मनो हेतुतया प्रोक्षणादिजन्यादृष्टस्यापि समवायेनात्मनिष्ठत्वमावश्यकमिति वाच्यम्; धर्मिग्राहकमानेन प्रोक्षणादिजन्यादृष्टस्य व्रीह्यादिनिष्ठत्वसिद्धौ आत्मजन्यतावच्छेदकतया सिद्धस्य वैजात्यस्य एतत्साधारणासंभवे

---

1 कथं व्रीहीनिति कर्मत्वमित्याशंक्य, प्रोक्षणक्रियाजन्यजलसंयोगरूपफलाश्रयत्वादिति समाहितमुदयनेन। अतो मूले दोषान्तरमुक्तम्।

अत्रोच्यते—यद्यप्येवम्, अथाप्ययं संस्कारस्तत्तद्देवताभिमतिविषयत्वं वा सत्त्वादिगुणोद्बोधेन यागयोग्यत्वं वा। अनेन न ततोऽतिरिक्तगुणविशेषसिद्धिः॥

अथ संख्या। एकद्वित्र्यादिप्रतिपत्तिव्यवहारविषयः संख्या। तां द्रव्यमात्रनिष्ठां केचिदाहुः। केचित्तु द्रव्यगुणादिसमस्तपदार्थवर्तिनीम्। द्रव्यमात्रनिष्ठावादिनश्च—'नित्यद्रव्येष्वेकत्वं नित्यम्, अनित्यद्रव्येष्ववयवगतैकत्वैर्जन्यम्, द्वित्वत्रित्वादयस्त्वपेक्षाबुद्धिसहकृतैः प्रत्येकवर्तिभिरेकत्वैर्जन्याः'

---

प्युक्तादद्रव्यदशकात् नातिरिच्यते इत्यभिप्रेत्य आह अत्रोच्यत इति। इति वासना॥

केचिदिति। काणादा इत्यर्थः। समस्तपदार्थेति। रूपाणि त्रीणि, षड् रसा इत्यादिप्रतीतिव्यवहारसत्त्वादिति भावः। काणादानां मतमुपन्यस्यति द्रव्यमात्रेति। अपेक्षाबुद्धीति। इत्थं किल तन्मते द्वित्वोत्पत्तिप्रक्रिया—द्वे द्रव्ये इति ज्ञानात् पूर्वं द्वित्वाश्रयाश्रितैकत्वद्वयविषयिणी समूहालम्बनरूपा इदमेकमिदमेकमित्यपेक्षाबुद्धिरुत्पद्यते। तां सहकारिणीमासाद्य ताभ्यामेकत्वाभ्यां स्वाश्रये द्वित्वमारभ्यते। तत्र च ते एकत्वे असमवायिकारणे; अपेक्षाबुद्धिश्च निमित्तकारणम्। [1]तदनु द्वित्वत्वसामान्यज्ञानम्, तदैवापेक्षाबुद्धेर्विनाशकता। तदनन्तरं द्वित्वत्वविशिष्टद्वित्वज्ञानम्; तस्मिन्नेव क्षणेऽपेक्षाबुद्धिनाशश्च। तदुत्तरक्षणे द्वित्वनाशः, द्वे द्रव्ये इति द्वित्वत्वविशिष्टद्वित्वविशिष्टद्रव्यविशेष्यकज्ञानोत्पत्तिश्च भवति। न च प्रत्यक्षविशिष्टज्ञाने विशेषणस्यापि कारणत्वात् कथमसति द्वित्वरूपविशेषणे तद्विशिष्टप्रत्यक्षमिति वाच्यम्; कारणत्वे पूर्वक्षणसत्त्वस्यैव प्रयोजकत्वेन कार्यकालसत्त्वस्याप्रयोजकत्वा-

---

एतद्व्यावृत्तवैजात्यावच्छिन्नं प्रत्येव आत्मनो हेतुत्वावश्यंभावात्। प्रोक्षणादिजन्यादृष्टस्य समवायेनैव व्रीह्यादिनिष्ठत्वसंबन्धेन तत्र समवायेनात्मनिष्ठत्वं स्वरूपसंबन्धेन व्रीह्यादिनिष्ठत्वञ्चेत्युभयाङ्गीकारे गौरवात्। सिद्धान्तमाह अत्रोच्यत इति। एवमिति। उक्तरीत्या प्रोक्षणादेर्व्रीह्यादिनिष्ठसंस्कारजनकत्वमेव युक्तमित्यर्थः। अय संस्कारः=प्रोक्षणादिजन्यो व्रीह्यादिनिष्ठसंस्कारः। तत्तद्देवताभिमतिविषयत्वमिति। तत्तद्यागोद्देश्यदेवतानिष्ठा याऽभिमतिः, इदं द्रव्यं मद्यागायोपयुक्तं भवत्विति संकल्परूपा, तद्विषयत्वमित्यर्थः। सत्त्वादीति आदिना रजस्तमसोः परिग्रहः। उद्बोधेन यागयोग्यत्वमिति। उद्बोधाभिन्नं यागयोग्यत्वमित्यर्थः। उद्बोधः=उद्रेकापरपर्यायश्शक्तिविशेषः। तथाच सात्त्विकराजसतामसभेदेन त्रिविधेषु कर्मसु तत्तत्कर्माङ्गभूतद्रव्येषु प्रोक्षणादिना तत्तद्गुणोद्बोधादुद्बुद्धतत्तद्गुणवत्त्वरूपं तत्तत्कर्मयोग्यत्वं भवतीति भावः।

संख्यां लक्षयति एकेत्यादि। एकत्वादयस्सर्वास्संख्याः इत्येवंविधज्ञानव्यक्तिविशेषविषयत्वं संख्यापदवाच्यत्वञ्च संख्यालक्षणमिति भावः। केचिदिति। काणादा इति भावः। समस्तपदार्थवर्तिनीमिति। आहुरित्यनुषङ्गेणान्वयः। त्रीणि रूपाणि, षड्रसाः, पञ्च कर्माणीत्यादिप्रतीतिव्यवहारयोस्सत्त्वादिति भावः। काणादमतमुपन्यस्यति द्रव्यमात्रनिष्ठावादिन इति। द्रव्यमात्रवृत्तिवादिन इत्यर्थः। अपेक्षाबुद्धीति। अयमेकोऽयमेक इति नानैकत्वविषयिणी बुद्धिरपेक्षाबुद्धिः सा च द्वित्वोत्पत्तौ निमित्त-

---

1 तदनु=द्वित्वमनु। स्वमतेऽन्यद्वित्वोत्पत्तावपि समनन्तरं तद्विशिष्टद्रव्यप्रत्यक्षमेवेति ध्येयम्।

इत्याहुः। तत्र तावत् द्वित्वादिव्यवहाराणां द्वित्वादिसामग्र्यैव निष्पत्तिः तत्तदपेक्षाबुद्धिविषयतयैव। तेषां (विषयतयैव तेषां स्फुरणात्।) द्वित्वादीनां बाह्यनिष्ठानामपि व्यवहर्तृनियमस्तत एव वाच्यः। अन्यथा साधारणोपलम्भप्रसङ्गात् रूपादिवत्। ततस्तेनैव व्यवहारस्तन्नियमश्चेत्यस्मिन् पक्षे तु उपपन्नतरम्। तादृशबुद्धिनिवृत्तौ च द्वित्वादिनिवृत्तिरभ्युपगता। एवञ्च कारणनिवृत्तिमात्रात् कार्य-

---

दिति। **तत्र तावदिति।** अपेक्षाबुद्धिविषयतारूपया **द्वित्वसामग्र्यैव द्वित्वादिव्यवहाराणां निष्पत्तिरिति** योजना। ततश्च अपेक्षाबुद्धिरेव द्वित्वम्, तस्या एव च प्रकाशत्वात् व्यवहर्तृव्यद्वित्व विषयकज्ञानत्वमप्युपपद्यते इति परमते द्वित्वोत्पादिकाया अपेक्षाबुद्धेरेव द्वित्वव्यवहारहेतुत्वमुपपद्यते इति भावः। यस्त्वपेक्षाबुद्धिवशात् बाह्यपदार्थे द्वित्वादिकमुत्पन्नं द्वित्वादिव्यवहारहेतुरिति मन्यते, तन्मतेऽपि यत्पुरुषापेक्षाबुद्धिजन्यं यत् द्वित्वादिकम्, तत् तेनैव पुरुषेण दृश्यते व्यवह्रियते च, नेतरेणेति व्यवहारनियमार्थं अपेक्षाबुद्धेरेव **नियमहेतुत्वेनावश्याश्रयणीयतया** तस्यैवापेक्षाबुद्धिविशेषस्य द्वित्वादिव्यवहारस्वरूपेऽपि हेतुत्वोपपत्तौ अतिरिक्तद्वित्वकल्पनमप्रामाणिकमित्याह **तेषां द्वित्वादीनामिति। उपपन्नतरमिति।** व्यवहारहेत्वतिरिक्तस्य नियमहेत्वन्तरस्य लोकविलक्षणस्याकल्पनीयत्वादिति भावः। **अभ्युपगतेति।** काणादैरिति शेषः। को दोष इत्यत्र आह **एवञ्चेति।** निमित्त कारणनाशे कार्यनाशस्य काप्यदृष्टतया तत्कल्पनं अतिगुर्विति भावः। ननु अपेक्षाबुद्धिविनाशात् द्वित्व विनाशानभ्युपगमे कालान्तरेऽपेक्षाबुद्ध्यभावेऽपि द्वित्वोपलम्भप्रसङ्गः। न च अपेक्षाबुद्धिर्द्वित्वाभिव्यञ्जिकेति वाच्यम्; तथासति अपेक्षाबुद्धेर्द्वित्वोत्पादकत्वं न स्यात्; सर्वत्र व्यञ्जकेनाप्युपपत्तेः। ननु सर्वत्र कारणगुणेभ्य एव एकत्ववदुत्पन्नं द्वित्वादिकमप्यपेक्षाबुद्ध्या अभिव्यज्यते इत्येवास्त्विति चेत्—तर्हि, 'नित्यद्रव्येषु उत्पद्यमानं द्वित्वादिकं न नित्यम्; नित्यमेकमनेकवृत्ति सामान्यमिति सामान्यलक्षणयोगेन

---

कारणम्, तत्सहकृतेनासमवायिकारणभूतेनैकत्वद्वयेन द्वित्वोत्पत्तिः; एवं व्यक्तित्रय एकत्वावगाहि बुद्धिरूपापेक्षाबुद्धिसहकृतैस्तादृशैस्त्रिभिरेकत्वैस्त्रित्वं जन्यते, एवं चतुष्टयादिकमपीति भावः। **द्वित्वादिव्यवहाराणां द्वित्वादिसामग्र्यैव निष्पत्तिरिति।** अतिरिक्तद्वित्वाद्युत्पादकसामग्रीरूपतया भवदङ्गीकृतेनापेक्षाबुद्ध्यादिघटितकारणकलापेनैवातिरिक्तद्वित्वकार्यतयाऽभिमतव्यवहारोत्पत्तिसंभवात् मध्ये अतिरिक्तद्वित्वाभ्युपगमोऽनुपपन्न इति भावः। किञ्चातिरिक्तद्वित्वादिपक्षेऽप्यपेक्षाबुद्ध्योत्पद्यमानं द्वित्वादिकं न सुखादिवदान्तरनिष्ठम्; येन तत्तत्पुरुषमात्रव्यवहार्यत्वं तत्रोपपद्येत। किन्तु रूपादिवत् बाह्यनिष्ठमेव। ततश्च रूपादिवदेव सर्वपुरुषव्यवहार्यत्वप्रसक्तौ यत् द्वित्वादिकं यत्पुरुषीयापेक्षाबुद्धिजन्यम्, तद्द्वित्वादिकं तत्पुरुषेणैव व्यवहार्यमित्येवं व्यवहारनियमेऽपेक्षाबुद्धेरेव हेतुतायाः वाच्यतया व्यवहारस्वरूपेऽपि तस्या एव हेतुत्व कल्पनमुचितम्; नातिरिक्तद्वित्वस्येत्याह **तत्तदपेक्षाबुद्धीति।** तत्तत्पुरुषीयापेक्षाबुद्धीत्यर्थः। **तत एवेति।** अपेक्षाबुद्धेरेवेत्यर्थः। **तत इति।** व्यवहर्तृनियमस्यापेक्षाबुद्ध्यैव वाच्यत्वादित्यर्थः। **तेनैवेति।** उक्त हेतुनैवेत्यर्थः। **व्यवहारस्तन्नियमश्चेतीति।** व्यवहारस्तन्नियमश्चेत्येतदुभयमित्यर्थः। **उपपन्नतरमिति।** व्यवहारहेतुरतिरिक्तद्वित्वं नियमहेतुस्त्वपेक्षाबुद्धिरिति भवदीयनिर्वाहापेक्षया अपेक्षाबुद्धेरेवोभयहेतुत्व

निवृत्तिकल्पनं गरीयः । तादृशबुद्धिनिवृत्तिमात्रात् व्यवहाराभाव इति तूपपन्नतरम् । ननु बुद्धिविशेष एव तात्त्विकमारोपितं वा द्वित्वादिकमनाश्रित्य कथञ्चिदपि न घटते इति चेत्; भवतो वा कथं

---

गुणत्वव्याघातात् । नाप्यनित्यम्; सर्वदोत्पत्तिप्रसङ्गादपेक्षणीयान्तराभावात् कादाचित्कस्य हेतोरदर्शनात् । अविनाशप्रसङ्गश्च स्यात्; कारणनाशविरोधिगुणोदयान्तराभावात् [' इति द्वित्वादेः?] अपेक्षाबुद्धिर्निमित्तकारणं तद्विनाशे च विनाश इत्यभ्युपगन्तव्यमित्याशङ्क्याह **तादृशबुद्धिनिवृत्तिमात्रादिति** । अपेक्षाबुद्धिनिवृत्तिमात्रादित्यर्थः । **उपपन्नतरमिति** । त्वत्प्रक्रियापेक्षया, अपेक्षाबुद्ध्या द्वित्वव्यवहारः, तदभावे तदभाव इत्यस्योपपन्नतरत्वादिति भावः । **ननु बुद्धिविशेष एवेति** । **तात्त्विकम**तात्त्विकं वा पुरोवर्तिगतं विषयमन्तरेण द्वाविति ज्ञानविशेष एव न सम्भवति; निर्विषयज्ञानासम्भवात् । न च द्वाविति

---

मित्यस्मदीयनिर्वाहे एकत्रैवोभयहेतुत्वाङ्गीकारादतिरिक्तद्वित्वानङ्गीकाराच्चोपपत्त्यतिशय इति भावः । **कारणनिवृत्तिमात्रादिति** । निमित्तकारणनिवृत्तिमात्रादित्यर्थः । **गरीय इति** । अन्यत्र कार्यादर्शनादिति भावः । नन्वपेक्षाबुद्धिनाशात् द्वित्वनाशानुपगमे कालान्तरेऽपि द्वित्वादिसद्भावप्रसङ्गादपेक्षाबुद्धिविरहेऽपि द्वित्वादिव्यवहारापत्तिः । अतोऽपेक्षाबुद्धिनाशात् द्वित्वनाश इत्यगत्या स्वीकार्यमित्यत आह **तादृशेति** । **बुद्धिनिवृत्तिमात्रादिति** । बुद्ध्यभावमात्रादित्यर्थः । मात्रशब्देनातिरिक्तद्वित्वनाशापेक्षा बोध्यते । **उपपन्नतरमिति** । द्वित्वादिव्यवहारेऽपेक्षाबुद्धेरेव हेतुतास्वीकारेण कारणाभावे कार्याभावस्यावश्यकत्वादिति भावः । अपेक्षाबुद्धिनाशात् द्वित्वनाशानुपगमेऽपि कालान्तरे उक्तरीत्या व्यवहाराभावोपपत्तौ निमित्तकारणनाशात् कार्यनाशस्य क्वचिदप्यपरिदृष्टस्य कल्पननिबन्धनगौरवाभावरूपोऽतिशयः तरपा बोध्यते । **बुद्धिविशेष एवेति** । यदवष्टम्भेनातिरिक्तद्वित्वादिकं निरस्यते, तादृशापेक्षाबुद्धिरेवेत्यर्थः । **द्वित्वादिकमनाश्रित्येति** । स्वजन्यद्वित्वादिकमद्वारीकृत्येत्यर्थः । **न घटत इति** । इमौ द्वावित्यादिव्यवहारजनकं न भवितुमर्हतीत्यर्थः । अयं भावः—इमौ द्वावित्यादिव्यवहारे हि द्वित्वादिकमेव विषयः । ततश्च द्वित्वाद्युत्पत्तिमन्तरा कथं तस्य निर्वाहः । यदि चापेक्षाबुद्धिविषयत्वमेव द्वित्वादिकमित्यतिरिक्तद्वित्वाद्युत्पत्त्यभ्युपगमो नावश्यक इत्युच्यते—तदा यत्र द्वित्वव्यवहारः तत्र त्रित्वादिव्यवहारोऽप्यापद्येत; त्रित्वादेरप्यपेक्षाबुद्धिविषयतारूपताया एवाभ्युपगमात् । यदि चायमेकोऽयमेक इति वस्तुद्वय एकत्वावगाहिबुद्धिरूपापेक्षाबुद्धिविषयत्वमेव द्वित्वम्, अयमेकोऽयमेक इति वस्तुत्रय एकत्वावगाहिबुद्धिविषयत्वञ्च त्रित्वमित्यादिरीत्याऽभिधानान्न दोषः; वस्तुद्वयविषयकत्वञ्च एकविषयकत्वविशिष्टापरविषयकत्वम् । अतो न द्वित्वशरीरे द्वित्वप्रवेशादात्माश्रयः । एवं वस्तुत्रयादिविषयकत्वमपि बोध्यमित्युच्यते— तदा यत्र वस्तुद्वय एकत्वावगाहिबुद्धिर्जायते, तत्र वस्तुत्रयादावपि तादृशबुद्धिसंभवात् द्वित्वव्यवहारस्थले त्रित्वादिव्यवहारस्याप्यापत्तिर्दुर्वारैवेति । यद्वा— **बुद्धिविशेष एवे**त्यस्य **इमौ द्वौ इमे त्रय इ**त्यादिबुद्धिविशेष एवेत्यर्थः । अतिरिक्तद्वित्वादिसाधनाय प्रमाणान्तरं नान्वेषणीयमिति एवकाराभिप्रायः । **द्वित्वादिकमनाश्रित्येति** । द्वित्वादिकमविषयीकृत्येत्यर्थः । **न घटत इति** । नोत्पत्तुमर्हतीत्यर्थः । तथा च तादृशबुद्ध्युपपत्तयेऽतिरिक्तद्वित्वादि

**घटते? शक्तिविशेषादिति चेन्न; द्वित्वापलापापातात् ॥ द्वित्वादिप्रागभावः शक्तिरिति चेन्न; द्वित्वत्रित्वादिसर्वप्रागभावसन्निधौ कस्य शक्तित्वमिति नियमासिद्धेः ॥ ईश्वरबुद्धिपरिग्रहविशेषात् अदृष्टाद्वा नियम इति चेत्; तुल्यम् ॥ निर्विषयव्यवहारप्रसङ्गो वैषम्यमिति चेन्न; विषयाभिधानात् ।**

ज्ञाने अपेक्षाबुद्धिविषयत्वं विषय इति वाच्यम्; त्रित्वादिस्थलेऽपि अपेक्षाबुद्धेः सत्त्वेन साधारणतया द्वाविति ज्ञाने तन्मात्रस्य विषयत्वानुपपत्तेरित्यर्थः । **भवतो वेति ।** अतिरिक्तद्वित्ववादिनोऽपीत्यर्थः । अयं भावः—अतिरिक्तद्वित्वाद्यभ्युपगमेऽपि इह द्वित्वमेवोत्पद्यते न च त्रित्वमिति व्यवस्था दुर्वचैव । न च द्वाभ्यामेकत्वाभ्यां द्वित्वमुत्पद्यते, त्रिभिरेकत्वैस्त्रित्वमिति वाच्यम्; एकत्वसङ्ख्याया द्वित्वत्रित्वाद्याश्रयत्वाभावात् । न च द्वयोर्द्रव्ययोर्द्वित्वमुत्पद्यते, त्रिषु त्रित्वमिति समवायिकारणविशेषात् व्यवस्था सुवचेति वाच्यम्; द्वित्वत्रित्वोत्पत्तेः पूर्वं द्वयोस्त्रिष्विति व्यवहारालम्बनस्याप्यभावात् । अतोऽतिरिक्तद्वित्ववादिनोऽपि द्वित्वत्रित्वादिव्यवस्था दुर्वचेति । **शक्तिविशेषादिति ।** यत्र वस्तुनि यत्सङ्ख्योत्पादकः **शक्तिविशेषो** यदा, तदा तत्र सा सङ्ख्या उत्पद्यते इति व्यवस्था सुवचेति भावः । **द्वित्वापलापापातादिति ।** **शक्तिविशेषादेव** द्वित्वादिव्यवहारोपपत्तेरिति भावः । **विषयाभिधानादिति ।** अपेक्षा-

सिद्धिः । न च तादृशबुद्ध्यपेक्षाबुद्धिविषयत्वमेव विषयोऽस्त्विति शङ्क्यम्; प्रागुक्तरीत्याऽतिप्रसङ्गादित्यभिप्रायः । **भवतो वा कथं घटत इति ।** अतिरिक्तद्वित्ववादेऽपि, यत्रातिरिक्तं द्वित्वमुत्पद्यते, तत्र तादृशस्य त्रित्वादेरप्युत्पत्तिप्रसङ्गो दुर्वार इति तत्र द्वित्वमात्रोत्पत्त्या द्वावित्येव प्रतीतिव्यवहाराविति नियमस्य दुरुपपादत्वादिति भावः । **शक्तिविशेषादिति ।** यत्र यत्संख्योत्पादिका शक्तिरस्ति, तत्र तत्संख्योत्पाद्यत इति व्यवस्थोपपत्त्या न दोष इति भावः । **द्वित्वापलापापातादिति ।** तादृशशक्तिविशेषेणैव द्वित्वादिव्यवहारोपपत्तेरिति भावः । **द्वित्वादिप्रागभावः शक्तिरिति ।** शक्तिर्द्वित्वादिप्रागभावरूपैव, न त्वतिरिक्तेत्यर्थः । तथाचातिरिक्तद्वित्वादिविरहे तत्प्रागभावरूपशक्तिरेव न संभवतीति न द्वित्वाद्यपलापप्रसङ्ग इति भावः । **कस्य शक्तित्वमिति नियमासिद्धेरिति ।** कस्य कार्योपधायकशक्तित्वमिति प्रश्ने प्रतिवचनोपयोगिनः अस्यैव तादृशशक्तित्वमिति नियमस्यासिद्धेरित्यर्थः । **ईश्वरबुद्धिपरिग्रहविशेषादिति ।** इहेदानीं द्वित्वप्रागभावः कार्योपधायको भवत्वित्यादीश्वरसंकल्पविशेषविषयत्वादित्यर्थः । इदञ्च सिद्धान्तिमतच्छायया । स्वमतमनुसृत्याह **अदृष्टविशेषादिति ।** **नियम इति ।** कदाचिद्द्वित्वमेवोत्पद्यते, कदाचित् त्रित्वमेवेत्येवं नियम इत्यर्थः । **तुल्यमिति ।** कदाचिद्वस्तुद्वय एवैकत्वावगाहिन्यपेक्षाबुद्धिः, कदाचिद्वस्तुत्रय एवेत्येवं नियमोऽपीश्वरसंकल्पविशेषात् अदृष्टाद्वोपपद्यत इति तुल्यमित्यर्थः । शङ्कते **निर्विषयव्यवहारप्रसङ्गो वैषम्यमिति ।** अतिरिक्तद्वित्वाद्यनभ्युपगमे इमौ द्वावित्यादिव्यवहारस्य विषयाभावादित्यभिमानः । **विषयाभिधानादिति ।** अपेक्षाबुद्धिविशेषविषयत्वरूपस्यैव द्वित्वादेस्तद्विषयत्वेनाभिधानादित्यर्थः । "तत्र तावत् द्वित्वादिव्यवहाराणां द्वित्वादिसामग्र्यैव निष्पत्तिः" इति वाक्येन तदभिधानं फलितमिति भावः । यत्तु द्वित्वादिप्रागभावानां शक्तिरूपतया सहकारितामङ्गीकृत्य द्वित्वाद्युत्पत्तिनियमोपपादनम्—तदत्यन्तमसङ्गतम् । अतिरिक्त-

किंच द्वित्वादिषु प्रमाणसिद्धेषु तत्प्रागभावानां सहकारित्वकल्पनम्, तेषु च प्रमितेषु तन्नियमेन द्वित्वाद्युत्पत्तिप्रतिनियतिरिति दुरुत्तरम्। अतः सिद्धं द्वित्वादिसंख्या बुद्धिविशेषविषयत्वमिति ॥

एकत्वं चिन्त्यते—तत्र तावत् कार्यमेकत्वं नास्त्येव; अवयविन एवानभ्युपगमात् कुतस्तदैक्यम्? समुदायैकत्वं राश्येकत्ववत्। तत्रापि हि भागप्रधानव्यवहारेऽनेकत्वं व्यवहरन्ति ॥ संहतिदशायामेकत्वावस्था जायते विभक्तदशायामनेकत्वावस्था चेति चेन्न; भेदाभेदविरोधप्रसङ्गात्। प्रत्ययस्य च संहतिविभागाभ्यामेवान्यथासिद्धत्वात्। स्वरूपस्य च

---

बुद्धिविषयत्वस्यैव द्वित्वप्रतीतौ विषयत्वोक्तेरिति भावः ॥

**कार्यमेकत्वमिति।** अवयवैकत्वैरारभ्यमवयविगतैकत्वमित्यर्थः। **राश्येकत्ववदिति।** औपचारिकमिति भावः। ननु **राश्येकत्ववदे**कत्वस्याप्यौपचारिकत्वे राश्यादावुद्भूतावयवभेदविवक्षायां बहवो व्रीहय इतिवत् घटादावपि **संहतिदशायामनेकत्वव्यवहारः** स्यादित्याशङ्क्य दृष्टान्तपरतया परिहरति **तत्रापि भागप्रधानव्यवहारेऽनेकत्वं व्यवहरन्तीति।** शङ्कते **संहतिदशायामिति। प्रत्ययस्य चेति।** एकानेकत्वप्रत्ययस्य चेत्यर्थः। वस्तुत एकानेकत्वोत्पत्तौ बाधकमाह **स्वरूपस्य चेति।**

---

द्वित्वादिसिद्धावेव तत्प्रागभावसिद्धिः, तत्प्रागभावसिद्धावेव तस्य शक्तित्वेन सहकारितया द्वित्वाद्युत्पत्तिनियमोपपत्त्याऽतिरिक्तद्वित्वादिसिद्धिरित्यन्योन्याश्रयणादित्याह **किञ्चेति।**

**कार्यमेकत्वमिति।** अवयवगतैकत्वैरारब्धमवयविगतैकत्वमित्यर्थः। **राश्येकत्ववदिति।** यथा एको व्रीहिराशिरित्यादौ एककालावच्छिन्नैकदेशवृत्तित्वादिरूपराशित्वघटकदेशादिगतैकत्वस्य परम्परासंबन्धेन भानम्, तद्वदित्यर्थः। ननु साक्षात्संबन्धेन व्रीहिगतसंख्याविवक्षायां बहवो व्रीहय इतिवत् एकपटादावपि बहुत्वव्यवहारप्रसङ्ग इत्यत आह **तत्रापीति। भागप्रधानव्यवहारेऽनेकत्वं व्यवहरन्तीति।** अवयवप्रधानव्यवहारे अनेके तन्तव इति व्यवहरन्त्येवेत्यर्थः। अयं भावः—किमेकस्मिन् पटे अनेके पटा इति व्यवहार आपाद्यते; उतानेके तन्तव इति। आद्ये आपादकाभावः; पटशब्दस्य संयोगविशेषविशिष्टतन्तुबोधकत्वेऽपि तदुत्तरवचनस्य परम्परासंबन्धेन तद्गतसंयोगविशेषसंख्यान्वयबोधकताया एव व्युत्पन्नत्वेन प्रकृते तदभावात्। न ह्येकस्मिन् व्रीहिराशौ व्रीहिगतबहुत्वविवक्षया इमे बहवो व्रीहिराशय इति व्यवहारः संभवति। द्वितीये त्विष्टापत्तिरिति शङ्कते **संहतीति। प्रत्ययस्येति।** एकानेकत्वप्रत्ययस्येत्यर्थः। **संहतिविभागाभ्यामेवान्यथासिद्धत्वादिति।** संहतिगतैकत्वं परम्परासंबन्धेन विषयीकृत्यैकत्वप्रत्ययस्य, साक्षात्संबन्धेन तन्तुगतमनेकत्वं विषयीकृत्यानेकत्वप्रत्ययस्य चोपपन्नत्वादित्यर्थः। ननु संहतिदशायामेवैकत्वं विभक्तदशायामेव चानेकत्वमिति काल

---

एकत्वं चिन्त्यते इति। एकत्वसंख्या परम् अद्रव्यान्तरत्वेन स्वीकार्येति एकदेशिसंमतमेष्टव्यम्, उत साऽपि बुद्धिविशेष एवेति सुवचमिति विचार्यत इत्यर्थः। कार्यमिति। तार्किकैः नित्यगतं नित्यम्, अनित्यगतमनित्यमिति द्विविधमेकत्वमुक्तम्। तत्र द्वितीयमवयविभूतद्रव्यवृत्तितया तदिष्टम्। एवं तार्किकैः कार्यतयाभिमतं यदेकत्वं तन्नास्ति। अवयविन एवाभावादित्यर्थः। ननु अवयवसमुदायरूपावयविगतमेव कार्यमेकत्वमस्त्वित्यत्र तदेकत्वं न मुख्यं किंतु गौणमित्याह समुदायेति।

वस्तुतो भेदाभेदविरुद्धत्वप्रसङ्गात्। पटावस्थायामेकतन्तूपलम्भप्रसङ्गाच्च॥ प्रळयावस्थायां प्रपञ्चैक्यं कथमिति चेत्; न कथञ्चित्॥ श्रुतिविरोधस्तर्हीति चेन्न; भेदप्रहाणपरत्वात्॥ तदेवैक्यमिति चेन्न; प्रकृतित्वावस्थारूपत्वात्। यथा तृणोपलादिपरिणामकलायां (दशायां) पृथिवीतः पृथग्व्यवहारो जायते, तेषामेव परिणामान्तरमापन्नानां पुनः पृथिवीत्वव्यवहारः। न च तावता

एकतन्तूपलम्भेति। तन्तुष्वेकत्वावस्थोत्पत्तौ सर्वोऽपि तन्तुरेक इति प्रतीतिप्रसङ्ग इत्यर्थः। श्रुतिविरोधस्तर्हीति चेदिति। "सदेव सोम्येदमग्र आसीदेकमेव" इति [श्रुतिः] विरोध इत्यर्थः। भेदप्रहाणेति। नामरूपभेदप्रहाणपरत्वादित्यर्थः। तदेवेति। भेदप्रहाणमेवेत्यर्थः। प्रकृतित्वावस्थारूपत्वादिति। भेदप्रहाणस्येति शेषः। प्रकृतित्वावस्थायाश्च एकत्वसङ्ख्यारूपत्वाभावादिति भावः। प्रकृतित्वलक्षणैकावस्थासम्बन्ध एव; नैक्यमित्यमुमंशं दृष्टान्तमुखेनोपपादयति यथा तृणेति। परिणामकलायामिति। परिणामदशायामित्यर्थः। तावतेति। पृथिवीत्वलक्षणैकावस्थासम्बन्ध

भेदान्न भेदाभेदविरोध इत्यत आह स्वरूपस्य चेति। वस्तुतो भेदाभेदविरुद्धत्वप्रसङ्गादिति। भेदाभेदरूपविरुद्धधर्मसमावेशप्रसङ्गादित्यर्थः। भेदस्य व्याप्यवृत्तित्वनियमेन कालभेदेनाप्येकत्र भेदाभेदसमावेशासंभवादिति भावः। वस्तुत इत्यनेन कालभेदेनापि समावेशासंभवोपयोगिवस्तुस्वभावनैयत्यं बोध्यते। अथवा भेदाभेदयोरुभयोरपि सत्यत्वाङ्गीकारात् अद्वैतिनामिवैकस्यातात्त्विकत्वेन शुक्तित्वरजतत्वयोरिव समावेशोपपादनमपि न संभवतीति वस्तुत इत्यस्याभिप्रायः। यद्वा संहतिदशायामेव एकः पटः अनेके तन्तव इति प्रतीतिव्यवहारयोस्सत्त्वान्न कालभेदेनापि भेदाभेदयोर्विरोधपरिहारसंभव इति वस्तुत इत्यस्याभिप्रायः। बाधकान्तरमाह एकतन्तूपलम्भेति। एकस्तन्तुरित्युपलम्भप्रसङ्गादित्यर्थः। संहतिदशायां तन्तुष्वेवैकत्वावस्थोत्पत्त्यभ्युपगमादिति भावः। न कथंचिदिति। न मुख्यमैक्यं तत्रेति भावः। शङ्कते श्रुतिविरोध इति। "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इति श्रुतिविरोध इत्यर्थः। भेदप्रहाणपरत्वादिति। नामरूपविभागशून्यत्वपरत्वादेकशब्दस्येत्यर्थः। तदेवैक्यमिति। नामरूपविभागशून्यत्वमेवैकत्वमित्यर्थः। प्रकृतित्वावस्थारूपत्वादिति। समत्रैगुण्यावस्थारूपत्वादित्यर्थः। भेदप्रहाणस्येति शेषः। प्रकृतित्वावस्थायाश्चैकत्वसंख्यारूपत्वाभावादिति भावः। भेदप्रहाणेन प्रागवस्थापत्तेरेकत्वसंख्यारूपत्वाभावं दृष्टान्तमुखेनोपपादयति यथा तृणेति। परिणामकलायामिति। परिणामदशायामित्यर्थः। परिणामदशायामित्येव बहुषु कोशेषु पाठो दृश्यते।

अनेन परमात्मनित्यसूरिविग्रहेषु नित्येषु अवयवसमुदायात्मकेषु प्रत्येकमकार्यमेकत्वं स्यादिति शंकाऽप्यनवकाशा; तत्र मुख्यैकत्वायोगात्। न कथञ्चिदिति। प्रपञ्चैक्यमित्यनेन प्रपञ्चरूपकार्यनिष्ठमेकत्वं वा, प्रपञ्चस्य सूक्ष्मेण सहैक्यं वा किं विवक्षितम्। नाद्यः; प्रलयकाले प्रपञ्चस्यैवाभावात्। तत्रैकत्वाभावाच्च। नान्त्यः, तस्य सूक्ष्मगतत्वादित्यर्थः। चेतनाचेतनात्मकप्रपञ्चद्रव्येषु तदेकत्वयोगे दृष्टान्तमाह यथेति। पृथिवीत इति। अपरीक्षकाणां तृणादौ पृथिवीति व्यवहारोऽपि नास्ति। परीक्षकाणां तु तत्र महापृथिवीति व्यवहारो नास्ति। महापृथिवीति भूतलादेरेव ग्रहणात्।

तृणोपलाद्यंशानां परस्परं तावत् ऐक्यम्, अथ महापृथिव्या वा। किं तर्हि? विजातीयावस्था-प्रहाणेन सजातीयावस्थापत्तिमात्रम्। एवं प्रकृत्यादावपीति। चिन्त्यं निरवयवगतमैक्यमप्येवम् (वं चिन्त्यम्)। तथाऽपि (एवं प्रकृत्यादावपीति चिन्त्यं निरवयवगतमप्येकत्वं तथापि?) एवं प्रकृत्यादावपीति चिन्त्यं निरवयवगतमेकत्वम्। यद्यप्येवम्, तथाऽपि?) एकक्रियान्वयेन समप्रधानतया समुच्चीयमानवस्त्वन्तरप्रतिपत्तिविधुरवस्तुमात्रप्रतिपत्तिविषयत्वमेकत्वम्।

---

मात्रेणेत्यर्थं। तृणोपलाद्यंशानामिति। तृणानामुपलानां परस्परमैक्यं वा महापृथिव्या ऐक्यं वा नास्तीत्यर्थः। एवञ्चिन्त्यमिति। निरवयवपरमाण्वादिगततया अवगतमैक्यमपि एवं चिन्त्यमित्यर्थः। एकक्रियेति। वस्त्वन्तरप्रतिपत्तौ सत्यां वस्तुप्रतिपत्तिविषयत्वमेकत्वं न भवतीति वस्त्वन्तरप्रतिपत्तिविधुरेत्युक्तम्। घटे रूपादिप्रतिपत्तौ सत्यामपि एकत्वसत्त्वात् समप्रधानतया समुच्चीयमानेति वस्त्वन्तरविशेषणमुपात्तम्। अयमेकोऽयमेक इत्यादौ समप्रधानतया समुच्चीयमानवस्त्वन्तरप्रतिपत्तौ सत्यामप्येकत्वव्यवहारात् एकक्रियान्वयेनेत्युक्तम्। एकस्यां क्रियायां

---

तावतेति। पृथिवीत्वलक्षणैकावस्थासंबन्धमात्रेणेत्यर्थः। तृणोपलाद्यंशानामिति। तृणानामुपलानाञ्च परस्परमैक्यं वा अथ महापृथिव्या ऐक्यं वा नास्तीत्यर्थः। एवं प्रकृत्यादावपीति। प्रकृत्यादावपि विजातीयावस्थाप्रहाणेन सजातीयावस्थापत्तिमात्रमेव; न त्वेकत्वमित्यर्थः। चिन्त्यमित्यादि। निरवयव-परमाण्वादिगततयाऽवगतमेकत्वमप्येवं चिन्त्यमित्यन्वयार्थः। तथापीत्यादि। एकक्रियान्वयेनेति। एकविधेयान्वयेनेत्यर्थः। समप्रधानतया तुल्यमुख्यविशेष्यतया। समुच्चीयमानेति। एकेन ज्ञानेन विषयीक्रियमाणेत्यर्थः। वस्त्वन्तरप्रतीतिविधुरेति। वस्त्वन्तरविषयिताशून्येत्यर्थः। वस्तुमात्रप्रतिपत्ति-विषयत्वमेकत्वमिति। एकक्रियेत्यादिविधुरान्तेन व्याख्याता या वस्तुमात्रप्रतिपत्तिः, तद्विषयत्वमेवैकत्व-

---

महापृथिव्येति। महापृथिव्या सह तृणादेरैक्यमपि नेत्यर्थः। तर्हि तदेकत्वं न संख्यारूपं चेत्, किंतर्हीति पृच्छति किं तर्हीति। विजातीयावस्था तृणत्वादिः। सजातीयावस्था पृथिवीत्वम्। तद्वदिह स्थूलतत्तदवस्थाप्रहाणेन सूक्ष्मावस्थापत्तिरेकत्वम्। एवं प्रकृत्यादाविति। प्रकृतिकार्येषु महदादिषु सर्वत्रैकत्वमवयवसमुदायगतम्, कार्यस्य कारणेनैक्यञ्च पूर्वावस्थापत्तिरूपमिति न तत्र मुख्यमेकत्वमिति स्थिते निरवयवगतमेकत्वमेव चिन्त्यमवशिष्यते। इदमेव च तत्त्वमुक्ताकलापे निष्कृष्टम्, (5. 4) "तेनासंघातरूपे क्वचन निरुपधिः स्यादसावेकसंख्या; स्वाधारैकायुरेषा" इति। पृथिवीपरमाण्वादीनामस्मन्मते नित्यत्वाभावात् तत्रैकत्वमनित्यम्, प्रकृतौ आत्मनि च नित्यमिति तद्भावः। प्रकृतग्रन्थे, 'प्रकृत्यादावपीति' इति इतिशब्दः न 'चिन्त्यते' इत्यारब्धचिन्तासमाप्तिपरः; असमाप्तेः। अत उत्तरान्वयिहेतुपरः। अतः चिन्त्यमिति न वाक्यान्तरारम्भः। अस्वरसत्वाच्च। 'एवं चिन्त्यम्' इत्यन्वयेऽपि क्लेशः। पूर्वमेकत्वानां संख्यारूपत्वाभाव इष्टः अत्र संख्यारूपत्वमिष्टमिति वैषम्यञ्च। अत ऐक्यं तु नैवमिति वक्तव्ये ऐक्यमप्येवमिति न स्वरसम्। एवमित्युक्त्वा तथाऽपीत्यारम्भोऽपि न घटते। अतः स्थितवाक्यस्यैवादरणे तथापीत्यन्तमेकं वाक्यम्। तदर्थस्तु— कार्यमेकत्वमित्यारभ्य प्रकृत्यादावपीत्यन्तोक्तेन हेतुना सावयवेष्वेकत्वाभावे सिद्धे, यत् चिन्त्यम् = पृथक्संख्यात्वेन चिन्तनीयतया तत्त्वमुक्ताकलापोक्तरीत्या सिद्धं निरवयवगतमेकत्वम्, तदपि तथाऽपि = संख्याव्यतिरिक्तगौणैकत्वरूपत्वाभावेऽपि एवं = एकक्रियेत्यादिवक्ष्यमाणरीत्या बुद्धि-

एतेन अयमेकः, अयमप्येकः इति व्यवहारोऽपि निर्व्यूढः; समुच्चये सत्यपि एकक्रियान्वयित्वसम-

समप्रधानतया समुच्चीयमानवस्त्वन्तरप्रतियोगिकाभावकालीनवस्तुप्रतिपत्तिविषयत्वमेकत्वमित्यर्थः. समुच्चये सत्यपीति । अपिशब्दस्य समुच्चयार्थत्वादिति भावः । अभावादिति एकत्वसमुच्चयान्वये द्वयोरपि समप्राधान्यसम्भवेऽपि एकक्रियान्वये समप्राधान्याभावादिति भाव. । न च अयमेकोऽन्यश्च कश्चित्तिष्ठतीत्येकत्वं न स्यात्; तिष्ठतिक्रियान्वयसत्त्वादिति वाच्यम्; तत्र प्रतियोग्यर्थयम्, अयश्च तिष्ठतीति

मित्यर्थः । अनेन च स्वप्रतियोगिमुख्यविशेष्यकत्व-स्वाश्रयमुख्यविशेष्यकत्वोभयसंबन्धेन भेदविशिष्टान्यज्ञानमुख्यविशेष्यत्वमेवैकत्वमित्युक्तं भवति । एकमात्रमुख्यविशेष्यकस्य ज्ञानस्योक्तोभयसंबन्धेन भेदाविशिष्टान्यत्वसंभवात्या तन्मुख्यविशेष्यत्वरूपमेकत्वं तत्रोपपद्यते । अयं घट इत्यादिज्ञानस्यापि घटत्वादिविषयकतया तदसङ्ग्रहस्यादित्युभयत्र मुख्यविशेष्यत्वोपादानम् । तत्रापि संस्थानविशेषरूपघटत्वादेः सौसादृश्यरूपवैलक्षण्यं प्रति विशेष्यतया भानान्मुख्येति । प्रकारताभिन्नत्वं प्रकारत्वानवच्छिन्नत्वं वा मुख्यत्वम् । यद्यपि स्वप्रतियोगिवृत्तित्वस्वाश्रयवृत्तित्वोभयसंबन्धेन भेदविशिष्टान्यधर्मवत्त्वरूपमेकमात्रवृत्तिधर्मवत्त्वमेवैकत्वमिति शक्यं वक्तुम्—तथापि द्वित्वादिसंख्यानां ज्ञानविशेषविषयतारूपत्वात् एकत्वस्यापि तद्रूपत्वमेवोचितमित्यभिप्रायेण तथाऽभिधानम् । ननु स्वेतरमुख्यविशेष्यकज्ञानाविषयत्वमेवैकत्वमिति कुतो नोक्तमित्याशङ्कयाह एतेनेति । उक्तज्ञानविषयत्वस्यैवैकत्वरूपतयाऽभिधानेनेत्यर्थः । निर्व्यूढ इति । अन्यथा स्वेतरमुख्यविशेष्यकज्ञानविषयताया एव घटादौ सत्त्वेन प्रत्येकमप्येकत्वसंभवेन तादृशव्यवहारानुपपत्तिरेव स्यादिति भावः । नन्वेकैकमात्रमुख्यविशेष्यकज्ञानमुख्यविशेष्यत्वमपि तत्र दुरुपपादमेव । अयमेकः अयमप्येक इति ज्ञानस्य वस्तुद्वयमुख्यविशेष्यकत्वादित्यत आह समुच्चये सत्यपीति । ज्ञानस्य वस्तुद्वयमुख्यविशेष्यकत्वे सत्यपीत्यर्थः । एकक्रियान्वयित्वसमप्राधान्ययोरभावादिति । अयं घट इत्येकमात्रमुख्यविशेष्यकज्ञानस्य वस्तुद्वयैकप्रकारकत्वस्य तदधीनवस्तुद्वयमुख्यविशेष्यकत्वस्य चाभावादित्यर्थः । उक्तज्ञाने घटत्वस्य एकस्मिन्नेव प्रकारतया भानेन

विषयत्वमेव भवितुमर्हति । अतो न किञ्चिदेकत्वं पृथक्संख्येति । वस्तुतः, 'एवं प्रकृत्यादावपीति चिन्त्यं निरवयवगतमेकत्वम्' इति वाक्यसमाप्तिः। अथ, 'यद्यप्येवम्, तथापि' इति वाक्यारम्भः। तत्र यदीति पदं भ्रष्टमित्यालोच्यते। प्रथमव्याख्याग्रन्थे, एवं चिन्त्यमिति प्रतीकधारणात् तादृश पाठान्तरमालोच्यते । तत्पक्षे तथापीति पदं न स्यादिति भाति।

एकक्रियेत्यादि। घटोऽस्तीत्यादौ घटस्यैकत्वं नाम स्वसमप्रधानतया स्वान्वयिक्रियान्वितत्या स्वभिन्नव्यक्त्यप्रतिपादकघटपदबोध्यत्वम्। घटपदजन्यैतद्घटप्रतिपत्तिर्हि घटान्तरप्रतिपत्तिविधुरा। क्रियेत्युपलक्षणम्। घटः पटश्च स्तः इत्यत्रापि पटस्यापि क्रियान्वयेऽपि तत्प्रतिपादकत्वस्य घटपदेऽभावात् घटे एकत्वमक्षतम्। घटौ स्तः इत्यत्र त्विदं न भवति। ननु अयमेकोऽयमेक इति द्वित्वादिरूपाया अपेक्षाबुद्धेः समप्रधानवस्तुद्वयादिविषयकत्वात् स्वभिन्नवस्त्वविषयकज्ञानविषयत्वं कथमिति शंकायाम्, तत्र तदभावेऽपि वस्त्वन्तराप्रतिपादकपदबोध्यत्वरूपमेकत्वं प्रत्येकमक्षतमित्याह एतेनेति। समप्राधान्ययोरिति। धर्मधर्मिग्रहणे समप्राधान्यं नास्ति। धर्मिद्वयग्रहणे एकक्रियान्वयित्वं नास्ति। तथाच एकक्रियायां तुल्यतयान्वयित्वं नास्तीति भावः। ननु

प्राधान्ययोरभावात्। न चात्रोपलम्भादिविरोधः; येन गौरवमपि सह्येत। तदेवं गुणादिग[illegible] तत्त्वान्तरमन्तरेणापि संख्या प्रतीयमाना समानाकारेण निर्व्यूढा। उपलम्भसाम्येऽपि वैरूप्यकल्पमनभवतामधिकम्। असंख्यातव्यवहारोऽपि एवंविधसंख्याप्रतिक्षेपकः; अन्यथा भवतोऽपि विरोधात्। ईश्वरादिबुद्ध्या सर्वसमुच्चयसद्भावेऽपि शतसहस्रायुतादिवत् अवच्छेदाभावादेव

---

क्रियाभेदस्यैव प्रतीतेरेकक्रियान्वयित्वाभावादिति द्रष्टव्यम्। नचात्रेति। रूपादेर्धर्मितो भेदाकल्पने प्रत्यक्षविरोधवदेकत्वस्य धर्मि(धर्म?)भेदाकल्पने बाधकाभावादिति भावः। गौरवमपीति। ततश्चासत्त्वात् गौरवादेवाधिकमेकत्वं त्याज्यमिति भावः। गुणादावपीति। गुणादावेकत्वादिसङ्ख्यायास्त्वया अनभ्युपगतत्वेन चतुर्विंशतिर्गुणाः, षड्रसाः, पञ्च कर्माणीत्यादौ स्वरूपविशेषस्यैव एकत्वादिरूपत्वेन आश्रयणीयत्वेन द्रव्येष्वपि तथैवोपपत्तेरिति भावः। ननु बुद्धिविशेषविषयत्वमेव सङ्ख्या चेत्, सर्वस्यापीश्वरबुद्धिविषयत्वात् असङ्ख्यातत्वं कस्यापि न स्यादित्याशङ्क्याह असङ्ख्यातव्यवहारोऽपीति। एवंविधेति। द्वित्वादिपरार्धपर्यन्तसंख्याविशेषप्रतिक्षेपक एव; न तु बुद्धिविशेषविषयत्वमात्रव्युदासक इत्यर्थः। अन्यथेति। त्वन्मतेऽपि त्वदभिमतसङ्ख्याहेतुभूतेश्वरीयापेक्षाबुद्धिसत्त्वेन सङ्ख्योत्पत्तेरवश्यम्भावितया असंख्यातत्वं न स्यादित्यर्थः। सर्वसमुच्चयसद्भावेऽपीति। ईश्वरीयापेक्षाबुद्धिविषय-

---

त्वेऽपि [illegible]मुख्यविशेष्यकत्वविरहादित्युक्तं भवति। तथाच उक्तैकमात्रमुख्यविशेष्यकज्ञानमादायैकत्वोपपत्त्या नानुपपत्तिगन्ध इति भावः। न चात्रोपलम्भादिविरोध इति। रूपादेरतिरिक्तगुणस्यानुपगमे प्रत्यक्षादिविरोधवत् एकत्वस्यातिरिक्तस्यानुपगमे प्रत्यक्षादिविरोधो नेत्यर्थः। उपलम्भादीति आदिना व्यवहारसङ्ग्रहः। गुणादावपीति। गुणादावतिरिक्तगुणरूपसंख्याया अभावेऽप्येकं रूपं त्रीणि रूपाणीत्यादिप्रतीतिव्यवहारयोरुक्तबुद्धिविशेषविषयत्वमादायैव भवद्भिरप्युपपादनेन द्रव्येऽपि तदेव युक्तम्, संख्याप्रतीत्यैकरूप्योपपत्तेरित्यर्थः। ननु बुद्धिविशेषविषयत्वस्य मुख्यसंख्यारूपत्वे क्वचिदप्यसंख्यातत्वव्यवहारो नोपपद्यते; सर्वत्र बुद्धिविशेषविषयत्वरूपसंख्यायाः संभवात्। अस्मन्मते त्वतिरिक्तसंख्याया एव मुख्यसंख्यारूपतया तच्छून्येषु गुणादिष्वसंख्यातत्वव्यवहार उपपद्यतेत्याशङ्क्याह असंख्यातेति। एवंविधसंख्याप्रतिक्षेपक इति। एकत्वद्वित्वशतसहस्रायुतादिसंख्याविशेषनिषेधक इत्यर्थः। अन्यथेति। अतिरिक्त-मुख्यत्वाभिमतसंख्यासामान्यनिषेधपरत्व इत्यर्थः। विरोधादिति। इदं रूपमसंख्यातमिति व्यवहारस्य द्रव्याण्यसंख्यातानीति व्यवहारानुपपत्तेश्च प्रसङ्गादित्यर्थः। नन्वसंख्यातशब्दस्य संख्या-

---

तर्हि द्वित्वादिकमिव एकत्वमपि पुरुषभेदेन भिन्नं स्यात्; बुद्धिविषयताविशेषत्वादित्यत्रेष्टापत्तिरित्याशयेनाऽऽह न चेति। अधिकसंख्याकल्पने गौरवम्। अस्योभयसंमतत्वादिति। गुणादिगतैकत्वैकरूप्यायापीदं ग्राह्यमित्याह तदिति। ईश्वरादीति। ईश्वरेण सर्वस्यापि अयमेकोऽयमेक इति ग्रहणसंभवेऽपि शतत्वादिपरार्धत्वान्तसंख्या न सिद्ध्यति। शतत्वादिसंख्यानस्य एकेन देशेन कालेन वा स्थूलत्वादिरूपैकोपाधिना वोपहितेष्वेव परिमितेष्वेव भावात्। अतस्तत्रैका संख्या नास्ति; केवलापेक्षा बुद्धिविषयत्वमेव। ईश्वर एव यदा शतं सहस्रमिति गृह्णाति, तदा तस्य तत्तदनुगुण—अयमेक इत्यादपरिमितग्राहिबुद्ध्यवस्था अपि तज्ज्ञाने सन्तीति ध्येयम्।

1 धर्मभेदेति। बुद्धिविषयत्वातिरिक्ताद्रव्याकल्पन इत्यर्थः।

असंख्यातत्वमानन्त्य[रूप?]म्। अनन्तेष्वपि न्यूनाधिकभावो विद्यत एव ; यथाऽतीतकल्प-दिवसादि-समुदायादीनाम्, यथा च द्रव्यत्वपार्थिवत्वघटत्वादिव्यक्तीनाम्। यत्तु, "एकत्वमेकसंख्यावच्छेदः" इति भाष्यम्, तदपि न संख्यायास्तत्त्वान्तरत्वाभिसन्धिपूर्वकम् ; निर्विशेषवस्तुवादिनं प्रति विशेषप्रसङ्गमात्रपरत्वात्। अस्मदुक्तसंख्याया अपि विशेषत्वाविशेषात्। यत्तु भगवद्यामुनमुनिभि-रात्मसिद्धौ द्वित्वादेरपि यावदाश्रयभावित्वमुक्तम्, तदपि वैशेषिकप्रक्रियाबीभत्सामात्रादिति

---

त्वेऽपीत्यर्थः। **अवच्छेदाभावादिति**। द्वित्वादिपरार्धपर्यन्तबुद्धिविशेषविषयत्वलक्षणसङ्ख्याविशेषाभावादित्यर्थः। **असंख्यातशब्दस्य** सङ्ख्यासामान्यप्रतिक्षेपपरत्वे **अनन्तेष्वेव न्यूनाधिकभावो न स्यात्**, अतो विशेषप्रतिक्षेपपरत्वमेवेत्यभिप्रयन् (?) आह **अनन्तेष्वपीति**। **भाष्यमिति**। प्रथमसूत्रे इशेदंश्य धर्मराहित्यनिराकरणप्रकरणे इति शेष। **अस्मदुक्तसंख्याया अपीति**। बुद्धिविशेषविषयत्वलक्षणाया इत्यर्थः। **बीभत्सामात्रादिति**। अपेक्षाबुद्धिजन्यं तद्विनाशविनाश्यमिति वदन्तं नैयायिकं भीषयितु-

---

विशेषनिषेधपरत्वेऽप्यनुपपत्तितादवस्थ्यम् ; ईश्वरीयापेक्षाबुद्धिविषयत्वरूपशतत्वसहस्रत्वादेः सर्वत्र सत्त्वादित्यत आह **ईश्वरादीति**। **आदिना** नित्यसूर्यादिपरिग्रहः। **सर्वसमुच्चयेति**। सर्वविषयीकरणेत्यर्थः। **अयुतादिवदिति**। अयुतादेरिवेत्यर्थः। **अवच्छेदाभावादिति**। एकस्याःसंख्याव्यक्तेः सर्वत्र सत्त्वादित्यर्थः। **असंख्यातत्वमानन्त्यमिति**। असंख्यातत्वरूपमानन्त्यमित्यर्थः। अयं भावः— द्रव्याण्य संख्यातानीत्यादिना स्ववृत्त्येकमात्रवृत्तिधर्मावच्छिन्नव्याप्यद्रव्यत्वादिमत्त्वसंबन्धावच्छिन्नसंख्यात्वावच्छिन्नप्रतियोगिताकाभावाश्रयत्वं द्रव्यादिषु बोध्यते। ईदृशपरम्परायाः संबन्धत्वे अभावप्रतियोगितावच्छेदकत्वे वा विवादे तु तादृशद्रव्यत्वादिविशिष्टाश्रयतासंबन्धावच्छिन्नत्वं बोध्यम्। एकस्याःसंख्याव्यक्तेर्धाटस्तु द्रव्येषु वृत्तौ हि नोक्तसंबन्धेन तत्र संख्याभावसंभवः। [1]परन्तु, "तेषां मोहः पापीयान् नामूढस्येतरोत्पत्तेः", "नानुपमृद्य प्रादुर्भावात्" इत्यादौ प्रकृत्यर्थविभक्त्यर्थयोरन्तराल इवात्र धात्वर्थ-निष्ठार्थयोरन्तरालेऽभावभानम्। अत एवात्यन्ताभावबोधनमप्युपपद्यते। उक्तसंबन्धेन संख्यावच्छेदबोधकत्वं तु न संभवत्येव ; तादृशसंबन्धेन संख्याया एवाप्रसिद्धेः। अनन्तानीत्यत्र तु इयत्ताशचिनान्तशब्देन संख्याया एव बोधनादुक्तसंबन्धावच्छिन्नप्रतियोगिताकतदभाववत्त्वं सुगममिति। ननु संख्यातत्वे कथं न्यूनाधिकभावसंभवः ; संख्याविशेषवत्त्वेव तद्दर्शनादित्यत आह **अनन्तेष्वपीति**। **न्यूनाधिकभावो विद्यत एवेति**। दर्शनानुरोधेन न्यूनाधिकभावे न संख्या प्रयोजिकेति भावः।

---

व्याप्यद्रव्यत्वेति। नवैव द्रव्याणीत्यादौ अधिकसंख्याव्यवच्छेदाय नवत्वरूपविधेयव्याप्यतायाः उद्देश्यतावच्छेदकद्रव्यत्वादौ स्वीकारमनुसृत्येदम्। दश घटाः, सहस्रं माषा इत्यादौ इदं न भवति। तथा सति दशत्वादेर्घटाघटोभयगतत्वापत्तेः। अतः सर्वत्र बुद्धिविषयताविशेषरूपद्वित्वादेः तादृशविषयतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगित्वसंबन्धेन धर्मिष्वन्वयो विवक्षितः।

[1] ननु असंख्यातपदात् संख्यातभिन्नमित्येवार्थः प्रतीयेत ; न तु संख्याभाववदिति। धात्वर्थक्तप्रत्यययोर्मध्ये नञर्थस्याभावस्य भानायोगात्। परिपूर्णं हि पदं पदान्तरेणान्वेतीत्याशंकायां व्युत्पत्तिवादग्रन्थोक्तं न्यायसूत्रपदार्थनिर्वाहप्रकारं प्रदर्श्य स्वीकारयति परन्त्विति। सूत्रे 'न इतरोत्पत्तेः' इत्यस्य इतरोत्पत्त्यभावादिति, 'न प्रादुर्भावात्' इत्यस्य प्रादुर्भावाभावादिति च व्युत्पत्तिवादेऽर्थ उक्तः।

मन्यामहे । उक्तं हि भगवन्नाथमुनिभिः प्रमेयपादसप्तमाधिकरणे, "संयोगान्तर्भूता संख्या" इति ; "समस्ततदात्मा संख्या" इति च । अस्यार्थ उच्यते—बुद्धिविशेषसम्बन्धो हि संख्यात्वेनोपपादितः ; स च संयोग एव (एवेति?)। यद्वा सङ्घातैकत्वाद्यभिप्रायं तदिदं मन्तव्यम्। वरदविष्णुमिश्रादिभिस्तु आत्मसिद्धिवचनानुसारेण अतिरिक्तसंख्याऽभ्युपगता। यथोक्तम्—"प्रत्यक्षाश्रयवर्तिसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वसादृश्यानि प्रत्यक्षाणि" इति। गुणेषु च संख्यादिसद्भाव उक्तः—"गुणाश्रितसंख्यादीनां संयुक्ताश्रितत्वेन[1] (संयुक्ताश्रिताश्रितत्वेन) ग्रहणम्" इति। एतदपि परमताभिप्रायेणेति मन्तव्यम् । यत्तु भट्टपराशरपादैः प्राकट्यनिराकरणादिप्रसङ्गेषु-"संख्या तु द्वितीयक्षण एव ज्ञायते ; सा संख्या समवायिनोऽस्तीत्यविरोधः" इत्यादिषु प्रदेशेषु संख्याभ्युपगमवद् व्यवहरणम् , तत् किंस्वित् स्वाभ्युपगमेन अथवा पराभ्युपगमेनेति न संविद्मः ; प्रमेयनिरूपणविच्छेदात् ॥

---

मित्यर्थः । प्रदेशान्तरगतं वाक्यमुदाहरति **समस्ततदात्मा संख्येति चेति** । **तदात्मा** तत्स्वरूपं सर्वेषामपि वस्तूनां तत्स्वरूपमेव सङ्ख्येत्यर्थः । ननु **"समस्ततदात्मा संख्या"** इति वाक्यस्य स्वरूपसङ्ख्यात्वपक्षे साक्षित्वस्य स्पष्टत्वेऽपि **संयोगान्तर्भूता संख्या** इति वाक्यस्योक्तार्थसाक्षित्वं न स्पष्टम् ; प्रत्युत विरुद्धमेवेत्याशङ्कयाह **अस्यार्थ उच्यते इति** । **बुद्धिविशेषेति** । अस्मन्मते ज्ञानस्य द्रव्यत्वेन तद्विषयत्वस्य संयोगरूपत्वात् बुद्धिविशेषविषयत्वमेव सङ्ख्येत्युक्तं भवतीति भावः । **सङ्घातैकत्वाद्यभिप्रायमिति**। अवयवसंयोगाश्रयेषु पटादिलक्षणसङ्घातद्रव्येषु संयोगः सङ्ख्येत्यभिप्रेत्य, **"संयोगान्तर्भूता संख्या"** इत्युक्तमिति भावः । **प्रत्यक्षाश्रयवर्तीति** । **प्रत्यक्षो** योऽयमाश्रयः तद्वर्तीत्यर्थं । गुणेषु सङ्ख्यादिसद्भावोक्तिमेव दर्शयति **गुणाश्रितेति** । **संयुक्ताश्रितेति** । संयुक्ताश्रिताश्रितत्वेनेत्यर्थः । **संयुक्ताश्रिताश्रितत्वेनेति** पाठस्तु सुगम एव । **द्वितीयक्षण एवेति**। ततश्च द्वितीयक्षणोत्पन्नेन द्वित्वविषयकज्ञानेन तृतीयक्षण एव प्राकट्यस्योत्पादनीयतया तत्काले द्वित्वस्य नष्टत्वेन किमाश्रित्य प्राकट्यमुत्पद्येतेति भावः । प्रदेशान्तरे प्रसङ्गान्तरगतं वाक्यमुदाहरति **सा संख्या समवायिन इति** । तत् **किं स्वाभ्युपगमेनोक्तम्** उत **पराभ्युपगमेनेत्यमुमर्थं न संविद्म** इत्यर्थः । ततश्च सकर्मकत्वात्, "समो गम्यृच्छिभ्याम् ।" इत्यादिना [2]आत्मनेपदाभावः । **प्रमेयेति** । प्रमाणनिरूप-

---

**बीभत्सामात्रादिति** जुगुप्सामात्रादित्यर्थं । **संघातैकत्वाद्यभिप्रायमिति** । अवयवसंयोगविशेषाश्रयेषु पटादिलक्षणसंघातद्रव्येष्वेकत्वप्रतीतिनियामको विलक्षणसंयोग एव संख्येत्यभिप्रेत्य, "संयोगान्तर्भूता संख्या" इत्युक्तमिति भावः । **प्रत्यक्षाश्रयवर्तीति** । प्रत्यक्षविषयीभूतो य आश्रयः तद्वर्तीत्यर्थः । **संयुक्ताश्रितत्वेनेति** । परम्परया संयुक्तसंबन्धित्वेनेत्यर्थः। संयुक्ताश्रिताश्रितत्वेनेति यावत् । **संयुक्ताश्रिताश्रितत्वेनेति** पाठ एव बहुषु कोशेषु दृश्यते । **द्वितीयक्षण एव ज्ञायत इति** । द्वितीयक्षणोत्पन्नेन द्वित्वविषयकज्ञानेन तृतीयक्षण एव प्राकट्यस्योत्पादनीयतया तत्काले द्वित्वनाशात् किमाश्रित्य प्राकट्यमुत्पद्येतेति भावः ।

---

1 संयुक्ताश्रितत्वेनेति पाठे संख्याश्रयस्य गुणस्य संयुक्ताश्रितत्वेनेत्यर्थः ।

2 आदिना विदिप्रच्छिस्वरतीनामुपसंख्यानमिति वार्तिकग्रहणम् ।

परिमाणप्रत्ययविषयः परिमाणम् । तच्चतुर्धा ; अणुमहद्दीर्घह्रस्वभेदात् । चत्वार्यपि परिमाणानि प्रतियोगिनिरूपितवेषण्येव ; इदमितोऽणु, इदमितो महत्, इदमितो ह्रस्वं दीर्घमित्येव प्रतीतेः । अत्र च विभुद्रव्येषु परिमाणं नास्तीत्येके ; अपरिमितप्रत्ययात् । उक्तं हि श्रीवेदार्थसंग्रहव्याख्याने ऽनन्तपदव्याख्यानदशायां श्रीराममिश्रैः, "वस्तुपरिच्छेदो वस्तुनः परिमाणम्, देशपरिच्छेदस्तु तत्कार्यः" इत्युक्त्वा, "अपरिच्छेदस्तु न गुणः" इत्यादि । उक्तञ्च भगवद्यामुनमुनिभिः आगमप्रामाण्ये पूर्वपक्षे—"यदपि वियति परिमाणमिह निदर्शितम्—तदपि विमर्शनीयमिव। परिमाणं हि नाम देशावच्छेदः=इयत्ता। परितो भाववेष्टनमिति यावत्। न च नभसि तदस्तीति कथमिव तदिह निदर्शनतया निर्दिश्यते" इति। अन्ये तु—इत इदमधिकमित्येवंरूपस्य परिमाणस्य तत्राप्युपपत्तेरस्त्येव तत्रापि परिमाणम् । अपरिमितव्यवहारस्तु सङ्कुचितपरिमाणप्रतिक्षेपपर इत्याहुः। इदञ्च परिमाणाख्यं गुणान्तरं विवरणकारादिभिः स्वीकृतम् । जन्माद्यधिकरणे विवरणेऽपि ह्युक्तम्—"वस्तुपरिच्छेदो वस्तुपरिमाणम्, देशपरिच्छेदस्तु तद्धेतुकः" इत्यादि।

अथान्यन्मतम्—परिमाणमेव तत्त्वान्तरं नास्ति । तथाहि—देशव्याप्तिविशेष एव तत्तत्प्रतिसम्बन्धिनिरूपितवेषेण तत्तत्परिमाणम् । तत्त्वान्तरवादिनाऽपि चैतत् परिमाणाविनाभूतमभ्युपगतम् । ततस्तदधिकस्वीकारे गौरवं भवेत् ।

---

णमात्र एव तद्ग्रन्थस्य [२]न ग्रन्थत्वादिति भावः । इति संख्या ॥

**प्रतियोगिनिरूपितेति** । सप्रतियोगिकतयैव भासन्ते इत्यर्थः । **अपरिच्छेदस्तु न गुण इति** । ततश्च परममहत्त्वरूपपरिमाणगुणो विभुषु नास्तीति सिध्यति । यदि च विभुषु **वस्तुपरिमाणशब्दित**वस्तुपरिच्छेदः स्यात्, **तत्कार्यभूतदेशपरिच्छेदो**ऽपि स्यात्। तदभावादेव तत्कारणं **वस्तुपरिच्छेदशब्दितं** वस्तुपरिमाणमपि नास्तीत्येवावसीयते इति भावः । **परितो भाववेष्टनमिति** । वस्त्वन्तरेण **परितो** वेष्टितत्वमित्यर्थः । **परितो** मानं हि **परिमाण**मिति भावः । स्वमतमाह **अथान्यन्मतमिति** । **तत्तत्प्रतिसम्बन्धीति** । इदमस्मात् महत्, इदमस्मात् दीर्घमिति **प्रतियोगिनिरूपितवेषेण** स एव देशव्याप्तिविशेषः परिमाणमित्युच्यते। इदमस्मात् महदित्यस्य एतदपेक्षया इदमधिकदेशव्याप्तमित्यर्थप्रतीतेरिति भावः । **तत्त्वान्तरवादिनाऽपीति**। अतिरिक्तवादिनाऽपि यत्र यदपेक्षया महत्त्वं तत्र ततोऽधिकदेशत्वमस्तीति तत् व्यापकतयाऽभ्युपेत्यम् । अतोऽतिरिक्तकल्पनं गौरवपराहतमिति भावः ।

---

**अपरिच्छेदस्तु न गुण इति**। तथाच परममहत्त्वरूपगुणो नास्तीति सिद्ध्यति। तादृशगुणसत्त्वे तस्यापि वस्तुपरिमाणरूपतया वस्तुपरिच्छेदात्मकत्वेनापरिच्छेदासंभवात् ; वस्तुपरिच्छेदकार्यदेशपरिच्छेदप्रसङ्गाच्चेति । **परितो भाववेष्टनमिति**। वस्त्वन्तरेण परितोवेष्टितत्वमित्यर्थः । **देशव्याप्तिविशेष इति**। देशसंयोगविशेष इत्यर्थः । **तत्तत्प्रतिसंबन्धिनिरूपितवेषेण**=तत्तदवधिकाधिक्यन्यूनत्वविशिष्टतया । **तत्तत्परिमाणमिति** । इदमस्मान्महदित्यत्र इदमेतदपेक्षयाऽधिकदेशसंयुक्तमिति, इदमस्मादणित्यत्र इदमेतदपेक्षया न्यूनदेशसंयुक्तमिति च प्रतीतेरिति भावः ।

---

विच्छिन्नत्वादिति । तथात्र पूर्णे कृतस्य ग्रन्थस्य पश्चात्प्रणष्टत्वमिति न । ग्रन्थ एवोपरि न कृत इति भावः । तच्च तेषामभावाद्वा कारणान्तराद्वा ।

ननु न तावत् देशसंयोगमात्रं परिमाणम्; अतिप्रसङ्गात्। ततोऽवच्छिन्नदेशविशेष इति वाच्यम्। न चावच्छेदो येन केनापि; किंतु परिमाणविशेषविशिष्टेनेति (परिमाणविशेषेणेति?) वाच्यम्। अतस्तदुपजीविना देशावच्छेदेन तदपह्नवो न युज्यते। देशपरिमाणञ्च देशान्तराधीनमित्यनवस्था च स्यात्। तस्मात् स्थितं तत्त्वान्तरं परिमाणमिति—

तन्न; एवं हि अवच्छेदनिरूपणम्—यत्संयुक्तं देशं देशान्तरञ्च यत् युगपदाक्रमितुं शक्तम्, तत् ततोऽधिकपरिमाणम्; यत्संयुक्तदेशमखिलमेकदैव यदाक्रमितुं न शक्तम्, तत् ततो न्यून-

---

**अतिप्रसङ्गादिति।** देशसंयोगमात्रस्य अणुमहदादिसाधारणत्वादिति भावः। **किंतु परिमाणविशेषेति।** महत्त्वपरिमाणविशिष्टावच्छिन्नदेशसंयोगो महत्परिमाणम्, अणुपरिमाणविशिष्टावच्छिन्नदेशसंयोगोऽणुपरिमाणम्। अयं भावः—देशो यावदवच्छेदेन महत्परिमाणविशिष्टसंयोगः, तावदवच्छिन्नसंयोगवत् महदिति। **न युज्यते इति।** उपजीव्यविरोधादिति भावः। **देशपरिमाणञ्चेति। परिमाणविशेषविशिष्टावच्छिन्नदेशसंयोग** इत्यत्र अनुप्रविष्टदेशावच्छेदकगतपरिमाणमित्यर्थः। ननु पारिमाण्ड

---

**अतिप्रसङ्गादिति।** अणुत्वव्यवहारस्थले महत्त्वव्यवहारस्य, महत्त्वव्यवहारस्थलेऽणुत्वव्यवहारस्य च प्रसङ्गादित्यर्थः। देशसंयोगस्य सर्वत्राविशिष्टत्वादिति भावः। इदमुपलक्षणम्—इदमस्मान्महत्, इदमस्मादण्वित्यादौ पञ्चम्यर्थावधित्वानन्वयप्रसङ्ग इत्यपि बोद्धव्यम्। **तत इति।** देशसंयोगमात्रस्य परिमाणत्वासंभवादित्यर्थः। **अवच्छिन्नदेशविशेष इति वाच्यमिति।** किञ्चिद्विशेषविशिष्टदेशविशेषसंयोग एव परिमाणमिति वक्तव्यमित्यर्थः। अवच्छेदः=वैशिष्ट्यम्। **परिमाणविशेषविशिष्टेनेति वाच्यमिति।** महत्त्वविशिष्टावच्छिन्नदेशसंयोगो महत्त्वम्, अणुत्वविशिष्टावच्छिन्नदेशसंयोगोऽणुत्वमित्यादिरीत्या वक्तव्यमित्यर्थः। **परिमाणविशेषेणेति** युक्तः पाठः। महत्त्वविशिष्टदेशसंयोगो महत्त्वमित्यर्थः। **तदुपजीविना** परिमाणविशेषाधीनेन। **देशावच्छेदेनेति।** देशनिष्ठविशेषवैशिष्ट्येनेत्यर्थः। **तदपह्नव इति।** परिमाणापह्नव इत्यर्थः। **न युज्यत इति।** अतिरिक्तपरिमाणास्वीकारे देशे विशेषवैशिष्ट्यस्यैव वक्तुमशक्यत्वादिति भावः। नन्वतिरिक्तपरिमाणास्वीकारेऽपि देशान्तरसंयोगविशेषस्यैव देशे परिमाणरूपत्वं संभवति। ततश्च तादृशपरिमाणविशेषविशिष्टदेशसंयोग एव घटादौ परिमाणविशेष इति नोक्तदोष इत्यत आह **देशपरिमाणञ्चेति। देशान्तराधीनमिति।** देशान्तरपरिमाणाधीनमित्यर्थः। **अनवस्था स्यादिति।** न हि देशान्तरसंयोगमात्रं महत्त्वम्; अतिप्रसङ्गस्योक्तत्वात्। अतो महत्त्वविशिष्टदेशान्तरसंयोग एव देशे महत्त्वमिति वक्तव्यम्। ततश्च देशान्तरे महत्त्वमपि तादृशदेशान्तरसंयोगरूपमित्यनवस्था स्यादित्यर्थः। **अवच्छेदनिरूपणमिति।** परिमाणत्वेनाभ्युपगतविशेषनिरूपणमित्यर्थः। संभवतीति शेषः। तथाचातिरिक्तपरिमाणस्य देशान्तरपरिमाणस्य चानुपजीवनान्नोक्तदोषावकाश इति भावः। **यत्संयुक्तमित्यादि।** एककालावच्छेदेन तत्संयुक्तयावद्देशसंयोग-तदसंयुक्तदेशसंयोगोभयवत्ताप्रयोजकशक्तिस्तदपेक्षया महत्त्वमित्यर्थः। घटाद्यपेक्षया अल्पपर्वताद्यपेक्षया च महापर्वतस्य महत्तोपपत्तये तादृशोभयवत्त्वमेव महत्त्वमिति नोक्तम्। अल्पपरिमाणस्यापि क्रमेणाधिकदेशसंयोगसंभवात् **युगपदिति। यत्संयुक्तदेशमखिलमित्यादि।** अनया वाचोभङ्ग्या तद्गतमहत्त्वमेव तदपेक्षया न्यूनपरिमाणत्व-

परिमाणमिति। तथा एकदिगार्जवावच्छेदेन आधिक्यं दैर्घ्यम्; तेनैव न्यूनभावो ह्रस्वत्वम्; बहुदिगवच्छेदेनाऽऽधिक्यं महत्त्वम्; तेनैव न्यूनभावोऽणुत्वम्। न चैतदधिकमणुत्वमस्तीत्यणुनिराकरणादपि सिद्धम्। चतुर्विधमप्येतदेकस्मिन्नपि घटते। यथा स्तम्बविशेष एव स्तम्बान्तरापेक्षया स्थूलाणुत्वदीर्घह्रस्वत्वव्यवहार इति। एवञ्च सति नानावच्छेदके किञ्चित् परिमाणं निर्दिष्टम्—येनोपजीव्यविरोधानवस्थादिदोषः स्यात्। एतेन देशस्यापि न्यूनाधिकत्वे व्याख्याते॥

त्यमेव अणुत्वमस्त्वित्याशङ्क्य [1]अणुनिराकरणादपि उक्तातिरिक्तमणुत्वं नास्तीत्याह न चैतदधिकमिति। नानावच्छेदक इति। परिमाणविशेषविशिष्टदेशसंयोगः परिमाणमित्यनुक्तेरिति भावः। देशस्यापीति।

मित्युक्तं भवति। आधिक्यमिति। उक्तशक्तिविशेषरूपाधिकपरिमाणत्वमित्यर्थः। तेनैव न्यूनभाव इति। उक्तदीर्घत्वावधित्वमित्यर्थः। ननु परमाणुद्व्यणुकयोरेव ह्यणुत्वम्; तत् कथमुक्तस्य घटादिसाधारणस्याणुत्वरूपत्वमित्यत आह न चैतदिति। परमाणुद्व्यणुकयोरङ्गीकारेऽपि तत्र महत्त्वावधित्वापेक्षयाऽणुत्वं नास्त्येवेत्यर्थः। परमाणुद्व्यणुकयोर्निराकरणादपि इदमेवाणुत्वमित्याश्रयणीयम्; अतिरिक्ताणुत्वस्याश्रयाभावादित्याह अणुनिराकरणादपीति। अवच्छेदक इति। संयोगविशेषणीभूतदेश इत्यर्थः। परिमाणविशेषविशिष्टदेशसंयोगः परिमाणमित्यनुक्तेरिति भावः। इदञ्च किन्त्वित्यादिप्राक्तनवाक्ये परिमाणविशेषेणेति पाठाभिप्रायेण। परिमाणविशेषविशिष्टेनेति पाठे तु परिमाणविशेषविशिष्टावच्छिन्नदेशसंयोग एव परिमाणविशेष इति सिद्ध्या अवच्छेदक इत्यस्य संयोगविशेषणीभूतदेशविशेषणे इत्यर्थो बोध्यः। यद्यपि महत्त्वस्योक्तरीत्या शक्तिविशेषरूपत्वे तस्य प्रत्यक्षविषयत्वानुपपत्तिः; शक्तेरतीन्द्रियत्वात्। यदि च प्रत्यक्षविषयीभूतेयं विलक्षणा शक्तिरित्युच्यते, तदा नामान्तरेणातिरिक्तपरिमाणमेव स्वीकृतं स्यात्—तथाऽप्युक्तोभयवत्ताप्रयोजकधर्म एव महत्त्वमित्यङ्गीकारान्न दोषः। स च धर्मोऽधिकसंख्याकदेशसंयुक्तत्वरूप एवेति न प्रत्यक्षत्वानुपपत्तिः, न वाऽतिरिक्तपरिमाणाभ्युपगमप्रसङ्गः। तथाच तदपेक्षया महत्त्वं तत्संयुक्तदेशपर्याप्तसंख्याधिकसंख्यापर्याप्त्यधिकरणदेशसंयुक्तत्वरूपम्—तत्संयुक्तदेशपर्याप्तसंख्याधिकसंख्याविशिष्टत्वपर्यवसितमिति न काचिदनुपपत्तिः। विशिष्टत्वं च—स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसंबन्धेन स्वनिष्ठावच्छेदकता स्वाश्रयदेशवृत्तिभेदप्रतियोगितानिरूपितसंयोगसंबन्धावच्छिन्नावच्छेदकतासंबन्धेन। एवं तदपेक्षयाऽणुत्वं तत्संयुक्तदेशपर्याप्तसंख्यान्यूनसंख्यापर्याप्त्यधिकरणदेशमात्रसंयुक्तत्वरूपम्, तद्व्याप्यसंख्यान्यूनसंख्याव्याप्यत्वपर्यवसितम्। तद्व्याप्यत्वं च तद्वृत्तिभेदप्रतियोगितावच्छेदकत्वम्। अवच्छेदकत्वं च स्वाश्रयदेशवृत्तिभेदप्रतियोगितानिरूपितसंयोगसंबन्धावच्छिन्नावच्छेदकतासंबन्धावच्छिन्नम्। संख्याव्याप्यत्वमप्येवंविधमेव बोद्धव्यम्। एतेनेति। परिमाणस्य देशविशेषसंयोगरूपत्वकथनेनेत्यर्थः। न्यूनाधिकत्वे इति। न्यूनाधिकपरिमाणे इत्यर्थः।

1 नित्यं परिमण्डलमिति सूत्रे कणादोक्तं नित्याणुपरिमाणं तदाश्रयपरमाणुद्रव्यं तज्जन्यं द्व्यणुकरूपमणु च सिद्धान्ते निराकृतम्, उपलभ्यमानत्रसरेणुमात्रस्वीकारात्। अस्मादिदम् अपिवति सापेक्षाणुत्वातिरिक्तं तद्विषये मानाभावादिति भावः।

न्यूनाधिकदेशसंयोगभेद एव स्वरूपातिरिक्तं परिमाणविशेषमन्तरेण न घटते इति चेन्न; राश्यादिषु दृष्टत्वात् ॥ तत्र भागसंख्याधिक्यनिबन्धनः स इति चेन्न; तर्हि (चेत्, तर्हि?) सर्वत्र तत एवास्तु ॥ [1]प्रशिथिलसंयोगवति समभागवत्त्वेऽपि परिमाणभेदो दृष्ट इति चेत्; सत्यम्। तथाऽपि प्रशिथिलसंयोगादेव परिमाणविशेषोत्पादकतयाऽभिमतात् तावद्देशव्याप्तिरेवास्तु। समूढप्रसारितचूर्णपुञ्जेऽपि हि तथा दृश्यते। एवं महत्त्वबहुत्वाभ्यामपि देशव्याप्तिविशेष एवारभ्यते—न ततोऽन्यदान्तरालिकमनुपलभ्यमानमिति।

उक्तञ्च भगवद्यामुनमुनिभिः—"परिमाणं हि नाम देशावच्छेदः" इति। भगवन्नाथमुनिभिरपि प्रमेयपादसप्तमाधिकरणे—"संख्यान्तर्भूतं परिमाणम्" इत्याद्युक्त्वा अनन्तरश्लोकम्—"दूरत्वं दैर्घ्यम्, सामीप्यं ह्रस्वत्वम्, तिर्यग्दूरत्वं स्थौल्यम्, तिर्यक्सामीप्यं कार्श्यम्, स्वांशस्याग्रे स्वांश-

---

तत्रापि देशान्तरसम्भवादिति भावः। **राश्यादिष्विति**। तत्र परिमाणान्तराश्रयावयविनोऽनुत्पत्तेरिति भावः। **भागसंख्येति**। राश्यनुप्रविष्टव्रीह्यादिसङ्ख्याधिक्यादिति भावः। **समूढेति**। मुष्टिना संगृह्य प्रसारितचूर्णपुञ्जेऽवयविभेदाभावेन परिमाणभेदाभावेऽपि **प्रशिथिलसंयोग**मात्रेण अनेकदेशव्याप्तेर्दर्शनादिति भावः। प्रचययोनि[क]परिमाणोक्तन्यायं संख्यायोनिकपरिमाणयोनिकपरिमाणयोरप्यतिदिशति **एवं महत्त्वेति**। अवयवगतबहुत्वात् त्र्यणुके महत्त्वमुत्पद्यते, अवयवद्व्यारब्धावयविनि अवयवगतमहत्त्वात् महत्त्वम्, तूलपिण्डे प्रचयाधीनं महत्त्वमित्येवं सङ्ख्यापरिमाणप्रचययोनिकतया परिमाणं त्रिविधमिति हि नैयायिकप्रक्रिया, सा न सम्भवतीति भावः। **संख्यान्तर्भूतमिति**। भागसङ्ख्याधिक्यन्यूनत्वादिकमेव महत्त्वाणुत्वादिकमित्यर्थः। **दूरत्वमिति**। मूलापेक्षयाऽग्रस्य दूरत्वमित्यर्थः। **सामीप्यमिति**। मूलापेक्षयाऽग्रस्येति शेषः। **स्वांशस्याग्रे इति**। ऋजुदण्डे हस्तेन गृहीत्वा ऋजुतया निरीक्ष्यमाणे पूर्वपूर्वांशस्याग्रप्रदेश

---

व्याख्याते इति। देशस्यापि न्यूनाधिकसंख्याकदेशान्तरसंयोगमादाय न्यूनाधिकपरिमाणवत्त्वोपपादनसंभवादिति भावः। शङ्कते **न्यूनाधिकेति**। न्यूनाधिकसंख्याकेत्यर्थः। **राश्यादिष्विति**। तत्रावयविनोऽनारम्भेणातिरिक्तपरिमाणस्य भवद्भिरप्यस्वीकारादिति भावः। **भागसंख्याधिक्येति**। राश्यनुप्रविष्टव्रीह्यादिसंख्याधिक्येत्यर्थः। **समूढप्रसारितेति**। मुष्टिना संगृह्य प्रसारितचूर्णपुञ्जेऽवयविभेदाभावेन परिमाणभेदाभावेऽपि प्रशिथिलसंयोगमात्रेणानेकदेशव्याप्तेर्दर्शनादिति भावः। प्रचययोनिकपरिमाणोक्तन्यायः संख्यायोनिक-परिमाणयोनिकपरिमाणयोरपि तुल्य इत्याह **एवमिति**। एवं खलु नैयायिका वदन्ति; अवयवगतत्रित्वसंख्यया त्र्यणुके महत्त्वमुत्पद्यते; अवयवद्व्यारब्धावयविनि अवयवगतमहत्त्वहेतुकं महत्त्वम्; तूलपिण्डे प्रचयाधीनं महत्त्वमित्येवं संख्यापरिमाणप्रचययोनिकतया त्रिविधं परिमाणमिति। **देशावच्छेद इति**। स्वसंयुक्तदेशगतः संख्याधिक्यादिरूपो विशेष इत्यर्थः। **संख्यान्तर्भूतं परिमाणमिति**। संख्या अन्तर्भूता यस्मिन्निति व्युत्पत्त्या स्वसंयुक्तदेशगतसंख्याधिक्यन्यूनत्वघटितं परिमाणमित्यर्थः। अधिकसंख्याकदेशसंयुक्तत्वन्यूनसङ्ख्याकदेशसंयुक्तत्वरूपमहत्त्वाणुत्वयोश्शरीरे संख्या-

---

1 प्रशिथिलेति। "प्रचयः शिथिलाख्यो यः संयोगस्तेन जन्यते। परिमाणं तूलकादौ" इत्युक्त्या शिथिलशब्देन प्रचयाख्यः संयोग एवोच्यते।

स्थितिरार्जवम्, स्वांशस्य [पार्श्वे?] स्वांशस्थितिर्वक्रता, एकदिक्स्थान्त्यावयवानां विरुद्धदिक्स्थान्त्यावयवदूरत्वसामीप्यसाम्यं वृत्तत्वम्, [1]केवलविरुद्धदिगन्तांशेभ्यः [केवलविरुद्धदिगन्तांशानां?] कोणविरुद्धदिगन्तांशेभ्यः कोणविरुद्धदिगन्तांशानां दूरत्वसामीप्यसाम्यं चतुरश्रत्वम्" इति। किञ्चिदन्तरमतिक्रम्य चोक्तम्—" अनेकव्याप्तिर्महत्ता, तदभावो नन्दत्वम्" इति। देशकालसंख्योन्मानादिसर्वसाधारणपरिमाणमात्रस्य च स्वरूपमुक्तम्, "समस्तभावतदात्मा परिमाणम्" इति। अत्रेदं तत्त्वम्—आयामविस्तारघनभेदेन त्रिविधं परिमाणम्। यथासम्भवं प्राक्प्रत्यग्दक्षिणोत्तरोर्ध्वाधःपर्यवसितञ्चैतत्। तत्र त्रिष्वपि दिग्द्वन्द्वेषु यत्राधिक्यं स आयामः, यत्र मध्यमत्वं स विस्तारः, यत्र न्यूनत्वं तत् घनमिति। त्रयाणामप्येषां सङ्करतारतम्यभेदात् बहुविधो व्यवहारः। विभुद्रव्येषु कार्त्स्न्यपेक्षायां परिमाणं नास्ति। तत्तदवच्छेदापेक्षायां यथासम्भवं व्यवहार इति॥

---

एवोत्तरोत्तरांशस्थितिदर्शनादिति भावः। **एकदिक्स्थे**ति। पूर्वदिगन्त्यावयवानां तद्विरुद्धपश्चिमदिगन्त्यावयवानाञ्च यादृशं **दूरत्वं सामीप्यं** तादृशमेव दक्षिणोत्तरयोः आग्नेयवायव्ययोः नैर्ऋतैशानयोश्च **दूरत्वसामीप्यसाम्य**ञ्चेत्, वर्तुलत्वमित्यर्थः। **केवलविरुद्धे**ति। **केवलविरुद्धदिगन्तांशाः** प्राच्यप्रतीच्यदक्षिणोत्तरदिगन्तांशाः। **कोणविरुद्धदिगन्तांशाश्च** आग्नेयवायव्यनैर्ऋतैशानदिगन्तांशाः। अत्र **केवलविरुद्धदिगन्तांशाना**मिति शेषः। ततश्च प्राच्यप्रतीच्यदिगन्तांशयोर्यादृशं दूरत्वं सामीप्यञ्च तादृशं चेत् दक्षिणोत्तरदिगन्तशयोर्दूरत्वं सामीप्यञ्च, तथा आग्नेयवायव्यकोणयोर्यादृशं दूरत्वं सामीप्यञ्च तादृशञ्चेत् नैर्ऋतैशानदिगन्तांशयोर्दूरत्वं सामीप्यञ्च भवति, तदा **चतुरश्रत्व**मित्यर्थः। **अनेकव्याप्तिर्महत्ते**ति। **अनेकदेशव्याप्तिर्महत्ते**त्यर्थः। **देशेत्यादि**। क्रोश-गव्यूत्यादि **देशपरिमाणम्**, माससंवत्सरादि **कालपरिमाणम्**, विंशत्यादि **संख्यापरिमाणम्**, ऊर्ध्वं मान**मुन्मानं** पुरुषहस्तादीत्यर्थः। **आदिपदेन** वितस्त्याद्यायामो गृह्यते। **समस्तभावतदात्मा परिमाणमि**ति। **आत्मशब्दः** स्वरूपपरः। सर्वेषां वस्तूनां तत्तत्स्वरूपविशेष एव **परिमाण**मित्यर्थः। परिमाणावान्तरभेदविवादशान्त्यर्थं घनपरिमाणसंग्रहार्थञ्च परिमाणभेदं निष्कृष्य दर्शयति **अत्रेदं तत्त्वमि**ति। **त्रिष्वपि दिग्द्वन्द्वेष्वि**ति। प्राचीप्रतीच्यौ **एकदिग्द्वन्द्वम्**, दक्षिणोत्तरे एकदिग्द्वन्द्वम्, ऊर्ध्वाधरे एकदिग्द्वन्द्वमिति द्वन्द्वत्रित्वं द्रष्टव्यम्। **बहुविधो व्यवहार इति**। चतुरश्रत्ववर्तुलत्वादि**व्यवहार** इत्यर्थः। **कार्त्स्न्यापेक्षाया**मिति। [2]आकाशस्वरूपमात्रापेक्षायामायामादिव्यवहारो नास्ति; घटमठाद्यवच्छिन्नाकाशापेक्षायां तु औपाधिको **व्यवहारः** सम्भवतीत्यर्थः॥ इति **परिमाणम्**॥

---

घिक्यन्यूनत्वयोः प्रवेशादिति भावः। **स्वांशस्य स्वांशस्थिति**रिति। यथा कथञ्चिदिति शेषः। **अनेकव्याप्तिर्महत्ते**ति। अनेकदेशसंयोगो महत्त्वमित्यर्थः। **त्रिष्वपि दिग्द्वन्द्वेष्वि**ति। प्राचीप्रतीचीद्वयमेकं दिग्द्वन्द्वम्, दक्षिणोत्तरे अपरम्, ऊर्ध्वाधरे अन्यदिति दिग्द्वन्द्वत्रिकम्। **कार्त्स्न्यापेक्षाया**मिति। स्वरूपमात्रापेक्षायामित्यर्थः। **परिमाणं नास्ती**ति। आयामादिव्यवहारो नास्तीत्यर्थः। **तत्तदवच्छेदापेक्षाया**मिति। घटमठाद्यवच्छिन्नविभुस्वरूपापेक्षायां तु यथासंभवं तद्व्यवहार औपाधिकः प्रवर्तत इत्यर्थः।

---

2 केवलेति। चतुरश्रवस्तुन एकाश्रांशस्य ऐन्द्रदिक्स्थतया स्थापने प्रथमरीतिः, कोणदिक्स्थतया स्थापने द्वितीयरीतिरिति च ध्येयम्। 2 इदञ्चाकाशविभुत्ववादिपरमतानुसारेण।

पृथक्त्वं पृथग्व्यवहारकारणं पृथग्गुण इति काणादादयः। तदिदं भेदमात्रात् नातिरिच्यते; प्रत्ययस्य तावन्मात्रेण विश्रान्तेः। कल्पकानाश्च अन्यथासिद्धेः। भिन्नशब्देन च सहप्रयोगादर्शनात्। भेदावध्यवधिकतया द्रव्येष्विवाद्रव्येषु च पृथक्त्वधीव्यवहारदर्शनात्॥ सा भ्रान्तिरिति चेन्न; बाधकाभावात्॥ [1]भेदशब्दार्थ एव पृथक्त्वाख्यगुणोऽस्त्विति चेन्न; तस्य स्वरूपसंस्थाननीलपीतादिभिर्निर्वाहात्। अपर्यायबुद्ध्युपाधिना तेषु सर्वेषु भेदशब्दव्युत्पत्तेः, स्वरूपादिशब्दवत्। [2]तस्यैव च

---

कल्पकानाश्चेति। इदञ्चोत्तरत्र स्पष्टम्। सहप्रयोगेति। भेदपृथक्त्वयोर्भेदे अयमसाद्भिन्नः पृथक् चेति कदाचित् सहप्रयोगः स्यादित्यर्थः। भेदावध्यवधिकतयेति। भेदो यावति वर्तते तावदाश्रयतयेत्यर्थः। ततश्च अद्रव्यनिष्ठतया प्रतीयमानो न भवदभिमतः पृथक्त्वगुण इति भावः। यद्वा अवधिशब्दः प्रतियोगिवचनः। भेदो यावत्प्रतियोगिकः तावत्प्रतियोगिकपृथक्त्वमप्युपलभ्यते इत्यर्थः। ततश्च द्रव्यमात्रप्रतियोगिकभेदवत् द्रव्यमात्रप्रतियोगिकपृथक्त्वस्य द्रव्यवृत्तित्वासम्भवेनाद्रव्यवृत्तित्वात् गुणत्वं न सम्भवतीति भावः। सेति। अद्रव्येषु पृथक्त्वप्रतीतिरित्यर्थः। भेदशब्दार्थ एवेति। द्रव्यगतो भेदशब्दार्थ एव अस्मदभिमतपृथक्त्वरूपगुणोऽस्त्वित्यर्थः। निर्वाहादिति। एषाञ्च भवदभिमतपृथक्त्वाख्यगुणत्वासम्भवादिति भावः। ननु अननुगतानां स्वरूपादीनां कथमनुमतभेदशब्दालम्बनत्वमित्याशङ्क्याह अपर्यायबुद्ध्युपाधिनेति। अपर्यायबुद्धिर्विलक्षणबुद्धिः, तद्विषयत्वमेव भेदशब्द-

---

सहप्रयोगेति। भेदपृथक्त्वयोर्भेदे अयमसाद्भिन्नः पृथक् चेति सहप्रयोगः स्यादिति भावः। भेदावध्यवधिकतयेति। भेदप्रतियोग्यवधिकतयेत्यर्थः। यथा घटे पटात् भिन्ने पटात् पृथगिति प्रतीतिरस्ति, तथा पटाद्भिन्ने रूपादावपि तादृशप्रतीतिसद्भावात् गुणे प्रतीयमानस्य पृथक्त्वस्य न गुणरूपत्वसंभव इति भावः। सेति। अद्रव्ये पृथक्त्वप्रतीतिरित्यर्थः। शङ्कते भेदशब्दार्थ एवेति। द्रव्यगतो भेदशब्दार्थ एवेत्यर्थः। स्वरूपेति। भावान्तरस्यैवाभावतया अन्याभावरूपभेदस्यातिरिक्तस्याभावात् स्वरूपादय एव भेदाः। ततश्च तेषां भवदभिमतातिरिक्तपृथक्त्वाख्यगुणरूपत्वमिति भावः। नन्वननुगतानां स्वरूपादीनां कथमनुगतभेदशब्दार्थत्वसंभव इत्याशङ्क्याह अपर्यायेति। अपर्यायबुद्धिः=स्वरूपभेदशब्दौ न पर्यायाविति बुद्धिः। तस्या उपाधिः तन्नियामको धर्मः। अयं भावः—स्वरूपादीनां भेदरूपत्वेऽपि न भेदत्वं स्वरूपत्वरूपम्—संस्थानादीनां भेदत्वासंभवप्रसङ्गात्। किन्त्वनुयोगिताविशेषरूपम्। तच्च तादृशानुयोगितात्वेनानुगतं भेदशब्दप्रवृत्तिनिमित्तमिति। स्वरूपादिशब्दवदिति। भिन्नभिन्नानामेव घटपटादीनां स्वरूपपदार्थत्वेऽपि स्वासाधारणधर्मविशिष्टत्वरूपैकोपाधिप्रवृत्तिनिमित्तकतया

---

1 भेदेति। पृथक्त्वं गुणो द्रव्यमात्रवर्ति। द्रव्ये तदपेक्षयाऽतिरिक्तभेदास्वीकारात् धर्मद्वयकल्पनरूपं गौरवं नास्ति। अद्रव्येषु तु भेदोऽतिरिक्त उभयसंमत इत्यर्थः। सर्वत्र भेदस्य संस्थानादिक्लृप्तपदार्थेष्वेवान्तर्भावात् पृथक्त्वकल्पनमधिकमेवेति समाधत्ते तस्येति।

2 ननु पृथक्त्वमंगीकृत्य, चतुर्थाभावत्वाभिमतेऽन्योन्याभावे द्रव्यनिष्ठाभावस्त्यज्यतामित्यत्राह तस्यैवेति। सर्वोऽप्यन्योन्याभावः संस्थानादितोऽन्यो नेष्ट इति भावः।

अन्योन्याभावत्वात् ॥ इदमिदं न भवतीत्यत्र अवधिनिरूप्यत्वमन्योन्याभावस्य न दृष्टमिति चेन्न; शब्दविशेषात् तथोपपत्तेः। पृथक्त्वाख्यगुणवाचकान्यशब्दपर्यायसम्बन्धे पञ्चमी पाणिनेर्विवक्षितेति चेत्; [5]कथम्? ॥ अन्योन्याभावपर्यायविवक्षायां घटात् पटो न भवतीत्यपि प्रयोगप्रसङ्गादिति

---

प्रवृत्तिनिमित्तम्, ऐक्यविरोधिप्रतीतिविषयत्वमिति यावत्। स्वरूपादिशब्दवदिति। भिन्नभिन्नानामेव घटपटनीलपीतादीनां स्वरूपशब्दार्थत्वेऽपि इतरव्यावृत्तत्वासाधारणरूपत्वोपाधिवशात् यथा स्वरूपशब्दव्युत्पत्तिः, तथोपपद्यते इति भावः। ननु मा भूत् भेदशब्दार्थस्य पृथक्त्वरूपगुणत्वम्, अपि तु द्रव्यमात्रनिष्ठो योऽन्योन्याभावः तस्यैव पृथक्त्वाख्यगुणत्वमस्त्विति कस्यचिच्छङ्कां पराकरोति तस्यैव चेति। नीलपीतादिलक्षणभेदस्यैवेत्यर्थः। ततश्च इतोऽधिकस्य पृथक्त्वस्य कल्पकाभावात् एषामेव पृथक्त्वरूपत्वेन न त्वदभिमतसिद्धिरिति भावः। ननु यदुक्तं पृथक्त्वाख्यो गुणो भेदमात्रान्नातिरिच्यते; भेदश्च स्वरूपादिलक्षण एव; स एवान्योन्याभावोऽपीति—तन्नोपपद्यते; इदमिदं न भवतीति निरवधिकतया प्रतीयमानादन्योन्याभावात् सावधिकतया प्रतीयमानस्य पृथक्त्वस्यातिरिक्तत्वमभ्युपेत्यमिति शङ्कते इदमिदं न भवतीति। शब्दविशेषादिति। "पृथग्विनानानाभिः" इति पृथक्छब्दयोगे तृतीयापञ्चम्योर्विधानादिति भावः। ननु "अन्यारादितरर्तेदिक्छब्दाञ्चूत्तरपदाजाहियुक्ते" इति सूत्रे "अन्य इत्यर्थग्रहणम्। अन्यार्थयोगे पञ्चमीत्यर्थः" इति तद्व्याख्यातृभिर्व्याख्यातम्। तत्र पृथक्त्वरूप एवान्यशब्दार्थस्तत्र विवक्षणीयः; इतरथा घटः पटो नेत्यत्रापि पञ्चमीप्रसङ्गात्। ततश्च तथैव पाणिनेरप्याशय उन्नीयते इति शङ्कते पृथक्त्वाख्येति। विनिगमकं पृच्छति कथमिति। उत्तरमाह अन्योन्याभावेति। धर्मिपर्यन्तेष्विति। अन्यशब्दार्थयोग एव पञ्चम्या विधानात् अन्यशब्दस्य

---

स्वरूपशब्दस्य यथाऽनुगतत्वसंभवः, तथेहापीत्यर्थः। आदिना भिन्नादिशब्दपरिग्रहः। ननु मा भूत् द्रव्यनिष्ठभेदस्य पृथक्त्वाख्यातिरिक्तगुणरूपत्वम्; द्रव्यनिष्ठान्योन्याभावस्य तु तथात्वमुपपद्यत एवेत्यत आह तस्यैवेति। उक्तस्वरूपादिरूपभेदस्यैवेत्यर्थः। अन्योन्याभावत्वादिति। तथाच भेदातिरिक्तान्योन्याभावविरहात् भेदस्य च स्वरूपादिरूपतया नातिरिक्तपृथक्त्वाख्यगुणसिद्धिरिति भावः। ननु इदमिदं न भवतीति प्रतीयमानस्यान्योन्याभावस्य पञ्चम्यर्थावधित्वनिरूपकत्वाननुभवात् इदमस्माद्भिन्नमिति तद्दृशावधित्वनिरूपकतया प्रतीयमानस्य भेदस्य नान्योन्याभावरूपत्वसंभव इत्याशंकते इदमिति। शब्दविशेषात् तथोपपत्तेरिति। भेदादिशब्दसमभिव्याहारस्यैव प्रतियोगित्वरूपावधित्वार्थकपञ्चमीप्रयोजकतया तत्समभिव्याहारे पञ्चम्याः, नञ्समभिव्याहारे तदभावस्य चोपपत्तेरित्यर्थः। तथाचान्योन्याभावस्यापि सप्रतियोगिकत्वसत्त्वात् भेदस्य तदतिरिक्तसावधिकत्वविरहाच्च तस्यैवान्योन्याभावत्वमित्युपपद्यत एवेति भावः। ननु, "अन्यारादितरर्तेदिक्छब्दाञ्चूत्तरपदाजाहियुक्ते" इति सूत्रे, "अन्य इत्यर्थग्रहणम्; अन्यार्थयोगे पञ्चमीत्यर्थः" इति तद्व्याख्यातृभिर्व्याख्यातम्। तत्र पृथक्त्वरूपगुणविशेष एवान्यशब्दार्थः पाणिनेर्विवक्षित इत्यवश्यमाश्रयणीयम्। न त्वन्योन्याभावः, तथा सति घटात् पटो न

---

5 कथमिति। अन्योन्याभाववाचकपदयोगे इत्येव पाणिन्याशयः कुतो नेत्यर्थः।

चेन्न ; धर्मिपर्यन्तेष्विति विशेषात् ॥ पृथक्त्वमिति निर्देशो कथमिति चेन्न; तस्यापि [6]धर्मिणमुल्लिख्यैव धर्मबोधकत्वात् । अमानोनादयस्तु असत्त्वे वर्तमाना नावध्याकाङ्क्षिणः । यद्वा तेषां समानाधि-

---

च धर्मिपर्यन्तत्वात् इदमिदं न भवतीत्यत्र नञश्चान्योन्याभावमात्रविश्रान्तत्वेन धर्मिपर्यन्तत्वाभावात् न पञ्चमीत्यर्थः । कथमिति चेदिति । घटात् पटस्य पृथक्त्वमित्यत्र धर्मिपर्यन्तत्वाभावात् पञ्चमी न स्यादिति भावः । धर्मिणमुल्लिख्येति । ततश्च पृथग्वस्तुनो भावः पृथक्त्वमिति प्रतीतौ धर्मिणः प्रथमं प्रतीतेः धर्मिपर्यन्तत्वमस्तीति भावः । असत्त्व इति । सत्त्वं द्रव्यम्, असत्त्वमद्रव्यम् । ततश्च उच्चैश्शब्दादिवत् न धर्मिपर्यन्ता इत्यर्थः । नावध्याकाङ्क्षिण इति । पञ्चम्याकाङ्क्षिणो न भवन्तीत्यर्थः । नन्वेवं घटाद्भेद इत्यादौ पञ्चमी न स्यात् धर्मिपर्यन्तत्वाभावादित्यस्वरसादाह यद्वेति ।

---

भवतीत्यपि प्रयोगप्रसङ्गादिति शङ्कते पृथक्त्वाख्येति । विनिगमकं पृच्छति कथमिति । उत्तरमाह अन्योन्याभावेति । तथा चातिरिक्तपृथक्त्वाख्यगुणस्वीकार आवश्यक इति भावः । उक्तसूत्रेऽन्य-शब्दस्यान्योन्याभावविशिष्टार्थकतया अन्योन्याभावविशिष्टार्थकशब्दयोग एव पञ्चमीत्युक्तसूत्रेण बोधनात् घटः पटो नेत्यादिषु न पञ्चमीप्रसक्तिः ; नञोऽभावमात्रार्थकतया तद्विशिष्टार्थकत्वविरहादिति समाधत्ते नेति । धर्मिपर्यन्तेष्विति । अन्योन्याभावविशिष्टार्थकेषु सत्सु तद्योगे पञ्चमीत्यर्थ इति भावः । शङ्कते पृथक्त्वमिति निर्देश इति । घटात् पटस्य पृथक्त्वमिति निर्देश इत्यर्थः । कथमिति । पृथ-क्त्वस्यान्योन्याभावरूपत्वेऽपि पृथक्त्वपदस्य विशिष्टार्थकत्वाभावादिति भावः । धर्मिणमुल्लिख्यैवेति । पृथक्त्वविशिष्टवृत्त्यसाधारणधर्मत्वेनैवेत्यर्थः । धर्मबोधकत्वादिति । पृथक्त्वाख्यधर्मबोधकत्वादित्यर्थः । पृथक्त्वमित्यत्र त्वप्रत्ययप्रकृतिभूतपृथक्छब्देन पृथक्त्वविशिष्टस्यैव बोधनादिति भावः। तत्र हि पृथक्पदस्य पृथक्त्वविशिष्टमर्थः । तस्य च त्वप्रत्ययार्थे असाधारणधर्मे आधेयतासंबन्धेनान्वय इति सर्वसम्प्रति-पन्नम् । नन्वेवं सति घटात् पटस्य भेद इत्यादौ पञ्चम्यनुपपत्तिः ; अन्योन्याभावविशिष्टार्थकपदयोगा-भावात् । अतो विशेषणतया विशेष्यतया वाऽन्योन्याभावबोधकपदयोग एव पञ्चमी अनेन सूत्रेण विहिते-त्यवश्यमाश्रयणीयम् । इत्थंच घटः पटो नेत्यादौ पञ्चमीप्रसङ्गो दुर्वार इत्यतिरिक्तपृथक्त्वाख्यगुणविशेष-बोधकपदयोग एव पञ्चमीति स्वीकरणीयम् । भेदादिशब्दानामप्यगत्या तादृशगुणविशेषवाचकत्व-मेवाङ्गीकार्यमित्यतिरिक्तपृथक्त्वाख्यगुणविशेषसिद्धिर्निष्प्रत्यूहैवेत्यत आह अमेति । अ इत्ययं नञ्समा-नार्थकः ; "अ निषेधे पुमान् विष्णौ" इति नैघण्टुकोक्तेः । मा नो न इत्येते प्रसिद्धाः । असत्त्वे वर्तमाना इति । असत्त्वमद्रव्यम्, संख्याकारकान्वयायोग्यरूपम् । नावध्याकाङ्क्षिण इति । न

---

6 धर्मिणमिति। यत्किञ्चित्प्रकारतयैव बोधविषयान्योन्याभाववाचकपदान्वयिपदात् पञ्चमी। घटः पटो नेत्यादौ असंशय इत्यादाविव घटानुयोगिकः पटप्रतियोगिकोऽन्योन्याभाव इति स्वार्थे-विशेष्यकबोधस्यापि प्रयोजको नञादिः। घटात् पटस्य भेद इत्यत्रापि घटादित्यस्य धात्वर्थ एवान्वयात् तस्य कृत्प्रत्यार्थकिञ्चिदंशविशेषणत्वनियमात् पञ्चम्युपपत्तिरिति भावः। नावध्याकांक्षिण इति। स्वार्थेऽन्योन्याभावेऽन्वय्यवधित्वरूपार्थसापेक्षपदप्रयोगे पञ्चमीत्यर्थात् अमानोनादीनां द्वितीय-व्याख्योक्तरीत्या प्रकारभूततादृशविभक्त्यर्थनिरपेक्षत्वाच्च दोष इत्यर्थः।

करण एवावधिरिति सिद्धं भेदमात्रमेव पृथक्त्वमिति। उक्तञ्च भेदसमर्थनानन्तरं भट्टपराशरपादैः, "तदेवं क्लृप्तैरेव द्रव्यजातिगुणकर्मभिर्धर्मैरशेषाणामपुनरुक्तवित्तिव्याहारव्यवहाराणामुपपत्तेर्भेदो नाम न धर्मान्तरमपूर्वं कल्प्यम्। अत एव वैशेषिकपरिक्लृप्ताः पृथक्त्वविशेषादयोऽपि

---

तेषामिति । अमानोनादीनामित्यर्थः । समानाधिकरण एवावधिरिति । अवधिः समानाधिकरण एवेति योजना । समानाधिकरणः = समानविभक्तिरित्यर्थः । नञोऽन्यशब्दस्य च न तुल्यार्थत्वम्; पदद्वयजन्यप्रतीतिवैलक्षण्यस्यानुभवसिद्धत्वात् अनतिविप्रकर्षमात्रेण तुल्यार्थत्वोपपत्तेर्न पञ्चमीति भावः । अपुनरुक्तेति । विलक्षणबुद्धिविलक्षणाभिलापविलक्षणविषयकप्रवृत्तीनामित्यर्थः । पृथक्त्वविशेषादय इति । द्वित्वत्रित्वादिसङ्ख्यातुल्यशीला द्विपृथक्त्वत्रिपृथक्त्वादयोऽपीत्यर्थः ।

---

पञ्चम्यर्थावधिसाकाङ्क्षा इत्यर्थः । अनया वाचोभङ्ग्या संख्याकारकान्वयोग्यान्योन्याभावार्थकपदयोग एवोक्तसूत्रेण पञ्चमीविधानमित्युक्तं भवति । ततश्च घटः पटो नेत्यादौ न पञ्चमीप्रसङ्गः । न वा घटात् पटस्य भेद इत्यादौ तदनुपपत्तिः; विशेषणतया विशेष्यतया वाऽन्योन्याभावबोधकसंख्याकारकान्वयबोधौपयिकाकांक्षाशालिपदयोग एव पञ्चमीविधानमिति सिद्धेः । इत्थं च न पृथक्त्वाख्यगुणान्तरं स्वीकरणीयम् । तत्स्वीकारेऽपि रूपं रसाद्भिन्नम्, रूपस्य रसाद्भेद इत्यादौ भिन्नादिशब्दानामन्योन्याभावार्थकताया एव सर्वैरपि समाश्रयणीयतया तत्र पञ्चमीनिर्वाहायान्योन्याभावार्थकपदयोगेऽप्युक्तसूत्रस्य पञ्चमीविधायकत्वावश्यम्भावे घटः पटो नेत्यादौ पञ्चमीवारणायास्मदुक्तपरिष्कारस्यैव सर्वैरपि करणीयतया तत एव सर्वनिर्वाहात् । अथवा नावध्याकाङ्क्षिण इत्यस्यायमर्थः—यथा घटाद्भिन्नः, घटाद्भेद इत्यादौ भिन्नादिपदार्थानां निपातातिरिक्तनामार्थतया तादृशघटादिपदार्थेनाभेदातिरिक्तसंबन्धेन साक्षादन्वयासंभवात् मध्ये विभक्त्यर्थभानमवश्यमपेक्षणीयम्—न तथा घटः पटो नेत्यादौ तदपेक्षाऽस्ति; नञो निपातत्वेन तदर्थेन नामार्थस्य प्रतियोगित्वादिसंबन्धेनान्वयसंभवात् । तथाच अमानोनादयो नामार्थान्वयबोधेऽवधित्वार्थकपञ्चमीं नापेक्षन्त इति । तथाच निपातातिरिक्तान्योन्याभावार्थकपदयोग एव पञ्चमीविधानमावश्यकमिति तत्रैवोक्तसूत्रस्य पञ्चमीविधायकत्वसिद्ध्या न, घटः पटो नेत्यादौ पञ्चमीप्रसङ्गः । अत्रासत्त्वे वर्तमाना इत्यनेन, "चादयोऽसत्त्वे" इति सूत्रेणोक्तं निपातत्वं ज्ञाप्यते । अत्र कल्पे घटः पटो नेत्यादौ पटस्यावधित्वशब्दितप्रतियोगितानिरूपकत्वसंबन्धेन नञर्थान्योन्याभावेऽन्वयः; तस्य च घटे आश्रयतासंबन्धेन । ततश्च पटपदोत्तरप्रथमायाः साधुत्वमात्रार्थत्वमेवेति । तस्याः किञ्चिदर्थपरत्वसंभवे तथात्वस्वीकारो नोचित इत्यभिप्रायेणाह यद्वेति। समानाधिकरण एवेति। अनुयोगिवाचकपदविभक्तिसमानविभक्त्यर्थ एवेत्यर्थः । अवधिरिति । अवधित्वाख्यं प्रतियोगित्वमित्यर्थः । तथाच पटो नेत्यत्र प्रथमार्थे प्रतियोगित्वे पटस्याधेयत संबन्धेनान्वयः; प्रतियोगित्वस्य च निरूपकतासंबन्धेनान्योन्याभावेऽन्वयः; निपातातिरिक्तान्योन्याभावबोधकपदयोग एव पञ्चमीविधानान्नात्र पञ्चमीत्युक्तम् । अपुनरुक्तेति । विलक्षणेत्यर्थः । इदञ्च वित्त्यादीनां त्रयाणामपि विशेषणम् । वित्तिव्याहारव्यवहाराणामिति । बुद्धिशब्दप्रयोगप्रवृत्तीनामित्यर्थः । विलक्षणबुद्ध्यादिनिर्वाहायैव हि भेदो भवद्भिः स्वीक्रियत इति भावः। पृथक्त्व-

प्रोत्सारिताः" इत्यादि । भेदस्य एकानेकगतत्वविकल्पपरिहारे चोक्तम्, "नीलिमश्वेतिमानावप्य-नेकावेव धर्मिणम् । नीलं शुभ्रञ्च भिन्दानौ स्फुटं ह्युपलभामहे[1] ॥ ये विशेषपृथक्त्वादि सापेक्षं कल्पयन्ति ते । बिभ्यत्वात्माश्रयादिभ्यो न वयं दृष्टवादिनः ॥" इति । तदेवं स्वरूपधर्मौ यथासंभवं पृथक्छब्देन भिन्नादिशब्देन च व्यपदिश्येते । उक्तञ्च न्यायतत्त्वे प्रमेयपादसप्तमाधिकरणे, "अति-रेकव्यतिरेकभेदेन द्विविधो भेदः" इति । अत्रातिरेको धर्म्यन्तरेष्वसन् धर्मः । व्यतिरेको धर्म-धर्म्यादेः स्वरूपम् । यत्तु तस्मिन्नेवाधिकरणे, "ऐक्यं साकल्येन संयोगः, तदभावो भेदः" इत्यु-क्तम्, तत् विभागाभिप्रायम्[2] ॥

**एकानेके**ति । भेदः किमेकवृत्तिः, उत भिन्नवृत्तिः? नाद्यः; विरोधात् । न द्वितीयः; भेदस्य स्वापेक्षत्वे आत्माश्रयात्, किञ्च एकस्य वस्तुन अंशभेदमन्तरेण उभयवृत्तित्वासम्भवादिति **विकल्पपरिहारे** इत्यर्थः । ननु नीलश्वेतघटयोस्तत्तदसाधारणरूपद्वयस्य भेदत्वे उभयोर्भेद इत्येकस्य भेदस्योभयनिरूप्य-त्वप्रतीतिः पीड्येतेति शङ्कां तत्तदसाधारणधर्माणामेव भेदत्वग्राहिप्रत्यक्षरूपोपलम्भबलात् निरस्यति **अनेकावेवे**ति । घटपटयोर्भेद इत्येकत्वप्रतीतिस्तु घटपटयोः स्वरूपमितिवदिति भावः । **ये विशेषे**ति । ये काणादाः द्रव्येषु द्वित्वद्विपृथक्त्वादिसापेक्षं भेदं **कल्पयन्ति**, तेषां मते द्वित्वद्विपृथक्त्वादीनां भेदसापेक्ष-तया आत्माश्रयान्योन्याश्रयादिदोषाः; प्रत्यक्षदृष्टनीलादीनामेव भेदत्वं वदतामस्माकं तु न दोष इत्यर्थः । **दृष्टवादिन इति** । दृष्टवादिनो वयं न बिभीम इत्यर्थः । **व्यपदिश्येते इति** । ततश्च भिन्नपृथ-क्छब्दौ पर्यायावित्यर्थः । स्वरूपधर्मयोर्भेदशब्दव्यपदेशसत्त्वे **न्यायतत्त्व**संमतिमाह **उक्तञ्च न्यायतत्त्व**

**पृथक्त्वविशेषादय** इत्यादिना द्वित्वत्रित्वादिसंख्याः संख्यातुल्यशीलाः द्विपृथक्त्वत्रिपृथक्त्वादयश्च गृह्यन्ते । **एकानेके**ति । भेदः किमेकवृत्तिः उत भिन्नवृत्तिः? नाद्यः, विरोधात्, न द्वितीयः, भेदस्य भेदसा-पेक्षत्वे आत्माश्रयादित्येतद्विकल्पपरिहार इत्यर्थः । ननु नीलश्वेतयोर्घटयोस्तत्तदसाधारणरूपद्वयस्य भेदत्वे उभयोर्भेद इत्येकस्य भेदस्योभयनिष्ठत्वप्रतीतिबाधः स्यादित्याशङ्कां तत्तदसाधारणधर्माणामेव भेदत्वग्राहि-प्रत्यक्षबलान्निरस्यति **अनेकावेवे**ति । घटपटयोर्भेद इत्येकवचनप्रयोगस्तु घटपटयोः स्वरूपमितिवत् अविवक्षितार्थ इति भावः । ये **विशेषे**ति । ये काणादाः द्रव्येषु द्वित्वद्विपृथक्त्वादिसापेक्षं भेदं कल्पयन्ति, तेषां मते द्वित्वद्विपृथक्त्वादीनां भेदसापेक्षतया आत्माश्रयान्योन्याश्रयादिदोषाः प्रसज्यन्ते, प्रत्यक्षदृष्टनीलादीनामेव भेदत्वं वदतामस्माकं तु न दोष इत्यर्थः । **दृष्टवादिन** इति । प्रत्यक्षसिद्धार्थवादिनो वयं न बिभीम इत्यर्थः । **व्यपदिश्येते** इति । ततश्च भिन्न-पृथक्छब्दौ पर्यायावेवेति भावः । स्वरूप-धर्मयोर्भेदशब्दव्यपदेश्यत्वे न्यायतत्त्वसम्मतिमाह **उक्तञ्चे**ति । **धर्म्यन्तरेष्वसन्नि**ति । असाधारण इत्यर्थः ।

1 नीलत्वादिरेव भेद उपलम्भसिद्ध इति तेनैव अस्मादिदं विशिष्टं पृथक् चेति विशेषव्य-वहारः पृथक्त्वव्यवहारश्च । नञर्थ-जात्यादिधर्माणां पञ्चमीनिरपेक्षतेति सापेक्षविशेषपृथक्त्वरूप-धर्मान्तरकल्पने एकज्ञानमन्तरा अन्यज्ञानानुदयात् दोषः स्यादित्यर्थः । पूर्वं पृथक्त्वविशेषेत्युक्तम्, अत्र विशेषपृथक्त्वेति । अत ऐकरस्याय पृथक्त्वसामान्यं विशेषाख्यपदार्थश्चात्र विवक्षितः स्यात् ।

2 ऐक्यपदेन साकल्येन संयोगस्य भेदशब्देन तदभावरूपविभागस्य विवक्षणमिति भावः ।

संयोगविरोधी गुणो विभाग इति परे। तदयुक्तम्; नोदनपाटनादीनामेव संयोगविध्वंसकत्वात्। विभागजनकतया अभ्युपगतानामेव तद्ध्वंसकत्वोपपत्तेः। न च संयोगजनकजातीयत्वादिनाऽनुकूलस्य कर्मादेस्तद्ध्वंसकत्वमनुपपन्नमिति वाच्यम्; रूपादिजनकतयाऽभ्युपगताग्निसंयोगादिजातीयानां रूपादिनाशकत्वाभ्युपगमात्। स्वजन्यव्यक्तेरपि स्वनाश्यत्वमिष्टम्, किंपुनरन्यस्याः॥ उत्पाट्यमानघटादिषु शब्दोत्पादकतया कश्चिद्गुणः कल्प्यते इति चेन्न; तत्रापि विभागजनकस्य पाटनादेरेव तज्जनकत्वोपपत्तेः। तस्य च संयोगविशेषरूपत्वात्। विभक्तप्रत्ययस्य

---

इति। धर्म्यन्तरेष्वसम्भिति। असाधारण इत्यर्थः। साकल्येन संयोग इति। ययोः संयोगे सम्बन्धो न दृश्यते तयोरेवेत्यर्थः॥ इति पृथक्त्वम्॥

संयोगविरोधीति। संयोगनाशहेतुभूतः कश्चिद्गुण इत्यर्थः। पर इति। नैयायिका इत्यर्थः। नोदनेति। संयोगनाशलक्षणस्य कार्यस्य विभागजनकत्वेनाभिमतैः नोदनपाटनादिभिरेवोत्पत्तिसम्भवात् न मध्ये विभागः कल्पनीय इति भावः। संयोगजनकजातीयत्वादिनेति। संयोगजनककर्मजातीयत्व-संयोगजनकादृष्टजातीयत्वादिभेदाभिप्रायेण आदिपदप्रयोगः। अन्यस्या इति। स्वाजन्यव्यक्तेरित्यर्थः। कल्प्यत इति। स च विभाग एवेति भावः। ननु पाटनादिकस्यापि क्रियारूपस्य अद्रव्यदशकातिरिक्तस्याभ्युपगमप्रसङ्ग इत्याशङ्क्याह तस्य चेति। संयोगविशेषरूपत्वादिति। पाटनस्योत्तरदेशसंयोगरूपत्वादित्यर्थः[1]। ननु घटपटौ विभक्ताविति प्रतीत्यनुरोधात् विभागः कल्प्यत इत्याशङ्क्याह विभक्त-

---

संयोगविरोधीति। संयोगनाशक इत्यर्थः। परे नैयायिकाः। नोदनेति। संयोगनाशस्य विभागजनकत्वेनाभिमतैर्नोदनपाटनादिभिरेवोत्पत्तिसंभवान्न मध्ये विभागाख्यातिरिक्तगुणः कल्पनीय इति भावः। संयोगजनकजातीयत्वादिनेति। आदिपदेनोत्तरदेशसंयोगविरोधिपूर्वदेशसंयोगनाशकत्वं विवक्षितम्। स्वजन्यव्यक्तेरपि स्वनाश्यत्वमिष्टमिति। उपान्त्यशब्दजन्यान्त्यशब्दस्योपान्त्यशब्देन नाशाङ्गीकारादिति भावः। अन्यस्या इति। स्वाजन्यव्यक्तेरित्यर्थः। तदुत्पादकस्यैव तन्नाशकत्वे तत्स्वरूपयोग्यस्य तन्नाशकत्वसंभवे कस्सन्देह इति भावः। कश्चित् गुणः कल्प्यत इति। स एव विभाग इति भावः। तज्जनकत्वोपपत्तेरिति। शब्दजनकत्वोपपत्तेरिति भावः। ननु तथापि पाटनादिरूपस्यातिरिक्तस्याद्रव्यस्य कस्यचित् स्वीकारावश्यम्भावात् दशविधत्वव्याघात इत्यत आह तस्य चेति। संयोगविशेषरूपत्वादिति। [1]उत्तरदेशसंयोगरूपत्वादित्यर्थः। ननु घटपटौ विभक्ताविति प्रतीतिबलादेव विभागाख्यातिरिक्ताद्रव्यस्वीकार आवश्यक इत्यत आह विभक्तप्रत्ययस्येति। किं न

---

1 ननु नन्वित्यवतरणं मन्दम्; क्रियाया दशकान्तर्गतत्वात्। किञ्च पाटनक्रियाजन्यस्योत्तरदेशसंयोगस्य पाटनरूपत्वं कथम्? संयोगातिरिक्तक्रियापक्षे चेत्थं न सुवचमिति चेत्—तर्ह्येवं व्याख्यायताम्—'ननु संयोगात् विभागात् शब्दाच्च शब्दनिष्पत्तिरिष्टा, न तु पाटनादिक्रियात इत्यत्राह तस्येति। तस्य शब्दजनकस्य क्रियाजन्यस्य विभागत्वेन त्वदिष्टस्य पूर्वदेशसंयोगध्वंसरूपतया तस्य ध्वंसस्य चास्मन्मते उत्तरदेशसंयोगाव्यतिरिक्ततया संयोगादेव शब्दनिष्पत्तिरिति परम्परया पाटनं हेतुरिति भावः इति।

च संयोगाभावविषयतयोपपत्तेः ॥ तर्हि मेरुविन्ध्ययोरपि विभक्तप्रत्ययः किं न स्यादिति चेन्न ; तस्य विध्वंसात्मकत्वभावात् (विध्वंसात्मकत्वात्) । संयोगाभावमात्रनिबन्धनश्च विभक्तप्रत्ययस्तत्रापि केषाञ्चित् जायते ॥ उपचाराच्च तन्निर्वाहो भवतामपि । एवं क्वचित् स्वरूपभेदनिबन्धनो विभक्तप्रत्ययो निर्वाह्यः ॥ क्षणिकस्य विभागस्य स्थिरध्वंसात्मकत्वं कथमिति चेन्न; तस्य परिभाषामन्तरेण क्षणिकत्वे प्रमाणाभावात्; प्रतियोगिस्मरणादौ तद्विभागवानयमिति प्रत्ययस्य यावत्पुनस्संयोगमुत्पत्तेः ॥ प्रध्वंसात्मकत्वे पुनस्संयोगे सत्यपि विभक्तबुद्धिः स्यादिति चेन्न ; भवतामपि पूर्वसंयोगप्रध्वंसस्य विद्यमानत्वेनासंयुक्तप्रत्ययप्रसङ्गात् ॥ यावदुत्पन्नसंयोगध्वंसे सति

---

**प्रत्ययस्यचे**ति । **विभक्तप्रत्ययः किं न स्या**दिति । **विभक्तप्रत्ययो न स्यात्** किमिति योजना । [**विध्वंसात्मकत्वाभावा**दिति ?][2] ततश्च विभागप्रत्ययस्य संयोगध्वंसविषयत्वे मेरुविन्ध्ययोर्विभागप्रत्ययो न स्यादित्यर्थः ।[1]? **विध्वंसात्मकत्वाभावा**दिति? । मुख्यविभागप्रत्ययो नास्तीत्यर्थः । गौणस्तु सम्भवतीत्याह **संयोगाभावमात्रनिबन्धनश्चे**ति । गौणत्वं त्वयाऽप्येष्टव्यमित्याह **उपचाराच्चे**ति । अत्र विभागशब्दस्य औपचारिकतया, तदुल्लेखिप्रत्ययस्यापि औपचारिकत्वमिति द्रष्टव्यम् । **एवं क्वचि**दिति । संयुक्तावस्थायामेव इमौ विभक्ताविति यत्र व्यवहारः, यत्र वा रूपरसौ विभक्ताविति व्यवहारः, तत्र सर्वत्र **स्वरूपभेदनिबन्धन** इत्यर्थः । **तस्ये**ति । विभागस्येत्यर्थः । ननु विभागस्य क्षणिकत्वाभावे पञ्चषक्षणानन्तरमपि विभक्ताविति प्रतीतिप्रसङ्ग इत्याशङ्क्य इष्टापत्त्या परिहरति **प्रतियोगिस्मरणादा**विति । शङ्कते **प्रध्वंसात्मकत्व** इति । **असंयुक्तप्रत्ययप्रसङ्गा**दिति । विभागप्रत्ययाभावेऽपीति शेषः । **तत्तत्प्रतियोगि-**

---

**स्या**दिति । न स्यात् किमिति योजनया स्यादेवेत्यर्थः । अथवा किं न स्यात्=कुतो न स्यात् । तादृशाप्रतीत्यभावे हेतुर्दुर्वचः स्यादित्यर्थः । **तस्ये**ति । विभक्तप्रत्ययविषयस्येत्यर्थः । **विध्वंसात्मकत्वा**दिति । संयोगध्वंसरूपत्वादित्यर्थः । तथाच मेरुविन्ध्ययोः संयोगध्वंसविरहान्न विभक्तप्रत्यय इति भावः । तस्य **विध्वंसात्मकत्वाभावा**दिति पाठे **तस्ये**त्यस्य मेरुविन्ध्ययोर्विद्यमानसंयोगाभावस्येत्यर्थः । **विध्वंसात्मकत्वाभावा**दिति । तथाच विभक्तप्रत्यये संयोगध्वंसस्यैव विषयतया नोक्तापत्तिरिति भावः । गौणविभक्तप्रत्ययस्तत्रापि संभवतीत्याह **संयोगाभावे**ति । **उपचाराच्चे**ति । विभागशब्दस्य तत्रौपचारिकत्वादिति भावः । **क्वचि**दिति । संयुक्तावस्थायामेव यत्र विभक्ताविति व्यवहारः, यत्र वा रूपरसौ विभक्ताविति—तत्रेत्यर्थः । **स्वरूपभेदनिबन्धन** इति । तत्र विभक्तशब्दो भिन्नपर्याय इति भावः । **तस्ये**ति । विभागस्येत्यर्थः । **परिभाषामन्तरेणे**ति । भवदीयसाङ्केतिकव्यवहारमन्तरेणेत्यर्थः । ननु विभागस्य क्षणिकत्वाभावे पञ्चषक्षणानन्तरमपि विभक्ताविति प्रतीतिप्रसङ्ग इत्याशङ्क्येष्टापत्त्या परिहरति **प्रतियोगिस्मरणादा**विति । शङ्कते **प्रध्वंसात्मकत्व** इति । **संयोगे सत्यपी**ति । संयोगस्य वर्तमानतादशायामपीत्यर्थः । **विभक्तबुद्धिः स्या**दिति । अतीतसंयोगध्वंसस्य सत्त्वादिति भावः । **पूर्वसंयोगप्रध्वंसस्य विद्यमानत्वेने**ति । ध्वंसप्रागभावाधिकरणे अत्यन्ताभावानुपगमेन संयोगनाशसमनन्तरमसंयुक्तप्रत्यये संयोगध्वंसस्यैव विषयत्वादिति भावः । **असंयुक्तप्रत्ययप्रसङ्गा**दिति । संयोगविरहदशायामिव

1 विध्वंसात्मकत्वाभावादित्युत्तरत्र स्थितं प्रतीकग्रहमत्र भवितुमर्हतीति निवेदितम् ।

तदातदा तत्तत्प्रतियोगिकतया तथाप्रतीतिरिति चेत्; तुल्यम्॥ द्रव्यद्वयनिष्ठतया प्रतीयमानस्य संयोगवत् गुणत्वमुचितमिति चेत्, अहो! महावैशेषिकोऽसि; यत् अभावस्य प्रतियोग्याधारिणः

---

कतयेति। यावदुत्पन्नसंयोगप्रतियोगिकतया असंयुक्ताविति प्रतीतिरित्यर्थः। यदभावस्येति। उभयवृत्तित्वेऽवश्यं गुणत्वेन भवितव्यमिति वदता संयोगध्वंसे व्यभिचारवारणार्थं संयोगध्वंसस्योभय-वृत्तित्वं परित्यक्तव्यं स्यादिति भावः। प्रतियोग्याधारिण इति। प्रतियोगिन आधारः प्रतियोग्याधारः

---

संयोगसत्त्वदशायामपि पूर्वसंयोगध्वंसरूपविषयस्य सत्त्वादिति भावः। तदातदा यावदुत्पन्नसंयोगध्वंसे सतीत्यन्वयः। तदधिकरणे संयोगासत्त्वदशायां संयोगत्वावच्छिन्नप्रतियोगिताकत्वविशिष्टसंयोग-ध्वंसस्य सत्त्व इत्यर्थः। तत्तत्प्रतियोगिकतया तथा प्रतीतिरिति। संयोगत्वरूपसामान्यधर्मावच्छिन्न-तत्तत्संयोगनिष्ठप्रतियोगिताकत्वप्रकारेण ध्वंसं विषयीकृत्य असंयुक्त इति प्रतीतिरित्यर्थः। अयं भावः-ध्वंसप्रागभावाधिकरणेऽत्यन्ताभावानुपगमे पूर्वापरदशायां रक्ते, मध्ये श्यामे घटे रक्तं रूपं नास्तीति प्रतीत्यनुपपत्तिः। यदि च तादृशप्रतीतौ रक्तत्वावच्छिन्नप्रतियोगिताकत्वेन रक्तरूपध्वंसप्रागभावयोरेव विषयत्वाङ्गीकारात् नानुपपत्तिरित्युच्येत; तदा पूर्वापररक्तिमध्वंसप्रागभाववति रक्तेऽपि, इदानीं रक्तं रूपं नास्तीति प्रतीतिप्रसङ्गः। अतस्तादृशप्रतीतौ ध्वंसप्रागभावनिष्ठरक्तत्वावच्छिन्नप्रतियोगिताकत्वे रक्त-कालावच्छेद्यत्वस्य भानात् तत्र तादृशविषयबाधेन न तथाप्रत्ययः प्रामाणिकानामिति वक्तव्यम्। इत्थं च संयोगसत्त्वदशायां संयोगध्वंसस्य संयोगत्वावच्छिन्नप्रतियोगिताकत्वासंभवेन तादृशविशिष्टध्वंसस्य तदानीमसत्त्वान्नासंयुक्तप्रत्यय[1] इति। तुल्यमिति। संयोगत्वावच्छिन्नप्रतियोगिताकत्वविशिष्टध्वंसस्यैव विभागपदार्थत्वादिति भावः। ध्वंसप्रागभावाधिकरणेऽत्यन्ताभावस्वीकारे तयोस्सामान्यधर्मावच्छिन्न-प्रतियोगिताकत्वविरहेऽपि संयोगत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावविशिष्टसंयोगध्वंस एव विभागपदार्थ इत्याश्रयणीयतया न दोषः। वैशिष्ट्यं चैकक्षणावच्छिन्नत्वविशेषितं सामानाधिकरण्यम्। तेन न पुनः संयोगदशायां विभक्तप्रत्ययः। न वा मेरुविन्ध्ययोः; संयोगध्वंसविरहात्। यदित्यादि। यतो ध्वंस-प्रागभावयोः प्रतियोगिसमानाश्रयत्वमभ्युपगच्छता द्रव्यद्वयनिष्ठतया प्रतीयमानस्य गुणत्वनियमो दुर्वच इत्यर्थः। प्रतियोग्याधारिण इति। प्रतियोगिन आधारः प्रतियोग्यधारः, सोऽस्यास्तीति प्रति-

---

1 ध्वंसप्रागभावयोः सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वमङ्गीकृत्य मणिदीधितिचतुर्दशलक्षण्यां गदाधरोक्तप्रकारेण मूलार्थं इहोक्तः। मूले यावत्संयोगेत्यनुक्त्वा यावदुत्पन्नसंयोगेति उत्पन्नपद-प्रयोगात् सामान्यधर्मावच्छिन्नत्वास्वीकारेणैव निर्वाह इष्ट इति सुवचम्। यदा यत्र, 'संयोगो नास्तीति' प्रत्ययः, तदा तत्र तत्कालपूर्वकालोत्पत्तिकतदीयसंयोगत्वव्यापकप्रतियोगिताकध्वंस-विषयकत्वं तस्य प्रत्ययस्य। व्यापकता च तत्कालावच्छिन्नतद्वृत्तिकध्वंसप्रतियोगितात्वरूपेण। संयोगसत्त्वदशायां तस्यापि संयोगस्योत्पन्नयावत्संयोगान्तर्भूतत्वात् तत्र तत्कालावच्छिन्नध्वंस-प्रतियोगित्वाभावात् व्यापकत्वभङ्गान्न तथा प्रतीतिः। एवमेव मध्ये रक्तेऽपि रक्तरूपं नास्तीति प्रतीत्यभावः। एवञ्च प्रत्यये इदानीमित्यंशस्याघटनेऽपि नास्तीति वर्तमाननिर्देशात् वर्तमानध्वंसे उत्पन्नयावत्प्रतियोगिकत्वाभावादेव न तथाप्रयोग इति ध्येयम्।

स्वतोऽमिलितत्वमभ्युपगच्छतामेवमभिमन्यसे (स्वतोमिलितत्वमभ्युपगतं नानुमन्यसे) (अभ्युपगच्छन्नेवमभिमन्यसे) (प्रतियोग्याधारिणः स्वतोऽमिलिततां किमभिमन्यसे?)। उभयनिरूप्यप्रतियोगिकतया हि संयोगप्रध्वंसस्य उभयनिष्ठत्वप्रत्ययोऽभ्युपगत एव भवद्भिः। असंयुक्ताविति संयोगप्रागभावात् ॥ ननु ध्वंसोऽपि भावान्तरमेव भवतामिति शब्दान्तरेण विभागः स्वीकृत इति चेन्न; उत्तरसंयोगादिमात्रात्मकत्वात् ॥ सजातीयस्यैव कथं विरोधित्वमिति चेत्; अभावनिरूपणं यावत् एतच्चोद्यं मा स्म विस्मरः। प्रत्ययस्तु वियुक्तः विघटितः विश्लिष्टः विनष्टसंयोगः

---

सोऽस्यास्तीति **प्रतियोग्याधारी**; प्रतियोग्याधाराश्रितस्येत्यर्थः। **स्वतोऽमिलितता**मिति। **अमिलित**त्वमनुभयवृत्तित्वम्। वस्तुतोऽनुभयवृत्तित्व**मभिमन्यसे** किमित्यर्थः। **उभयनिरूप्येति**। संयोगप्रध्वंसस्योभयाश्रितप्रतियोगिकत्वात् सोऽप्युभयाश्रित इत्यभ्युपेतव्यमित्यर्थः ननु उत्पत्स्यमानसंयोगयोः, असंयुक्ताविति प्रत्ययस्य संयोगध्वंसविषयत्वाभावात् तस्य विभागविषयत्वमेव वक्तव्यमिति कस्यचिच्छङ्कां निराकरोति **असंयुक्ताविती**ति। **अभावनिरूपणं यावदि**ति। क्रियते, तावदिति शेषः। **मा स्म विस्मर इति**।

---

योग्याधारी। प्रतियोग्यधिकरणाश्रित इत्यर्थः; तथाविधस्य। **अभावस्य**; ध्वंसप्रागभावरूपस्येति भावः। **स्वतोमिलितत्वमभ्युपगच्छताम्**—स्वभावात् तुल्यत्वमभ्युपगच्छताम्। प्रतियोगिन एकमात्रनिष्ठत्वे ध्वंसप्रागभावयोरप्येकमात्रनिष्ठत्वम्, तस्य द्वित्र्यादिनिष्ठत्वे तयोरपि द्वित्र्यादिनिष्ठत्वमित्येवं ध्वंसप्रागभावयोः प्रतियोगितुल्यत्वमभ्युपगच्छता[1]मिति यावत्। तथाच द्रव्यद्वयनिष्ठतया प्रतीयमानध्वंसे व्यभिचारात् यत्र द्रव्यद्वयनिष्ठतया प्रतीयमानत्वं तत्र गुणत्वमिति व्याप्तिर्न संभवतीति फलितम्। '**स्वतोमिलितत्वमभ्युगतं नाभिमन्यसे**', '**अभ्युपगच्छन्नेवमभिमन्यसे**' इति पाठौ तु सुगमावेव। एतावता सामान्यतो ध्वंसप्रागभावयोः प्रतियोगिसमानाश्रयत्वाभ्युपगमबलेन संयोगध्वंसस्योभयनिष्ठत्वसिद्ध्या व्यभिचार उक्तः। अथ विशिष्यैव तत्रोभयनिष्ठत्वस्वीकारं दर्शयति **उभयनिरूप्येति**। उभयनिष्ठेत्यर्थः। **हिः** प्रसिद्धौ। मन्वसंयुक्ताविति प्रत्ययः संयोगत्वावच्छिन्नप्रतियोगिताकध्वंसविषयक इत्युक्तम्। तन्न संभवति; संयोगध्वंसविरहेऽपि उत्पत्स्यमानसंयोगयोरपि वस्तुनोः असंयुक्ताविति प्रतीतिव्यवहारदर्शनादित्यत आह **असंयुक्ताविति**। **प्रागभावादिति**। **असंयुक्ता**विति प्रतीतिव्यवहारयोर्हि संयोगत्वावच्छिन्नप्रतियोगिताकाभाव एव विषयः। स च क्वचित् ध्वंसः, क्वचित् प्रागभावः, क्वचिदत्यन्ताभाव एवेति नानुपपत्तिरिति भावः। **अभावनिरूपणं यावदि**ति। अभावनिरूपणपर्यन्तमित्यर्थः। [2]अत्र, "कार्तिकमारभ्य चैत्रं यावत् शीतं भवति, काशीतः पाटलीपुत्रं यावत् वृष्टो देवः" इत्यादाविवाभिविध्यर्थकयावच्छब्दयोगात्, "ततोऽन्यत्रापि दृश्यते" इति द्वितीया। उक्तञ्च व्युत्पत्तिवादे द्वितीयार्थविचारे, "मर्यादाभिविध्यर्थक

---

1 अभ्युपगच्छतां वैशेषिकाणां पक्षे स्थितवेति यावत्। अनादरे वा षष्ठी। तदनादरणान्महावैशेषिकत्वम्। प्रथमव्याख्यासंमतपाठस्त्वन्यः। परं तु? यदित्यारब्धवाक्ये यच्छब्दसत्त्वात् एवं न स्यात्। किं तु, एवमभिमन्यसे इति वाक्यान्तरं 'स्वतोऽमिलिततां किमभिमन्यसे' इति पृथग्वाक्यं स्यात्। 2 प्रथमव्याख्यायामन्यथाव्याख्यानं द्वितीयाविभक्त्यनुपपत्तिचिन्तया स्यादिति विभाव्य द्वितीयां साधयति अत्रेति।

विभक्तः विप्रकृष्टः देशान्तरगत इति तुल्यरूप एव जायते । एतदखिलमभिसन्धायोक्तं न्यायतत्त्वे प्रमेयपादसप्तमाधिकरणे, "वियोगो न वक्तव्यः" इति । तत्रैव पश्चादप्युक्तम्, "अत्यन्तसामीप्यं संयोगः, दूरत्वं वियोगः" इति ॥ अनेन संयोगोऽप्यपलपितः स्यादिति चेत्, सामीप्यस्य समीपदेशसंयोगात्मनैव निरूप्यत्वात् । तथाच आदेशादेशिनोरविशेषेण द्वयोरपि संयोगसिद्धिः । दूरत्वमपि देशविशेषसंयोग एवेति न ततोऽतिरिक्तो विभाग इति ॥

दिक्कालापेक्षया परापरधीहेतुगुणौ परत्वापरत्वे इति परे । ते अपि दिक्कालसम्बन्ध-

---

"स्मोत्तरे लङ् च" इति लङ् । तुल्यरूप एवेति । एभिः शब्दैरेकाकारप्रतीतेरेवोत्पादात् न संयोगाभावातिरिक्तो विभाग इति भावः । वियोगो न वक्तव्य इति । अतिरिक्तविभागो न वक्तव्य इत्यर्थः । अनेनेति । सामीप्येनेत्यर्थः । दूरत्वेन विभागापलापवत् सामीप्येन संयोगापलापोऽपि स्यादिति भावः । आदेशादेशिनोरिति । आदेशादेशिनोर्द्वयोरपि सामीप्यसंयोगरूपयोः संयोगरूपत्वाविशेषेण संयोगः सिद्ध इत्यर्थः । येन हि अपवादः स आदेशः । यदपोद्यते स आदेशी । ननु, "दूरत्वं वियोगः" इति संयोगातिरिक्तस्यैव विभागत्वप्रतिपादनात् कथं संयोगविशेष एव विभागः ? इत्याशङ्क्याह दूरत्वमपीति ॥ इति विभागः ॥

दिक्कालापेक्षयेति । परत्वापरत्वे हि द्विविधे । दिक्कृते कालकृते च । तत्र एकस्यां

---

यावच्छब्दयोगेऽपि द्वितीया दृश्यते" इत्यादि । तत्त्वबोधिन्यां च, अन्यारादित्यत्र, "ऋते कृष्णात् इति । कथं तर्हि, 'फलति पुरुषाराधनमृते' इति प्रयोग इति चेत्, प्रमादोऽयमिति हरदत्तः । अन्ये तु, 'ततोऽन्यत्रापि दृश्यते" इति दृशिग्रहणात्, "चैत्रं यावच्छीतम्" इत्यादाविव ऋते योगेऽपि द्वितीया साधुरित्याहुः" इत्यादि अभिहितम् । अतो न द्वितीयानुपपत्तिः । अभिविधिश्च तत्पर्यन्ताभिव्याप्तिः । मा स्म विस्मर इति । "स्मोत्तरे लङ् च" इति लङ् । अभावनिरूपणे उक्तचोद्यस्य परिहारः स्पष्टीभविष्यतीति भावः । पूर्वोत्तरसंयोगयोः संयोगत्वेन साजात्येऽप्येककालावच्छेदेनैकाधिकरणावृत्तित्वलक्षणविरोधसद्भावादुत्तरसंयोगादेः पूर्वसंयोगध्वंसरूपत्वं पूर्वसंयोगादेरुत्तरसंयोगप्रागभावरूपत्वञ्चोपपद्यत एव । अत एवाभावत्वेन साजात्येऽपि प्रतियोगिध्वंसस्य प्रागभावध्वंसरूपत्वमुपपद्यत इति बोद्धव्यम् । तुल्यरूप एवेति । एभिश्शब्दैरेकाकारप्रतीतेरेवोत्पादान्न संयोगध्वंसातिरिक्तो विभाग इति भावः । वियोगो न वक्तव्य इति । अतिरिक्तो विभागो नाङ्गीकार्य इत्यर्थः । अनेनेति । उक्तन्यायतत्त्ववाक्येनेत्यर्थः । संयोगोऽप्यपलपितः स्यादिति । वियोगशब्दितविभागवदिति भावः । समीपदेश संयोगात्मनैव निरूप्यत्वादिति । तादृशसंयोगरूपत्वेनैव तत्स्वरूपनिर्णयस्य कर्तव्यत्वादित्यर्थः । आदेशादेशिनोरिति । संयोगस्थानेऽङ्गीकृते अत एवाऽऽदेशरूपे सामीप्येऽङ्गीक्रियमाणेऽपि संयोगः सिद्ध्यत्येव, सामीप्यस्थानितया आदेशिरूपे संयोगे तु सुतरामिति भावः ।

दिक्कालापेक्षयेति । दिक्कृते कालकृते इत्यर्थः । इदञ्च परत्वापरत्वयोर्विशेषणम् । परे— काणादाः । ते अपीति । परत्वापरत्वे अपीत्यर्थः । दिक्कालसंबन्धविशेषादिति । न्यूनाधिकसंयोग-

विशेषात् नातिरिक्ते; लाघवात् ॥ अप्रत्यक्षपदार्थसंयोगः कथं प्रत्यक्षः इति चेन्न; दिक्कालयोरपि प्रत्यक्षत्वस्य समर्थितत्वात्। यादृशोपाध्यवच्छिन्नदिक्कालसम्बन्धः परत्वापरत्वोत्पादको भवताम्, तथाविध एव सोऽस्माकं व्यवहारविषय इति नातिप्रसङ्गगन्धोऽपि। यदि च व्यवहारनिर्वाहके सिद्धेऽपि परापरप्रत्ययमात्रात् गुणान्तरकल्पनं, परापरजाति-परापरपरिमाण-परापरज्ञान-शक्त्यादिष्वपि तादृशगुणकल्पनप्रसङ्गः; अविशेषात् ॥ न्यूनाधिकव्यक्तिवृत्तिन्यूनाधिकदेशावच्छेदादिभिस्तत्र निर्वाह इति चेत्, अत्रापि न्यूनाधिकदिक्कालसम्बन्धात् तन्निर्वाह इत्युक्तमेव। भवद्भिरपि

---

दिश्यवस्थितयोर्द्वयोः पिण्डयोः, इदमस्माद्विप्रकृष्टम्, इदमस्मात् सन्निकृष्टमिति बुद्धिरूपनिमित्तकारणानुगृहीत संयुक्तसंयोगभूयस्त्वाल्पत्व(ल्पीयस्त्व?)व्यञ्जकदिक्पिण्डसंयोगासमवायिकारणवशेन परत्वापरत्वे उत्पद्येते; तथा अनियतदिगवस्थितयोर्युवस्थविरपिण्डयोः, अयमस्मादल्पतरकालसम्बद्धः, अयमस्मादधिकतरकालसम्बद्ध इत्यपेक्षाबुद्धिलक्षणनिमित्तकारणसहकृतेन तपनपरिस्पन्दभूयस्त्वाल्पत्वोपनायककालसंयोगासमवायिकारणेन कालकृतपरत्वापरत्वे उत्पद्येते इति काणादा वर्णयन्तीत्यर्थः। ननु दिक्कालसम्बन्धस्य परत्वापरत्वरूपत्वे प्रत्यक्षत्वं न स्यादिति शङ्कते अप्रत्यक्षेति। यादृशोपाध्यवच्छिन्नेति। संयुक्तसंयोग-तपनपरिस्पन्द-भूयस्त्वाल्पत्वव्यञ्जकदिक्कालसंयोग एवेत्यर्थः। परापरेति। तद्वीति शेषः। न्यूनाधिकव्यक्तीति।

---

घटितसंयुक्तसंयोगपरम्परावन्मूर्तावच्छिन्नदिक्संबन्धात् न्यूनाधिकतपनपरिस्पन्दवत्कालसंबन्धाच्चेत्यर्थः। इदमत्र बोद्धव्यम्—विष्णुमित्रस्य देवदत्तात् यज्ञदत्त पर इति दिक्कृतपरत्वप्रत्यये देवदत्तनिष्ठविष्णुमित्रसंयुक्तसंयोगपरम्पराघटकसंयोगसंख्याधिकसंख्याकसंयोगघटितसंयुक्तसंयोगवन्मूर्तावच्छिन्नदिक्संयोगो यज्ञदत्ते विषयः। अतिरिक्तदिगनुपगमे तु तादृशमूर्तसंयोग एव तत्र विषयः। यज्ञदत्तात् देवदत्तोऽपर इत्यत्र तु यज्ञदत्तनिष्ठसंयुक्तसंयोगपरम्पराघटकसंयोगसंख्यान्यूनसंख्याकसंयोगघटितसंयुक्तसंयोगपरम्परावन्मूर्तावच्छिन्नदिक्संयोगस्तादृशमूर्तसंयोगो वा देवदत्ते विषयः। देवदत्तात् यज्ञदत्तः पर इति कालकृतपरत्वप्रत्यये कालनिष्ठदेवदत्तसंयोगावच्छेदकतपनपरिस्पन्दकूटावच्छिन्नकालसंयोगो यज्ञदत्ते विषयः। यज्ञदत्तात् देवदत्तोऽपर इत्यत्र तु कालनिष्ठयज्ञदत्तसंयोगावच्छेदकतपनपरिस्पन्दसंख्यान्यूनसंख्याकतपनपरिस्पन्दकूटावच्छिन्नकालसंयोगो देवदत्ते विषयः। ततश्च दिक्कृतपरत्वापरत्वे दूरत्वसामीप्यरूपे, कालकृतपरत्वापरत्वे ज्येष्ठत्वकनिष्ठत्वरूपे इति। कथं प्रत्यक्ष इति। संबन्धप्रत्यक्षे संबन्धिद्वयप्रत्यक्षस्य हेतुत्वादिति भावः। यादृशोपाध्यवच्छिन्नेति। संयुक्तसंयोगपरम्परावन्मूर्त-तपनपरिस्पन्दकूटरूपयादृशोपाध्यवच्छिन्नेत्यर्थः। परत्वापरत्वोत्पादको भवतामिति। परत्वापरत्वोत्पादकतया भवदभिमत इत्यर्थः। परमते परत्वापरत्वे प्रति दिक्कालविशेषसंयोगयोरसमवायिकारणत्वादिति भावः। व्यवहारविषय इति। परत्वापरत्वव्यवहारविषय इत्यर्थः। नातिप्रसङ्गगन्धोऽपीति। दिक्कालसंबन्धस्य परत्वापरत्वोभयव्यवहारविषयत्वे परत्वव्यवहारस्थले अपरत्वव्यवहारस्य अपरत्वव्यवहारस्थले परत्वव्यवहारस्य च प्रसङ्ग इत्येवंविधातिप्रसङ्गस्य नावकाश इत्यर्थः। उक्तरीत्या तत्तदुपाधिविशेषावच्छिन्नदिक्कालसंबन्धस्यैव तत्तद्व्यवहारविषयत्वादिति भावः। परापरेति। तद्वीत्यादिः। न्यूनाधिकव्यक्ति-

प्राक्त्वप्रत्यक्त्वादयः पूर्वोत्तरत्वादयो दिक्कालसंयोगमात्ररूपा निर्वाह्याः । तदत्र को नाम विशेषो दृष्टः, येन गुणान्तरकल्पने कुतूहलमत्रभवताम् ॥ परत्वापरत्वे विना संयुक्तसंयोगभूयस्त्वाल्पीयस्त्वयोरेव दुर्निरूपत्वमिति चेत्, तर्हि अन्योन्याश्रयः—व्यावृत्ततया निरूपितयोरेव तयोः परत्वापरत्वनिमित्तत्वम्, तदुत्पन्नाभ्यामेव परत्वापरत्वाभ्यां तन्निरूपणमिति ॥ अनिरूपितयोरेव

---

अधिकव्यक्त्याश्रितत्वं परत्वम्, न्यूनव्यक्त्याश्रितत्वमपरत्वं जातेरित्यर्थः। तथा परिमाणस्य परत्वं नाम अधिकदेशसंयोगा(संयोगसामानाधिकरण्या?)वच्छिन्नत्वम्, अपरत्वं न्यूनदेशसंयोगसामानाधिकरण्यावच्छिन्नत्वम्। ज्ञानस्य परत्वमधिकविषयत्वम्, न्यूनविषयत्वमपरत्वमित्यादिभिर्निर्वाहश्चेदित्यर्थः। पूर्वोत्तरत्वादय इति। पूर्वकालत्वोत्तरकालत्वादय इत्यर्थः ननु संयुक्तसंयोगभूयस्त्वाल्पत्वव्यञ्जकदिक्संयोगेन परत्वापरत्वयोर्नान्यथासिद्धिः सुवचा; परत्वापरत्वजनकत्वमन्तरेण संयुक्तसंयोगगतभूयस्त्वाल्पत्वयोर्दुर्निरूपत्वादिति शङ्कते परत्वापरत्वे इति। व्यावृत्ततया निरूपितयोरेवेति। कुलालो यावत् दण्डं इतरव्यावृत्ततया न जानाति, न तावत् तदुपादत्ते, घटोत्पादने व्यापारयति वा। अतो व्यावृत्ततया ज्ञातयोरेवोत्पादकत्वमिति भावः। तदुत्पन्नाभ्यामिति। यद्यपि दण्डादौ घटोत्पत्तेः प्रागेव घटजननस्वरूपयोग्यतामात्रेण इतरव्यावृत्ततया तन्निरूपणं सम्भवति, तथाऽपि फलोपधानाभिप्रायेणेदमुक्तमिति ध्येयम्। अनिरूपितयोरेवेति। न हि चक्षुरादीनां स्वस्वकार्यजनने निरूपणापेक्षा

---

वृत्तीत्यादि। जातेरधिकव्यक्तिवृत्तित्वं परत्वम्, न्यूनव्यक्तिवृत्तित्वमपरत्वम्; एवं परिमाणेऽधिकदेशसंयोगसामानाधिकरण्यं परत्वम्, न्यूनदेशसंयोगसामानाधिकरण्यमपरत्वम्। परिमाणस्य देशविशेषसंयोगरूपत्वे तु अधिकदेशसंयोगरूपत्वं परत्वं न्यूनदेशसंयोगरूपत्वमपरत्वम्। एवं ज्ञानेऽधिकविषयकत्वं परत्वं न्यूनविषयकत्वमपरत्वमित्येवं निर्वाह इति चेदित्यर्थः। न्यूनाधिकदिक्कालसंबन्धादिति। न्यूनाधिकत्वघटितोक्तोपाध्यवच्छिन्नदिक्कालसंबन्धादित्यर्थः। प्राक्त्वप्रत्यक्त्वादय इति। उदयाचलसंनिहितमूर्तावच्छिन्नदिक्संयोगः प्राक्त्वम्, तद्व्यवहितमूर्तावच्छिन्नदिक्संयोगः प्रत्यक्त्वम्, मेरुसंनिहितमूर्तावच्छिन्नदिक्संयोग उदक्त्वम्, तद्व्यवहितमूर्तावच्छिन्नदिक्संयोगो दक्षिणत्वमिति भावः। पूर्वोत्तरत्वादय इति। वर्तमानध्वंसप्रतियोगिवस्तववच्छिन्नकालसंयोगः पूर्वत्वम्, वर्तमानप्रागभावप्रतियोगिवस्त्ववच्छिन्नकालसंयोग उत्तरत्वम्। शब्दप्रयोगाधिकरणकालसंयोगो वर्तमानत्वमिति भावः। ननु संयुक्तपरम्पराघटकसंयोगभूयस्त्वाल्पीयस्त्वयोः प्रकारान्तरेण ज्ञातुमशक्यतया अतिरिक्तपरत्वापरत्वरूपकार्यबलादेव ज्ञातव्यतया अतिरिक्तपरत्वापरत्वाभ्युपगम आवश्यक इति शङ्कते परत्वापरत्वे इति। दुर्निरूपत्वमिति। ज्ञातुमशक्यत्वमित्यर्थः। व्यावृत्ततया निरूपितयोरेवेति। इतरव्यावृत्ततया ज्ञातयोरेवेत्यर्थः। परत्वापरत्वे प्रति संनिकर्षरूपव्यावृत्तिज्ञानस्यैव निमित्तकारणत्वात् अन्यथाऽतिप्रसङ्गादिति भावः। तदुत्पन्नाभ्यामेवेति। सन्निकर्षविप्रकर्षात्मकव्यावृत्तिज्ञानरूपनिमित्तकारणजन्यपरत्वापरत्वरूपकार्यजनकत्वेनैव संयुक्तसंयोगपरम्पराघटकसंयोगभूयस्त्वाल्पीयस्त्वयोर्ज्ञातव्यतयाऽन्योन्याश्रय इत्यर्थः। परत्वापरत्वोत्पत्तौ स्वरूपसतोरेव संयुक्तसंयोगघटकसंयोगभूयस्त्वाल्पीयस्त्वयोर्निमित्तत्वम्, न तु ज्ञातयोः

तयोरुत्पादकत्वमिति चेत्; तारानिशाकरादिष्वपि तथाप्रत्ययः स्यात्॥ दूरत्वेनान्तरालाग्रहणात् नैवमिति चेत्, त्यज तर्हि सत्तया कारकत्वम् (कारणत्वम्?)। तथाच सिद्धं नस्समीहितमिति। यत्तु प्रमेयसंग्रहे श्रीविष्णुचित्तैरुक्तम्—"दूरे कथमिति चेत्, तत्र कुशलमेव। द्युमणिगगनादीतरव्यावृत्तमेव हि रूपं परिमाणपृथक्त्वदेशकालकृतपरत्वापरत्वादि च इन्द्रिययोग्यं सर्वं सहैव ज्ञायते" इति—तदपि न तत्त्वान्तरपरम्; विशिष्टप्रतिसम्बन्धिमात्रपरमेव। वैशिष्ट्यस्य च अस्मदुक्तप्रक्रियया ऽप्युपपत्तेः उपादानमात्रस्य तत्त्वान्तरत्वप्रतिपादकत्वाभावात्। तथा हि तत्रैवमुक्तम्—"अन्धकारे स्थाणुपिशाचस्त्रीपुंसादिसंशयास्तदवान्तरा एव। नक्तं हि द्युमणिदीपमहीगगनस्वात्मादिव्या-

---

दृश्यते इति भावः। तारानिशाकरादिष्विति। "पूर्णे शतसहस्रे तु योजनानां निशाकरात्। नक्षत्रमण्डलं कृत्स्नमुपरिष्टात् प्रकाशते॥" इति निशाकरापेक्षया तारामण्डलस्य दविष्ठतया संयुक्तसंयोगभूयस्त्वसत्त्वात् तारामण्डल परं चन्द्रमण्डलमपरमिति प्रत्ययः स्यादित्यर्थः। दूरत्वेनेति। चन्द्रमण्डलतारामण्डलयोर्द्वयोरपि परस्परान्तरालाग्रहणादित्यर्थः। सिद्धं नस्समीहितमिति। अन्योन्याश्रयः स्यादेवेति भावः। ननु रूपतुल्यतया दिक्कालकृतपरत्वापरत्वादीनामपि श्रीविष्णुचित्तैः गुणत्वेन पृथक् परिगणनात् तद्विरोध इत्याशङ्क्य परिहरति यत्त्वित्यादिना। श्रीविष्णुचित्तैरुक्तमिति। प्रत्यक्षमात्रस्य इतरव्यावृत्तिविशिष्टविषयत्वसाधनावसर इति शेषः। कुशलमेवेति। तत्रापि व्यावृत्तिविशिष्टविषयत्वमस्त्येवेत्यर्थः। तदेवोपपादयति द्युमणीति। न हि कस्यचिदपि पुंसो दूरस्थितवृक्षादौ सूर्यगगनादिभ्रमो भवतीति भावः। उपादानमात्रस्येति। पृथक्परिगणनमात्रस्येत्यर्थः। स्त्रीपुंसादिसंशया इति। स्त्रीपुंसादिव्यावृत्तिसन्देहा इत्यर्थः; व्यावृत्तीनामेव प्रस्तुतत्वात्। तदवान्तरा एवेति। व्यावृत्त्यवान्तरसन्देहाः न तु व्यावृत्तिसामान्यसन्देहा इत्यर्थः। अन्ततो गत्वा स्वात्मव्यावृत्तिभानमावश्यकमित्याह न हि देहात्मेति।

---

तथाच नान्योन्याश्रय इति शङ्कते अनिरूपितयोरेवेति। तारानिशाकरादिष्वपि तथाप्रत्ययः स्यादिति। तारासु परत्वप्रत्ययः निशाकरे अपरत्वप्रत्ययश्च स्यादित्यर्थः। "पूर्णे शतसहस्रे तु योजनानां निशाकरात्। नक्षत्रमण्डलं कृत्स्नमुपरिष्टात् प्रकाशते" इति निशाकरापेक्षया तारामण्डलस्यात्यन्तदूरस्थतया तत्राधिकसंयोगघटितसंयुक्तसंयोगपरम्परासत्त्वेन परत्वोत्पत्तेः निशाकरेऽपरत्वोत्पत्तेश्चाऽऽवश्यकत्वेन विषयसद्भावादिति भावः। अन्तरालाग्रहणादिति। निशाकरतारामण्डलयोरन्तरालाग्रहणादित्यर्थः। सत्तया कारकत्वमिति। न्यूनाधिकसंयोगघटितसंयुक्तसंयोगपरम्परावन्मूर्तावच्छिन्नदिक्संयोगस्य ज्ञानाभावेऽपि स्वरूपसतः परत्वापरत्वजनकत्वमित्यर्थः। तथाचेति। परत्वापरत्वजनकतया तदुत्पत्तेः प्रागेवोक्तसंयोगभूयस्त्वाल्पीयस्त्वज्ञानस्याऽऽवश्यकत्वे चेत्यर्थः। सिद्धं नस्समीहितमिति। यादृशोपाध्यवच्छिन्नदिक्कालसंबन्धज्ञानं परत्वापरत्वजनकतया भवद्भिरङ्गीकृतम्, तादृशोपाध्यवच्छिन्नदिक्कालसंबन्धस्यैव परत्वापरत्वरूपत्वं सिद्धमित्यर्थः। ननु परत्वापरत्वादीनामपि रूपतुल्यतया श्रीविष्णुचित्तैः पृथक्परिगणनात् तद्विरोध इत्याशङ्क्य परिहरति यत्त्वित्यादिना। उक्तमिति। प्रत्यक्षमात्रस्येतरव्यावृत्तिविशिष्टविषयत्वसाधनावसर इति भावः। उपादानं पृथक्परिगणनम्। स्त्रीपुंसादिसंशया इति। स्त्रीपुंसादिव्यावृत्तिसंशया

वृत्तिरपि न ज्ञायत इति न शक्यं वक्तुम् । न हि देहात्मभ्रममन्तरेण कश्चित् द्रष्टृदृश्यसङ्करोऽप्यस्ति" इति । किमत्र पृथगुपादानमात्रेण स्थाणुपिशाचादयः पदार्थान्तरं भवन्ति । अस्तु वा परमतेन एकदेशिभेदेन वा व्यवहारः, तथापि विशिष्टोपलम्भनप्रतिपादनपरत्वात् न दोषः ॥

अथ कर्म । चलनप्रत्ययविषयः कर्म । तत् प्रत्यक्षमेव ; करतलादिषु तथोपलम्भात् । न त्वनुमेयम् ; तदसिद्धिप्रसङ्गात् । कार्यस्योभयाभ्युपेतकर्मसामग्रीमात्रेणैवोपपत्तेः । अतिप्रसङ्गाच्च । कार्येण हि गिरिजलधरसंयोगेन गिरावपि कर्म कल्प्येत ॥ अन्यतरकर्मजनितोऽयं संयोग इति चेत् ; तत् केन सिद्धम्? तत्रापि जलधरकर्मजनितोऽयमिति नियमश्च कुतः सिद्धः ? ॥ जलधरशिखरिणोश्चलाचलरूपेण प्रतीतेरिति चेत्, तर्हि सिद्धं नः समीहितम् ॥ विभागपूर्वकेण संयोगेन कर्मानुमानमिति चेत् ; तर्हि जलधरान्तरेण विभज्यमाने जलधरान्तरेण संयुज्यमाने

---

आत्मभ्रमो देह एव भवति ; न तु दृश्यान्तरे क्वापि । न हि पुरोवर्तिवस्त्वहं वा न वेति कस्यचित् कदाचिदपि सन्देह उपलब्धचर इति भावः । स्थाणुपिशाचादय इति । स्थाणुपिशाचादिव्यावृत्तय इत्यर्थः । पुरोवर्तिनिष्ठस्य पुरुषत्वस्यैव स्थाणुव्यावृत्तिरूपत्वात् पिशाचादिव्यावृत्तिरूपत्वाच्चेति भावः । ननु स्थाणुपिशाचादीनामेव शब्दतः परिगणनात् शब्दतः परिगणितानाञ्च पार्थक्यदर्शनात् परत्वापरत्वयोरपि पृथक्परिगणनं भेदसाधकमेवेत्यस्वरसादाह अस्तु वेति । विशिष्टोपलम्भनप्रतिपादनपरत्वादिति । व्यावृत्तिविशिष्टोपलम्भनप्रतिपादनपरत्वादित्यर्थः ॥ इति परत्वापरत्वे ॥

तथोपलम्भादिति । करतलं चलतीति प्रत्यक्षतयोपलम्भादिति भावः । तदसिद्धीति । कर्मासिद्धीत्यर्थः । ननु विभागसंयोगादिलक्षणकार्योपलम्भात् कर्मानुमीयतामित्यत्राह कार्यस्येति । अतिप्रसङ्गमेवोपपादयति कार्येण हीति । अन्यतरकर्मजनित इति । अन्यतरकर्मजनितोऽयं संयोगोऽन्यतरस्मिन्नेव कर्मानुमापयति, नोभयत्रेति भावः । नियमश्च कुतः सिद्ध इति । पर्वतकर्मजनित एव वा किं न स्यादिति भावः । चलाचलरूपेणेति । जलधरस्य चलतया शिखरिणश्चाचलतयेत्यर्थः । सिद्धं नः समीहितमिति । प्रत्यक्षस्याङ्गीकृतत्वादिति भाव. । विभागपूर्वकेणेति । पूर्वदेशविभागोत्तरदेशसंयोगयोर्जलधर एव सत्त्वेन विभागपूर्वकसंयोगो जलधर एवेति भावः । संयुज्यमान इति ।

---

इत्यर्थः । स्थाणुपिशाचादय इति । स्थाणुपिशाचादिव्यावृत्तय इत्यर्थः । विशिष्टोपलम्भनप्रतिपादनपरत्वादिति । व्यावृत्तिविशिष्टोपलम्भप्रतिपादनपरत्वादित्यर्थः गुणभेदप्रतिपादनैदम्पर्यविरहादिति भावः।

तथोपलम्भादिति । चलनं साक्षात्करोमीति चलनज्ञानस्य प्रत्यक्षत्वेनैवोपलम्भादित्यर्थः । तदसिद्धीति । कर्मासिद्धीत्यर्थः । ननु विभागसंयोगादिरूपकार्यबलेन कर्मानुमितिः स्यादित्यत्राह कार्यस्येति । अतिप्रसङ्गमेवोपपादयति कार्येण हीति । अन्यतरकर्मजनितोऽयं संयोग इति । तथाचैकत्रैव कर्मानुमापयेत्, नोभयत्रेति भावः । नियमश्च कुतस्सिद्ध इति । पर्वतकर्मजनित एव किं न स्यादिति भावः । चलाचलेति । जलधरस्य चलतया पर्वतस्याचलतयेत्यर्थः । समीहितमिति । कर्मप्रत्यक्षत्वरूपमिष्टमित्यर्थः । विभागपूर्वकेण संयोगेनेति । तस्य जलधर एव सत्त्वादिति भावः ।

कर्मानुमानं स्यात् । यदि च कार्येण जातेन प्रतीतेन व्याप्यतयाऽनुसंहितेन च कर्मानुमानम्—चलतीति वर्तमानबोधो न स्यात्, चिरनिर्वृत्तत्वात् तस्य । अस्माकं तु सत्ताक्षण एवेन्द्रियेण संबध्यते ; तावतैव च पदार्थान्तरेऽनवाप्यपि वर्तमानप्रत्ययोपपत्तिः ।

तदेवं प्रत्यक्षयोग्येषु प्रायशः प्रत्यक्षः चलतिधीविषयः । स च संप्रतिपन्नविभागपूर्वकसंयोगमात्ररूपो वा, तत्कारणभूतोऽन्यो वेति सयूथ्यविवादः । तत्रैवमेकः पक्षः—कर्महेतुतयैवाभ्युपगतैः प्रयत्नादृष्टादिभिः कर्मजन्यतयाऽभ्युपगतविभागपूर्वकसंयोग एव जन्यताम् ; न च मध्ये किमपि विशदमुपलब्धम्, येन गौरवपरिहारः स्यात् । चन्द्रतारकादीनां विभागपूर्वकसंयोगदृष्टावपि संयोगसन्ताननैरन्तर्याप्रतीतेः चलतीति प्रत्ययाभावः । यथा भ्रमणे सत्यपि प्रत्येकं कर्मक्षणेषु न भ्रमतीति प्रत्ययः, किं तु निरन्तरतयाऽनुसन्धीयमानेष्विति भवद्भिरपि स्वीकार्यम्—तथाऽत्रापि सन्तोष्टव्यम् । न च कर्मणा संयुज्यत इति पृथग्व्यपदेशात् भेदसिद्धिः ; कर्मशब्दनिर्दिष्टस्य

---

पर्वत इति शेषः । दूषणान्तरमाह यदि चेति । जातेन प्रतीतेन व्याप्यतयाऽनुसंहितेनेति क्षणत्रयविलम्बः कथ्यते । प्रतीतेन=स्वरूपतः प्रतीतेनेत्यर्थः । लिङ्गप्रतीत्यनन्तरभावित्वात् व्याप्यत्वानुसन्धानस्येति द्रष्टव्यम् । कर्मानुमानमिति । अस्यानन्तरं तर्हीति शेषः । अस्माकं त्विति । प्रत्यक्षवादिनामित्यर्थः । चलतिधीविषय इति । चलनमित्यर्थः । तत्कारणभूतोऽन्यो वेति । विभागपूर्वकसंयोगहेतुभूतो नैयायिकाभिमतः कर्माख्यः पदार्थो वेत्यर्थः । स्वाभिमतं पक्षमाह तत्रेति । ननु पूर्वदेशविभागपूर्वकोत्तरदेशसंयोगस्यैव न चलनरूपत्वम् ; चन्द्रतारकादौ तद्दृष्टावपि चलतिप्रत्ययादर्शनादित्याशङ्क्य न पूर्वदेशविभागपूर्वकोत्तरदेशसंयोगमात्रं चलतिप्रत्ययविषयः ; अपि तु उत्तरदेशसंयोगनिरन्तरपरम्परैव चलतिप्रत्ययवेद्या ; चन्द्रतारकादौ च दूरत्वदोषवशात् न तत्प्रत्यय इत्यभिप्रयन् आह चन्द्रतारकादीनामिति । एकस्यैव संयोगस्य न चलतीति प्रत्ययविषयत्वम् ; अपि तु तत्सन्तानस्यैवेत्येतत् दृष्टान्तेनोपपादयति यथा भ्रमणे सत्यपीति । प्रत्येकं कर्मक्षणेष्विति । एकस्मिन् देशे भ्रमति पुरुषे प्रतिक्षणं चलनक्रियामात्रोपलम्भेऽपि न भ्रमतिप्रत्ययः ; अपि तु निरन्तरतयाऽनुसन्धीयमानेषु

---

संयुज्यमान इति । पर्वत इति शेषः । दूषणान्तरमाह यदि चेति । जातेनेत्यादिना क्षणत्रयविलम्बः कथ्यते । प्रतीतेनेति । स्वरूपतः प्रतीतिर्विवक्षिता । लिङ्गज्ञानानन्तरमेव हि व्याप्तिस्मरणमिति भावः । ननु पूर्वदेशविभागपूर्वकोत्तरदेशसंयोगस्यैव चलतीति प्रत्ययविषयत्वे चन्द्रतारकादिषु पूर्वदेशविभागपूर्वकोत्तरदेशसंयोगसत्त्वात् चलतीति प्रत्ययप्रसङ्ग इत्याशङ्क्य, 'न केवलं पूर्वदेशविभागपूर्वकसंयोग एव चलतिप्रत्ययविषयः, किन्तु नैरन्तर्यविशिष्टोत्तरोत्तरदेशसंयोगपरम्परैव ; ततश्च चन्द्रतारकादौ दूरत्वदोषवशान्नैरन्तर्याप्रतीत्या न चलतीति प्रत्ययः' इति समाधत्ते चन्द्रतारकादीनामिति । एकैकस्य प्रत्येकं चलतीति प्रत्ययागोचरत्वेऽपि नैरन्तर्यविशिष्टसमुदायघटकत्वेनानुसन्धीयमानस्य तादृशप्रतीतिगोचरत्वमुपपद्यत एवेतीममर्थमनुगुणदृष्टान्तेनोपपादयति यथेति । प्रत्येकं कर्मक्षणेष्विति । भ्रमति वस्तुनि प्रतिक्षणं चलनक्रियामात्रोपलम्भेऽपि न भ्रमतीति प्रत्ययः ; अपितु निरन्तरतयाऽनुसन्धीयमाने गमनक्रियासमुदाय एव तथाप्रत्यय इत्यर्थः । पूर्वसंयोगविश्लेषस्येति । पूर्वसंयोगनाशस्येत्यर्थः ।

**पूर्वसंयोगविश्लेषस्यैवोत्तरसंयोगारम्भकत्वात् भेदव्यपदेशोपपत्तेः । न चोत्तरसंयोगे स्थिरे वर्तमाने यावत्तद्विनाशकालं चलतीति प्रत्ययप्रसङ्गः ; विभागपूर्वकसंयोगारम्भक्षणमात्रस्य क्षणिकनिरन्तरतत्सन्तानस्य वा कर्मत्वात् ।**

---

गमनक्रियासन्तानविशेषेष्वेवेति भावः । **यावत्तद्विनाशकाल**मिति । "यावदवधारणे" इति नित्योऽव्ययीभावसमासः। **तद्विनाशकालं यावत्** इति क्वचित् पठ्यते । तत्र **यावदि**त्येतत् वाक्यालङ्कारे । **तद्विनाशकालः**=तद्विनाशपूर्वकालः । "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया । संयोगविनाशात् पूर्वं सदा

---

**यावत्तद्विनाशकाल**मिति । 'यावदवधारणे' इत्यव्ययीभावः । **तद्विनाशकालं याव**दिति क्वचित् पाठः । तत्र विभागनिरूपणोक्तरीत्या यावच्छब्दयोगे, 'ततोऽन्यत्रापि दृश्यते' इति द्वितीया बोध्या । तत्र मर्यादार्थकयावच्छब्दयोगे द्वितीया तु, 'आरभ्य तस्यां दशमीञ्च यावत् प्रपूजयेत्', 'काशीतः कौशिकीं यावद्गच्छति' इत्यादौ दृश्यते । प्रकृते च तद्विनाशकालस्य मर्यादात्वं लभ्यते । तच्चोत्तरसंयोगप्रागभावानधिकरण-स्वप्रागभावाधिकरणयावत्कालवृत्तिप्रत्ययरूपक्रियानधिकरणत्वम् । एतादृशमर्यादात्वनिरूपकत्वञ्च समभिव्याहृतक्रियायां यावच्छब्देन बोध्यते । तन्निष्ठमर्यादात्वनिरूपकत्वञ्च तदवृत्तित्वे सति उत्तरसंयोगप्रागभावानधिकरणस्वप्रागभावाधिकरणकालव्यापकत्वम् । अत्र च प्रागभाव एव यावत्पदार्थः । प्रतियोगित्वमनुयोगित्वं वा द्वितीयार्थः । तत्र च प्रकृत्यर्थकालस्याऽऽधेयतासंबन्धेन निरूपितत्वसंबन्धेन वाऽन्वयः । तावता तद्विनाशकालप्रतियोगिकप्रागभावलाभः । तस्य च स्वप्रतियोग्यवृत्तित्व-स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसंबन्धावच्छिन्न - स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वोभयसंबन्धेन समभिव्याहृतप्रत्ययरूपक्रियायामन्वयः । स्वाधिकरणत्वञ्चोत्तरसंयोगप्रागभावावच्छिन्नभेदविशिष्टकालिकविशेषणतासंबन्धेन । तथाचोत्तरसंयोगोत्पत्तिक्षणमारभ्य तद्विनाशात् पूर्वं सदा, चलतीति प्रत्ययप्रसङ्ग इति भावः । **संयोगारम्भक्षणमात्रस्ये**ति । उत्पत्तिकालावच्छिन्नसंयोगस्येत्यर्थः । **क्षणिकनिरन्तरतत्सन्तानस्ये**ति । तृतीयक्षणवृत्तिध्वंसप्रतियोगिनिरन्तरसंयोगसमुदायस्येत्यर्थः । यद्यपि तादृशसमुदायत्वावच्छिन्नस्यैकदाऽभावात् 'इदानीं चलति' इति प्रतीत्यनुपपत्तिः; तथापि तादृशसमुदायघटकस्यैव तादृशप्रतीतिविषयत्वाङ्गीकारान्न दोषः । तादृशसमुदायघटकत्वञ्च स्वरूपसंबन्धेन तादृशसमुदायत्वाश्रयत्वमेव । तथाच स्वाश्रयाव्यवहितत्वशून्यावृत्ति - क्षणत्रयवृत्त्यवृत्ति - व्यधिकरणद्वयावृत्तिसमुदायत्वाश्रयः संयोग एव चलतिप्रत्ययविषय इति फलितम् । अत्र च व्यवहितसंयोगघटितसमुदायमादाय चलतिप्रत्ययवारणाय समुदायत्वे प्रथममवृत्त्यन्तं विशेषणम् । तदर्थञ्च स्ववृत्तिभेदप्रतियोगितावच्छेदकत्व-स्ववृत्तित्वोभयसंबन्धेन किञ्चिद्विशिष्टान्यत्वम् । अवच्छेदकत्वञ्च साश्रयविशिष्टत्वरूपस्वाश्रयाव्यवहितत्वसंबन्धेन । वैशिष्ट्यञ्च स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदद्वयवत्त्वसंबन्धेन । एकप्रतियोगितावच्छेदकता स्वप्रागभावाधिकरणसमयप्रागभावाधिकरणत्वसंबन्धावच्छिन्ना । अपरभेदप्रतियोगितावच्छेदकता स्वध्वंसाधिकरणसमयध्वंसाधिकरणत्वसंबन्धावच्छिन्ना । चिरस्थायिसंयोगसमुदायमादाय तादृशप्रतीतिवारणाय द्वितीयम् अवृत्त्यन्तम् । क्षणत्रयवृत्तित्वञ्च स्ववृत्तित्व - स्वध्वंसाधिकरणसमयध्वंसाधिकरणसमयवृत्तित्वोभयसंबन्धेन

उक्तञ्च न्यायतत्त्वे प्रथमाधिकरणे—"यदि गमनपचनादीनां क्षणिकत्वं ज्ञायेत, न हि ते क्षणिकाः—संयोगवियोगविशेषत्वात् तेषाम्" इत्यादि। द्वितीयाधिकरणे चोक्तम्—गमनं नाम देशाद्देशान्तरप्राप्तिः" इति। प्रमातृपादे प्रसङ्गेनोक्तम्—"वयं तु क्रियायाः प्रत्यक्षत्वं ब्रूमः" इत्युपक्रम्य, "तस्मात् देशाद्देशान्तरप्राप्तिर्लिङ्गमिति [1]न मन्यामहे, अपितु तदेव तदिति मन्यामहे; कल्पनालाघवात्" इत्यादि। यत्तु भट्टपराशरपादैरुक्तम्—"इन्द्रियैरर्थमाणत्वात् ज्ञायमानोऽर्थ उच्यते। द्रव्यं जातिर्गुणः कर्मेत्यसावर्थश्चतुर्विधः॥" इति, तथा "जातिगुणकर्मसु सामान्यसमाश्रयणे संयुक्तसमवेतसमवायसम्भवात्" इत्यादि—तत्तु एतैरेव अन्तर्भावितसामान्यपृथग्गणनवत्। अत एव हि तैरेवोक्तम्—"द्रव्यस्य धर्मिणोऽन्तरङ्गो धर्मविशेषो जातिः, जात्यनुप्राणितस्य विशेषकः सिद्धो धर्मविशेषो गुणः, तथाविधः साध्यः क्रिया, तद्धर्मकं द्रव्यमिति स्थविष्ठानि लक्षणानि। सौक्ष्म्येण तु विवेक्ष्यन्ते प्रमेयेषु" इति।

---

चलतिप्रत्ययप्रसङ्ग इत्यर्थः। गमनादिक्रियायाः संयोगरूपत्वे **न्यायतत्त्व**संमतिमाह **उक्तञ्चे**ति। **"यदि गमन"** इति शङ्का। **"न च ते क्षणिकाः"** इत्यादिना परिहारः। **लिङ्गमिति न मन्यामह** इति। **देशान्तरप्राप्तिः** कर्मणो **लिङ्गमिति न मन्यामहे; अपितु** यत् त्वदभिमतं लिङ्गं **तदेव** कर्मेति **मन्यामह** इत्यर्थः। गुणकर्मपार्थक्यप्रतिपादक**भट्टपराशरपाद**ग्रन्थविरोधं **परिहरति यत्त्वि**त्यादिना। **अर्थमाणत्वात्** = गम्यमानत्वादित्यर्थः। तद् व्याचष्टे **ज्ञायमान इति**। गत्यर्थाः ज्ञानार्था इत्यर्थः। **अर्थ उच्यत इति**। 'उषिकुषि' इत्यादिना औणादिके थन्प्रत्ययेऽर्थशब्दनिष्पत्तिरिति भावः। **अन्तर्भावितसामान्ये**ति। संस्थानविशेषादिष्विति शेषः। **पृथग्गणनव**दिति। परमताभिप्रायमिति शेषः। **अन्तरङ्ग इति**। यन्निरूपिते वस्तुनि प्रायशो विशेषाकाङ्क्षाशान्तिः सोऽन्तरङ्ग इत्यर्थः। **स्थविष्ठानीति**। अत्र लक्षणानां स्थविष्ठत्वोक्त्या अनभिमतत्वं गम्यते इति

---

समयविशिष्टत्वम्। व्यधिकरणतादृशसंयोगसमुदायमादाय तद्वारणाय तृतीयम्। तदर्थश्च स्ववृत्तित्वस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवद्वृत्तित्वोभयसंबन्धेन किञ्चिद्विशिष्टान्यत्वम्। स्वनिष्ठावच्छेदकता च स्वाधिकरणवृत्तित्वसंबन्धावच्छिन्ना।

गमनादिक्रियायाः संयोगरूपत्वे न्यायतत्त्वसंमतिमाह **उक्तञ्चे**ति। **यदिगमनेति** शङ्का, **नहि ते क्षणिका इत्यादिना** परिहारः। **तस्मादित्यादि**। देशान्तरप्राप्तिः कर्मणो लिङ्गमिति न मन्यामहे—अपितु सैव कर्मरूपेति मन्यामह इत्यर्थः। गुणकर्मभेदप्रतिपादक**भट्टपराशरपादग्रन्थ**विरोधं परिहरति **यत्त्वित्यादिना**। **अर्थमाणत्वात्**— गम्यमानत्वात्। **ज्ञायमानोऽर्थ उच्यत इति**। **उषिकुषिगार्ती**त्यादिना औणादिके थन्प्रत्यये अर्थशब्दनिष्पत्तिरिति भावः। **एतैरेवान्तर्भावितसामान्यपृथग्गणनवदिति**। भट्टपराशरपादैरेव संस्थानविशेषादिष्वन्तर्भावितस्य सामान्यस्य पृथग्गणनं यथा परमताभिप्रायम्, तथा कर्मपृथग्गणनमपीत्यर्थः। **अन्तरङ्ग** इति। यद्विशिष्टतया ज्ञाने सति प्रायशो विशेषा-

---

1 लिङ्गमिति। आदित्यो व्रज्यावान् पूर्वस्थितिदेशभिन्नदेशप्राप्तिमत्त्वादिति तार्किकाद्युक्तमनुमानं नेष्यते, साध्यस्यान्यस्याभावादिति भावः। अन्तिमसंयोगेन नैरन्तर्यविशिष्टपूर्वसंयोगपरम्परानुमानमिति चेत्—अस्तु तावत्।

अथान्यः पक्षः—न विभागपूर्वकसंयोग एव कर्म ; एकेन जलधरेण विभज्यमाने जलधरान्तरेण, तेन वा पुनस्संयुज्यमाने शिलोच्चये चलतीति प्रत्ययप्रसङ्गात् ॥ देशविभागसंयोगौ कर्मेति चेन्न ; महाप्रवाहपतितनिष्कम्पमकरे चलतीति प्रत्ययप्रसङ्गात् ॥ न प्रवाहो देशः, किं तु आकाशभूम्यादय इति चेत् [न?] ; देशप्रतीतिव्यवहारयोः तत्रापि समत्वात् । स्थिरदेशसंयोगविभागौ कर्मेति चेत् ; तर्हि स्थिरास्थिरविभागस्य संयोगाद्यतिरिक्तेन निर्वाह्यत्वात् [1]सिद्धमतिरिक्तं कर्मेति । उक्तञ्च मानयाथात्म्यनिर्णये प्रत्यक्षलक्षणानन्तरं वरदविष्णुमिश्रैः—"तच्च द्रव्यगुणकर्मविषयम् ; सकलपदार्थजातस्य त्रिष्वेवान्तर्भावात् । तत्र द्रव्यलक्षणं संयोगीति ; अकर्मासंयोगी गुण इति गुणलक्षणम्" इत्यादि । प्रत्यक्षत्वञ्च कर्मणोऽन्यत्रापि तैरुक्तम्—"कर्मणस्तु चाक्षुषद्रव्यवर्तिनश्चाक्षुषत्वम्" इत्यादिना ।

---

भावः । **प्रमेयेष्विति** । प्रमेयनिरूपणे इत्यर्थः । प्रमेयनिरूपणस्य च विच्छिन्नत्वात् सौक्ष्म्यश्च न विवेचितमिति द्रष्टव्यम् । **देशविभागेति** । पर्वतस्य स्वाधारदेश एव स्थिरत्वेन पूर्वदेशविभागाभावात् जलधरस्य च तदाधारदेशत्वाभावादिति भावः । **महाप्रवाहे** पूर्वपूर्वप्रवाहरूपदेशविभागस्यापि सत्त्वादिति भावः । **शङ्कते न प्रवाह इति** । **संयोगाद्यतिरिक्तेनेति** । चलनानाश्रयत्वं स्थिरत्वम्, चलनाश्रयत्वमस्थिरत्वमित्येवं संयोगविभागातिरेकेणैव निर्वक्तव्यत्वादिति भावः । इदञ्चोपलक्षणम्—**स्थिरदेशसंयोगविभागयोः कर्मत्वे** चलन्त्यामेकस्यां नावि चलत्सु विमानेषु वा स्थितानां तन्मध्यसञ्चारः कर्म न भवेत्, नौविमानादिलक्षणदेशस्यास्थिरत्वादित्यपि द्रष्टव्यम् । **तच्चेति** । **प्रत्यक्ष**मित्यर्थः । **त्रिष्वेवेति** । **द्रव्यगुणकर्मस्वेवे**त्यर्थः । **अकर्मेति** । **कर्म**भिन्न इत्यर्थः ; ततश्च कर्मव्यावृत्तिः । **असंयोगी**ति द्रव्यव्यावृत्तिः ।

---

कङ्कशान्तिः, सोऽन्तरङ्ग इति भावः । **स्थविष्ठानीति** । अत्यन्तस्थूलानीत्यर्थः । अतिव्याप्त्यादि संभवादिति भावः । **प्रमेयेष्विति** । प्रमेयनिरूपण इत्यर्थः । प्रमेयनिरूपणस्य विच्छिन्नत्वात् सौक्ष्म्यं न विवेचितमिति द्रष्टव्यम् । **देशविभागसंयोगाविति** । स्वाधारदेशप्रतियोगिकविभागविशिष्टसंयोगः कर्मेत्यर्थः । मेघस्य शिलोच्चयाधारत्वविरहात् न तद्विभागपूर्वकसंयोगस्य कर्मरूपताप्रसङ्ग इति भावः । **महाप्रवाहेति** । प्रवाहमध्ये निष्कम्पे मत्स्ये प्रागुपदर्शितक्षणिकसंयोगसन्तानस्य सद्भावात् तादृशसंयोगसन्तानस्य मत्स्याधारभूतजलरूपदेशप्रतियोगिकविभागपूर्वकत्वाच्चेति भावः । **शङ्कते न प्रवाह इति** । **संयोगाद्यतिरिक्तेनेति** । आदिना विभागपरिग्रहः । चलनानाश्रयत्वं स्थिरत्वम्, तदाश्रयत्वमस्थिरत्वमिति संयोगविभागातिरिक्तेनैव कर्मणा स्थिरत्वास्थिरत्वयोर्निर्वक्तव्यत्वादिति भावः । **इदञ्चोपलक्षणम्** ; स्थिरदेशसंयोगविभागयोः कर्मत्वे चलन्त्यां नावि चलत्सु विमानेषु वा स्थितानां तन्मध्यसञ्चारः कर्म न स्यात् ; नौविमानादिरूपदेशस्यास्थिरत्वादित्यपि द्रष्टव्यम् । न च प्रागुक्तसंयोगविशेषस्यैव कर्मरूपत्वे न काचिदनुपपत्तिः प्रवाहमध्यस्थितमकरस्य निष्कम्पत्वाभावादिति वाच्यम् ; प्रत्यक्षविरोधात् । प्रवाहमध्यप्रक्षिप्तकाष्ठादीनां पुरुषहस्तादिभिः प्रवाहेण नयनप्रतिरोधेन नैश्चल्ये सति तत्र चलतिप्रत्ययप्रसङ्गस्य

---

1 सिद्धमतिरिक्तमिति । स्वप्रतियोगिकविभुद्रव्यानुयोगिकसंयोगनाशविशिष्टः तदात्मको वा संयोगः कर्मेत्युक्तौ को दोष इति विमृश्यम् । इदं मनसिकृत्याऽऽह तच्चेत्यादि ।

तच्च संयोगाद्यतिरिक्तमनतिरिक्तं वाऽस्तु; तृतीयकोट्यनुप्रवेशो न युक्त इति वयं मन्यामहे—इष्टव्यतिरेकेण लक्षणकरणस्य सर्वत्र शक्यत्वात्। यत्र सामान्यवत्त्वे सति संयोगविभागकार्यद्वयाभावः स गुण इति चेन्न; यत्र तदुभयाभावः स्वोत्पादकसजातीयोत्पादकत्वतद्विजातीयत्वद्वयस्य चाभावः स गुण इति लक्षणकरणेन संस्कारस्यापि पृथक्करणप्रसङ्गात्।

---

**संयोगाद्यतिरिक्तमि**ति। इदं तु प्रौढिवादेनोक्तमिति द्रष्टव्यम्। [1]वस्तुतः संयोगे एवान्तर्भावः। न च **निष्कम्पमकरे** पूर्वदेशविभागपूर्वकसंयोगस्य सत्त्वात् **चलतीति प्रत्ययप्रसङ्ग** इत्युक्तमिति वाच्यम्; मकरस्य निष्कम्पत्वाभावात् अन्यथा प्रवाहमध्यपतितस्थूणादिवत् प्रवाहेण नयनप्रसङ्गादिति भावः। **तृतीयकोटी**ति। द्रव्यगुणातिरिक्तं पदार्थान्तरं कर्म नास्तीत्यर्थः। **इष्टव्यतिरेकेणे**ति। येषां यत्रान्त(यत्रानन्त?)र्भाव इष्टः, तान् पृथक्कृत्य **लक्षणस्य सर्वत्र कर्तुं शक्य**त्वादित्यर्थः। **सामान्यवत्त्व इ**ति। सामान्यादिव्यावृत्त्यर्थं **सामान्यवत्त्व** इति विशेषणम्। द्रव्यव्यावृत्त्यर्थं **संयोगविभागकार्यद्वयाभाव** इति। संयोगविभागरूपकार्यद्वयाजनकत्वं[2] तदर्थः। संयोगजसंयोगे संयोगस्यापि हेतुतया अव्याप्तिवारणार्थं संयोगविभागात्मककार्यद्वयाजनकत्वमित्युक्तम्। ततश्च संयोगविभागलक्षणकार्यद्वयजनकस्य कर्मण एतल्लक्षणलक्षितत्वाभावात् गुणबहिर्भावो वक्तव्य इति भावः। **यत्र तदुभयाभाव इ**ति। संयोगविभागरूपकार्यद्वयजनकत्वाभाव इत्यर्थः। **स्वोत्पादके**ति। **स्वोत्पादक**सजातीयावयविरूपजनके रूपादावव्याप्तिवारणार्थं **तद्विजातीयत्वद्वये**त्युक्तम्। **संस्कारस्यापी**ति। संस्कारो हि स्वोत्पादकानुभवजातीयं स्मरणमुत्पादयति, अथ च तद्विजातीयश्च भवतीति

---

दुर्वारत्वाच्च। **तृतीयकोट्यनुप्रवेश** इति। द्रव्यगुणातिरिक्तत्वमित्यर्थः। ननु, 'अकर्मसंयोगी गुणः' इति गुणलक्षणानुरोधात् कर्मणः पार्थक्यमित्यत आह **इष्टव्यतिरेकेणे**ति। **सर्वत्र शक्यत्वादि**ति। अकर्मारूपमसंयोगीति गुणलक्षणकरणेन रूपस्यापि पार्थक्यप्रसङ्ग इति भावः। कार्यवैलक्षण्यमादाय विभाग इत्यभिप्रायेण शङ्कते **यत्रे**ति। **सामान्यवत्त्व** इति। इदञ्च सामान्यादिव्यावृत्त्यर्थम्। द्रव्यव्यावृत्त्यर्थमाह **संयोगे**ति। संयोगजनकत्वविभागजनकत्वोभयाभाव इत्यर्थः। संयोगजसंयोगहेतौ संयोगे अव्याप्तिभिया संयोगाजनकत्वं नोक्तम्। एवं विभागजविभागे विभागस्य जनकतया विभागाजनकत्वमपि। उभयाभावस्तु तादृशसंयोगविभागयोरुभयोरप्यस्तीति नाव्याप्तिः। ततश्च संयोगविभागोभयजनके कर्मणि उक्तगुणलक्षणासंभवात् तस्य पार्थक्यमावश्यकमिति भावः। **यत्र तदुभयाभाव** इति। संयोगविभागरूपकार्यद्वयाभाव इत्यर्थः। संयोगजनकत्व-विभागजनकत्वोभयाभाव इति यावत्। इदञ्च कर्मवारणाय। **स्वोत्पादकेत्यादि**। स्वोत्पादकसजातीयोत्पादकत्व-स्वोत्पादकविजातीयत्वोभयाभाव इत्यर्थः। इदञ्च संस्कारबहिर्भावाय। भावनाख्यसंस्कारो ह्यनुभवजन्यः तत्सजातीयस्मृतिजनकः अनुभवविजातीयश्चेति

---

1 वस्तुत इति। अत एवाऽऽत्रेयो दशैवाद्रव्याणि गणितानि, कर्म च तत्रान्तर्भावितमिति भावः।

2 जनकत्वांशः मूलस्थकार्यपदलभ्यः। लक्षणमिदम्—"संयोगविभागयोरनपेक्षकारणं कर्म" इति कणादसूत्रलब्धम्।

एवमन्यदपि चिन्त्यम्। अतो द्रव्यमद्रव्यमित्येव विभागः॥

अथ सामान्यं चिन्त्यते। नित्यमेकमनेकसमवायि सामान्यमिति वैशेषिकादयः। तथा हि— अनेकेष्वेकप्रतीतिव्यहारो न निमित्तमन्तरेणोपपद्यते। तच्च न ज्ञानाकारः; आत्मख्यातिभङ्गात्,

---

तस्यापि पृथक्करणप्रसङ्ग इत्यर्थः। एवमन्यदपीति। अकर्मासंयोगीत्यादिकं कर्मव्यावर्तकविशेषणकं तल्लक्षणं सर्वं दूष्यमित्यर्थः॥ इति कर्म॥

नित्यमिति। संयोगादिव्यावृत्त्यर्थं नित्यमित्युक्तम्। आकाशादिगतपरिमाणादिव्यावृत्त्यर्थं अनेकसमवायीत्युक्तम्। एकप्रतीतीति। एकाकारप्रतीतीत्यर्थः। प्रतीतिसहितो व्यवहारः प्रतीतिव्यवहारः। अतो नैकवचनानुपपत्तिः। ननु प्रतीतिव्यवहारालम्बनतया सिध्यतो वस्तुनो योगाचारनीत्या ज्ञानाकारत्वं वा माध्यमिकनीत्या असत्त्वं वाऽस्त्वित्याशङ्कां पराचष्टे तच्चेत्यादिना। न ज्ञानाकार इति। योगाचारा हि बाह्यार्थशून्यतामभ्युपयन्ति। ते किलैवं मन्यन्ते—घटादिप्रत्ययस्य बाह्यार्थविषयत्वं वदता किं बाह्यपरमाणुसङ्घातस्य विषयत्वमभ्युपेयते, उत तदतिरिक्तस्यावयविनः? नान्त्यः; अवयविनो दुर्निरूपत्वात्। नाद्यः; संहन्यमानातिरिक्तसङ्घातस्याभावात्, संहन्यमानानाञ्च परमाणूनां सूक्ष्मत्वेन स्थूलत्वैकत्वालम्बनप्रत्ययविषयत्वायोगात् स्थूलत्वादीनां ज्ञानाकारत्वस्य चावश्याभ्युपगन्तव्यत्वाभावात्। तुल्यन्यायतया घटत्वादिकमपि ज्ञानधर्म एवेति ज्ञानातिरिक्तो घटादिलक्षणो बाह्यपदार्थो नास्त्येव। नीलादिलक्षणबाह्यपदार्थस्य ज्ञानस्य च सहोपलभ्यमानतया तयोरभेदस्य वक्तव्यत्वाच्च। यत् येन सहोपलभ्यते न तत् ततो भिद्यते—यथा एकस्माच्चन्द्रमसो द्वितीयः चन्द्रमाः। न हि भिन्नयोरश्विनोः?(रश्म्यश्विनोः?) सहोपलम्भनियमो दृष्टचरः। किञ्च यः प्रत्ययः, स सर्वोऽपि बाह्यार्थशून्यः; स्वप्नप्रत्ययवदिति। ततश्च तद्रीत्या सामान्यमपि ज्ञानाकार एवेत्याशङ्कां निराकरोति तच्च न ज्ञाना

---

तस्योक्तोभयवत्त्वमेवास्तीति तदुभयाभावासंभवात् तद्बहिर्भावः। एवं वेगाख्यसंस्कारस्यापि कर्मजन्यतया कर्मजनकतया कर्मविजातीयतया चोक्तोभयवत्त्वमेवेति तद्बहिर्भावः। एवं स्थितस्थापकस्यापि कटादिसंकोचजन्यतया तज्जनकतया तद्विजातीयतया चोक्तरीत्या बहिर्भावः। अत्र स्वोत्पादकसजातीयोत्पादकत्वाभावमात्रोपादाने कपालरूपादिष्वव्याप्तिः; स्वोत्पादककपालिकारूपसजातीयघटरूपोत्पादकत्वात्। अतः स्वोत्पादकविजातीयत्वोपादानम्। कपालरूपस्य कपालिकारूपविजातीयत्वाभावादुक्तोभयाभावोपपत्तिः। यद्यपि कपालरूपस्यापि स्वोत्पादककपालादिविजातीयत्वमस्त्येव; तथापि स्वजन्यत्व–स्वसजातीयोत्पादकत्व–स्वविजातीयत्वैतत्त्रितयसंबन्धेन किञ्चिद्विशिष्टान्यत्वस्यैव विवक्षिततया न कश्चिद्दोषः। एवमन्यदपीति। यत्र तदुभयाभावश्चाक्षुषाजनकत्वञ्च स गुण इत्येवं लक्षणकरणेन रूपपार्थक्यं स्यादित्यर्थः।

नित्यमिति। संयोगादिवारणायेदम्। अनेकसमवायीति। अनेकसमवेतमित्यर्थः। इदञ्च गगनादिपरिमाणवारणाय। एकप्रतीतीति। एकाकारप्रतीतीत्यर्थः। प्रतीतिसहितो व्यवहारः प्रतीतिव्यवहारः। ननु प्रतीतिव्यवहारालम्बनतया सिध्यतो वस्तुनो योगाचाररीत्या ज्ञानाकारत्वमेव स्यादित्याशङ्क्याह तच्चेति। न ज्ञानाकार इति। [ज्ञानेऽध्यस्तस्तत्तादात्म्यापन्नोऽपरमार्थरूप इति योगाचारो-

अर्थे च प्रवृत्त्यनुपपत्तेः। भेदाग्रहस्य चायोगात्। नाप्यलीकम्; असत्ख्यातिभङ्गात्। तथाप्रतीतौ च प्रवृत्त्यनुपपत्तेः। अतथाप्रतीतौ अन्यथाख्यातिप्रसङ्गात्। सदसदादिविकल्पितस्य भेदस्य

---

कार इति। आत्मख्यातिभङ्गादिति। "नाभाव उपलब्धेः", "वैधर्म्याच्च न स्वप्नादिवत्", "न भावोऽनुपलब्धेः" इत्यादिसूत्रभाष्यादिष्विति शेषः। ननु न बाह्यार्थापलापं वर्णयामः, सामान्यं तु ज्ञानाकार इत्येतावदभिदध्महे; अनेकसमवेतस्य नित्यस्यैकस्यासम्भवात् इत्याशङ्क्याह अर्थे चेति। रजतार्थिननो रजतत्वाश्रय एव प्रवृत्तेस्तदनाश्रयेऽर्थे प्रवृत्तिर्न स्यादित्यर्थः। ननु बाह्यार्थस्य रजतत्वानाश्रयत्वेऽपि रजतत्वाश्रयज्ञानभेदाग्रहादर्थे प्रवृत्तिरुपपद्यत इति शङ्कां निराकरोति भेदाग्रहस्य चेति। अयोगादिति। इदमहं वेद्मीति ग्राह्यग्राहकसंवित्तीनां भेदेनैवोपलम्भादिति भावः। अळीकमिति। अत्यन्तासदित्यर्थः। किञ्च अळीकमपि सामान्यं किमलीकत्वेन भासते, उत तात्त्विकत्वेन भासते इति विकल्प्य दूषयति तथाप्रतीताविति। रजतत्वादेः अत्यन्तासत्त्वेन प्रतीतावित्यर्थः। अतथाप्रतीताविति। असतः सत्त्वेन प्रतीतावित्यर्थः। ननु अळीकेऽपि सामान्ये सद्भेदाग्रहात् प्रवृत्तिरुपपद्यते; एवञ्च नान्यथाख्यातिः, नापि प्रवृत्त्यनुपपत्तिरित्याशङ्क्य, किमळीके सतो भेदस्याग्रहः, उत असतो वा? नाद्यः; अलीकनिष्ठभेदस्य सत्त्वासम्भवात्। न द्वितीयः; सद्भेदस्यासत्त्वे सत्त्वप्रसङ्गात्। न च त्वन्मतेऽपि एष दोषः समान इति वाच्यम्; अस्मन्मतेऽळीकस्य ज्ञानप्रवृत्तिविषयत्वादीनामनभ्युपगमात्। ततश्च द्विरूपस्यापि भेदस्यालीके वक्तुमशक्यत्वात् तद्भेदाग्रहात् प्रवृत्तिरनुपपन्नेत्यभिप्रयन् आह सदसदादिविकल्पितस्येति। घटत्वं नाम अघटव्यावृत्तिः पटत्वं नाम

---

करीतिर्न संभवतीत्यर्थः। किन्तु ज्ञानादत्यन्तभिन्नः परमार्थरूप इति भावः। आत्मख्यातिभङ्गादिति। प्रत्यक्षादिविरोधेन घटादीनां ज्ञानाकारत्वासंभवस्य, "नाभाव उपलब्धेः" इत्यादिसूत्रभाष्यादौ स्थापितत्वादिति भावः। ननु न हि वयं बाह्यार्थमात्रमेव नास्तीति वदामः; किन्तु सामान्यं ज्ञानाकार इत्येव। अनेकसमवेतस्य नित्यस्यैकस्यासंभवादित्यत आह अर्थेचेति। ज्ञानादत्यन्तभिन्ने रजतादिरूपार्थे इत्यर्थः। प्रवृत्त्यनुपपत्तेरिति। रजतार्थिनो रजतत्वाश्रय एव प्रवृत्तिसंभवेन तदनाश्रयेऽर्थे प्रवृत्त्यसंभवादित्यर्थः ननु बाह्यार्थस्य रजतत्वानाश्रयत्वेऽपि रजतत्वाश्रयज्ञानभेदाग्रहादर्थे प्रवृत्त्युपपत्तिरित्यत आह भेदाग्रहस्येति। अयोगादिति। इदमहं जानामीति ग्राह्यग्राहकसंवित्तीनां भेदेनैवोपलम्भादिति भावः। ननु तथापि माध्यमिकरीत्या असत्त्वमेव स्यादित्याशङ्क्याह नापीति। अळीकमिति। असद्रूपमित्यर्थः। असत्ख्यातिभङ्गादिति। प्रत्यक्षादिविरोधादिति भावः। किञ्चालीकं किमलीकत्वेन भासते, उत तात्त्विकत्वेनेति विकल्पमभिप्रेत्य आद्ये दूषणमाह तथाप्रतीताविति। रजतत्वादेरत्यन्तासत्त्वेन प्रतीतावित्यर्थः। अतथाप्रतीतौ=असतस्सत्त्वेन प्रतीतौ। नन्वळीकेऽपि सामान्ये सद्भेदाग्रहात् प्रवृत्तिरुपपद्यते; अतो नान्यथाख्यातिः; न वा प्रवृत्त्यनुपपत्तिरित्याशङ्क्य किमळीके सतो भेदस्याग्रहः, उतासतः? नाद्यः; अळीकनिष्ठभेदस्य सत्त्वासंभवात्। न द्वितीयः; सद्भेदस्यासत्त्वे सत्त्वप्रसङ्गात्। न च भेदः सदसदात्मक इति शक्यं वक्तुम्; विरोधात्। न च त्वन्मतेऽप्येष दोषः समान इति

अनुपपत्त्या तद्ग्रहस्याप्रयोगात् । नाप्यपोहात्मकम्; विधिरूपेणैव प्रतीतेः; पूर्ववत् प्रवृत्त्यनुपपत्तेश्च । एतदन्यतया अन्यस्मिन्, तदन्यतया चास्मिन् निरूप्यमाणे अन्योन्याश्रयणात् । निष्प्रतियोगिकापोहस्य चायोगात् । तदितरापोह इत्यत्र तच्छब्देन व्यक्त्युपादाने व्यक्त्यन्तरस्य वैजात्यप्रसङ्गेनाननुगतिप्रसङ्गात्, तज्जातीयत्वेनोपादाने जातिस्वीकारात् । नापि संस्थान-

---

अघटव्यावृत्तिरित्यन्यापोहलक्षणैव जातिरिति बौद्धैरङ्गीकृतम्; तत् प्रतिक्षिपति **नाप्यपोहात्मकमिति** । **विधिरूपेणेति** । घटत्वादिलक्षणभावरूपेणेत्यर्थः । **पूर्ववदिति** । घटार्थिनो घटत्वप्रकारकप्रतीतिविशेष्य एव प्रवृत्तेरुचितत्वादिति भावः । ननु न घटार्थिनस्तत्र **प्रवृत्त्यनुपपत्तिः**, अघटव्यावृत्त्यतिरिक्तघटत्वस्याभावादित्यस्वरसादाह **एतदन्यतयेति** । घटज्ञानं अघटज्ञानमपेक्षते, अघटज्ञानञ्च घटज्ञानमित्यन्योन्याश्रयणमित्यर्थः । **निष्प्रतियोगिकापोहस्येति** । अपोहप्रतियोगिनोऽघटस्यापि घटरूपप्रतियोगिनिरूप्यत्वेन सप्रतियोगिकतया अन्योन्याश्रयावश्यम्भावात् इति भावः। **अननुगतिप्रसङ्गादिति**।

---

वाच्यम्; असन्मतेऽलीकस्य ज्ञानप्रवृत्तिविषयत्वादीनामनभ्युपगमात् । ततश्चालीके भेदस्य दुर्निरूपतया भेदाग्रहात् प्रवृत्तिर्दुरुपपादेत्यभिप्रयन् आह **सदसदादीति** । घटत्वं नामाघटव्यावृत्तिः, एवं पटत्वमपटव्यावृत्तिरित्यन्यापोहलक्षणैव जातिरिति बौद्धैरङ्गीकृतम्; तन्निरस्यति **नापीति** । **विधिरूपेणेति** । भावरूपेणेत्यर्थः । **पूर्ववदिति** । घटार्थिनो घटत्वप्रकारेणोपस्थित एव प्रवृत्तिसंभवादिति भावः । नन्वेतदनुपपन्नम्; अघटव्यावृत्त्यतिरिक्तघटत्वस्याप्यभावादित्यत आह **एतदन्यतयेति** । घटत्वस्याघटव्यावृत्तिरूपत्वे घटत्वेन घटज्ञाने अघटज्ञानस्य, अघटज्ञाने प्रतियोगिज्ञानमुद्रया घटज्ञानस्य चापेक्षणादन्योन्याश्रयणमित्यर्थः । नन्वन्यापोहो निष्प्रतियोगिकभेदरूप एवेति न तज्ज्ञानेऽन्यज्ञानापेक्षेत्यत आह **निष्प्रतियोगिकापोहस्येति** । निष्प्रतियोगिकभेदस्येत्यर्थः । **अयोगादिति** । भेदस्य सप्रतियोगिकत्वनियमादिति भावः । **व्यक्त्युपादान इति** । एकव्यक्त्युपादान इत्यर्थः । व्यक्त्यन्तरस्य **वैजात्यप्रसङ्गेनेति** । एकव्यक्तीतरभेदस्य घटत्वजातिरूपत्वे तस्य व्यक्त्यन्तरेऽभावात् तस्य घटत्वासंभवप्रसङ्ग इत्यर्थः । ननु तत्तद्व्यक्तीतरभेदानां सर्वेषामेव घटत्वरूपतया न व्यक्त्यन्तरस्य वैजात्यप्रसङ्ग इत्यतः **अननुगतिप्रसङ्गादि**त्युक्तम् । अनुगतप्रतीतिनिर्वाहकानुगतधर्माभावप्रसङ्गादित्यर्थः । ननु घटत्वावच्छिन्नप्रतियोगिताकभेदावच्छिन्नप्रतियोगिताकभेद एव घटत्वमिति नाननुगम इत्याशङ्क्य, तत्र घटत्वस्योक्तभेदरूपत्वे घटत्वज्ञाने घटत्वज्ञानापेक्षयाऽऽत्माश्रयः स्यादित्यतिरिक्तजातिरूपत्वमेव वाच्यमित्यतिरिक्तजातिस्वीकार इत्याह **तज्जातीयत्वेनेति** । यद्यपि तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटावच्छिन्नप्रतियोगिताकभेद एवानुगतो घटत्वरूप इति नाननुगमः, नाप्यात्माश्रयः; घटत्वस्य तच्छरीरानुप्रवेशविरहात् । अत एव नातिरिक्तजातिस्वीकारोऽपि । न च तत्तद्व्यक्तित्वानामसर्वज्ञदुर्विज्ञानतया तेषां [घटत्वशरीरघटकतया] घटत्वग्रहानुपपत्तिरिति वाच्यम्; घट इत्यादिप्रतीतौ घटत्वस्य स्वरूपत एव भानेन तत्तद्व्यक्तित्वादिग्रहानपेक्षणात्—तथापि भेदवद्भेदस्यानवस्थाभयेन भेदप्रतियोगितावच्छेदकरूपतायाः एवाङ्गीकारादुक्तभेदस्य तत्तद्व्यक्तित्वरूपताया एव वाच्यत्वेनाननुगततया अनुगतप्रतीतिनिर्वाहकत्वं न

सादृश्यात्मकम्; तत्रानुवृत्तिव्यावृत्तिविकल्पायोगात्। अतोऽनुवृत्तमस्त्वेकं सामान्यमिति।—

अत्रोच्यते—केयमेकप्रतीतिर्नाम? एकव्यक्तित्वप्रतीतिर्वा, एकजातित्वप्रतीतिर्वा, एकजातीयत्वप्रतीतिर्वा, एकाकार[1]धर्मवत्त्वप्रतीतिर्वा, एकशब्दानुविद्धप्रतीतिर्वा। न प्रथमद्वितीयौ; अन्यतरपरिशेषादिप्रसङ्गात्। न तृतीयः; असिद्धेः। एष्वनुवृत्तमिदमिति विकल्पानुदयात्। घटस्य घटत्वमित्यादिव्यवहारस्य कालस्य कालत्वमित्यादिवदुपपत्तेः। नापि तुरीयः; गोत्वाद्यपलाप-

---

तत्तद्व्यक्तीतरव्यावृत्तेस्तत्तद्व्यक्तिमात्रनिष्ठत्वादिति भावः। **संस्थानसादृश्यात्मकमिति।** सदृशसंस्थानात्मकमित्यर्थः। **विकल्पायोगादिति।** **विकल्पा**सहत्वादित्यर्थः। अथवा व्यावृत्त्यनुवृत्तिलक्षणविविध**कल्पायोगा**दित्यर्थः। सदृशसंस्थानस्यानुवृत्तत्वे सैव जातिः, व्यावृत्तत्वेऽनुवृत्तधीव्यवहारहेतुत्वायोगादिति भावः। **अन्यतरपरिशेषे**ति। पुरोवर्तिनि इयमेका व्यक्तिरिति प्रतीतिर्जातिं न सहेत; एका जातिरिति प्रतीतिर्व्यक्तिं न सहेत; एकशब्दस्य कैवल्यार्थकत्वादिति भावः। अत्र आदिपदेन इयमेका व्यक्तिरिति प्रतीतिर्न जातिसाधिका; इयमेका जातिरिति प्रतीतिस्तु पुरोवर्तिनि नास्त्येवेत्यादिदूषणं द्रष्टव्यम्। असिद्धिमुपपादयति **एष्वि**ति। **विकल्पानुदयादि**ति। प्रतीत्यनुदयादित्यर्थः। ननु **घटस्य घटत्वमिति व्यवहारो** निरालम्बनो मा विज्ञायीत्यतिरिक्तजातिरङ्गीकर्तव्येत्यत्राह **घटस्येति**। **कालत्वमिति।** कालस्यैकव्यक्तित्वेन तत्र त्वयाऽपि जातेरनभ्युपगमादित्यर्थः। **गोत्वाद्यपलापे**ति। तादृशप्रतीतिमात्रेण त्वदभिमत**गोत्वादि**लक्षणजात्यसिद्धेरिति भावः। **असिद्धिमेवोपपादयति संस्थान**-

---

संभवति। न च तादृशभेदत्वेनानुगतीकृतानां तेषामनुगतप्रतीतिनिर्वाहकत्वं संभवत्येवेति वाच्यम्, अयं घटः अयमपि घटः, इयं गौः इयमपि गौरित्येवंविधानुगतप्रतीतौ घटत्वगोत्वादेः स्वरूपत एव भानेन स्वरूपतोऽनुगतानामेव तादृशप्रतीतिनिर्वाहकत्वसंभवादतिरिक्तजातिस्वीकार आवश्यक इत्यभिप्रायः। **संस्थानसादृश्यात्मकमिति।** सदृशसंस्थानात्मकमित्यर्थः। **अनुवृत्तिव्यावृत्तिविकल्पायोगादिति।** सदृशसंस्थानशब्दितं रूपं किमनुवृत्तम् उत व्यावृत्तमित्येवंविधविकल्पासहत्वादित्यर्थः। अयं भावः—सदृशसंस्थानशब्दितं स्वरूपेणानुगतमतिरिक्तं रूपम्, उत प्रतिव्यक्तिव्यावृत्तमवयवसंयोगविशेषरूपम्? नाद्यः; नामान्तरेणातिरिक्तजातेरेव स्वीकारात्। न द्वितीयः; अनुगतप्रतीतिनिर्वाहकत्वासंभवादिति। **अन्यतरपरिशेषादिप्रसङ्गादिति।** पुरोवर्तिनि इयमेका व्यक्तिरिति प्रतीतिर्हि जातिं निषेधति। केवलार्थकैकशब्देन हि, व्यक्तिरेवास्ति, न तु जातिरिति हि(?) प्रतीयते। एवमियमेका जातिरित्यनेन व्यक्तिनिषेधो बोध्यः। ततश्च व्यक्तेर्जातेर्वा परिशेषप्रसङ्ग इति भावः। अत्र आदिपदेन इयमेका व्यक्तिरिति प्रतीतिर्न जातिसाधिका, इयमेका जातिरिति प्रतीतिस्तु पुरोवर्तिनि नास्त्येवेत्यादि दूषणं ग्राह्यम्। असिद्धिमेवोपपादयति **एष्वनुवृत्तमिदमिति।** **विकल्पानुदयादिति।** इदं रूपमेष्वनेकेष्वनुगतमिति प्रतीत्यनुदयादित्यर्थः। ननु घटस्य घटत्वमिति व्यवहारादेव सर्वसंप्रतिपन्नात् घटत्वजातिसिद्धिरित्यत्र आह **घटस्येति।** **कालस्य कालत्वमित्यादिवदिति।** कालस्यैकव्यक्तिमत्तया जातित्वाभावेऽपि यथा तादृशव्यवहारोपपत्तिः—तथा घटत्वादेर्जातित्वाभावेऽपि तदुपपत्तिरित्यर्थः। **गोत्वाद्यपलापप्रसङ्गादिति।**

प्रसङ्गात्। संस्थानमात्रस्यैवास्मदभिमतस्य तथात्वात्। मृन्मयहिरण्मयघटादिषु भवद्भिरपि तथा निर्वाहात्। न हि तत्रानुगतं घटत्वमभ्युपगतं जातिसङ्करभयात् (संकरप्रसङ्गात्)। व्यावृत्तजाति-द्वयाभ्युपगमे, अनभ्युपगमेऽपि, अनुवृत्तप्रतीतिव्यवहारयोः संस्थानसादृश्यमेव निबन्धनम्। एवंसति तदेवास्तु सर्वत्रापि॥ ननु अवयवसामान्यानुवृत्त्या अवयविनि अनुवृत्तप्रतीतिव्यवहारनिर्वाह इति चेन्न; यतः कपालत्वादेरपि पूर्ववत् सङ्करादिदोषः समानः॥ अस्तु तर्हि सङ्कराभ्युपगमेन अनुवृत्तं सामान्यमिति चेन्न; अन्यथा प्रतीतिनिर्वाहे कल्पनायोगात्॥ व्यावृत्तसंस्थानादेः

---

**मात्रस्येति**। **भवद्भिरपि तथानिर्वाहादिति**। संस्थानसादृश्यमात्रेणैव घटकारप्रतीतेर्निर्वाहादित्यर्थः। अत्र घटाकारप्रतीतेरिति शेषपूरणात् कर्मण उपात्तत्वात्, "उभयप्राप्तौ कर्मणि" इति नियमावगमात् कर्तरि तृतीयेति द्रष्टव्यम्। **जातिसङ्करभयादिति**। मृत्त्वं विहाय घटत्वं सुवर्णघटे वर्तते; घटत्वं विहाय मृत्त्वं कुड्यादौ वर्तते; मृद्घटे द्वयोरपि समावेशे (श इति?) साङ्कर्यप्रसङ्गादित्यर्थः। **व्यावृत्तेति**। मृत्त्व-व्याप्यं घटत्वमन्यत्, हिरण्यत्वव्याप्यं घटत्वमन्यदिति वा परिहर्तव्यम्; अथवा घटत्वं न जातिः, अतो न जातिसाङ्कर्यमिति वा परिहर्तव्यमिति द्वयी हि गतिः। पक्षद्वयेऽपि अनुगतघटप्रतीतिव्यवहारयोः **संस्थानसादृश्यनिबन्धनत्वमेव** वक्तव्यमित्यर्थः। **एवंसतीति**। क्वचित् **संस्थानसादृश्यस्य अनुगतप्रतीतिव्यवहारनिर्वाहकत्वे सिद्धे सतीत्यर्थः**। **अवयवसामान्यानुवृत्त्येति**। मृद्घटावयवानां सुवर्णघटावयवानां च एकया कपालत्वजात्याऽऽक्रान्तत्वेन एकजातीयारब्धत्वेनानुगम उपपद्यत इति भावः। अयोगमेवोपपादयति **पूर्ववदिति**। मृत्त्वकपालत्वयोरपि परस्परव्याप्यव्यापकभावानापन्नतया तयोः समावेशे सङ्करावश्यम्भावादिति भावः। **सङ्कराभ्युपगमेनेति**। **सङ्करस्य** जात्यबाधकत्वाभ्युपगमेने-त्यर्थः। **कल्पनायोगादिति**। संस्थानादिनैवानुगतप्रतीतिनिर्वाहे अतिरिक्तजातिकल्पनायोगादित्यर्थः।

---

तादृशप्रतीतिमात्रेण [1]भवदभिमतस्य संस्थानातिरिक्तस्य गोत्वस्य सिद्धेरिति भावः। असिद्धिमेवोपपादयति **संस्थानमात्रस्येति**। **तथा निर्वाहादिति**। संस्थानसादृश्यमात्रेण घटाकारप्रतीतेः भवद्भिरपि निर्वहणादि-त्यर्थः। **जातिसंकरभयादिति**। मृत्त्वं विहाय घटत्वस्य स्वर्णघटे, घटत्वं विहाय मृत्त्वस्य कुड्यादौ सत्त्वात् मृद्घटे चोभयोस्समावेशेन साङ्कर्य[2]प्रसङ्गादित्यर्थः। संकरप्रसङ्गादित्यपि बहुषु कोशेषु पाठो दृश्यते। **व्यावृत्तेत्यादि**। मृत्त्वव्याप्यघटत्वमन्यत् स्वर्णत्वव्याप्यघटत्वमन्यदिति वा घटत्वं न जातिरिति वा अङ्गीकृत्य जातिसांकर्यं वारणीयम्। पक्षद्वयेऽप्यनुगतघटादिप्रत्ययव्यवहारयोः संस्थानसादृश्यनिबन्धनत्वमेव वाच्यमित्यर्थः। **एवंसतीति**। क्वचित् संस्थानसादृश्यस्यानुगतप्रतीतिव्यवहारनिर्वाहकत्वे सिद्धे सतीत्यर्थः। **अवयवसामान्यानुवृत्त्येति**। मृद्घटावयवानां सुवर्णघटावयवानाञ्चैकया कपालत्वादि-जात्याऽऽक्रान्तत्वेन तादृशजात्यवच्छिन्नारब्धत्वं मृत्सुवर्णघटसाधारणमिति तदेवानुगतप्रतीतिव्यवहारनिब-न्धनमित्यर्थः। अयोगमेवोपपादयति **पूर्ववदिति**। मृत्त्वं विहाय कपालत्वस्य सुवर्णकपाले, कपालत्वं विहाय मृत्त्वस्य कुड्यादौ सत्त्वात् मृत्कपाले चोभयोः समावेशादिति भावः। **संकराभ्युपगमेनेति**। संकर-

---

1 धर्मैकाकारत्वोक्त्या संस्थानस्यैव स्वरसतो धर्मत्वप्रतीतेरिति वक्तव्यम्। 2 भयादित्यस्य यथा-श्रुतार्थेऽपि न दोषः। जातिसंकरभीतैस्तत्रानुगततया घटत्वस्यानभ्युपगतत्वादिति पिण्डितार्थः।

अनुवृत्तधीहेतुत्वे अतिप्रसङ्गादिति चेत्—व्यावृत्तानां संस्थानानामनुवृत्तव्यञ्जकत्वे कथं नातिप्रसङ्गः? तावतामेव तथाविधस्वभावत्वादिति चेत्—तुल्यम्; तावतामेव तथाविधप्रत्ययहेतुत्वादिति वक्तुं शक्यत्वात्। केवलमुपलम्भातिक्रमो गौरवञ्च भवन्मते। एवं पञ्चमोऽपि पञ्चतां गतः। तत्र हि एक इति शब्देनानुविद्धप्रतीतिर्वा एकेन गवादिशब्देनानुविद्धप्रतीतिर्वा विवक्षिता? आद्यो न कल्पते; एकव्यक्तिरिति विवक्षायामसिद्धेः (क्षायामपि सिद्धेः) एकजातीयमिति व्यवहारस्य तत्तदुपाधिविशेषेणोपपत्तेः, राशिसैन्यपरिषद्रण्यादिषु ऐक्यव्यवहारादिवत्। उपाधिश्चायमनेकेषामेकस्मृतिसमारोहः। नापि द्वितीयः; तस्यानेकार्थेषु शब्देष्वपि समत्वात्॥ अनेकार्थव्यावृत्तः कश्चित् विशेषोऽस्तीति चेन्न; तस्यापि स्वरूपविषयादिशब्दवदुपपत्तेः। स्वरूपविषयादिशब्दा हि नाना-

---

**तावतामेवेति**। भिन्नभिन्नानामेव **अनुवृत्तव्यञ्जकत्वस्वभावत्वादिति** चेदित्यर्थः। **एकजातीयमिति व्यवहारस्येति**। नानाभूतेषु व्रीह्यादिषु देशैक्यादिना राश्यैक्यादिव्यपदेशवत् नानाभूतसंस्थानलक्षणजातिषु एकबुद्धिसमारोहाद्युपाध्यैक्येन एकजातीयत्वव्यपदेशोपपत्तेरिति भावः। **अनेकार्थेष्विति**। ततश्च एक-अक्षादिशब्दानुविद्धप्रतीतिविषयत्वं शकटाक्ष-विदेवनाक्ष-विभीतकाक्षाणामप्यस्तीति तत्राप्येकजातीयत्वप्रसङ्ग इति भावः। **अनेकार्थव्यावृत्त इति**। अनेकार्थाक्षादिशब्देभ्यो व्यावृत्तो गवादिशब्देषु **कश्चित् विशेषोऽस्ति**; स च जातिमन्तरेणानुपपन्न इति चेदित्यर्थः। **तस्यापीति**।

---

स्यादोषत्वाभ्युपगमेनेत्यर्थः। **अन्यथाप्रतीतिनिर्वाह इति**। संस्थानसादृश्येनैवानुगतप्रतीतिनिर्वाह इत्यर्थः। **कल्पनायोगादिति**। अतिरिक्तजातिकल्पनायोगादित्यर्थः। **तावतामेवेति**। भिन्नभिन्नानामेवेति भावः। **तथाविधस्वभावत्वादिति**। अनुवृत्तव्यञ्जकत्वस्वभावत्वादित्यर्थः। **तथाविधप्रत्ययेति**। घट इत्याद्यनुगतप्रत्ययेत्यर्थः। **एकव्यक्तिरिति विवक्षायामसिद्धेरिति**। अनेकासु गोव्यक्तिषु एका व्यक्तिरिति प्रतीतिव्यवहारयोरभावादित्यर्थः। **एकव्यक्तिरिति विवक्षायामपि सिद्धेरिति** पाठे तु व्यक्त्यैक्यविषयकतयाऽप्येको गौरिति प्रतीतिव्यवहारयोरुपपत्तेरित्यर्थो वर्णनीयः। नन्वनेकासु गोव्यक्तिषु इदं सर्वमेकजातीयमिति प्रतीतिव्यवहारदर्शनात् तावदनुगता संस्थानातिरिक्ता जातिरङ्गीकार्येत्यत आह **एकजातीयमितीति**। **तत्तदुपाधिविशेषेणोपपत्तेरिति**। तत्तदुपाधिगतैक्यविषयकतयोपपत्तेरित्यर्थः। न ह्येतदर्थमतिरिक्तजातिः स्वीकार्येति भावः। **राशीत्यादि**। नानाभूतेषु व्रीह्यादिषु देशैक्यादिना राश्यैक्यादिव्यपदेशवदित्यर्थः। अतिरिक्तजात्यनभ्युपगमेऽनुगतैकोपाधिरेव दुर्लभ इत्याशङ्क्याह **उपाधिश्चेति**। **एकस्मृतिसमारोहः**—एकस्मृतिविषयत्वम्। ननु ह्येकस्मृतिविषयत्वमेवैकजातीयत्वं स्यात्—तर्हि घटपटयोरप्येकस्मृतिविषययोस्तथात्वं स्यादिति चेन्न; सुसदृशधर्मप्रकारकैकस्मृतिविषयत्वस्य एकस्मृतिविषयीभूतसुसदृशधर्मवत्त्वस्यैव वा एकजातीयत्वरूपतयाऽभिप्रेतत्वात्। घटपटयोः परस्परं सुसदृशधर्मवत्त्वविरहेणोक्तैकजातीयत्वस्य तत्रासंभवात्। **अनेकार्थेष्विति**। तथा चैकाक्षादिशब्दानुविद्धप्रतीतिविषयत्वं शकटाक्ष-विदेवनाक्ष-वृक्षविशेषेन्द्रियादीनामप्यस्तीति तत्राप्येकजातीयत्वप्रसङ्ग इति भावः। **अनेकार्थव्यावृत्त इति**। अनेकार्थाक्षादिशब्देभ्यो व्यावृत्तो गवादिशब्देष्वनुभूयमानो विशेषो जातिमन्तरेणानुपपन्न इति चेदित्यर्थः। **तस्यापीति**। अनेकार्थव्यावृत्तविशेष-

रूपेष्वेवार्थेषु प्रवर्तमानाः केनचिदाकारेण साधारणाः केनचिदसाधारणाश्च दृश्यन्ते । तद्वत् गोशब्दोऽपि सलिल-सरस्वती-किरण-करमाल्यादिषु साधारणः प्रकरणादिवशात् विशेषमापद्यते इति विलक्षणनिमित्तकल्पनानवकाशात् ।

ननु यदि संस्थानमेव सामान्यम्, तर्हि तद्रहितेषु रूपरसादिषु कथं निर्वाहः? तत्र वा कथमुपलक्षणरहितेषु? तेषु लक्षणमेवोपलक्षणमिति चेत्—किं तत्? प्रतीतिरिति चेन्न; आत्माश्रयप्रसङ्गात्।

---

अनेकार्थव्यावृत्तविशेषस्यापीत्यर्थः । स्वरूपविषयादिशब्दवदिति । जात्यभावेऽपि अनेकार्थव्यावृत्तविशेषसद्भावादिति भावः । ननु गवादिशब्दानां न स्वरूपविषयादिशब्दतौल्यम्; स्वरूपविषयादिशब्दानां साधारणत्वात् गवादिशब्दानाञ्चासाधारणत्वादित्याशङ्क्याह स्वरूपविषयादिशब्दा हीति । साधारणा इति । सर्वस्यापि वस्तुनः स्वस्वरूपत्वादिति भावः । केनचिदसाधारणा इति । प्रतियोगिविशेषनिरूपितत्ववेषेणेत्यर्थः । गोशब्दोऽपीति । इयान् शेषः—स्वरूपविषयादिशब्दा असङ्कोचेन सर्ववृत्तयः । गवादिशब्दास्तु न तादृशा इति । एकजात्यवच्छिन्नासाधारणत्वाभावो द्वयोरपि समान इति भावः । उपलक्षणरहितेष्विति । जातिव्यञ्जकसंस्थानरहितेषु तत्र वा कथं निर्वाहः इत्यर्थः । उपलक्षणीभूतं लक्षणं पृच्छति किं तदिति । प्रतीतिरिति चेदिति । रूपरसादिप्रतीतिविषयत्वमेव रूपत्वरसत्वादिव्यञ्जकमिति चेदित्यर्थः । आत्माश्रयप्रसङ्गादिति । रूपप्रतीतिविषयत्वरूपव्यञ्जकज्ञा-

---

स्यापीत्यर्थः । स्वरूपविषयादिशब्दवदिति । स्वरूपशब्दस्य विषयशब्दस्य भिन्नादिशब्दस्य च स्वरूपत्वादिरूपव्यावृत्तविशेषोऽस्ति; तथा गवादिशब्दानामपि जातिमन्तरेणैव तादृशविशेषोपपत्तेरित्यर्थः । ननु स्वरूपविषयादिशब्दानां सर्वसाधारणतया कथं गवादिशब्दानां तुल्यतेत्याशङ्क्याह स्वरूपेति । साधारणा इति । सर्वस्यापि वस्तुनः स्वस्वरूपत्वादिति भावः । केनचिदसाधारणा इति । घटस्य स्वरूपं पटस्य स्वरूपं प्रत्यक्षस्य विषयः अनुमानस्य विषय घटाद्भिन्नः पटाद्भिन्न इत्येवं प्रतियोगिनिरूपितवेषेणासाधारणा इत्यर्थः। गोशब्दोऽपीत्यादि । करमाली सूर्यः। गोशब्दस्य सूर्यवाचकत्वमपि नैघण्टुकाः पठन्ति । तथाच सूर्यपर्याये केशवः, "गौर्द्यौर्मृगः पुनस्त्वष्टा ग्रहपुट्किरणः खगः" इति, नानार्थेऽपि स एव, "गौर्नाऽऽदित्ये बलीवर्दे क्रतुभेदर्षिभेदयोः । स्त्री तु स्यात् दिशि भारत्यां भूमौ च सुरभावपि। पुंस्त्रियोः स्वर्गवज्राम्बु-रश्मिदृग्बाणलोमसु" इति । तथाच स्वरूपविषयादिशब्दा असंकोचेन सर्वत्र वर्तन्ते—गवादिशब्दास्तु न तादृशा इत्येव विशेषः; एकजात्यवच्छिन्नासाधारणत्वाभावस्तु द्वयोरपि समान इति भावः । तत्र वा कथमुपलक्षणरहितेष्विति । जातिव्यञ्जकसंस्थानरहितेषु तत्र वा कथं निर्वाह इत्यर्थः। शङ्कते तेष्विति। लक्षणमेवोपलक्षणमिति। असाधारणधर्मरूपं लक्षणमेव जातिव्यञ्जकमित्यर्थः। पृच्छति किं तदिति। असाधारणधर्मरूपं लक्षणं किमित्यर्थः। प्रतीतिरिति। तदिति प्रश्नस्थमनुषज्यते । रूपत्वप्रकारतानिरूपितविशेष्यतासंबन्धेनेति शेषः । तथाच रूपत्वप्रकारतानिरूपितविशेष्यतासंबन्धेन रूपासाधारणधर्मरूपा प्रतीतिरेव रूपलक्षणमित्युक्तं भवति । आत्माश्रयप्रसङ्गादिति । रूपत्वजातिज्ञाने कारणतयाऽभिमतस्य [उपलक्षणज्ञानस्य] रूपत्वप्रकारतानिरूपितविशेष्यतासंबन्धेन प्रतीति-

अस्माकं तु तदेवैकीकरणमिति नोपद्रवः ॥ उपलक्षणनिर्बन्धो नास्तीति चेत्;

नाधीनतया रूपप्रतीतेरिति भावः । अस्माकं त्विति । तव यत् रूपव्यञ्जकत्वेनाभिमतं रूपप्रतीतिविषयत्वम्, तदेव अस्माकं रूपत्वमिति भावः । एकीकरणमिति । अनुगमकमित्यर्थः । उपलक्षणनिर्बन्ध

प्रकारकज्ञानस्य संसर्गघटकतया रूपत्वविषयकज्ञानात्मकत्वादिति भाव.। तदेवैकीकरणमिति । उक्तलक्षणमेवानुगमकरूपमित्यर्थः; रूपत्वमिति यावत् । नोपद्रव इति । नात्माश्रय इत्यर्थः। स्वात्मकरूपत्वस्य संसर्गघटकत्वेऽपि संसर्गज्ञानस्य विशिष्टबुद्धावहेतुत्वेन रूपत्वज्ञाने रूपत्वज्ञानानपेक्षणादिति भावः । नन्वेतावता स्वनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन प्रतीतिमत्त्वमेव रूपत्वमित्युक्तं भवति । स्वस्य प्रकारता च विषयतासंबन्धेनैव वाच्या; संबन्धान्तरादर्शनात् । ततश्चोक्तसंबन्धेन प्रतीतिमत्त्वस्य सर्ववस्तुसाधारण्यात् कथं तस्य रूपत्वात्मकत्वसंभव इति चेत्— उच्यते; अत्र स्वनिष्ठप्रकारतावच्छेदकसंबन्धो न केवलविषयता; येनोक्तदोषः स्यात् । किंतु तत्तद्रूपव्यक्तिभेदकूटवद्वृत्तिविषयतैव; तस्याश्च स्वरूपत एव संसर्गतया नासर्वज्ञदुर्ज्ञानता । ततश्चोक्तविषयतासंबन्धावच्छिन्नस्वनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन, उक्तविषयतासंबन्धेनैव वा प्रतीतिमत्त्वस्य रूपत्वात्मकत्वेन तस्य चान्यत्रावृत्त्या नानुपपत्तिरिति । न चैवंसति रूपवत्ताप्रतीतावनन्तानामपि ज्ञानानां विनिगमनाविरहेण विषयताप्रसङ्ग इति वाच्यम्; स्वयंप्रकाशतया स्वत एव रूपविशेषणतया भानाभ्युपगमेन तात्कालिकस्वीयज्ञानस्यैव तथाभानसंभवेन उक्तदोषानवकाशात् । न च— तथाप्यनन्तानां ज्ञानानां विनिगमनाविरहेण रूपपदवाच्यतावच्छेदकत्वस्वीकारे तेषां स्वरूपतोऽवच्छेदकत्वे नानार्थत्वप्रसङ्ग । ज्ञानत्वेनावच्छेदकत्वं तु न संभवति; ज्ञानत्वानिरूपणात् । न हि ज्ञानत्वमपि तत्तद्ज्ञानव्यक्तिभेदकूटवद्वृत्तिविषयतासंबन्धेन ज्ञानवत्त्वमेवेति शक्यं वक्तुम्; तथा सति हि तस्य स्वरूपतो रूपपदवाच्यतावच्छेदकतावच्छेदकत्वे तथैव नानार्थत्वम्, विनिगमनाविरहेणानन्तानां ज्ञानानां तथात्वप्रसङ्गात् । उक्तरूपज्ञानत्वेन तथात्वे तूक्तप्रक्रियायाऽनवस्थाप्रसङ्गः— इति वाच्यम्; व्यवहारहेतुताविशेषरूपस्य शक्तिविशेषस्यैव ज्ञानत्वरूपत्वाभ्युपगमात्, तस्य च सर्वज्ञानानुगततया नित्यतयैकतया च स्वरूपत एव रूपपदवाच्यतावच्छेदकतावच्छेदकत्वसंभवेनोक्तदोषानवकाशात् । न चैवंसति नामान्तरेणातिरिक्तजात्यभ्युपगम एवेति वाच्यम्; ज्ञानस्य व्यवहारकारणतायास्सर्वसंमततया तस्या एव ज्ञानत्वरूपत्वाभ्युपगमेऽतिरिक्तजातिस्वीकाराप्रसक्तेः । कारणता चातिरिक्तपदार्थरूपैवेति नव्यनैयायिकैर्बहुतरयुक्तिकदम्बकेन व्यवस्थापितम् । सैव सैद्धान्तिकैः शक्तिरित्यभिधीयते । ततश्च तस्या एव ज्ञानत्वरूपत्वे का प्रसक्तिरतिरिक्तजात्यभ्युपगमस्य ? न चैवंसति ज्ञाननिष्ठव्यवहारकारणताया ज्ञानत्वावच्छिन्नत्वानुपपत्तिः अभेदादिति वाच्यम्; इष्टत्वात् । कारणताया शक्तिरूपतामते तस्याः किञ्चिदवच्छिन्नत्वास्वीकारात् ।

अथैवमपि घटो रूपवानिति प्रात्यक्षिकप्रतीतेः स्वरूपतो रूपत्वप्रकारकत्वस्याविवादतया घटो रूपवानिति वाक्यजन्यशाब्दबोधस्याऽऽनुमानिकं तद्वैलक्षण्यं न निर्वहति; उक्तरीत्या ज्ञानरूपस्य रूप

अस्माकमपि मा भूत् संस्थाननिर्बन्धः। द्विविधं हि सादृश्यं प्रतीतिसिद्धम्—धर्मसादृश्यं स्वरूप-

---

इति । व्यञ्जकनिर्बन्ध इत्यर्थः । ननु संस्थाननिर्बन्धाभावे एकाकारप्रतीतेर्निरालम्बनत्वप्रसङ्गः,

---

त्वस्य ज्ञानत्वेनैव रूपपदवाच्यतावच्छेदकतया शाब्दबोधे तेनैव रूपेण तद्भानावश्यम्भावात् । न च ज्ञानत्वस्यैव शक्तिविशेषरूपस्य स्वाश्रयनिरूपितोक्तविषयतासंबन्धेन रूपे वर्तमानस्य रूपत्वात्मकत्व-स्वीकारात् तस्य च स्वरूपत एव सर्वत्र भानान्न दोष इति वाच्यम्; रूपत्वस्य शक्तिविशेषा-त्मकत्वे तस्य चाक्षुषविषयत्वानुपपत्तेः; शक्तेरतीन्द्रियत्वात्—इति चेत्—अत्रोच्यते; शक्ति-विशेषरूपज्ञानत्वोपलक्षितस्यैव रूपपदवाच्यतावच्छेदकतया रूपपदजन्यबोधे ज्ञानत्वभानासंभवेन ज्ञाना-त्मकरूपत्वस्य स्वरूपत एव भानात् घटो रूपवानिति प्रात्यक्षिकप्रतीत्यवैलक्षण्योपपत्तिः । यथा तदादि-बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्न एव शक्त्या, घटोऽस्ति तमानयेत्यादौ घटत्वादिजातेः स्वरूपत एव शाब्दबोधे भानमिति नैयायिकादिभिरङ्गीक्रियते, तद्वत् ।

यत्तु वृत्तिविकल्पदौस्थ्याच्छक्तेरनुगतत्वं नोपपद्यते—तथाहि—लोके वृत्तिर्द्विविधैवोप-लभ्यते—कार्त्स्न्येन वृत्तिः एकदेशेन वृत्तिश्चेति । तत्र कार्त्स्न्येन वृत्तिः स्वाश्रयावयवानवच्छिन्ना वृत्तिः । स्वाश्रयावयवावच्छिन्नं यद्यत् स्वम्, तत्तदन्यवृत्तित्वमित्यर्थः । एकदेशेन वृत्तिः स्वाश्रयावयवा-वच्छिन्नवृत्तिः । स्वं वृत्तिः । तत्र कार्त्स्न्येन वृत्तौ तदितरावृत्तित्वनियमः—यथैकेनैव धृते दण्डादौ । एक-देशेन वृत्तौ सावयवत्वनियमः—यथाऽनेकैर्धृते स्तम्भादौ । ततश्च शक्तावेवमेकदेशेन वृत्तौ सावयवत्व-प्रसङ्गात् कार्त्स्न्येनैव वृत्तिरङ्गीकार्या । तत्र चेतरावृत्तित्वमावश्यकमिति नानुगतत्वसंभव इति—तन्न; संयोगादावेकत्र कार्त्स्न्येन वृत्तावपीतरवृत्तित्वदर्शनेन कार्त्स्न्येन वृत्तावितरावृत्तित्वमिति व्याप्तेरभावेन शक्तेरनुगतत्वोपपत्तेः। सावयवद्रव्येषु कथञ्चित् तथानियमसंभवेऽपि अद्रव्ये तथाविधशंकाया एवानवकाशात्। अभ्युपगतं हि नैयायिकादिभिरपि जात्यादीनामनेकानुगतत्वम् । अद्वैतिभिरपि गोत्वादिजातिस्थाने पराभिमता यावत्यो व्यक्तयः तावदन्यतमोपरक्तसद्रूपज्ञानस्यैव । गवादिपदशक्यत्वं गौरित्यादि व्यवहारहेतुत्वञ्चाङ्गीकृत्य तत्तद्व्यक्तिघटितावच्छेदकभेदेन शक्त्यानन्त्यादिवारणायानवच्छिन्नतावद्व्य-क्तिधीजनकतारूपायाः शक्तेः सकलगोव्यक्तिसाधारण्यमभ्युपगतम् । उक्तं हि लघुचन्द्रिकायां परिच्छिन्न-त्वहेतुपरिष्करणावसरे, "सर्वगोव्यक्तिष्वेकस्या एव शक्तेस्संभवेन नानार्थत्वाभावात्" इत्यादि ।

एतेन खण्डो गौरित्यादौ प्रकारीभूतं गोत्वं सद्रूपज्ञानमेव ; पराभिमता यावत्यो व्यक्तयः तावदन्यत-मोपरक्तसद्रूपज्ञानस्यैव गौरित्यादिव्यवहारकारणत्वात्, घट इत्यादिव्यवहारेऽपि उादृशयावद्व्यक्त्यन्यतमो-परक्तसद्रूपज्ञानस्यैव कारणत्वादित्याशङ्क्य तावदन्यतमत्वघटकभेदानां विशेष्यविशेषणभावे विनिग-मनाविरहेण तावदन्यतमोपरक्तसद्रूपज्ञानस्य गौरित्यादिव्यवहारकारणताया आनन्त्यप्रसङ्गात् गौरवाद् दुर्ज्ञेयत्वाच्चोक्तान्यतमत्वघटितस्य तथात्वासंभवेनातिरिक्तगोत्वादेः कल्पनस्यैव युक्तत्वादित्यादिना अतिरिक्तजात्यभ्युपगमावश्यकत्वप्रतिपादनमपि उक्तरीत्या तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवद-

साद्दश्यञ्चेति। द्रव्येषु प्रायशो धर्मसाद्दश्यात् एकरूपप्रतीतिव्यवहारौ। तावदपेक्षया च श्रीविष्णु-

न च रूपादिप्रतीतिविषयत्वमेव रूपत्वाद्यनुगतप्रतीतौ निमित्तम्; आत्माश्रयप्रसङ्गात्। नापि साद्दश्यम्; निरवयवेषु निर्गुणेष्ववयवगुणादिकृतसाद्दश्याभावात् इत्याशङ्कयाह द्विविधं हीति। प्रायशो धर्मसाद्दश्यादिति। भूयोधर्मसाद्दश्यादित्यर्थः। यद्वा द्रव्येष्वपि स्वरूपसाद्दश्यात् एकरूपसम्भवमभिप्रेत्य प्रायशो व्यवहार इत्युक्तम्। तावदपेक्षयेति। द्रव्यसाद्दश्याभिप्रायेणेत्यर्थः।

वृत्तिर्या विषयता, ताद्दशविषयतासंबन्धेन शक्तिविशेषरूपज्ञानत्वोपलक्षितस्यैव रूपादिपदशक्यतावच्छेदकत्वस्य, ताद्दशविषयतायाश्च स्वरूपत एव संसर्गत्वस्य च स्वीकारेण शक्त्यानन्त्य-गौरव-दुर्ज्ञेयत्वादीनामनवकाशात्, तत्तत्प्रतीतीनामननुगतानां स्वरूपत एव तत्तत्पदजन्यबोधे तत्तद्विशेषणतया भानेऽपि उपलक्षणीभूतसर्वानुगतशक्तिविशेषरूपज्ञानत्वप्रकारेणैव तासां तत्तत्पदवाच्यतावच्छेदकतया न शक्त्यानन्त्यप्रसङ्गः। उक्तञ्च शक्तिवादे, "अथ सर्वनामपदेन विशिष्य घटत्वपटत्वादिनैव बुद्धिस्थघटपटादयः प्रत्याय्यन्ते; न तु बुद्धिस्थत्वेन; 'अत्र घटोऽस्ति; तमानय' इत्यादिवाक्यजन्यघटकर्मकानयनादिबोधोत्तरं विशिष्य आनयनं घटकर्मकत्ववत् न वेति संशयानुदयादस्य सर्वानुभवसिद्धतया दुरपह्नवत्वात्। तथाच वक्तृबुद्धिस्थत्वं न सर्वनामपदशक्यतावच्छेदकम्, अपितु घटत्वादिकमेवेति ताद्दशनानाधर्मावच्छिन्नेषु पुष्पवन्तादिपदवन्नैकशक्तिसंभवः; एकैकधर्ममात्रप्रकारकतदन्वयबोधानुपपत्तेरिति सर्वनाम्नां नानार्थत्वं दुर्वारमेव" इत्याद्याशङ्क्य, "मैवम्। भगवत्सङ्केतरूपायां शक्तौ शक्यतावच्छेदकघटत्वपटत्वादावुपलक्षणीभूतबुद्धिविषयतावच्छेदकत्वप्रकारेण भासमाने तदादिपदजन्यबोधविषयतावच्छेदकत्वं भासते; एवञ्च बुद्धिविशेषविषयतावच्छेदकधर्मावच्छिन्नस्तत्पदात् बोद्धव्य इत्याकारकस्य, तत्पदं बुद्धिविषयतावच्छेदकावच्छिन्नं बोधयत्वित्याकारकस्य वा सङ्केतस्य विषयतया अननुगतघटत्वादिनिष्ठाया अप्यनुगतरूपावच्छिन्नतया शक्तेरैक्यम्" इत्यादि। तत् सिद्धं ज्ञानमेव रूपादिष्वनुगमकमिति। एवं कालस्याप्यनुगमकत्वं संभवति; तस्य हि नित्यत्वमेकत्वं सर्वाधारत्वञ्च नैयायिकादिसंप्रतिपन्नम्। ततश्च तत्तद्रूपव्यक्तिभेदकूटवदवृत्त्याधेयतासंबन्धेन कालवत्त्वमेव रूपत्वम्। एवं रसत्वादिकमपि ग्राह्यम्। कालस्य प्रत्यक्षविषयताया व्यवस्थापिततया न चाक्षुषादिविषयत्वानुपपत्तिः। अत एव नेश्वरमादाय विनिगमनाविरहः। तस्य च स्वरूपत एव रूपादिविशेषणतया प्रत्यक्षशाब्दबोधादौ भानम्। सर्वथा क्लृप्तेनैवोपपत्त्या नातिरिक्तं सामान्यं स्वीकार्यमित्यलम्।

उपलक्षणनिर्बन्ध इति। केनचिद्व्यञ्जकेनैव सर्वत्र जातिग्रहणमिति नियम इत्यर्थः। तथाच रूपादिषु व्यञ्जकविरहेऽपि चक्षुस्संयुक्तसमवेतसमवायसन्निकर्षेणैव रूपत्वप्रत्यक्षोपपत्तिरिति भावः। संस्थाननिर्बन्ध इति। अवयवसंयोगविशेषरूपसंस्थानमेव सर्वत्र जातिरित्येवं नियम इत्यर्थः। उक्तसंस्थानशून्येषु धर्मान्तरस्यापि जातिरूपत्वं स्वीक्रियत एवेति भावः। ननु रूपादिषु कस्यापि धर्मस्याभावात् कथं तत्रानुगतप्रतीतिव्यवहारोपपत्तिरित्याशंक्य प्रागुपदर्शितात् ज्ञानरूपात् काल-

चित्तैरुक्तम्, "भूयोवयवसामान्यमेव[1] प्रतियोग्यपेक्षया सादृश्यशब्दवाच्यम्" इति। धर्मान्तरशून्येषु स्वरूपसादृश्यादेव। एतावदभिप्रेत्य भगवता भाष्यकारेणोक्तम्—"संस्थानं नाम स्वासाधारणं रूपमिति यथावस्तु संस्थानमनुसन्धेयम्" इति।

अत्र यदुक्तं विवरणे, "तत्तद्वस्तु पश्यतां तत्तदवयवविन्यासविशेषलक्षणं संस्थानमवभासते। ननु प्रतिव्यक्ति भेदात् संस्थानस्य, कथं व्युत्पत्तिः? अथैक्यम्; तर्हि नासाधारणता॥ नैतत्; उपाधितोऽपि व्युत्पत्तेः, यथा वालधितः पशुशब्दस्य। सादृश्यञ्चोपाधिः" इत्यादि—

तत्र "अवयवविन्यास" इति उदाहरणपरम्; अन्यथा रूपादिषु, 'रूपत्वं जातिः' इत्यादिव्यवहारभङ्गप्रसङ्गात्। "सादृश्यञ्चोपाधिः" इत्यादि तु अतिरेकपक्षस्वरसमपि अतिरेकपक्षानुपपत्तेः

---

**स्वासाधारणं रूपमितीति।** अत्र इतिर्हेतौ। संस्थानस्य स्वासाधारणरूपत्वात् तत्तद्वस्तुषु तत्तद्वस्त्वनुरूपमतिरिक्तमनतिरिक्तं[1] वा संस्थानमनुसन्धेयमिति भाष्यार्थः। **वालधित इति।** वालधिः= पुच्छम्। यथा लाङ्गूलादिमत्त्वं पशुशब्दप्रवृत्तिनिमित्तोपाधिः, तथेत्यर्थः। इदञ्च अश्वे हस्तिनि च पशुत्वप्रत्यभिज्ञाऽभावात् अनुगतव्यञ्जकाभावाद्वा पृथिवीत्वादिसाङ्कर्याद्वा शरीरत्वादिवत् पशुत्वस्याजातित्वमिति मीमांसकनैयायिकैकदेश्यभ्युपगममादायोक्तमिति द्रष्टव्यम्। प्रकृते उपाधिमाह **सादृश्यञ्चेति। उदाहरणपरमिति।** गवादिद्रव्योदाहरणाभिप्रायेणेत्यर्थः। ननु "सादृश्यञ्चोपाधिः" इति **विवरण**स्वारस्यात् सादृश्यस्य स्वाश्रयातिरिक्तस्या[1]भ्युपगमः प्रतीयते। ततश्च अद्रव्याणि दशेत्येतत् नोपपद्यते इत्यत्राऽऽह **सादृश्यञ्चोपाधिरित्यादीति। अतिरेकपक्षानुपपत्तेरिति।** अतिरिक्तरूपाद्वा स्वरूपसादृश्यादेव तदुपपत्तिरित्याह **द्विविधं हीति। धर्मसादृश्यं** धर्मनिष्ठम् उक्तानुगतरूपवत्त्वम्; **स्वरूपसादृश्यम्;** स्वरूपनिष्ठमुक्तरूपवत्त्वम्। एकरूपवत्त्वं हि सादृश्यम्। **प्रायश इति।** ज्ञानादिनिरवयवद्रव्येषूक्तस्वरूपसादृश्यमेवानुगतप्रतीतिव्यवहारनियामकमिति भावः। **तावदपेक्षयेति।** प्रायिकद्रव्यसादृश्याभिप्रायेणेत्यर्थः। **स्वासाधारणरूपमितीति।** अत्रेतिर्हेतौ। तथाचेह संस्थानशब्देन स्वासाधारणरूपस्यैव विवक्षितत्वात् तत्तद्वस्तुष्ववयवसंयोगविशेषरूपम्, अतिरिक्तं वा संस्थानपदाभिप्रेतमनुसन्धेयमित्यर्थः। **वालधित इति।** वालधिः पुच्छम्। **पशुशब्दस्येति।** व्युत्पत्तिरित्यनुषङ्गः। यथा पुच्छादिमत्त्वेन पशुशब्दव्युत्पत्तिः, तथेत्यर्थः। इदञ्च शरीरत्वादिवत् पशुत्वस्य न जातित्वमिति वदतां मीमांसकनैयायिकैकदेशिनां मतमनुसृत्येति बोध्यम्। प्रकृते उपाधिमाह **सादृश्यञ्चेति। उदाहरणपरमिति।** प्रदर्शनपरमित्यर्थः। उपलक्षणमिति यावत्। अथवा पश्वादिरूपोदाहरणाभिप्रायेण **तत्तदवयवविन्यासे**त्युक्तमित्यर्थः। ननु सादृश्यञ्चोपाधिरिति **विवरणवाक्यस्वारस्य**पर्यालोचनायां सादृश्यमतिरिक्तमिति प्रतीयते; ततश्चाद्रव्यस्य दशविधत्वव्याघात इत्यत्र आह **सादृश्यञ्चेति। अतिरेकपक्षानुपपत्तेरिति।** क्लृप्तधर्मैरेवोपपत्तेरिति भावः। तद्भिन्नत्वे सति तद्वृत्तिधर्मवत्त्वं हि तत्सादृश्यम्।

---

1 सावयवेषु संस्थानं धर्मरूपत्वात् अतिरिक्तम्, निरवयवेषु स्वरूपात्मकत्वादनतिरिक्तमिति भावः। अनेन सिद्धान्ते सादृश्यं क्वचित् धर्मिस्वरूपमेवेष्टमिति सिद्धम्।

स्वरूपमात्रपरम्। ननु यदि स्वरूपमेव [1]सादृश्यम्, स्वरूपमात्रत्वाविशेषात् सर्वमपि सर्वेण सदृशं स्यात्, रूपं रूपान्तरेण सदृशमिति सहप्रयोगश्च न स्यादिति चेत्; तदिदमतिरिक्तपक्षेऽपि

---

र.पे. स्वरूपमात्रपरमिति। स्वगतधर्ममात्रपरमित्यर्थः। स्वरूपमेव सादृश्यमिति। (?) स्वगतधर्म एव सादृश्यमित्यर्थः। स्वरूपमात्रत्वाविशेषादिति। (?) स्वगतधर्ममात्रत्वाविशेषादित्यर्थः। मात्रशब्देन धर्मान्तरविशेषविवक्षाव्युदासः। प्रमेयत्वादीनामिति शेषः। सर्वमपि सर्वेण सदृशं स्यादिति। घटादिकमपि गवादिना सदृशं स्यादिति भावः। सहप्रयोगश्च न स्यादिति। सादृश्यस्य रूपत्वात्मकत्वादिति भावः।

---

1 स्वरूपमेव सादृश्यमिति। अनेन पूर्वं धर्मसादृश्यं स्वरूपसादृश्यञ्चेति विभागे धर्मस्य सादृश्यं स्वरूपस्य सादृश्यमिति विग्रहाभिप्रायेण व्याख्यानं स्वरूपगतसादृश्यं नाम स्वरूपानुगतं विलक्षणसंबन्धेन ज्ञानं कालो वेत्यादिविवरणञ्च न मूलार्थ इति ज्ञायते। धर्माणां संस्थानानां प्रतिव्यक्तिभिन्नानामेव जातित्वं सादृश्यात्। तच्च सादृश्यं पररीत्या एकदेशिरीत्या च नातिरिक्ततयाऽऽचार्यैरिष्यते; किंतु संस्थानमेकव्यक्तिगतं व्यक्त्यन्तरगतसंस्थानप्रतियोगिकतया सदृशत्वेन व्यवह्रियते इति सादृश्यं न संस्थानातिरिक्तम्। तथा निरवयवद्रव्येषु रूपरसादिषु च तत्तद्व्यक्तिरेव व्यक्त्यन्तरेण सदृशतया प्रतीयत इति व्यक्तिस्वरूपमेव सादृश्यम्। सावयवेषु संस्थानानामेकबुद्ध्यारोहात् अन्यत्र व्यक्तीनामेवैकबुद्ध्यारोहात् स्वपरनिर्वाहकवस्तुन्यायेन जातिता। सावयवेष्वपि व्यक्तिरेव तथाऽस्त्विति चेत्—तत्राकृतिरूपधर्मान्तरोपलम्भात् जातिजातिमतोराधाराधेयभावस्य प्रत्यक्षसिद्धस्याविरोधाय धर्म एव जातिरिष्यते। अप्रतीतधर्मकल्पने गौरवात्तु अनुगतैकजातित्यागः। रूपरसादिषु तु धर्मान्तरानुपलम्भात् व्यक्तीनामेव जातिता। यथा घटादौ घटत्वादिरेव पटादिभेदः; शौक्ल्यादौ कार्ष्ण्यादिभेदस्तु न शौक्ल्यत्वादिः, किन्तु गुणव्यक्तिरेव—तद्वत्। इदमेव सादृश्यस्यानतिरिक्तत्वमुपरि एकदेशिभिस्तदतिरिक्तत्वपक्षं स्वीकृतमुपन्यस्य निगम्यते, "अस्माकं त्वेषा रुचिः' इति। उक्तञ्च पूर्वमेव, अतिरेकपक्षानुपपत्तेश्चेति। अयं भावः—नित्यमेकमनेकानुगतं सामान्यं कस्मान्नेष्यते? अस्मत्पक्षे अनित्यद्रव्यगतस्य धर्मस्य नित्यत्वासंभवात्, ब्रह्मकार्यत्वाभावे एकविज्ञानेन सर्वविज्ञानभंगात्, अनित्यत्वे च तन्नाशानन्तरभवे घटादौ घटत्वाद्यभावप्रसंगात्, घटत्वान्तरोत्पत्तौ चानुगतघटत्वभंगात् तत्रानुगतैरप्यनुगतव्यवहारेष्टौ क्लृप्तैः संस्थानैरेव तदुपपत्त्या तत्कल्पने गौरवादित्यादि वक्तव्यम्। तद्रीत्यैव सादृश्यमतिरिक्तं चेत्, तन्नित्यमनित्यं वा। अनित्येषु संस्थानादिषु तत् कथं नित्यम्? कथञ्च तस्य ब्रह्मकार्यत्वम्? आश्रयनाशे च तत्र स्थितं सादृश्यं कुत्र गच्छति? अनित्यत्वे नाशानन्तरमन्यत्रापि सादृश्यप्रतीतिर्न स्यात्। एवं वैशेषिकसंमतसमवायवत् लोके सर्वत्र स्थितं सादृश्यमेकमेव वा भिन्नभिन्नं वा। आद्ये, सर्वेण सर्वं सदृशं स्यात्। भेदे कथमनुगतप्रतीतिः? एवं अनेन तस्य सादृश्यवत् तेनास्य सादृश्यमप्यन्यद्वा तदेव वा। अन्त्ये कथमनुयोगिप्रतियोगिव्यत्ययः। आद्ये, व्यक्तिभेदेन सादृश्यभेद इत्यायातम्। तत् वरं धर्म एव सादृश्यम्। तन्निष्ठधर्मान्तरानुपलम्भादाधाराधेयभावव्यवहारो गौणः; यथा घटत्वं पटाद्भिन्नमित्यत्र भेदे घटत्वात्मकेऽपि प्रतियोगिविशिष्टवेषेणाधेयतया व्यवहारस्तद्वदिति। एवञ्च द्वितीयव्याख्याने ज्ञानकालरूपानुगतधर्मगवेषणेन मूलस्थपदानां बहूनां क्लिष्टगत्या व्याख्यानं न रुचिरम्। अननुगतवस्तुभिरेवानुगतव्यवहारस्यैवात्र सर्वत्र समर्थनात्। एतदनुगुणतया च "अस्माकं तु तदेवैकीकरणमिति नोपद्रवः" इति वाक्यस्याप्यर्थो वर्णनीय इत्यलमिदानीम्।

तुल्यम् । यदि तत्र सादृश्यं भवेत्, सर्वेणापि तत् सदृशं भवेत्; अविशेषात् । यदि तु तावत्प्रतियोगिकमेव सादृश्यं तत्रोपलम्भव्यवस्थाप्यम्, तर्हि तदेव स्वरूपं तावत्प्रतियोगिकं तत एव व्यवस्थाप्यताम्; अविशेषात् । न च सहप्रयोगानुपपत्तिः; प्रतियोगिनिरूपितवेषेण सदृशशब्दविषयत्वात्, अन्यथा विषयादिशब्दैरपि सहप्रयोगानुपपत्तेः ।

ननु यदि सादृश्यमेव सामान्यम्—तदा गोगवययोरविशेषेण गोशब्दवाच्यत्वं स्यात् ॥ न स्यात्; सौसादृश्यस्य सामान्यत्वात् । यादृशसौसादृश्यं सामान्योपलक्षणं भवताम्—तदेव

---

जातिपक्षोक्तदोषस्य तत्रापि समत्वादिति भावः । तुल्यतामेवोपपादयति **यदि तत्र सादृश्यम्**इति । **सर्वेणापी**ति । यदि गवयो गोप्रतियोगिकसादृश्याश्रयः स्यात्, सादृश्याश्रयत्वाविशेषात् महिषप्रतियोगिकसादृश्याश्रयोऽपि स्यात् । यदि च गवयनिष्ठसादृश्यं गोप्रतियोगिकं स्यात्, तर्हि महिषप्रतियोगिकमपि स्यात्; सादृश्यत्वाविशेषादिति भावः । **प्रतियोगिनिरूपितवेषे**णेति । रूपादिशब्दप्रतिपन्नमेव स्वरूपं सदृशादिशब्दैः **प्रतियोगिनिरूपितवेषेण** भासते इत्यर्थः । **सहप्रयोगानुपपत्ते**रिति । विषयत्वस्यापि स्वरूपानतिरिक्तत्वादिति भावः । ननु **गोगवययो**रपि **सौसादृश्य**मस्तित्यत्राह **यादृशसौसादृश्य**मिति ।

**अतिरिक्तपक्षेऽपि तुल्य**मिति । अतिरिक्तसादृश्याभ्युपगमपक्षेऽपि तुल्यमित्यर्थः । तदेवोपपादयति **यदि तत्रे**ति । **सर्वेणापी**ति । गवयस्य गोप्रतियोगिकसादृश्याश्रयत्वे सादृश्याश्रयत्वाविशेषान्महिषादिप्रतियोगिकसादृश्याश्रयत्वमपि स्यात् । गवयनिष्ठस्य सादृश्यस्य गोप्रतियोगिकत्वे महिषादिप्रतियोगिकत्वमपि स्यात्; सादृश्यत्वाविशेषादित्यभिप्रायः । **तदेव स्वरूप**मिति । रूपत्वाद्यात्मकमेव (?) स्वगतरूपमित्यर्थः । **तावत्प्रतियोगिक**मिति । तावत्प्रतियोगिकभेदादिविशेषवत्मित्यर्थः । अयं भावः—सामानाधिकरण्यसंबन्धेन भेदविशिष्टमाधेयतावद्रूपं सादृश्यपदार्थः । इदं रूपं रूपान्तरेण सदृशमित्यत्र प्रतियोगित्वं निरूपितत्वञ्च तृतीयार्थः। प्रतियोगित्वस्य निरूपकतासंबन्धेन भेदे, निरूपितत्वस्याश्रयतासंबन्धेनाऽऽधेयतायाञ्चान्वयः । ततश्च रूपान्तरप्रतियोगिकभेदविशिष्ट-रूपान्तरनिरूपिताधेयतावद्रूपवदिदं रूपमित्यन्वयबोधः । तादृशरूपञ्च रूपत्वाद्यात्मकमेवेति । अत्रेदं बोध्यम्—पक्षद्वयेऽपि सर्वत्र सर्वसादृश्यं साधारणधर्मविवक्षाभेदादिष्टमेव । गौरिवाश्वोऽपि पशुः, गौरिव घटोऽपि द्रव्यमित्यादिव्यवहारदर्शनादिति । **प्रतियोगिनिरूपितवेषणे**ति । उक्तरीत्या इतरप्रतियोगिकभेदादिविशिष्टवेषेणेत्यर्थः । रूपपदेन स्वरूपत एव रूपत्वबोधनात् सदृशपदेन च भेदविशिष्टाधेयतावद्धर्मत्वेन तद्बोधनात्र पर्यायत्वप्रसक्तिरिति भावः । **अन्यथे**ति । यथाकथंचिद्वैषम्यमात्रेण सहप्रयोगाभावे इत्यर्थः । **विषयादिशब्दैरपी**ति । (?) विषयवदादिशब्दैरपीत्यर्थः। रूपं विषयवदित्यादौ विषयत्वेन रूपत्वस्यैव बोधनादिति भावः । **सौसादृश्यस्य सामान्यत्वा**दिति । विजातीयसंस्थानवत्त्वस्य सामान्यरूपत्वादित्यर्थः । वैजात्यञ्च गवयगतसंस्थानव्यावृत्त-गोगतयावत्संस्थानव्यक्तिभेदकूटवद्वृत्तिविषयतासंबन्धेन ज्ञानवत्त्वं तादृशाधेयतासंबन्धेन कालवत्त्वरूपं वा । गोगतसंस्थानस्य गवयगतसंस्थानाद्वैजात्यं भवद्भिरप्यङ्गीकृतम्; परन्तु तादृशवैजात्यमतिरिक्तसामान्यरूपतया भवद्भिरङ्गीकृतम् । अस्माभिस्तु तत्स्वेऽन्तर्भावितमित्येतावानेव विशेष इत्यभिप्रायेणाह **यादृशे**ति ।

तदिति नियमनसिद्धेः ॥ सादृश्यातिरिक्तं सौसादृश्यं नाम किमिति चेत्—आपाततः समानधर्मातिरेकः; अन्ततः स्वरूपविशेषः।

यत्तु [1]नारायणार्यैरुक्तम्, "संस्थानमेव जातिः। तत् प्रतिपिण्डं भिन्नत्वेऽपि द्वितीयादिपिण्डेषु सौसादृश्यात् प्रतिसन्धीयमानं स्वाश्रयेषु वस्तुषु एकबुद्धिशब्दनिबन्धनं भवति। तदेव प्रतिसन्धीयमानं[संस्थानं] सौसादृश्यं अनुवृत्तिरिति चोच्यते" इत्यादि–यच्च वरदविष्णुमिश्रैरुक्तम्, "प्रत्यक्षाश्रयवर्तिसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वसादृश्यानि प्रत्यक्षाणि। उपमानप्रमाणान्तरञ्चोक्तम्। इदञ्च सादृश्यं गुणः; अनुमानेन गुणत्वावधारणात्—कार्यभूतसंख्याशक्तिसादृश्यानि गुणाः, द्रव्यकर्मान्यत्वे सति आश्रितकार्यत्वात् घटगतशौक्ल्यवत्" इति—तत् तेषां [2]तथाभिमत(तेषां न तथाभिमत)मित्येकदेशिमतं मन्तव्यम्।

---

तदेव तदिति। सौसादृश्यमेव सामान्यमित्यर्थः। रूपरसाद्यनुस्यूतत्वाभावात् आपात इत्युक्तम्। समानधर्मातिरेक इति। समानधर्मभूयस्त्वमित्यर्थः। अन्तत इति। परमार्थत इत्यर्थः।

सादृश्यस्य संस्थानरूपत्वनिर्बन्धाभावे "संस्थानमेव जातिः....तदेव(वं) प्रतिसन्धीयमानं सौसादृश्यम्" इति नारायणार्यग्रन्थ[1]विरोधः तथा सादृश्यस्य स्वरूपरूपत्वेऽतिरिक्तगुणत्वप्रतिपादकवरदविष्णुमिश्रग्रन्थविरोधश्चेत्याशङ्क्य एकदेशिमतत्वात् न तद्विरोध इत्याह यत्त्वित्यादिना। ननु प्रतिसन्धानहेतुभूतं सादृश्यमतिरिक्तमभ्युपगतमिति शङ्कां व्युदस्यति तदेवेति। अनुमानमेवाह कार्यभूतेति। नित्यसङ्ख्यादिषु भागासिद्धिवारणार्थं कार्यभूतेत्युक्तम्। आश्रितकार्यत्वादिति। समवेतकार्यत्वादित्यर्थः। सामान्यविशेषसमवायेषु व्यभिचारवारणार्थं कार्यत्वादित्युक्तम्। ध्वंसे व्यभिचारवारणार्थं समवेतेति। तेषां तथाभिमतमितीति। इतिहेतौ। अतिरेकस्य एकदेशिमतत्वात् [2]तदनुसारेण नारायणार्यादीनां तथाभिमतं मन्तव्यमित्यर्थः। एकदेशिमतमिति तेषां तथाभिमतं मन्तव्यमिति योजना। "मतिबुद्धिपूजार्थेभ्यश्च" इति वर्तमाने क्तः। "क्तस्य च वर्तमाने" इति कर्तरि षष्ठी। तेषां न तथाभिमतं

---

सामान्योपलक्षणम्=अतिरिक्तसामान्यव्यञ्जकम्। व्यञ्जकत्वञ्च साक्षात्कारजनकसाक्षात्कारविषयत्वम्। तदेव तदिति। विजातीयसंस्थानमेव सामान्यमित्यर्थः। आपाततः समानधर्मातिरेक इति। यथाश्रुतं समानधर्मभूयस्त्वमित्यर्थः। अन्तत इति। पर्यवसान इत्यर्थः। स्वरूपविशेष इति। प्रागुक्तवैजात्यशब्दितज्ञ नवत्वरूपस्वगतव्याप्यधर्मविशेष इत्यर्थः। व्यापकधर्मसत्त्वे व्यापकधर्माणामावश्यकतया समानधर्मभूयस्त्वसिद्धेरिति भावः। ननु जातेस्संस्थानरूपत्वनिर्बन्धाभावे, "संस्थानमेव जातिः" इति नारायणार्यग्रन्थविरोधः, तथा सादृश्यस्य स्वगतधर्मरूपत्वेऽतिरिक्तगुणत्वप्रतिपादकवरदविष्णुमिश्रग्रन्थविरोधश्चेत्याशङ्क्य एकदेशिमतत्वान्न तद्विरोध इत्याह यत्त्वित्यादिना। कार्यभूतेति। इदमवच्छेदकावच्छेदेन साध्यसिद्ध्युद्देश्यतायां नित्यसंख्यादिषु भागासिद्धिवारणाय। आश्रितकार्यत्वादिति। समवेतकार्यत्वादित्यर्थः। ध्वंसे व्यभिचारवारणाय समवेतेति। सामान्यादौ तद्वारणाय कार्यत्वम्। तेषां तथाभिमतमितीति। इतिर्हेतौ। तेषां तथाभिमतत्वात् तत् एकदेशिमतं मन्तव्यमित्यर्थः।

---

1 नारायणार्यग्रन्थो नीतिमाला। एतदनुसारेण तत्र वाक्यं शोधनीयम्। 2 नारायणार्यवरदविष्णुमिश्रयोरेकदेशित्वपरिहाराय पाठान्तरानुगुण्याय च प्रथमव्याख्याने अन्यादृशान्वयोक्तिः।

यत्तु भट्टपराशरपादैरुक्तम्, "भूयोवयवसामान्यं सादृश्यं बहवो विदुः । पृथक्प्रमेयं तदिति प्रमेये दर्शयिष्यते ॥" इति—तत् [1]किमभिप्रायमिति न जानीमः; उत्तरत्र प्रमेयनिरूपणस्य विच्छिन्नत्वात् । अस्तु वा सादृश्यमन्यत् तन्मतेनापि । अस्माकं तु एषा रुचिः ।

तदत्र संस्थानमाकृतिरिति पर्यायः । तदेव परस्परनिरूपितत्वेषेण सौसादृश्यम्, जातिः, सामान्यमिति च गीयते ; नान्यदुपलभ्यम् ।

यत्तु भट्टपराशरपादैरुक्तम्, "ननु द्रव्यत्वपृथिवीत्वशुक्लत्वपाकत्वादेः सामान्यस्यानाश्रयणे वाच्यानां स्वप्रवृत्तिनिमित्तानाञ्च सन्तत्यवस्थादीनामनेकत्वात् एकप्रयोजकाभावे कथमेकशब्द्यम्? वद तव वा कथम्। न ममैव एष भरः। सर्वो हि लोकः सर्वमित्यादिषु बहुष्वपि शब्दैक्यं मन्यते" इत्युक्त्वा—"वाच्यस्वरूपेऽथ तदीयरूपे दूरादुपाधिष्वथवैकभावात् । सादृश्यमेदा-

---

मन्तव्यमिति पाठस्तु सुगम एव । पृथगिति । भूयोवयवसामान्यापेक्षया सादृश्यं पदार्थान्तरमिति प्रमेयपरिच्छेदे स्थापयिष्यते इत्यर्थः । तन्मतेनापीति । भट्टपराशरपादमतेनापीत्यर्थः । अस्माकंत्विति । युक्तियुक्तं वचो ग्राह्यम्; न तु पुरुषगौरवमिति भावः । तदिति । तस्मादित्यर्थः । परस्परनिरूपितवेषेणेति । परस्परनिरूपितत्वेषेणेत्यर्थः । शुक्लत्वपाकत्वादेरिति । शुक्लत्वेति गुणगतजात्युक्तिः, पाकत्वेति क्रियागतजात्युक्तिः । सन्तत्यवस्थादीनामिति । ब्राह्मणादिशब्देषु ब्राह्मण्यां ब्राह्मणाज्जातत्वादिलक्षणा सन्ततिः प्रवृत्तिनिमित्तम् ; घटादिशब्देषु अवस्था । एतेषां प्रवृत्तिनिमित्तानां नानात्वादेकप्रवृत्तिनिमित्ताभावात् एकशब्दवाच्यत्वं न स्यादिति भावः । शब्दैक्यं मन्यते इति । अनुगतप्रवृत्तिनिमित्ताभावेऽप्येकशब्दवाच्यत्वं मन्यते इत्यर्थः । वाच्यस्वरूप इत्यादि ।

---

पृथगिति । भूयोऽवयवसामान्यापेक्षया सादृश्यमतिरिक्तमिति प्रमेयपरिच्छेदे स्थापयिष्यत इत्यर्थः । तन्मतेनापीति । भट्टपराशरपादाभिप्रायेणापीत्यर्थः ।

तदिति । तस्मादित्यर्थः। परस्परनिरूपितवेषेणेति । व्याख्यातमेतत् । नन्विति प्रश्ने । शुक्लत्वपाकत्वादेरिति । शुक्लत्वं गुणगतजातिः, पाकत्वं क्रियागतजातिः । आदिना गुणत्वकर्मत्वादिसामान्यरूपपरिग्रहः । सन्तत्यवस्थादीनामिति । ब्राह्मणादिशब्देषु ब्राह्मण्यां ब्राह्मणाज्जातत्वरूपा सन्ततिः प्रवृत्तिनिमित्तम् ; घटादिशब्देष्ववस्था । एतेषां प्रवृत्तिमित्तानामनेकत्वादेकप्रवृत्तिनिमित्ताभावात् कथमनुगतव्यवहारविषयत्वम् ; ब्रूहीत्यर्थः । अथवा वदेत्ययमुत्तरत्र संबद्ध्यते । सर्वमित्यादिव्यवहारेषु तव वा कथमुपपत्तिः ; वदेत्यर्थः। सर्वत्वादिरूपानुगतजात्यभावादिति भावः। न ममैवैष भर इति । सर्वसाधारणानुगतजात्यभावेऽपि यथा सर्वमित्यादिव्यवहारः सर्वलोकसाधारणः, तथा घटादिव्यवहारोऽप्युपपद्यत इति भावः। बहुष्वपि शब्दैक्यं मन्यत इति । सर्वेष्वपि पदार्थेष्वेकशब्दव्यवहारविषयत्वं मन्यत इत्यर्थः । एकशब्दं व्यवहरतीति यावत् । एवमनुगतरूपाभावेऽप्यनुगतव्यवहारः संभवतीति प्राथमिकपक्षमुपन्यस्य अनुगतरूपमपि तत्तत्र संभवतीति द्वितीयपक्षमाह वाच्यस्वरूप इत्यादि । चन्द्रः सूर्य इत्यादौ वाच्यव्यक्ति-

---

1 किमभिप्रायमिति । मीमांसकवत् सादृश्यमतिरिक्तपदार्थं इत्यभिप्रायकं वा, निरवयवेष्वपि जातिरूपसादृश्यस्येष्टतया अवयवसामान्यमित्यनुक्त्वा धर्मसादृश्यादिरूपं वक्तव्यमित्यभिप्रायकं वेत्यर्थः । तदर्सम्मताितिरिक्तजातितुल्ययोगक्षेमत्वात् सादृश्यस्येति भावः ।

ग्रहतोऽर्थेषु वाच्येष्विहैकीकरणं मतं तत् इति (?)। चन्द्रः सूर्य इत्यादौ वाच्यस्वरूपैक्यात्, घटः पट इत्यादौ तदाकारैक्यात्" इत्यादि—तत्र न तावत् मुख्यमेवाऽऽकारैक्यं विवक्षितम्; जाति-निराकरणात्। अतः एकाकारविकल्पयोग्यसंस्थानविशेषवत्त्वमभिमतमिति मन्यामहे।

तच्चेदं सामान्यमापाततः कचित् प्रत्यक्षीक्रियते, यथा घटत्वादि; कचित् सहकारिविशेषापेक्षया; यथा विलीनघृतादौ गन्धग्रहणापेक्षया घृतत्वादि, मातापितृसम्बन्धस्मृत्याद्यपेक्षया ब्राह्मणत्वादि। तदुक्तं भगवद्यामुनमुनिभिरागमप्रामाण्ये,

"ततश्च सन्ततिस्मृत्याऽनुगृहीतेन चक्षुषा। विज्ञायमानं ब्राह्मण्यं प्रत्यक्षत्वं न मुञ्चति॥

---

चन्द्रः सूर्य इत्यादौ चन्द्रव्यक्तिनानात्वस्य सूर्यव्यक्तिनानात्वस्य वा अभावात् वाच्यस्वरूपस्यैकीकरणं सम्भवतीत्यर्थः। **तदीयरूप** इति। **घटः पट इत्यादौ** व्यक्तीनां वस्तुतो नानात्वेऽपि तदसाधारणघटत्वपटत्वरूपधर्मैक्यात् वाच्यानामेकीकरणमित्यर्थः। जात्यनभ्युपगन्तारं प्रत्याह **दूरादुपाधिष्विति**। अन्ततो गत्वा कस्यचित् पृथुबुध्नोदराकारादिमत्त्वस्योपाधेरेकस्य सम्भवात् तत एकीकरण सम्भव इति भावः। [1]ननु पृथुबुध्नोदराकारादिसंस्थानस्यापि प्रतिव्यक्ति भिन्नभिन्नत्वात् कथमुपाधिवशात् एकीकरणं व्यक्तीनामित्याशङ्क्याह **सादृश्यभेदाग्रहत इति**। संस्थानानां सादृश्याद्वा तेषां परस्परभेदाग्रहाद्वा **एकीकरणं** सम्भवतीत्यर्थः। **एकाकारविकल्पेति**। एकाकारसविकल्पकेत्यर्थः। **आपातत इति**। सहकारिविशेषानपेक्षयेत्यर्थः। **घृतत्वादीति**। **प्रत्यक्षीक्रियते** इत्यनुषङ्गः। **मातापितृसम्बन्धस्मृतीति**। ब्राह्मण्यां ब्राह्मणात् जातत्वादिग्रहणापेक्षयेत्यर्थः। **न मुञ्चतीति**। स्मृत्यनुग्रहापेक्षापराध-

---

बहुत्वविरहात् वाच्यस्वरूपैक्यादेवैकशब्दत्वमिति भावः। **तदीयरूप** इति। वाच्यवृत्तिप्रवृत्तिनिमित्त इत्यर्थः। यथा घटः पट इत्यादौ घटत्वपटत्वादिजात्यैवानुगतव्यवहारः। जात्यनभ्युपगमेऽप्याह **दूरादिति**। **उपाधिषु दूरादेकभावात्** —उपाधिघटकधर्मेषु जात्यैवयादित्यर्थः। विलक्षणसंस्थानत्वरूपगोत्वादिषु वैलक्षण्यमेवानुगमकं प्रागुपदर्शितमेकमिति भावः। तादृशवैलक्षण्यसद्भाव एव नियामकमाह **सादृश्येति**। **एकाकारविकल्पयोग्येति**। एकसविकल्पकप्रत्ययप्रयोजकेत्यर्थः। **संस्थानविशेषगतमिति**। प्रागुक्तवैलक्षण्याश्रयसंस्थानवत्त्वमित्यर्थः। **आपातत इति**। सहकारिविशेषमनपेक्ष्येत्यर्थः। **घृतत्वादीति**। प्रत्यक्षीक्रियत इत्यनुषज्यते। **मातापितृसंबन्धस्मृतीति**। ब्राह्मण्यां ब्राह्मणाज्जातत्वादिस्मृतीत्यर्थः। **प्रत्यक्षत्वं न मुञ्चतीति**। सन्ततिस्मृत्यनुग्रहापेक्षामात्रेण प्रत्यक्षत्वस्य न हानिरित्यर्थः। विलीनघृतादौ घृतत्वस्य गन्धग्रहणसापेक्षप्रत्यक्षविषयत्वेऽपि यथा न प्रत्यक्षत्वहानिः, तद्वदिति भावः।

---

1 वाच्य इत्यादिश्लोकार्थ एवं स्यात्। सर्वं सामान्यपरतयैव व्याख्येयमिति मा भूत्। एकीकरणम् = एकतया ग्रहणं बहुविधम्—चन्द्र इत्यादौ व्यक्त्यैक्यात्। घट इत्यादौ जात्यैक्यात्। भूतमित्यादौ उपाध्यैक्यात्। न चोपाधिर्गुणः गन्धादिर्भिन्नभिन्न इति वाच्यम्, बहिरिन्द्रियग्राह्यगुणत्वेनैकीकरणात्। अथ वाऽस्तु (?) न्यायकुलिशोक्तम्, "स ह्युपाधिरिति कथ्यते, यः परस्परासंबन्धवशेन नानार्थान् एकः संगृह्णाति; यथा पाचको लावक इति। तत्र हि पच्यादिजातिः क्रियाव्यक्तितत्संबन्धादिव्यवहितः पुरुषादीन् संगृह्णाति" इति। उपाधिशरीरनिविष्टधर्मैक्यादुपाधेरेकत्वोक्तिः। एतदभिप्रेत्य दूरादित्युक्तम्। एवमेकभावोदाहरणान्युक्तानि। उत्तरार्धे सादृश्यादेकीकरणं सिंहो माणवक इति, भेदाग्रहात् रज्जौ अयं सर्प इति॥ (?) अयमितिशब्दो न स्यात्।

[1]तथा च दृश्यते नानासहकार्यपेक्षया। चक्षुषा(चक्षुषो) जातिविज्ञानजनकत्वं यथोदितम् ॥"
इत्यादि।..............................(अयं न्यायसिद्धाञ्जनग्रन्थ एतावानेव सर्वत्रोपलभ्यते)

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदान्तदेशिकस्य
श्रीवेंकटनाथस्य कृतिषु न्यायसिद्धाञ्जनं प्रकरणम् ॥
श्रीमते निगमान्तमहादेशिकाय नमः ॥ श्रीरस्तु ॥

---

मात्रेण प्रत्यक्षत्वं नापैतीत्यर्थः। तथा च दृश्यते इति। जातिरिति शेषः। चक्षुषा दृश्यते इति योजना। जातिविज्ञानजनकत्वमिति। यथोदितं जातिविज्ञानजनकत्वं चक्षुषो युज्यते इति भावः ॥

न क्वाप्यतः परमदृश्यत कोशशेषस्तच्छेषपूरणकृतिः [2]परिहासहेतुः।
ज्ञातव्यमन्यदपि तैर्निरणायि सम्यक् ग्रन्थान्तरेष्विति न किञ्चिदिहास्ति चिन्त्यम् ॥

इति श्रीमत्तातयार्यचरणारविन्दचञ्चरीकस्य वात्स्यानन्तार्यसेवासमधिगतशारीरक-
मीमांसाभाष्यहृदयस्य परकालमुनिकृपालब्धचारमहंस्यस्य श्रीरङ्गरामानुजमुनेः कृतिषु
श्रीन्यायसिद्धाञ्जनटीकायाम् अद्रव्यपरिच्छेदः। टीकेयं समाप्ता ॥ शुभमस्तु ॥

---

तथाचेत्यादि। तत्तत्सहकारिविशेषमपेक्ष्य यथोदितं जातिविज्ञानजनकत्वं चक्षुष उपलभ्यत इत्यर्थः। चक्षुषेति पाठे जातिरिति शेषः। 'तथाच जातिश्चक्षुषा दृश्यते' इत्यन्वयः। जातिविज्ञानजनकत्वमिति। युज्यत इति शेषः। द्रव्यातिरिक्तजात्यभ्युपगन्तृनैयायिकादिमतानुसारेण। सिद्धान्ते ब्राह्मण्यादेः सेश्वरमीमांसायाम्, "शास्त्रदृष्टविरोधाच्च" इति सूत्रेऽनुगृहीतरीत्या उद्रिक्तसत्त्वादिरूपत्वे, तत्त्वटीकानुगृहीतरीत्या शक्तिविशेषरूपत्वे, देवताधिकरणश्रुतप्रकाशिकानुगृहीतरीत्या अदृष्टविशेषसंबन्धरूपत्वे वा तस्य प्रत्यक्षत्वासंभवादिति बोध्यम्।

अथाखिलेषु कोशेष्वित ऊर्ध्वं नैव दृश्यते ग्रन्थः। तस्माच्छिष्टो विषयो ज्ञेयः सर्वार्थसिद्धिमुख्येषु ॥

इति श्रीमहामहोपाध्याय-श्रीकृष्णतातयार्यकृतिषु श्रीन्यायसिद्धाञ्जनव्याख्यायां
रत्नपेटिकासमाख्यायाम् अद्रव्यपरिच्छेदः षष्ठः। ॥ रत्नपेटिका संपूर्णा ॥ श्रीः ॥

---

1 ब्राह्मण्यादिप्रत्यक्षे विवादसद्भावादन्यदाह तथाचेति। तथा च दृश्यत इत्यस्य विज्ञानजनकत्वमेव कर्तृ चक्षुष इति षष्ठ्यन्तपाठे। 2 परिहासहेतुरिति। ग्रन्थान्तरे स्वोक्तपदार्था आचार्यैर्नवनवतर्कमुखेनाद्भुतमुपपादिताः। न तावद्वक्तुं वयं प्रभवामः। अतः पूरणं परिहासाय स्यादिति भावः। वैशेषिकोक्तक्रमेण पदार्थान् उपादायातिरेकानतिरेकविचारस्यात्र क्रियमाणत्वात् सामान्ये शिष्टं निरूप्य वैशेषिकेष्टस्य विशेषाख्यपदार्थस्य निरास इह कार्यः; अभावस्य चतुर्विधस्यापि भावरूपत्वमथोपपाद्यम्; अथ यथावत् ग्रन्थो निगमनीय इति तत् लुप्तमित्थमियदिति न सुवचम् ॥

अक्षपादगलेरान्ध्यमूलत्वमनुसंदधत्। परिष्कृत्यादीदृशत् प्राक् वेदाङ्गं न्यायविस्तरम् ॥
वैशेषिकाद्यभिमततत्त्वसंख्यानदूषकः। वेदान्तमेयवर्गस्य गणनामधुनाऽकरोत् ॥
नयसिद्धाञ्जनमित्थं व्याख्याद्वयसंयुतं प्रकाशयति।
श्रीवीरराघवसुधीर्भूमिकया किञ्चिदन्यदपि वेद्यम् ॥ शुभमस्तु ॥